SHRIMAN

# MAHABHARATAM

(According To Numerous Texts Collected From All Parts of India And With All Available Commentaries)

## UDYOGA PARVAN V

WITH

Bhavadeepa by Neelkantha, Deepika by Arjunamishra, Durghatarthaprakashini by Vimalabodha. Bharatarthaprakasha by Sarvajnanarayana, and Lakshabharana by Vadiraj

INCLUDING

THE BHASHYA OF SHRI SHANKARACHARYA ON SANAT-SUJATIYA

And With Numerous Readings

EDITED BY

MAHADEVA GANGADHAR BHATTA BAKRE

Printed and Published by Manilal Itcharam Desai at the
GUJARATI PRINTING PRESS
SASSOON BUILDINGS, CIRCLE, FORT,
BOMBAY

SAMVAT 1976 A D. 1920

औत्तराहबहुकोशानुसारि

# श्रीमन्महाभारतम्

उपलब्धयावट्टीकोपेतम्

तत्रेदम्

## उद्योगपर्व ५

नैलकण्ठीयभावदीप–अर्जुनमिश्रीयदीपिका–विमलबोधकृत दुर्घटार्थ-
प्रकाशिनी–सर्वज्ञनारायणीयभारतार्थप्रकाश–वादीराज-
तीर्थविरचित लक्षाभरणेतिपञ्चटीकोपेतम्

सनत्सुजातीये शांकरभाष्यसहितं च ।

पाठभेदसमेतं च

बाक्रेइत्युपाह्वगंगाधरभट्टसुतेन महादेवशर्मणा
संस्कृतम्

तच्च

मुंबय्यां

फोर्टाख्यविभागे अष्टमे सासूनभवने मणिलाल इच्छाराम देसाई इत्यनेन स्वीये
‘ गुजराती.’ मुद्रणालये संमुद्रय तत्रैव प्रकाशितम् ।

विक्रमसंवत् १९७६ — खिस्तसंवत् १९२०

# श्रीमन्महाभारतम् ।

## उद्योगपर्व ५

### ( सेनोद्योगपर्व १ )

#### प्रथमोऽध्यायः १

अभिमन्योर्विवाहार्थं समागतेषु नृपेषु विराटस्य सभायामुपविष्टेषु भगवता श्रीकृष्णेन कौरवाणां दौःशील्यं पाण्डवानां धर्मज्ञत्वं चोक्त्वा सर्वैर्युद्धे पाण्डवानां साहाय्यं कर्तव्यमिति सूचनम् ॥ १ ॥

श्रीगणेशाय नमः ।

नारायणं नमस्कृत्य नरं चैव नरोत्तमम् ।
देवीं सरस्वतीं चैव ततो जयमुदीरयेत् ॥ १ ॥

**वैशम्पायन उवाच—**

कृत्वा विवाहं तु कुरुप्रवीरा-
स्तदाभिमन्योर्मुदिताः स्वपक्षाः ।
विश्रम्य रात्रावुषसि प्रतीताः
सभां विराटस्य ततोऽभिजग्मुः ॥ १ ॥

सभा तु सा मत्स्यपतेः समृद्धा
मणिप्रवेकोत्तमरत्नचित्रा ।
न्यस्तासना माल्यवती सुगन्धा
तामभ्ययुस्ते नरराजवृद्धाः ॥ २ ॥

---

नीलकण्ठी टीका—

श्रीमद्गोपालमानम्य श्रीलक्ष्मणपदानुगः ।
नीलकण्ठो भावदीपं करोत्युद्योगपर्वणि ॥ १ ॥

गोपालनारायणलक्ष्मणार्या
धीरेशगङ्गाधरनीलकण्ठाः ।
चिन्तामणिः साम्बशिवश्च पूज्या
दिशन्तु सर्वे गुरवो मतिं मे ॥ २ ॥

भारते सारमुद्योगमिति वृद्धानुशासनम् ।
अतो विस्तरतस्तत्र व्याख्यानमुपपद्यते ॥ ३ ॥

अभिमन्योः स्वपक्षाः यादवपाण्डवाद्याः तस्यैव विवाहं कृत्वा मुदिता अभूवन्निति शेषः । प्रतीताः प्रबुद्धाः ॥ १ ॥ मणयो मुक्ताप्रवालादयः तेषां प्रवेको जालादिरूपः समूहः तेन उत्तमरत्नैः हीरपद्मरागाद्यैश्च चित्रा । 'मणिः स्त्रीपुंसयोरश्मजातौ मुक्तादिकेष्वपि' इति मेदिनी ॥ २ ॥

अर्जुनमिश्रकृता दीपिकाख्या टीका—

धर्मार्थकामनिर्वाणफलभारमनोहरम् ।
सृजते वाङ्मयं वृक्षं कानीनमुनये नमः ॥

कृत्वा विवाहमित्यादेः क्रुद्धे गाण्डीवधन्वनीत्यन्तस्य संप्रति दुर्योधने युधिष्ठिरेण किं करणीयमिति तात्पर्यार्थः । कृत्वा निवर्त्य । सपक्षाः ससहायाः । विश्रम्य चत्वारि दिनानीति शेषः । चतुर्थीहोमपर्यन्तं विश्रम्य तदनन्तरं युद्धमन्त्रणा भविष्यतीति तात्पर्यार्थः । उषस इति सप्तम्यर्थे पञ्चमी उषसीति वा पाठः । प्रतीताः प्रसिद्धाः ॥ १ ॥ मणिप्रवेकेति । मणिभिः प्रवेकाः शयनासनस्थानविभागा यस्यां सा चासावुत्तररत्नचित्रा चेति ॥ २ ॥

सर्वज्ञनारायणकृतो भारतार्थप्रकाशः—

नारायणस्य विशदा
सर्वज्ञस्यात्र भारतव्याख्या ॥
आलोकयन्नस्तु जनो
भारततत्त्वार्थसर्वज्ञः ॥ १ ॥

गुरूपदेशसंशुद्धपाठव्याख्यानुसारतः ॥
भारतार्थप्रकाशोऽयमुद्योगेऽस्मिन्निरूप्यते ॥ २ ॥

इह पर्वणि युद्धाध्यायोक्तगुणमन्त्रबलप्रयाणरूपस्योद्योगस्याभिधेयत्वात् स एव वाक्यवृत्ततया मुख्यो वाक्यार्थस्तत एवेदमुद्योगपर्व । अनुनीयमानस्य(?)वेदार्थज्ञानुनयाश्रवणात् सतां वचस्यस्थितस्य सकलसंपत्तिभङ्गहेतुः कलहो

---

१ छ. °स्वतीं व्यासं त° ।

१ छ. ख. °दितस्त्वपक्षाः चत्वार्युषसः । २ ख. छ. सभां शुभां । ( सभाविशेषणानि च द्वितीयान्तानि । ) ख. राजपुत्राः ।

अथासनान्याविशतां पुरस्ता-
दुभौ विराटद्रुपदौ नरेन्द्रौ ।
वृद्धौ च मान्यौ पृथिवीपतीनां
पित्रा समं रामजनार्दनौ च ॥ ३ ॥
पाञ्चालराजस्य समीपतो हि
शिनिप्रवीरः सहरौहिणेयः ।
मत्स्यस्य राज्ञश्च सुसंनिकृष्टौ
जनार्दनश्चैव युधिष्ठिरश्च ॥ ४ ॥
सुताश्च सर्वे द्रुपदस्य राज्ञो
भीमार्जुनौ माद्रवतीसुतौ च ।
प्रद्युम्नसाम्बौ च युधि प्रवीरौ
विराटपुत्रैश्च सहाभिमन्युः ॥ ५ ॥
सर्वे च शूराः पितृभिः समाना
वीर्येण रूपेण बलेन चैव ।
उपाविशन् द्रौपदेयाः कुमारा
सुवर्णचित्रेषु वरासनेषु ॥ ६ ॥

तथोपविष्टेषु महारथेषु विभ्राजमानाभरणाम्बरेषु ।
रराज सा राजवती समृद्धा ग्रहैरिव द्यौर्विमलैरुपेता ७
ततः कथास्ते समवाययुक्ताः
कृत्वा विचित्राः पुरुषप्रवीराः ।
तस्थुर्मुहूर्तं परिचिन्तयन्तः
कृष्णं नृपास्ते समुदीक्षमाणाः ॥ ८ ॥
कथान्तमासाद्य च माधवेन
संघट्टिताः पाण्डवकार्यहेतोः ।
ते राजसिंहाः सहिता ह्यशृण्व-
न्वाक्यं महार्थं सुमहोदयं च ॥ ९ ॥

**श्रीकृष्ण उवाच—**

सर्वैर्भवद्भिर्विदितं यथाऽयं
युधिष्ठिरः सौबलेनाक्षवत्याम् ।
जितो निकृत्याऽपहृतं च राज्यं
वनप्रवासे समयः कृतश्च ॥ १० ॥

---

भवतीति च तात्पर्यार्थः । तत्तदवान्तरवाक्यमुख्यार्थपदार्थौ च व्याख्ययैवाधिगन्तव्यौ । अवान्तरवाक्यतात्पर्यार्थस्तु पुरोहितप्रस्थापनमुखात् साम्ना सर्वार्थसिद्धौ दण्डो न कार्य इति। राजामन्त्रणस्य चात्यन्तापदि पुरुषसंश्रयेणापि निस्तरितव्यमिति । विश्वरूपवृत्रवधयोश्च विश्वस्तवधदोषोपदर्शननीत्यपेक्षया विश्वास्यापि शत्रुर्नाश्यः पश्चाद्धर्मानुष्ठानात्तद्दोषशमनविधिरिति । नहुषपातस्य च परदारप्रार्थनब्राह्मणावमानानाभ्यां संपद्भ्रंशो भवतीति। एवं संजययानस्यापि पुरोहितोक्त एव। विदुरवाक्यानां तु सकलराजनीतिप्रचारप्रशंसा । सनत्सुजातवाक्यानामात्मज्ञानप्रशंसा । सञ्जयेन सह पाण्डवानां संवादादारभ्य यानसन्धिपर्यन्तस्य बलवता विग्रहो न कर्तव्य इति । यानसन्धेर्वासुदेवमाहात्म्यम्। भगवद्यानमन्त्रणादेरपि शत्रोरपराधं प्रत्याप्य यो दण्डो विधीयते न तेनाकीर्तिः । दम्भोद्भवोपाख्यानस्य दर्पनिन्दा । विष्णुमाहात्म्यस्य गालवचरितस्य च निर्बन्धनिन्दा । तत्रापि यायातस्याभिमाननिन्दा, दानस्वधर्मपालनसत्ययज्ञप्रशंसा । तदनन्तरसभावाक्यानां च धार्मिकविरोधनिन्दा। विश्वरूपदर्शनस्य च जगतो वासुदेवसंभवत्वम् ।कुन्तीविदुरवाक्यस्य च कुन्तीवाक्यप्रशंसा । कर्णवार्ष्णेयसंवादस्य विश्वासभ्रंशो न कर्तव्य इति । कर्णकुन्तीसंवादस्यापदि निस्तारकस्य परित्यागो न कर्तव्य इति।अभिनिर्याणोलूकप्रेषणरथातिरथसङ्ख्यानानां दण्डनीत्यर्थोपदेशः । अम्बोपाख्यानस्य च गुरुरप्यवलिप्तो न माननीयः इत्यादि । 'कृत्वा विवाहं तु कुरुप्रवीराः' इत्यादिवृत्तानुकीर्तनं पूर्वपर्वैकवाक्यतादर्शनार्थम् । कृत्वा कारयित्वा । चत्वार्युषसश्चतस्रो रात्रीर्विश्रम्य । प्रतीताः प्रकृष्टाः । लिङ्गविपर्ययश्छान्दसः ॥ १ ॥ मणिर्मणिशब्दप्रसिद्धं सूर्यमण्यादि, प्रवेकशब्दः श्रेष्ठपर्यायः । तथा उत्तमं रत्नं माणिक्यादि, ताभ्यां चित्रा ॥ २ ॥

[ नील० ] आविशतामुपविष्टौ पित्रा वसुदेवेन ॥ ३ ॥ रौहिणेयः बलरामः ॥ ४ ॥ संघट्टिताः सन्नद्धीकृताः महार्थं सारार्थं महोदयं श्रेष्ठफलम् ॥ ९ ॥ अक्षवत्यां द्यूतक्रीडायां, निकृत्या छलेन, समयः पणः ॥ १० ॥

[ अर्जु० ] आविशतामिति निर्धारणे षष्ठी न तु क्रियापदम् । उपाविशन् इत्यग्रे वक्ष्यमाणत्वात् क्रियायाः । आविशत इत्यर्वाचीनः पाठः । पितामहो वसुदेवपिता शूरः 'पित्रा समम्' इति पाठे वसुदेवेन सहेत्यर्थः ॥ ३ ॥ संनिकृष्टे समीपे ॥ ४ ॥ समुदाययुक्ताः समुदाये समाजे उचिताः । समवाय इत्यपि पाठः । समुदीक्षमाणाः प्रतीक्षमाणाः ॥ ८ ॥ संघट्टिताः प्रेरिताः महार्थं महाविषयम् । महोदयं महाफलम् ॥ ९ ॥ अक्षवत्यां द्यूतशालायां, निकृत्या कपटेन, प्रवासे वनवासे, समयः संकेतः ॥ १० ॥

---

३ छ. वृद्धाश्च मान्याः । ख. पितामहो रामजनार्दनाभ्याम् । ४ छ. शिविप्र° । ५ ख. मधुप्रवीरौ । पुत्रश्च । ६ ख. तथैव शूराः पितृभिः समेताः । ख. बलेन युक्ताः । ८ ख. कृष्णाननं ते । ९ ख. माधवस्य । १० ख. सर्वं भव° ।

शक्तैर्विजेतुं तरसा महीं च
　सत्ये स्थितैः सत्यरथैर्यथावत् ।
पाण्डोः सुतैस्तद्व्रतमुग्ररूपं
　वर्षाणि षट् सप्त च चीर्णमग्र्यैः ॥ ११ ॥
त्रयोदशश्चैव सुदुस्तरोऽय-
　मज्ञायमानैर्भवतां समीपे ।
क्लेशानसह्यान् विविधान् सहद्भि-
　र्महात्मभिश्चापि वने निविष्टम् ॥ १२ ॥
एतैः परप्रेष्यनियोगयुक्तै-
　रिच्छद्भिराप्तं स्वकुलेन राज्यम् ।
एवंगते धर्मसुतस्य राज्ञो
　दुर्योधनस्यापि च यद्धितं स्यात् ॥ १३ ॥
तच्चिन्तयध्वं कुरुपुंगवानां
　धर्म्यं च युक्तं च यशस्करं च ।
अधर्मयुक्तं न च कामयेत
　राज्यं सुराणामपि धर्मराजः ॥ १४ ॥
धर्मार्थयुक्तं तु महीपतित्वं
　ग्रामेऽपि कस्मिंश्चिदयं बुभूषेत् ।
पित्र्यं हि राज्यं विदितं नृपाणां
　यथाऽपकृष्टं धृतराष्ट्रपुत्रैः ॥ १५ ॥

मिथ्योपचारेण यथा ह्यनेन
　कृच्छ्रं महत्प्राप्तमसह्यरूपम् ।
न चापि पार्थो विजितो रणे तैः
　स्वतेजसा धृतराष्ट्रस्य पुत्रैः ॥ १६ ॥
तथाऽपि राजा सहितः सुहृद्भि-
　रभीप्सतेऽनामयमेव तेषाम् ।
यत्तु स्वयं पाण्डुसुतैर्विजित्य
　समाहृतं भूमिपतीन् प्रपीड्य ॥ १७ ॥
तत्प्रार्थयन्ते पुरुषप्रवीराः
　कुन्तीसुता माद्रवतीसुतौ च ।
बालास्त्विमे तैर्विविधैरुपायैः
　संप्रार्थिता हन्तुममित्रसंघैः ॥ १८ ॥
राज्यं जिहीर्षद्भिरसद्भिरुग्रैः सर्वं च
　तद्वो विदितं यथावत् ।
तेषां च लोभं प्रसमीक्ष्य वृद्धं
　धर्मज्ञतां चापि युधिष्ठिरस्य ॥ १९ ॥
संबन्धितां चापि समीक्ष्य तेषां
　मतिं कुरुध्वं सहिताः पृथक्क ।
इमे च सत्येऽभिरताः सदैव
　तं पालयित्वा समयं यथावत् ॥ २० ॥

---

[ सर्व० ] आविशतां उपविष्टौ । वक्ष्यमाणक्रियायास्तु वक्ष्यमाणकर्तृभिरन्वयः । पितामहो जनार्दनस्य ॥ ३ ॥ संवेदिताः संबोधिताः । महार्थं महाभिधेयम् । महोदयं महाफलम् ॥ ९ ॥

[ नील० ] सत्त्यरथैः सत्पृथिव्यप्तेजांसि त्यत् वाय्वाकाशौ उभयत्र अकुण्ठितो रथो येषां तैरिति मध्यमपदलोपेन समासः, सत्यं रथवदारोढुं योग्यं येषां वा । पाठान्तरे सत्यैकप्रियैः ॥ ११ ॥ बुभूषेत् प्राप्तुमिच्छेत् तङभाव आर्षः ॥ १५ ॥ अनामयं कुशलं, यत्तु धनादिकं, स्वयमेव समाहृतं न पित्रादिभिः ॥ १७ ॥ पारयित्वेति पाठे समाप्य ॥ २० ॥

[ अर्जु० ] सत्यस्थिरैः सत्यवादिभिः । सत्ये स्थितैः सत्यरथैः इति पाठे सत्याश्च ते रथाश्चेति तैः । रथशब्देनात्र रथिनो लक्ष्यन्ते ॥ ११ ॥ एवं गते ज्ञाते ॥ १३ ॥ बुभूषेत् प्राप्तुमिच्छेत् । भूप्राप्तौ सकर्मकत्वात् महीपतित्वं कर्म । सत्तार्थपक्षे बुभूषेत् भवितुमिच्छेत् । महीपतित्वमिति स्वार्थे तद्धितः । नृपाणां पाण्डवानाम् ॥ १५ ॥ अनेन युधिष्ठिरेण ॥ १६ ॥ अनामयं कुशलम् ॥ १७ ॥ तैर्मायावित्वेन प्रसिद्धैः । संप्रार्थिता वाञ्छिताः अमित्रसाहाः शत्रुभिरनभिभवनीयाः ॥ १८ ॥ पारयित्वा समाप्य ॥ २० ॥

[ सर्व० ] सत्यो रथो येषां ते सत्यरथा वीरा इति यावत् । शरीरस्य रथोऽपि हि शकटप्राय इति न सत्यः । उग्ररूपं संतापकत्वात् । महोग्रः अन्यनाशकत्वात्(?)॥११॥ धर्मार्थयुक्तं लोकाविरुद्धं महीपतित्वं बुभूषेत् । आत्मनेपदित्वेऽपि परस्मैपदं छान्दसम् ॥ १५ ॥ तथापीति । यद्यपि पित्र्यं राज्यमपकृष्टमित्यन्वयः । आमयो हिंसा । आङ्पूर्वान्मयद् तदभावोऽनामयः ॥ १७ ॥ संप्रार्थिताः आशं-

---

११ ख. स्थितैस्तच्चरितं य° । ख. भारताग्र्यैः । १२ ख. त्रयोदशं चैव सुदुस्तरं च न । ख. क्लेशानशेषांश्च तितिक्षमाणैर्यथोषितं तद्विदितं च सर्वम् । एवं गते । छ. °महात्मनश्चा° । ज. सहद्भिस्तीर्णो महद्भिः स्वबलेन राजन् । १३ छ. °प्रेषनियो° । १४ ख. कुरुपाण्डवानां । १६ ख. तथाप्यः नेन; छ. यथासनेन । ख. पार्थो विजिता रणे ते । १७ ख. तथापि पार्थाः सहिताः सुहृद्भिरभीप्सन्ते । छ. °स्येममाहृतं । ख. समार्जितं भूमिपतीन्निपीड्य । १८ ख. अमित्रसाहाः । १९ ख. रमीभिरुग्रैः । ख. तथात्मवत्तां च । २० ख. समक्षमेषां मतं च यद्वः । ख. इमे वनान्ते नियताः सदैव तं पारयित्वा ।

अतोऽन्यथा तैरुपचर्यमाणा हन्युः
समेतान् धृतराष्ट्रपुत्रान् ।
तैर्विप्रकारं च निशम्य कार्ये
सुहृज्जनास्तान्परिवारयेयुः ॥ २१ ॥
युद्धेन बाधेयुरिमांस्तथैवं
तैर्बाध्यमाना युधि तांश्च हन्युः ।
तथाऽपि नेमेऽल्पतया समर्था-
स्तेषां जयायेति भवेन्मतं वः ॥ २२ ॥
समेत्य सर्वे सहिताः सुहृद्भि-
स्तेषां विनाशाय यतेयुरेव ।
सुयोधनस्यापि मतं यथावन्न
ज्ञायते किं नु करिष्यतीति ॥ २३ ॥
अज्ञायमाने च मते परस्य
किं स्यात्समारभ्यतमं मतं वः ।
तस्मादितो गच्छतु धर्मशीलः
शुचिः कुलीनः पुरुषोऽप्रमत्तः ॥ २४ ॥
दूतः समर्थः प्रशमाय तेषां
राज्यार्धदानाय युधिष्ठिरस्य ।
निशम्य वाक्यं तु जनार्दनस्य
धर्मार्थयुक्तं मधुरं समं च ॥ २५ ॥
समाददे वाक्यमथाग्रजोऽस्य
संपूज्य वाक्यं तदतीव राजन् ॥ २६ ॥

इति श्रीमहाभारते उद्योगपर्वणि प्रथमोऽध्यायः ॥ १ ॥

## द्वितीयोऽध्यायः २

युधिष्ठिरापराधकृतैवेयं पाण्डवानां विपत्तिर्नतु तत्र दुर्योधनो हेतुरतो दूतं प्रेष्य प्रणिपातपूर्वकमेवार्धराज्यं याचन्तां पाण्डवा इति बलदेववचनम् ॥ १ ॥

**बलदेव उवाच—**
श्रुतं भवद्भिर्गदपूर्वजस्य
वाक्यं यथा धर्मवदर्थवच्च ।
अजातशत्रोश्च हितं हितं च
दुर्योधनस्यापि तथैव राज्ञः ॥ १ ॥
अर्धं हि राज्यस्य विसृज्य वीराः
कुन्तीसुतास्तस्य कृते यतन्ते ।
प्रदाय चार्धं धृतराष्ट्रपुत्रः
सुखी सहास्माभिरतीव मोदेत् ॥ २ ॥

---

सिताः । अमित्रसाहा अमित्राभिभाविनः ॥ १८ ॥ पारयित्वा समाप्य । समयं वनवासगतम् ॥ २० ॥

वादिराजकृतं लक्षाभरणम्—

भूमिषु तान् प्रमथ्येत्यत्र तान् तत्तद्भूमिपतीन् ॥ १७ ॥ बलाभिगुप्तैरविषह्यपीडैरित्यत्र अविषह्या पीडा येभ्यस्तैः ॥ १८ ॥

[ नील० ] अतो राज्यार्धप्रदानात् । कार्ये राज्यलाभनिमित्तं तैर्धार्तराष्ट्रैः कृतं विप्रकारम् अपकारं निशम्य ज्ञात्वा तान्पाण्डवान् ॥ २१ ॥ यदि इमान् बाधेयुः तर्हि एतेऽपि तान् कौरवान् हन्युः । इमे पाण्डवाः ॥ २२ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे प्रथमोऽध्यायः ॥ १ ॥

[ अर्जु० ] अतः समयादूर्ध्वं राज्ञो युधिष्ठिरस्य तं युधिष्ठिरम् ॥ २१ ॥ इमान् पार्थान्, तान् कौरवान् ॥ २२ ॥ अतः स्थानात् ॥ २४ ॥ सममुभयपक्षतुल्यम् ॥ २५ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि प्रथमोऽध्यायः ॥ १ ॥

[ सर्व० ] अतः कालादूर्ध्वम् ॥ २१ ॥ यद्येतान् बाधेयुर्युद्धेन तदेतेऽपि तान् सबान्धवान् हन्युः ॥ २२ ॥ सुहृद्भिरस्मदादिभिः ॥ २३ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृते भारतार्थप्रकाशे प्रथमोऽध्यायः ॥ १ ॥

[ लक्षा० ] सुहृज्जनास्तान् परिवारयेयुरित्यत्र तान् दुर्योधनादीन् परिवारयेयुः पार्थवैरं मास्त्विति परितः निवारयेयुः ॥ २१ ॥

इति श्रीभारते उद्योग० वादिरा० लक्षालंकारे प्रथमोऽध्यायः ॥१॥

[ नील० ] अर्धं राज्यस्य विसृज्य तस्य कृते अर्धस्य राज्यस्यार्थे ॥ २ ॥

---

२१ ख. छ. निशम्य राज्ये । छ. °नास्ता न विवार° । २२ ख. युद्धेन बाधेयुरिमांस्तथैव युयुत्सयानान् युधितान्निहन्युः । अथापि । २४ छ. °रस्य न किं स° । ख. प्राज्ञः कुलीनः पुरुषो मतं मे । छ. मते वः । छ. °यस्मादि° । २६ ख. वदतां च राजन् । इति प्रथमोऽध्यायः ॥ १ ॥
२ ख. मोदतु ।

लब्ध्वा हि राज्यं पुरुषप्रवीराः
सम्यक्प्रवृत्तेषु परेषु चैव ।
ध्रुवं प्रशान्ताः सुखमाविशेयु-
स्तेषां प्रशान्तिश्च हितं प्रजानाम् ॥ ३ ॥
दुर्योधनस्यापि मतं च वेत्तुं
वक्तुं च वाक्यानि युधिष्ठिरस्य ।
प्रियं च मे स्याद्यदि तत्र कश्चि-
द्व्रजेच्छमार्थं कुरुपाण्डवानाम् ॥ ४ ॥
स भीष्ममामन्त्र्य कुरुप्रवीरं
वैचित्रवीर्यं च महानुभावम् ।
द्रोणं सपुत्रं विदुरं कृपं च
गान्धारराजं च ससूतपुत्रम् ॥ ५ ॥
सर्वे च येऽन्ये धृतराष्ट्रपुत्रा
बलप्रधाना निगमप्रधानाः ।
स्थिताश्च धर्मेषु तथा स्वकेषु
लोकप्रवीराः श्रुतकालवृद्धाः ॥ ६ ॥
एतेषु सर्वेषु समागतेषु
पौरेषु वृद्धेषु च संगतेषु ।
ब्रवीतु वाक्यं प्रणिपातयुक्तं
कुन्तीसुतस्यार्थकरं यथा स्यात् ॥ ७ ॥
सर्वास्ववस्थासु च ते न कोप्या
ग्रस्तो हि सोऽर्थो बलमाश्रितैस्तैः ।
प्रियाभ्युपेतस्य युधिष्ठिरस्य
द्यूते प्रसक्तस्य हृतं च राज्यम् ॥ ८ ॥
निवार्यमाणश्च कुरुप्रवीरः
सर्वैः सुहृद्भिर्ह्ययमप्यतज्ज्ञः ।
स दीव्यमानः प्रतिदीव्य चैनं
गान्धारराजस्य सुतं मताक्षम् ॥ ९ ॥
हित्वा हि कर्णं च सुयोधनं च
समाह्वयद्देवितुमाजमीढः ।
दुरोदरास्तत्र सहस्रशोऽन्ये
युधिष्ठिरो यान्विषहेत जेतुम् ॥ १० ॥
उत्सृज्य तान्सौबलमेव चायं
समाह्वयत्तेन जितोऽक्षवत्याम् ।
स दीव्यमानः प्रतिदेवनेन
अक्षेषु नित्यं तु पराङ्मुखेषु ॥ ११ ॥

---

[ अर्जु० ] निसृज्य द्यूते हारयित्वा ॥ २ ॥

[ सर्व० ] अर्धं राज्यस्य विसृज्य द्यूतेन हारयित्वा ॥ २ ॥

[ लक्षा० ] तस्य कृते यतन्त इत्यत्र तस्य धर्मराजस्य॥२॥

[ नील० ] राज्यं राज्यार्धम् ॥ ३ ॥ बलं चतुरङ्गं निगमो नीतिशास्त्रं ते उभे प्रधानं येषां श्रुतेन कालेन च वृद्धाः । वृत्ता इति पाठे श्रुतं कालवृत्तं सर्वसंहारकत्वं यैस्ते ॥ ६ ॥ समागतेषु सभायामिति शेषः ॥ ७ ॥ वाक्यमेवाह—सर्वास्विति । सर्वथाऽपि ते पाण्डवाः न कोप्याः भवद्भिरिति शेषः । सोऽर्थो ग्रस्तः वनवासादिप्रतिज्ञा निस्तीर्णेत्यर्थः । बलं सत्यपालने सामर्थ्यं, पूर्वं कोपिता अपि अतः परं न कोप्या इति भावः ॥ ८ ॥ अयं युधिष्ठिरः अतज्ज्ञः द्यूतस्यानभिज्ञः ॥ ९ ॥

[अर्जु०] निचयो निश्चयः । श्रुतकालवृद्धाः विद्यावयोवृद्धाः ॥ ६ ॥ गतेषु प्राप्तेषु । एतेष्विति प्रमादपाठः । समागतेषु अन्योन्यमिलितेषु संगतेषु अस्मत्कृते हितभावेन ॥७॥ सर्वास्ववस्थासु बाल्यादिषु तेन दुर्योधनेन कौट्यात् कपटात् तैः शकुनिप्रभृतिभिः करणभूतैः प्रियाद्युपेतैः, प्रियमभ्युपगतैः ॥ ८ ॥ निर्यत्नपराङ्मुखेषु दैवेन विमुखेषु ॥ ११ ॥

[ सर्व० ] सम्यक्प्रवृत्तेषु वञ्चनाहीनेषु । प्रशान्ता निर्वाणकोपाग्नयः ॥ ३ ॥ निगमो वेदः प्रधानं येषाम् । श्रुतं विद्या, कालो वयः, ताभ्यां वृद्धाः श्रुतकालवृद्धाः ॥ ६ ॥ गतेषु दुर्योधनाह्वानेन (?) हास्तिनपुरं समागतेषु, संगतेषु संसदि समागतेषु ॥७॥ सर्वास्ववस्थासु सर्वकालं ते दुर्योधनादयः न कौट्यात् न कौटिल्यात् भवतामर्धं गृह्णन्तीति शेषः । कौटिल्याभावे हेतुः—ग्रस्तो हीति । प्रियाभ्युपेते संमते युधिष्ठिरेण । द्यूते प्रमत्तस्य सक्तस्य ॥ ८ ॥ निर्यत्नपराङ्मुखेषु प्रतिपराङ्मुखेषु ॥ ११ ॥

[लक्षा०] तेन कोपाद्ग्रस्तो हीत्यत्र तेन राज्यापहारेण ॥ ८ ॥ स दीव्यमान इत्यत्र सः धर्मराजः एनं शकुनिम् ॥ ९ ॥ दुरोदरास्तत्र सहस्रश इत्यत्र दुरोदराः दुरोदरवन्तः । द्यूतज्ञा इत्यर्थः ॥ १० ॥

**इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-**
**लक्षालंकारे द्वितीयोऽध्यायः ॥ २ ॥**

---

३. ख प्रवृत्तेषु च कौरवेषु । ख. °रेषां प्रशान्तिश्च हिता प्रजानाम् । ४ ख. दुर्योधनस्यैव । ख. प्रियं मम । ख. यदि चात्र । ५ ख. भीष्म मासाद्य । ६ ख. यथा स्वकेषु । ७ ख. ज. गतेषु स° । ८ छ. °माश्रितैः स्वैः । ज. प्रमत्तस्य ।

९–१० ख. कुरुप्रवीरैः सर्वैः सुहृद्भिर्गतमक्षवत्याम् । गान्धारराजस्य सुतं मताक्षं समाह्वयद्देवि तुमाजमीढः । ११ ख. नावाजितोऽक्ष° । ख. प्रतिदीव्य चैनमक्षेषु ।

संरम्भमाणो विजितः प्रसह्य
तत्रापराधः शकुनेर्न कश्चित् ।
तस्मात्प्रणम्यैव वचो ब्रवीतु
वैचित्रवीर्यं बहुसामयुक्तम् ॥ १२ ॥
तथा हि शक्यो धृतराष्ट्रपुत्रः
स्वार्थे नियोक्तुं पुरुषेण तेन ।
अयुद्धमाकाङ्क्षत कौरवाणां
साम्नैव दुर्योधनमाह्वयध्वम् ॥ १३ ॥
साम्ना जितोऽर्थोऽर्थकरो भवेत
युद्धेऽनयो भविता नेह सोऽर्थः ॥ १४ ॥

**वैशम्पायन उवाच ।**

एवं ब्रुवत्येव मधुप्रवीरे
शिनिप्रवीरः सहसोत्पपात ।
तच्चापि वाक्यं परिनिन्द्य तस्य
समाददे वाक्यमिदं समन्युः ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि द्वितीयोऽध्यायः ॥ २ ॥

## तृतीयोऽध्यायः ३

सात्यकिना बलदेववाक्यगर्हणपूर्वकं पाण्डवानां निरागस्त्वोपपादनम् ॥ १ ॥

**सात्यकिरुवाच ।**

यादृशः पुरुषस्यात्मा तादृशं संप्रभाषते ।
यथारूपोऽन्तरात्मा ते तथारूपं प्रभाषसे ॥ १ ॥
सन्ति वै पुरुषाः शूराः सन्ति कापुरुषास्तथा ।
उभावेतौ दृढौ पक्षौ दृश्येते पुरुषान्प्रति ॥ २ ॥
एकस्मिन्नेव जायेते कुले क्लीबमहाबलौ ।
फलाफलवती शाखे यथैकस्मिन् वनस्पतौ ॥३॥
नाभ्यसूयामि ते वाक्यं ब्रुवतो लाङ्गलध्वज ।
ये तु शृण्वन्ति ते वाक्यं तानसूयामि माधव ॥४ ॥
कथं हि धर्मराजस्य दोषमल्पमपि ब्रुवन् ।
लभते परिषन्मध्ये व्याहर्तुमकुतोभयः ॥ ५ ॥
समाहूय महात्मानं जितवन्तोऽक्षकोविदाः ।
अनक्षज्ञं यथाश्रद्धं तेषु धर्मजयः कुतः ॥
यदि कुन्तीसुतं गेहे क्रीडन्तं भ्रातृभिः सह ॥ ६ ॥
अभिगम्य जयेयुस्ते तत्तेषां धर्मतो भवेत् ।
समाहूय तु राजानं क्षत्रधर्मरतं सदा ॥ ७ ॥
निकृत्या जितवन्तस्ते किं नु तेषां परं शुभम् ।
कथं प्रणिपतेच्चायमिह कृत्वा पणं परम् ॥ ८ ॥

---

[नील०] संरम्भमाणः हठं कुर्वाणः । संरब्धमान इति पाठे संवृद्धदर्प इत्यर्थः ॥ १२ ॥ युद्धे अनयः भविता भविष्यति । इह सामोपाये सोऽर्थः अनयः न ॥ १४ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे बलदेववाक्ये द्वितीयोऽध्यायः ॥ २ ॥

[अर्जु०] संरम्भमाणः क्रुध्यन् ॥१२॥ तथापीति अपिः संभावनायां, तथाहीत्यपि पाठः ॥ १३ ॥ 'अद्य पाण्डुसुतो राज्यं लभतां वा युधिष्ठिरः निहता वा मया सर्वे शेष्यन्ति वसुधातले' सात्यकिः क्रुद्धः सन् पूर्वोक्तं वाक्यमवोचत् ॥ १५ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायां द्वितीयोऽध्यायः ॥ २॥

[ सर्व० ] संरभ्यमाणः कुपितः व्यत्ययो बहुलमिति श्यनि रूपम् ॥ १२ ॥

इति श्रीमहाभारते उद्योगपर्वणि सर्वज्ञनारायणकृतौ व्याख्यायां द्वितीयोऽध्यायः ॥ २ ॥

[ नील० ] यादृश आत्मा शुद्धः पापो वा तादृशं शुद्धं पापं वा भाषते ॥ १ ॥ फलाफलवती सुपो लुक् आर्षः पूर्वसवर्णो वा ॥ ३ ॥ ते तव वाक्यं तत्रापराधः शकुनेर्न कश्चिदिति पूर्वोक्तं कौरवपक्षपातयुक्तम् ॥ ४ ॥ यथाश्रद्धं द्यूते आसक्तिरहितमिव धर्मे जयः धर्मनिमित्तं जयः कुतः किंतु अधर्ममूलक एव तेषां जय इत्यर्थः ॥ ६ ॥ प्रणिपतेत् शरणागतो भवेत् पणं कृत्वा वनवासप्रतिज्ञां निस्तीर्य ॥८॥

[ अर्जु० ] फलाफलवती औकारलोप आर्षः ॥ २ ॥ लाङ्गलध्वजेति निन्दागर्भं विशेषणम् ॥ ४ ॥ तत् जयरूपम् ॥ ७ ॥ किंस्विदित्याक्षेपे पदं संपदमपि ॥ ८ ॥

[ सर्व० ] यादृश आत्मा धर्मिष्ठः पापिष्ठो वा स तादृशमेव भाषते ॥ १ ॥ 'फलाफलवती' इत्यत्र औकारस्थाने ईकारश्छान्दसः ॥ ३ ॥ लाङ्गलध्वजेति निन्दागर्भं संबोधनम् ॥ ४ ॥ किमित्याक्षेपे ॥ ८ ॥

---

१२ ख. °माणोऽपि । ख. ब्रुवन्तु । ख. मान्युक्तम् । १३ ख. तथाहि पापा धृतराष्ट्रपुत्राः शक्या नियोक्तुं । १४ छ. °तो योऽर्थ° । १५ ख. तस्यापि वा° । इति द्वितीयोऽध्यायः ॥ २ ॥

५ छ. °मल्पमिति नु° । ८ ख. पदं शुभम् ।

वनवासाद्विमुक्तस्तु प्राप्तः पैतामहं पदम् ।
यद्ययं पापवित्तानि कामयेत युधिष्ठिरः ॥ ९ ॥
एवमप्ययमत्यन्तं परान्नार्हति याचितुम् ।
कथं च धर्मयुक्तास्ते न च राज्यं जिहीर्षवः ॥ १० ॥
निवृत्तवासान् कौन्तेयान्य आहुर्विदिता इति ।
अनुनीता हि भीष्मेण द्रोणेन विदुरेण च ॥ ११ ॥
न व्यवस्यन्ति पाण्डूनां प्रदातुं पैतृकं वसु ।
अहं तु तान् शितैर्बाणैरनुनीय रणे बलात् ॥ १२ ॥
पादयोः पातयिष्यामि कौन्तेयस्य महात्मनः ।
अथ ते न व्यवस्यन्ति प्रणिपाताय धीमतः ॥ १३ ॥
गमिष्यन्ति सहामात्या यमस्य सदनं प्रति ।
नहि ते युयुधानस्य संरब्धस्य युयुत्सतः ॥ १४ ॥
वेगं समर्थाः संसोढुं वज्रस्येव महीधराः ।
को हि गाण्डीवधन्वानं कश्च चक्रायुधं युधि ॥ १५ ॥
मां चापि विषहेत् क्रुद्धं कश्च भीमं दुरासदम् ।
यमौ च दृढधन्वानौ यमकालोपमद्युती ।
विराटद्रुपदौ वीरौ यमकालोपमद्युती ॥ १६ ॥
को जिजीविषुरासादेद्धृष्टद्युम्नं च पार्षतम् ।
पञ्चैतान् पाण्डवेयांस्तु द्रौपद्याः कीर्तिवर्धनान् ॥ १७ ॥
समप्रमाणान्पाण्डूनां समवीर्यान् मदोत्कटान् ।
सौभद्रं च महेष्वासममरैरपि दुःसहम् ॥ १८ ॥
गदप्रद्युम्नसाम्बांश्च कालसूर्यानलोपमान् ।
ते वयं धृतराष्ट्रस्य पुत्रं शकुनिना सह ॥ १९ ॥
कर्णं चैव निहत्याजावभिषेक्ष्याम पाण्डवम् ।
नाधर्मो विद्यते कश्चिच्छत्रून् हत्वाऽऽततायिनः ॥ २० ॥
अधर्म्यमयशस्यं च शात्रवाणां प्रयाचनम् ।
हृद्गतस्तस्य यः कामस्तं कुरुध्वमतन्द्रिताः ॥ २१ ॥
निसृष्टं धृतराष्ट्रेण राज्यं प्राप्नोतु पाण्डवः ।
अद्य पाण्डुसुतो राज्यं लभतां वा युधिष्ठिरः ॥ २२ ॥
निहता वा रणे सर्वे स्वप्स्यन्ति वसुधातले ॥ २३ ॥

इति श्रीमहाभारते उद्योगपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

## चतुर्थोऽध्यायः ४

दुर्योधनो न सामसाध्योऽतः शीघ्रं प्रस्थाप्यन्तां मित्रेभ्यो दूताः, नोचेत् दुर्योधनेन पूर्वं प्रार्थितास्ते तमेव भजेयुः । एवं मम पुरोहितो धृतराष्ट्रं प्रति गृहीतसंदेशो गच्छतु इति द्रुपदवचनम् ॥ १ ॥

द्रुपद उवाच—
एवमेतन्महाबाहो भविष्यति न संशयः ।
नहि दुर्योधनो राज्यं मधुरेण प्रदास्यति ॥ १ ॥
अनुवर्त्स्यति तं चापि धृतराष्ट्रः सुतप्रियः ।
भीष्मद्रोणौ च कार्पण्यान्मौर्ख्याद्राधेयसौबलौ ॥ २ ॥

---

[ लक्षा० ] तेषु वै दारुणध्वजेत्यत्र तेषु दुर्योधनादिषु तालवृक्षस्य क्रूरत्वात् दारुणध्वजेत्युक्तम् ॥ ४ ॥ अभिगम्य जयेयुस्ते इत्यत्र ते वृष्णयः (?) ॥ ७ ॥

[ नील० ] पैतामहमिति न्यायलभ्यत्वं सूचितम् ॥ ९ ॥ विदिता अज्ञातचर्यायामिति शेषः । अनुनीताः परिमितः काल एतैरतिवाहित इति बोधिताः ॥ ११ ॥ यमः शरीरात् प्राणानामुद्धर्ता कालः आयुःपरिच्छेदकर्ता ॥ १६ ॥ पाण्डवेयान् पाण्डवी द्रौपदी तत्पुत्रान् । पुंयोगलक्षणङीषन्तात् स्त्रीभ्यो ढगिति ढक् ॥ १७ ॥ पाण्डूनां पाण्डुतुल्यानां पाण्डवानाम् ॥ १८ ॥ तस्य पाण्डवस्य ॥ २१ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे तृतीयोऽध्यायः ॥ ३ ॥

[ अर्जु० ] नच राज्यं जिहीर्षवः कथमित्यन्वयः ॥ १० ॥

इति श्रीमन्महा० मर्जुनमिश्रकृ० मुद्योगपर्वणि तृतीयोऽध्यायः ॥ ३ ॥

[ सर्व० ] पदं पदमात्रमपि ॥ ९ ॥ नच राज्यं जिहीर्षवः कथमित्यन्वयः ॥ १० ॥

इति महाभारतोद्योगपर्वणि व्याख्यायां तृतीयोध्यायः ॥ ३ ॥

[लक्षा०] य आहुर्विजिता इत्यत्र ये दुर्योधनादयः, विजिताः त्रयोदशवर्षापूर्तेः पुनरपि विजिता इत्याहुः ॥ ११ ॥

इति श्रीभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे तृतीयोऽध्यायः ॥ ३ ॥

[ नील० ] मधुरेण साम्ना ॥ १ ॥ कार्पण्यात् तदन्नभक्षणेन दैन्यात् ॥ २ ॥

[ अर्जु० ] मधुरेण प्रीत्या ॥ १ ॥ कार्पण्यात् धनलोभात् ॥ २ ॥

[ सर्व० ] कार्पण्यात् दुर्योधनसकाशलभ्यवेतनलोभात् वृद्धतया क्लीबत्वाद्वा ॥ २ ॥

---

९ ख. °प्यवमत्यन्तं । ११ द्रोणेनच महात्मना । १२ ख. तु निशितै° छ. रणेऽपरान् । १४ ख. ते धर्मराजस्य । १६ ज. उत्तरार्धं नास्ति । १९ छ. बालसूर्या° । २२ छ. राज्यं मधुरणे प्रदास्यति । इति तृतीयोऽध्यायः ॥ ३ ॥

बलदेवस्य वाक्यं तु मम ज्ञाने न युज्यते ।
एतद्धि पुरुषेणाग्रे कार्यं सुनयमिच्छता ॥ ३ ॥
न तु वाच्यो मृदुवचो धार्तराष्ट्रः कथंचन ।
नहि मार्दवसाध्योऽसौ पापबुद्धिर्मतो मम ॥ ४ ॥
गर्दभे मार्दवं कुर्याद्गोषु तीक्ष्णं समाचरेत् ।
मृदु दुर्योधने वाक्यं यो ब्रूयात्पापचेतसि ॥ ५ ॥
मृदुं वै मन्यते पापो भाषमाणमशक्तिकम् ।
जितमर्थं विजानीयादबुधो मार्दवे सति ॥ ६ ॥
एतच्चैव करिष्यामो यत्नश्च क्रियतामिह ।
प्रस्थापयाम मित्रेभ्यो बलान्युद्योजयन्तु नः ॥ ७ ॥
शल्यस्य धृष्टकेतोश्च जयत्सेनस्य वा विभो ।
केकयानां च सर्वेषां दूता गच्छन्तु शीघ्रगाः ॥ ८ ॥
स च दुर्योधनो दूतं प्रेषयिष्यति सर्वशः ।
पूर्वाभिपन्नाः सन्तश्च भजन्ते पूर्वचोदनम् ॥ ९ ॥
तत्त्वरध्वं नरेन्द्राणां पूर्वमेव प्रचोदने ।
महद्धि कार्यं वोढव्यमिति मे वर्तते मतिः ॥ १० ॥
शल्यस्य प्रेष्यतां शीघ्रं ये च तस्यानुगा नृपाः ।
भगदत्ताय राज्ञे च पूर्वसागरवासिने ॥ ११ ॥
अमितौजसे तथोग्राय हार्दिक्यायान्धकाय च ।
दीर्घप्रज्ञाय शूराय रोचमानाय वा विभो ॥ १२ ॥
आनीयतां बृहन्तश्च सेनाबिन्दुश्च पार्थिवः ।
सेनाजित्प्रतिविन्ध्यश्च चित्रवर्मा सुवास्तुकः ॥ १३ ॥
बाह्लीको मुञ्जकेशश्च चैद्याधिपतिरेव च ।
सुपार्श्वश्च सुबाहुश्च पौरवश्च महारथः ॥ १४ ॥
शकानां पह्लवानां च दरदानां च ये नृपाः ।
सुरारिश्च नदीजश्च कर्णवेष्टश्च पार्थिवः ॥ १५ ॥
नीलश्च वीरधर्मा च भूमिपालश्च वीर्यवान् ।
दुर्जयो दन्तवक्त्रश्च रुक्मी च जनमेजयः ॥ १६ ॥
आषाढो वायुवेगश्च पूर्वपाली च पार्थिवः ।
भूरितेजा देवकश्च एकलव्यः सहात्मजैः ॥ १७ ॥
कारूषकाश्च राजानः क्षेमधूर्तिश्च वीर्यवान् ।
काम्बोजा ऋषिका ये च पश्चिमानूपकाश्च ये ॥ १८ ॥
जयत्सेनश्च काश्यश्च तथा पञ्चनदा नृपाः ।
क्राथपुत्रश्च दुर्धर्षः पार्वतीयाश्च ये नृपाः ॥ १९ ॥
जानकिश्च सुशर्मा च मणिमान्योऽतिमत्स्यकः ।
पांशुराष्ट्राधिपश्चैव धृष्टकेतुश्च वीर्यवान् ॥ २० ॥
तुण्डश्च दण्डधारश्च बृहत्सेनश्च वीर्यवान् ।
अपराजितो निषादश्च श्रेणिमान्वसुमानपि ॥ २१ ॥
बृहद्बलो महौजाश्च बाहुः परपुरंजयः ।
समुद्रसेनो राजा च सहपुत्रेण वीर्यवान् ॥ २२ ॥
उद्भवः क्षेमकश्चैव वाटधानश्च पार्थिवः ।
श्रुतायुश्च दृढायुश्च शाल्वपुत्रश्च वीर्यवान् ॥ २३ ॥
कुमारश्च कलिङ्गानामीश्वरो युद्धदुर्मदः ।
एतेषां प्रेष्यतां शीघ्रमेतद्धि मम रोचते ॥ २४ ॥
अयं च ब्राह्मणो विद्वान् मम राजन् पुरोहितः ।
प्रेष्यतां धृतराष्ट्राय वाक्यमस्मै प्रदीयताम् ॥ २५ ॥
यथा दुर्योधनो वाच्यो यथा शान्तनवो नृपः ।
धृतराष्ट्रो यथा वाच्यो द्रोणश्च रथिनां वरः ॥ २६ ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

---

[नील०] ज्ञाने ज्ञानवतां समाजे न युज्यते अयुक्तमित्यर्थः । एतद्वक्ष्यमाणम् ॥ ३ ॥ पूर्वाभिपन्नाः पूर्वं साहाय्यार्थं वृताः । पूर्वचोदनं पूर्वं चोदना प्रेरणा यस्य तम् ॥ ९ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे चतुर्थोऽध्यायः ॥ ४ ॥

[अर्जु०] मृदुतया वचः इति पठन्ति ॥ ४ ॥ अभिभवतीत्यभिभूः ॥ २३ ॥ पाञ्चाल्यः युधिष्ठिरमते स्थितः कुरुभ्यः स्वपुरोहितं प्रेषयामास ॥ २६ ॥

इति श्रीमन्महा० मर्जुनमिश्र० मुद्योगपर्वणि चतुर्थोऽध्यायः ॥ ४ ॥

[सर्व०] अभिभवतीत्यभिभूः ॥ २३ ॥

इति महाभारतोद्योगपर्वणि व्याख्यायां चतुर्थोऽध्यायः ॥ ४ ॥

---

७ छ. प्रस्थापयामि । छ. द्योतयन्तु । ८ छ. कैकयानां । १९ छ. पर्वतीयाश्च । २० अ. °मत्सकः । इति चतुर्थोऽध्यायः ॥ ४ ॥

## पञ्चमोऽध्यायः ५

द्रुपदवाक्यमभिनन्द्य तं प्रति भवानेव श्रुतवयोभ्यां वृद्धो गुरुरसि नः सर्वेषामितिभवत्प्रेषितं वचोऽस्माकं संमतमिति श्रीकृष्ण-वचनम् ॥ १ ॥ कृष्णस्य द्वारकां प्रति गमनम् ॥ २ ॥ कुरुपाण्डवानां सांग्रामिकानुष्ठानं ॥ ३ ॥

**वासुदेव उवाच—**

उपपन्नमिदं वाक्यं सोमकानां धुरंधरे ।
अर्थसिद्धिकरं राज्ञः पाण्डवस्यामितौजसः ॥ १ ॥
एतच्च पूर्वं कार्यं नः सुनीतमभिकाङ्क्षताम् ।
अन्यथा ह्याचरन्कर्म पुरुषः स्यात्सुबालिशः ॥ २ ॥
किं तु संबन्धकं तुल्यमस्माकं कुरुपाण्डुषु ।
यथेष्टं वर्तमानेषु पाण्डवेषु च तेषु च ॥ ३ ॥
ते विवाहार्थमानीता वयं सर्वे तथा भवान् ।
कृते विवाहे मुदिता गमिष्यामो गृहान्प्रति ॥ ४ ॥
भवान् वृद्धतमो राज्ञां वयसा च श्रुतेन च ।
शिष्यवत्ते वयं सर्वे भवामेह न संशयः ॥ ५ ॥
भवन्तं धृतराष्ट्रश्च सततं बहु मन्यते ।
आचार्ययोः सखा चासि द्रोणस्य च कृपस्य च ॥६॥
स भवान्प्रेषयत्वद्य पाण्डवार्थकरं वचः ।
सर्वेषां निश्चितं तन्नः प्रेषयिष्यति यद्भवान् ॥ ७ ॥
यदि तावच्छमं कुर्यान्न्यायेन कुरुपुंगवः ।
न भवेत् कुरुपाण्डूनां सौभ्रात्रेण महान् क्षयः ॥८॥
अथ दर्पान्वितो मोहान्न कुर्याद्धृतराष्ट्रजः ।
अन्येषां प्रेषयित्वा च पश्चादस्मान्समाह्वयेः ॥ ९ ॥
ततो दुर्योधनो मन्दः सहामात्यः सबान्धवः ।
निष्ठामापत्स्यते मूढः क्रुद्धे गाण्डीवधन्वनि ॥ १० ॥

**वैशम्पायन उवाच—**

ततः सत्कृत्य वार्ष्णेयं विराटः पृथिवीपतिः ।
गृहात्प्रस्थापयामास सगणं सहबान्धवम् ॥ ११ ॥
द्वारकां तु गते कृष्णे युधिष्ठिरपुरोगमाः ।
चक्रुः सांग्रामिकं सर्वं विराटश्च महीपतिः ॥ १२ ॥
ततः संप्रेषयामास विराटः सहबान्धवैः ।
सर्वेषां भूमिपालानां द्रुपदश्च महीपतिः ॥ १३ ॥
वचनात्कुरुसिंहानां मत्स्यपाञ्चालयोश्च ते ।
समाजग्मुर्महीपालाः संप्रहृष्टा महाबलाः ॥ १४ ॥
तच्छ्रुत्वा पाण्डुपुत्राणां समागच्छन्महद्बलम् ।
धृतराष्ट्रसुताश्चापि समानिन्युर्महीपतीन् ॥ १५ ॥
समाकुला मही राजन् कुरुपाण्डवकारणात् ।
तदा समभवत्कृत्स्ना संप्रयाणे महीक्षिताम् ॥ १६ ॥
संकुला च तदा भूमिश्चतुरङ्गबलान्विता ।
बलानि तेषां वीराणामागच्छन्ति ततस्ततः ॥ १७ ॥
चालयन्तीव गां देवीं सपर्वतवनामिमाम् ॥
ततः प्रज्ञावयोवृद्धं पाञ्चाल्यः स्वपुरोहितम् ।
कुरुभ्यः प्रेषयामास युधिष्ठिरमते स्थितः ॥ १८ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चमोऽध्यायः ॥ ५ ॥

---

[ नील० ] उपपन्नं युक्तम् ॥ १ ॥ संबन्धकं तुल्यमिति पाण्डवेषु कुन्तीद्वारा कुरुषु दुर्योधनकन्यायाः साम्बेनाहरणात् ॥ ३ ॥ वचः संदेशवाक्यम् ॥ ७ ॥ प्रेषयित्वा दूतमिति शेषः ॥ ९ ॥ निष्ठां नाशम् । ‘निष्ठा निष्पत्तिनाशान्तयाच्ञानिर्वहणेषु च’ इति विश्वः ॥ १० ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे पञ्चमोऽध्यायः ॥ ५ ॥

[ अर्जु० ] संबन्धकं संबन्धः, तुल्यं सांबाय दुर्योधनेन दुहिता दत्तेति कौरवैः संबन्धः । कुन्ती पितृष्वसास्माकमिति पाण्डवैरपि संबन्धः । सांबन्धकमिति पाठे संबन्धे भवं सांबन्धकं तच्च प्रेम परस्परम् ॥ ३ ॥ निष्ठां नाशम् ॥ १० ॥ ‘ततः सत्कृत्य दाशार्हम्’ इत्यादेः ‘नगरं नागसाह्वयम्’ इत्यन्तस्य पूर्वराज्यदानेन युधिष्ठिरस्य प्रीतिर्भावनीयेति तात्पर्यार्थः ॥ १६–१८ ॥

इति श्रीमन्महाभारतव्या० मर्जुन० मुद्योग० पञ्चमोऽध्यायः ॥ ५ ॥

[ सर्व० ] सम्बन्धकं सम्बन्धः । साम्बाय दुर्योधनेन दुहिता दत्तेति कौरवैः सह संबन्धः । कुन्ती पितृष्वसास्माकमिति पाण्डवैः सह संबन्धः । सांबन्धकमिति वा पाठः । तच्च परस्परं प्रेम ॥ ३ ॥ निष्ठां नाशम् ॥ १० ॥ ‘ततः सत्कृत्य’ इत्यादेः ‘नागसाह्वयम्’ इत्यन्तस्य राज्यदानेन युधिष्ठिरस्य प्रीतिर्भावनीयेति तात्पर्यार्थः ॥ ११ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्व० टीकायां पञ्चमोऽध्यायः ॥ ५ ॥

---

३ अ. सांबन्धकं । ७ छ. तद्भवान् । १७ छ. संकुचत तदा ।

इति पञ्चमोऽध्यायः ॥ ५ ॥

## षष्ठोऽध्यायः ६

द्रुपदेन कर्तव्यार्थोपदेशपूर्वकं स्वपुरोधसो हास्तिनपुरप्रेषणम् ॥ १ ॥

**द्रुपद उवाच—**

भूतानां प्राणिनः श्रेष्ठाः प्राणिनां बुद्धिजीविनः ।
बुद्धिमत्सु नराः श्रेष्ठा नरेष्वपि द्विजातयः ॥ १ ॥
द्विजेषु वैद्याः श्रेयांसो वैद्येषु कृतबुद्धयः ।
कृतबुद्धिषु कर्तारः कर्तृषु ब्रह्मवादिनः ॥ २ ॥
स भवान् कृतबुद्धीनां प्रधान इति मे मतिः ।
कुलेन च विशिष्टोऽसि वयसा च श्रुतेन च ॥ ३ ॥
प्रज्ञया सदृशश्चासि शुक्रेणाङ्गिरसेन च ।
विदितं चापि ते सर्वं यथावृत्तः स कौरवः ॥ ४ ॥
पाण्डवश्च यथावृत्तः कुन्तीपुत्रो युधिष्ठिरः ।
धृतराष्ट्रस्य विदिते वञ्चिताः पाण्डवाः परैः ॥ ५ ॥
विदुरेणानुनीतोऽपि पुत्रमेवानुवर्तते ।
शकुनिर्बुद्धिपूर्वं हि कुन्तीपुत्रं समाह्वयत् ॥ ६ ॥
अनक्षज्ञं मताक्षः सन् क्षत्रवृत्ते स्थितं शुचिम् ।
ते तथा वञ्चयित्वा तु धर्मराजं युधिष्ठिरम् ॥ ७ ॥
न कस्यांचिदवस्थायां राज्यं दास्यन्ति वै स्वयम् ।
भवांस्तु धर्मसंयुक्तं धृतराष्ट्रं ब्रुवन्वचः ॥ ८ ॥
मनांसि तस्य योधानां ध्रुवमावर्तयिष्यति ।
विदुरश्चापि तद्वाक्यं साधयिष्यति तावकम् ॥ ९ ॥
भीष्मद्रोणकृपादीनां भेदं संजनयिष्यति ।
अमात्येषु च भिन्नेषु योधेषु विमुखेषु च ॥ १० ॥
पुनरेकत्रकरणं तेषां कर्म भविष्यति ।
एतस्मिन्नन्तरे पार्थाः सुखमेकाग्रबुद्धयः ॥ ११ ॥
सेनाकर्म करिष्यन्ति द्रव्याणां चैव संचयम् ।
भिद्यमानेषु च स्वेषु लम्बमाने तथा त्वयि ॥ १२ ॥
न तथा ते करिष्यन्ति सेनाकर्म न संशयः ।
एतत्प्रयोजनं चात्र प्राधान्येनोपलभ्यते ॥ १३ ॥
संगत्या धृतराष्ट्रश्च कुर्याद्धर्म्यं वचस्तव ।
स भवान् धर्मयुक्तश्च धर्म्यं तेषु समाचरन् ॥ १४ ॥
कृपालुषु परिक्लेशान्पाण्डवीयान्प्रकीर्तयन् ।
वृद्धेषु कुलधर्मं च ब्रुवन्पूर्वैरनुष्ठितम् ॥ १५ ॥
विभेत्स्यति मनांस्येषामिति मे नात्र संशयः ।
न च तेभ्यो भयं तेऽस्ति ब्राह्मणो ह्यसि वेदवित् १६
दूतकर्मणि युक्तश्च स्थविरश्च विशेषतः ।
स भवान्पुष्ययोगेन मुहूर्तेन जयेन च ॥ १७ ॥
कौरवेयान्प्रयात्वाशु कौन्तेयस्यार्थसिद्धये ।

**वैशम्पायन उवाच—**

तथाऽनुशिष्टः प्रययौ द्रुपदेन महात्मना ।
पुरोधा वृत्तसंपन्नो नगरं नागसाह्वयम् ॥ १८ ॥
शिष्यैः परिवृतो विद्वान् नीतिशास्त्रार्थकोविदः ।
पाण्डवानां हितार्थाय कौरवान् प्रति जग्मिवान् ॥ १९

इति श्रीमहाभारते उद्योगपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

---

[ लक्षा० ] निष्ठामापत्स्यते मूढ इत्यत्र निष्ठा निष्पत्तिनाशान्तेत्यभिधानात् निष्ठां नाशम् ॥ १० ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चमोऽध्यायः ॥ ५ ॥

[ नील० ] वैद्याः विद्यावन्तः कृतबुद्धयः सिद्धान्तज्ञाः ॥ २ ॥ एतस्मिन्नन्तरे शत्रुभिन्नानामेकीकरणे व्यापृतेष्वित्यर्थः ॥ ११ ॥ लम्बमाने विलम्बं कुर्वाणे १२

इति श्रीमन्महाभारत उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षष्ठोऽध्यायः ॥ ६ ॥

[ अर्जु० ] भवन्ति इति भूतानि स्थावराणि जङ्गमानि भूतेषु स्थावरजङ्गमेषु प्राणिनो जङ्गमाः, बुद्धिजीविनोऽश्वादयः नराः मनुष्याः, द्विजा ब्राह्मणक्षत्रियवैश्याः ॥१॥ वैद्या ब्राह्मणाः कृतबुद्धयो बुद्धिप्रशस्ताः ॥ २ ॥ अनवमोऽहीनः ॥४॥ विदिते ज्ञाते सति ॥ ५ ॥ आवर्तयिष्यति दुर्योधनमताद्व्यावर्तयिष्यति ॥ ९ ॥ एकाग्रकरणमैकमत्यापादनम् ॥ ११ ॥ लम्बमाने अनागच्छति सति ॥ १२ ॥ पुष्ययोगेन पुष्यनक्षत्रयोगेन जयेन जयनाम्ना ॥ १७ ॥

इति श्रीमन्महाभा० मर्जुनमि० उद्योगपर्वणि षष्ठोऽध्यायः ॥ ६ ॥

[ सर्व० ] भवन्तीति भूतानि स्थावरजङ्गमानि । प्राणिनो जङ्गमाः । बुद्धिजीविनो बुद्धिमुपजीव्य जीवन्ति ते । बुद्धेराधिक्यगुणेन प्राणिभ्यः पृथग्भूता द्विपदा नरा

---

४ ज. प्रज्ञयाऽनवम । ५ छ. °स्य विदितं व° । ८ छ. धृतराष्ट्रे । १० ज. विषमेषु च । ११ ज. पुनरेकाग्रक° । १२ अ. व. विद्यमानेषु । १४ ज. धर्मे । १५ ज. कृपालुश्च । ज. कुरुधर्मे । १६ छ. भयं ह्यस्ति । १९ ज. शिष्यैरित्ययं श्लोको न दृश्यते । इति षष्ठोऽध्यायः ॥ ६ ॥

## सप्तमोऽध्यायः ७

भगवता श्रीवासुदेवेन साहाय्ययाचनार्थमागताभ्यां पार्थदुर्योधनाभ्यां तद्दानं प्रतिश्रुत्य एकत्र नारायणाख्यगोपगणानेकत्रा-त्मानं चायुध्यमानमवस्थाप्य प्रथममर्जुनं प्रत्यन्यतरग्रहणचोदनम् ॥ १ ॥ अर्जुनेनायुध्यमाने वासुदेवे वृते दुर्योधनेन नारायणाख्यसैन्य-वरणम् ॥ २ ॥ बलदेवेन युद्धे उदासीनत्वाङ्गीकारः ॥ ३ ॥

**वैशम्पायन उवाच—**

पुरोहितं ते प्रस्थाप्य नगरं नागसाह्वयम् ।
दूतान्प्रस्थापयामासुः पार्थिवेभ्यस्ततस्ततः ॥ १ ॥
प्रस्थाप्य दूतानन्यत्र द्वारकां पुरुषर्षभः ।
स्वयं जगाम कौरव्यः कुन्तीपुत्रो धनंजयः ॥ २ ॥
गते द्वारवतीं कृष्णे बलदेवे च माधवे ।
सहवृष्ण्यन्धकैः सर्वैर्भोजैश्च शतशस्तदा ॥ ३ ॥
सर्वमागमयामास पाण्डवानां विचेष्टितम् ।
धृतराष्ट्रात्मजो राजा गूढैः प्रणिहितैश्चरैः ॥ ४ ॥
स श्रुत्वा माधवं यान्तं सदश्वैरनिलोपमैः ।
बलेन नातिमहता द्वारकामभ्ययात्पुरीम् ॥ ५ ॥
तमेव दिवसं चापि कौन्तेयः पाण्डुनन्दनः ।
आनर्तनगरीं रम्यां जगामाशु धनञ्जयः ॥ ६ ॥
तौ यात्वा पुरुषव्याघ्रौ द्वारकां कुरुनन्दनौ ।
सुप्तं ददृशतुः कृष्णं शयानं चाभिजग्मतुः ॥ ७ ॥
ततः शयाने गोविन्दे प्रविवेश सुयोधनः ।
उच्छीर्षतश्च कृष्णस्य निषसाद वरासने ॥ ८ ॥
ततः किरीटी तस्यानु प्रविवेश महामनाः ।
पश्चार्धे च स कृष्णस्य प्रह्वोऽतिष्ठत्कृताञ्जलिः ॥ ९ ॥
प्रतिबुद्धः स वार्ष्णेयो ददर्शाग्रे किरीटिनम् ।
स तयोः स्वागतं कृत्वा यथावत्प्रतिपूज्य तौ ॥ १० ॥
तदागमनजं हेतुं पप्रच्छ मधुसूदनः ।
ततो दुर्योधनः कृष्णमुवाच प्रहसन्निव ॥ ११ ॥
विग्रहेऽस्मिन् भवान् साह्यं मम दातुमिहार्हति ।
समं हि भवतः सख्यं मम चैवार्जुनेऽपि च ॥ १२ ॥
तथा संबन्धकं तुल्यमस्माकं त्वयि माधव ।
अहं चाभिगतः पूर्वं त्वामद्य मधुसूदन ॥ १३ ॥
पूर्वं चाभिगतं सन्तो भजन्ते पूर्वसारिणः ।
त्वं च श्रेष्ठतमो लोके सतामद्य जनार्दन ॥ १४ ॥

---

मनुष्याः । द्विजातयो ब्राह्मणक्षत्रियवैश्याः ॥ १ ॥ वैद्यास्त्र-यीत्रिद्यादिना व्यवहरन्तो ब्राह्मणाः । कृतबुद्धयो विधिप्रति-षेधसंस्कृतबुद्धयः । कर्तारोऽनुष्ठातारः । ब्रह्मवादिनः ब्रह्म-ज्ञानिनः ॥ २ ॥ प्रज्ञया ऊहापोहक्षमया धिया ॥ ३ ॥ अनवमोऽहीनः ॥ ४ ॥ विदिते ज्ञातेसति ॥ ५ ॥ आवर्त-यिष्यति दुर्योधनमताद्व्यावर्तयिष्यति ॥ ९ ॥ पुनः एकाग्र-करणम् ऐकमत्यापादनम् ॥ ११ ॥ लम्बमाने विलम्बं कुर्वाणे ॥ १२ ॥ सेनाकर्म सेनोद्योगम् । जयेन जयनाम्ना ॥ १७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृत-टीकायां षष्ठोऽध्यायः ॥ ६ ॥

[ लक्षा० ] ध्रुवमार्जवयिष्यतीत्यत्र आर्जवयिष्यति दुर्यो-धने वक्रं करिष्यति ॥ ९ ॥ पुनरैकाग्र्यकरणमित्यत्र एका-ग्रस्य भावः ऐकाग्र्यं चित्तसमाधानं तस्य करणं यस्मिन् ॥ ११ ॥ प्राप्यान्येनेत्यत्र अन्येन संधिकार्येण प्राप्य एत-त्प्रयोजनं सेनाकर्माकरणमुपलभ्यते प्राप्यते ॥ १३ ॥

इति श्रीभारते उद्योगपर्वणि वादिराजतीर्थकृत-लक्षालंकारे षष्ठोऽध्यायः ॥ ६ ॥

[ नील० ] आगमयामास ज्ञातवान् ॥ ४ ॥

[ अर्जु० ] ततस्ततः तेभ्यस्तेभ्यः प्रसिद्धेभ्यः ॥ १ ॥ माधवे मधुगोत्रे आगमयामास ज्ञातवान् । दूतैर्व्यक्तैः चारै-रव्यक्तैः । गूढैः प्रणिहितैश्चरैरिति च पठन्ति ॥ ४ ॥ आनर्तनगरीं कुशस्थलीं द्वारकाख्याम् ॥ ६ ॥ उच्छीर्षतः उपधाने । पश्चार्धे पादान्ते प्रह्वोऽतिष्ठत् प्रह्वोऽवनतः ॥ ९ ॥ अर्जुनं तदागमनजहेतुं पप्रच्छ जिज्ञासयामास ॥ ११ ॥ साह्यं सह सहायस्तद्भावं, सह्यमित्यसम्यक् ॥ १२ ॥ पूर्वसारिणः पूर्वाचारानुगामिनः ॥ १४ ॥

[ सर्व० ] 'गते द्वारवतीं कृष्णे' इत्यादेः 'यः स पाञ्चालराजेन प्रेषितः कौरवान्प्रति' इत्यन्तस्य सेनासम-वायस्तात्पर्यार्थः । त्रिशिरोवधोपाख्यानस्य च तपसि स्थित-स्यापि वैरिणो वधस्तात्पर्यार्थः । वृत्रोपाख्यानस्य तु छद्मना वैरिणो वधस्तात्पर्यार्थः । नहुषोपाख्यानस्य नहुषवद्युष्मद्वे-षेण हताः कौरवा इति तात्पर्यार्थः । माधवो मधुगोत्रः ॥ ३ ॥ आगमयामास ज्ञातवान् । दूतैः व्यक्तैः, चरैरव्यक्तैः ॥ ४ ॥ उच्छीर्षमुपधानम् ॥ ८ ॥ पश्चार्धे पादान्ते ॥ ९ ॥ साह्यं सहभावम् ॥ १२ ॥ पूर्वसारिणः पूर्वाचारानुकारिणः ॥ १४ ॥

[ लक्षा० ] पश्चार्धेन स कृष्णस्येत्यत्र पश्चार्धेन पश्चात् पूर्वाङ्गादधस्तात् यदङ्गार्धं तेन पादसमीपेनेत्यर्थः ॥ ९ ॥ पूर्वं चाभिगताः सन्त इत्यत्र पूर्वं केनचिदभिगताः सन्तः सज्जनाः पूर्वसारिणः पूर्वागतानुसारिणः ॥ १४ ॥

---

४ छ. °माख्यापयामास । ५ ज. यातं । ७ छ. तौ गत्वा । छ. सर्मं दद° । ८ ज. कृष्णेन निष° । ९ ज. पश्चार्धे चैव °कृ । १३ छ. चाभ्यागतः ।

सततं संमतश्चैव सद्वृत्तमनुपालय ।

**कृष्ण उवाच—**

भवानभिगतः पूर्वमत्र मे नास्ति संशयः ।
दृष्टस्तु प्रथमं राजन् मया पार्थो धनञ्जयः ॥ १५ ॥
तव पूर्वाभिगमनात्पूर्वं चाप्यस्य दर्शनात् ।
साहाय्यमुभयोरेव करिष्यामि सुयोधन ॥ १६ ॥
प्रवारणं तु बालानां पूर्वं कार्यमिति श्रुतिः ।
तस्मात्प्रवारणं पूर्वमर्हः पार्थो धनञ्जयः ॥ १७ ॥
मत्संहननतुल्यानां गोपानामर्बुदं महत् ।
नारायणा इति ख्याताः सर्वे संग्रामयोधिनः ॥१८॥
ते वा युधि दुराधर्षा भवन्त्वेकस्य सैनिकाः ।
अयुध्यमानः संग्रामे न्यस्तशस्त्रोऽहमेकतः ॥ १९ ॥
आभ्यामन्यतरं पार्थ यत्ते हृद्यतरं मतम् ।
तद्वृणीतां भवानग्रे प्रवार्यस्त्वं हि धर्मतः ॥ २० ॥

**वैशम्पायन उवाच—**

एवमुक्तस्तु कृष्णेन कुन्तीपुत्रो धनञ्जयः ।
अयुध्यमानं संग्रामे वरयामास केशवम् ॥ २१ ॥
नारायणममित्रघ्नं कामाज्जातमजं नृषु ।
सर्वक्षत्रस्य पुरतो देवदानवयोरपि ॥ २२ ॥
दुर्योधनस्तु तत्सैन्यं सर्वमावरयत्तदा ।
सहस्राणां सहस्रं तु योधानां प्राप्य भारत ॥ २३ ॥
कृष्णं चापहृतं ज्ञात्वा संप्राप परमां मुदम् ।
दुर्योधनस्तु तत्सैन्यं सर्वमादाय पार्थिवः ॥ २४ ॥
ततोऽभ्ययाद्भीमबलो रौहिणेयं महाबलम् ।
सर्वं चागमने हेतुं स तस्मै संन्यवेदयत् ॥
प्रत्युवाच ततः शौरिर्धार्तराष्ट्रमिदं वचः ॥ २५ ॥

**बलदेव उवाच—**

विदितं ते नरव्याघ्र सर्वं भवितुमर्हति ।
यन्मयोक्तं विराटस्य पुरा वैवाहिके तदा ॥ २६ ॥
निगृह्योक्तो हृषीकेशस्त्वदर्थं कुरुनन्दन ।
मया संबन्धकं तुल्यमिति राजन्पुनः पुनः ॥ २७ ॥
न च तद्वाक्यमुक्तं वै केशवं प्रत्यपद्यत ।
न चाहमुत्सहे कृष्णं विना स्थातुमपि क्षणम् ॥२८॥
नाहं सहायः पार्थस्य नापि दुर्योधनस्य वै ।
इति मे निश्चिता बुद्धिर्वासुदेवमवेक्ष्य ह ॥ २९ ॥
जातोऽसि भारते वंशे सर्वपार्थिवपूजिते ।
गच्छ युध्यस्व धर्मेण क्षात्रेण पुरुषर्षभ ॥ ३० ॥

**वैशम्पायन उवाच—**

इत्येवमुक्तस्तु तदा परिष्वज्य हलायुधम् ।
कृष्णं चापहृतं ज्ञात्वा युद्धान्मेने जितं जयम् ॥३१॥
सोऽभ्ययात्कृतवर्माणं धृतराष्ट्रसुतो नृपः ।
कृतवर्मा ददौ तस्य सेनामक्षौहिणीं तदा ॥ ३२ ॥
स तेन सर्वसैन्येन भीमेन कुरुनन्दनः ।
वृतः परिययौ हृष्टः सुहृदः संप्रहर्षयन् ॥ ३३ ॥
ततः पीताम्बरधरो जगत्स्रष्टा जनार्दनः ।
गते दुर्योधने कृष्णः किरीटिनमथाब्रवीत् ॥ ३४ ॥
अयुध्यमानः कां बुद्धिमास्थायाहं वृतस्त्वया ।

**अर्जुन उवाच—**

भवान् समर्थस्तान्सर्वान्निहन्तुं नात्र संशयः ।
निहन्तुमहमप्येकः समर्थः पुरुषर्षभ ॥ ३५ ॥
भवाँस्तु कीर्तिमाँल्लोके तद्यशस्त्वां गमिष्यति ।
यशसां चाहमप्यर्थी तस्मादसि मया वृतः ॥ ३६ ॥

---

[ नील० ] प्रवारणम् ईप्सितप्रदानम् । 'काम्यदानं प्रवारणम्' इति विश्वः । पूर्वमर्हः त्वत्तः कनिष्ठत्वादित्यर्थः ॥ १७ ॥ अपहृतं रिक्तं कृतम् ॥ २४ ॥

इति उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे
सप्तमोऽध्यायः ॥ ७ ॥

[ अर्जु० ] प्रवारणं तु, प्रवारणम् इच्छापालनम् । 'काम्यदानं प्रवारणम्' इति कोषः ॥ १७ ॥ मत्संहननेति संहननं शरीरम । सुकृत, संस्कृत, संग्राम इति पाठान्तरम् । संस्कृतयोधिनः गुरूपदेशयोद्धारः ॥ १८ ॥ प्रवार्यः पालनीय इत्यभिप्रायः ॥ २० ॥ अपहृतं युद्धात्, स्वपक्षे प्रवेशितं वा ॥ २४ ॥

[ सर्व० ] प्रवारणम् इच्छापालनम् ॥ १७ ॥ मत्संहननं मम शरीरम् । संस्कृतयोधिनो गुरूपदेशसंस्कारेण युद्धशीलाः ॥ १८ ॥ प्रवार्य इति धर्मपालनाभिप्रायः ॥ २० ॥ अपहृतं युद्धात्, स्वपक्षेऽनुप्रवेशितं वा ॥ २४ ॥ निगृह्य पीडयित्वा ॥ २७ ॥

[लक्षा०] प्रवारणं च बालानामित्यत्र वृ वरण इति धातोः प्रकर्षेण वरणमङ्गीकारः प्रवारणम् ॥१७॥ गोपाना-

---

१८ ज. संस्कृतयोधिनः । २० छ. यत्ते कृत्यतरं, ज. यत्तु कृत्यतरं महत् । २३ ज. सर्वमादाय पार्थिवः । २८ छ. ज. वै केशवः । २९ ज. पार्थानां नापि । ३० छ. ज. भरतर्षभ । ३१ ज. कृष्णं चापकृतं । ३३ छ. एतेन सर्व° ।

सारथ्यं तु त्वया कार्यमिति मे मानसं सदा ।
चिररात्रेप्सितं कामं तद्भवान् कर्तुमर्हति ॥ ३७ ॥

वासुदेव उवाच—

उपपन्नमिदं पार्थ यत्स्पर्धसि मया सह ।
सारथ्यं ते करिष्यामि कामः संपद्यतां तव ॥ ३८॥

वैशम्पायन उवाच—

एवं प्रमुदितः पार्थः कृष्णेन सहितस्तदा ।
वृतो दाशार्हप्रवरैः पुनरायाद्युधिष्ठिरम् ॥ ३९ ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तमोऽध्यायः ॥ ७ ॥

## अष्टमोऽध्यायः ८

पाण्डवान्प्रति प्रस्थितं मद्रराजं मध्येमार्गं वञ्चयित्वा दुर्योधनेन स्वसाहाय्यकरणवरग्रहणम् ॥ १ ॥ पाण्डवदर्शनार्थं गतेन शल्येन युधिष्ठिरप्रार्थनया कर्णस्य तेजोवधकरणाङ्गीकारः ।

वैशम्पायन उवाच—

शल्यः श्रुत्वा तु दूतानां सैन्येन महता वृतः ।
अभ्ययात्पाण्डवान् राजन् सह पुत्रैर्महारथैः ॥ १ ॥
तस्य सेनानिवेशोऽभूदध्यर्धमिव योजनम् ।
तथा हि विपुलां सेनां बिभर्ति स नरर्षभः ॥ २ ॥
अक्षौहिणीपती राजन् महावीर्यपराक्रमः ।
विचित्रकवचाः शूरा विचित्रध्वजकार्मुकाः ॥ ३ ॥
विचित्राभरणाः सर्वे विचित्ररथवाहनाः ।
विचित्रस्रग्धराः सर्वे विचित्राम्बरभूषणाः ॥ ४ ॥
स्वदेशवेषाभरणा वीराः शतसहस्रशः ।
तस्य सेनाप्रणेतारो बभूवुः क्षत्रियर्षभाः ॥ ५ ॥
व्यथयन्निव भूतानि कम्पयन्निव मेदिनीम् ।
शनैर्विश्रामयन् सेनां स ययौ येन पाण्डवः ॥ ६ ॥
ततो दुर्योधनः श्रुत्वा महात्मानं महारथम् ।
उपायान्तमभिद्रुत्य स्वयमानर्च भारत ॥ ७ ॥
कारयामास पूजार्थं तस्य दुर्योधनः सभाः ।
रमणीयेषु देशेषु रत्नचित्राः स्वलंकृताः ॥ ८ ॥
शिल्पिभिर्विविधैश्चैव क्रीडास्तत्र प्रयोजिताः ।
तत्र माल्यानि मांसानि भक्ष्यं पेयं च सत्कृतम् ॥९॥
कूपाश्च विविधाकारा मनोहर्षविवर्धनाः ।
वाप्यश्च विविधाकारा औदकानि गृहाणि च ॥१०॥
स ताः सभाः समासाद्य पूज्यमानो यथाऽमरः ।
दुर्योधनस्य सचिवैर्देशे देशे समन्ततः ॥ ११ ॥
आजगाम सभामन्यां देवावसथवर्चसम् ।
स तत्र विषयैर्युक्तैः कल्याणैरतिमानुषैः ॥ १२ ॥
मेनेऽभ्यधिकमात्मानमवमेने पुरंदरम् ।
पप्रच्छ स ततः प्रेष्यान् प्रहृष्टः क्षत्रियर्षभः ॥ १३ ॥
युधिष्ठिरस्य पुरुषाः केऽत्र चक्रुः सभा इमाः ।
आनीयन्तां सभाकाराः प्रदेयार्हा हि मे मताः॥१४॥

---

मर्बुदं महदित्यत्र सहस्राणि सहस्राणीति वक्ष्यमाणत्वात् अर्बुदं दशलक्षम् ॥ १८ ॥ भवांश्च कीर्तिमान् लोक इत्यत्र कीर्तिमान् नियतकीर्तिमान् । त्वं यत्र तिष्ठसि तत्तत्कीर्तिरेव भवतीति भावः ॥ ३६ ॥

[ अर्जु० ] स्पर्धेथाः अहमप्येक इति यदुक्तं तत्तथेति । वासुदेव उवाच ते सारथ्यं करिष्यामि तव कामः संपद्यताम् ३८॥

इति श्रीमन्महाभार० मर्जुनमि० श्रुद्योगपर्वणि सप्तमोऽध्यायः ॥७॥

[ सर्व० ] स्पर्धेथा अहमप्येक इत्येवम् ॥ ३८ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतौ टीकायां सप्तमोऽध्यायः ॥ ७ ॥

[लक्षा०] चिररात्रेप्सितं काममित्यत्र 'चिराय चिररात्राय चिरस्याद्याः' इत्यमरः । चिररात्राय ईप्सितं चिररात्रेप्सितम् ॥ ३७ ॥ यत्स्पर्धेथा मया सहेत्यत्र त्वमपि रिपुसंहरणे समर्थः अहमपीत्याकारेण स्पर्धेथाः ॥ ३८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-लक्षालंकारे सप्तमोऽध्यायः ॥ ७ ॥

[ नील० ] शल्य इति ॥ १ ॥ येन यत्र देशे तत्र, ययौ ॥ ६ ॥

[ अर्जु० ] दूतानां वाक्यमिति शेषः ॥ १ ॥ अध्यर्धं सार्धम् । इवशब्दो वाक्यालंकारे ॥ २ ॥ आनर्च पूजितवान् ॥ ७ ॥ मोदनागृहकाणि क्रीडागृहाणि ॥ १० ॥ के न्विति तुः प्रश्ने ॥ १४ ॥

---

३७ ब. मानसं तदा । ब. कार्यं तद्भ° । ३८ ब. यत्स्पर्धेथा । ज. कामः संपद्यते । इति सप्तमोऽध्यायः ॥ ७ ॥
२ ब. नराधिपः । ४ छ. चित्राम्बरविभूषणाः । ६ छ. ज. विश्रामयत् ।
८ छ. तरय चित्राः । १० छ ज. मोदनानि गृहा° । ११ ब. देशे यथामरः; यथार्हतः । १२ ब. समामध्यं । छ. युक्तः; ज. विविधैर्युक्तः । १४ छ. ज. के तु । ज. प्रसादार्हां ।

प्रसादमेषां दास्यामि कुन्तीपुत्रोऽनुमन्यताम् ।
दुर्योधनाय तत्सर्वं कथयन्ति स्म विस्मिताः ॥ १५ ॥
संप्रहृष्टो यदा शल्यो दिदित्सुरपि जीवितम् ।
गूढो दुर्योधनस्तत्र दर्शयामास मातुलम् ॥ १६ ॥
तं दृष्ट्वा मद्रराजश्च ज्ञात्वा यत्नं च तस्य तम् ।
परिष्वज्याब्रवीत्प्रीत इष्टोऽर्थो गृह्यतामिति ॥ १७ ॥

**दुर्योधन उवाच—**

सत्यवाग्भव कल्याण वरो वै मम दीयताम् ।
सर्वसेनाप्रणेता वै भवान्भवितुमर्हति ॥ १८ ॥

**वैशम्पायन उवाच—**

कृतमित्यब्रवीच्छल्यः किमन्यत्क्रियतामिति ।
कृतमित्येव गान्धारिः प्रत्युवाच पुनः पुनः ॥ १९ ॥

**शल्य उवाच—**

गच्छ दुर्योधन पुरं स्वकमेव नरर्षभ ।
अहं गमिष्ये द्रष्टुं वै युधिष्ठिरमरिन्दमम् ॥ २० ॥
दृष्ट्वा युधिष्ठिरं राजन् क्षिप्रमेष्ये नराधिप ।
अवश्यं चापि द्रष्टव्यः पाण्डवः पुरुषर्षभः ॥ २१ ॥

**दुर्योधन उवाच—**

क्षिप्रमागम्यतां राजन् पाण्डवं वीक्ष्य पार्थिव ।
त्वय्यधीनाः स्म राजेन्द्र वरदानं स्मरस्व नः॥२२॥

**शल्य उवाच—**

क्षिप्रमेष्यामि भद्रं ते गच्छस्व स्वपुरं नृप ।
परिष्वज्य तथाऽन्योन्यं शल्यदुर्योधनावुभौ ॥ २३ ॥
स तथा शल्यमामन्त्र्य पुनरायात्स्वकं पुरम् ।
शल्यो जगाम कौन्तेयानाख्यातुं कर्म तस्य तत् ॥२४
उपप्लव्यं स गत्वा तु स्कन्धावारं प्रविश्य च ।
पाण्डवानथ तान् सर्वान् शल्यस्तत्र ददर्श ह ॥ २५ ॥
समेत्य च महाबाहुः शल्यः पाण्डुसुतैस्तदा ।
पाद्यमर्घ्यं च गां चैव प्रत्यगृह्णाद्यथाविधि ॥ २६ ॥
ततः कुशलपूर्वं हि मद्रराजोऽरिसूदनः ।
प्रीत्या परमया युक्तः समाश्लिष्य युधिष्ठिरम् ॥२७॥
तथा भीमार्जुनौ कृष्णौ स्वस्रीयौ च यमावुभौ ।
आसने चोपविष्टस्तु शल्यः पार्थमुवाच ह ॥ २८ ॥
कुशलं राजशार्दूल कच्चित्ते कुरुनन्दन ।
अरण्यवासाद्दिष्ट्याऽसि विमुक्तो जयतां वर ॥ २९ ॥
सुदुष्करं कृतं राजन्निर्जने वसता त्वया ।
भ्रातृभिः सह राजेन्द्र कृष्णया चानया सह ॥३०॥
अज्ञातवासं घोरं च वसता दुष्करं कृतम् ।
दुःखमेव कुतः सौख्यं भ्रष्टराज्यस्य भारत ॥ ३१॥
दुःखस्यैतस्य महतो धार्तराष्ट्रकृतस्य वै ।
अवाप्स्यसि सुखं राजन् हत्वा शत्रून् परंतप ॥३२॥
विदितं ते महाराज लोकतन्त्रं नराधिप ।
तस्माल्लोभकृतं किंचित्तव तात न विद्यते ॥ ३३ ॥
राजर्षीणां पुराणानां मार्गमन्विच्छ भारत ।
दाने तपसि सत्ये च भव तात युधिष्ठिर ॥ ३४ ॥

---

[ सर्व० ] अध्यर्धं सार्धम् । इवशब्दो वाक्यालङ्कारे ॥ २ ॥ आनर्च पूजितवान् ॥ ७ ॥

[नील०] दिदित्सुः दद दाने इत्यस्य रूपम् ॥ १६ ॥ गच्छस्व प्राप्नुहि स्वपुरं स्वराज्यम् ॥ २३ ॥ उपप्लव्यं विराटनगरस्य प्रदेशविशेषं, स्कन्धावारं सेनानिवेशस्थानम् ॥ २५ ॥ कृष्णाविति भीमोऽपि कृष्ण एवासीदिति गम्यते । हृष्टाविति पाठः सुगमः ॥ २८ ॥ 'तन्त्रं प्रधाने सिद्धान्ते' इत्यमरः ॥ ३३ ॥

[ अर्जु० ] विदित्सुः विषेशेण दातुमिच्छुः । गूढः प्रच्छन्नः ॥ १६ ॥ पूर्वम् ऋतवाक् सत्यवाक् ॥ १८ ॥ गान्धारिस्तत्पुत्रः ॥ १९ ॥ एष्ये आगमिष्यामि ॥ २१ ॥ उपप्लव्यं विराटनगरं स्कन्धावारं सेनानिवेशम् ॥ २५ ॥ दुःखस्यानन्तरमिति शेषः । अन्ते चैतस्य इति पाठे एतस्य दुःखस्यान्ते ॥ ३२ ॥ भव वर्तस्व ॥ ३४ ॥

[ सर्व० ] उपप्लव्यं विराटनगरम् ॥ २५ ॥ दुःखस्यैतस्य अन्त इति शेषः, अन्ते चैतस्य वा पाठः तत्र दुःखस्येति शेषः, अन्ते क्लेशावसाने ॥ ३२ ॥ लोकतन्त्रं लोककारणम् अदृष्टं तस्मात्तद्धर्मादेव भवता निश्चयं च(?) ॥ ३३ ॥

[ लक्ष्मा० ] दुःखमेव कृतं सौख्यमित्यत्र वनवासादिषु कृतं समये समये उत्पन्नं दुःखं सौख्यमेव च परं केवलं सुखमेव कृतं दुःखस्य सुखरूपत्वं प्रारब्धदुष्कर्मक्षयरूपत्वादिति नेयम् ॥ ३१ ॥

---

१५ छ. तत्सर्वे । १६ ज. जीवनम् । १७ ज. °राजस्तु । ज. इष्टार्थो । २२ ज. स्मरन्पुनः । २३ ज. तदाऽन्यो° । २४ ज. कौन्तेयमा° । २६ छ. °सुतस्तदा । २७ ज. स मद्र° ।

क्षमा दमश्च सत्यं च अहिंसा च युधिष्ठिर ।
अद्भुतश्च पुनर्लोकस्त्वयि राजन् प्रतिष्ठितः ॥ ३५ ॥
मृदुर्वदान्यो ब्रह्मण्यो दाता धर्मपरायणः ।
धर्मास्ते विदिता राजन् बहवो लोकसाक्षिकाः॥३६॥
सर्वं जगदिदं तात विदितं ते परंतप ।
दिष्ट्या कृच्छ्रमिदं राजन् पारितं भरतर्षभ॥ ३७॥
दिष्ट्या पश्यामि राजेन्द्र धर्मात्मानं सहानुगम् ।
निस्तीर्णदुष्करं राजँस्त्वां धर्मनिचयं प्रभो ॥ ३८॥

**वैशम्पायन उवाच—**

ततोऽस्याकथयद्राजा दुर्योधनसमागमम् ।
तच्च शुश्रूषितं सर्वं वरदानं च भारत ॥ ३९ ॥

**युधिष्ठिर उवाच—**

सुकृतं ते कृतं राजन् प्रहृष्टेनान्तरात्मना ।
दुर्योधनस्य यद्वीर त्वया वाचा प्रतिश्रुतम् ॥ ४० ॥
एकं त्विच्छामि भद्रं ते क्रियमाणं महीपते ।
राजन्नकर्तव्यमपि कर्तुमर्हसि सत्तम ॥ ४१ ॥
मम त्ववेक्षया वीर शृणु विज्ञापयामि ते ।
भवानिह महाराज वासुदेवसमो युधि ॥ ४२ ॥
कर्णार्जुनाभ्यां संप्राप्ते द्वैरथे राजसत्तम ।
कर्णस्य भवता कार्यं सारथ्यं नात्र संशयः ॥ ४३ ॥
तत्र पाल्योऽर्जुनो राजन् यदि मत्प्रियमिच्छसि ।
तेजोवधश्च ते कार्यः सौतेरस्मज्जयावहः ॥ ४४ ॥
अकर्तव्यमपि ह्येतत् कर्तुमर्हसि मातुल ।

**शल्य उवाच—**

शृणु पाण्डव भद्रं ते यद्ब्रवीषि महात्मनः ।
तेजोवधनिमित्तं मां सूतपुत्रस्य संगमे ॥ ४५ ॥
अहं तस्य भविष्यामि संग्रामे सारथिर्ध्रुवम् ।
वासुदेवेन हि समं नित्यं मां स हि मन्यते ॥४६॥
तस्याहं कुरुशार्दूल प्रतीपमहितं वचः ।
ध्रुवं संकथयिष्यामि योद्धुकामस्य संयुगे ॥ ४७ ॥
यथा स हृतदर्पश्च हृततेजाश्च पाण्डव ।
भविष्यति सुखं हन्तुं सत्यमेतद्ब्रवीमि ते ॥ ४८ ॥
एवमेतत्करिष्यामि यथा तात त्वमात्थ माम् ।
यच्चान्यदपि शक्ष्यामि तत्करिष्यामि ते प्रियम्॥४९
यच्च दुःखं त्वया प्राप्तं द्यूते वै कृष्णया सह ।
परुषाणि च वाक्यानि सूतपुत्रकृतानि वै ॥ ५० ॥
जटासुरात्परिक्लेशः कीचकाच्च महाद्युते ।
द्रौपद्याऽधिगतं सर्वं दमयन्त्या यथाऽशुभम् ॥ ५१ ॥

---

[ नील० ] वदान्यः मञ्जुलवाक् । 'वदान्यो वल्गुवागपि' इत्यमरः ॥ ३६ ॥ पारितं निस्तीर्णम् ॥ ३७ ॥ प्रतीपं प्रसङ्गप्रतिकूलम् अहितं परिणामविरुद्धम् ॥ ४७ ॥

[ अर्जु० ] पारितं तीर्णम् ॥ ३७ ॥ शुश्रूषितमाराधनम् ॥ ३९ ॥ प्रतिश्रुतं स्वीकृतम् ॥ ४० ॥ सौतेः कर्णस्य ॥ ४४ ॥ प्रतीपमहितमिति । प्रतीपं प्रतिकूलमत एवाहितमिति प्रतीपसहितमित्यपि ॥ ४७ ॥ सुखः सुखकरः ॥ ४८ ॥

[ सर्व० ] शुश्रूषितम् आराधनम् ॥ ३९ ॥ सौतेः सूतपुत्रस्य ॥ ४४ ॥ समितं समतामितं समितं, सममस्य सञ्जातमिति वा ॥ ४६ ॥

[ लक्षा० ] व्यथितं ते परंतपेत्यत्र ते तत्र राज्यभ्रंशनिमित्तेन ॥३७॥ सौतेरस्मज्जयावह इत्यत्र सूतस्यापत्यं पुमान् सौतिः कर्णः ॥ ४४ ॥ अहं तथा करिष्यामीत्यत्र सः कर्णः रणमूर्धनि हतदर्पः गततेजाः सन् सुखं सुखेन हन्तुमर्जुनस्य हन्तुं यथा भविष्यति तथा संग्रामे करिष्यामीति योजना ॥ ॥ ४७–४८ ॥ दमयन्त्या यथाऽशुभमित्यत्र दमयन्त्याः अशुभं यथेति योजना ॥ ५१ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि वादिराजतीर्थकृत-लक्षालंकारेऽष्टमोऽध्यायः ॥ ८ ॥

---

३८ अ. निस्तीर्णं दुष्करं । ४० छ. यद्वीरे । ४२ छ. त्वदीक्षया; ज. त्वावेक्षया । ४४ ज. यदि मे प्रि° । ४५ छ. ज. दुरात्मनः । ज. संयुगे । ४७ ज. प्रतीपसमितं । ४८ अ. सुखो हन्तुं । ५१ ख. ज. परिक्लेशं । इति अष्टमोऽध्यायः ॥ ८ ॥

एवं संपूज्य भगवानथर्वाङ्गिरसं तदा ।
व्यसर्जयन्महाराज देवराजः शतक्रतुः ॥ ८ ॥
संपूज्य सर्वांस्त्रिदशानृषींश्चापि तपोधनान् ।
इन्द्रः प्रमुदितो राजन् धर्मेणापालयत्प्रजाः ॥ ९ ॥
एवं दुःखमनुप्राप्तमिन्द्रेण सह भार्यया ।
अज्ञातवासश्च कृतः शत्रूणां वधकाङ्क्षया ॥ १० ॥
नात्र मन्युस्त्वया कार्यो यत्क्लिष्टोऽसि महावने ।
द्रौपद्या सह राजेन्द्र भ्रातृभिश्च महात्मभिः ॥ ११ ॥
एवं त्वमपि राजेन्द्र राज्यं प्राप्स्यसि भारत ।
वृत्रं हत्वा यथा प्राप्तः शक्रः कौरवनन्दन ॥ १२ ॥
दुराचारश्च नहुषो ब्रह्मद्विट् पापचेतनः ।
अगस्त्यशापाभिहतो विनष्टः शाश्वतीः समाः ॥ १३ ॥
एवं तव दुरात्मानः शत्रवः शत्रुसूदन ।
क्षिप्रं नाशं गमिष्यन्ति कर्णदुर्योधनादयः ॥ १४ ॥
ततः सागरपर्यन्तां भोक्ष्यसे मेदिनीमिमाम् ।
भ्रातृभिः सहितो वीर द्रौपद्या च सहानया ॥ १५ ॥
उपाख्यानमिदं शक्रविजयं वेदसंमितम् ।
राज्ञा व्यूढेष्वनीकेषु श्रोतव्यं जयमिच्छता ॥ १६ ॥
तस्मात्संश्रावयामि त्वां विजयं जयतां वर ।
संस्तूयमाना वर्धन्ते महात्मानो युधिष्ठिर ॥ १७ ॥
क्षत्रियाणामभावोऽयं युधिष्ठिर महात्मनाम् ।
दुर्योधनापराधेन भीमार्जुनबलेन च ॥ १८ ॥
आख्यानमिन्द्रविजयं य इदं नियतः पठेत् ।
धूतपाप्मा जितस्वर्गः परत्रेह च मोदते ॥ १९ ॥
न चारिजं भयं तस्य नापुत्रो वा भवेन्नरः ।
नापदं प्राप्नुयात्कांचिद्दीर्घमायुश्च विन्दति ।
सर्वत्र जयमाप्नोति न कदाचित्पराजयम् ॥ २० ॥

**वैशम्पायन उवाच—**

एवमाश्वासितो राजा शल्येन भरतर्षभ ।
पूजयामास विधिवच्छल्यं धर्मभृतां वरः ॥ २१ ॥
श्रुत्वा तु शल्यवचनं कुन्तीपुत्रो युधिष्ठिरः ।
प्रत्युवाच महाबाहुर्मद्रराजमिदं वचः ॥ २२ ॥
भवान्कर्णस्य सारथ्यं करिष्यति न संशयः ।
तत्र तेजोवधः कार्यः कर्णस्यार्जुनसंस्तवः ॥ २३ ॥

**शल्य उवाच—**

एवमेतत्करिष्यामि यथा मां संप्रभाषसे ।
यच्चान्यदपि शक्ष्यामि तत्करिष्याम्यहं तव ॥ २४ ॥

**वैशम्पायन उवाच—**

तत आमन्त्र्य कौन्तेयाञ्छल्यो मद्राधिपस्तदा ।
जगाम सबलः श्रीमान् दुर्योधनमरिन्दमः ॥ २५ ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टादशोऽध्यायः ॥ १८ ॥

## एकोनविंशोऽध्यायः १९

सात्यकिप्रमुखानां सेनया सह युधिष्ठिरसमीपं संप्राप्तिः, एवं भगदत्तादीनां दुर्योधनं प्रतीति ॥ १ ॥

**वैशम्पायन उवाच—**

युयुधानस्ततो वीरः सात्वतानां महारथः ।
महता चतुरङ्गेण बलेनागाद्युधिष्ठिरम् ॥ १ ॥
तस्य योधा महावीर्या नानादेशसमागताः ।
नानाप्रहरणोपेताः शोभयाश्चक्रिरे बलम् ॥ २ ॥
परश्वधैर्भिन्दिपालैः शूलतोमरमुद्गरैः ।
परिघैर्यष्टिभिः पाशैः करवालैश्च निर्मलैः ॥ ३ ॥

---

[ नील० ] शत्रुतेजसो वधो येन तादृशोऽर्जुनसंस्तवः ॥ २३ ॥

इति श्रीनैल० भारतभाव० उद्योगप० अष्टादशोऽध्यायः ॥ १८ ॥

[ अर्जु० ] वर्चांसि (?) विजयमिन्द्रविजयम् । वर्धन्ते वर्धयन्ति ॥ १७ ॥ संस्तवो गुणकीर्तनम् ॥ २३ ॥ दुर्योधनं तत्समीपम् ॥ २५ ॥

इति श्रीमन्महा० मर्जुन० उद्योगप० अष्टादशोऽध्यायः ॥ १८ ॥

[ नील० ] युयुधानः सात्यकिः ॥ १ ॥

[ सर्व० ] शक्तिः शल्यम् । तोमरो हस्तक्षेप्यः काण्डवः । यष्टिर्हस्तक्षेप्यं कुन्तप्रायमायुधम् । प्रासः कुन्तः । करवालः एकधारः खड्ग इति संसारावर्ते ॥ ३ ॥

[ लक्षा० ] युयुधानस्ततो वीर इत्यत्र युयुधानः सात्य-

---

१५ ख. सहाभिभो । १६ ख. राजवाटेष्वनी॰ । १८ ख. क्षत्रियाणां महाबाहो । अष्टादशादुत्तरं—ख. संग्रामे संक्षयो घोरो भविष्यत्यचिरादिव । इत्यधिकम् । २१ ख. ख. तं शल्यं कुरुनन्दन । इति अष्टादशोऽध्यायः ॥ १८ ॥

१ ख. अध्यायादौ—ततः शल्यः सहानीकः कम्पयन्निव मेदिनीम् । जगाम धार्तराष्ट्रस्य नगरं नागसाह्वयम् । इत्यधिकम् । ३ ख. ज. शक्तितोमरपट्टिशैः । कुंतर्ष्टिपरशुप्रासैः ।

खड्गकार्मुकनिर्व्यूहैः शरैश्च विविधैरपि ।
तैलधौतैः प्रकाशद्भिरशोभत महाबलम् ॥ ४ ॥
तस्य मेघप्रकाशस्य सौवर्णैः शोभितस्य च ।
बभूव रूपं सैन्यस्य मेघस्येव सविद्युतः ॥ ५ ॥
अक्षौहिणी तु सा सेना तदा यौधिष्ठिरं बलम् ।
प्रविश्यान्तर्दधे राजन् सागरं कुनदी यथा ॥ ६ ॥
तथैवाक्षौहिणीं गृह्य चेदीनामृषभो बली ।
धृष्टकेतुरुपागच्छत्पाण्डवानमितौजसः ॥ ७ ॥
मागधश्च जयत्सेनो जारासंधिर्महाबलः ।
अक्षौहिण्यैव सैन्यस्य धर्मराजमुपागमत् ॥ ८ ॥
तथैव पाण्ड्यो राजेन्द्र सागरानूपवासिभिः ।
वृतो बहुविधैर्योधैर्युधिष्ठिरमुपागमत् ॥ ९ ॥
तस्य सैन्यमतीवासीत्तस्मिन्बलसमागमे ।
प्रेक्षणीयतरं राजन् सुवेषं बलवत्तदा ॥ १० ॥
द्रुपदस्याप्यभूत्सेना नानादेशसमागतैः ।
शोभिता पुरुषैः शूरैः पुत्रैश्चास्य महारथैः ॥ ११ ॥
तथैव राजा मत्स्यानां विराटो वाहिनीपतिः ।
पार्वतीयैर्महीपालैः सहितः पाण्डवानियात् ॥ १२ ॥
इतश्चेतश्च पाण्डूनां समाजग्मुर्महात्मनाम् ।
अक्षौहिण्यस्तु सप्तैता विविधध्वजसंकुलाः ॥ १३ ॥
युयुत्समानाः कुरुभिः पाण्डवान्समहर्षयन् ।
तथैव धार्तराष्ट्रस्य हर्षं समभिवर्धयन् ॥ १४ ॥
भगदत्तो महीपालः सेनामक्षौहिणीं ददौ ।
तस्य चीनैः किरातैश्च काञ्चनैरिव संवृतम् ॥ १५ ॥
बभौ बलमनाधृष्यं कर्णिकारवनं यथा ।
तथा भूरिश्रवाः शूरः शल्यश्च कुरुनन्दन ॥ १६ ॥
दुर्योधनमुपायातावक्षौहिण्या पृथक् पृथक् ।
कृतवर्मा च हार्दिक्यो भोजान्धकुकुरैः सह ॥१७॥
अक्षौहिण्यैव सेनाया दुर्योधनमुपागमत् ।
तस्य तैः पुरुषव्याघ्रैर्वनमालाधरैर्बलम् ॥ १८ ॥
अशोभत यथा मत्तैर्वनं प्रक्रीडितैर्गजैः ।
जयद्रथमुखाश्चान्ये सिन्धुसौवीरवासिनः ॥ १९ ॥
आजग्मुः पृथिवीपालाः कम्पयन्त इवाचलान् ।
तेषामक्षौहिणी सेना बहुला विबभौ तदा ॥ २० ॥
विधूयमानो वातेन बहुरूप इवाम्बुदः ।
सुदक्षिणश्च काम्बोजो यवनैश्च शकैस्तथा ॥ २१ ॥
उपाजगाम कौरव्यमक्षौहिण्या विशाम्पते ।
तस्य सेनासमावायः शलभानामिवाबभौ ॥ २२ ॥
स च संप्राप्य कौरव्यं तत्रैवान्तर्दधे तदा ।
तथा माहिष्मतीवासी नीलो नीलायुधैः सह ॥२३॥
महीपालो महावीर्यैर्दक्षिणापथवासिभिः ।
आवन्त्यौ च महीपालौ महाबलसुसंवृतौ ॥ २४ ॥
पृथगक्षौहिणीभ्यां तावभियातौ सुयोधनम् ।
केकयाश्च नरव्याघ्राः सोदर्याः पञ्च पार्थिवाः ॥२५॥
संहर्षयन्तः कौरव्यमक्षौहिण्या समाद्रवन् ।
ततश्चेतश्च सर्वेषां भूमिपानां महात्मनाम् ॥ २६ ॥
तिस्रोऽन्याः समवर्तन्त वाहिन्यो भरतर्षभ ।
एवमेकादशावृत्ताः सेना दुर्योधनस्य ताः ॥ २७ ॥

---

किः । यद्यपि सात्यकिः पूर्वमेवागतः सेनासन्नाहप्रदर्शनाय पुनरुक्तिः ॥ १ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-लक्षालंकारे एकोनविंशोऽध्यायः ॥ १९ ॥

[ नील० ] वनमाला आपादलम्बिनी माला ॥ १८ ॥ समावायः समूहः ॥२२॥ आवन्त्यौ विन्दानुविन्दौ ॥२४॥

[ अर्जु० ] धृष्टकेतुः शिशुपालपुत्रः ॥ ७ ॥ हर्षमक्षौहिणीं च वर्धयन्नागत इति शेषः । अक्षौहिणीमदादिति पाठः ॥ १४ ॥ आवृत्ता मिलिताः ॥ २७ ॥

इति श्रीमन्महाभा० मर्जुनमिश्र० मुद्योगपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[ सर्व० ] खड्गस्तु द्विधारः । निर्व्यूहः समूहः । तैलधौतैस्तैलमार्जितैः ॥ ४ ॥ धृष्टकेतुः शिशुपालपुत्रः ॥ ७ ॥ हर्षमक्षौहिणीं च समभिवर्धयन्नागत इति शेषः । अक्षौहिणीमिति वा पाठः ॥ १४ ॥ वनमाला सपुष्पपल्लवा सपुष्पपद्मग्रथिता वा स्रक् ॥ १८ ॥ तेषामक्षौहिणी सेनेत्यत्र तच्छब्देन पूर्वोक्ताः भगदत्तादिभूपालाः परामृश्यन्ते । अक्षौहिणीबहुला बह्व्योऽक्षौहिण्य इत्यर्थः । न तु जयद्रथमुखानां तेषामित्यनेन परामर्शः । तथा हि सति पूर्वापरगणनया द्वादशाक्षौहिण्यो भवेयुः ॥ २० ॥ समावायः सङ्घः ॥ २२ ॥ तिस्रो वाहिन्यः, सेनाप्रकरणाच्चाक्षौहिण्य इति लभ्यते । एवं 'सेना' इत्यत्रापि ॥ २७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां मूनविंशोऽध्यायः ॥ १९ ॥

---

५ ज. ख. शरैस्तैः शोभि° । १० ख. सुरूपं १५ ख. काम्बोजैश्च सुसंवृतम् । १६ ख. बभूव तद्वना° । ज. कुरुनन्दनम् । १७ ख. भोजान्धकबलैः सह । १८ छ. तस्यैतैः । २२ ख. सेनासमापातः । २३ ज. अथ संप्राप्य । ख. °कौरव्यं °नादृश्यत महीतले । २७ छ. °कादशावृताः ।

युयुत्समानाः कौन्तेयाश्नानाध्वजसमाकुलाः।
न हास्तिनपुरे राजन्नवकाशोऽभवत्तदा ॥ २८ ॥
राज्ञां स्वबलमुख्यानां प्राधान्येनापि भारत।
ततः पञ्चनदं चैव कृत्स्नं च कुरुजाङ्गलम् ॥ २९ ॥
तथा रौहितकारण्यं मरुभूमिश्च केवला ।
अहिच्छत्रं कालकूटं गङ्गाकूलं च भारत ॥ ३० ॥
वारणं वाटधानं च यामुनश्चैव पर्वतः ।
एष देशः सुविस्तीर्णः प्रभूतधनधान्यवान् ॥ ३१ ॥
बभूव कौरवेयाणां बलेनातीव संवृतः ।
तत्र सैन्यं तथायुक्तं ददर्श स पुरोहितः ॥ ३२ ॥
यः स पाञ्चालराजेन प्रेषित. कौरवान्प्रति ॥ ३३ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥
समाप्तं सेनोद्योगपर्व ।

## ( अथ सञ्जययानपर्व २ )

### विंशोऽध्यायः २०

द्रुपदपुरोहितस्य धृतराष्ट्रसभायां गतस्य महात्मानः पाण्डवा युष्मत्कृतानपकारान्पृष्ठतः कृत्वा लोकानामविनाशाय साम काङ्क्षन्ति तस्मात्तेषां प्रभावं च विचिन्त्य राज्यार्धदानेन भवद्भिस्तत्कर्तव्यमिति वचनम् ॥ १ ॥

**वैशम्पायन उवाच—**

स च कौरव्यमासाद्य द्रुपदस्य पुरोहितः ।
सत्कृतो धृतराष्ट्रेण भीष्मेण विदुरेण च ॥ १ ॥
सर्वकौशल्यमुक्त्वाऽऽदौ पृष्ट्वा चैवमनामयम् ।
सर्वसेनाप्रणेतॄणां मध्ये वाक्यमुवाच ह ॥ २ ॥
सर्वैर्भवद्भिर्विदितो राजधर्मः सनातनः ।
वाक्योपादानहेतोस्तु वक्ष्यामि विदिते सति ॥३॥
धृतराष्ट्रश्च पाण्डुश्च सुतावेकस्य विश्रुतौ ।
तयोः समानं द्रविणं पैतृकं नात्र संशयः ॥ ४ ॥
धृतराष्ट्रस्य ये पुत्राः प्राप्तं तैः पैतृकं वसु ।
पाण्डुपुत्राः कथं नाम न प्राप्ताः पैतृकं वसु ॥ ५ ॥
एवंगते पाण्डवेयैर्विदितं वः पुरा यथा ।
न प्राप्तं पैतृकं द्रव्यं धृतराष्ट्रेण संवृतम् ॥ ६ ॥
प्राणान्तिकैरप्युपायैः प्रयतद्भिरनेकशः ।
शेषवन्तो न शकिता नेतुं वै यमसादनम् ॥ ७ ॥
पुनश्च वर्धितं राज्यं स्वबलेन महात्मभिः ।
छद्मनाऽपहृतं क्षुद्रैर्धार्तराष्ट्रैः ससौबलैः ॥ ८ ॥
तदप्यनुमतं कर्म यथायुक्तमनेन वै ।
वासिताश्च महारण्ये वर्षाणीह त्रयोदश ॥ ९ ॥
सभायां क्लेशितैर्वीरैः सहभार्यैस्तथा भृशम् ।
अरण्ये विविधाः क्लेशाः संप्राप्तास्तैः सुदारुणाः १०
तथा विराटनगरे योन्यन्तरगतैरिव ।
प्राप्तः परमसंक्लेशो यथा पापैर्महात्मभिः ॥ ११ ॥

[ नील० ] अहिच्छत्रादयः प्रदेशविशेषाः ॥ ३० ॥
इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि एकोनविंशोऽध्यायः ॥ १९ ॥

[ नील० ] वाक्येति भवद्भिः किंचिद्वक्तव्यमतो हेतोरित्यर्थः ॥ ३ ॥ शेषवन्तः आयुःशेषयुक्ताः ॥ ७ ॥ योन्यन्तरगतैरिवेति तैर्दत्तान् क्लेशान् जन्मान्तरव्यवहितानिव न स्मरन्तीत्यर्थः ॥ ११ ॥
इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि विंशोऽध्यायः ॥ २० ॥

[ अर्जु० ] वाक्योपादानहेतोर्वाक्यं द्रुपदादिसंदेशः उपादानं तस्य मया ग्रहणं ततो हेतोः, न पुनरज्ञातज्ञापनादेः ॥ ३ ॥ संवृतं गृहीतम् ॥ ६ ॥ शेषवन्तः आयुःशेषवन्तः ॥ ७ ॥

[ सर्व० ] 'स तु कौरव्यमासाद्य' इत्यादेः 'अनुज्ञातोऽस्यावसथं ' इत्यन्तस्य कुरुपाण्डवानां पृथिव्यां विभज्याधिकारः प्रवर्ततामिति तात्पर्यार्थः ॥ १ ॥ कौशल्यं निरुपद्रवता कल्याणवत्ता वा । अनामयमारोग्यम् ॥ २ ॥ वाक्योपादानहेतोः द्रुपदस्य संदेशवचनवाक्योपादानं तस्य मया ग्रहणं ततो हेतोः, भवद्भिः प्रत्युत्तररूपं वाक्यमुपादातुमित्यर्थो वा । न पुनरज्ञातज्ञापनादेव ॥ ३ ॥ संवृतं गृहीतम् ॥ ६ ॥ शेषवन्तोऽनुपभुक्तायुःशालिनः, परमायुश्शेषवन्तो वा । गमितुं गमयितुम् ॥ ७ ॥ योन्यन्तरं जन्मान्तरम् ॥ ११ ॥

३० ज. अहिच्छत्राः कालकूटा गङ्गातीरं । ३१ ख. ज. वारणा वाटधानं च यामुनाश्चैव सर्वशः । ३२ ज. बलेन सुसमाकुलः । इति एकोनविंशोऽध्यायः ॥ १९ ॥

१ ज. स तु कौ° । ख. धार्तराष्ट्रेण । २ ज. सर्वं कौ° । ज. सर्वसैन्यप्र° । ४ छ. वै श्रुतौ । ५ ज. पैतृकं पदम् । ६ छ. च पुरा । ख. धार्तराष्ट्रेण । ७ ज. गमितुं यम°; ख. नयन्तुं । ११ ज. °गतैर्यथा । ज. प्राप्ताः परमसंक्लेशाः ।

ते सर्वे पृष्ठतः कृत्वा तत्सर्वं पूर्वकिल्बिषम् ।
सामैव कुरुभिः सार्धमिच्छन्ति कुरुपुंगवाः ॥ १२ ॥
तेषां च वृत्तमाज्ञाय वृत्तं दुर्योधनस्य च ।
अनुनेतुमिहार्हन्ति धार्तराष्ट्रं सुहृज्जनाः ॥ १३ ॥
नहि ते विग्रहं वीराः कुर्वन्ति कुरुभिः सह ।
अविनाशेन लोकस्य काङ्क्षन्ते पाण्डवाः स्वकम् ॥ १४ ॥
यश्चापि धार्तराष्ट्रस्य हेतुः स्याद्विग्रहं प्रति ।
स च हेतुर्न मन्तव्यो बलीयांसस्तथाहि ते ॥ १५ ॥
अक्षौहिण्यश्च सप्तैव धर्मपुत्रस्य संगताः ।
युयुत्समानाः कुरुभिः प्रतीक्षन्तेऽस्य शासनम् ॥ १६ ॥
अपरे पुरुषव्याघ्राः सहस्राक्षौहिणीसमाः ।
सात्यकिर्भीमसेनश्च यमौ च सुमहाबलौ ॥ १७ ॥
एकादशैताः पृतना एकतश्च समागताः ।
एकतश्च महाबाहुर्बहुरूपी धनञ्जयः ॥ १८ ॥
यथा किरीटी सर्वाभ्यः सेनाभ्यो व्यतिरिच्यते ।
एवमेव महाबाहुर्वासुदेवो महाद्युतिः ॥ १९ ॥
बहुलत्वं च सेनानां विक्रमं च किरीटिनः ।
बुद्धिमत्त्वं च कृष्णस्य बुद्ध्वा युध्येत को नरः ॥ २० ॥
ते भवन्तो यथाधर्मं यथासमयमेव च ।
प्रयच्छन्तु प्रदातव्यं मा वः कालोऽत्यगादयम् ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि विंशोऽध्यायः ॥ २० ॥

---

## एकविंशोऽध्यायः २१

द्रुपदपुरोहितोक्तमर्थमद्भुमन्यमानस्य भीष्मस्य वाक्यमाक्षिप्य कर्णेन समयमुल्लङ्घ्य युध्यतः पाण्डवान्वयं जेष्याम इति कथनम् ॥ १ ॥ भीष्मेण तद्गर्हणम् ॥ २ ॥ धृतराष्ट्रेण कर्णं निर्भर्त्स्य पाण्डवान्प्रति संजयं प्रेषयामीत्युक्त्वा सत्कृत्य पुरोहितप्रतियापनम् ॥ ३ ॥

**वैशम्पायन उवाच—**

तस्य तद्वचनं श्रुत्वा प्रज्ञावृद्धो महाद्युतिः ।
संपूज्यैनं यथाकालं भीष्मो वचनमब्रवीत् ॥ १ ॥
दिष्ट्या कुशलिनः सर्वे सह दामोदरेण ते ।
दिष्ट्या सहायवन्तश्च दिष्ट्या धर्मे च ते रताः ॥ २ ॥
दिष्ट्या च संधिकामास्ते भ्रातरः कुरुनन्दनाः ।
दिष्ट्या न युद्धमनसः पाण्डवाः सह बान्धवैः ॥ ३ ॥
भवता सत्यमुक्तं तु सर्वमेतन्न संशयः ।
अतितीक्ष्णं तु ते वाक्यं ब्राह्मण्यादिति मे मतिः ॥ ४ ॥
असंशयं क्लेशितास्ते वने चेह च पाण्डवाः ।
प्राप्ताश्च धर्मतः सर्वं पितुर्धनमसंशयम् ॥ ५ ॥
किरीटी बलवान्पार्थः कृतास्त्रश्च महारथः ।
को हि पाण्डुसुतं युद्धे विषहेत धनञ्जयम् ॥ ६ ॥
अपि वज्रधरः साक्षात्किमुतान्ये धनुर्भृतः ।
त्रयाणामपि लोकानां समर्थ इति मे मतिः ॥ ७ ॥
भीष्मे ब्रुवति तद्वाक्यं धृष्टमाक्षिप्य मन्युना ।
दुर्योधनं समालोक्य कर्णो वचनमब्रवीत् ॥ ८ ॥
न तत्राविदितं ब्रह्मन् लोके भूतेन केनचित् ।
पुनरुक्तेन किं तेन भाषितेन पुनः पुनः ॥ ९ ॥
दुर्योधनार्थे शकुनिर्द्यूते निर्जितवान्पुरा ।
समयेन गतोऽरण्यं पाण्डुपुत्रो युधिष्ठिरः ॥ १० ॥
स तं समयमाश्रित्य राज्यं नेच्छति पैतृकम् ।
बलमाश्रित्य मत्स्यानां पाञ्चालानां च मूर्खवत् ११

---

[ लक्षा० ] शेषवन्तो न शकिता इत्यत्र शेषवन्तः आयुःशेषवन्तः शकिता शक्या नेति योजना ॥ ७ ॥

इति श्रीमा० उद्योग० वादि० लक्षालंकारे विंशोऽध्यायः ॥ २० ॥

[ अर्जु० ] अनुनेतुं प्रीत्या सद्वृत्ते स्थापयितुम् ॥ १३ ॥ स्वकं राज्यम् ॥ १४ ॥ हेतुरभिप्रायः ॥ १५ ॥ कालः कृतान्तः ॥ २१ ॥

इति श्रीमन्म० मर्जुनमिश्र० मुद्योगपर्वणि विंशोऽध्यायः ॥ २० ॥

[ सर्व० ] हेतुरभिप्रायः ॥ १५ ॥ बहुलत्वं सेनानामत्यन्तन्यूनाभावमात्रेण ॥ २० ॥ कालः कृतान्तः ॥ २१ ॥

इति श्रीमहा० द्योगप० सर्वज्ञ० टीकायां विंशोऽध्यायः ॥ २० ॥

[ नील० ] धृष्टं धर्षणायुक्तं यथा स्यात्तथा आक्षिप्य तिरस्कृत्य ॥ ८ ॥ तत्र पाण्डवपक्षे ॥ ९ ॥ तं समयं कालं तत्र संकेतवाक्यं त्रयोदशवर्षे ज्ञातैः पुनर्वने वस्तव्यमित्येवंरूपं वा । समय इत्युपक्रम्य 'संकेते कालभाषयोः' इति मेदिनी । आश्रित्य निर्वाह्य पैतृकं राज्यांशं नेच्छति किंतु तदतिक्रमेणैव पैतृकमिच्छतीत्यर्थः ॥ ११ ॥

[ अर्जु० ] धृष्टं निरङ्कुशम् । क्रियाविशेषणमिदम् ॥ ८ ॥ न तत्र विदितं विदितमेव ॥ ९ ॥

[ सर्व० ] धृष्टं प्रगल्भं यथा स्यात्, धृष्टं निरङ्कुशं वा क्रियाविशेषणमिदम् ॥ ८ ॥ आदृत्य श्रद्धया नि-

---

१२छ. ज. ते सर्वे । छ. ज. तत्सर्वे । १३छ. धार्तराष्ट्रसुहृज्जनाः । १८ ज. बहुरूपो । १९ ज. तथा च बुद्धिमत्त्वे हि वासु° । इति विंशोऽध्यायः ॥ २० ॥

४ ज. ब्राह्मणादिति । ६ ज. °वान्छूरः कृतास्त्रश्च महाबलः । ८ ब. मन्युमान् । ११ छ. माक्षिप्य; ज. माहत्य । छ ब. राज्यमिच्छति । ब. च पार्थिव ।

दुर्योधनो भयाद्विद्वन्न दद्यात्पादमन्ततः ।
धर्मतस्तु महीं कृत्स्नां प्रदद्याच्छत्रवेऽपि च ॥ १२ ॥
यदि काङ्क्षन्ति ते राज्यं पितृपैतामहं पुनः ।
यथाप्रतिज्ञं कालं तं चरन्तु वनमाश्रिताः ॥ १३ ॥
ततो दुर्योधनस्याङ्के वर्तन्तामकुतोभयाः ।
अधार्मिकीं तु मा बुद्धिं मौर्ख्यात्कुर्वन्तु केवलात् ॥१४
अथ ते धर्ममुत्सृज्य युद्धमिच्छन्ति पाण्डवाः ।
आसाद्येमान् कुरुश्रेष्ठान्स्मरिष्यन्ति वचो मम ॥१५॥

**भीष्म उवाच—**

किं नु राधेय वाचा ते कर्म तत् कर्तुमर्हसि ।
एक एव यदा पार्थः षड्रथाञ्जितवान् युधि ॥१६॥
बहुशो जीयमानस्य कर्म दृष्टं तदैव ते ।
न चेदेवं करिष्यामो यदयं ब्राह्मणोऽब्रवीत् ।
ध्रुवं युधि हतास्तेन भक्षयिष्याम पांसुकान् ॥१७॥

**वैशम्पायन उवाच—**

धृतराष्ट्रस्ततो भीष्ममनुमान्य प्रसाद्य च ।
अवभर्त्स्य च राधेयमिदं वचनमब्रवीत् ॥ १८ ॥
अस्मद्धितं वाक्यमिदं भीष्मः शान्तनवोऽब्रवीत् ।
पाण्डवानां हितं चैव सर्वस्य जगतस्तथा ॥ १९ ॥
चिन्तयित्वा तु पार्थेभ्यः प्रेषयिष्यामि सञ्जयम् ।
स भवान्प्रतियात्वद्य पाण्डवानेव मा चिरम् ॥२०॥
स तं सत्कृत्य कौरव्यः प्रेषयामास पाण्डवान् ।
सभामध्ये समाहूय सञ्जयं वाक्यमब्रवीत् ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

## द्वाविंशोऽध्यायः २२

धृतराष्ट्रेण संजयस्याग्रे पाण्डवांस्तत्पक्षीयांश्च धर्मवत्त्वेन बलवत्त्वेन च संस्तूय यथा ते युद्धं न रोचयेयुस्तथा तेषु भाषेथा इत्युक्त्वा तत्प्रेषणम् ॥ १ ॥

**धृतराष्ट्र उवाच—**

प्राप्तानाहुः संजय पाण्डुपुत्रा-
नुपप्लव्ये तान् विजानीहि गत्वा ।
अजातशत्रुं च सभाजयेथा
दिष्ट्यानघ स्थानमुपस्थितस्त्वम् ॥ १ ॥
सर्वान्वदेः सञ्जय स्वस्तिमन्तः
कृच्छ्रं वासमतदर्हान्निरुष्य ।
तेषां शान्तिर्विद्यतेऽस्मासु शीघ्रं
मिथ्यापेतानामुपकारिणां सताम् ॥ २ ॥

---

ष्पाद्य । न तं समयमादृत्यानुपाल्य समयमध्य एवास्माभिर्विराटनगरे दृष्टत्वादित्यर्थः ॥ ११ ॥

[ नील० ] पादं चतुर्थांशमपि किमुतार्धमित्यर्थः ॥१२॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे एकविंशोऽध्यायः ॥ २१ ॥

[ अर्जु० ] पादं चतुर्थमंशम् । अन्ततः सर्वाभावे ॥१२॥ चरन्तु वनमाश्रिताः दुर्योधनस्य कारुण्यमुत्पादयितुमिति शेषः ॥ १३ ॥ तं पुरोहितम् ॥ २१ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकविंशोऽध्यायः ॥ २१ ॥

[ सर्व० ] पादमन्ततः पादमात्रमप्यन्ते पृथिव्याः ॥१२॥ चरन्तु वनमाश्रिताः दुर्योधनस्य कारुण्यमुत्पादयितुमिति शेषः । यथाप्रतिज्ञं प्रतिज्ञासमयमध्येऽस्माभिर्ज्ञातत्वादन्यान् द्वादशाब्दान् वने वसन्त्विति ॥ १३ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायामेकविंशोऽध्यायः ॥२१॥

[ लक्षा० ] भगवान्प्रतियात्विति पुरोहितब्राह्मणं प्रति वचनम् ॥ २० ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे एकविंशोऽध्यायः ॥ २१ ॥

[ नील० ] प्राप्तानिति । दिष्ट्या भाग्येन आनह्य संनद्धो भूत्वा स्थानं स्थितिमुपस्थितः प्राप्तः इति सभाजयेथाः पूजयेथाः ॥ १ ॥ स्वस्तिमन्तो वयमिति सर्वान्वदेः कृच्छ्रं निरुष्यापि तेषां शान्तिरक्रोधोऽस्मासु विद्यते मिथ्यापेतानां निष्कपटानाम् ॥ २ ॥

[ अर्जु० ] आह द्विज इति शेषः । उपप्लव्ये विराटनगरे । सभाजयेथाः पूजयेथाः ॥१ ॥ कृच्छ्रं वासमित्यादि कृच्छ्रं वासं निरुध्य स्वस्तिमन्तो यूयमिति शेषः । इति वदेस्त्वं मिथ्योपेतानां मिथ्यैव पराभवेन योजितानाम् ॥ २ ॥

[ सर्व० ] कृच्छ्रं निरुध्य इति स्वस्तिमन्त इति वदे-

---

१६ छ. यथा पार्थः । इति एकविंशोऽध्यायः ॥ २१ ॥

१ छ. ज. ॰ऽनघ प्राप॰ । २ ज. मिथ्योपे॰ ।

नाहं कचित्सञ्जय पाण्डवानां
मिथ्यावृत्तिं कांचन जात्वपश्यम् ।
सर्वां श्रियं ह्यात्मवीर्येण लब्धां
पर्याकार्षुः पाण्डवा मह्यमेव ॥ ३ ॥
दोषं ह्येषां नाध्यगच्छं परीच्छ-
न्नित्यं कंचिद्येन गर्हेय पार्थान् ।
धर्मार्थाभ्यां कर्म कुर्वन्ति नित्यं
सुखप्रिये नानुरुध्यन्ति कामात् ॥ ४ ॥
घर्मं शीतं क्षुत्पिपासे तथैव
निद्रां तन्द्रीं क्रोधहर्षौ प्रमादम् ।
धृत्या चैव प्रज्ञया चाभिभूय ।
धर्मार्थयोगात्प्रयतन्ति पार्थाः ॥ ५ ॥
त्यजन्ति मित्रेषु धनानि काले
न संवासाज्जीर्यति तेषु मैत्री ।
यथार्हमानार्थकरा हि पार्था-
स्तेषां द्वेष्टा नास्त्याजमीढस्य पक्षे ॥ ६ ॥
अन्यत्र पापाद्विषमान्मन्दबुद्धे-
र्दुर्योधनात् क्षुद्रतराच्च कर्णात् ।
तेषां हीमौ हीनसुखप्रियाणां
महात्मनां संजनयतो हि तेजः ॥ ७ ॥
उत्थानवीर्यः सुखमेधमानो
दुर्योधनः सुकृतं मन्यते तत् ।
तेषां भागं यच्च मन्येत बालः
शक्यं हर्तुं जीवतां पाण्डवानाम् ॥ ८ ॥
यस्यार्जुनः पदवीं केशवश्च
वृकोदरः सात्यकोऽजातशत्रोः ।
माद्रीपुत्रौ सृञ्जयाश्चापि यान्ति
पुरा युद्धात्साधु तस्य प्रदानम् ॥ ९ ॥

---

रित्यन्वयः । कृच्छ्रं वासं निरुष्य स्वस्तिमन्तो यूयमिति शेष इति वा अभिवदेः । शान्तिः क्रोधोपशमः । मिथ्योपेतानां मिथ्यैव पराजयेनाभियोजितानाम् ॥ २ ॥

[ लक्षा० ] दिष्ट्या भवान् ग्राममुपागत इत्यत्र ग्रामं त्वद्ग्रामादस्मद्ग्रामम् ॥ १ ॥

[ नील० ] मह्यं पर्याकार्षुः मदर्थं परित आनीतवन्तः ॥ ३ ॥ धर्मार्थाभ्यां धर्मार्थम् अर्थार्थं च सुखं च प्रीतिः प्रियं पुत्रादि तदनुरोधेन कामात् धर्मं न त्यजन्तीत्यर्थः ॥ ४ ॥ तन्द्री जाग्रत एव मौढ्यम् ॥ ५ ॥ यथार्हमानम् अर्थं च कुर्वन्ति ते तथा ॥ ६ ॥ तेजः क्रोधम् ॥ ७ ॥ उत्थाने आरम्भकाले एव वीर्यं न प्रसङ्गे यस्य स उत्थानवीर्यः । यत्तु तेषां भागं हर्तुं शक्यं मन्यते तत् सुकृतं युक्तमिति मन्यते मौढ्यादिति भावः ॥ ८ ॥ यस्य पदवीं यान्ति यस्यानुगा इत्यर्थः । तस्य तस्मै प्रदानं भागप्रदानम् ॥ ९ ॥

[ अर्जु० ] पर्याकार्षुरुपनिन्युः ॥ ३ ॥ धर्मार्थाभ्यां कारणाभ्यां कर्म पुण्यप्रदं, सुखप्रिये नानुरुध्यन्ते प्रियं वस्तु च न गणयन्ति ॥४॥ काले प्राप्ते अवसरे । जीर्यति परिणमति । ( मैत्रीमिति भावः )। आजमीढस्य पक्षे अजमीढवंशानामस्माकं पक्षे भागे ॥ ६ ॥ तेजः कोपम् ॥ ७ ॥ उत्थानवीर्यः उत्थाने आरम्भकाल एव वीर्यं यस्य । भागं हर्तुमशक्यम् । मन्यते यद् यद्यस्मात्तस्मात् बाल एवेत्यन्वयः ॥ ८ ॥ पदवीं मार्गम् । पुरा युद्धात् साधु तस्य प्रदानम् । ( तात्स्थ्यात् लक्ष्यते । ) पुरा अग्रतः तस्य भागस्य ॥ ९ ॥

[ सर्व० ] पर्याकार्षुरुपनिन्युः ॥ ३ ॥ धर्मार्थाभ्यां कारणाभ्याम् । कर्म पुण्यप्रदम् । सुखमनुकूलवेदनीयम्, प्रियं तद्धेतुः रूयादि नानुरुद्धयन्ति न गणयन्ति, धर्ममेव गणयन्तीति भावः ॥ ४ ॥ घर्मं शीतं स्पर्शविशेषः । निद्रा तमसि गुणे चित्रलेखम् । तन्द्रा आलस्यम् । धृत्या उपस्थितेऽपि दुःखेऽनुद्विग्नया बुद्धया । प्रज्ञया ऊहापोहरूपया ॥ ५ ॥ त्यजन्ति प्रयच्छन्ति । काले प्राप्तेऽवसरे । जीर्यते परिणतिं गच्छति ॥ ६ ॥ तेजः कोपम् ॥ ७ ॥ टीकान्तरे— मिथ्या छद्मनास्माभिरुपेतानामिति यावत् ॥ २ ॥ पर्याकार्षुः परिकरबन्धनं दत्तवन्तः ॥ ३ ॥ धर्मार्थाभ्यां तादर्थ्ये चतुर्थी । सुखं सुखहेतुः धर्मार्थावेवानुरुद्धयन्ति, न काममित्यर्थः ॥४॥ तन्द्री जाग्रत एव मनोलयः ॥ ५ ॥ हीनं सुखं प्रियं च येषतेषामुत्थानेनैव तेजो वर्धयतः । यथाहुः—क्षीणा नरा निंष्करुणा भवन्तीति ॥ ७ ॥ उत्थाने आरम्भकाले वीय यस्य, हर्तुं शक्यं मन्यते यद्यस्मात्तस्माद्बाल इत्यन्वयः ॥ ८ ॥ पदवीं मार्गं ( तत्स्थानप्रयाणं ) लक्ष्यते । पुरा प्रथमतः । तस्य भागस्य ॥ ९ ॥

[ लक्षा० ] यो न गर्भेऽपि पार्थानित्यत्र यो दोषः पार्थान्नास्पृशदिति योजना ॥ ४ ॥ तेषां हि मेऽहीनसुखः प्रियाणामित्यत्र मे प्रियाणां तेषामहीनसुखः अमन्दबुद्धिः विवेकी महात्मनां तेषां भागं कर्तुं घटत इति योजना । महात्मनां दीप्तचेतसाम् ॥ ७ ॥ उत्थानवीर्यमित्यत्र उत्थाने ग्रामादूनं प्रत्युत्थाने सति वीर्यं यथा भवति तथा उत्थानवीर्यं सुखं यथा भवति तथा एधमान इति

---

४ छ. ज. गर्हेम । ६ ज. जीर्यते । ७ ज. क्षुद्रचारा° । ज. स्पर्धयतो हि । ८ ज. यच्च भोक्षेत बा° ।

स ह्येवैकः पृथिवीं सव्यसाची
गाण्डीवधन्वा प्रणुदेद्रथस्थः ।
तथा जिष्णुः केशवोऽप्यप्रधृष्यो
लोकत्रयस्याधिपतिर्महात्मा ॥ १० ॥
तिष्ठेत कस्तस्य मर्त्यः पुरस्ता-
द्यः सर्वलोकेषु वरेण्य एकः ।
पर्जन्यघोषान् प्रवपन् शरौघान्
पतङ्गसंघानिव शीघ्रवेगान् ॥ ११ ॥
दिशं ह्युदीचीमपि चोत्तरान् कुरून्
गाण्डीवधन्वैकरथो जिगाय ।
धनं चैषामाहरत्सव्यसाची
सेनानुगान् द्रविडांश्चैव चक्रे ॥ १२ ॥
यश्चैव देवान् खाण्डवे सव्यसाची
गाण्डीवधन्वा प्रजिगाय सेन्द्रान् ।
उपाहरत्पाण्डवो जातवेदसे
यशो मानं वर्धयन्पाण्डवानाम् ॥ १३ ॥
गदाभृतां नास्ति समोऽत्र भीमा-
द्धस्त्यारोहो नास्ति समश्च तस्य ।
रथेऽर्जुनादाहुरहीनमेनं
बाह्वोर्बलेनायुतनागवीर्यम् ॥ १४ ॥
सुशिक्षितः कृतवैरस्तरस्वी
दहेत् क्षुद्रांस्तरसा धार्तराष्ट्रान् ।
सदात्यमर्षी न बलात्स शक्यो
युद्धे जेतुं वासवेनापि साक्षात् ॥ १५ ॥
सुचेतसौ बलिनौ शीघ्रहस्तौ
सुशिक्षितौ भ्रातरौ फाल्गुनेन ।
श्येनौ यथा पक्षिपूगान् रुजन्तौ
माद्रीपुत्रौ शेषयेतां न शत्रून् ॥ १६ ॥
एतद्बलं पूर्णमस्माकमेवं
यत्सत्यं तान्प्राप्य नास्तीति मन्ये ।
तेषां मध्ये वर्तमानस्तरस्वी
धृष्टद्युम्नः पाण्डवानामिहैकः ॥ १७ ॥
सहामात्यः सोमकानां प्रबर्हः
संत्यक्तात्मा पाण्डवार्थे श्रुतो मे ।
अजातशत्रुं प्रसहेत कोऽन्यो
येषां स स्यादग्रणीर्वृष्णिसिंहः ॥ १८ ॥

---

योजना । तत् वनगमनमेव सुकृतं सुष्टुकृतं न्यायेन कृतं मन्यत इति योजना । यद्यस्मात्कारणात्तेषां पाण्डवानामभागं मन्यते । जीवितं हर्तुं शक्यं च मन्यते । तस्माद्बालः ॥ ८ ॥ यस्याजातशत्रोः पदवीमनुगच्छन्तीति योजना ॥ ९ ॥

[ नील० ] जिष्णुर्जयशीलः ॥ १० ॥ वरेण्यः भोगमोक्षकामैर्वरणीयः ॥ ११ ॥ न केवलं मध्यदेशापेक्षया उदीचीं किंतु उत्तरान् कुरून् हिमाचलादप्युदग्देशान् स्वर्गभूमिरूपान् ॥ १२ ॥ जातवेदसे उपाहरत् खाण्डवमिति विपरिणामेनानुषङ्गः ॥ १३ ॥ एतत्परिदृश्यमानं बलं भीष्मद्रोणादीनां सामर्थ्यं तदपि सत्यं तथाऽपि तान्पाण्डवान्प्राप्य नास्तीति मन्ये तुच्छमित्यर्थः ॥ १७ ॥ प्रबर्हः श्रेष्ठः संत्यक्तात्मा त्यक्तदेहः ॥ १८ ॥

[ अर्जु० ] विष्णुकेशवलोकत्रयाधिपतिशब्दाः पर्याया एव ॥ १० ॥ अप्रधृष्यत्वे हेत्वतिशयमाह दिशं ह्युदीचीमिति सामान्येन, उत्तरान्कुरूनिति विशेषेण ॥ १२ ॥ न शेषयेतां शत्रून् यथा नाशयेतां तथा ऽक्रियेतामिति शेषान्वयः ॥ १६ ॥ सात्वतानां प्रबर्हः प्रधानं संत्यक्तात्मा पांडवानां कृते इति शेषान्वयः । पाण्डवार्थ इति वा पाठः ॥ १८ ॥

[सर्व०] विष्णुः केशवः लोकत्रयाधिपतिः पर्याया एव ॥ १० ॥ अप्रधृष्यत्वे हेत्वतिशयमाह । दिशं ह्युदीचीमिति सामान्येन उत्तरान् कुरूनिति विशेषेण ॥ १२ ॥ उपाहरत् उपहारमकरोत् ॥ १३ ॥ टीकान्तरे—उत्थानवीर्य उत्थानकाल एव वीर्यं यस्य सः । यश्च भागं शक्यं हर्तुं मन्यते, यस्य वाऽजातशत्रोर्भागस्य पदवीं गमनवर्त्मानुयान्ति, पुरा युद्धात् तस्य प्रदानं साध्वित्यन्वयः ॥ ८–९ ॥ विष्णुः केशव इत्यादिपदानां यौगिकार्थपरत्वान्न पौनरुक्त्यम् अप्रधृष्य इति विधेयम् ॥ १० ॥ वरेण्यो वरणीयः ॥ ११ ॥ दिशमुदीचीं भारतवर्षस्य, तथोत्तरान् कुरून् ॥ १२ ॥ उपाहरत् यशो धनं भक्ष्यरूपं, यश इति धनकामनिघण्टेषु पठ्यते । पाण्डवानां मानं वर्धयन् । पाण्डवानामिति तादर्थ्यचतुर्थ्यर्थे षष्ठी । अविवक्षितमत्र कर्म ॥ १३ ॥ सुशिक्षितः शिक्षां प्राप्तः ॥ १५ ॥ सुचेतसौ एकाग्रचित्तौ । यथा न शेषयेतां तथाऽक्रियेतामिति शेषान्वयः ॥ १६ ॥ सात्वतानां प्रबर्हः प्रधानम् । संत्यक्तात्मा पाण्डवानां कृते इति शेषान्वयः ॥ १८ ॥

[ लक्षा० ] पर्जन्यघोषानित्यत्र शरानिति जनौघान् प्रतीति च योग्यपदाध्याहारः ॥ ११ ॥

---

१० ब. सर्वामेकः । १३ ज. 'पाण्डवाज्जातवेदा । १४ ज. समोऽथ । छ. ज. 'ले चायुतनागवीर्यः । १५ ज. क्रुद्धस्तर' । १७ ज. येषां मध्ये १८ ज. । सात्वतानां प्रबर्हः ।

सहोषितश्चरितार्थो वयस्थो
मात्स्येयानामधिपो वै विराटः ।
स वै सपुत्रः पाण्डवार्थे च शश्व-
द्युधिष्ठिरे भक्त इति श्रुतं मे ॥ १९ ॥
अवरुद्धा रथिनः केकयेभ्यो
महेष्वासा भ्रातरः पञ्च सन्ति ।
ते केकयेभ्यो राज्यमाकाङ्क्षमाणा
युद्धार्थिनश्चानुवसन्ति पार्थान् ॥ २० ॥
सर्वांश्च वीरान्पृथिवीपतीनां
समागतान्पाण्डवार्थे निविष्टान् ।
शूरानहं भक्तिमतः शृणोमि
प्रीत्या युक्तान् संश्रितान् धर्मराजम् ॥ २१ ॥
गिर्याश्रया दुर्गनिवासिनश्च
योधाः पृथिव्यां कुलजातिशुद्धाः ।
म्लेच्छाश्च नानायुधवीर्यवन्तः
समागताः पाण्डवार्थे निविष्टाः ॥ २२ ॥
पाण्ड्यश्च राजा समितीन्द्रकल्पो
योधप्रवीरैर्बहुभिः समेतः ।
समागतः पाण्डवार्थे महात्मा
लोकप्रवीरोऽप्रतिवीर्यतेजाः ॥ २३ ॥
अस्त्रं द्रोणादर्जुनाद्वासुदेवा-
त्कृपाद्भीष्माद्येन वृतं शृणोमि ।
यं तं कार्ष्णिमतिममाहुरेकं
स सात्यकिः पाण्डवार्थे निविष्टः ॥ २४ ॥
उपाश्रिताश्चेदिकरूषकाश्च
सर्वोद्योगैर्भूमिपालाः समेताः ।
तेषां मध्ये सूर्यमिवातपन्तं
श्रिया वृतं चेदिपतिं ज्वलन्तम् ॥ २५ ॥
अस्तम्भनीयं युधि मन्यमानो
ज्यां कर्षतां श्रेष्ठतमं पृथिव्याम् ।
सर्वोत्साहं क्षत्रियाणां निहत्य
प्रसह्य कृष्णस्तरसा संममर्द ॥ २६ ॥
यशोमानौ वर्धयन्पाण्डवानां
पुराऽभिनच्छिशुपालं समीक्ष्य ।
यस्य सर्वे वर्धयन्ति स्म मानं
करूषराजप्रमुखा नरेन्द्राः ॥ २७ ॥
तमसह्यं केशवं तत्र मत्वा
सुग्रीवयुक्तेन रथेन कृष्णम् ।
के प्राद्रवंश्चेदिपतिं विहाय
सिंहं दृष्ट्वा क्षुद्रमृगा इवान्ये ॥ २८ ॥
यस्तं प्रतीपस्तरसा प्रत्युदीया-
दाशंसमानो द्वैरथे वासुदेवम् ।
सोऽशेत कृष्णेन हतः परासु-
र्वातेनेवोन्मथितः कर्णिकारः ॥ २९ ॥

---

[ नील० ] सहोषितो वर्षमात्रं चरितार्थः गोग्रहे रक्षितः । मात्स्येयानां मत्स्यदेशजानाम् ॥१९॥ केकयेभ्यो देशेभ्यः । अवरुद्धाः बहिर्निःसारिताः पञ्च भ्रातरः केकयानाम् । यतः केकयेभ्यः राज्यं प्राप्तुमिच्छन्तः पूर्वमस्मदीया अपि संप्रति पाण्डवान् अनुवसन्ति अनुसरन्ति । तेन स्वपक्षहानिः परपक्षपुष्टिश्च दर्शिता ॥ २० ॥ समिति संग्रामे । 'समित्याजिसमिद्युधः' इति कोशः । अप्रतिवीर्यतेजाः अतुल्यतेजाः ॥ २३ ॥ कार्ष्णिः प्रद्युम्नस्तत्तुल्यम् ॥ २४ ॥ चेदिपतिं शिशुपालं कृष्णो ममर्देत्युत्तरेणान्वयः ॥ २५ ॥ ज्यां धनुर्गुणं कर्षताम् ॥ २६ ॥ यस्य मानं वर्धयन्ति तं शिशुपालमभिनदिति संबन्धः ॥ २७ ॥ चेदिपतिं विहाय अन्ये तं कृष्णं के प्राद्रवन् न केऽपि किंतु स एव तेन सह स्पर्धां चकारेत्यर्थः ॥ २८ ॥ आशंसमानो जयमिति शेषः । अशेत शयनं कृतवान् शिशुपालः ॥२९॥

[अर्जु०] भक्तः सेवते स्म ॥ १९ ॥ पृथिवीपतीनामिति तन्मध्ये ॥२१॥ अमितः असंख्यातः ॥ २३ ॥ अपार्थिवोऽराजा प्रत्युदीयात् प्रातिकूल्येनोत्थानं कुर्यात् ॥ २९ ॥

[ सर्व० ] सहोषितोऽज्ञातचर्यायाम् । भक्तः सेवते स्म ॥ १९ ॥ पृथिवीपतीनामिति निर्धारणे षष्ठी ॥ २१ ॥ टीकान्तरे—तदर्थमयं संत्यक्तात्मा ॥१८॥ सहोषितो वर्षमेकम् ॥ १९ ॥ दुर्योधनपक्षस्थैः केकयैः ते पञ्च केकया राज्यान्निर्वासिताः ते चैभ्यः केकयेभ्यः सकाशात् राज्यं ग्रहीतुमाकाङ्क्षमाणाः पार्थान् सेवन्ते ॥ २० ॥ पृथिवीपतीनां मध्ये वीराः पञ्च ॥ २१ ॥ अमितः असङ्ख्यातः ॥ २३ ॥ अपार्थिवोऽराजा प्रातिकूल्येन गतं प्रत्युदीयात् प्रातिकूल्येनोत्थानं कुर्यात् ॥ २९ ॥

[ लक्षा० ] तान् केकयेभ्यो राज्यमाकाङ्क्षमाणानित्यत्र राज्यं स्वराज्यम् ॥ २० ॥ तेषां मध्ये सूर्यमिवातपन्त-

---

१९ छ. वयस्यो । २१ ज. सर्वे च वीराः पृथिवीपतीनां समानीताः पाण्डवार्थे निविष्टाः । शूरानहान्भ° । २२ ज. कुलजातशुद्धाः । २३ छ. युद्धेषु वी°; ज. युधि । २५ ज.अपाश्रिताः । °मिवापतन्तं । २६ ज. ज्याकर्षतां । २८ छ.ज. संप्राद्रवं ।

पराक्रमं मे यदवेदयन्त
तेषामर्थे सञ्जय केशवस्य ।
अनुस्मरँस्तस्य कर्माणि विष्णो-
र्गावल्गणे नाधिगच्छामि शान्तिम् ॥ ३० ॥
न जातु ताञ्छत्रुरन्यः सहेत
येषां स स्यादग्रणीर्वृष्णिसिंहः ।
प्रवेपते मे हृदयं भयेन
श्रुत्वा कृष्णावेकरथे समेतौ ॥ ३१ ॥
न चेद्गच्छेत्संगरं मन्दबुद्धि-
स्ताभ्यां लभेच्छर्म तदा सुतो मे ।
नोचेत्कुरून्सञ्जय निर्दहेता-
मिन्द्राविष्णू दैत्यसेनां यथैव ॥ ३२ ॥
मतो हि मे शक्रसमो धनञ्जयः
सनातनो वृष्णिवीरश्च विष्णुः ।
धर्मारामो ह्रीनिषेवस्तरस्वी
कुन्तीपुत्रः पाण्डवोऽजातशत्रुः ॥ ३३ ॥
दुर्योधनेन निकृतो मनस्वी
नोचेत् क्रुद्धः प्रदहेद्धार्तराष्ट्रान् ।
नाहं तथा ह्यर्जुनाद्वासुदेवा-
द्भीमाद्वाऽहं यमयोर्वा बिभेमि ॥ ३४ ॥
यथा राज्ञः क्रोधदीप्तस्य सूत
मन्योरहं भीततरः सदैव ।
महातपा ब्रह्मचर्येण युक्तः
संकल्पोऽयं मानसस्तस्य सिद्ध्येत् ॥ ३५ ॥
तस्य क्रोधं सञ्जयाहं समीक्ष्य
स्थाने जानन् भृशमस्म्यद्य भीतः ।
स गच्छ शीघ्रं प्रहितो रथेन
पाञ्चालराजस्य चमूनिवेशनम् ॥ ३६ ॥
अजातशत्रुं कुशलं स्म पृच्छेः
पुनः पुनः प्रीतियुक्तं वदेस्त्वम् ।
जनार्दनं चापि समेत्य तात
महामात्रं वीर्यवतामुदारम् ॥ ३७ ॥

---

मित्यत्र तेषां राजसूये मिलितानां राज्ञां मध्ये सूर्यमिवातपन्तं शिशुपालं लोको ददर्शेति समग्रश्लोकस्य योजना॥२५॥

[ नील० ] यत् यतः अवेदयन्त ज्ञापितवन्तः चारा इति शेषः ॥ ३० ॥ कृष्णौ वासुदेवार्जुनौ ॥ ३१ ॥ संगरं चेन्न गच्छेत्तदा शर्म लभेत् नोचेत् अन्यथा इन्द्रो विष्णुश्च ताविव अर्जुनवासुदेवौ निर्दहेतामित्यन्वयः ॥३२॥ शक्रपुत्रत्वात् शक्रसमः धर्मपुत्रत्वात् धर्मारामः ॥ ३३ ॥ निकृतो वञ्चितः, मनस्वी जितमनाः ॥ ३४ ॥ मन्योः क्रोधात् ॥ ३५ ॥ स्थाने जानन् युक्तं पश्यन् ॥ ३६ ॥ महामात्रं महाभागम् ॥ ३७ ॥

[ अर्जु० ] यदवेदयन्त प्राप्ता इति शेषः । तेषां पाण्डवानां, पराक्रमं संशयं प्राणसंशयपर्यन्तं यदवेदयन्त इत्यन्वयः । जिष्णोरर्जुनस्य तत् तस्मात् ॥ ३० ॥ धर्मारामो धर्मेण क्रीडति ह्रीनिषेधः अकार्यप्रवृत्तौ ह्रीरेव निषेधो यस्य ह्रीनिषेधः इति वा ह्रियं निषेवत इति ॥ ३३ ॥ चेदिति क्रुद्धस्यानन्तरं द्रष्टव्यं, नो वितर्के क्रुद्धश्चेद्यदि नो दहेत् अपि तु दहेदेव ॥ ३४ ॥ मन्योः क्रोधात् । अलं समर्थः । तस्मात् सिद्ध्यै फलाय । तत्र हेत्वभिधानं तपोब्रह्मचर्येण युक्त इति ॥ ३५ ॥ समीके संग्रामे, समीक्ष्येति पठन्ति । स्थाने युक्तम् ॥३६॥ परेत्य प्राप्य समेत्येति वा । महामात्रं प्रधानम् ॥ ३७ ॥

[ सर्व० ] यदवेदयन्तः प्राप्ता इति शेषः । तेषां पाण्डवानां पराक्रमं संशयं प्राणसंशयपर्यन्तं यदवेदयन्त इत्यन्वयः ॥ ३० ॥ टीकान्तरे—अमितोऽतुल्यः ॥२३॥ तेषां मध्ये ज्वलन्तं यं शिशुपालं ते चेदिकरूषादयोऽपाश्रिताः यस्य च ते मानं वर्धयन्ति, तं ज्यां धनुर्गुणं कर्षतां धन्विनां श्रेष्ठं यो ममर्द वासुदेवः, तमसह्यं मत्वा ते संप्राद्रवन् इत्यनेकश्लोकैर्विप्रकर्षेणान्वयो द्रष्टव्यः ॥ २५–२८ ॥ यः कश्चित्प्रत्युदीयात् सोऽप्यशेत स शयिष्यते कालव्यत्ययात् ॥ २९ ॥ पराक्रममुत्साहमवेदयन्त अकथयन् तेषां पाण्डवानामर्थे जिष्णोरर्जुनस्य । तत्तस्मात् ॥ ३० ॥ ह्रीरेव निषेधोऽकार्यकरणप्रवृत्तौ यस्य । तरस्वी बलवान् ॥ ३३ ॥ चेदिति क्रुद्धस्यानन्तरं द्रष्टव्यम्, नो वितर्के, क्रुद्धश्चेन्नो दहेदपि तु दहेदेवेत्यन्वयः ॥ ३४ ॥ मन्योः क्रोधात् । अलं समर्थः । सिद्ध्यै फलसिद्ध्यै । तत्र हेत्वभिधानं तपोब्रह्मचर्येण युक्त इति ॥ ३५ ॥ समीके संग्रामे । स्थाने युक्तम् ॥ ३६ ॥ समेत्य प्राप्य । महामात्रं प्रधानम् ॥ ३७ ॥ टीकान्तरे—न चेद्गच्छेदिति । अत्र चेच्छेब्दो हेतुजिज्ञासायां न गमिष्यति इत्यर्थः । एवमुत्तरत्र स्थानद्वये नो चेदिति । अस्य तन्निषेधपरत्वेन यदि गच्छेदित्यर्थः । तेन किमसौ सङ्गरं नागमिष्यतीति संभविष्यतीति गमिष्यतीति संभविष्यतीति । गमिष्यतीति चेत्तदा कृष्णार्जुनौ कुरून् दहेतां युधिष्ठिरश्च दहेदिति समुदायार्थः ॥ ३२–३४ ॥ तस्य मानसः संकल्पः पर्याप्तः । सि-

---

३० ज. जिष्णोर्गा॰ । ३२ ज. संगरे मं॰ । ३६ ज. समीके स्थाने ।

ज. निवेशम् ।

अनामयं मद्वचनेन पृच्छे-
धृतराष्ट्रः पाण्डवैः शान्तिमीप्सुः ।
न तस्य किंचिद्वचनं न कुर्यात्
कुन्तीपुत्रो वासुदेवस्य सूत ॥ ३८ ॥
प्रियश्चैषामात्मसमश्च कृष्णो
विद्वांश्चैषां कर्मणि नित्ययुक्तः ।
समानीतान्पाण्डवान् सञ्जयांश्च
जनार्दनं युयुधानं विराटम् ॥ ३९ ॥
अनामयं मद्वचनेन पृच्छेः
सर्वांस्तथा द्रौपदेयांश्च पञ्च ।
यद्यत्तत्र प्राप्तकालं परेभ्य-
स्त्वं मन्येथा भारतानां हितं च ।
तद्भाषेथाः सञ्जय राजमध्ये
न मूर्च्छयेद्यन्न च युद्धहेतुः ॥ ४० ॥

इति श्रीमहाभारते उद्योगपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

## त्रयोविंशोऽध्यायः २३

उपप्लव्यं गतेन सञ्जयेन धृतराष्ट्रवचनाद्युधिष्ठिरं प्रत्यनामयप्रश्नः ॥ १ ॥ युधिष्ठिरेण तं प्रति कुरूणां कुशलं ब्राह्मणेषु वृत्तिं चापृच्छ्य, द्रोणादीनां पाण्डवेषु कीदृशी मतिः, दुर्योधनादयश्च भीमादीनां दिग्विजयादिकर्माणि स्मरन्ति न वेत्यादयः प्रश्नाः ॥ २ ॥

**वैशम्पायन उवाच—**

राज्ञस्तु वचनं श्रुत्वा धृतराष्ट्रस्य सञ्जयः ।
उपप्लव्यं ययौ द्रष्टुं पाण्डवानमितौजसः ॥ १ ॥
स तु राजानमासाद्य धर्मात्मानं युधिष्ठिरम् ।
अभिवाद्य ततः पूर्वं सूतपुत्रोऽभ्यभाषत ॥ २ ॥
गावल्गणिः सञ्जयः सूतसूनु-
रजातशत्रुमवदत्प्रतीतः ।
दिष्ट्या राजँस्त्वामरोगं प्रपश्ये
सहायवन्तं च महेन्द्रकल्पम् ॥ ३ ॥
अनामयं पृच्छति त्वाऽम्बिकेयो
वृद्धो राजा धृतराष्ट्रो मनीषी ।
कच्चिद्भीमः कुशली पाण्डवाग्र्यो
धनञ्जयो माद्रवतीसुतौ च ॥ ४ ॥
कच्चित् कृष्णा द्रौपदी राजपुत्री
सत्यव्रता वीरपत्नी सपुत्रा ।
मनस्विनी यत्र च वाञ्छसि त्व-
मिष्टान् कामान् भारत स्वस्तिकामः ॥ ५ ॥

---

द्धयै सिद्धिं प्राप्तुम् । यतोऽसौ महातपाः ॥ ३५ ॥ समीके युद्धे युद्धनिमित्तस्थाने दुर्योधनस्यास्थाने सति तस्य क्रोधं जानन् ॥ ३६ ॥ महामात्रं प्रधानम् ॥ ३७ ॥

[ लक्षा० ] स धर्मराजो ह्रीनिषेध इत्यत्र ह्रियाऽधर्मस्य निषेधो यस्मिन् स तथोक्तः ॥ ३३ ॥ स्थानेजातमित्यत्र स्थाने कोपयोग्यस्थाने जातमिति क्रोधस्य विशेषणम् ३६॥

[ नील० ] शान्तिमीप्सुरस्तीति वदेत्यध्याहारः ॥ ३८ ॥ समानीतान् एकत्र स्थितान् ॥ ३९ ॥ न मूर्च्छयेत् वर्धयेत् क्रोधमिति शेषः ॥ ४० ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे द्वाविंशोऽध्यायः ॥ २२ ॥

[ अर्जु० ] न मूर्च्छयेदर्धराज्यादिदाननिश्चयं यन्न कुर्यात् तद्भाषेथा इत्यन्वयः ॥ ४० ॥

इति श्रीमन्महा० मर्जुनमिश्र० मुद्योगपर्वणि द्वाविंशोऽध्यायः ॥ २२ ॥

[ सर्व० ] धृतराष्ट्रः पाण्डवैः शान्तिमीप्सुरिति ब्रूयादिति शेषः ॥ ३८ ॥ समानीय एकत्र कृत्वा ॥ ३९ ॥ परेभ्योर्थे हितं युक्तं तद्वचनं न मूर्च्छयेत् न निर्धारयेत् राज्यदानादि ॥ ४० ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां द्वाविंशोऽध्यायः ॥ २२ ॥

[ लक्षा० ] न तस्य किंचिद्वचनं न कुर्यादित्यत्र वचनं न कुर्यादिति नेति संबन्धः ॥ ३८ ॥ न मूर्छयेद्यन्न भवेच्च युद्धमित्यत्र यत् वाक्यं न मूर्च्छयेत् परशिरोव्यथां न जनयेत् यत् यस्माद्वाक्यात् युद्धं न च भवेत् तत् भाषेथा इति योजना ॥ ४० ॥

इति श्रीभारते उद्योग० वादिरा० लक्षालंकारे द्वाविंशोऽध्यायः ॥२२॥

[ नील० ] प्रतीतो हृष्टः ॥ ३ ॥ यत्र आप्तवर्गे त्वं स्वस्तिकामः कल्याणार्थी यांश्च इष्टान् कामान् भोग्यान् गजरथादीन्वाञ्छसि ते सर्वे कुशलिनः कच्चिदित्यनुषङ्गः ॥५॥

[ अर्जु० ] प्रतीतः प्राप्तः ॥ ३ ॥ त्वा त्वाम् ॥ ४ ॥

[ सर्व० ] यत्र चान्यत्रापि इष्टान् कामान् वाञ्छसि ॥ ५ ॥

---

३९ छ. संमानी° । ४० ज. नरेभ्यस्त्वं । इति द्वाविंशोऽध्यायः ॥ २२ ॥

४ ख. भारताग्र्यो ।

युधिष्ठिर उवाच—

गावल्गणे सञ्जय स्वागतं ते
प्रीयामहे ते वयं दर्शनेन ।
अनामयं प्रतिजाने तवाहं
सहानुजैः कुशली चास्मि विद्वन् ॥ ६ ॥
चिरादिदं कुशलं भारतस्य
श्रुत्वा राज्ञः कुरुवृद्धस्य सूत ।
मन्ये साक्षाद्दृष्टमहं नरेन्द्रं
दृष्ट्वैव त्वां सञ्जय प्रीतियोगात् ॥ ७ ॥
पितामहो नः स्थविरो मनस्वी
महाप्राज्ञः सर्वधर्मोपपन्नः ।
स कौरव्यः कुशली तात भीष्मो
यथापूर्वं वृत्तिरस्यास्ति कच्चित् ॥ ८ ॥
कच्चिद्राजा धृतराष्ट्रः सपुत्रो
वैचित्रवीर्यः कुशली महात्मा ।
महाराजो बाह्लिकः प्रातिपेयः
कच्चिद्विद्वान् कुशली सूतपुत्र ॥ ९ ॥
स सोमदत्तः कुशली तात कच्चि-
द्भूरिश्रवाः सत्यसंधः शलश्च ।
द्रोणः सपुत्रश्च कृपश्च विप्रो
महेष्वासाः कच्चिदेतेऽप्यरोगाः ॥ १० ॥
सर्वे कुरुभ्यः स्पृहयन्ति सञ्जय
धनुर्धरा ये पृथिव्यां प्रधानाः ।
महाप्रज्ञाः सर्वशास्त्रावदाना
धनुर्भृतां मुख्यतमाः पृथिव्याम् ॥ ११ ॥
कच्चिन्मानं तात लभन्त एते
धनुर्भृतः कच्चिदेतेऽप्यरोगाः ।
येषां राष्ट्रे निवसति दर्शनीयो
महेष्वासः शीलवान् द्रोणपुत्रः ॥ १२ ॥
वैश्यापुत्रः कुशली तात कच्चिन्
महाप्राज्ञो राजपुत्रो युयुत्सुः ।
कर्णोऽमात्यः कुशली तात कच्चि-
त्सुयोधनो यस्य मन्दो विधेयः ॥ १३ ॥
स्त्रियो वृद्धा भारतानां जनन्यो
महानस्यो दासभार्याश्च सूत ।
वध्वः पुत्रा भागिनेया भगिन्यो
दौहित्रा वा कच्चिदप्यव्यलीकाः ॥ १४ ॥
कच्चिद्राजा ब्राह्मणानां यथावत्
प्रवर्तते पूर्ववत्तात वृत्तिम् ।
कच्चिद्दायान्मामकान् धार्तराष्ट्रो
द्विजातीनां सञ्जय नोपहन्ति ॥ १५ ॥
कच्चिद्राजा धृतराष्ट्रः सपुत्रः
उपेक्षते ब्राह्मणातिक्रमान्वै ।
स्वर्गस्य कच्चिन्न तथा वर्त्मभूता-
मुपेक्षते तेषु सदैव वृत्तिम् ॥ १६ ॥

---

[ नील० ] वृतिरस्मासु स्नेहः ॥ ८ ॥ कुरुभ्यः स्पृहयन्ति कच्चिदित्यनुषङ्गः । कुरूणां कल्याणम् अयुद्धेन वाञ्छन्ति कच्चिदिति भावः ॥ ११ ॥ येषां राष्ट्रे निवसति तेषां कुरूणां मध्ये धनुर्भृतः कच्चिन्मानं लभन्ते ॥ १२ ॥ महानस्यो महानसे परिचारिकाः वध्वः स्नुषाः अव्यलीकाः निष्कपटाः ॥ १४ ॥ वृत्तिं जीविकां दातुमिति शेषः । दायान्महत्तान् ग्रामादीन् ॥ १५ ॥ अतिक्रमान्नोपेक्षत इत्युत्तरार्धान्नञोऽपकर्षेण योज्यम् ॥ १६ ॥

[ अर्जु० ] प्रातिपेयः प्रतीपपुत्रः ॥ ९ ॥ सर्वशास्त्रावदाना सर्वैः शास्त्रैरवदानं खण्डनं येषाम् ॥ ११ ॥ स्पृहणीयहेतुः द्रोणपुत्रस्य अश्वत्थाम्नः कौरवेषु निवासः ॥ १२ ॥ विधेयो वचनस्थः ॥ १३ ॥ माहानस्यो रन्धनकारिकाः ॥ १४ ॥ दायान् महत्तान् ग्रामादीन् ॥ १५ ॥ हेतोर्न्यायस्य वर्त्मभूतां मार्गं प्राप्तां तेषु ब्राह्मणेषु न्यूनां वृत्तिं कुकर्म ॥ १६ ॥

[ सर्व० ] येषामपि शुभमिच्छसि ते कुशलिन इत्यर्थः ॥ ६ ॥ वृत्तिरस्मासु स्नेहः ॥ ८ ॥ येषां राष्ट्रे निवसति द्रोणपुत्रः तेभ्यः कुरुभ्यः स्पृहयन्ति कुरूनुपजीवन्ति ते कच्चिन्मानं सन्मानं लभन्ते इत्यर्थः ॥ ११–१२ ॥ महानस्यो महानसोपयुक्ताः परिचारिकाः । व्यलीकमप्रियं तद्रहिता अव्यलीकाः ॥ १४ ॥ वृत्तिं वर्तनम् । मामकान् दायान् महत्तान् ग्रामादीन् ॥ १५ ॥ हेतोर्न्यायस्य वर्त्मभूतो वर्त्मप्राप्तस्तेषु विप्रेषु ॥ १६ ॥

[ लक्षा० ] सुयोधनो यस्य मन्दो विधेय इत्यत्र 'विधेयो विनयग्राही वचनेस्थित आश्रवः' इत्यभिधानात् विधेयः यस्य कर्णस्य वचनेस्थितः आश्रवश्च तदुक्तपैशु-

---

६ ख. प्रीतास्मात्वाभिनन्दामिसूत । ज. सहात्मजैः । ७ ज. दर्शनं भार° । ९ ख. प्रातिपीयः । ११ अ. वदाता । ख. पृथिव्यां युवानः । १२ ख. एते आचार्यमुख्या भुवि विश्रुतास्ते । ख. न्यवसद् । १४ ज. वध्वश्च पुत्रा । १६ ज. °मपेक्षते । ख. कच्चिन्न हेतोरिवकर्मभूत उपेक्षते तेषु सन्न्यूनवृत्तिम ।

एतज्ज्योतिश्चोत्तमं जीवलोके
शुक्लं प्रजानां विहितं विधात्रा ।
ते चेल्लोभं न नियच्छन्ति मन्दाः
कृत्स्नो नाशो भविता कौरवाणाम् ॥ १७ ॥
कच्चिद्राजा धृतराष्ट्रः सपुत्रो
बुभूषते वृत्तिममात्यवर्गे ।
कच्चिन्न भेदेन जिजीविषन्ति
सुहृद्रूपा दुर्हृदश्चैकमत्यात् ॥ १८ ॥
कच्चिन्न पापं कथयन्ति तात
ते पाण्डवानां कुरवः सर्व एव ।
द्रोणः सपुत्रश्च कृपश्च वीरो
नास्मासु पापानि वदन्ति कच्चित् ॥ १९ ॥
कच्चिद्राज्ये धृतराष्ट्रं सपुत्रं समे-
त्याहुः कुरवः सर्व एव ।
कच्चिद्दृष्ट्वा दस्युसंघान्समेता-
न्स्मरन्ति पार्थस्य युधां प्रणेतुः ॥ २० ॥

मौर्वीभुजाग्रप्रहितान्स्म तात
दोधूयमानेन धनुर्धरेण ।
गाण्डीवनुन्नांस्तनयित्नुघोषा-
नजिह्मगान् कच्चिदनुस्मरन्ति ॥ २१ ॥
न चापश्यं कंचिदहं पृथिव्यां
योधं समं वाऽधिकमर्जुनेन ।
यस्यैकषष्टिर्निशितास्तीक्ष्णधाराः
सुवाससः संमतो हस्तवापः ॥ २२ ॥
गदापाणिर्भीमसेनस्तरस्वी
प्रवेपयञ्छत्रुसंघाननीके ।
नागः प्रभिन्न इव नड्वलेषु
चङ्क्रम्यते कच्चिदेनं स्मरन्ति ॥ २३ ॥
माद्रीपुत्रः सहदेवः कलिङ्गान्
समागतानजयद्दन्तकूरे ।
वामेनास्यन् दक्षिणेनैव यो वै
महाबलं कच्चिदेनं स्मरन्ति ॥ २४ ॥

---

न्यवचनश्रोतेत्यर्थः ॥ १३ ॥ महानस्यः महानसे विद्यमानाः ॥ १४ ॥

[ नील० ] एतद्ब्राह्मणानां वृत्तेः पालनं ज्योतिः परलोकप्रकाशकं जीवलोके इह शुक्लं यशस्करं दोषं लोभं ब्राह्मणवृत्त्युपघातेन न नियच्छन्ति ॥ १७ ॥ बुभूषते प्रापयितुमिच्छति भेदेन जिजीविषन्ति शत्रुभिर्भेदिताः सन्तस्तद्दत्तैर्धनैर्जीवितुमिच्छन्ति ॥ १८ ॥ पार्थस्य अर्जुनस्य कृत्यं स्मरन्ति युधां संग्रामाणां प्रणेतुर्निर्वाहकस्य आहुः राज्यं हीति शेषः । शमेति पाठे शम शाम्य शान्तिं गच्छेत्यर्थः ॥ २० ॥ मौर्व्याः भुजः कौटिल्यं तस्य अग्रमित्राग्रं शरसंधानदेशः ततः प्रहितान् प्रेषितान् ॥ २१ ॥ सुवाससः सुपुङ्खाः । हस्तवापो हस्तक्षेपः । वचनभेदेऽपि सामानाधिकरण्यात् शतं स्त्रियोऽस्य परिग्रह इतिवत् एकषष्टिर्बाणा अस्य एकेन यत्नेन प्रक्षेप्या इत्यर्थः ॥ २२ ॥ नड्वलेषु सतृणेषु स्थलेषु ॥ २३ ॥ दन्तकूरे कूरम् अन्नं दन्ताः क्रोधावेशात् कूरवच्चर्व्यन्तेऽस्मिन्निति दन्तकूरः संग्रामः तस्मिन् अस्यन् क्षिपन् ॥ २४ ॥

[ अर्जु० ] एतत् यथोक्तप्रकारं ज्योतिरिव ज्योतिः सात्त्विकत्वात् शुक्लं शुद्धम् । दम्भं वञ्चनम् ॥ १७ ॥ बुभूषते लिप्सते । वृत्तिं कृताकृतव्यापारम् । सुहृद्रूपा अनिच्छन्तः ॥ १८ ॥ नु प्रतर्के ॥ १९ ॥ युधां योधानाम् ॥ २० ॥

मौर्वीभुजाग्रप्रहितान् मौर्व्या भुजाग्रे प्रेरितान् ॥ २१ ॥ यस्येति काकाक्षिवदुभयसंबन्धि । यस्यार्जुनस्य सुवाससः सुपक्षाः । हस्तवापो मुष्टिः ॥ २२ ॥ नड्वलेषु मलबहुलस्थानेषु चङ्क्रम्यते एनं भीमं स्मरन्तीत्यन्वयः ॥ २३ ॥ दन्तकूरे कलिङ्गपुरे योऽर्जुनः ॥ २४ ॥

[ सर्व० ] शुक्लं विप्राणां शुक्लवर्णत्वात् ॥ १७ ॥ बुभूषते प्रापयितुमिच्छति ण्यर्थान्तर्भावात् । वृत्तिर्वर्तनम् । भेदेन शत्रुणा भेदितास्तद्दत्तधनेन ॥ १८ ॥ पार्थस्यार्जुनस्य तेन दस्यूनामुत्सादनात् ॥ २० ॥ धनुर्गुणेनेत्युपलक्षणे तृतीया ॥ २१ ॥ सुवाससः सुपक्षाः । यस्य हस्तवापो हस्तेनोप्यन्ते एकदा क्षिप्यन्ते इति । एकवचनादेककालत्वरूपैकत्वलाभः तेनैव तावन्तः शराः एको यस्य हस्तक्षेपः एकदैव विसर्गादित्यर्थः ॥ २२ ॥ नड्वलेषु नल्युक्तभूमिषु ॥ २३ ॥

[ लक्षा० ] एतज्ज्योतिरुत्तमं जीवलोक इत्यत्र एतत् यथायोग्यं सकलप्रजापालनम् ॥ १७ ॥ युधां प्रणेतुरित्यत्र युधां योधानां प्रणेतुः राज्ञः ॥ २० ॥ मौर्वी भुजाग्रे प्रहितामित्यत्र दोधूयमानेन धनुर्धरेण अर्जुनेन भुजाग्रे निहितामाकर्णान्तमाकृष्टामित्यर्थः ॥ २१ ॥ नतं दृष्ट्वेत्यत्र नतमवनतं प्रतीपं वैरिणं तमर्जुनं दृष्ट्वा पुरतो गत्वा युद्धरङ्गात् गृहं न जग्मुः कश्चित् रङ्ग एव मृता इति भावः । हस्तवापा-

---

१७ ख. ते चेद्दम्भं । १८ ख. दुर्हृदश्चाप्यमात्याः । २० छ. ज. कच्चिद्राज्यं । २१ ज. धनुर्गुणेन । २३ ख. प्रवेरयन् ।

पुरा जेतुं नकुलः प्रेषितोऽयं
शिबींस्त्रिगर्तान् सञ्जय पश्यतस्ते ।
दिशं प्रतीचीं वशमानयन्मे
माद्रीसुतं कच्चिदेनं स्मरन्ति ॥ २५ ॥
पराभवो द्वैतवने य आसी-
द्दुर्मन्त्रिते घोषयात्रागतानाम् ।
यत्र मन्दाञ्छत्रुवशं प्रयाता-
नमोचयद्भीमसेनो जयश्च ॥ २६ ॥

अहं पश्चादर्जुनमभ्यरक्षं
माद्रीपुत्रौ भीमसेनोऽभ्यरक्षत् ।
गाण्डीवधन्वा शत्रुसंघानुदस्य
स्वस्त्यागमत्कच्चिदेनं स्मरन्ति ॥ २७ ॥
न कर्मणा साधुनैकेन नूनं
सुखं शक्यं वै भवतीह सञ्जय ।
सर्वात्मना परिजेतुं वयं चे-
न्नशक्नुमो धृतराष्ट्रस्य पुत्रम् ॥ २८ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्रयोविंशोऽध्यायः ॥ २३ ॥

## चतुर्विंशोऽध्यायः २४

संजयेन कुरूणामनामयं ब्राह्मणवृत्तीनामलोपनं चोक्त्वा पुत्रमित्रादिभिः सह धृतराष्ट्रवचनश्रवणप्रार्थनम् ॥ १ ॥

**सञ्जय उवाच—**
यथाऽऽत्थ मे पाण्डव तत्तथैव
कुरून्कुरुश्रेष्ठ जनं च पृच्छसि ॥
अनामयास्तात मनस्विनस्ते
कुरुश्रेष्ठान्पृच्छसि पार्थ यॉंस्त्वम् ॥ १ ॥
सन्त्येव वृद्धाः साधवो धार्तराष्ट्रे
सन्त्येव पापाः पाण्डव तस्य विद्धि ॥

दद्यादरिपुभ्योऽपि हि धार्तराष्ट्रः
कुतो दायाँल्लोपयेद्ब्राह्मणानाम् ॥ २ ॥
यद्युष्माकं वर्तते सौनधर्म्य-
मद्रुग्धेषु द्रुग्धवत्तन्न साधु ॥
मित्रध्रुक् स्यात् धृतराष्ट्रः सपुत्रो
युष्मान्द्विषन्साधुवृत्तानसाधुः ॥ ३ ॥

---

इत्यत्र हस्त एव शत्रुदेहेषु बीजावापकर्ता येषां ते शराः हस्त-वापाः ॥२२॥ चङ्क्रम्यते अतिशयेन पादविक्षेपं करोति २३

[ नील० ] जयः अर्जुनः ॥ २६ ॥ अहम् अर्जुनस्य तदा पृष्ठरक्षकः प्रेरकोऽभवमित्यर्थः । भीमसेनश्च माद्री-सुतयोः पृष्ठरक्षकोऽभूत् । पञ्चभिरप्यस्माभिस्ते मोचिता इत्यर्थः ॥ २७ ॥ न कर्मणेति सर्वात्मना सर्वोपायैः दानभे-ददण्डैश्चेत् धृतराष्ट्रस्य पुत्रं जेतुं न शक्नुमस्तर्हि एकेन साधुना कर्मणा सामाख्येनोपायेन सुखं सुखेन जेतुं नैव शक्यं भवति साम्नाऽसाध्ये हि दानादयः प्रयुज्यन्ते तैरप्य-साध्यः कथं साममात्रेण साध्यः स्यात् । अतो दण्डैकसाध्यः स इति भावः । पाठान्तरे परिणेतुं स्वायत्तीकर्तुम् ॥ २८ ॥

इति श्रीनैल० उद्योग० भारतभा० त्रयोविंशोऽध्यायः ॥ २३ ॥

[ अर्जु० ] उदस्य उत्क्षिप्य ॥ २७ ॥ एकेन केवलेन साधुना कर्मणा इह लोके न कर्तुं शक्यं किमपीति शेषः । नूनं मन्ये । तत्र हेतुमाह—सर्वात्मना परिणेतुं शास्तुं तस्माद्दण्डसाध्या एव कुरवः ॥ २८ ॥

इति श्रीमन्म० मर्जुन० उद्योग० त्रयोविंशोऽध्यायः ॥ २३ ॥

[ सर्व० ] साधुना कर्मणा शोभनेनाचारेण एकेन के-वलेन नूनं शक्यं शक्यनीयं कार्यं न भवति न प्रभवति । यतः सर्वात्मना सर्वप्रकारेण परिणेतुमात्मभावं नेतुं न शक्नुमः ॥ २८ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां त्रयोविंशोऽध्यायः ॥ २३ ॥

[ लक्षा० ] न कर्मणा साधुनैकेनेत्यत्र वयं सर्वात्मना धृतराष्ट्रस्य पुत्रान् जेतुं न शक्नुमश्चेत् एकेन षट्सु नी-तिषु मुख्येन साधुना कर्मणा संधिकर्मणा कार्यमस्मत्कार्यं शक्यं न भवति नूनं निश्चयः ॥ २८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-लक्षालंकारे त्रयोविंशोऽध्यायः ॥ २३ ॥

[ नील० ] यदिति अद्रुग्धेषु अनपकृतेषु धार्तराष्ट्रेषु यत् युष्माकं द्रुग्धवत् अपकृतस्येव सौनः सूनावान् हिंस्रः तद्धर्मादनपेतं सौनधर्म्यं क्रौर्यं वर्तते तन्न साधु द्रुग्धैरपि भवद्भिस्तेषु प्रव्राजनकालेऽपि द्रोहो न कृत इदानीं तु सुतरां न कर्तव्य इत्याशयः । ते तु स्वकृतं भोक्ष्यन्त्येवे-त्याह—मित्रध्रुगिति ॥ ३ ॥

---

२७ ज. गाण्डीवभृच्छत्रु । २८ ज. नूनं कर्तुं । ज. परिणेतुं । इति त्रयो-विंशोऽध्यायः ॥२३॥

१ ख. यथार्हसि संजयतस्तथैव कुरूनगुरून् । २ ज. पाण्डवास्तस्य । ज. दद्यादरिभ्यो । ३ ख. युष्मासु यद्वर्तते ।

न चानुजानाति भृशं च तप्यते
शोचत्यन्तः स्थविरोऽजातशत्रो ॥
शृणोति हि ब्राह्मणानां समेत्य
मित्रद्रोहः पातकेभ्यो गरीयान् ॥ ४ ॥
स्मरन्ति तुभ्यं नरदेव संयुगे
युद्धे च जिष्णोश्च युधां प्रणेतुः ॥
समुत्क्रुष्टे दुन्दुभिशङ्खनादे
गदापाणिं भीमसेनं स्मरन्ति ॥ ५ ॥
माद्रीसुतौ चापि रणाजिमध्ये
सर्वा दिशः संपतन्तौ स्मरन्ति ॥
सेनां वर्षन्तौ शरवर्षैरजस्रं
महारथौ समरे दुष्प्रकम्प्यौ ॥ ६ ॥
नत्वेव मन्ये पुरुषस्य राज-
न्ननागतं ज्ञायते यद्भविष्यम् ॥
त्वं चेत्तथा सर्वधर्मोपपन्नः
प्राप्तः क्लेशं पाण्डव कृच्छ्ररूपम् ॥
त्वमेवैतत्कृच्छ्रगतश्च भूयः
समीकुर्याः प्रज्ञयाऽजातशत्रो ॥ ७ ॥
न कामार्थं संत्यजेयुर्हि धर्मं
पाण्डोः सुताः सर्व एवेन्द्रकल्पाः ॥
त्वमेवैतत्प्रज्ञयाऽजातशत्रो
समीकुर्या येन शर्माप्नुयुस्ते ॥ ८ ॥
धार्तराष्ट्राः पाण्डवाः सृञ्जयाश्च
ये चाप्यन्ये संनिविष्टा नरेन्द्राः ॥
यन्मां ब्रवीद्धृतराष्ट्रो निशाया-
मजातशत्रो वचनं पिता ते ॥ ९ ॥
सहामात्यः सहपुत्रश्च राजन्
समेत्य तां वाचमिमां निबोध ॥ १० ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

---

[ अर्जु० ] युष्मत्संबन्धितया धर्म्यं यथा भवति तथा यत्र वर्तते तत्र साधु ॥ ३ ॥

इति श्रीमन्महाभा० मर्जुनमि० मुद्योगपर्वणि चतुर्विंशोऽध्यायः ॥ २४ ॥

[ सर्व० ] युष्माकं युष्मासु धर्म्यं धर्मयुक्तं यथा स्यात् ॥ ३ ॥

[ लक्षा० ] यत्तद्युष्मासु वर्ततेऽसावधर्ममदुग्धेषु दुग्धवत्तत्र साध्वित्यत्र अदुग्धेषु दुग्धानि न भवन्तीत्यदुग्धानि भवद्वेषाख्यविषाणि तेषु दुग्धवत् दुग्धे यथा तथा बुद्धिं करोति तत्र साध्विति योजना ॥ २ ॥

[ नील० ] न चानुजानाति संधिं नानुमोदते तप्यते च पुत्रनाशभयात् गरीयानिति शृणोति चेति संबन्धः ॥ ४ ॥ कश्चिदस्मान् स्मरन्तीति पृष्टे तत्राह—स्मरन्तीति । तुभ्यं त्वाम् ॥ ५ ॥ रणो योधध्वनिस्तद्विशिष्टा या आजिः संग्रामस्तन्मध्ये । 'रक्षणत्राणे रणः क्वणे' इत्यमरः ॥ ६ ॥ अनागतम् अज्ञातम् अदृष्टमित्यर्थः ॥ ७ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे चतुर्विंशोऽध्यायः ॥ २४ ॥

[ सर्व० ] समीकुर्याः पुनःकलहरूपविषयस्य प्रशान्त्या ॥ ७ ॥ शं कल्याणमाप्नुवन्ति इत्यत्र तच्छब्दस्य विवरणमुत्तरार्धेन ॥ ८ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृत-
टीकायां चतुर्विंशोऽध्यायः ॥ २४ ॥

[ लक्षा० ] मित्रद्रोहं ब्राह्मणानां समेत्येत्यत्र ब्राह्मणानां संघशमेत्य पापकेभ्यः पापेभ्यः गरीयः श्रेष्ठं मित्रद्रोहं शृणोति इति संबन्धः ॥ ४ ॥ माद्रीसुतौ चापि रणाजिमध्य इत्यत्र शत्रूणां रणं प्रति यो रणः स रणाजिः । तस्य मध्ये ॥ ६ ॥ नन्वेवमन्ये पुरुषस्य राजन्नित्यत्र पुरुषस्य यज्ज्ञायते, यच्च भविष्यत् तत् स्वभावत एव जायते ननु इति योजनात्वमेव चैतत्सर्वमतश्च भूय इत्यत्र एतत्सर्वमतः अस्मात् भूयः उपरि भवच्च समीक्ष्य कुर्या इति संबन्धः ॥ ७ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-
लक्षालंकारे चतुर्विंशोऽध्यायः ॥ २४ ॥

---

५ ख. स्मरन्ति जिष्णोर्नर॰ । ख. युद्धं युद्धे चापि युधां । ६ ख. ज. रणाजिरेषु । ८ ज. शमा । ९ ज. समागताः पाण्ड॰ । इति चतुर्विंशोऽध्यायः ॥ २४ ॥

## पञ्चविंशोऽध्यायः २५

युधिष्ठिरानुमतेन संजयेन धृतराष्ट्रानुशिष्टस्य युद्धे बहुविधदोषतत्त्वाच्छमविधानपरस्य वाक्यस्याभिधानम् ॥ १ ॥

**युधिष्ठिर उवाच—**

समागताः पाण्डवाः सृञ्जयाश्च
जनार्दनो युयुधानो विराटः ॥
यत्ते वाक्यं धृतराष्ट्रानुशिष्टं
गावल्गणे ब्रूहि तत्सूतपुत्र ॥ १ ॥

**सञ्जय उवाच—**

अजातशत्रुं च वृकोदरं च
धनञ्जयं माद्रवतीसुतौ च ॥
आमन्त्रये वासुदेवं च शौरिं
युयुधानं चेकितानं विराटम् ॥ २ ॥
पञ्चालानामधिपं चैव वृद्धं
धृष्टद्युम्नं पार्षतं याज्ञसेनिम् ॥
सर्वे वाचं शृणुतेमां मदीयां
वक्ष्यामि यां भूतिमिच्छन् कुरूणाम् ॥ ३ ॥
शमं राजा धृतराष्ट्रोऽभिनन्द-
न्नयोजयत्त्वरमाणो रथं मे ॥
सभ्रातृपुत्रस्वजनस्य राज्ञ-
स्तद्रोचतां पाण्डवानां शमोऽस्तु ॥ ४ ॥
सर्वैर्धर्मैः समुपेतास्तु पार्थाः
संस्थानेन मार्दवेनार्जवेन ॥
जाताः कुले ह्यनृशंसा वदान्या
ह्रीनिषेवाः कर्मणां निश्चयज्ञाः ॥ ५ ॥
न युज्यते कर्म युष्मासु हीनं
सत्त्वं हि वस्तादृशं भीमसेनाः ॥
उद्भासते ह्यञ्जनबिन्दुवत्त-
च्छुभ्रे वस्त्रे यद्भवेत्किल्बिषं वः ॥ ६ ॥
सर्वक्षयो दृश्यते यत्र कृत्स्नः
पापोदयो निरयोऽभावसंस्थः ॥
कस्तत्र कुर्याज्जातु कर्म प्रजानन्
पराजयो यत्र समो जयश्च ॥ ७ ॥

[ नील० ] रथमयोजयत् इह आगन्तुं राज्ञो वचनं पाण्डवानां रोचतां ततश्च शमोऽस्तु ॥ ४ ॥ संस्थानेनाकारेण । मार्दवेन कृपया । आर्जवेन अकौटिल्येन । अनृशंसाः अनुग्राः । ह्रीनिषेवाः लज्जापरायणाः ॥ ५ ॥ हीनं हिंस्रं सत्त्वं बुद्धिसत्त्वं साधुत्वं वा भीमसेनाः भीषणसैन्याः ॥६॥ सर्वक्षयः अभावसंस्थः शून्ये एव परिसमाप्तः क्षयः तत्र तत् प्रथमार्थे त्रल् जयोऽपि बन्धुनाशात्पराजय एव ॥ ७ ॥

[ अर्जु० ] शमं शान्तिम् । समिति पाठे तुल्यविभागम् ॥ ४ ॥ कुले जाता अनृशंसा वदान्या ह्रीनिषेधाः कर्मणां निश्चयज्ञाः । न युज्यते कर्म युष्मासु हीनं सत्त्वं हि वस्तादृशं भीमसेनाः । एवं ·विशिष्टा यूयं एवंविशिष्टेषु युष्मासु हीनं ज्ञातिवधादिकं कर्म न युज्यते हि यस्मात् वो युष्माकं तादृशं सत्त्वं वने जयद्रथं त्यक्तवन्तो यूयमपराधिनम् । भो भीमसेना भीम एव सेनायां येषामस्माकं तु बहवः सेनापतयः सन्ति । अतो यदि धार्मिका यूयं ततो राज्यादिलोभं विहाय तिष्ठत । यदि वा न धार्मिकाः ततोऽपि राज्यं न प्राप्स्यथ । भीम एव यतो बलवान् युष्माकम् ।·वयं तु बहुबलवन्त इति । उद्भासेत् उत्कृष्टं भासेत् । अञ्जनबिन्दुवत् ॥ ५ ॥ तैः कौरवैः (?) निरयो निरयहेतुः । अभावसंस्थो विनाशकारी ॥ ७ ॥

[ सर्व० ] प्रस्थानेन प्रकृष्टेन स्थानेनाकारणेन । ह्रियं निषेवन्त इति ह्रीनिषेवाः । ह्रीनिषेधा इति पाठे ह्रिया निषेधो येषां, अकार्यादिति बोध्यम् ॥ ५ ॥ दानं दैन्यनिमित्तम् । भीमसेनाः भीषणसैन्याः ॥ ६ ॥ अभावो नाशः संस्थाऽन्तो यस्य सः पराजयात् जयेऽपि ज्ञातिक्षयेणोदर्कदोषात्साम्यम् ॥ ७ ॥

[ दुर्घ० ] संजयेन धृतराष्ट्रवचनात्संस्तूयन्ते पाण्डवाः । कुले जाता अनृशंसा वदान्या ह्रीनिषेवाः कर्मणां निश्चयज्ञाः । न युज्यते कर्म युष्मासु हीनं सत्वं हि वस्तादृशं भीमसेनाः । अत्र तात्पर्यार्थः । कुले जाता यूयमतः कुलकलहस्त्यज्यताम् । अनृशंसा अहिंसकाः कथं युद्धे भीष्मादीन्निहनिष्यथ । वदान्या यूयं दानशौण्डाः किमिति पृथिवीं दत्त्वा पुनर्याचध्वम् । ह्रीनिषेवा यूयं कथं ज्ञातिमुखं वीक्ष्य अस्त्रैः प्रहरिष्यथ । कर्मणां निश्चयज्ञा यूयं कथमल्पबलाः सन्तो बहुषु प्रहरिष्यथ । युष्मासु गर्हितं कर्म न युज्यते यतः सापराधं वने प्राप्तमपि जयद्रथं त्यक्तवन्तः । अथ कस्मादत आह । हि यस्मात् वो युष्माकं सत्वं तेजोवर्धनो गुणस्तादृशः येन हीनं कर्म न क्रियते । भो भीमसेनाः भीम एवैकः सेनायां येषां ते तथाऽस्माकं बहवः सेनाप्रणेतारः सन्तीति भावः । अतो यदि धार्मिका यूयं

४ ख. स मां राजा । ६ ज. युष्मासु दानं । ७ क. पापोदयो भावसंस्थः कुरूणाम् ।

ते वै धन्या यैः कृतं ज्ञातिकार्यं
ते वै पुत्राः सुहृदो बान्धवाश्च ॥
उपक्रुष्टं जीवितं संत्यजेयु-
र्यतः कुरूणां नियतो वै भवः स्यात् ॥ ८ ॥
ते चेत्कुरूननुशिष्याथ पार्था
निर्णीय सर्वान् द्विषतो निगृह्य ॥
समं वस्तज्जीवितं मृत्युना स्या-
द्यज्जीवध्वं ज्ञातिवधे न साधु ॥ ९ ॥
को ह्येव युष्मान् सह केशवेन
सचेकितानान्पार्षतबाहुगुप्तान् ॥
ससात्यकीन् विषहेत प्रजेतुं
लब्ध्वाऽपि देवान् सचिवान् सहेन्द्रान् ॥ १० ॥
को वा कुरून्द्रोणभीष्माभिगुप्ता-
नश्वत्थाम्ना शल्यकृपादिभिश्च ॥
रणे विजेतुं विषहेत राजन्
राधेयगुप्तान्सह भूमिपालैः ॥ ११ ॥
महद्बलं धार्तराष्ट्रस्य राज्ञः
को वै शक्तो हन्तुमक्षीयमाणः ॥
सोऽहं जये चैव पराजये च
निःश्रेयसं नाधिगच्छामि किंचित् ॥ १२ ॥
कथं हि नीचा इव दौष्कुलेया
निर्धर्मार्थं कर्म कुर्युश्च पार्थाः ॥
सोऽहं प्रसाद्य प्रणतो वासुदेवं
पञ्चालानामधिपं चैव वृद्धम् ॥ १३ ॥
कृताञ्जलिः शरणं वः प्रपद्ये
कथं स्वस्ति स्यात् कुरुसृञ्जयानाम् ॥
नह्येवमेवं वचनं वासुदेवो
धनञ्जयो वा जातु किंचिन्न कुर्यात् ॥ १४ ॥
प्राणान् दद्याद्याच्यमानः कुतोऽन्य-
देतद्विद्वन् साधनार्थं ब्रवीमि ॥
एतद्राज्ञो भीष्मपुरोगमस्य
मतं यद्वः शान्तिरिहोत्तमा स्यात् ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

---

तदा वने गत्वा राजर्षिमार्ग एवाऽनुष्ठीयताम् । अथ रजस्तमोमायावृताः तदा नगरं गत्वा राज्यसुखमनुभूयतामिति भावः ॥ ५ ॥

इति श्रीमहा० दुर्घटार्थप्रकाशिन्यामुद्योग० पञ्चविंशोऽध्यायः ॥ २५ ॥

[ लक्षा० ] सर्वक्षयो दृश्यत इत्यत्र यत्र यस्मिन्पापे सर्वक्षयो दृश्यते स कृत्स्नं पापोदयः कुरूणां भावसंस्थः । यत्र पराजयो जयश्च समः एकवारं पराजयः पश्चाज्जयश्च भवति तत्कर्म दुर्द्यूताख्यं कर्म कः कुर्यादिति संबन्धः ॥ ७ ॥

[ नील० ] ज्ञातीनां दुर्योधनादीनां कार्यं घोषयात्रायां गन्धर्वेभ्यो मोचनादिकम् । उपक्रुष्टं निन्दितम् ॥ ८ ॥ निर्णीय निश्चयं कृत्वा निगृह्य हत्वेत्यर्थः ॥ ९ ॥ ननु युद्धे जयपराजयावनित्यावित्याह—को हीति द्वाभ्याम् ॥ १० ॥ निःश्रेयसं निश्चयम् ॥ १२ ॥ निर्धर्मार्थं धर्मार्थयोर्विरुद्धं कर्म कथं कुर्युः । प्रणतः, अस्मीति शेषः ॥ १३ ॥ एवमेवं वचनमिति द्विरुक्त्या विकल्पवाक्यं न कुर्यात् ॥ १४ ॥ प्राणानिति । एतत् भवतां जयोऽपि पराजय एवेति दीनवचनम् , को वा कुरून् जयेतेति तीक्ष्णवचनं, कथं स्वस्ति स्यादित्युभयनाशवचनं च साधनार्थं संधिकार्यस्य सिद्ध्यर्थं ब्रवीमि न तु युष्मान् भीषयामीत्यर्थः ॥ १५ ॥

इति उद्योगप० नैलक० भारतभावदीपे पञ्चविंशोऽध्यायः ॥ २५ ॥

[ अर्जु० ] यैः कृतं ज्ञातिकार्यमुपक्रुष्टं निन्दितं जीवितं संत्यजेयुः ते धन्या इत्यन्वयः । भव उत्तरोत्तरसत्ता ॥ ८ ॥ ते पार्थाः स्थ भवथ सर्वान् द्विषतो निनीय निगृह्य स्थ इत्यनुवर्तनीयम् , तज्जीवितं वो युष्माकं मृत्युना समं स्यात् । तत्र हेतुः यज्जीवध्वं ज्ञातिवधे सति तन्न साधु । जये निःशेषज्ञातिवधेन पराजये स्ववधेन ॥ ९ ॥ नीता मिलिताः । इवशब्दो भिन्नक्रमः दौष्कुलेया इव । नीचा इत्यार्षः पाठः ॥ १३ ॥ प्राणान् याच्यमानान् आदौ प्रथमतः दद्यात् इति शेषः । कुतोऽन्यत् किमन्यत् दत्तमेवेत्यर्थः । ददावित्यसम्यक् । साधनार्थं प्रयोजनार्थम् । किं न शक्तः शिरश्चालने तेनाक्षेपो गम्यते ॥ १५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि पञ्चविंशोऽध्यायः ॥ २५ ॥

[ सर्व० ] उपक्रुष्टमाक्रोशितं निन्दितं ये जीवितं त्यजेयुस्ते धन्या इत्यन्वयः । ततो ज्ञातिकार्यकरणाद्भावः सत्ता ॥८॥ ते यूयं चेत् यदि कुरून् धार्तराष्ट्राननुशास्य दण्डेनाभिभूय स्थ भवथ जीविष्यथेति यावत् । तान्द्विषतो निनीय नितान्तं नीत्वा हत्वेति यावत् , तथा निगृह्य बद्ध्वा हत्वा ज्ञातिवधेन साधु सम्यक् जीवध्वं तन्मृत्युना समं वः स्यात् ॥९॥ जयेतेति निःश्रेयसं वधात् (?) ॥१२॥ नीचा नीचै-

---

८ ख. ज. ततः कुरूणां नियतो वधः स्यात् । ९ ख. तांश्चेत्कुरूननुशिष्याः स्थ पार्था निनाय । १० ज. विषहेतेह जेतुं । ज. सचिवानपीन्द्रः । १५ ख. ज. प्राणानादौ याच्य° । इति पञ्चविंशोऽध्यायः ॥ २५ ॥

## षड्विंशोऽध्यायः २६

युधिष्ठिरेण स्वपरयोः शुभाशुभाभिसंधिकथनपूर्वकं स्वस्याजय्यत्वमभिधाय इन्द्रप्रस्थे राज्यदाने शान्तिकथनम् ॥ १ ॥

युधिष्ठिर उवाच—
कां नु वाचं सञ्जय मे शृणोषि
युद्धैषिणीं येन युद्धाद्बिभेषि ॥
अयुद्धं वै तात युद्धाद्गरीयः
कस्तल्लब्ध्वा जातु युद्ध्येत सूत ॥ १ ॥
अकुर्वतश्चेत्पुरुषस्य सञ्जय
सिद्ध्येत्संकल्पो मनसा यं यमिच्छेत् ॥
न कर्म कुर्याद्विदितं ममैत-
दन्यत्र युद्धाद्बहु यल्लघीयः ॥ २ ॥
कुतो युद्धं जातु नरोऽवगच्छेत्
को दैवशप्तो हि वृणीत युद्धम् ॥
सुखैषिणः कर्म कुर्वन्ति पार्था
धर्मादहीनं यच्च लोकस्य पथ्यम् ॥ ३ ॥
धर्मोदयं सुखमाशंसमानाः
कृच्छ्रोपायं तत्त्वतः कर्म दुःखम् ॥
सुखं प्रेप्सुर्विजिघांसुश्च दुःखं
य इन्द्रियाणां प्रीतिरसानुगामी ॥ ४ ॥
कामाभिध्या स्वशरीरं दुनोति
यया प्रमुक्तो न करोति दुःखम् ॥
यथेध्यमानस्य समिद्धतेजसो
भूयो बलं वर्धते पावकस्य ॥ ५ ॥

रिता गताः ॥ १३ ॥ प्राणानादौ प्रथमतो याच्यमानोऽपि मद्वचनं न कुर्यादित्यन्वयः । विद्वन् हे युधिष्ठिर एतत्कथं स्वस्ति स्यादिति साधनार्थं कार्यस्य ब्रवीमि ॥१५॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृत-
टीकायां पञ्चविंशोऽध्यायः ॥ २५ ॥

[ लक्षा० ] न चेत्कुरूननुशिक्षामीत्यत्र न चेत् उक्तस्वभावो न चेत् निर्णीय कुरूणां मनोगतं निश्चित्य द्विषतः संधिकार्ये द्विषतः निगृह्य कुरूननुशिक्षामि सस्वभावमेवानुशिक्षामीति योजना ॥ ९ ॥ नह्येव मे वचनमित्यत्र न कुर्यान्नेति नसंबन्धः ॥ १४ ॥ साधनार्थं मयोच्यमानकार्यसाधनार्थम् ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-
लक्षालंकारे पञ्चविंशोऽध्यायः ॥ २५ ॥

[ नील० ] अकुर्वतश्चेत्संकल्पः सिद्ध्येत्तर्हि कर्म न कुर्यात् असिद्धावपि युद्धादन्यत्र अन्यत् अत्रापि प्रथमार्थे त्रल् लघीयोऽपि कर्म कुर्यान्न तु युद्धम् ॥ २ ॥ अहीनम् अनपगतम् ॥३॥ धर्मोदयं सुखं निदाघे गङ्गावगाहादिजं न त्वधर्मोदयं हिंसादिजं तत्त्वतो वस्तुतस्तु सर्वं कर्म दुःखमेव यतः कृच्छ्रोपायं क्लेशसाध्यम् । तर्हि कुतः कर्म कुर्वन्तीत्याशङ्क्याह—सुखमिति ॥ ४ ॥ कामाभिध्या विषयध्यानं ययेति सर्वात्मना विषयविस्मरणे महत्सुखमस्तीति भावः । भोगान्निष्कामता न संभवतीत्याह—यथेति ॥ ५ ॥

[ अर्जु० ] युद्धैषिणीं युद्धार्थिनीम् ॥ १ ॥ न कर्म कुर्यादिति कर्मणो विशेषणं बहु यल्लघीय इति यल्लघीयस्त्वमित्यर्थः । युद्धादन्यत्र युद्धेतरविषये ॥ २ ॥ दैवशप्तो दैवग्रस्तः । युद्धकर्तव्यतापक्षे धर्मादहीनं परलोकाविरुद्धं लोकस्य पथ्यमिहलोकाविरुद्धम् ॥ ३ ॥ कर्मोदयं कर्मणा उदयो यस्य कृच्छ्रोपायं दुःखसाधनं युद्धादि अतिकर्मकरणहेतुत्वात् अत एव दुःखम् । कर्मसाध्यसुखैषिणः प्रकारान्तरमाह सुखप्रेप्सुरिति ॥ ४ ॥ कामाभिध्या विषयचिन्तनम् ॥ ५ ॥

[ सर्व० ] युद्धादन्यत्र युद्धादन्यदपि प्रथमार्थे सप्तमी । बहु अत्यन्तं यद्युद्धादन्यदपि कर्म तदपि न कुर्यात् दैवसक्तो दैवेन विपरीतेन युद्धेआसञ्जितः कर्म शुद्धं तस्मात्कर्मण उदयो यस्य तत्कर्मोदयं तच्च सुखं कृच्छ्रोपायं दुःखसाध्योपायम् । तत्र हेतुः अतिकर्मणा अतिशयेन कर्मणा दुःखमापाततो दुःखकरणत्वात् ॥ ३ ॥ स्वीयं शीलमुक्त्वा धृतराष्ट्रस्यार्थान्तरन्यासमाह—सुखं प्रेप्सुरिति । प्रीतिः सुखं तद्वशानां तन्मात्रानुबोधानाम् ॥ ४ ॥ कामाभिध्या कामाभिध्यानेन अन्येभ्योऽपीति विचि आतोधातोरित्याकारलोपः । इन्द्रियाणां तज्जनकतया संबन्धित्वात् षष्ठी । यया कामाभिध्यया प्रयुक्तो युक्तः अनुकरोति अनु सततं करोति । कथं दुःखसन्तानं करोतीत्यत्र निदर्शनम्—यथेद्ध्यमानस्य बलं हि वर्धते अनुन्मूलनीयं भवति ॥ ५ ॥

[ लक्षा० ] कां नु वाचमित्यत्र, युद्धैषिणो मे कां नु वाचं शृणोषि युद्धं कार्यमिति वाग्मया नोक्तैवेति

३ ख. को वा युद्धं जातु नरः प्रशंसेत् को दैवसक्तो विवृणीत दुःखम् । ख. युद्धादहीनं । ४ ख. कर्म कुर्वन्ति दुःखम् । ज. ख. प्रीतिवशानु° । क. दुःखं कर्मारभेद्यच्च धर्मानपेतम् । ५ अस्य पूर्वार्धस्थाने क. क इन्द्रियाणां प्रीतिवशानुगानां कर्माभिज्ञः स्वशरीरं दुनोति । यया प्रयुक्तो न करोति दुःखं तृष्णां त्यजेत्सर्वधर्मादपेताम् । ज. प्रयुक्तोऽनु करोति । ख. प्रयुक्तः पुरुषः कर्म कुर्यात् ।

कामार्थलाभेन तथैव भूयो
न तुष्यते सर्पिषेवाग्निरिद्धः ॥
संपश्येमं भोगचयं महान्तं
सहास्माभिर्धृतराष्ट्रस्य राज्ञः ॥ ६ ॥
नाश्रेयानीश्वरो विग्रहाणां
नाश्रेयान्वै गीतशब्दं शृणोति ॥
नाश्रेयान्वै सेवते माल्यगन्धा-
न्न चाप्यश्रेयाननुलेपनानि ॥ ७ ॥

नाश्रेयान्वै प्रावारान् संविवस्ते
कथं त्वस्मान्संप्रणुदेत्कुरुभ्यः ॥
अत्रैव स्यादबुधस्यैव कामः
प्रायः शरीरे हृदयं दुनोति ॥ ८ ॥
स्वयं राजा विषमस्थः परेषु
सामर्थ्यमन्विच्छति तन्न साधु ॥
यथात्मनः पश्यति वृत्तमेवं
तथा परेषामपि सोऽभ्युपैतु ॥ ९ ॥

भावः ॥ १ ॥ अकुर्वतश्चेदित्यत्र, अन्यत्र युद्धादिति वक्ष्यमाणत्वात् अकुर्वतः युद्धमकुर्वतः । न कर्म कुर्यादित्यत्र, कर्म युद्धकर्म युद्धादन्यत्र युद्धं विना यल्लघीयः अल्पतरं लाभादिकं तदेव बहु इति योजना ॥ २ ॥ धर्मोदयं धर्मस्य उदयो यस्मात्तत्कर्म कृच्छ्रोदयं कृच्छ्रस्य युद्धादिसंकटस्य उदयो यस्मात्तत्कर्म परधनापहारादिकम् ॥ ४ ॥ क इन्द्रियाणामित्यत्र कर्माभिज्ञः कर्मकुशलः, प्रीतिवशानुगानामिन्द्रियाणामर्थे कः स्वशरीरं दुनोति ॥ ५ ॥

[ नील० ] उक्तमर्थं प्रकृते योजयति—संपश्येति । अस्माभिरित्यत्र धार्तराष्ट्रान् अन्तर्भाव्याह पञ्चाधिकेन पुत्रशतेन सह धृतराष्ट्रस्य भोगं महान्तं पश्य अथापि कृत्स्नं स्वस्यैव भवत्विति बुद्ध्याऽस्मान् राज्याद्दूरीकृतवान् ततो भोगात् तृप्तिं न लभत इति भावः ॥ ६ ॥ पितृव्यनिन्दादोषाद्भीतः पुनराह—नाश्रेयानिति । पुण्यवत्तरः स विग्रहाणामीश्वरो भवति परैः सह विरोधं कृत्वा स्वोत्कर्षं करोति अन्यस्तु तेनैव नश्यति अतः स पुण्यवत्तर एव अस्मद्दोषात्तु वयं वने दुःखमनुभवामो न तु परापराधेनेति भावः ॥ ७ ॥ प्रावारान् दिव्यवासांसि संविवस्ते परिधत्ते अन्यथा अश्रेयांश्चेद्राजा तर्हि अस्मान् कुरुभ्यः कथं संप्रणुदेत् दूरीकुर्यात् । शत्रूणां राज्याद्भ्रंशनं हि पुण्यवतामेव कर्म नाश्रेयसामिति भावः । अत्रेति । यद्यप्येवं तथाऽपि अन्तर्दाहकरोऽयं कामः अबुधस्य दुर्योधनादेरेव उचितो न बुधस्यास्मदादेरित्यर्थः । शरीरे शरीरमध्ये स्थितं हृदयं दुनोति खेदयति ॥ ८ ॥ अबुधत्वमेवाह—स्वयमिति । विषमस्थः संकटस्थः सन् परेषु कर्णादिषु । आत्मनो वृत्तम् अशक्तत्वं तथा परेषां कर्णादीनामपि स दुर्योधनोऽभ्युपैतु ॥ ९ ॥

[ अर्जु० ] सहास्माभिः संचितमिति शेषः ॥ ६ ॥ न चाश्रेयानिति । प्रावारान् शीतत्राणवस्त्राणि सन्निवस्ते आच्छादयति । प्रणुदेत् निःसारयेत् कुरुभ्यः कुरुभोगोचितविषयेभ्यः । अत्रैव भोगोपचये अवधुर्यो निन्द्यः । कामोऽभिलाषः हृदयमात्मानं दुनोति ॥ ८ ॥ विषमयोः रागद्वेषयोः तिष्ठतीति विषमस्थं, सामस्थ्यं समस्थस्वभावं समचित्तताम् । सामर्थ्यमित्यसम्यक् । एवं तथेति पुनरभिधानमात्मसमतादर्शनस्य भूयस्त्वं दर्शयति ॥ ९ ॥

[ सर्व० ] ततः किं नहि तदेव दुःखमित्यत आह—न तृप्यत इति । अतृप्तिरपर्याप्तबुद्धिः स्वार्थाव्यवहितभाविदुःखाव्यभिचारिणीत्याशयः । दृष्टान्ते प्रदर्श्य प्रकृते संयोजयति—संपश्येति । सहास्माभिः अस्मानपि संपश्य अस्मदपेक्षया भोगचयं महान्तं भोगेच्छोर्धृतराष्ट्रस्य पश्येत्यर्थः ॥ ६ ॥ एवं च भोगेन तृष्णावृद्धौ कथमतृप्तसाम्राज्यसुखस्य धृतराष्ट्रस्येदानीमस्मासूचितभागदानं संभवत्यतः शान्ययथमस्मासु तस्याभिधानमप्यसांप्रतमेवेति दर्शयति—नाश्रेयसामिति । अतिशयेन प्रशस्यः श्रेयान् नाश्रेयसामनश्रेयसां श्रेयसामिति यावत् । तादृशानां विग्रहाणां देहानां स्त्रीप्रेष्यादिसंबन्धिनां श्रेयानीश्वरो भवति नाश्रेयानिति पूर्वोत्तरपादयोरनुषक्तमेकमन्यत्स्पष्टम् ॥ ७ ॥ ततः कथं कुरुभ्यः स राजाऽर्थान् प्रणुदेन्निस्सारयेत् । अस्मद्राज्यं गृहीत्वा हि श्रेयानत्यन्तमसौ जातस्तत्रासौ जाततृष्णः कथमस्माकमस्मदीयं राज्यं हृत्वा अर्थांस्ततो बहिःकुर्यात् । न करोत्येवेत्यर्थः । धुर्योऽग्र्यः श्रेष्ठस्ततोऽवरोऽवधुर्यः न श्रेष्ठस्तस्मादत्रैव शरीरेऽस्मिन्नेव शरीरमद्दे यन्नोगाय भवति तत्रैव कामः प्रायः स्यात् । हृदयं तु मनः संदुनोति तस्य जन्मान्तरस्थायिनस्तापोपभोगयोग्यत्वात् ॥ ८ ॥ प्रकृते योजयति । स्वयं राजा विषमस्थः, अस्मत्तो भागग्रहणात् वैषम्यमवलम्ब्यावस्थितः परेष्वस्मासु अस्माकं सामस्थं समस्थतामन्विच्छति तन्न साधु न युक्तम्, स्वयमपि समस्थेनैव परं समस्थत्वकरणस्य युक्तत्वात् । अन्यथा त्वस्माकमपि विषमस्थत्वस्यैव युक्तत्वात् । तत्राह—यथात्मन इति । एवमीशं (?) तथाऽयमिति चाभ्युपैतु अनुजानातु ॥ ९ ॥

६ ख. कामार्थभावेन । म. । तृप्यते हविषै° । ख. संपश्य यद्भो° । ७ ख. नो श्रेयसामी° । ख. नो श्रेयसां । ख. नो श्रेयसः । ख. न चा श्रेयांस्यनु° ।

८ ख. नोऽश्रेयसःप्रावरानेषवस्ते कथं सोऽस्मान् । ख. अत्रैव चस्यादवधुर्य एव कामः । ९ ख. यथात्मनः । ख. म. समस्थं; ज. सामस्थ्य° । म. °ऽभ्युपैति ।

आसन्नमग्निं तु निदाघकाले
　　गम्भीरकक्षे गहने विसृज्य ॥
यथा विवृद्धं वायुवशेन शोचे-
　　त्क्षेमं मुमुक्षुः शिशिरव्यपाये ॥ १० ॥
आप्तैश्वर्यो धृतराष्ट्रोऽद्य राजा
　　लालप्यते सञ्जय कस्य हेतोः ॥
प्रगृह्य दुर्बुद्धिमनार्जवे रतं
　　पुत्रं मन्दं मूढममन्त्रिणं च ॥ ११ ॥
अनाप्तवच्चाप्ततमस्य वाचः
　　सुयोधनो विदुरस्यावमत्य ॥
सुतस्य राजा धृतराष्ट्रः प्रियैषी
　　संबुध्यमानो विशतेऽधर्ममेव ॥ १२ ॥

मेधाविनं ह्यर्थकामं कुरूणां
　　बहुश्रुतं वाग्मिनं शीलवन्तम् ॥
स तं राजा धृतराष्ट्रः कुरुभ्यो
　　न सस्मार विदुरं पुत्रकाम्यात् ॥ १३ ॥
मानघ्नस्यासौ मानकामस्य चेर्ष्योः
　　संरम्भिणश्चार्थधर्मातिगस्य ॥
दुर्भाषिणो मन्युवशानुगस्य
　　कामात्मनो दौर्हृदैर्भावितस्य ॥ १४ ॥
अनेयस्याश्रेयसो दीर्घमन्यो-
　　र्मित्रद्रुहः सञ्जय पापबुद्धेः ॥
सुतस्य राजा धृतराष्ट्रः प्रियैषी
　　प्रपश्यमानः प्राजहाद्धर्मकामौ ॥ १५ ॥

[लक्षा०] भूयो न तृप्यत इत्यत्र तृष्णेति योग्यपदानुवृत्तिः । संपश्येमं भोगमयं महान्तमित्यादेरयमर्थः, अस्माभिः सह धृतराष्ट्रस्य राज्ञः भोगमयं तस्य यादृशो भोगस्तादृग्भोगमिति यावत् । महान्तमिमं कृष्णं संपश्य सम्यक् पश्य ॥ ६ ॥ अश्रेयसां दरिद्राणां विग्रहाणां देहानामीईश्वरो न, कृष्णसेनास्थाः सर्वेऽपि सभाग्या इति भावः । अश्रेयसां दरिद्राणां गीतशब्दं न शृणोति । किंतु गन्धर्वाणां गीतशब्दं शृणोतीति भावः ॥ ७ ॥ अश्रेयसः दरिद्रस्य प्रावरान् प्रावरणानि न वस्ते । कथं न्वस्मानित्यत्र सोऽयं कृष्ण इति योग्यपदाध्याहारः । अत्रैव सर्वानवधूयेत्यत्र अत्र शरीरे कृष्णभक्तानां शरीरे यः कामः, काम्यत इति कामो भोगः सः सर्वान्कुरूनवधूय हृदयं दुनोति ॥ ८ ॥

[नील०] गम्भीरकक्षे बहुतृणे गहने वने क्षेमं शोचेत् मम सुखं नास्तीति शोकं कुर्यात् । मुमुक्षुः तस्माद्दाहादात्मानं मोचयितुमिच्छुः शिशिरव्यपाये वसन्ते तत्रापि निदाघकाले दाहकाले मध्याह्ने ॥१०॥ लालप्यते दीनवद्भाषते मन्दमभाग्यम् ॥ ११ ॥ विदुरस्य वाचोऽवमत्य सुतस्य प्रियैषी अधर्ममेव संविशते आश्रयते ॥१२॥ कुरुभ्यः कुरूणां हितार्थं न सस्मार नादृतवान् । पुत्रकाम्यात् पुत्रलोभात् ॥१३॥ असौ राजा सुतस्य प्रियैषी धर्मकामौ प्राजहात् त्यक्तवानिति द्वयोः संबन्धः । ईर्ष्योः परोत्कर्षासहिष्णोः संरम्भिणः क्रोधिनः मन्युवशानुगस्य दैन्यभाजां कर्णादीनामनुगस्य दौर्हृदैः पापैः भावितस्य पूजितस्य ॥ १४ ॥ अनेयस्य अशिक्षणीयस्य अश्रेयसः अभाग्यस्य प्रपश्यमानः पश्यन्नपि १५॥

[अर्जु०] गम्भीरवार्क्षे वार्क्षं वृक्षसमूहः गम्भीरकक्ष इति चिन्त्यः । गहने वने । विसृज्य अप्रतीकारमेव त्यक्त्वा क्षेमममग्निम् ॥ १० ॥ अनाप्तवत् अनाप्तस्येव । संबुध्यमानो जानन्नपि विशतेऽधर्मम् ॥ १२ ॥ मानघ्नस्य सतामिति शेषान्वयः । मानकामस्य आत्मनो मानेन कामो यस्य भावनस्य मनोरथप्रधानस्य अभावनस्येति पाठे नाशकस्य ॥ १४ ॥ अनेयस्यासंस्कार्यस्य ॥१५॥

[सर्व०] शोचेत्तद्वथलं दह्यते किं करोमीत्यनुशोचेत् । तेषां क्षेमं मुमुक्षुः दातुमिच्छुः । निदाघेऽपि कदाचिच्छिशिरे तत्प्रतीकारसंभवात् शिशिरव्यपाय इत्युक्तम् ॥ १० ॥ तथाऽस्मासु दुःखमासज्य सुखमाप्तैश्वर्यः किमर्थं लालप्यते भृशं प्रलपति आत्मदुःखोपशमायेत्यर्थः । मन्दमभाग्यम् ॥ ११ ॥ सुयोधनो राजा च वाचोऽवमन्य अधर्मे संविशते ॥ १२ ॥ मानं पूजां अन्येषां हन्तीति मानघ्नः । तस्य भावनस्य चिन्तयतः सर्वथा परद्रोहचिन्ताप्रधानस्येत्यर्थः ॥ १४ ॥ अश्रेयसः शुभरहितस्य ॥ १५ ॥

[लक्षा०] आसन्नमग्निमित्यत्र आसन्नं स्वसमीपस्थम् । कक्षौ तु तृणवीरुधावित्यमरः । गम्भीरकक्षे गम्भीरतृणे ॥ १० ॥ प्रगृह्य दुर्बुद्धिमित्यत्र यो दुर्योधनः आप्ततमस्य विदुरस्य वाचमवमत्य अनाप्तः सन् तिष्ठति तं दुर्बुद्धिं दुर्योधनं प्रगृह्य अधर्ममेव विशत इति योजना ॥ ११ ॥ कुरूणामवसृजमित्यत्र गुणाः कुरूणां देशादितियोग्यपदाध्याहारः ॥ १३ ॥ प्रदर्शमान इत्यत्र प्रदर्शमानः प्रपश्यमान इत्यर्थः ॥ १५ ॥

१० ख. गंभीरवार्क्ष्ये । ख. यथावृद्धं वायुवेगेन । १२ ख. ज. अनाप्तवदा-त्मवतश्च वाचं सु° । ज. °वमन्ये । १३ ज. सूतं राजा । ख. न सोऽस्मर-द्विदुरं पुत्रकामात् । १४ ख. सन्मानघ्नस्यात्मकामस्य चेर्ष्योः । ख. निष्ठुरिणो-मन्यु° । ख. दुर्हृदोऽभावनस्य; ज. दौहृदे भावनस्य । १५ ख. विदुरं भाषमाणं । ख° नृशंसः । ज. पापबुद्धिः ।

तदैव मे सञ्जय दीव्यतोऽभू-
न्मतिः कुरूणामागतः स्यादभावः ॥
काव्यां वाचं विदुरो भाषमाणो
न विन्दते धार्तराष्ट्रात्प्रशंसाम् ॥ १६ ॥
क्षत्तुर्यदा नान्ववर्तन्त बुद्धिं
कृच्छ्रं कुरून् सूत तदाऽभ्याजगाम ॥
यावत्प्रज्ञामन्ववर्तन्त तस्य
तावत्तेषां राष्ट्रवृद्धिर्बभूव ॥ १७ ॥
तदर्थलुब्धस्य निबोध मेऽद्य
ये मन्त्रिणो धृतराष्ट्रस्य सूत ॥
दुःशासनः शकुनिः सूतपुत्रो
गावल्गणे पश्य संमोहमस्य ॥ १८ ॥
सोऽहं न पश्यामि परीक्षमाणः
कथं स्वस्ति स्यात् कुरुसृञ्जयानाम् ॥
आत्तैश्वर्यो धृतराष्ट्रः परेभ्यः
प्रव्राजिते विदुरे दीर्घदृष्टौ ॥ १९ ॥
आशंसते वै धृतराष्ट्रः सपुत्रो
महाराज्यमसपत्नं पृथिव्याम् ॥
तस्मिन् शमः केवलं नोपलभ्यः
सर्वं स्वकं मद्गते मन्यतेऽर्थम् ॥ २० ॥
यत्तत्कर्णो मन्यते पारणीयं
युद्धे गृहीतायुधमर्जुनं वै ॥
आसंश्च युद्धानि पुरा महान्ति
कथं कर्णो नाभवद्द्वीप एषाम् ॥ २१ ॥
कर्णश्च जानाति सुयोधनश्च
द्रोणश्च जानाति पितामहश्च ॥
अन्ये च ये कुरवस्तत्र सन्ति
यथाऽर्जुनान्नास्त्यपरो धनुर्धरः ॥ २२ ॥
जानन्त्येतत्कुरवः सर्व एव
ये चाप्यन्ये भूमिपालाः समेताः ॥
दुर्योधने राज्यमिहाभवद्यथा
अरिन्दमे फाल्गुनेऽविद्यमाने ॥ २३ ॥
तेनानुबन्धं मन्यते धार्तराष्ट्रः
शक्यं हर्तुं पाण्डवानां ममत्वम् ॥
किरीटिना तालमात्रायुधेन
तद्वेदिना संयुगं तत्र गत्वा ॥ २४ ॥

[ नील० ] प्रशंसां विदुरेण सम्यगुक्तमिति स्तुतिं धार्तराष्ट्राद्विदुरो न लेभे ॥ १६ ॥ तस्मिन् लुब्धे शमः न उपलभ्यः यः मद्गते मम वनं प्रति गमने सति सर्वं स्वकमेवार्थं मन्यते इति योज्यम् ॥ २० ॥ पारणीयं जेतुं शक्यं युद्धानि गोग्रहादौ आसन् द्वीपो द्वीपवत् युद्धप्रवाहेण उह्यमानस्याश्रयः ॥२१॥ यथेति गन्धर्वेतो बन्धनप्राप्तिं सूचयति ॥ २२ ॥ जानन्तीति अविद्यमाने इतिच्छेदः ॥ २३ ॥ अनुबन्धं बध्नातीति बन्धो राज्यादिः तमनुसृत्य वर्तमानं पाण्डवानां ममत्वं धार्तराष्ट्रो हर्तुं शक्यं मन्यते । किं कृत्वा तेन किरीटिना सह तत्र राज्ये निमित्ते सति संयुगं संग्रामं गत्वा प्राप्य । तालो हस्तचतुष्टयम् । तद्वेदिना धनुर्विद्यावेदिना ॥ २४ ॥

[ अर्जु० ] अभूत् क्षमेति शेषः । नोचेत् क्षमा न स्यात् तदा कुरूणामभावो विनाश आगतः प्राप्तः स्यात् । काव्यां वर्णनीयाम् औशनसीमिति योगात् । न विन्दते न लभते ॥ १६ ॥ तदावज्ञाने कृच्छ्रमापत् ॥ १७ ॥ तस्मिन् राज्ये क्षेमः पालनं केवलैर्नोपलभ्यः केवलैः पाण्डवविरहितैः नोपलभ्यो न द्रष्टव्यः । स च दुर्बुद्धिरर्थं वज्ञान्तादौ बद्धं सन्तं संगतं स्थायिनं मन्यते न च पश्यति विपक्षाद्भयम् । संगतिमिति वा पाठः ॥ २० ॥ पारणीयं समर्थनीयम् । द्वीप आश्रयः श्रान्तानामिति यावत् ॥ २१ ॥ दुर्योधनस्यापराधेन चरन्तमर्जुनं जानातीत्यर्थः ॥ २३ ॥ तेनार्थबद्धमित्यादि । तेनार्जुनेन अर्थे पृथिव्यादिलक्षणे बद्धम् अर्थबद्धं । ममत्वं कृतममेतिधियं धार्तराष्ट्रः शक्यं हर्तुं मन्यत इत्यन्वयः । तालमात्रा युधेनेत्यादि तालो नववितस्तिपरिमितस्तेन मात्रा मानं यस्य आयुधस्य । तद्वेदिना आयुधज्ञेन ॥ २४ ॥

[ सर्व० ] अभूद्बुद्धिरिति शेषः । कीदृशी सेत्याह । नोचेन्न किं कुरूणामागतोऽभावो नाशः परिगत एवेत्यर्थः ॥ १६ ॥ तस्य विदुरस्य ॥ १७ ॥ तस्मिन् धृतराष्ट्रे केवले एकस्मिन्नेव हेतुभूते कुरूणां क्षेमो नोपलभ्यो न दृश्यते, यो धृतराष्ट्रो सङ्गतं मदीयमेव सर्वमर्थं स्वकं मन्यते ॥२०॥ यदपि कर्णोऽर्जुनं पारणीयं शक्यं मन्यते । अत्र हेतुः— आसंश्चेति ॥ २१ ॥ तेनार्जुनेन बद्धं दृढीकृतम् । पाण्डवानामर्थे परं समत्वं शक्यं हर्तुं मन्यते । तालो हस्तचतुष्टयम् । तद्वेदिना धनुर्विदा ॥ २४ ॥

[ लक्षा० ] अत्यासन्नं मद्गतं मन्यतेऽर्थमित्यत्र मद्गतं मत्तो गतम् ॥ २० ॥ यत्कर्णो मन्यत इत्यत्र युद्धे आयुधं

१६ ख. म.° भून्नोचेत्कु° । २० ज. क्षेमः के° । ख. म. केवले–लो । २३ ख. दुर्योधनं चापराधे चरन्तं । २४ ज. समत्वम् । छ. तत्र गत्याम् ।

गाण्डीवविस्फारितशब्दमाजा-
वश्रृण्वाना धार्तराष्ट्रा म्रियन्ते ॥
क्रुद्धं न चेदीक्षते भीमसेनं
सुयोधनो मन्यते सिद्धमर्थम् ॥ २५ ॥
इन्द्रोऽप्येतन्नोत्सहेत्तात हर्तु-
मैश्वर्यं नो जीवति भीमसेने ॥
धनंजये नकुले चैव सूत
तथा वीरे सहदेवेऽसहिष्णौ ॥ २६ ॥
स चेदेतां प्रतिपद्येत बुद्धिं
वृद्धो राजा सहपुत्रेण सूत ॥
एवं रणे पाण्डवकोपदग्धा
न नश्येयुः सञ्जय धार्तराष्ट्राः ॥ २७ ॥
जानासि त्वं क्लेशमस्मासु वृत्तं
त्वां पूजयन्सञ्जयाहं क्षमेयम् ॥
यच्चास्माकं कौरवैर्भूतपूर्वं
या नो वृत्तिर्धार्तराष्ट्रे तदाऽऽसीत् ॥ २८ ॥
अद्यापि तत्तत्र तथैव वर्ततां
शान्तिं गमिष्यामि यथा त्वमात्थ ॥
इन्द्रप्रस्थे भवतु ममैव राज्यं
सुयोधनो यच्छतु भारताग्र्यः ॥ २९ ॥

इति श्रीमहाभारते उद्योगपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

## सप्तविंशोऽध्यायः २७

कुरुभिर्गांगादाने युद्धे तान् गुर्वादींश्च हत्वा राज्यमीप्सति अधर्म एष इति संजयेन युधिष्ठिरगर्हणम् ॥ १ ॥

सञ्जय उवाच—
धर्मनित्या पाण्डव ते विचेष्टा
लोके श्रुता दृश्यते चापि पार्थ ॥
महाश्रावं जीवितं चाप्यनित्यं
संपश्य त्वं पाण्डव मा व्यनीनशः ॥ १ ॥

---

गृहीत्वा अर्जुनेन (श?अपा)रणीयमात्मानं मन्यते इति योजना ॥२१॥ ततोऽर्थबन्धमित्यत्र अर्थं बध्नातीत्यर्थबन्धं राज्यं ततः अर्जुनात् मम हर्तुं शक्यत इति मन्यते ॥२४॥

इति श्रीभारते उद्योगपर्वणि वादिराजतीर्थकृत-लक्षालंकारे षड्विंशोऽध्यायः ॥ २६ ॥

[ नील० ] म्रियन्ते जीवन्ति ॥ २५ ॥ एतां बुद्धिं राज्यस्य अप्रदाने नाशोऽस्तीत्येवंरूपाम् ॥ २७ ॥ भूतपूर्वं भीमबन्धनजतुगृहदाहादि ॥ २८ ॥ इन्द्रप्रस्थे इत्युपराज्यं मम भवतु भारताग्र्य इति हस्तिनापुरं सुयोधनस्य भवत्विति सूचितम् ॥ २९ ॥

इति उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षड्विंशोऽध्यायः ॥ २६ ॥

[ अर्जु० ] म्रियन्ते जीवन्ति । भीमसेनं न चेद्यदि । मन्यते सिद्धिं स्वस्येति शेषः । सुयोधनः सुखयोध्य एवायं बुद्धिहीनत्वादित्यन्वयः ॥ २५ ॥ न नश्येयुरिति नकारो वितर्के नश्येयुरित्यर्थः ॥ २७ ॥ यत् वसु कौरवैः कर्तृभूतैः भूतपूवमतीतं गृहीतमिति यावत् । या वृत्तिर्ग्रामादिरूपा ॥ २८ ॥ तथैव तत्संबन्धितया ॥ २९ ॥

इति श्रीमन्महाभार० मर्जुनमि० मुद्योगपर्वणि षड्विंशोऽध्यायः ॥ २६ ॥

[ सर्व० ] धनञ्जये भीमादौ जीवतीत्यनुषङ्गः ॥२६॥ स चेदेतामिति । एतां बुद्धिं प्राक् त्वयोक्तामुपशमार्थाम् ॥ २७ ॥ त्वां पूजयन्ह्येतद्वचनं मिथ्यारूपं क्षमेयं न किंचित्तत्राप्रियं वदामि । यत्त्वस्माकं कौरवैर्भूतपूर्वं, भूरत्र प्राप्तौ । तदाऽस्मद्वनगमनसमये या वृत्तिर्जीवनं नो धृतराष्ट्रे आसीत् ॥ २९ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्व० टीकायां षड्विंशोऽध्यायः ॥ २६ ॥

[ नील० ] महान् श्रावः श्रवणं यस्य महाकीर्तिरित्यर्थः । पाठान्तरे तु महान् स्रावो गतिर्यस्य अतिचञ्चलमित्यर्थः मा व्यनीनशः क्रोधेन धार्तराष्ट्रान् मा नाशय ॥ १ ॥

[ अर्जु० ] विचेष्टा विविधा चेष्टा महास्रावं स्रावो मूत्रपुरीषादिनिःस्यन्दः, प्राणनिर्गमद्वाराणि वा । अनित्यं मा व्यनीनशः मा विनाशय ॥ १ ॥

[ सर्व० ] महास्रावं महाप्रयाणं अपुनरावृत्ति । स्रुधातुर्गत्यर्थः । मा व्यनीनशः अधर्मसंबन्धात् ॥ १ ॥

[ लक्षा० ] महास्रावं जीवितमित्यत्र महान् स्रावः नवद्वारेषु स्रवणं यस्य तत्तथोक्तं, मा विनङ्क्षीः अन्तर्णीतो णिच् मा विनाशयेत्यर्थः ॥ १ ॥

---

२५ ख. क्रुद्धस्य चेद्भीमसेनस्य वेगात् । ख. म. सिद्धमेतत् । २८ ख. तंपूजयन् संजयाहं क्षमेय । २९ ख. तथैव राज्यं । इति षड्विंशोऽध्यायः ॥२६॥

१ ज. पाण्डवास्ते विशिष्टा । ख. म. धर्मारमता पाण्डव ते विशिष्टा । ख. म. स्रावं ।

न चेद्भागं कुरवोऽन्यत्र युद्धा-
त्प्रयच्छेरंस्तुभ्यमजातशत्रो ॥
भैक्षचर्यामन्धकवृष्णिराज्ये
श्रेयो मन्ये न तु युद्धेन राज्यम् ॥ २ ॥
अल्पकालं जीवितं यन्मनुष्ये
महास्रावं नित्यदुःखं चलं च ॥
भूयश्च तद्वयसो नानुरूपं
तस्मात्पापं पाण्डव मा कृथास्त्वम् ॥ ३ ॥
कामा मनुष्यं प्रसजन्त एते
धर्मस्य ये विघ्नमूलं नरेन्द्र ॥
पूर्वं नरस्तान्मतिमान्प्रणिघ्नन्
लोके प्रशंसां लभतेऽनवद्याम् ॥ ४ ॥
निबन्धनी ह्यर्थतृष्णेह पार्थ
तामिच्छतां बाध्यते धर्म एव ॥
धर्मं तु यः प्रवृणीते स बुद्धः
कामे गृध्नो हीयतेऽर्थानुरोधात् ॥ ५ ॥
धर्मं कृत्वा कर्मणां तात मुख्यं
महाप्रतापः सवितेव भाति ॥
हीनो हि धर्मेण महीमपीमां
लब्ध्वा नरः सीदति पापबुद्धिः ॥ ६ ॥
वेदोऽधीतश्चरितं ब्रह्मचर्यं
यज्ञैरिष्टं ब्राह्मणेभ्यश्च दत्तम् ॥
परं स्थानं मन्यमानेन भूय
आत्मा दत्तो वर्षपूगं सुखेभ्यः ॥ ७ ॥
सुखप्रिये सेवमानोऽतिवेलं
योगाभ्यासे यो न करोति कर्म ॥
वित्तक्षये हीनसुखोऽतिवेलं
दुःखं शेते कामवेगप्रणुन्नः ॥ ८ ॥
एवं पुनर्ब्रह्मचर्याप्रसक्तो
हित्वा धर्मं यः प्रकरोत्यधर्मम् ॥
अश्रद्दधत्परलोकाय मूढो
हित्वा देहं तप्यते प्रेत्य मन्दः ॥ ९ ॥
न कर्मणां विप्रणाशोऽस्त्यमुत्र
पुण्यानां वाऽप्यथवा पापकानाम् ॥
पूर्वं कर्तुर्गच्छति पुण्यपापं
पश्चात्त्वेनमनुयात्येव कर्ता ॥ १० ॥

---

[ नील० ] प्रसजन्ते स्पृशन्ति ॥ ४ ॥ गृध्नः स्पृहावान् ॥ ५ ॥ कर्मणाम् अर्थकामाद्यर्थानां मध्ये ॥६॥ परं स्थानं परलोकं मन्यमानेन मानयता वर्षपूगं वर्षगणं तत्रत्यसुखेभ्यस्तदर्थं त्वया आत्माऽपि दत्तः ॥७॥ सुखप्रिये भोगान् पुत्रादींश्च सेवमानः योगाभ्यासे चित्तवृत्तिनिरोधमभ्यसितुं कर्म आसनप्राणायामादिकं न करोति ॥ ८ ॥ ब्रह्मचर्येति ब्रह्मणि चर्या आत्मानुसंधानं तत्र अप्रसक्तः प्रकर्षेण अनासक्तः योगाद्व्यावृत्तः धर्मं च यज्ञादिरूपं हित्वा यः अधर्ममेव प्रकरोति संचिनोति ॥ ९ ॥ ननु "धर्मेण पापमपनुदति" इति श्रुतेः कालान्तरे अधर्मस्य नाशार्थं धर्ममप्यनुष्ठास्यामः किं मुक्त्येत्याशङ्क्याह—न कर्मणामिति । कृतं कर्म भोगं विना आत्मज्ञानं विना वा न नश्यतीत्यर्थः । 'नाभुक्तं क्षीयते कर्म । 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' इत्यादिवाक्येभ्यः । उदाहृतश्रुतिस्तु प्रायश्चित्तादिना पापनाशो भवति सोऽपि अत्रैव व्यवहार्यत्वमापादयति न तु परलोकेऽपि पापास्पर्शाय प्रभवतीत्येवंपरा ॥ १० ॥

[ अर्जु० ] वयसो मध्यमवयसः ॥३॥ [ प्रसारी प्रसारयः ] प्रणिघ्नन् तद्दोषभावनया ॥ ४ ॥ इच्छतामनुरुन्धताम् । धर्मं तु यः प्रवृणीते स बुद्धः पण्डितः । कामे गृध्नो गृद्धो विषयाभिलाषी ॥ ५ ॥ सुखं फलवत्त्वात् महाप्रतापः परिभवहेतुत्वात् ॥ ६ ॥ परं स्थानं परलोकम् । भूयः पुनर्जन्मान्तरेऽपि । वर्षपूगमनन्तं कालं सुखं अनुकूलवेदनीयम् ॥ ७ ॥ श्रियं धनादि, योगश्चित्तवृत्तिनिरोधः तस्याभ्यासे विषयभूते । यमनियमादि कर्म यो न करोति ॥ ८ ॥ अश्रद्दधत् परलोको नास्तीति धीरश्रद्धा वेदद्वेषो वा, उपेक्षा वा ॥ ९ ॥ पूर्वं करणकाले कर्तुरिति कर्मणि षष्ठी । गच्छति परवशं भवति कर्तुरिच्छया पुण्यपापयोर्निर्वृत्तिः । पश्चात् फलकाले अनुयाति परवशो भवति ॥ १० ॥

[ सर्व० ] वयसो नानुरूपं तव परिणतवयस्कत्वात् ॥३॥ अनिच्छता दोषभावनया (?)। स बुद्धः विद्वान् ॥५॥ कर्मणां मध्ये मुख्यं प्रधानं धर्मं धर्महेतुकर्म ॥ ६ ॥ परं स्थानं परलोकं मन्यमानेन जानता तत्रत्यसुखेभ्य आत्मा दत्तस्त्वयेति शेषः ॥ ७ ॥ योगाभ्यासे तन्निमित्तम् ॥८॥ यः करोति धर्मं निवर्तकम् (?) ॥ ९ ॥ कर्तुः

---

२ छ. भैक्ष्य°; ज. तद्भैक्ष° । ३ ज. अल्पं कालं । ख. त्वद्वयसो नानुरूपं कामं तस्मात्पांडव मा प्रमार्षीः । ४ ख प्राज्ञोनर° । छ. धृतिमान्विनिघ्नन्; ज. प्रतिघ्नन् । ख. न वाच्यम् । ५ ख. तामेषतो । म. तामिच्छन्धर्ममर्थं प्रजह्यात् ख. हीयते चानुकालम्; म. . हीयते चार्थधर्मे । ६ ख. हीनेन धर्मस्य । ९ छ. ज °ह्यर्थचर्या° । ख. हित्वासंघातंसीदते । १० ख. पश्चात्त्वेतदनु°।

न्यायोपेतं ब्राह्मणेभ्योऽथ दत्तं
श्रद्धापूतं गन्धरसोपपन्नम् ॥
अन्वाहार्येषूत्तमदक्षिणेषु
तथारूपं कर्म विख्यायते ते ॥ ११ ॥
इह क्षेत्रे क्रियते पार्थ कार्यं
न वै किंचित् क्रियते प्रेत्य कार्यम् ॥
कृतं त्वया पारलौक्यं च कर्म
पुण्यं महत्सद्भिरनुप्रशस्तम् ॥ १२ ॥
जहाति मृत्युं च जरां भयं च
न क्षुत्पिपासे मनसोऽप्रियाणि ॥
न कर्तव्यं विद्यते तत्र किंचि-
दन्यत्र वै चेन्द्रियप्रीणनाद्धि ॥ १३ ॥
एवंरूपं कर्मफलं नरेन्द्र
माऽत्रावहं हृदयस्य प्रियेण ॥
स क्रोधजं पाण्डव हर्षजं च
लोकावुभौ मा प्रहासीश्चिराय ॥ १४ ॥
अन्तं गत्वा कर्मणां मा प्रजह्याः
सत्यं दमं चार्जवमानृशंस्यम् ॥
अश्वमेधं राजसूयं तथेज्याः
पापस्यान्तं कर्मणो मा पुनर्गाः ॥ १५ ॥
तच्चेदेवं द्वेषरूपेण पार्थाः
करिष्यध्वं कर्म पापं चिराय ॥
निवसध्वं वर्षपूगान्वनेषु
दुःखं वासं पाण्डवा धर्म एव ॥ १६ ॥

पूर्वमग्रे पुण्यपापं कर्म गच्छति कर्ता पश्चादनुयाति । एतत् एतादृशं कर्म । तेन कर्तारं पुरतः पश्चाच्च वेष्टयित्वा यातीत्युक्तं भवति ॥ १० ॥

[ नील० ] अन्वाहार्येष्वित्यनेन श्रौतमिष्ट्यादिकं लक्ष्यते तत्र हि अन्वाहार्यो दक्षिणात्वेन दीयते ॥ ११ ॥ कार्यं धर्मः प्रेत्य मृत्वा ॥ १२ ॥ परलोके कर्म नास्तीत्याह— जहातीति ॥ १३ ॥ एवंरूपमिति हृदयस्य प्रियेण कामेन ईदृशं क्षयिष्णु इन्द्रियप्रीतिमात्रहेतु कर्मफलं तत् अत्र अस्मिन् लोके माऽवहं नैव वहेयम् । अत्र कर्म कुर्वन् कामवशादमुत्र फलं न प्रार्थयेतेत्यर्थः । ततश्च को लाभ इत्यत आह—स इति । सः त्वम् एवं निष्कामकर्मकृत् क्रोधजं लोकं नरकं हर्षजं स्वर्गं चेत्युभौ लोकौ चिराय अपुनरावृत्तये मा प्रहासीः मा गच्छ । ओहाङ् गताविस्यस्य रूपं तङभाव आर्षः । कर्मजं फलं त्यक्त्वा परेण वैराग्येण संपन्नो मोक्षार्थं योगाभ्यासमेव कुरुष्व किं राज्येन बन्धुनाशलभ्येनेत्यर्थः ॥ १४ ॥ एवं ज्ञानेन कर्मणाम् अन्तं नाशं गत्वा प्राप्य ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुतेऽर्जुनेति भगवद्वचनात्, बुद्धतत्त्वोऽपि कृतकृत्योऽपि सत्यादिकं मा त्यज अश्वमेधादीनि कर्माण्यपि लोकसंग्रहार्थं कुरु परंतु पापस्य कर्मणोऽन्तं समीपं पुनर्मा गाः । ज्ञानोत्तरकालं कृतमपि कर्म न ज्ञानिनं स्पृशतीति भावः । " तद्यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापकं कर्म न श्लिष्यते " इति श्रुतेः ॥ १५ ॥ तच्चेदिति भो पार्थाः भो पाण्डवाः तत्पापं कर्म गोत्रवधरूपं द्वेषरूपेण चिराय प्रागेव चेत्करिष्यध्वं तर्हि यद्वने वर्षपूगान् दुःखं वासं निवसध्वं तद्धर्म एवेति यत्तत्पदाध्याहारेण योज्यम् । राज्यार्थं सर्वलोकनाशमिच्छतां भवतां दुर्योधनेन यो वनवासः कारितः स धर्म एवेत्यर्थः ॥१६॥

[ अर्जु० ] अन्वाहार्येषु मासिकादिश्राद्धेषु तथारूपं तथाद्युपेतम् (?) ॥ ११ ॥ इह क्षेत्रे भारतभूमौ कार्यं कर्म ॥ १२ ॥ जहाति मृत्युमित्यत्र सर्वत्र नञ् योजनीयः ॥ १३ ॥ एवंरूपं पूर्वग्रन्थव्याख्यातम् । मात्रावता मानवता क्षयिणा, हृदयस्य प्रियेण विषयेण स त्वं क्रोधजहर्षजौ लोकौ(?) नभः स्वर्गं मा प्रहासीः ॥ १४ ॥ अन्तं विनाशहेतुं, कर्मणां पापकर्मणाम्, अन्तः क इत्याह या प्रशंसा । कारणं किं सत्यमित्यादि । मा पुनर्गाः पुनःशब्दात् यस्यान्तं गतवानसि तत् पापं कर्म मा गाः ॥ १५ ॥ तच्च पापकं कर्म । देशरूपेण देशस्थित्या । निवसध्वं वनवासं करिष्यध्वं न पापं कर्म इत्यन्वयः । तत्रार्थान्तरमाह—दुःखं वासमिति ॥ १६ ॥

[ सर्व० ] अन्वाहार्यं मासिकश्राद्धम्, तथारूपं परमपुरुषार्थसाधनत्वात् ॥ ११ ॥ इह क्षेत्रे कर्मभूमौ । फलहेतुत्वात् क्षेत्रत्वम् ॥ १२ ॥ जहाति मृत्युमनित्यताम् । इन्द्रियप्रीणनात् सुखभोगात् ॥ १३ ॥ एवंरूपं तथा युक्तरूपं कर्मणो धर्मस्य फलं स्वर्गः । स त्वं क्रोधजाल्लोभजाच्च—तृतीयार्थे व्यत्ययात् क्रोधजेनेति लभ्यते—मा नभः स्वर्गं प्रहासीः । लोभजक्रोधजे कर्मविशेषणे । मात्रावता मात्रा इन्द्रियाणि तद्वता अतः कालतोऽवच्छिन्नेनाल्पकालभोज्येनेत्यर्थः । हृदयस्य मनस आपाततः प्रियेण ॥ १४ ॥ कर्मणः सत्कर्मणोऽन्तं समीपं गत्वा तया या प्रशंसा की-

१२ ख. °णेभ्यो दयन्तं । १२ ज. विद्यते पार्थ । १३ ख. च नरो; म. न जरा । म. प्रीणनार्थम् । १४ ख. मात्रावतो; ज. वता; म. वर्ता । ज. स क्रोध-जाल्लोभजात्कर्मणो वा । ख. हर्षजंवाकोर्म नभो । १५ छ. ख. ज. कर्मणो या प्रशंसा । म. सत्यं दमश्चा° । म. देथज्ञा । छ. ज. अश्वमेधो राजसूयरत. ।

अप्रव्रज्येमास्म हित्वा पुरस्ता-
दात्माधीनं यद्बलं ह्येतदासीत् ।
नित्यं च वश्याः सचिवास्तवेमे
जनार्दनो युयुधानश्च वीरः ॥ १७ ॥
मत्स्यो राजा रुक्मरथः सपुत्रः
प्रहारिभिः सह पुत्रैर्विराटः ।
राजानश्च ये विजिताः पुरस्ता-
त्त्वामेव ते संश्रयेयुः समस्ताः ॥ १८ ॥
महासहायः प्रतपन् बलस्थः
पुरस्कृतो वासुदेवार्जुनाभ्याम् ।
वरान् हनिष्यन् द्विषतो रङ्गमध्ये
व्यनेष्यथा धार्तराष्ट्रस्य दर्पम् ॥ १९ ॥
बलं कस्माद्वर्धयित्वा परस्य
निजान्कस्मात्कर्शयित्वा सहायान् ।
निरुष्य कस्माद्वर्षपूगान्वनेषु
युयुत्ससे पाण्डव हीनकालम् ॥ २० ॥
अप्राज्ञो वा पाण्डव युध्यमानो-
ऽधर्मज्ञो वा भूतिमथोऽभ्युपैति ।
प्रज्ञावान् वा बुध्यमानोऽपि धर्मं
संरम्भाद्वा सोऽपि भूतेरपैति ॥ २१ ॥
नाधर्मे ते धीयते पार्थ बुद्धि-
र्न संरम्भात् कर्म चकर्थ पापम् ।
आत्थ किं तत्कारणं यस्य हेतोः
प्रज्ञाविरुद्धं कर्म चिकीर्षसीदम् ॥ २२ ॥
अव्याधिजं कटुकं शीर्षरोगि
यशोमुषं पापफलोदयं वा ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ २३ ॥
पापानुबन्धं को नु तं कामयेत
क्षमैव ते ज्यायसी नोत भोगाः ।
यत्र भीष्मः शान्तनवो हतः स्या-
द्यत्र द्रोणः सहपुत्रो हतः स्यात् ॥ २४ ॥

---

र्तिस्ताम् अर्थाद्यात्वेत्यर्थः । एवं यत्सत्यं तपो दम इत्यादौ तद्गत्वा पूर्ववदनुषङ्गः । एवं गत्वा मा पुनः कर्मणः पापस्यान्तं समीपं गाः । पुनरिति गतिक्रियाभ्यावृत्तिमात्रेण ॥ १५ ॥ तच्चेदेवं पूर्वं पूर्वमेव क्षयेण ज्ञातीनां पापं करिष्यध्वं कृतवन्तो यूयं तद्देशरूपेण देशानुरूपेण तदा भवतां स्वदेशस्थितत्वेन बलत्वमप्यासीदित्याशयः । तदा वनेषु दुःखं वासं नावसध्वं न भवतां वने वासोऽभविष्यत् । एवं तु क्रियमाणे पाण्डवानामधर्मो भवतीत्येतावताऽलं भवतेत्याशयः ॥ १६ ॥

[ नील० ] ननु तदानीं सहायाभावादस्माभिर्वनवासोऽङ्गीकृतो न दुर्योधनाज्ञयेत्याशङ्क्याह—अप्रव्रज्येति । इमा इमानि राज्यादीनि । सुपां सुलुगिति सुपो डादेशः । पुरस्तात् प्रव्रजनकाले एव हित्वा धाव्नो रूपं, बलेन धृत्वा अप्रव्रज्य वने प्रव्रजनमकृत्वैव आस्म भवेम वयम् । पाण्डवान् आत्मन्यन्तर्भाव्य उत्तमपुरुषप्रयोगः । यत् यतः पुरस्तादपि एतद्बलं आत्माधीनमेवासीत् ॥ १७ ॥ हीनकालं गते काले इत्यर्थः ॥ २० ॥ एवं पूर्वं युद्धमकुर्वता इदानीमपि तन्न कर्तव्यमित्युक्तम् । अथ सर्वथाऽपि युद्धं न कर्तव्यं जयपराजययोरव्यवस्थितत्वादित्याह—अप्राज्ञ इति । मूढोऽधर्मज्ञो वा युध्यन् ऐश्वर्यं लभते प्राज्ञो धर्मज्ञः अयुध्यन् दैवात् ऐश्वर्यात् भ्रश्यतीत्यर्थः ॥ २१ ॥ ग्रन्थतात्पर्यमाह—नेति । संरम्भात् कोपात् पूर्वमपि पापभयादेव त्वया न कृतं तर्हि इदानीं प्रज्ञाविरुद्धं तत्किमर्थं चिकीर्षसीति भावः ॥ २२ ॥ अव्याधिजं कटुकं=पित्तादिकं विनाऽप्यरोचकं, यशोमुषं यशोहरं पेयं गिलनीयं मन्युं क्रोधम् । प्रशाम्य शान्तो भव ॥ २३ ॥ पापेऽनुबध्नाति तं तथाविधं पापस्य मूलं, तं मन्युम् । यत्र भोगेषु निमित्तेषु । एतेन भीष्मादीनां गुरूणामपि वधो राज्यार्थिनस्त्वत्तो भविष्यतीति दर्शितम् ॥ २४ ॥

[ अर्जु० ] आप्रव्रजन् वनं गच्छन् ॥ १७ ॥ व्यनेष्यथाः अपनीतवानसि ॥ १९ ॥ वाशब्दाश्चत्वारो यथा इत्यर्थे । अप्राज्ञो यथा, संरम्भाद् यथेति ॥ २१ ॥

[ सर्व० ] एतदेव स्फुटयति—अप्रव्रजन्निति । प्रव्रजनं वने यद्यदात्माधीनं तदा बलमासीत् । ततो महासहायो भूत्वा व्यपनेष्यथा दर्पमित्यन्वयः । नित्यं वश्या इत्यनेन बलस्यात्माधीनता प्रपञ्चिता ॥ १७ ॥ अप्राज्ञो वेति । अप्राज्ञो वा अधर्मो वा युध्यमानो भूतिमुपैति । प्रज्ञावान् वा धर्मं बुध्यमानो वा संरम्भाद्वा युध्यमानो भूतेरपैतीति प्रज्ञादिकं युध्यमानस्य व्यर्थम्, फलं तु दैवादेवेति युद्धनिन्दा ॥ २१ ॥ [अद्धा सत्यम् ।] अव्याधिजमिति सभायां व्याख्यातम् ॥ २३ ॥ तं भागम् ॥ २४ ॥

---

१७ ज. अप्रव्रजन् । ख. नित्यं पालाः १८ ज. वीरैर्विराटः । २१ ज. वा युध्यमानो नरो वा धर्मं । ख. भूतितश्चेव्यपैति । म. भूमिपथाहव ख. छ. ज. संरम्भाद्वा । २२ ख. ते वर्तते । ख. तत्र किं । २३ ख. म. तीक्ष्णरोगि । २४ ख. बन्धं कर्म कुत्वाहकं वै ।

कृपः शल्यः सौमदत्तिर्विकर्णो
विविंशतिः कर्णदुर्योधनौ च ।
एतान्हत्वा कीदृशं तत्सुखं स्या-
द्यद्विन्देथास्तदनुब्रूहि पार्थ ॥ २५ ॥
लब्ध्वाऽपीमां पृथिवीं सागरान्तां
जरामृत्यू नैव हि त्वं प्रजह्याः ।
प्रियाप्रिये सुखदुःखे च राज-
न्नैवं विद्वान्नैव युद्धं कुरु त्वम् ॥ २६ ॥
अमात्यानां यदि कामस्य हेतो-
रेवं युक्तं कर्म चिकीर्षसि त्वम् ।
अपक्रमेः संप्रदायैव तेषां
मा गास्त्वं वै देवयानात्पथोऽग्र ॥ २७ ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

## अष्टाविंशोऽध्यायः २८

धर्मेणैवाहं स्वं भागं कामये, अधर्मेण त्रिदशानामपि राज्यं नेच्छामि, धर्माधर्मविनिर्णयः सुदुष्करस्तस्माद्भगवान्धर्मेश्वरो वासुदेव एव ब्रवीतु यदत्र धर्मामिति युधिष्ठिरवचनम् ॥ १ ॥

**युधिष्ठिर उवाच—**

असंशयं सञ्जय सत्यमेत-
द्धर्मो वरः कर्मणां यत्त्वमात्थ ।
ज्ञात्वा तु मां सञ्जय गर्हयेस्त्वं
यद्यधर्मं यदि धर्मं चरेयम् ॥ १ ॥
यत्राधर्मो धर्मरूपाणि बिभ्र-
द्धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः ॥
बिभ्रद्धर्मो धर्मरूपं तथा च
विद्वांसस्तं संप्रपश्यन्ति बुद्ध्या ॥ २ ॥

---

[ नील० ] देवयानात्पथोऽर्चिरादिमार्गादपुनरावृत्तिफलात् गोत्रद्रोहेण मा गा इत्यर्थः ॥ २७ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

[ अर्जु० ] अपक्रमेः अधोगच्छेः । स्वं धनं संप्रदाय दत्त्वा एभ्योऽमात्येभ्यः एते भोगभाजनमिति शेषः ॥२७॥

इति श्रीमन्महाभा० मर्जुनमिश्र० मुद्योगपर्वणि सप्तविंशोऽध्यायः ॥ २७ ॥

[ सर्व० ] स्वं धनं यदिदानीमस्ति तद्दत्त्वा अपक्रामेः अपक्राम वनं गच्छ । देवयानात् स्वर्गात् ॥ २७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां सप्तविंशोऽध्यायः ॥ २७ ॥

[ लक्षा० ] अपाक्रमः स्वपदा यस्त्वमेभ्य इत्यत्र यस्त्वं स्वपदा अपाक्रमः पादविक्षेपमकरोः स त्वमेभ्यः अमात्येभ्यः मापक्रमः देवयानात्पथश्च मापगाः ॥ २७ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्तविंशोऽध्यायः ॥ २७ ॥

[ नील० ] असंशयं यदि धर्मं चरेयं यदि वा अधर्मं तदुभयं ज्ञात्वा परीक्ष्याधर्माचरणमुपलभ्य गर्हयेः निन्दस्व ॥ १ ॥ धर्माधर्मपरीक्षायां त्रैविध्यमाह—यत्रेति । यत्र पुरुषे दम्भादिमति अधर्मः अभिचारार्थं मन्त्रजपादिः धर्म इत्येवान्ये जानन्ति तथा प्रच्छन्नयोगिनि दत्तात्रेयादौ धर्मो रागद्वेषादिशून्यतारूपो योगधर्मोऽपि उन्मत्तवदाचरणादधर्मरूप इव दृश्यते यत्र वसिष्ठादौ धर्मः धर्मरूप एव यद्यपि चाण्डालादौ अधर्मोऽप्यधर्मरूप एवास्ति तथाऽपि तस्यानुपादेयत्वाद्द्वयमेव विचार्यम् । पाठान्तरेऽधर्मेतिच्छेदः । एतच्च त्वयाऽपि विदुषा मयि विचार्यमित्याशयः ॥ २ ॥

[ अर्जु० ] यद्यधर्मं यदि धर्मं चरामि इत्यस्यार्थः यद्यधर्मं धर्मं चरामीत्यन्वयः । यथा वधोऽधर्म एव दैक्षपशुवधे तु धर्मः । यदि धर्ममधर्मं चरामि इत्यपरोऽन्वयः । यथा सत्यं धर्म एव हिंसकस्य तु हिंसार्थं सत्यमप्यधर्मः । यद्यधर्मं चरामीत्यन्वयस्तृतीयः । यथा परदारहरणं शास्त्रतोऽधर्मः लोकेऽपि विद्विष्टत्वादधर्मः । यदि धर्मं धर्मं चरामीति चतुर्थोन्वयः । यथा दानं शास्त्रे धर्मः लोकेऽपि धर्मः ॥ १ ॥ अन्यप्रकारव्याख्येयं कुलेजाता इत्यादेरर्थमवगम्य युधिष्ठिरः संजयमाह—यत्रेत्यादि । यत्र युष्माकमस्माकं वा पक्षे अधर्मो धर्मरूपाणि बिभ्रत् दृश्यते । यथा धृतराष्ट्रस्य कपटद्यूतमधर्मः । द्यूतच्छलं न प्रयुञ्जीतेत्यादिना निषेधात् । धर्मरूपाणि बिभ्रत् आपत्सु द्यूतादेरपि निष्कपटस्य विहितत्वात् धनोपायस्य परोपतापहेतोर्मुनिभिर्विहितत्वात् । यथाह—येन केनाप्युपायेन मृदुना दारुणेन वा उद्धरेद्दीनमात्मानं नात्मानमवसादयेदिति । तथा यत्र पक्षे कृत्स्न एव धर्मोऽऽधर्मरूपेण दृश्यते यथा धृतराष्ट्रस्यैव

---

२६ ख. एवं द्वन्द्वं । मैव युद्धं कुरुष्व; म. नैवं युद्धं विप्रकुर्वन्ति धीराः ।

२७ ख. अपाक्रमेः संप्रदाय स्वमेभ्यो । इति सप्तविंशोऽध्यायः ॥ २७ ॥

**एवं तथैवापदि लिङ्गमेत-**
**द्धर्माधर्मौ नित्यवृत्ती भजेताम् ।**
**आद्यं लिङ्गं यस्य तस्य प्रमाण-**
**मापद्धर्मं सञ्जय तं निबोध ।। ३ ।।**

पृथक्स्थानदानं धर्मः । जातुषादिवधोपाय एवाधर्मः । तथा यत्र धर्मो धर्मरूप एव दृश्यते यथास्माकमेव प्रतिज्ञातवनवासः । एतत् सर्वं विद्वान् पण्डित एव जानाति । धीरबुद्ध्या पण्डितबुद्ध्या । अतोऽधार्मिकाणां तेषां वधे दोष एव नास्तीति वयं नाधर्मभीताः ।। २ ।।

[ सर्व० ] यद्यधर्मं यदि धर्मं चरामीति शेषः । धर्ममधर्मं वा चरामीति ज्ञात्वा निश्चित्य गर्हयेः स्तुवीथा वेत्यर्थात् ।। १ ।। यत्राधर्म इति । यत्र वस्तुतोऽधर्म एव धर्मरूपाणि धर्मसाम्यं बिभर्ति यथा सत्याभिधानेन चौरेषु परहिंसाप्रवृत्तिरधर्मो धर्मसाम्यं च सत्यत्वेन बिभर्ति एवमत्रास्माकं क्षत्रियाणां राज्यभागग्रहणं कृत्स्नः संपूर्ण एव धर्मोऽधर्मरूपोऽधर्मसमो दृश्यते । यथा मधुपर्कदाने गोमारणादिकं धर्म एव हिंसात्वेनाधर्मः, एवमस्माकं क्षत्रवृत्तीनां तेन न ज्ञातिमारणं धर्मविरुद्धमिति । तथा धर्मो वस्तुतो धर्मरूपं धत्ते धर्मतयैव ज्ञायते यथा अग्निहोत्रानुष्ठानादि । एतच्च दृष्टान्तार्थमुक्तं तत्तद्विद्वांसो धर्ममधर्मं वा अन्यथा प्रकाशमानं बुद्ध्या पश्यन्ति अधर्मो धर्मो वेति । अतो मयाऽप्येतद्विदुषा युद्धं धर्मत्वेन निश्चितमित्यर्थः ।। २ ।।

[ दुर्घ० ] अथाऽस्य ( अ. २५ श्लो. ५–६ यो: परपूर्वार्धरूपस्य) श्लोकस्याऽर्थमवगम्य युधिष्ठिरः सञ्जयमुवाच— यत्राधर्मो धर्मरूपाणि बिभ्रद्धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः । तथा धर्मो दृश्यते धर्मरूपो विद्वांस्तु तं पश्यति धीरबुद्ध्या । अस्यार्थः—युष्माकमस्माकं वा यत्राऽधर्मो धर्मरूपाणि बिभ्रद्दृश्यते यथा धृतराष्ट्र एव कपटद्यूतेऽधर्मसाधनम् न द्यूते छलं प्रयुञ्जीतेति निषेधात् । धर्मरूपाणि बिभ्रदिति आपत्सु द्यूतादेरपि धनोपायस्य निष्कपटस्य महतः परोपतापहेतोर्मुनिभिर्भाषितत्वात् । यथाह 'येन केनाप्युपायेन मृदुना दारुणेन वा । उद्धरेद्दीनमात्मानं नात्मानमवसादयेत् ।।' तथा यत्र पुरुषे कृत्स्न एव धर्मोऽधर्मरूपः फलतोऽधर्मसाधनं दृश्यते यथा धृतराष्ट्रस्यैवास्मभ्यं धर्मसाधनं पृथक्स्थानदानम् । पुनः उपांशु जतुगृहादिना हिंसाध्यवसायादधर्मसाधनम् । तथा यत्र धर्मो धर्मरूप एव दृश्यते यथाऽस्माकं प्रतिज्ञातवनवासचर्या अज्ञातवासचर्या । एतत्सर्वं विद्वानेवास्मदादिः कृतविद्यो यथावज्जानाति न मूर्खो दुर्योधनः । धीरबुद्ध्या पण्डितधिया । अयमाशयः विद्वांसो वयं सदसद्वाक्यवेदिनः किमस्माकं स्तोत्रप्रयुक्त्या यथावदेव कार्यमुच्यतामिति भावः ।। २ ।।

[ लक्षा० ] असंशयं संजयेत्यत्र कर्मणः युद्धकर्मणः । यदि धर्मं यद्यधर्मं चरामि इत्यत्र यदि पाषण्डिवत् धर्ममधर्मं चरामि धर्मे अधर्मबुद्धिं करोमीति यावत्, यदि च अधर्मं धर्मं चरामि अधर्मे धर्मबुद्धिं करोमीत्यर्थः तर्हि मां गर्हयेः । धर्मं एव धर्मबुद्धिं कुर्वति अधर्मे चाधर्मबुद्धिं कुर्वति मयि निन्देयमसंगतेति भावः ।। १ ।। यत्राधर्मो धर्मरूपाणि बिभ्रदित्यत्र यत्र पाषण्डिनां देशे अधर्मः भस्मधारणादिरूपः धर्मरूपाणि बिभ्रत् कृत्स्नो धर्मः ऊर्ध्वपुण्ड्रधारणादिः अधर्मरूपः दृश्यते । यत्र विवेकिनां देशे धर्मः ऊर्ध्वपुण्ड्रधारणादिः धर्मरूपं धारयन् दृश्यते । उपलक्षणं चैतत् अधर्मः अधर्मरूपं धारयन् दृश्यते । तत्र विद्वांसः ज्ञानिनः तं धर्ममधर्मं चबुद्ध्या संप्रपश्यन्ति अयमधर्मः अयं धर्म इति निश्चिन्वन्तीति भावः ।। २ ।।

[ नील० ] अत्र आद्ययोः प्रच्छन्नत्वात् चिरकालेन तत्त्वनिश्चयः अन्त्येतु प्रत्यक्षलिङ्गेऽपि आपत्कालवशाद्धर्माधर्मयोर्व्यत्यासो जायत इत्याह—एवमिति एतदेवरूपं लोकप्रत्यक्षं लिङ्गं ब्राह्मणस्य स्वाध्यायप्रवचनादि । क्षत्रियस्य शौर्यादि । वैश्यस्य कृष्यादि । तत्तथैव यथोक्तमेव तथापि नित्यवृत्ती नित्यं वर्तेते तौ नित्यवृत्ती धर्माधर्मौ तल्लिङ्गं भजेताम् । अयं भावः क्षत्रलिङ्गं ब्राह्मणवैश्ययोरापदि धर्मः अनापद्यधर्मः तथा चैकस्यैव लिङ्गस्य वर्णान्तरे अवस्थाभेदाद्धर्मत्वमधर्मत्वं च नित्यमिति । तत्रापि विशेषमाह—आद्यमिति आद्यं ब्राह्मणलिङ्गं याजनादि यस्यास्ति ब्राह्मणस्य तस्यैव तत् प्रमाणम् अव्यभिचारि आपद्यपि क्षत्रियेण याजनाध्यापनादिकं न कर्तव्यमित्यर्थः । एवंविधं तम् आपद्धर्मं शास्त्रान्निबोध बुध्यस्व ।। ३ ।।

[ अर्जु० ] आपदि पुनर्लिङ्गमेतत् धर्माधर्मौ वृत्तिनित्यौ भजेतामिति धर्माधर्मौ कर्मभूतौ भजेतां धर्मोधर्मभावः अधर्मोऽधर्मभावः वृत्त्या प्रवृत्या नित्यौ । आद्यं प्रकृतिरूपमविकृतं लिङ्गं यस्य तस्य प्रमाणम्, आद्यमित्यनुवर्तनीयमाद्यं मुख्यम् । अमुख्यमाह—आपद्धर्ममिति ।। ३ ।।

[ सर्व० ] तथापि किं ज्ञातिवधेनाधर्मेणेत्याह—एवमिति । एवमेतौ धर्माधर्मौ वृत्तिनित्यौ नित्यवृत्ती नित्यं प्राणिषु वृत्तेरेतल्लिङ्गमात्मानन्तरस्य प्रकृतिरूपं लिङ्गं संबन्धादुपचारेणापदि भजेताम् । आपद्दशायां यथा

३ ख. एवमेतावापदि । ख. वृत्तिनित्यौ । ख. संजयैतन्निं ।

**लुप्तायां तु प्रकृतौ येन कर्म**
**निष्पादयेत्तत्परीप्सेद्विहीनः ।**

हिंसादिनाऽधर्मस्तथावश्यपोष्यकुटुम्बादिपोषणेन धर्मस्याप्युत्पत्तिरित्यर्थः । ननु धर्मोत्पत्तौ किं प्रमाणमित्याह— आद्यमिति । धर्मे प्रमाणत्वाद्वेद एव लिङ्गं लक्षणम् । यदाह जैमिनिः—लिङ्गदर्शनाच्च शब्दो नित्य इति । आद्यमधर्मत्वं हिंसादीनां तस्योभयसिद्धत्वात् । तत्प्रतिपादिकं लिङ्गं वेदोऽप्याद्यः । तद्यस्य प्रमाणं तस्यापद्धर्मम् आपद्धर्मोपदेशकमपि लिङ्गं प्रमाणमिहेति निबोध अप्यकार्यशतं कृत्वा भर्तव्या इति ॥ ३ ॥

[ लक्षा० ] एवं तथैवापदि लिङ्गमेतदित्यत्र एवमुक्तरीत्या वृत्तिनित्यौ वृत्त्या स्थित्या नित्यौ नियतौ धर्माधर्मौ आपदि उक्तसाधूनामेव महापत्त्यामागतायां सत्याम् एतत् न लिङ्गं भजेतां म्लेच्छदेशे तद्भयात् । साधूनामपि स्वधर्मत्यागेन स्वशिरोमुण्डनश्मश्रुधारणशून्यललाटत्वादितद्धर्मलिङ्गस्यैव धर्मतया ध्रियमाणत्वात् तस्य साधोः आद्यं लिङ्गं पाषण्डिनां लिङ्गं प्रमाणं प्रमाणवदङ्गीकार्यमभूत् । तमधर्ममापद्धर्मरूपं तस्य आपदि धृतत्वेन नरकाद्यनर्थहेतुत्वाभावात् धर्मप्रायतया धर्मत्वमिति भावः । एवमस्माकमपि आपद्ग्रस्तत्वात्सुहृदां वधोऽपि धर्म एवेति भावः ॥ ३ ॥

[ नील० ] ननु कथं तर्हि एकचक्रायां भिक्षाटनं ब्राह्मणस्यैवासाधारणत्वेन विहितं भवद्भिः कृतमित्याशङ्क्याह लुप्तायामिति । प्रकृतिः जीविकाहेतुभूतं धनं तच्च क्षत्रियस्य भूमिशस्त्रादिकं वैश्यस्य धनपश्वादिकं तस्मिन्सर्वात्मना नष्टे सति येन कर्म संध्योपासनादिकं निष्पादयेत तत् भिक्षाटनादिकमपि परीप्सेत्कर्तुमिच्छेत् अन्यथा जीविकाया अभावात्कर्मलोपः प्राणनाशश्च स्यादतोऽत्यन्तापदि तावान् विप्रधर्मोऽपीतरैरनुष्ठेय एव । प्रकृतिस्थश्चेति । आपदि आपद्धर्मे प्रकृतिस्थोऽपि यद्यापद्धर्ममनुसरेत्स लोभाद्गर्ह्यः । आपत्स्थोऽपि यदि प्राकृतं धर्ममनुसरेत्स जीवनलोपात् कुटुम्बहिंसया च गर्ह्य इत्यर्थः ॥ ४ ॥

[ अर्जु० ] लुप्तायां तु प्रकृतौ येन कर्म निष्पादयेत् तत् परीप्सेद् विहीनः । प्रकृतिस्थश्चापदि वर्तमान उभौ गर्भौ भवतः संजयेतौ । प्रकृतौ लुप्तायां हीनायां येन विकृतिरूपेण तत् कर्म परीप्सेत् [हि पश्य] हीनोऽमुख्य इत्यर्थः । तयोर्वैपरीत्ये दोषमाह—प्रकृतिस्थश्चेत्यादि । चकारादप्रकृतिस्थो मुख्ये धर्मे वर्तमानः उभाविति वचनादेतल्लक्ष्यते । *व्याख्यानान्तरं—त्वयोक्तं कुले जाता इत्यादि तत्रोत्तरं शृणु

* प्रकृतिस्थो चापदि वर्तमानावुभौ गर्ह्यौ संजयैतौ निबोध ।

**प्रकृतिस्थश्चापदि वर्तमान**
**उभौ गर्ह्यौ भवतः सञ्जयैतौ ॥ ४ ॥**

परप्रयुक्ताऽसंमानादिना सत्वप्रकृतौ लुप्तायां रजस्तमोभ्यामावृते पुंसि येन उपायेन कर्म स्वाभ्युदयहेतुं निष्पादयेत् तमुपायं परीप्सेत् विहीनो धनश्रीविहीनः । यस्तु प्रकृतिस्थोऽनापदि वर्तमानो यश्चापदि वर्तमानः तावुभौ संपदापद्धर्महीनं कर्म कुर्वाणौ गर्ह्यौ भवतः । अतो वयमापदि वर्तमाना यदि किंचित् धर्महीनमपि ज्ञातिवधादिकं कर्म कुर्मस्तथापि न गर्ह्या वयम् ॥ ४ ॥

[ सर्व० ] एतदेव स्पष्टयति—लुप्तायां तु प्रकृतौ इति । लुप्तायां तु प्रकृतौ स्वाध्ये स्वस्थः प्रकृतिस्थ इति पर्यायात् आपत्तौ सत्यामिति यावत् । येन कर्मणा कर्म पारलौकिकं येन धनेन संपादयेत्तदवश्यं परीप्सेत् । अन्यथा नित्यकर्मणो व्यापत्तेः । न केवलमापदि वर्तमान एवासत्कर्मकारितया वाच्यो भवति किन्तु प्रकृतिस्थोऽपीति । नहि संपदस्तीत्येतावता तस्य नाधर्महेतुकर्मसंबन्धो भवति । आपदि तु कृतमशुभमल्पेन क्षपयितुं शक्यमित्यर्थः ॥ ४ ॥

[ दुर्घ० ] पुनर्युधिष्ठिरोऽब्रवीत् ‘लुप्तायां तु प्रकृतौ येन कर्म निष्पादयेत्तं परीप्सेत हीनः । प्रकृतिस्थानापदिवर्तमानावुभौ गर्ह्यौ भवतः सञ्जयैतौ ।’ अस्यार्थः । त्वयोक्तं कुले जाता इत्यादि तत्रोत्तरं शृणु—परप्रयुक्ताऽसंमानादिना सत्त्वप्रकृतौ लुप्तायां नष्टायां रजस्तमोभ्यामावृते पुंसि येनोपायेन कर्म स्वाभ्युदयकर्म निष्पादयेत्तमुपायं परीप्सेताश्रयेत् । हीनो धन*श्रीविहीनः, यश्च प्रकृतिस्थो यश्चानापदि वर्तमानस्तावुभौ संपदापद्धर्महीनं कर्म कुर्वाणौ गर्ह्यौ गर्हणीयौ भवतः । अतो वयं परैर्विप्रकृता धनश्रीहीनाः यदि किञ्चिद्धर्महीनमपि ज्ञातिवधादिकं कर्म कुर्मस्तथाऽपि न गर्ह्या वयम् । आपत्सु तस्य विहितत्वात् । उक्तं हि ‘येन केनाप्युपायेन मृदुना दारुणेन वा । उद्धरेद्दीनमात्मानं समर्थो धर्ममाचरेत्’ इति ॥ ४ ॥

[ लक्षा० ] लुप्तायां तु प्रकृतावित्यत्र दुर्जनसंसर्गवशात्प्रकृतौ स्वस्वभावे लुप्तायां सत्यामापदि कर्म आपद्धर्मरूपं कर्म यो न निष्पादयेत् प्रकृतिस्थः स्वस्वभावस्थः पुरुषः अनापद्यपि वर्तमानः आपद्धर्मे वर्तमानः यः एतावुभावपि हे संजय गर्ह्यौ भवतः । अहीनमुत्तमं पुरुषः तदुभयमपि परीप्सेद्विचारयेत् । आपत्स्वपि मया युद्धं न कृतं चेत् लोको मामुपहसिष्यतीति भावः ॥ ४ ॥

* ह्रीति श्रीतीति च पाठौ ।

अविनाशमिच्छतां ब्राह्मणानां
　प्रायश्चित्तं विहितं यद्विधात्रा ।
संपश्येथाः कर्मसु वर्तमानान्
　विकर्मस्थान्सञ्जय गर्हयेस्त्वम् ॥ ५ ॥

[ नील० ] अविनाशमिति यत् यस्माद्धेतोः विधात्रा अविनाशो वृत्त्यन्तरोपजीवनेन ब्राह्मण्यस्य नाशो विनाशस्तदभावमिच्छतां ब्राह्मणानां आपदुत्तीर्णानां प्रायश्चित्तं विहितं तस्माद्धेतोरापदि अन्यस्यान्यधर्माश्रयणं प्रसक्तमेवेति ज्ञायते। अत एव एकचक्रायामस्माभिः कृतं भिक्षाटनं नानुचितमित्यर्थः । एवमनापदि कर्मसु वर्तमानान् आपदि च विकर्मस्थान् संपश्येथाः सम्यगेवेदमिति पश्येथाः । अन्यथा तु आपदि कर्मस्थान् आत्मपरहिंस्रान् अनापदि विकर्मस्थांश्चातिलुब्धान् विगर्हयेस्त्वम् ॥ ५ ॥ किं च मनीषिणां मनसः निग्रहं नाशं कर्तुमिच्छताम् । ईष गतिहिंसादर्शनेष्वित्यस्य रूपम् । सत्त्वविच्छेदनाय सत्त्वस्य बुद्धिसत्त्वस्य चिदात्मना सह एकलोलीभूतस्य विच्छेदनाय मुञ्जेषीकान्यायेन पृथक्करणाय सत्सु सतां गृहेषु वृत्तिर्जीविका शास्त्रे विधीयते । वेदानिमं लोकममुं च परित्यज्यात्मनाऽऽत्मानमन्विच्छेदिति श्रुत्याऽऽत्मान्वेषणाय सर्वसंन्यासपूर्वकं भिक्षाचर्यविधानात् न ब्राह्मी वृत्तिः कस्यापि निन्द्या । ये तु अब्राह्मणा अपि वैद्याः विद्यानिष्ठाः न भवन्ति तेषां भिक्षाचर्यस्याविधानात् तेभ्यः तेषामर्थे सर्वोत्सङ्गं सर्वेषां समीपं स्वधर्मसंयोगम् आपदनापदोरुचितं साधु मन्येत । सर्वोच्छेदमिति पाठे तेभ्यस्तेषामर्थे भिक्षाद्यटनं सर्वधर्मोच्छेदाय मन्येतेत्यर्थः ॥ ६ ॥

[ अर्जु० ] प्रकारान्तरेणापद्धर्मं पुनरप्याह राजा—अविलोपमिच्छतां ब्राह्मणानां प्रायश्चित्तं विहितं यद्विधात्रा । आपद्यथा कर्मसु वर्तमानो विकर्मस्थः संजय गर्हयेत्तत् । अविलोपमिति कर्मणामिति शेषः । यस्मिन् कर्मणि विच्छेदके कुकर्मणि प्रायश्चितं विहितं तदापद्विशेषणं तत् कर्मापदित्यर्थः । कर्मसु सत्कर्मसु विमार्गस्थान् विरुद्धकर्मकारिणः गर्हयेत् निन्दयेत् यथाव्याख्यानं पाठश्च । *व्याख्यान्तरम्—अविलोपमसांकर्यमिति यावत् । ब्राह्मणानां ब्राह्मणादिवृत्तीनाभिच्छता धात्रा यत्प्रायश्चित्तं दण्डधारणादिकं विहितं तत् आपदि आपत्काले अकर्मसु विहिताकरणेषु वर्तमानो विरुद्धकर्मस्थो वा गर्हयेत् । अयमर्थः—संपद्धर्मे हि त्वं वदसि ह्रीनिषेवा इत्यादिना ।

मनीषिणां सत्त्वविच्छेदनाय
　विधीयते सत्सु वृत्तिः सदैव ।
अब्राह्मणाः सन्ति तु ये न वैद्याः
　सर्वोत्सङ्गं साधु मन्येत तेभ्यः ॥ ६ ॥

एतस्यामापदि धर्मोऽन्य एव वयं च धनश्रीहरणेनापद्विशिष्टा अतोऽस्माभिरधर्मोऽपि क्रियमाणो न दोषायेत्यर्थः ॥ ५ ॥ पुनराह युधिष्ठिरः । यस्मिन् कर्मणि प्राप्ते प्रायश्चित्तमनुकल्पस्तत्प्रतिपादनार्थम्—मनीषिणां सत्त्वविच्छेदनाय विधीयते सत्सु वृत्तिः सदैव । अब्राह्मणाः सन्ति तु ये न वैद्याः सर्वोच्छेदं साधु मन्येत तेभ्यः । सत्त्वानां ब्राह्मण–क्षत्रिय–विट्–शूद्राणां विच्छेदनाय पृथक्करणाय विधीयते वृत्तिः साधारणं कर्म सत्सु अनुष्ठातृषु । शत्रुवधस्याऽब्राह्मणापेक्षया तु मुख्यत्वमेवेत्याह—अब्राह्मणाः इति । अब्राह्मणाः क्षत्रियाः तेषां कर्मणां विच्छेदमाह—ये न वैद्याः । वैद्याः वेदाध्यापनेन व्यवहरन्तः सर्वोच्छेदं सर्वशत्रुविनाशनं तेभ्यो हेतुभ्यः साधु मन्येत विहितत्वादित्यभिप्रायः । अब्राह्मणाश्च वयम् । मतान्तरे तत्त्वविच्छेदनायेति पाठे चायमर्थः—मनीषिणामत्यन्तध्यानपराणां तत्त्वविच्छेदनाय तत्त्वादात्मनो मनसो विच्छेदं कर्तुं बहिर्विषयासंगि मनः कर्तुमित्यर्थः विधीयते सत्सु वृत्तिः धर्मे इति यावत् । सदैव सर्वदा एवशब्दो निश्चये । ये तु ब्राह्मणादिवर्णविवेकशून्या ऐकान्त्यदर्शिनः न वैद्याः न वेदोक्तकर्मानुष्ठानकारिणः सर्वोच्छेदं सकलधर्माधर्मक्रियोच्छेदं साधु युक्तं मन्येत धाता तेभ्य आत्मने परेभ्यश्च । तादर्थ्ये चतुर्थी । वयं विदितात्मतत्त्वा नास्मान् कर्म स्पृशेदिति भावः ॥६॥

[ सर्व० ] कथं तस्याधर्मस्य नाश इत्याह—अविलोपमिति । धर्माविलोपमिच्छतां ब्रह्म वेदस्तेन प्रवर्तमानानां त्रैवर्णिकानां यत् यत्र प्रायश्चित्तं [स स्यादिति] आपद्यधर्मध्वंसस्तेनानापत्तौ कृते पापे न क्षयोऽस्ति आपदि कृते तु प्रायश्चित्तेन तदपनोद इत्यर्थः । कर्मसु असत्कर्मसु विमार्गस्थान् पापकारिणो विगर्हयेः, न तु सत्क्रियाकारिणोऽप्यस्मादृश इत्यर्थः ॥ ५ ॥ न च दुर्योधनादीनामसतां वधे दोषोऽप्यस्तीत्याह—मनीषिणामिति । मनीषिणां विदुषां वृत्तिः प्रवृत्तिः असत्सु पापेषु सत्त्वविच्छेनाय सत्त्वं शरीरं तन्नाशाय असतां वधायेति यावत् विधीयते न तु निषिध्यते श्रुत्यादौ । अब्राह्मणाः ब्रह्म वेदास्तदुक्तसीमातिगामिनः वैद्या विद्यावन्तोऽपि तेषां सर्वोच्छेदं देहादिसर्वनाशं तेभ्यस्तेषां साधु सम्यङ्मन्येत भवादृशः ॥ ६ ॥

५ ज. अविलोपमि° । छ. संपश्यथा; ज. आपद्यथा । ख. सत्स्वापदिकर्मसु वर्तमानो–गर्हयेत । ६ ज. ख. सर्वोच्छेदं ।

**तदध्वानः पितरो ये च पूर्वे**
**पितामहा ये च तेभ्यः परेऽन्ये ।**
**यज्ञैषिणो ये च हि कर्म कुर्यु-**
**र्नान्यं ततो नास्तिकोऽस्मीति मन्ये ॥ ७ ॥**

[ दुर्ध० ] पुनरपि युधिष्ठिरः प्राह 'अरिलोपमिच्छतां ब्राह्मणानां प्रायश्चित्तं यद्विहितं विधात्रा । आपद्यथा-कर्मसु वर्तमानो विकर्मस्थं सञ्जय गर्हयेत्तम् ।' अ-रिलोपमरिनाशं असांकर्यमिति यावत् तदिच्छतां ब्रा-ह्मणानां ब्राह्मणादिवर्णानामिच्छता धात्रा यत्प्रायश्चित्तं दण्डधारणादि विहितं यथा शूद्रश्चेद्ब्राह्मणीमधिगच्छेत् तं वीरणपत्रैर्वेष्टयित्वा वह्नौ प्रास्येदित्यादि प्राणत्यागा-दिरूपं विहितं प्रायश्चित्तम् । तथा आपद्यापत्काले विक-र्मस्थः विहितकर्माकरणेषु वर्तमानो विरुद्धकर्मस्थो वा तं गर्हयेत् । अयमर्थः । सम्पद्धर्मे हि त्वं वदसि ह्रीनिषेवा इत्यादिना । एतस्मादापद्धर्मोऽन्य एव । वयं च धनश्रीह-रणेनापत्प्राप्ताः अतोऽस्माभिरधर्मोऽपि क्रियमाणो न दोषायेत्यर्थः । पूर्वश्लोकविवरणमेतत् ॥ ५ ॥ पुनराह यु-धिष्ठिरः 'मनीषिणां तत्त्वविच्छेदनाय विधीयते सत्सु वृत्तिः सदैव । अब्राह्मणाः सन्ति तु ये न वैद्याः सर्वोच्छेदं साधु मन्येत तेभ्यः ।' मनीषिणां तत्त्वध्यानपराणां त-त्त्वविच्छेदनाय तत्त्वादात्मनो मनसो विच्छेदं कर्तुं बहि-र्विषयासङ्गि मनः कर्तुमित्यर्थः । सत्सु वृत्तिः सतां विधी-यते नापद्धर्मवृत्तिषु वृत्तिः सदाचारः प्रवृत्तिधर्म इत्यर्थः । सदैव सर्वदा एवशब्दो निश्चये । अब्राह्मणा ब्राह्मणा-दिवर्णविवेकशून्या ऐकात्म्यदर्शिनः न वैद्या वेदोक्तप्रवृत्तिध-र्मानुसारिणः तेषां सर्वोच्छेदं सकलधर्माधर्मक्रियोच्छेदं साधु युक्तं मन्येत धाता तेभ्य आत्मपरेभ्यः । तादर्थ्ये चतुर्थी । वयं विदितात्मतत्त्वा नास्मान्कर्म स्पृशेदिति भावः ॥ ६ ॥

[ लक्षा० ] अविलोपमित्यत्र प्रमादात्कर्मविलोपे सती-ति वाक्यमध्याहृत्य व्याख्येयम् ॥ ५ ॥

[ नील० ] तदध्वान इति पित्रादयः यज्ञैषिणो ये ते सर्वे तदध्वानः स एव मयोक्तोऽध्वा मार्गो येषां ते तद-ध्वानोऽभूवन् हि प्रसिद्धम् ये च कर्म न कुर्युः संन्यासिन इत्यर्थः । ते सर्वे तदध्वानः अहमपि आस्तिकोऽस्मीति ततोन्यम् अध्वानं न मन्ये ॥ ७ ॥

[ अर्जु० ] तदर्था नः पितरो ये च पूर्वे पितामहा ये च (पूर्वे पितामहा ये) तेभ्यः परेन्ये । प्रज्ञैषिणो ये च हि कर्म चक्रुः नास्त्यन्ततो नास्ति नास्तीति मन्ये । स एव शत्रुव-धोऽर्थः प्रयोजनं येषां ते तदर्थाः नोऽस्माकं पितरं पितरः पूर्वे तत्पूर्वेऽपीत्यनादिरयं प्रवाहः । शत्रुवधे नाहमेको-ऽपराध्यामीति भावः । धार्तराष्ट्रान् प्रत्याह-प्रज्ञैषिण इति प्रज्ञाभिमानिनः । विकर्मकरणे हेतुमाह-नास्त्यन्तत इति । अन्ततोऽन्ते विनाशे नास्ति न विद्यते तत्कर्मफल-मिति शेषः । देहविनाशे आत्मादीनामपि विनाश इति भावः । स्वमतमाह-नास्ति नास्तीति मन्ये अहं तु जानामि नास्ति नास्ति तत्कर्मफलं तत्कर्त्रादयः सर्वे लोका-न्तरसंचारिणः सन्तीति । मतान्तरं व्याख्यायते । ननु यद्यात्मपरा यूयं किमिति राज्यं समभिलषतेत्याह-तदर्था न इत्यादि । तदर्था आत्मपरा अस्माकं पितरो न केवलं वयमिति । किमिति प्रजापालनादिषु प्रवृत्ता इत्याह-यज्ञैषिण इति । यज्ञो वासुदेवस्तमिच्छन्तः कर्मसु प्रवृत्ता न स्वर्गादिभोगतृष्णया । उक्तं च भगवता-मदर्थं कुरु कर्म त्वं कर्म श्रेयो ह्यकर्मणः । ननु सर्वथैव किमिति कर्म युज्यते तत्राह-नास्त्यन्ततो नास्तिकोऽस्मीति मन्ये मम पित्रादयो यत् कर्म कृतवन्तः तदात्यन्तिकनास्तिकत्व-परिहाराय । उक्तं च भगवता-यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रित इत्यादि । अतो विदितात्मभी राजभिरस्मा-भिरवश्यं लोकस्थित्यर्थं शत्रुवधादिकं कर्म कार्यमिति तात्पर्यार्थः । यथाव्याख्यानं पाठः ॥ ७ ॥

[ सर्व० ] अस्माकं वा यद्यन्योऽप्यर्थो भवेत्तदा तेनापि वृत्तिः संभाव्येत नत्वेवमिहेत्याह-तदर्था न इति । तत्कुरुदे-शराज्यमेवार्थो येषां ते तदर्थास्तेभ्यः परे प्रपितामहा ये तु प्रज्ञैषिणः स्वप्रज्ञामात्रेण धर्ममन्विष्यन्तः कर्म कुर्वन्ति ततस्तेषु अस्तीतिबुद्धिरस्तिः । अस्तेः किमिति रूपम् । तेन विषयशब्देन विषयिणोऽभिधानम् । तद्विरुद्धत्वान्नास्तिः तस्या भावो नास्त्यं नास्तिक्यं, ततस्तेष्वेव भवति । अहं तु पितृपैतामहोपात्तं वित्तम् आपद्धर्मेण वेदोक्तेनेच्छामि अतो मयि नास्ति नास्तिक्यं छान्दसत्वेन तद्धितविभक्त्योर्लो-पान्नास्तीति मन्ये जानामि ॥ ७ ॥

[ दुर्ध० ] ननु यदि आत्मपरा यूयं किमिति राज्यं समभिलषतेत्यत आह 'तदर्था नः पितरो ये च पूर्वे पि-तामहा ये च तेभ्यः परेऽन्ये । यज्ञैषिणो ये च ते कर्म चक्रुर्नात्यन्तिको नास्तिकोऽस्मीति मन्ये ।' अस्यार्थः । तदर्थाः (अर्थपराः) आत्मपरा नोऽस्माकं पितरो न केवलं वयमित्यर्थः । किमिति प्रजापालनकर्मसु प्रवृत्ता इत्याह-यज्ञैषिण इति । यज्ञो वासुदेवस्तमिच्छन्तः स्वकर्मसु प्रवृत्ताः न स्वर्गादिभोगतृष्णया । उक्तं च भगवता-'मदर्थं कुरु कर्म

७ अ. ख. प्रज्ञैषिणो ख. ग. नास्त्यन्ततो नास्ति नास्तीति ।

यत्किंचनेदं वित्तमस्यां पृथिव्यां
यद्देवानां त्रिदशानां परं यत् ।
प्राजापत्यं त्रिदिवं ब्रह्मलोकं
नाधर्मतः संजय कामयेयम् ॥ ८ ॥
धर्मेश्वरः कुशलो नीतिमांश्चा-
प्युपासिता ब्राह्मणानां मनीषी ।
नानाविधांश्चैव महाबलांश्च
राजन्यभोजाननुशास्ति कृष्णः ॥ ९ ॥
यदि ह्यहं विसृजन्साम गर्ह्यो
नियुद्ध्यमानो यदि जह्यां स्वधर्मम् ।
महायशाः केशवस्तद्ब्रवीतु
वासुदेवस्तूभयोरर्थकामः ॥ १० ॥
शैनेयोऽयं चेदयश्चान्धकाश्च
वार्ष्णेयभोजाः कुकुराः सृञ्जयाश्च ।
उपासीना वासुदेवस्य बुद्धिं
निगृह्य शत्रून् सुहृदो नन्दयन्ति ॥ ११ ॥
वृष्ण्यन्धका ह्युग्रसेनादयो वै
कृष्णप्रणीताः सर्व एवेन्द्रकल्पाः ।
मनस्विनः सत्यपरायणाश्च
महाबला यादवा भोगवन्तः ॥ १२ ॥
काश्यो बभ्रुः श्रियमुत्तमां गतो
लब्ध्वा कृष्णं भ्रातरमीशितारम् ।
यस्मै कामान्वर्षति वासुदेवो
ग्रीष्मात्यये मेघ इव प्रजाभ्यः ॥ १३ ॥
ईदृशोऽयं केशवस्तात विद्वान्
विद्धि ह्येनं कर्मणां निश्चयज्ञम् ।
प्रियश्च नः साधुतमश्च कृष्णो
नातिक्रामे वचनं केशवस्य ॥ १४ ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

---

त्वं कर्म ज्यायो ह्यकर्मणः' इति । ननु सर्वथैव किमिति कर्म न त्यजते तत्राह नात्यन्तिको नास्तिकोऽस्मीति मन्ये । अहं मन्ये मत्पित्रादयो यत्कर्म कृतवन्तः तत्कर्तव्यं नास्तिकत्वपरिहाराय । उक्तं च भगवता 'यदि ह्यहं न वर्तेयं जातु कर्मण्यतन्द्रितः । मम वर्त्मानुवर्तन्ते मनुष्याः पार्थ सर्वशः । उत्सीदेयुरिमे लोका न कुर्यां कर्म चेदहम्' इत्यतो विदितात्मभिरप्यस्माभिरवश्यं लोकस्थित्यर्थं युद्धे शत्रुवधात्किं कर्म कार्यमिति तात्पर्यार्थः ॥ ७ ॥

इति श्रीम० दुर्घटार्थप्र० सुद्योग० अष्टाविंशोऽध्यायः ॥ २८ ॥

[ लक्षा० ] तदर्थिनः पितर इत्यत्र तदर्थिनः अब्रह्मण्यक्षयार्थिनः नान्यत्तत इत्यत्र ततः पितृपितामहाद्याचारात् अन्यत् न नास्ति नास्ति इति त्रिवाचा शपथः ॥७॥

[ नील० ] एवं स्वस्य नीतिज्ञत्वप्रकाशनप्रसङ्गादापद्धर्मान्योगिधर्मांश्चोक्त्वा प्रकृतमनुसरति यत्किंचेति ॥ ८ ॥ धर्मेश्वरः धर्मफलस्य दाता ॥ ९ ॥ यदि साम विसृजन् स्यां तर्हि गर्ह्यः स्यां यदि वा युध्यमानः स्वधर्मं जह्यां तदा गर्ह्यः स्याम् । मम तु द्वयमपीष्टमेवेति भावः ॥ १० ॥ कृष्णप्रणीताः कृष्णेनैव नीतिपथं नीताः ॥ १२ ॥

इति श्रीनैल० उद्योग० भा०भा० अष्टाविंशोऽध्यायः ॥ २८ ॥

[ अर्जु० ] [ * द्वौ मुख्यौ द्वावमुख्याविति चतुर्धा विभज्य मुख्यौ प्रतिपादयति—यत्राधर्मो धर्मरूपाणि बिभ्रद्धर्मः कृत्स्नो दृश्यतेऽधर्मरूपः । तथा धर्मो दृश्यते धर्मरूपो··· ] स्वस्याधर्मानिवृत्तिमाह—यत्किंचनेति ॥ ८ ॥ कृष्णाधीनतामात्मनो दर्शयति—धर्मेश्वर इत्यादि । धर्मेश्वरो धर्मस्य नियन्ता ॥ ९ ॥

इति श्रीमहाभारतटीकायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टाविंशोऽध्यायः ॥ २८ ॥

[ सर्व० ] देवानां वित्तमात्रं त्रिदशानां परं च यद्वित्तमित्यपौनरुक्त्यम् । प्राजापत्यं प्रजापतेर्वित्तम् ॥ ८ ॥ धर्मेश्वरः धर्मनियतः कृष्णः ॥ ९ ॥ विसृजन् राज्यं त्यजन् । उभयोरस्माकं परेषां चार्थकामः ॥ १० ॥ कृष्णप्रणीताः कृष्णेन प्रणीयन्ते शिष्यन्त इति विधेयमुद्देश्यमन्यत् ॥ १२ ॥ यस्मै बभ्रवे ॥ १३ ॥ भूयान्नृश्रेष्ठः ॥ १४ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामष्टाविंशोऽध्यायः ॥ २८ ॥

[ लक्षा० ] यदि ह्यहमित्यत्र अस्यकृष्णस्य शासनमिति योग्यपदाध्याहारः । उभयोर्वंशयोः ॥ १० ॥ काश्यो बभ्रुरित्यत्र बभ्रुरिति पौण्ड्रकवासुदेवानुजस्य नाम ॥ १३ ॥

इति श्रीम० भा० उ० वा० कृ० ल० अष्टाविंशोऽध्यायः ॥ २८ ॥

---

८ ख. देवतानां त्रिदशानां पवित्रम् ।' ख. कामयीत । ९ ज. राज्ञो विज्ञानन्ननु' । १० 'ज. जन्स्यां सुग' ख. विसृजस्यां न गार्ह्यो । १२ ख. सत्यपराक्रमाश्च। १३ ख. लब्ध्वा ह्येने केशवमीशितारं । १४ ज. भूयान् विद्धि । ज. नाति क्रमे । इति अष्टाविंशोऽध्यायः ॥ २८ ॥

* [ ] एतच्चिह्नितो ग्रन्थः ५६ पृष्ठे [ अर्जु० ] प्रथमश्लोकटीकोत्तरं ज्ञेयः ।

## एकोनत्रिंशोऽध्यायः २९.

भगवता विघातः कर्मणो ज्यायस्त्वं राज्ञां युद्धेऽपि धर्मतन्त्रत्वं धार्तराष्ट्राणां राज्यापहारित्वाद्दस्युत्वं तद्धरणाच्च वध्यत्वमुपपाद्य पाण्डवस्य शमे युद्धे च शक्तत्वकथनम् ॥ १ ॥

वासुदेव उवाच—

अविनाशं संजय पाण्डवाना-
मिच्छाम्यहं भूतिमेषां प्रियं च ।
तथा राज्ञो धृतराष्ट्रस्य सूत
समाशंसे बहुपुत्रस्य वृद्धिम् ॥ १ ॥
कामो हि मे संजय नित्यमेव
नान्यद्ब्रूयां तान्प्रति शाम्यतेति ।
राज्ञश्च हि प्रियमेतच्छृणोमि
मन्ये चैतत्पाण्डवानां समक्षम् ॥ २ ॥
सुदुष्करस्तत्र शमो हि नूनं
प्रदर्शितः संजय पाण्डवेन ।
यस्मिन्गृद्धो धृतराष्ट्रः सपुत्रः
कस्मादेषां कलहो नावमूर्च्छेत् ॥ ३ ॥
न त्वं धर्मं विचरं संजयेह
मत्तश्च जानासि युधिष्ठिराच्च ।
अथो कस्मात्संजय पाण्डवस्य
उत्साहिनः पूरयतः स्वकर्म ॥ ४ ॥
यथाख्यातमावसतः कुटुम्बे
पुरा कस्मात्साधुविलोपमात्थ ।
अस्मिन्विधौ वर्तमाने यथाव-
दुच्चावचा मतयो ब्राह्मणानाम् ॥ ५ ॥

---

[ नील० ] शाम्यतेति वचनादन्यत्तान्प्रति न ब्रूयां पाण्डवानां समक्षं राज्ञो युधिष्ठिराच्च एतदेव शृणोमि अहं च एतन्मन्ये मानयामि ॥ २ ॥ तत्र राज्ये निमित्ते गृद्धः लिप्सावान् । एवं सति एषां कौरवाणां कस्माद्धेतोः कलहः नावमूर्च्छेत् ॥ ३ ॥ विचरं विचलितं, पूरयतः पालयतः ॥ ४ ॥ यथाख्यातं प्रसिद्धिमनतिक्रम्य आवसतः अधि· तिष्ठतः साधुविलोपं धर्मलोपं युधिष्ठिरे कस्माद्धेतोः आ· उक्तवान् त्वम् । अस्मिन्विधौ शुचिरद्रोही कुटुम्बे शुचा देशे स्वाध्यायमधीयानो यावदायुष्यं वर्तयेदित्येवंरूपे वर्तमानेऽपि ब्राह्मणानामुच्चावचा मतयो गार्हस्थ्यस्य अपरिग्रहे वा त्यागे वा नैष्ठिकब्रह्मचर्ये पारिव्राज्ये वा भवन्ति ॥ ५ ॥

[ अर्जु० ] नान्यदित्यादि तान्प्रति शाम्यतेत्यतोऽन्यन्न ब्रूयामित्यर्थः राज्ञो धृतराष्ट्रस्य समर्थं पालनशक्तम् ॥ २ ॥ वृद्धो वृद्धिं गतः । काल इति संबध्यते । अवमूर्च्छेत् समुच्छ्रयं गच्छेत् ॥ ३ ॥ मत्तो मत्सकाशादधिकं न जानासीति यावत् । कृष्णः संजयं प्रत्याह—अहो कस्मादिति । अहो प्रश्ने कस्माद्धेतोः पाण्डवस्य विलोपं क्रियालोपम् आत्थ पुराकल्पात् पूर्वकल्पात् पाण्डवस्य किंभूतस्य उत्साहिनः उद्यमिनः पारयितुः शक्तस्य आवसतः कुटुम्बमधितिष्ठतः गृहस्थस्येत्यर्थः । स्वकर्मविशेषणं यथाख्यातम् । अत एव संजयेति संबोधनं कुटुम्बं भृत्वा भरणे नानौचित्यमाह (?) । अथवा संजय कस्तवापराधो ब्राह्मणा अप्यत्र संशेरत इत्याह—अस्मिन्निति । विधौ विहिते वर्तमाने शिष्टैरनुमीयमाने यथावदिति वर्तमानविशेषणम् । उच्चावचा इति नानाविधा इति संदेहोपन्यासः ॥ ४ ॥ ५ ॥

[ सर्व० ] नान्यद्ब्रूयां तान्प्रति शाम्यतेत्यतो वचनात् । राज्ञो युधिष्ठिरस्य । पाण्डवानामन्येषां समर्थं संबद्धार्थं फलवदिति यावत् ॥ २ ॥ वृद्धस्तूच्छ्रयोपचितः । गृद्ध इति क्वचित्पाठः । मूर्च्छेत् उपचीयेत ॥ ३ ॥ त्वं मत्तो मत्सकाशात् युधिष्ठिराच्च धर्ममुत्पन्नं जानासि । अथो अथ च पारयितुः पालयितुः ॥ ४ ॥ यथाख्यातं यथाविहितं यथा स्यात् तथा आवसतः पुष्णतः कुटुम्बं कलत्रादि पुराकल्पात् पूर्वकल्पस्थिताद्धर्मात् साधु सम्यक् विलोपं विनाशं भङ्गमिति यावत् आत्थ उक्तवानसि। ननु क्वचिदधर्मत्वेनापि परिगण्यते तथैव किं न तद्भवतीत्याशङ्कां निराचष्टे—अस्मिन्विधौ आपदि हिंसायां नाधर्म इति वर्तमाने स्थिते सति त्वं, यथावद्यत्रैकेनोक्तम् अन्यथाऽन्यस्यापीदं (?), अन्यत्र विषये उच्चावचा विभिन्नरूपा मतयो ब्राह्मणानामृषीणाम् ॥ ५ ॥

[ लक्षा० ] पाण्डवानां समर्थमित्यत्र समीचीनमर्थं पुरुषार्थमित्यर्थः ॥ २ ॥ अथो कस्मादित्यत्र अधर्मः कस्मादिति योग्यपदाध्याहारः ॥ ४ ॥

---

१ ज. भूमिमेषां प्रयच्छन् । तथा राज्ये । ख. सदाचाशंसे सह° । २ ज. वदे पाण्डवानां समर्थम् । ख. पाण्डवार्थे समर्थम् । ३ ख. यस्मा द्वृद्धो । ज. नात्र मूर्छेत् । ४ छ. स त्वं; ज. तत्त्वं । ख. धर्मं व्याहरन्; ज. निचरन् । ख. मतश्चाजातारिर्युधिष्ठिरश्च । ज. पारयितुः । ख. उत्साहितः पारयितुं । ५ ज. कुटुम्बं । ख. पुराकल्पात् ।

कर्मणाऽऽहुः सिद्धिमेके परत्र
हित्वा कर्म विद्यया सिद्धिमेके ।
नाभुञ्जानो भक्ष्यभोज्यस्य तृप्ये-
द्विद्वानपीह विहितं ब्राह्मणानाम् ॥ ६ ॥
या वै विद्याः साधयन्तीह कर्म
तासां फलं विद्यते नेतरासाम् ।
तत्रेह वै दृष्टफलं तु कर्म
पीत्वोदकं शाम्यति तृष्णयाऽऽर्तः ॥ ७ ॥
सोऽयं त्रिधिर्विहितः कर्मणैव
संवर्तते सञ्जय तत्र कर्म ।
तत्र योऽन्यत्कर्मणः साधु मन्ये-
न्मोघं तस्यालपितं दुर्बलस्य ॥ ८ ॥
कर्मणाऽमी भान्ति देवाः परत्र
कर्मणैवेह प्लवते मातरिश्वा ।
अहोरात्रे विदधत्कर्मणैव
अतन्द्रितो नित्यमुदेति सूर्यः ॥ ९ ॥

[ नील० ] तत्र हेतुमाह—कर्मणेति सिद्धिं मोक्षम् एके कर्मणैव हि संसिद्धिमास्थिता जनकादयः इत्येके आहुः । न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुरित्येके आहुः । यद्यपि एवं कुटुम्बेऽवस्थितिः संन्यासश्च द्वयमपि तुल्यवत् शास्त्रेण विहितं तथाऽपि कृत्स्नभावात्तु गृहिणोपसंहारन्यायेन आश्रमान्तरसाध्यं ज्ञानं गृहस्थेन साधयितुं शक्यं न तु गृहस्थेन साध्यं यज्ञादिकमाश्रमान्तरेऽप्यस्तीति कृत्स्नो धर्मो गार्हस्थ्ये एव प्राप्यत इत्याशयेनाह—नाभुञ्जान इति । यतो विद्वानपि अभुञ्जानो न तृप्यति यतश्च ब्राह्मणानां संन्यासिनामपि गृहस्थगृहे विहितं भोजनादिकम् ॥ ६ ॥ तेन कर्मणामनुकूला या विद्यास्ता एव फलवत्यो न तु तत्प्रतिकूला इत्याह—या इति । तथा हि सर्वाणि ह वा इमानि भूतानि प्राणमेवाभिसंविशन्ति प्राणमभ्युज्जिहते सैषा देवता प्रस्तावमन्वायत्तेतिच्छान्दोग्ये सर्वभूतसंवेशनोद्गमनलिङ्गेन जगत्कारणतया निश्चितस्य प्राणाख्यपरमात्मनो विद्यायाः प्रस्तावकर्मसाधकत्वं दृष्टं तासां कर्मसाधकानां विद्यानां फलमस्ति नेतरासां स्वतन्त्राणाम् । अयं भावः गृहस्थः स्वात्मानमन्यांश्च पित्रादींस्तारयति यतींश्च पुष्णाति यतिस्त्वात्मानमेव तारयति न पित्रादीन् पोषणं च स्वस्यापि न करोति भैक्षोपजीवित्वादतो गार्हस्थ्यमेव श्रेष्ठमिति । किं च नैष्कर्म्यं दृष्टविरुद्धमपीत्याह—तत्रेति । तत्र कर्मतदभावतारतम्ये विचारणीये कर्म इहैव दृष्टफलम् ॥ ७ ॥ सोऽयं ज्ञानविधिः कर्मणैव सह विहितः तत्र च अनुष्ठीयमाने कर्मे संवर्तते उच्छिद्यते । कर्मसमवेतमेव ज्ञानं सकलकर्मोच्छेदहेतुरित्यर्थः । कर्मणोऽन्यत् संन्यासं मन्येत् मन्यते ॥ ८ ॥ कर्मसमुच्चितं ज्ञानं स्तौति—कर्मणाऽमी भान्तीत्यादिना । ब्रह्मविद्यां ब्रह्मचर्यं, क्रियां च निषेवमाणा इत्युपसंहारात् ॥ ९ ॥

[ अर्जु० ] तमेव संशयमाह—कर्मणाहुरिति । कर्मपक्षं कृष्णो गृह्णान आह—नाभुञ्जान इति । विद्वानपि भक्ष्यभोज्यानि पश्यन्नपि अभुञ्जानः भुजिक्रियामकुर्वन्न तृप्येत् निवृत्ताकाङ्क्षो भवेत् ॥ ६ ॥ कर्मशेषः विद्यापि कर्मद्वारेण फलवतीत्याह—या वै इत्यादि । दृष्टादृष्टफलत्वेन कर्मणो द्वैविध्यमाह—तत्रेति ॥ ७ ॥ अदृष्टफलमाह—विधिरिति । विधिर्भावरूपः । विहितो विधायकशास्त्रेण प्रतिपादितः कर्मणैव वर्तते निष्पद्यते न विधिवचनाहितज्ञानमात्रात् तत् तस्मात् तत्र विधौ कर्म साधनमिति शेषः । दुर्बलस्य प्रमाणबलहीनस्य ॥ ८ ॥

[ सर्व० ] न त्वस्मिन्नर्थेऽपि कश्चित्पुनः तथेत्याह कर्मणाऽऽहुरिति । कर्मसहितज्ञानेन एके योगमार्गप्रणेतारः । परत्र परलोके । विद्यया तत्त्वज्ञानेन सिद्धिमेके साङ्ख्याः । ननु यदि कर्महानेनापि सिद्धिर्भवति तत्किमिति युधिष्ठिरोऽपि कर्म हित्वा वनं न यातीत्यत्रापि कर्मणा सिद्धिरिति पक्षो युक्त इति दर्शयति—नेति । अत्र भुजिः सौहित्यार्थोऽतः षष्ठ्यन्तोपपत्तिः । विद्वानात्मतत्त्वज्ञोऽप्यभुञ्जानो न तृप्यतीति विद्यामात्रसाधनवादिनामृषीणामिदं विदितम् अतो भोजनार्थमप्यवश्यं कर्म कार्यमिति सर्वथा कर्मत्यागोऽशक्यः तद्वक्ष्यति गीतासु—'नहि कश्चित्क्षणमपि' इति ॥ ६ ॥ स्वमतं स्फुटयति । या वै विद्या आत्मतत्त्वज्ञानानि कर्म साधयन्ति कर्मसिद्धिं न प्रतिरुन्धन्ति [ प्रतिबन्धकत्वोक्तिः ] तासां फलं मोक्षरूपं नेतरासां कर्मविरोधिनीनाम् । तत्त्वज्ञानमात्रसाधनवादापेक्षया कर्मसाधनवादे दृष्टानुरोधं दर्शयति—तत्रेह लोके दृष्टफलं न ज्ञानमात्रं यतः पीत्वोदकं शाम्यति सुखीभवति तृष्णयार्तः ॥ ७ ॥ उपसंहरति—सोऽयं विधीयते इति विधिः दैविकोऽर्थः स कर्मणैव । सहार्थे तृतीया कर्मसहितः । तत्तस्मात्तत्र विधौ कर्मापि वर्तते कर्तव्यत्वेनास्ति । अस्य कर्मणोऽन्यदेव दुर्बलस्य कर्मबलहीनस्य ॥ ८ ॥

[ लक्षा० ] नाभुञ्जानो भक्ष्यभोज्यस्येत्यत्र भोजनविषयज्ञानवत् भोजनकर्मवच्च ज्ञानकर्मणोरुभयोरप्यावश्यकतेति भावः ॥ ६ ॥

६ ख. नचाभुंजानो । ञ. नपीदं विदितं । ८ ख. विहितोवै विधात्रा प्रवर्तते संजय कर्मणैव' । छ. सद्वर्तते; ञ. तद्वर्तते । ९ ञ. अतन्द्रितः शश्वदु' ।

मासार्धमासानथ नक्षत्रयोगा-
नतन्द्रितश्चन्द्रमाश्चाभ्युपैति ।
अतन्द्रितो दहते जातवेदाः
समिद्ध्यमानः कर्म कुर्वन् प्रजाभ्यः ॥ १० ॥
अतन्द्रिता भारमिमं महान्तं
बिभर्ति देवी पृथिवी बलेन ।
अन्तन्द्रिताः शीघ्रमपो वहन्ति
संतर्पयन्त्यः सर्वभूतानि नद्यः ॥ ११ ॥
अतन्द्रितो वर्षति भूरितेजाः
सन्नादयन्नतरिक्षं दिशश्च ।
अतन्द्रितो ब्रह्मचर्यं चचार
श्रेष्ठत्वमिच्छन्बलभिद्देवतानाम् ॥ १२ ॥
हित्वा सुखं मनसश्च प्रियाणि
तेन शक्रः कर्मणा श्रैष्ठ्यमाप ।
सत्यं धर्मं पालयन्नप्रमत्तो
दमं तितिक्षां समतां प्रियं च ॥ १३ ॥
एतानि सर्वाण्युपसेवमानः
स देवराज्यं मघवान्प्राप मुख्यम् ।
बृहस्पतिर्ब्रह्मचर्यं चचार
समाहितः संशितात्मा यथावत् ॥ १४ ॥
हित्वा सुखं प्रतिरुद्ध्येन्द्रियाणि
तेन देवानामगमद्गौरवं सः ।
तथा नक्षत्राणि कर्मणाऽमुत्र भान्ति
रुद्रादित्या वसवोऽथापि विश्वे ॥ १५ ॥
यमो राजा वैश्रवणः कुबेरो
गन्धर्वयक्षाप्सरश्च सूत ।
ब्रह्मविद्यां ब्रह्मचर्यं क्रियां च
निषेवमाणा ऋषयोऽमुत्र भान्ति ॥ १६ ॥
जानन्निमं सर्वलोकस्य धर्मं
विप्रेन्द्राणां क्षत्रियाणां विशां च ।
स कस्मात्त्वं जानतां ज्ञानवान्सन्
व्यायच्छसे सञ्जय कौरवार्थे ॥ १७ ॥
आम्नायेषु नित्यसंयोगमस्य
तथाऽश्वमेधे राजसूये च विद्धि ।
संयुज्यते धनुषा वर्मणा च
हस्त्यश्वाद्यै रथशस्त्रैश्च भूयः ॥ १८ ॥
ते चेदिमे कौरवाणामुपाय-
मवगच्छेयुरवधेनैव पार्थाः ।
धर्मत्राणं पुण्यमेषां कृतं स्या-
दार्ये वृत्ते भीमसेनं निगृह्य ॥ १९ ॥
ते चेत्पित्र्ये कर्मणि वर्तमाना
आपद्येरन् दिष्टवशेन मृत्युम् ।
यथाशक्त्या पूरयन्तः स्वकर्म
तदप्येषां निधनं स्यात्प्रशस्तम् ॥ २० ॥

---

[ नील० ] व्यायच्छसे निग्रहं करोषि ॥ १७ ॥ आम्नायेष्विति धर्मः शौर्यं च युधिष्ठिरे पुष्कलमस्तीति नायमन्येन शिक्षणीयो जेतुं वा शक्य इत्यर्थः ॥ १८ ॥ कौरवाणाम् अवधेन उपायं राज्यप्राप्ताविति शेषः एषाम् एतैः भीमसेनम् आर्ये वृत्ते अहिंसायां निगृह्य पुण्यमेव कृतं स्यात् ॥ १९ ॥ पित्र्ये कर्मणि क्षात्रधर्मे युद्धे पूरयन्तः पालयन्तः ॥ २० ॥

[ अर्जु० ] भूरितेजा इन्द्रः ॥ १२ ॥ गौरवं गुरुभावम् ॥ १५ ॥ व्यायच्छसे व्याप्रियसे ॥ १७ ॥ आम्नायेषु वेदेषु ॥ १८ ॥ कौरवाणामवधेनेत्यन्वयः । उपायान् जीवनोपायान् भीमसेनं निगृह्य निवार्य स हि नानुमन्यते संधिमिति ॥ १९ ॥ पित्र्ये पितामहाद्याचरिते दिष्टवशेन दैववशेन ॥ २० ॥

[ सर्व० ] वर्षति भूरितेजाः सूर्य इति 'आदित्याज्जायते वृष्टिः' इति ॥ १२ ॥ देवानां देवविषये गौरवं गुरुत्वमगमत् ॥ १५ ॥ व्यायच्छसे उद्यमी भवसि कौरवार्थे वक्तुम् ॥ १७ ॥ आम्नायेषु वेदाभ्यासेषु संयोगः । एतेनार्द्धेन धर्मोद्योगो दर्शितः । संयुज्यते इत्यादिना शस्त्राभ्यासः । तदेतत् धार्मिकतया न हिंसां करोति, क्षत्रियतया तु शत्रून् हन्त्येवेति दर्शयितुम् ॥ १८ ॥ कौरवाणामवधेनेत्यन्वयः । उपायान् जीवनस्य साधनानीति यावत् । भीमसेनं तन्मारणप्रवृत्तं निगृह्य स्थापयित्वा आर्ये वृत्ते अहिंसायाम् ॥ १९ ॥ ते पार्थाः पित्र्ये पित्राचरिते युद्धे ॥ २० ॥

[ लक्षा० ] ते चेदिमं कौरवाणामित्यत्र उपायं सामाख्योपायम् । भैमसेनाभिगृह्येत्यत्र भीमसेनासंबन्धिनो राज्ञः निगृह्य नितरामनुगृह्य अनाशयित्वेत्यर्थः ॥ १९ ॥

---

११ ज. 'घ्रमापो । १२ ख. द्विवेच । ख. प्रतिदेवतानाम् । १३ ज. ज्यैष्ठ्यमाप । सत्यधर्मौ । १४ ज. प्राप्य । १७ ज. ब्राह्मणानां । १८ ख. हस्त्याणे रथशब्दैश्च । १९ ख. म. उपायान्नाधिगच्छेयुरवर्षि । ख. धर्मं । २० ज. तदाप्येषां ।

उताहो त्वं मन्यसे शाम्यमेव
राज्ञां युद्धे वर्तते धर्मतन्त्रम् ।
अयुद्धे वा वर्तते धर्मतन्त्रं
तथैव ते वाचमिमां शृणोमि ॥ २१ ॥
चातुर्वर्ण्यस्य प्रथमं संविभाग-
मवेक्ष्य त्वं सञ्जय स्वं च कर्म ।
निशम्याथो पाण्डवानां च कर्म
प्रशंस वा निन्द वा या मतिस्ते ॥ २२ ॥
अधीयीत ब्राह्मणो वै यजेत
दद्यादीयात्तीर्थमुख्यानि चैव ।
अध्यापयेद्याजयेच्चापि याज्यान्
प्रतिग्रहान्वा विहितान्प्रतीच्छेत् ॥ २३ ॥
तथा राजन्यो रक्षणं वै प्रजानां
कृत्वा धर्मेणाप्रमत्तोऽथ दत्त्वा ।
यज्ञैरिष्ट्वा सर्ववेदानधीत्य
दारान्कृत्वा पुण्यकृदावसेद्गृहान् ॥ २४ ॥
स धर्मात्मा धर्ममधीत्य पुण्यं
यदिच्छया व्रजति ब्रह्मलोकम् ।
वैश्योऽधीत्य कृषिगोरक्षपण्यै-
र्वित्तं चिन्वन्पालयन्नप्रमत्तः ॥ २५ ॥
प्रियं कुर्वन्ब्राह्मणक्षत्रियाणां
धर्मशीलः पुण्यकृदावसेद्गृहान् ।
परिचर्या वन्दनं ब्राह्मणानां
नाधीयीत प्रतिषिद्धोऽस्य यज्ञः ।
नित्योत्थितो भूतयेऽतन्द्रितः स्या-
देवं स्मृतः शूद्रधर्मः पुराणः ॥ २६ ॥

[ नील० ] शाम्यमेव शमः कार्य एवेति मन्यसे तर्हि धर्मतन्त्रं धर्मानुष्ठानं युद्धपक्षेऽस्ति उत अयुद्धपक्षे तयोर्मध्ये यदेव वक्ष्यसि तथैव ते वाचं शृणोमि करिष्यामीत्यर्थः ॥ २१ ॥ ननु क्षत्रधर्मलोपेऽपि गोत्रवधो न कर्तव्य इत्याशङ्क्याह—चातुर्वर्ण्यस्येत्यादिना ॥ २२ ॥ प्रतीच्छेत् प्रतिगृह्णीयात् ॥ २३ ॥ सः क्षत्रियः अधीत्य प्राप्य यदिच्छया यस्य धर्मस्य इच्छया बलेन ब्रह्मलोकं गच्छति । नो चेज्जनकादिवदिहैव कृतकृत्यो भवतीत्यर्थः भोगमोक्षकरः क्षात्रो धर्मो दुस्त्यज इति भावः ॥ २५ ॥ नाधीयीत वेदाध्ययनं न कुर्यात् यज्ञः श्रौतः स्मार्तश्च प्रतिषिद्धः । तस्माच्छूद्रो यज्ञेऽनवक्लृप्त इति श्रुतेः ॥ २६ ॥

[ अर्जु० ] उताहो त्वं मन्यसे सर्वमेव राज्ञां युद्धं वर्तते धर्मतन्त्रम् । अयुद्धं वा वर्तते धर्मतन्त्रं तथैव ते वाचमिमां शृणोमि । चातुर्वर्ण्यस्य प्रथमं संविभागमवेक्ष्य त्वं संजय स्वं च कर्म । निशम्याथो पाण्डवानां स्वकर्म प्रशंस वा निन्द यथा मतिस्ते । पुनराह वासुदेवः संजयम्—उताहो अथवा त्वं मन्यसे यदस्मन्मतमपहाय तद्ब्रूहि यथैव त्वं ब्रूषे तथैवाहं शृणोमि ते वाचमिति उच्यमानां, कस्मिन्नर्थे वाक् श्रोतव्या तत्राह—राज्ञामिति । राज्ञां क्षत्रियाणां युद्धं धर्मतन्त्रं युद्धं प्रधानं धर्मं उतायुद्धमिति । अत्र संशये त्वमेव निश्चयं ब्रूहीत्यर्थः ॥ २१ ॥ किमनेन निर्णयेनेत्याह—चातुर्वर्ण्यस्येत्यादि । चतुर्णां वर्णानां समाहारः चातुर्वर्ण्यं स्वार्थे ष्यञ् । तस्य विभागं धर्मविभागं, प्रथमं निन्दाप्रशंसयोः—कर्मणा हि चत्वारो वर्णा विहिताः यथा तपस्यादिर्ब्राह्मणस्य, युद्धादिः क्षत्रियस्य, पाशुपाल्यादिर्वैश्यस्य, सेवादि सच्छूद्रस्य—इत्यवेक्ष्य स्वं च कर्म त्वदीयपक्षे दुर्योधनादीनां कर्म द्रौपद्याः सभायां केशकर्षणादि, पाण्डवानां च वनवासादिकं कर्म निशम्य ज्ञात्वा पाण्डवान् प्रशंस निन्द वा यथा मतिस्ते ॥ २१ ॥ इयात् गच्छेत् । विदितात् शुद्धतया ॥ २३ ॥

[ सर्व० ] तथैव ते वाचं शृणोमि ततोऽपि निश्चित्य ब्रूहीत्यर्थः ॥ २१ ॥ स्वमसाधारणं कर्म ॥२२॥ ब्राह्मणानां ब्राह्मणादिवर्णानाम् । प्रतिषिद्धोऽस्य यज्ञो न यज्ञं ब्रूयादित्यर्थः ॥ २६ ॥

[ दुर्घ० ] वासुदेवः सञ्जयमाह 'उताहो त्वं मन्यसे सर्वमेव राज्ञां युद्धं वर्तते धर्मतन्त्रम् । अयुद्धं वा वर्तते धर्मतन्त्रं तथैव ते वाचमिमां शृणोमि ॥ चातुर्वर्ण्यस्य प्रथमं विभागमवेक्षस्व संजय स्वं च कर्म । निशम्याथो पाण्डवानां स्वकर्म प्रशंस वा निन्द यथा मतिस्ते ॥' उताहोऽथवा यत्त्वं मन्यसे अस्मन्मतमपहाय तद्ब्रूहि यथैव त्वं ब्रूषे तथैव शृणोमि ते वाचमिमामुच्यमानाम् । कस्मिन्नर्थे वाक् श्रोतव्या तत्राह—किं राज्ञामिति । क्षत्रियाणां किं युद्धं धर्मतन्त्रं धर्मस्य तन्त्रं प्रधानम् उताहो अयुद्धमिति । अत्र संशये त्वमेव निर्णयं ब्रूहीत्यर्थः ॥२१॥ किमनेन निर्णयेनेत्यत आह—चातुर्वर्ण्यस्येति । चतुर्णां वर्णानां समूहश्चातुर्वर्ण्यम् । तस्य विभागं प्रथमं निन्दाप्रशंसयोः प्राक्, कर्मणा हि चत्वारो वर्णा विभक्ताः तद्यथा धर्मः स्वाध्यायाध्यापनादिर्ब्राह्मणस्य प्रजापालनयुद्धादिः क्षत्रियस्य पाशुपाल्यादिर्वैश्यस्य शुश्रूषादिः शूद्रस्य धर्म इत्यवेक्षस्व । स्वं च कर्म त्वत्समक्षं दुर्योधनादीनां कर्म द्रौप-

२१ ञ. युद्धं । ञ. अयुद्धं वा । छ. यथैव । २२ ञ. मुख कर्म । ख. निशम्य चैषां विहितं स्वकर्म । २३ ञ. दद्यादेया° २६ ञ. 'देवं स्थितः शू° ।

एतान् राजा पालयन्नप्रमत्तो
नियोजयन्सर्ववर्णान्स्वधर्मे ।
अकामात्मा समवृत्तिः प्रजासु
नाधार्मिकाननुरुध्येत कामान् ॥ २७ ॥
श्रेयांस्तस्माद्यदि विद्येत कश्चि-
दभिज्ञातः सर्वधर्मोपपन्नः ।
स तं द्रष्टुमनुशिष्यन्प्रजानां
न चैतद्बुध्येदिति तस्मिन्नसाधुः ॥ २८ ॥
यदा गृध्येत्परभूतौ नृशंसो

धाः सभायां केशाकर्षणादि कर्म पाण्डवानां च प्रति-ज्ञातवनवासाद्याचरणं कर्म निशम्य ज्ञात्वा पाण्डवान्प्रशंस वा निन्द वा त्वं यथा मतिस्ते ॥ २२ ॥

इति श्रीमहा० दुर्घटार्थप्रकाशिन्याख्ययोग०
एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ नील० ] एतानिति यथा सर्वाश्रमपालकत्वाद्गृहस्थस्य श्रैष्ठ्यं तथा सर्ववर्णपालकत्वात् धर्मेण राज्यकरणमपि श्रेष्ठतममित्यर्थः ॥ २७ ॥ तस्मात् राज्ञः श्रेयान् प्रशस्ततरः अभिज्ञातः ज्ञानतः धर्मतश्च यदि कश्चिदस्ति स तं युधिष्ठिरं प्रजानां—कर्मणि षष्ठी—प्रजाः द्रष्टुं राज्यं प्राप्तुमित्यर्थः । अनुशिष्यन् अनुशासितुमिच्छन् एतन्मदुक्तं धर्मजातं युधिष्ठिरेऽस्तीति बुध्येत् । न च तस्मिन्नसाधुः युधिष्ठिरेऽसाधुरधर्मो न चास्तीत्यपि बुध्येत् । यद्वा एवं सत्यपि तस्मिन्ननुशास्तरि राजा साधुर्न इति न अपि तु साधुरेव । यदि तेन इतोऽधिकं ज्ञायते उच्यते च तर्हि तस्यापि वचनं करिष्यत्येवेत्यर्थः । अनुशिष्यात्प्रजानां न चेद्गृध्येदिति तस्मिन्न साध्विति पाठे श्रेयांश्चेत् द्रष्टुं धर्म दर्शयितुं अनुशिष्यात् न चेत्प्रजानां प्रजाः राज्यं न गृध्येदिति हेतोस्तस्मिन् युधिष्ठिरे साध्वेव वर्तेत इति शेषः ॥ २८ ॥ धर्मतस्तु नृशंसत्वात् दुर्योधनो धार्मिकेण राज्ञा वध्य एवेति सूचयन्नाह—यदेत्यादिना सार्द्धेन । परभूतौ परैश्वर्ये नृशंसश्चोरकल्पो राजा विधिप्रकोपात् दैवप्रातिकूल्यात् गृद्धयेत् ततो हेतोः राज्ञां परस्परं युद्धं समभवत् । अनेन युद्धाख्यस्य कर्मण उत्पत्तिरुक्ता ॥ २९ ॥ कर्म युद्धं तत्रोत्पत्तिशिष्टं गुणत्रयमाह—वर्म कवचं शस्त्रं खड्गादि धनुश्चेति । यत इन्द्रेण दस्युवधायैतत्त्रयं उत्पादितमत एतैरेव धर्मो दस्युं दुर्योधनं यदि हन्यात् स एव धर्म इति भावः ॥ ३० ॥ दुर्योधने दस्युत्वं निरूपयति—

२७ ख. एवं राजा । ज. धर्मवृत्तिः । २८ ख. अनुशिष्यात् । छ. ज.

विधिप्रकोपाद्बलमाददानः ।
ततो राज्ञामभवद्युद्धमेत-
त्तत्र जातं वर्म शस्त्रं धनुश्च ॥ २९ ॥
इन्द्रेणैतद्दस्युवधाय कर्म
उत्पादितं वर्म शस्त्रं धनुश्च ॥ ३० ॥
तत्र पुण्यं दस्युवधेन लभ्यते
सोऽयं दोषः कुरुभिस्तीव्ररूपः ।
अधर्मज्ञैर्धर्ममबुध्यमानैः
प्रादुर्भूतः सञ्जय साधु तन्न ॥ ३१ ॥

तत्रेत्यादिना । कुरुभिर्निमित्तभूतैरयं दोषः वञ्चनारूपः प्रादुर्भूतः पारदार्यदोष इव इन्द्रात् ॥ ३१ ॥

[ अर्जु० ] [ वित्वा ( रीत्या ) मत्वा ( मत्या ) चित्तेति च पाठः । संचयं कृत्वा । ? ] तस्मात् युधिष्ठिरात् विद्येत भवेत् अभिज्ञातः ज्ञानवान् नचेत् गृध्येत् परधनलोभं च न कुर्यात् न च परधनलोभमात्रेण तस्मिन् राज्ञि यथोक्तविशेषणे न साधुः ॥ २८ ॥ अनेन परद्रव्यापहरणाय प्रयुक्तेन यः प्रकोपस्तस्मात् बलं हस्त्यश्वादि आविदानो मेलयन् ॥ २९ ॥

[ सर्व० ] श्रेयांस्तस्माद्युधिष्ठिराद्यदि कश्चिद्विद्येत अभिज्ञातोऽभिज्ञः सोऽपि न चेद्गृद्धयेत् परधनमभिलषेत् न च तस्मिन्ननुशासितरि असाधु पापमस्तीति शेषः । स एव तं युधिष्ठिरं द्रष्टुं क्षत्रधर्ममनुशिष्यात् शिक्षयेत् प्रजानां मध्ये ॥ २८ ॥ यदा गृद्धयेत् । दुर्योधनः शत्रुभूतः नृशंसो यदास्य धने गृद्धयेत् अभिलषेत् विधिर्दैवं तत्कोपात् वैमुख्यात् बलं सामर्थ्यम् अस्याविदानोऽजानन् अस्मिन्नबलवत्त्वमारोप्येत्यर्थः । अभवद्युद्धं युद्धारम्भः । अस्य तु तत्र धर्मशस्त्रमेव धनुर्जातम्, न तु अधर्महेतुः । परेणाभिभवे क्षत्रियेण धनुर्ग्रहस्यैव कार्यत्वात् ॥२९॥ दस्युवधाय चौरवधाय एतत्कर्म युक्तम् अत इन्द्रेणापि कृतत्वाद्धर्ममेवैतत् ॥ ३० ॥ दुर्योधनस्तु चौर एवेत्यर्थः ॥ ३१ ॥

[ लक्षा० ] सतां दुष्टानित्यत्र सतामर्थे इति अनेन प्रकारेण वर्तमाने तस्मिन् राज्ञि असाधु अमंगं न गृह्येद्गौ नाकाङ्क्षेत् (?) ॥ २८ ॥ विधिप्रकोपाद्विधिमित्यत्र विधिर्विधाने दैवेपि इत्यभिधानात् विधिना परकृतसेनाविधानेन जातप्रकोपाद्विधिं स्वभटान् प्रति एवं कुरु एवं कुर्विति कर्तव्यार्थोपदेशम् आदधानः कुर्वन् ॥ २९ ॥

नचेद्गृध्येदिति । ३० ख. माविदानः । ख. म. युक्तं धर्मशास्त्रं धनुश्च ।

तत्र राजा धृतराष्ट्रः सपुत्रो
धर्म्यं हरेत्पाण्डवानामकस्मात् ।
नावेक्षन्ते राजधर्मं पुराणं
तदन्वयाः कुरवः सर्व एव ॥ ३२ ॥
स्तेनो हरेद्यत्र धनं ह्यदृष्टः
प्रसह्य वा यत्र हरेत दृष्टः ।
उभौ गर्ह्यौ भवतः सञ्जयैतौ
किं वै पृथक्त्वं धृतराष्ट्रस्य पुत्रे ॥ ३३ ॥
सोऽयं लोभान्मन्यते धर्ममेतं
यमिच्छति क्रोधवशानुगामी ।
भागः पुनः पाण्डवानां निविष्ट-
स्तं नः कस्मादाददीरन्परे वै ॥ ३४ ॥
अस्मिन्पदे युध्यतां नो वधोऽपि
श्लाघ्यः पित्र्यं परराज्याद्विशिष्टम् ।
एतान् धर्मान्कौरवाणां पुराणा-
नाचक्षीथाः सञ्जय राजमध्ये ॥ ३५ ॥
एते मदान्मृत्युवशाभिपन्नाः
समानीता धार्तराष्ट्रेण मूढाः ।
इदं पुनः कर्म पापीय एव
सभामध्ये पश्य वृत्तं कुरूणाम् ॥ ३६ ॥
प्रियां भार्यां द्रौपदीं पाण्डवानां
यशस्विनीं शीलवृत्तोपपन्नाम् ।
यदुपैक्षन्त कुरवो भीष्ममुख्याः
कामानुगेनोपरुद्धां व्रजन्तीम् ॥ ३७ ॥
तं चेत्तदा ते सकुमारवृद्धा
अवारयिष्यन् कुरवः समेताः ।
मम प्रियं धृतराष्ट्रोऽकरिष्यत्
पुत्राणां च कृतमस्याभविष्यत् ॥ ३८ ॥
दुःशासनः प्रातिलोम्यान्निनाय
सभामध्ये श्वशुराणां च कृष्णाम् ।
सा तत्र नीता करुणं व्यपेक्ष्य
नान्यं क्षत्तुर्नाथमवाप किंचित् ॥ ३९ ॥
कार्पण्यादेव सहितास्तत्र भूपा
नाशक्नुवन्प्रतिवक्तुं सभायाम् ।
एकः क्षत्ता धर्म्यमर्थं ब्रुवाणो
धर्मं बुद्ध्वा प्रत्युवाचाल्पबुद्धिम् ॥ ४० ॥

---

[ नील० ] धर्म्यं धर्मादागतं पित्र्यं राज्यं तदन्वया-स्तदनुसारिणः ॥ ३२ ॥ पृथक्त्वं स्तेनादन्यत्वम् ॥ ३३ ॥ एतं छलेन राज्यापहारं निविष्टः वनवासादूर्ध्वं राज्यं प्राप्य-मिति कौरवेषु न्यासरूपेण स्थितः तं भागं नः अस्माकं परे कस्मात् आददीरन् गृहीतवन्तः ॥ ३४ ॥ पदे पदनीये अवश्यप्राप्ये भागे निमित्ते ॥ ३५ ॥ कामानुगेन रजसा उपरुद्धां गृहकर्मतो निरुद्धाम् । पाठान्तरे रजसा उपरुद्धं यथा स्यात्तथा व्रजन्तीम् ॥ ३७ ॥ तं दुःशासनं यद्यवार-यिष्यत् तदा मम प्रियं अकरिष्यत् अस्य पुत्राणां च दुर्यो-धनादीनां प्रियं कृतमभविष्यत् । दुःशासनस्यानिवार-णान्मत्प्रियस्याकरणाच्च तत्पुत्राणां नाशो भविष्यतीति तत्त्वोक्तिः ॥ ३८ ॥ प्रातिलोम्यात् अक्रमेण श्वशुराणां मध्ये कृष्णां सभां निनायेति संबन्धः किंचित्करुणं व्यपेक्ष्य दीनं यथा स्यात्तथा किंचिदालोच्येत्यर्थः क्षत्तुरन्यं नाथं रक्षितारं न अवाप ॥ ३९ ॥ कार्पण्यात् दैन्यात् ॥ ४० ॥

[ अर्जु० ] किं पृथक्त्वमिति । कुतो दृष्टाददृष्टाद्वा स्तेनात्पृथक्त्वमपि तु न कुतो भेद इति भावः ॥ ३३ ॥ कामानुगेन रजसा ॥ ३७ ॥ कृतं सुकृतम् ॥ ३८ ॥ प्रातिलोम्यात् हठात् । करुणं सदयम् । क्षत्तुः विदुरात् ॥ ३९ ॥ धर्ममेतं (?) कौरवाणामिति शेषः ॥ ४० ॥

[ सर्व० ] तदेव दर्शयति—स्तेन इति । उभौ गर्ह्यौ निन्द्यौ । न तु पश्यतो हरतीति न चौर इत्यर्थः । किं पृथक्त्वं को भेदो दृष्टचौरादपि तु चौर एव स इत्यर्थः ॥ ३३ ॥ धर्ममिच्छति दुर्योधनः पाण्डवभागादानरूपम् ॥ ३४ ॥ अस्मिन् पैतृकराज्ये पदे लक्ष्ये न तु परराज्यं लक्ष्यीकृत्य । तदुक्तं पितृराज्यं परराज्याद्विशिष्टं परराज्यादाने परस्वग्रहणदोषात् ॥ ३५ ॥ ये समानीतास्तेषां राज्ञां मध्य इति समासस्थराजमध्यपदेनान्वयः ॥ ३६ ॥ कामानु-गेन कामिना दुःशासनेनोपरुद्धां धृताम् ॥ ३७ ॥ पुत्राणां च कृतं कार्यम् ॥ ३८ ॥ प्रातिलोम्यात् प्रातिकूल्यात् बलादिति यावत् ॥ ३९ ॥ कार्पण्याद्बेतनलोभात् ॥ ४० ॥

[ लक्षा० ] स्तेनो हरेदित्यत्र यत्र यस्य राज्ञः देशे प्रनष्टः नश् अदर्शन इति धातोः प्रकर्षेणादर्शनं प्राप्तः उभा-वेतौ राजानौ किं पृच्छसे धृतराष्ट्रस्य पुत्र इत्यत्र धृतराष्ट्रस्य पुत्र इति विषयसप्तमी ॥ ३३ ॥ भागः पुनरित्यत्र पाण्ड-वानां भागः निविष्टः कौरवराज्ये प्रविष्टः । परे पाण्डवाः

---

३४ ख. योऽयं लोभा° । ३५ ज. तस्मिन्पदे । ३६ छ. ख. ज. येते मन्दा मन्युवशाभि° । ज. कर्मणा पापमेव । ३७ स. यत्प्रैक्षन्त । ख. °नावरुद्धां वदन्तीम् । ३८ ज. तांचेत्त° । ज. आवार° । ३९ स. करुणान्यवोचत् ।

अबुद्ध्वा त्वं धर्ममेतं सभाया-
मथेच्छसे पाण्डवस्योपदेष्टुम् ।
कृष्णा त्वेतत्कर्म चकार शुद्धं
सुदुष्करं तत्र सभां समेत्य ॥ ४१ ॥
येन कृच्छ्रात्पाण्डवानुज्जहार
तथाऽऽत्मानं नौरिव सागरौघात् ।
यत्राब्रवीत्सूतपुत्रः सभायां
कृष्णां स्थितां श्वशुराणां समीपे ॥ ४२ ॥
न ते गतिर्विद्यते याज्ञसेनि
प्रपद्य दासी धार्तराष्ट्रस्य वेश्म ।
पराजितास्ते पतयो न सन्ति
पतिं चान्यं भाविनि त्वं वृणीष्व ॥ ४३ ॥
यो बीभत्सोर्हृदये प्रोत आसी-
दस्थिच्छिन्दन्मर्मघाती सुघोरः ।
कर्णाच्छरो वाङ्मयस्तिग्मतेजाः
प्रतिष्ठितो हृदये फाल्गुनस्य ॥ ४४ ॥
कृष्णाजिनानि परिधित्समानान्
दुःशासनः कटुकान्यभ्यभाषत् ।
एते सर्वे षण्ढतिला विनष्टाः
क्षयं गता नरकं दीर्घकालम् ॥ ४५ ॥
गान्धारराजः शकुनिर्निकृत्या
यदब्रवीत् द्यूतकाले स पार्थम् ।
पराजितो नन्दनः किं तवास्ति
कृष्णया त्वं दीव्य वै याज्ञसेन्या ॥ ४६ ॥
जानासि त्वं सञ्जय सर्वमेतत्
द्यूते वाक्यं गर्ह्यमेवं यथोक्तम् ।
स्वयं त्वहं प्रार्थये तत्र गन्तुं
समाधातुं कार्यमेतद्विपन्नम् ॥ ४७ ॥
अहापयित्वा यदि पाण्डवार्थं
शमं कुरुणामपि चेच्छकेयम् ।
पुण्यं च मे स्याच्चरितं महोदयं
मुच्येरंश्च कुरवो मृत्युपाशात् ॥ ४८ ॥
अपि वाचं भाषमाणस्य काव्यां
धर्मारामामर्थवतीमहिंस्राम् ।
अवेक्षेरन् धार्तराष्ट्राः समक्षं
मां च प्राप्तं कुरवः पूजयेयुः ॥ ४९ ॥
अतोऽन्यथा रथिना फाल्गुनेन
भीमेन चैवाहवदंशितेन ।
परासिक्तान्धार्त्तराष्ट्रांश्च विद्धि
प्रदह्यमानान्कर्मणा स्वेन पापान् ॥ ५० ॥

---

॥ ३४ ॥ अस्मिन् पदे अस्मदीयराज्यस्थानविषये पित्र्यः भागः परराज्यात् परेण दत्तराज्यात् ॥ ३५ ॥ एते दुर्योधनसहायार्थमागता राजानः ॥ ३६ ॥ पुत्राणां च कृतमित्यत्र अस्मात् धृतराष्ट्रात् पुत्राणां कृतं शर्म कृतं भविष्यत् अभविष्यत् ॥ ३८ ॥ सहितास्तत्र राज इत्यत्र राजा राट् पार्थिवो नृप इत्यभिधानात् राजः राजानः ॥ ४० ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-
लक्षालंकारे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ नील० ] पाण्डवस्य धर्मम् उपदेष्टुम् इच्छसे हे संजयेति शेषः ॥ ४१ ॥ प्रपद्य गच्छ ॥ ४३ ॥ परिधित्समानान् परिधातुमिच्छतः ॥ ४५ ॥ नन्दन आनन्दयिता कनिष्ठभ्राता ॥ ४६ ॥ विपन्नं नष्टं समाधातुं समीकर्तुम् ॥ ४७ ॥ शकेयं शक्तश्चेत्स्याम् ॥ ४८ ॥ काव्यां शौक्रीं नीतियुक्तामित्यर्थः ॥ ४९ ॥ परासिक्तान् निर्धूतान् संपदा हीनान् ॥ ५० ॥

[ अर्जु० ] अधर्ममेवापलम्भः (?) धर्मबुद्ध्या धर्ममाह । सागरौघात् सागरवेगात् ॥ ४२ ॥ प्रपद्य प्राप्नुहि । दासी सती ॥ ४३ ॥ बीभत्सो जुगुप्सितः प्रोतः निखातः प्रतिष्ठितः कर्णवधपर्यन्तं स्थितः ॥ ४४ ॥ षण्ढतिलाः निष्फलतिलाः ॥ ४५ ॥ काव्यां वर्णनीयां धर्मारामां धर्माश्रयाम् ॥ ४९ ॥ आहवदंशितेन तदथमुद्युक्तेन परासिक्तान् युद्धयज्ञे प्रोक्षितान् ॥ ५० ॥

[ सर्व० ] किं प्रत्युवाचेत्याकाङ्क्षायामाह- धर्ममेनं मयोक्तमबुद्ध्वा त्वं दुर्योधनः पाण्डवस्य उपदेष्टुमिच्छसि ॥ ४१ ॥ भवान् भार्यां हारितवानिति बीभत्सो निन्दितो हृदये फाल्गुनस्य वाक्शरः प्रोतः शित आसीत् । तमब्रवीत् सूतपुत्र इति पूर्वेणान्वयः । क्वचिद्बीभत्सोरिति पाठः । तत्र फाल्गुनस्येति यौगिकार्थे तात्पर्यान्न पौनरुक्त्यम् ॥ ४४ ॥ काव्यां शुक्रनीत्यनुगताम् ॥ ४९ ॥ परासिक्तान् पराक्षिप्तान् ॥ ५० ॥

---

४१ ब. शुद्धिं । ४४ ख. प्रोव आसीदस्थिप्रच्छिन्मर्म॰ । ४५ छ. ज. ॰भाषत । ४६ छ. ज. नकुलः किं । ४८ छ, ज्ञ. चेच्चरेयम् । ज. ॰रंश्चेत्कु॰ ।

४९ ख. समीक्ष्येरन् । ख. समेत्य ।

परजितान्पाण्डवेयांस्तु वाचो
रौद्रा रूक्षा भाषते धार्तराष्ट्रः ।
गदाहस्तो भीमसेनोऽप्रमत्तो
दुर्योधनं स्मारयिता हि काले ॥ ५१ ॥
सुयोधनो मन्युमयो महाद्रुमः
स्कन्धः कर्णः शकुनिस्तस्य शाखा ।
दुःशासनः पुष्पफले समृद्धे
मूलं राजा धृतराष्ट्रोऽमनीषी ॥ ५२ ॥
युधिष्ठिरो धर्ममयो महाद्रुमः
स्कन्धोऽर्जुनो भीमसेनोऽस्य शाखा ।
माद्रीपुत्रौ पुष्पफले समृद्धे
मूलं त्वहं ब्रह्म च ब्राह्मणाश्च ॥ ५३ ॥

वनं राजा धृतराष्ट्रः सपुत्रो
व्याघ्रास्ते वै सञ्जय पाण्डुपुत्राः ।
मा वनं छिन्धि सव्याघ्रं
मा व्याघ्रा नीनशन्वनात् ॥ ५४ ॥
निर्वनो वध्यते व्याघ्रो निर्व्याघ्रं छिद्यते वनम् ।
तस्माद्व्याघ्रो वनं रक्षेद्वनं व्याघ्रं च पालयेत् ॥ ५५ ॥
लताधर्मा धार्तराष्ट्राः शालाः सञ्जय पाण्डवाः ।
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ५६ ॥
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः ।
यत्कृत्यं धृतराष्ट्रस्य तत्करोतु नराधिपः ॥ ५७ ॥
स्थिताः शमे महात्मानः पाण्डवा धर्मचारिणः ।
योधाः समर्थास्तद्विद्वन्नाचक्षीथा यथातथम् ॥ ५८ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनत्रिंशोऽध्यायः ॥ २९ ॥

## त्रिंशोऽध्यायः ३०

हास्तिनपुरं प्रस्थितस्य संजयस्य युधिष्ठिरेण तत्पुरवासिषु ब्राह्मणादिदासपर्यन्तेषु तत्तत्कुशलप्रश्नस्वकुशलनिवेदनयोरन्धादीनां भरणाश्वासने दुर्योधनं प्रति च सर्वकुरूणामैकाधिपत्यकामासिद्धिकथने चोदनम् ॥ १ ॥

**सञ्जय उवाच—**

आमन्त्रये त्वां नरदेवदेव
गच्छाम्यहं पाण्डव स्वस्ति तेऽस्तु ।
कच्चिन्न वाचा वृजिनं हि किंचि-
दुच्चारितं मे मनसोऽभिषङ्गात् ॥ १ ॥
जनार्दनं भीमसेनार्जुनौ च
माद्रीसुतौ सात्यकिं चेकितानम् ।
आमन्त्र्य गच्छामि शिवं सुखं वः
सौम्येन मां पश्यत चक्षुषा नृपाः ॥ २ ॥

**युधिष्ठिर उवाच—**

अनुज्ञातः सञ्जय स्वस्ति गच्छ
न नः स्मरस्यप्रियं जातु विद्वन् ।
विद्मश्च त्वां ते च वयं च सर्वे
शुद्धात्मानं मध्यगतं सभास्थम् ॥ ३ ॥
आप्तो दूतः सञ्जय सुप्रियोऽसि
कल्याणवाक् शीलवांस्तृप्तिमांश्च ।
न मुह्येस्त्वं सञ्जय जातु मत्या
न च क्रुध्येरुच्यमानो दुरुक्तैः ॥ ४ ॥

---

[ नील० ] रौद्राः मर्मच्छिदः रूक्षाः निःस्नेहाः भाषते द्यूतावसानेऽभाषत ॥ ५१ ॥ अहम् ईश्वरः ब्रह्म वेदः ब्राह्मणाश्च धार्तराष्ट्रोच्छेदे एको धृतराष्ट्र एव शोच्यो भवेत् पाण्डवोच्छेदे तु वयं त्रयोऽपि शोच्या भविष्याम इति श्लोकद्वयस्यार्थः । बहूनामुच्छेदो न भविष्यतीति तात्पर्यम् ॥ ५३ ॥ लतेति पाण्डवाश्रयेणैव धार्तराष्ट्राणां जीवनं नान्यथेति भावः ॥ ५६ ॥

इति श्रीनील० उद्योग० भारतभावदीपे एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ अर्जु० ] शाला वृक्षाः ॥ ५६ ॥

इति श्रीमन्म० मर्जुनमि० उद्यो० एकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ सर्व० ] रौद्रा भयदाः । रूक्षाः कर्कशाः ॥ ५१ ॥ ब्रह्म वेदः ॥ ५३ ॥ मा व्याघ्रा, नीनशुः व्याघ्रा यथा न भवन्ति तथा न कुर्वित्यर्थः ॥ ५४ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायामेकोनत्रिंशोऽध्यायः ॥ २९ ॥

[ नील० ] अभिषङ्गात् आवेशात् ॥ १ ॥

[ अर्जु० ] शिवं शुभम् ॥ २ ॥ मध्यगतं मध्यस्थम् ॥ ३ ॥ आप्तः प्रत्ययितः दृष्टिमान् दीर्घदर्शी ॥ ४ ॥

[ सर्व० ] अभिषङ्गात् आवेगात् ॥ १ ॥

---

५५ ब. छेद्यते । ख. वनेन रक्ष्यते व्याघ्रो व्याघ्रं रक्षति काननम् । ५८ ज. समे । ख. योधाः ससिद्धाः । ऊनत्रिंशोऽध्यायः ॥ २९ ॥

१ छ. हे पाण्डव । ख. वोस्तु । ३ ब. न ते स्मराम्यप्रियं; ख. न ते चरे चाप्रियं । ४ ब. कल्याणवाग् । ख. न च क्रुद्धो ह्युच्यमानोपि तथ्यम् ।

न मर्मगां जातु वक्ताऽसि रूक्षां
नोपश्रुतिं कटुकां नोत मुक्ताम् ।
धर्मारामामर्थवतीमहिंस्रा-
मेतां वाचं तव जानीम सूत ॥ ५ ॥
त्वमेव नः प्रियतमोऽसि दूत
इहागच्छेद्विदुरो वा द्वितीयः ।
अभीक्ष्णदृष्टोऽसि पुराहि नस्त्वं
धनञ्जयस्यात्मसमः सखाऽसि ॥ ६ ॥
इतो गत्वा सञ्जय क्षिप्रमेव
उपातिष्ठेथा ब्राह्मणान् ये तदर्हाः ।
विशुद्धवीर्यांश्चरणोपपन्नाः
कुले जाताः सर्वधर्मोपपन्नाः ॥ ७ ॥
स्वाध्यायिनो ब्राह्मणा भिक्षवश्च
तपस्विनो ये च नित्या वनेषु ।
अभिवाद्या वै मद्वचनेन वृद्धा-
स्तथेतरेषां कुशलं वदेथाः ॥ ८ ॥
पुरोहितं धृतराष्ट्रस्य राज्ञ-
स्तथाचार्यानृत्विजो ये च तस्य ।
तैश्च त्वं तात सहितैर्यथार्हं
संगच्छेथाः कुशलेनैव सूत ॥ ९ ॥
अश्रोत्रिया ये च वसन्ति वृद्धा
मनस्विनः शीलबलोपपन्नाः ।
आशंसन्तोऽस्माकमनुस्मरन्तो
यथाशक्ति धर्ममात्रां चरन्तः ॥ १० ॥
श्लाघस्व मां कुशलिनं स्म तेभ्यो
ह्यनामयं तात पृच्छेर्जघन्यम् ।
ये जीवन्ति व्यवहारेण राष्ट्रे
ये पालयन्तो निवसन्ति राष्ट्रे ॥ ११ ॥
आचार्य इष्टो नयगो विधेयो
वेदानभीप्सन् ब्रह्मचर्यं चचार ।
योऽस्त्रं चतुष्पात्पुनरेव चक्रे
द्रोणः प्रसन्नोऽभिवाद्यस्त्वयाऽसौ ॥ १२ ॥
अधीतविद्यश्चरणोपपन्नो
योऽस्त्रं चतुष्पात्पुनरेव चक्रे ।
गन्धर्वपुत्रप्रतिमं तरस्विनं
तमश्वत्थामानं कुशलं स्म पृच्छेः ॥ १३ ॥
शारद्वतस्यावसथं स्म गत्वा
महारथस्यात्मविदां वरस्य ।
त्वं मामभीक्ष्णं परिकीर्तयन्वै
कृपस्य पादौ सञ्जय पाणिना स्पृशेः ॥ १४ ॥
यस्मिन् शौर्यमानृशंस्यं तपश्च
प्रज्ञा शीलं श्रुतिसत्त्वे धृतिश्च ।
पादौ गृहीत्वा कुरुसत्तमस्य
भीष्मस्य मां तत्र निवेदयेथाः ॥ १५ ॥
प्रज्ञाचक्षुर्यः प्रणेता कुरूणां
बहुश्रुतो वृद्धसेवी मनीषी ।
तस्मै राज्ञे स्थविरायाभिवाद्य
आचक्षीथाः सञ्जय मामरोगम् ॥ १६ ॥

---

[ नील० ] उपश्रुतिं वार्तां रूक्षां मर्मगां च नो वक्ताऽसि कटुकां नीरसां मुक्ताम् अप्रकृतां कार्यहीनां वा ॥ ५ ॥ चरणं ब्रह्मचर्येणाध्ययनम् ॥ ७ ॥ अश्रोत्रियाः अत्रैवर्णिकाः शूद्रादयः वृद्धत्वाच्च धर्ममात्रां धर्मलेशं चरन्तः ॥ १० ॥ श्लाघस्व स्तुहि पूर्वं जघन्यं पश्चात्तेभ्यस्तेषाम् अनामयं पृच्छेः व्यवहारेण वाणिज्यादिना पालयन्तः स्थानाधिकारिणः ॥ ११ ॥ चतुष्पात् मन्त्र उपचारः प्रयोगः संहारश्चेति चत्वारः पादाः अस्येति अस्त्रम् ॥ १२ ॥ गन्धर्वेति सौन्दर्यं संगीतं च तस्मिन् द्योतितम् ॥ १३ ॥

[ अर्जु० ] उपस्तुतिं मिथ्यास्तुतियुक्तां शुक्तामप्रियाम् ॥ ५ ॥ जघन्यं पश्चात् ॥ ११ ॥ इष्टोऽभिमतः अनपगः अस्मत्पक्षादनपगतः । विधेय आयत्तः । नयगो विधेय इति पाठे नयेनोत्तमनीत्या गच्छति मन्त्रोपहारमोक्षसंहाराश्चत्वारः पादाः ॥ १२ ॥ गन्धर्वपुत्रोपनिभः कलाकुशलः ॥ १३ ॥

[ सर्व० ] रूक्षां सर्वथा दुःश्रवाम् । उपस्तुतिमन्ततो रूक्षां स्तुतिं निन्दामिति यावत् । शुक्तामश्लीलाम् ॥ ५ ॥ अश्रोत्रियाः कुब्राह्मणाः वृद्धा वयोधनादिना धर्ममात्रामल्पं धर्मम् ॥ १० ॥ जघन्यमन्ते क्रियाविशेषणं चैतत् । ये व्यवहारेण वणिजः ये पालयन्तो ग्रामाध्यक्षास्तानपि जघन्यं गच्छेरित्यर्थः ॥ ११ ॥ मन्त्रोपचारमोक्षसंहाररूपचतुष्पादस्त्रमाग्नेयादि । पुनः वेदाध्ययनानन्तरम् ॥ १२ ॥ गन्धर्वपुत्रोपमितं गीतज्ञम् ॥ १३ ॥

[ लक्षा० ] विशुद्धकृत्यांश्चरणोपपन्नानित्यत्र चरणमाचरणमाचारः ॥ ७ ॥ योऽस्त्रं चतुष्पादित्यत्र चतुष्पात् चत्वारो धर्मपादा यस्य स तथोक्तः ॥ १२ ॥

---

५ ज. शुकाम् । ७ ख. ब्राह्मणानेतदर्हान् । ब्राह्मणविशेषणानि द्वितीयांतानि । १० छ. यथाशक्त्या । १५ ख. यस्मिन्स्थैर्यं ।

ज्येष्ठः पुत्रो धृतराष्ट्रस्य मन्दो
मूर्खः शठः संजय पापशीलः ।
प्रशास्ता वै पृथिवी येन सर्वा
सुयोधनं कुशलं तात पृच्छेः ॥ १७ ॥
भ्राता कनीयानपि तस्य मन्द-
स्तथाशीलः सञ्जय सोऽपि शश्वत् ।
महेष्वासः शूरतमः कुरूणां
दुःशासनः कुशलं तात वाच्यः ॥ १८ ॥
यस्य कामो वर्तते नित्यमेव
नान्यच्छमाद्भारतानामिति स्म ।
स बाह्लिकानामृषभो मनीषी
त्वयाऽभिवाद्यः सञ्जय साधुशीलः ॥ १९ ॥
गुणैरनेकैः प्रवरैश्च युक्तो
विज्ञानवान्नैव च निष्ठुरो यः ।
स्नेहादमर्षं सहते सदैव
स सोमदत्तः पूजनीयो मतो मे ॥ २० ॥
अर्हत्तमः कुरुषु सौमदत्तिः
स नो भ्राता सञ्जय मत्सखा च ।
महेष्वासो रथिनामुत्तमोऽर्हः
सहामात्यः कुशलं तस्य पृच्छेः ॥ २१ ॥
ये चैवान्ये कुरुमुख्या युवानः
पुत्राः पौत्रा भ्रातरश्चैव ये नः ।
यं यमेषां मन्यसे येन योग्यं
तत्तत्प्रोच्यानामयं सूत वाच्याः ॥ २२ ॥
ये राजानः पाण्डवायोधनाय
समानीता धार्तराष्ट्रेण केचित् ।
वशातयः शाल्वकाः केकयाश्च
तथाऽम्बष्ठा ये त्रिगर्ताश्च मुख्याः ॥ २३ ॥

प्राच्योदीच्या दाक्षिणात्याश्च शूरा-
स्तथा प्रतीच्याः पार्वतीयाश्च सर्वे ।
अनृशंसाः शीलवृत्तोपपन्ना-
स्तेषां सर्वेषां कुशलं सूत पृच्छेः ॥ २४ ॥
हस्त्यारोहा रथिनः सादिनश्च
पदातयश्चार्यसंघा महान्तः ।
आख्याय मां कुशलिनं स्म नित्य-
मनामयं परिपृच्छेः समग्रान् ॥ २५ ॥
तथा राज्ञो ह्यर्थयुक्तानमात्यान्
दौवारिकान् ये च सेनां नयन्ति ।
आयव्ययं ते गणयन्ति नित्य-
मर्थांश्च ये महतश्चिन्तयन्ति ॥ २६ ॥
वृन्दारकं कुरुमध्येष्वमूढं
महाप्रज्ञं सर्वधर्मोपपन्नम् ।
न तस्य युद्धं रोचते वै कदाचि-
द्वैश्यापुत्रं कुशलं तात पृच्छेः ॥ २७ ॥
निकर्तने देवने योऽद्वितीय-
श्छन्नोपधः साधुदेवी मताक्षः ।
यो दुर्जयो देवरथेन संख्ये
स चित्रसेनः कुशलं तात वाच्यः ॥ २८ ॥
गान्धारराजः शकुनिः पार्वतीयो
निकर्तनीयोऽद्वितीयोऽक्षदेवी ।
मानं कुर्वन्धार्तराष्ट्रस्य सूत
मिथ्याबुद्धेः कुशलं तात पृच्छेः ॥ २९ ॥
यः पाण्डवानेकरथेन वीरः
समुत्सहत्यप्रधृष्यान् विजेतुम् ।
यो मुह्यतां मोहयिताऽद्वितीयो
वैकर्तनः कुशलं तस्य पृच्छेः ॥ ३० ॥

[ नील० ] पाण्डवायोधनाय पाण्डवैः सह युद्धाय । तथाऽवन्त्या इत्यपि पाठः ॥ २३ ॥ वृन्दारकं श्रेष्ठम् ॥ २७ ॥ निकर्तनेऽर्थापहारे साध्ये । प्रथमान्तपाठेऽर्थापहर्ता छन्नोपधो गुप्तच्छलः ॥ २८ ॥ मुह्यतां धार्तराष्ट्राणाम् ॥ ३० ॥

[ अर्जु० ] निकर्तने मायायाम् । अद्वितीयः तादृशस्यान्यस्याभावात् । छन्नोपधः गुप्तधर्मादिनिरूपणः ॥ २८ ॥

[ सर्व० ] स्नेहाद्धार्तराष्ट्रेषु अमर्षमसत्क्लेशजनितम् ॥ २० ॥ अर्थेषु युक्तान् नियुक्तान् भाण्डारिकान् ॥ २६ ॥ वृन्दारकं श्रेष्ठम् । अर्थेषु कार्येषु ॥ २७ ॥ निकर्तने शोध्ये ॥ २८ ॥ कामोऽभीष्टः ॥ २९ ॥

[ लक्षा० ] यस्य काम इत्यत्र शमादन्यः कामो न वर्तत इति योजना ॥ १९ ॥ वृन्दारकं कविमित्यत्र वृन्दम् क्षत्रियवृन्दं सौजन्यादिना आ सम्यक् रमयतीति वृन्दारः । स्वार्थे कप्रत्ययः वृन्दार एव वृन्दारकः ॥ २७ ॥

१८ ज. कनीयानस्य मन्दस्तरस्वी । २० ज. °त्तः सततं मतो । २२ ख. यंयमेषां येनयेनातिगच्छेरनामयं मद्वचनेन वाच्याः । २६ ख. गणयन्ति युक्ता । २७ ज. कविमर्थेष्वमूढं । २८ छ. ज. देवितव्येन संख्ये । २९ ख. तस्य पृच्छेः ।

स एव भक्तः स गुरुः स भर्ता
स वै पिता स च माता सुहृच्च ।
अगाधबुद्धिर्विदुरो दीर्घदर्शी
स नो मन्त्री कुशलं तं स्म पृच्छेः ॥ ३१ ॥
वृद्धाः स्त्रियो याश्च गुणोपपन्ना
ज्ञायन्ते नः सञ्जय मातरस्ताः ।
ताभिः सर्वाभिः सहिताभिः समेत्य
स्त्रीभिः सवृद्धाभिरभिवादं वदेथाः ॥ ३२ ॥
कच्चित्पुत्रा जीवपुत्राः सुसम्य-
ग्वर्तन्ते वो वृत्तिमनृशंसरूपाः ।
इति स्मोक्त्वा सञ्जय ब्रूहि पश्चा-
दजातशत्रुः कुशली सपुत्रः ॥ ३३ ॥
या नो भार्याः सञ्जय वेत्थ तत्र
तासां सर्वासां कुशलं तात पृच्छेः ।
सुसंगुप्ताः सुरभयोऽनवद्याः
कच्चिद्गृहानावसथाप्रमत्ताः ॥ ३४ ॥
कच्चिद्वृत्तिं श्वशुरेषु भद्राः
कल्याणीं वर्तध्वमनृशंसरूपाम् ।
यथा च वः स्युः पतयोऽनुकूला-
स्तथा वृत्तिमात्मनः स्थापयध्वम् ॥ ३५ ॥
या नः स्नुषाः सञ्जय वेत्थ तत्र
प्राप्ताः कुलेभ्यश्च गुणोपपन्नाः ।
प्रजावत्यो ब्रूहि समेत्य ताश्च
युधिष्ठिरो वोऽभ्यवदत्प्रसन्नः ॥ ३६ ॥

कन्याः स्वजेथाः सदनेषु सञ्जय
अनामयं मद्वचनेन पृष्ट्वा ।
कल्याणा वः सन्तु पतयोऽनुकूला
यूयं पतीनां भवताऽनुकूलाः ॥ ३७ ॥
अलंकृता वस्त्रवत्यः सुगन्धाः
अबीभत्साः सुखिता भोगवत्यः ।
लघु यासां दर्शनं वाक् च लघ्वी
वेशस्त्रियः कुशलं तात पृच्छेः ॥ ३८ ॥
दास्यः स्युर्या ये च दासाः कुरूणां
तदाश्रया बहवः कुब्जखञ्जाः ।
आख्याय मां कुशलिनं स्म तेभ्यो-
ऽप्यनामयं परिपृच्छेर्जघन्यम् ॥ ३९ ॥
कच्चिद्वृत्तिं वर्तते वै पुराणीं
कच्चिद्भोगान् धार्तराष्ट्रो ददाति ।
अङ्गहीनान् कृपणान्वामनान्वा
यानानृशंस्यो धृतराष्ट्रो बिभर्ति ॥ ४० ॥
अन्धांश्च सर्वान् स्थविरांस्तथैव
हस्ताजीवा बहवो येऽत्र सन्ति ।
आख्याय मां कुशलिनं स्म तेभ्यो-
ऽप्यनामयं परिपृच्छेर्जघन्यम् ॥ ४१ ॥
मा भैष्ट दुःखेन कुजीवितेन
नूनं कृतं परलोकेषु पापम् ।
निगृह्य शत्रून्सुहृदोऽनुगृह्य
वासोभिरन्नेन च वो भरिष्ये ॥ ४२ ॥

---

[नील०] न इति धार्तराष्ट्रान् अन्तर्भाव्योक्तं तेषां भार्या इत्यर्थः सुसंगुप्ता इति कुशलप्रश्नप्रकारकथनम् ॥ ३४ ॥ लघु शीघ्रहारि, वेशस्त्रियो वेश्याः ॥ ३८ ॥ आनृशंस्यं दयामर्हतीत्यानृशंस्यः ॥ ४० ॥ शत्रून् धार्तराष्ट्रान् निगृह्य वः युष्मान् भरिष्ये पोषयिष्ये इति ब्रूया इति शेषः ॥ ४२ ॥

[अर्जु०] [काम्यत इति कामः मामभि मां प्रतिवादः प्रसादोचितमिति शेषः । येन लक्षणेन ?] अन्धांश्च सर्वान् स्थविरान् वृद्धान् तथैव हस्ताजीवा याचकाः ॥ ४१ ॥

[सर्व०] या नो भार्याः न इति सापिण्ड्येन ज्ञातीनामात्मसात्म्यमभिप्रेत्य । सुसंगुप्ता इत्यादि कुशलप्रकारकथनम् ॥ ३४ ॥ स्नुषाः भ्रातृपुत्रभार्याः । प्रजावत्यो भ्रातृजायाः ॥ ३६ ॥ लघु निर्दोषम् ॥ ३८ ॥ वृत्तिमुपचारप्रवृत्तिम् ॥ ४० ॥ हस्ताजीवा हस्तं प्रसार्य याचमानाः कुब्जादयः । जघन्यमन्ते ॥ ४१ ॥ शत्रून् धार्तराष्ट्रान् । भरिष्ये पोष्टास्मि इति ब्रूया इति शेषः ॥ ४२ ॥

[लक्षा०] [माम् । मां प्रति । प्रसन्नः यथा अभिवदेत् अभिमुखः सन् वदेत् तथा कुर्विति योजना अन्तर्भूताः सेनान्तर्विद्यमानाः ] कच्चित्पुत्रा इत्यत्र जीविकादानेन गृहीताः पुत्राः जीवपुत्राः ॥ ३३ ॥ या नो भार्या इत्यत्र भार्याः स्वपतीनामभावे भर्तुं योग्याः

---

३१ म. वो मन्त्री । एकत्रिंशाग्रे ज. वृद्धां गान्धारीं समुत्पेत्य सञ्जय कुन्त्या द्वितीयामभिवाद्य पृच्छेः । इत्यधिकम् । ३२ ख. जानन्ते । ख. मातरोऽत्र । ३४ ज. सुरतयोऽन° । ३५ ज. °शंसरूपाः । ३६ ज. प्रपन्नः । ३७ ज. दृष्ट्वा । ३९ ज. दासीपुत्रा ये च । ४१ म. अन्याश्रयान्यान् ।

सन्त्येव मे ब्राह्मणेभ्यः कृतानि
भावीन्यथो नो बत वर्तयन्ति ।
तान्पश्यामि युक्तरूपांस्तथैव
तामेव सिद्धिं श्रावयेथा नृपं तम् ॥ ४३ ॥
ये चानाथा दुर्बलाः सर्वकाल-
मात्मन्येव प्रयतन्तेऽथ मूढाः ।
तांश्चापि त्वं कृपणान् सर्वथैवा-
स्मद्वाक्यात् कुशलं तात पृच्छेः ॥ ४४ ॥
ये चाप्यन्ये संश्रिता धार्तराष्ट्रा-
न्नानादिग्भ्योऽभ्यागताः सूतपुत्र ।
दृष्ट्वा तांश्चैवार्हतश्चापि सर्वा-
न्संपृच्छेथाः कुशलं चाव्ययं च ॥ ४५ ॥
एवं सर्वानागताभ्यागतांश्च
राज्ञो दूतान् सर्वदिग्भ्योऽभ्युपेतान् ।
पृष्ट्वा सर्वान् कुशलं तांश्च सूत
पश्चादहं कुशली तेषु वाच्यः ॥ ४६ ॥
न हीदृशाः सन्त्यपरे पृथिव्यां
ये योधका धार्तराष्ट्रेण लब्धाः ।
धर्मस्तु नित्यो मम धर्म एव
महाबलः शत्रुनिबर्हणाय ॥ ४७ ॥
इदं पुनर्वचनं धार्तराष्ट्रं
सुयोधनं सञ्जय श्रावयेथाः ।
यस्ते शरीरे हृदयं दुनोति
कामः कुरूनसपत्नोऽनुशिष्याम् ॥ ४८ ॥
न विद्यते युक्तिरेतस्य काचि-
न्नैवंविधाः स्याम यथा प्रियं ते ।
ददस्व वा शक्रपुरीं ममैव
युध्यस्व वा भारतमुख्य वीर ॥ ४९ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

---

दुर्योधनादीनां पत्न्यः सुरतयः सुष्ठुरतिर्यासां ताः सुरतयः ॥ ३४ ॥ खञ्जः एकपादः ॥ ३९ ॥ ध्वस्ताजीवा इत्यत्र ध्वस्त आजीवः जीविका येषां ते । स्थविराः सेविका इत्यर्थः ॥ ४१ ॥

[ नील० ] सन्तीति मे मया कृतानि वत्सरदेयानि नो वर्तयन्ति न चालयन्ति त्वदीया अधिकारिणः तान्यहं यथा यथावत्पश्यामि तथैव तां सिद्धिं त्वद्दत्तं सम्यक् परिपालयामीति दूतद्वारा मां श्रावयेथा इति तं नृपं दुर्योधनं ब्रूहीति शेषः । एतेन ब्राह्मणवृत्तिषु पक्षपातो दुर्योधने च कनिष्ठत्वादाज्ञाप्रतिपालनौचित्यं च दर्शितम् ॥ ४३ ॥ आत्मन्येव प्रयतन्ते न तु कर्तुं शक्नुवन्ति ॥ ४४ ॥ नहीति धर्मबलेनैव जयो भविष्यति न सहायैरित्यर्थः । नित्यः अविनाशिफलः ॥ ४७ ॥ युक्तिः संभावना एतस्यार्थस्य न विद्यते शक्रपुरीम् इन्द्रप्रस्थम् ॥ ४९ ॥

इति उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे त्रिंशोऽध्यायः ॥ ३० ॥

[अर्जु०] ब्राह्मणार्थे कृता( हृता )नि निष्पादितानि भावीनि भविष्याणि वर्तयन्ति वर्तमानानि तान् ब्राह्मणान् तामेव प्रसिद्धामष्टैश्वर्यादिसिद्धिं श्रावयेथाः । इदं ब्राह्मणेभ्यो वर्तनमिति शेषः ॥ ४३ ॥ आत्मन्येव विषये पोषणाय प्रयतन्ते दुःखेन पोषयन्तीत्यर्थः ॥४४॥ अव्ययमहानिं बलस्य ॥४५॥ आगतान् पूर्वमभ्यागतान् (संप्रति?) ॥ ४६ ॥ योधका भीष्मादयः मम तु धर्म एव योधकः । धर्मस्य विशेषमाह—नित्यो धर्म इति । अप्रतिबन्ध इत्यर्थः । पुनर्धर्मविशेषणं—महाबल इति । शत्रुनिबर्हणाय शत्रुनाशाय ॥ ४७ ॥ अयमिति छेदः । हृद् हृदयमात्मानं दुनोति अपरिपूर्णत्वात् । काममेव दर्शयति—कुरून् असपत्नोऽनुशिष्यामिति ॥ ४८ ॥ युक्तिरत्यन्तो हेतुः । शक्रपुरीमिन्द्रप्रस्थं ददस्व वा युध्यस्व ॥ ४९ ॥

इति श्रीमन्महा० मर्जुनमि० मुद्योगपर्वणि त्रिंशोऽध्यायः ॥ ३० ॥

[ सर्व० ] ब्राह्मणेभ्यः कृतानि प्रतिवत्सरदेयानि निश्चितानि तानीदानीं नो वर्तयन्ति न वर्तन्ते, ममासन्निधानात् । तानि भावीनि श्रावयेथाः । ब्राह्मणान् तानि राज्यं लब्ध्वा दास्यामि इति वदिष्यसीत्यर्थः । ये पूर्वं बुद्धिविषयीकृताः तानेव दानाय युक्तरूपान् गौरवेण पश्यामीति तामेव सिद्धिं निश्चयं मम नृपं धृतराष्ट्रं श्रावयेथाः । एतच्छ्रुत्वा यदि कथञ्चित् सोऽपीदानीं तद्देयं तेभ्यो दद्यादिति तात्पर्यम् ॥ ४३ ॥ आत्मन्येव निमित्ते प्रयतन्ते आत्मपोषणमात्रार्थं यत्नवन्तः ॥४४॥ अव्ययमनपचयम् ॥४५॥ आगतान् तत्रैवागत्य स्थितान् । अभ्यागतान् आगतानपि गमिष्यतः ॥ ४६ ॥ नहीदृशा इति । ईदृशा योद्धारः न पृथिव्यामन्ये सन्ति ये तेनानीताः । मम तु धर्म एव शत्रुनिबर्हणाय महाबलः बलवान् सहायः । कथमेतेन तावच्छत्रुमारणमत उक्तं धर्मस्तु नित्यो विना फलदानमनाशी योधास्तु अकृत्वापि फलं नश्यन्त्येवेत्यर्थः ॥४७॥

---

४५ छ. नाश्रिता धार्त° । ४३ ख. पश्याम्यहं यु° । ४६ ज. दृष्ट्वा पूर्वं कुश° । ४९ ख. न वर्तते हेतुरस्याजमीढनैवं करिष्यामि । ज. °कपुर । त्रिंशो० ॥३०॥

## एकत्रिंशोऽध्यायः ३१

युधिष्ठिरेण संजयस्य स्वोक्तार्थस्य धृतराष्ट्रे याथातथ्येन कथने दुर्योधनं प्रति च कुरुवधं परिहर्तुं पञ्चभिरपि ग्रामैः शमाय युद्धाय च शक्तोऽस्मीति कथने चोदनम् ॥ १ ॥

**युधिष्ठिर उवाच—**

उत सन्तमसन्तं वा बालं वृद्धं च सञ्जय ।
उताबलं बलीयांसं धाता प्रकुरुते वशे ॥ १ ॥
उत बालाय पाण्डित्यं पण्डितायोत बालताम् ।
ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् ॥ २ ॥
बलं जिज्ञासमानस्य आचक्षीथा यथातथम् ।
अथ मन्त्रं मन्त्रयित्वा याथातथ्येन हृष्टवत् ॥ ३ ॥
गावल्गणे कुरून् गत्वा धृतराष्ट्रं महाबलम् ।
अभिवाद्योपसंगृह्य ततः पृच्छेरनामयम् ॥ ४ ॥
ब्रूयाश्चैनं त्वमासीनं कुरुभिः परिवारितम् ।
तवैव राजन् वीर्येण सुखं जीवन्ति पाण्डवाः ॥ ५ ॥
तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिन्दम ।
राज्ये तान् स्थापयित्वाऽग्रे नोपेक्षस्व विनश्यतः ॥ ६ ॥
सर्वमप्येतदेकस्य नालं सञ्जय कस्यचित् ।
तात संहत्य जीवामो द्विषतां मा वशं गमः ॥ ७ ॥
तथा भीष्मं शान्तनवं भारतानां पितामहम् ।
शिरसाऽभिवदेथास्त्वं मम नाम प्रकीर्तयन् ॥ ८ ॥
अभिवाद्य च वक्तव्यस्ततोऽस्माकं पितामहः ।
भवता शान्तनोर्वंशो निमग्नः पुनरुद्धृतः ॥ ९ ॥
स त्वं कुरु तथा तात स्वमतेन पितामह ।
यथा जीवन्ति ते पौत्राः प्रीतिमन्तः परस्परम् ॥ १० ॥
तथैव विदुरं ब्रूयाः कुरूणां मन्त्रधारिणम् ।
अयुद्धं सौम्य भाषस्व हितकामो युधिष्ठिरे ॥ ११ ॥
अथ दुर्योधनं ब्रूया राजपुत्रममर्षणम् ।
मध्ये कुरूणामासीनमनुनीय पुनः पुनः ॥ १२ ॥
अपापां यदुपेक्षस्त्वं कृष्णामेतां सभागताम् ।
तद्दुःखमतितिक्षाम मावधीष्म कुरूनिति ॥ १३ ॥

---

तत्र शरीरे स्थितं हृदयं मनस्तेनात्मानं लक्षयति दुनोति सपत्नत्वात् । स तेनालब्धत्वात् ॥ ४८ ॥ युक्तं कारणम् । शक्रप्रस्थमिन्द्रप्रस्थम् ॥ ४९ ॥

इति श्रीमहाभारते उद्योगपर्वणि सर्वज्ञनारायणकृत-टीकायां त्रिंशत्तमोऽध्यायः ॥ ३० ॥

[ लक्षा० ] ये चान्यथेत्यत्र अन्यथा वैपरीत्येन प्रयतन्त इति संबन्धः ॥ ४४ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-लक्षालंकारे त्रिंशोऽध्यायः ॥ ३० ॥

[ नील० ] सन्तं साधुम् असन्तं दुष्टं धाता ईश्वरः ॥ १ ॥ शुक्रं बीजभूतं प्राचीनं कर्म उच्चरन् उद्दीपयन् ॥ २ ॥ सर्वं ब्रह्माण्डं संहत्य एकीभूय ॥ ७ ॥ अतितिक्षाम क्षान्तवन्तो वयम् । तत्र हेतुः मावधी मेति ॥ १३ ॥

[ अर्जु० ] शमस्य कर्तव्यत्वे हेतुमाह—उतेत्यादि उतेति पक्षान्तराभिधाने । उताबलं बलीयांसं धाता प्रकुरुते वशे । उत बालाय पाण्डित्यं पण्डितायोत बालताम् । ददाति सर्वमीशानः पुरस्तात् शुक्र उच्चरन् । पूर्वं भूतं भविष्यं च पुरस्तात् पूर्वमेव शुक्रे रेतसि शरीरनिमित्ते उच्चरन् तत ऊर्ध्वं चरन् कारणभावं चरन् गच्छन् ईशानो ददाति । शुक्रे उच्चरन्निति यत्लोपपक्षे व्याख्यातम् । शुक्रमुच्चरन्निति पाठे पुरस्ताद् गर्भ एव शुक्रमुच्चरन् प्राणप्रवेशं कुर्वन् शेषं सुगमम् ॥ २ ॥ तव प्रसादाद्बालास्ते प्राप्ता राज्यमरिन्दम । राज्ये तान् स्थापयित्वाग्ने नोपेक्षीर्विनशिष्यतः । अर्धं राज्यम् ॥ ६ ॥

[ सर्व० ] पुरस्तात्पूर्वदिशि शुक्रः शुक्रासिद्धा (?) आदित्यः । 'शुक्रम्' इति पाठः, तत्र सारत्वेन गौणवृत्त्या रेतोवाचिन आदित्ये वृत्तिः । उच्चरन्नुद्गृणन् । यथा तैत्तिरीयशाखायाम् "तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत्" इति । [ अतोऽन्यथा देवबाधस्य देवा बोधविजृम्भिताः ] एतेन सूर्यरूपिणं कालपुरुषमेव ईशानत्वेनाह । यद्वक्ष्यति 'कालः पचति भूतानि' इति । अतो बले मा जयाशां दुर्योधन कुरु, बलिनोऽपि कालेन वशीकरणादिति तात्पर्यार्थः ॥ २ ॥ अलं निष्प्रयोजनं विज्ञापनं मृदुपूर्वोक्तिः । अतो यथातथं कृत्यमाचक्षीथाः यदुक्तं निष्ठुरमपि अतोऽन्यैर्मन्त्रयित्वा विदुरादिभिः सह यदभिधृष्टवत् अभिमुखे धाष्ट्र्यवदविनयेनाभिहितमिति यावत् तदपि आचक्षीथा इत्यन्वयः ॥ ४ ॥ तात धृतराष्ट्र । मध्ये अन्यसंबन्धनेऽपि सञ्जयेति पदं ब्रूया इत्यनेनान्वितं बोद्धव्यम् । द्विषतां कामक्रोधादीनाम् ॥ ७ ॥

इति श्रीमहाभारते उद्योग० सर्व० टीकायां एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

---

२ ख. शुक्र उच्च° । ३ ख. अलं विज्ञापनं यस्मात् । ७ ख. मा द्विषद्वशो वशं । ११ ख. मन्त्रधारिणाम् । १३ ख. अपाप्मानमुपेक्षस्त्वं कृष्णामेकां । ख. तद्दुःखं च ति° ।

एवं पूर्वापरान् क्लेशानतितिक्षन्त पाण्डवाः ।
बलीयांसोऽपि सन्तो यत्तत्सर्वं करवो विदुः ॥ १४ ॥
यच्चः प्रव्राजयेः सौम्य अजिनैः प्रतिवासितान् ।
तद्दुःखमतितिक्षाम मावधीष्म कुरूनिति ॥ १५ ॥
यत्कुन्तीं समतिक्रम्य कृष्णां केशेष्वधर्षयत् ।
दुःशासनस्तेऽनुमते तच्चास्माभिरुपेक्षितम् ॥ १६ ॥
अथोचितं स्वकं भागं लभेमहि परंतप ।
निवर्तय परद्रव्याद्बुद्धिं गृद्धां नरर्षभ ॥ १७ ॥
शान्तिरेवं भवेद्राजन् प्रीतिश्चैव परस्परम् ।
राज्यैकदेशमपि नः प्रयच्छ शममिच्छताम् ॥ १८ ॥
अविस्थलं वृकस्थलं माकन्दीं वारणावतम् ।
अवसानं भवत्वत्र किंचिदेकं च पञ्चमम् ॥ १९ ॥
भ्रातृणां देहि पञ्चानां पञ्चग्रामान्सुयोधन ।
शान्तिर्नोऽस्तु महाप्राज्ञ ज्ञातिभिः सह सञ्जय ॥ २० ॥
भ्राता भ्रातरमन्वेतु पिता पुत्रेण युज्यताम् ।
स्मयमानाः समायान्तु पाञ्चालाः कुरुभिः सह ॥२१॥
अक्षतान्कुरुपाञ्चालान् पश्येयमिति कामये ।
सर्वे सुमनसस्तात शाम्याम भरतर्षभ ॥ २२ ॥
अलमेव शमायास्मि तथा युद्धाय सञ्जय ।
धर्मार्थयोरलं चाहं मृदवे दारुणाय च ॥ २३ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

## द्वात्रिंशोऽध्यायः ३२

निशि हास्तिनपुरं प्राप्तेन संजयेन पाण्डवकुशलं धृतराष्ट्राय निवेद्य बहुविधं च तं गर्हयित्वा पाण्डववचनं प्रातः सभायां सर्वे समेताः श्रोतार इत्युक्त्वा स्वावसथगमनम् ॥ १ ॥

**वैशम्पायन उवाच—**

अनुज्ञातः पाण्डवेन प्रययौ संजयस्तदा ।
शासनं धृतराष्ट्रस्य सर्वं कृत्वा महात्मनः ॥ १ ॥
संप्राप्य हास्तिनपुरं शीघ्रमेव प्रविश्य च ।
अन्तःपुरं समास्थाय द्वाःस्थं वचनमब्रवीत् ॥ २ ॥
आचक्ष्व धृतराष्ट्राय द्वाःस्थं मां समुपागतम् ।
सकाशात्पाण्डुपुत्राणां संजयं मा चिरं कृथाः ॥३॥
जागर्ति चेदभिवदेस्त्वं हि द्वाःस्थ
प्रविशेयं विदितो भूमिपस्य ।
निवेद्यमत्रात्ययिकं हि मेऽस्ति
द्वाःस्थोऽथ श्रुत्वा नृपतिं जगाद ॥ ४ ॥

**द्वाःस्थ उवाच—**

संजयोऽयं भूमिपते नमस्ते
दिदृक्षया द्वारमुपागतस्ते ।
प्राप्तो दूतः पाण्डवानां सकाशात्
प्रशाधि राजन् किमयं करोतु ॥ ५ ॥

**धृतराष्ट्र उवाच—**

आचक्ष्व मां कुशलिनं कल्पमस्मै
प्रवेश्यतां स्वागतं सञ्जयाय ।
न चाहमेतस्य भवाम्यकल्पः
स मे कस्माद्द्वारि तिष्ठेच्च सक्तः ॥ ६ ॥

---

[ दुर्घ० ] 'उत बालाय पाण्डित्यं पण्डितायोत बालताम् । ददाति सर्वमीशानः पुरस्ताच्छुक्रमुच्चरन् । ' सर्वं भूतं भविष्यच्च पुरस्ताद्गर्भे एव शुक्रमुच्चरन् प्राणप्रवेशं कुर्वन् । शेषः सुगमः ॥ २ ॥

इति श्रीम० दुर्घटार्थप्र० उद्योग० एकत्रिंशत्तमोऽध्यायः ॥ ३१ ॥

[ लक्षा० ] अलं विज्ञापनायेत्यत्र विज्ञापनाय यदलं शक्यं भवति तदाचक्षीथाः इति योजना ॥ ३ ॥ भारतानाममद्यपमित्यत्र राजानः प्रायो मद्यपा भवन्ति भीष्मस्तु व्रतशीलत्वात् मद्यं न पिबतीति सूचनाय अमद्यपमित्युक्तम्॥८॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-
लक्षालंकारे एकत्रिंशोऽध्यायः ॥ ३१ ॥

[ नाल० ] गृद्धां लुब्धाम् ॥ १७ ॥ अवसानं वसतिस्थानम् ॥ १९ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि
एकत्रिंशोऽध्यायः ॥ ३१ ॥

[ अर्जु० ] अलमेव अलं शक्तः ॥ २३ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृताया-
मुद्योगपर्वणि एकत्रिंशोऽध्यायः ॥ ३१ ॥

[ नील० ] अनुज्ञातः गच्छेत्युक्तः ॥ १ ॥ आत्ययिकम् आवश्यकम् ॥ ४ ॥ कल्पं दृढम् अकल्पः दर्शने असमर्थः सक्तः निरुद्धः ॥ ६ ॥

---

१५ ख. प्रव्राजनं । १६ ख. यत्तत्सभायामाक्रम्य° । ख. °व्यकर्शयत । १७ ख. °द्रव्यकृतां बुद्धिं । १९ ख. आसन्दीं । एकत्रिंशोऽध्यायः ॥ ३१ ॥

३-४ ख. आचक्ष्व मां धृतराष्ट्राय द्वाःस्थः उपागतं पाण्डवानां सकाशात । जागर्तिचेदभिवदेस्त्वंहि क्षत्तः प्रविशेयंवं विदितो भूमिपस्य ॥ ६ ज. °स्यकाल्यः ।

**वैशम्पायन उवाच—**

ततः प्रविश्यानुमते नृपस्य
महद्वेश्म प्राज्ञशूरार्यगुप्तम् ।
सिंहासनस्थं पार्थिवमाससाद
वैचित्रवीर्यं प्राञ्जलिः सूतपुत्रः ॥ ७ ॥

**सञ्जय उवाच—**

सञ्जयोऽहं भूमिपते नमस्ते
प्राप्तोऽस्मि गत्वा नरदेव पाण्डवान् ।
अभिवाद्य त्वां पाण्डुपुत्रो मनस्वी
युधिष्ठिरः कुशलं चान्वपृच्छत् ॥ ८ ॥
स ते पुत्रान्पृच्छति प्रीयमाणः
कच्चित्पुत्रैः प्रीयसे नप्तृभिश्च ।
तथा सुहृद्भिः सचिवैश्च राजन्
ये चापि त्वामुपजीवन्ति तैश्च ॥ ९ ॥

**धृतराष्ट्र उवाच—**

अभिनन्द्य त्वां तात वदामि सञ्जय
अजातशत्रुं च सुखेन पार्थम् ।
कच्चित्स राजा कुशली सपुत्रः
सहामात्यः सानुजः कौरवाणाम् ॥ १० ॥

**सञ्जय उवाच—**

सहामात्यः कुशली पाण्डुपुत्रो
बुभूषते यच्च तेऽग्रेऽऽत्मनोऽभूत् ।
निर्णिक्तधर्मार्थकरो मनस्वी
बहुश्रुतो दृष्टिमान् शीलवांश्च ॥ ११ ॥
परो धर्मात्पाण्डवस्यानृशंस्यं
धर्मः परो वित्तचयान्मतोऽस्य ।
सुखप्रियेऽधर्महीनेऽनपार्थे
नु रुध्यते भारत तस्य बुद्धिः ॥ १२ ॥

---

[ अर्जु० ] पाण्डवसकाशात् संजयः पाण्डवेन अनुज्ञातः प्रययौ । शीघ्रमेव हास्तिनपुरं प्रविश्य द्वाःस्थमब्रवीत् मदागमनं धृतराष्ट्रं निवेदय ॥ ३ ॥ द्वाःस्थ उवाच राजन् पाण्डवानां सकाशात् संजयः उपागतः अयं किं करोतु आज्ञापय ॥ ४ ॥ कल्पं नीरोगम् । अकाल्योऽनवसरप्रदः । सक्तो रुद्धः ॥ ६ ॥

[सर्व०] कल्पं सज्जम् । अकल्पोऽसज्जः [स्वार्थेन] सक्तो वारितः ॥ ६ ॥

[ नील० ] प्राज्ञाः शूराः आर्याः साधवश्च तैर्गुप्तम् ॥ ७ ॥ नप्तृभिः पुत्रस्य पुत्रैः ॥ ९ ॥ अजातशत्रुं मुखेन अभिनन्द्य त्वां प्रति वदामि कच्चिदिति ॥ १० ॥ ते तव अग्रे यत् आत्मनः—पूर्वरूपमार्षे—राज्यधनादिकम् अभूत् तत् बुभूषते प्राप्तुमिच्छति । अग्रे मनोऽभूदिति पाठे अनुद्यूतात् प्राक् यत्त्वया दत्तं तद्बुभूषते इति ज्ञेयम् । निर्णिक्तौ दोषमलहीनौ धर्मार्थौ करोतीति स तथा मनस्वी उदारः दृष्टिमान् क्रान्तदर्शी ॥ ११ ॥ परो मुख्यः आनृशंस्यं दया ततः परोऽमुख्यः वित्तचयात् जात इति शेषः वित्तसाध्यः यज्ञदानादिः । किंच तस्य बुद्धिः अनपार्थे न अपार्थे निष्प्रयोजने सप्रयोजने सुखप्रिये संधिरार्षः । नु निश्चितं रुध्यते अनुरुध्यते । अन्नादिजं देहपुष्टिसुखं पुत्रादि प्रियं च स परोपकारार्थमेवानुरुध्यते न कामकारेणेत्यर्थः । पार्थ इति पाठे तस्य बुद्धिरित्युत्तरान्वयि इतीति शेषः ॥ १२ ॥

[ अर्जु० ] राजा कौरवाणामिति संबन्धः ॥ १० ॥ बुभूषते लिप्सते अग्रे प्रथमं ते तव यन्मनोऽभूत् । मनःशब्देनात्र मनोविनया गुणा लक्ष्यन्ते । अतो मनःसंबन्धि संप्रति तदेव मनो भूयः प्रचुरतरं, गुणाः अत्यन्तमधिकं जाता इति भावः । भूयश्च ते इति वा पाठः । तानेव गुणान् विवृणोति—निर्णिक्तेत्यादि । निर्णिक्तं शुद्धम् ॥ ११ ॥ धर्माद्धेतोः आनृशंस्यमहिंसा वित्तचयात् वित्तपरिग्रहात् भावतोऽभिप्रायात् । भारतेत्यसम्यक् ॥ १२ ॥

[ सर्व० ] अजातशत्रुमभ्येत्याभिनन्द्याहं त्वां वदामि ॥ १० ॥ यत् यत्र शमे ते तव अग्रे पूर्वं मनोऽभूत् तद्बुभूषते प्राप्तुमिच्छति ॥ ११ ॥ धर्मादपि परमधिकम् आनृशंस्यम् अहिंसा, स्वधर्ममपि त्यक्त्वाऽऽनृशंस्यमिच्छतीत्यर्थः । वित्तचर्योद्दिष्टार्थकर्माचरणात् धर्म एव परोऽस्य मतः न धर्महीने किंतु धर्म एवानुरुद्धयते । भावतः स्वभावतः ॥ १२ ॥

[ लक्षा० ] आचक्ष्व मां सुखिनमित्यत्र काल्यं कालः अवकलनं दर्शनं तस्य योग्यमाचक्ष्व ॥ ६ ॥ अभ्येत्य त्वां तात वदामीत्यत्र अजातशत्रुं पार्थमभ्येत्य सुखेन आगतं त्वामिति योग्यपदाध्याहारेण योजना ॥ ९ ॥ भूयश्चाहो यत्र तेऽग्रे मनोऽभूदित्यत्र अग्रे विभागसमये यत्र राज्ये ते मनोऽभूत् भूयश्च तदेव आकाङ्क्षते । अहो बुभूष (?) इति पाठे स्पष्टम् । निर्णिक्तधर्मार्थकरः निर्णिक्तं शोधितं मृष्ट इत्यभिधानात् शुद्धकर्मार्थौ करोतीति स तथोक्तः ॥ ११ ॥ धर्मः परो वित्तचयात्मनोऽस्येत्यत्र वित्तचयात्मनः वित्तसमूहरूपस्य अस्य राज्यस्य मध्ये ॥ १२ ॥

---

११ ख. म. भूयश्चातो यच्च तेऽग्रे मनोऽभूत् । १२ ख. परो धर्मः । ख. धर्महीने न पार्थों' ज. । भावतस्तस्य । ख. म. विद्धि ।

परप्रयुक्तः पुरुषो विचेष्टते
  सूत्रप्रोता दारुमयीव योषा ।
इमं दृष्ट्वा नियमं पाण्डवस्य
  मन्ये परं कर्म दैवं मनुष्यात् ॥ १३ ॥
इमं च दृष्ट्वा तव कर्मदोषं
  पापोदर्कं घोरमवर्णरूपम् ।
यावत्परः कामयतेऽतिवेलं
  तावन्नरोऽयं लभते प्रशंसाम् ॥ १४ ॥
अजातशत्रुस्तु विहाय पापं
  जीर्णां त्वचं सर्प इवासमर्थाम् ।
विरोचतेऽहार्यवृत्तेन वीरो
  युधिष्ठिरस्त्वयि पापं विसृज्य ॥ १५ ॥
हन्तात्मनः कर्म निबोध राजन्
  धर्मार्थयुक्तादार्यवृत्तादपेतम् ।
उपक्रोशं चेह गतोऽसि राजन्
  भूयश्च पापं प्रसजेदमुत्र ॥ १६ ॥
स त्वमर्थं संशयितं विना तै-
  राशंससे पुत्रवशानुगोऽस्य ।
अधर्मशब्दश्च महान्पृथिव्यां
  नेदं कर्म त्वत्समं भारताग्र्य ॥ १७ ॥
हीनप्रज्ञो दौष्कुलेयो नृशंसो
  दीर्घं वैरी क्षत्रविद्यास्वधीरः ।
एवंधर्मानापदः संश्रयेयु-
  र्हीनवीर्यो यश्च भवेदशिष्टः ॥ १८ ॥

[नील० ] परेण ईश्वरेण प्रयुक्तः नियमं निग्रहं मनुष्यात् मनुष्यकारात् दैवम् ऐश्वरं कर्म परं श्रेष्ठं मन्ये ॥ १३ ॥ अवर्णरूपम् अवर्णनीयरूपम् अवाच्यमित्यर्थः यावत्परः उत्कृष्टः शत्रुः कामयते तिष्ठत्वयं कंचित्कालमितीच्छति तावदपरो नरः प्रशंसां लभते ॥ १४ ॥ जीर्णत्वादेव देहे स्थातुमसमर्थाम् अहार्येण स्वाभाविकेन वृत्तेन । यो हि स्वस्वरूपे तिष्ठति तस्य पापं शत्रुष्वेव गच्छति तथा च श्रुतिः "तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्" इति ॥ १५ ॥ हन्त आलोचने सानुग्रहसंबोधने वा उपक्रोशं निन्दाम् अमुत्र परलोके पापं दुःखं नरकमित्यर्थः ॥ १६ ॥ तैर्विना एकाकिना संशयितं दुर्लभमपि आशंससे प्राप्तुम् अस्य तव महान्पृथिव्याम् अधर्मशब्दोऽकीर्तिर्भवेत् ॥ १७ ॥ एवंधर्मान् ईदृशधर्मयुक्तान् पुरुषान् ॥ १८ ॥

[अर्जु० ] परप्रयुक्तः दैवप्रेषितः सूत्रप्रोता सूत्रेण ग्रथिता योषा कन्या । नियमं धर्मरूपम् मन्ये जाने । दैवं प्राक्तनम् । मनुष्यात् पौरुषात् ॥१३॥ कर्मदोषम् दुष्टं कर्म घोरमवर्णरूपमपवादरूपम्। एवं ज्ञात्वाऽपि परो युधिष्ठिरः त्वा त्वां यावत् कामयते स्वांशहेतोः अतिवेलमत्यर्थं तावदयं युधिष्ठिरः प्रशंसां लभते लोके, त्वं तु निन्दां प्राप्नोषि पाण्डवांशस्यादानात् ॥ १४ ॥ निसृज्य निधाय ॥१५॥अङ्ग संबोधने हन्त वा आत्मनः स्वस्य नोवाशब्दः शिरश्चालने । इह जन्मनि कृतं पापं किं परत्र न सज्जते ॥ १६ ॥ त्वत्समं त्वदुचितम् ॥ १७ ॥

[सर्व० ] अन्यो हि पुरुषः परेण दैवेन प्रयुक्तः प्रेरितः विचेष्टते न धर्ममनुरुध्यते । नियमं प्रागुक्तं दैवं कर्म मनुष्यादेतज्जन्मपुरुषकारात् । एकवंशसंभवयोरेव शीलभेदादित्यर्थः ॥ १३ ॥ कर्म दोषवत्कर्म अवर्णरूपम् अवर्णनीयरूपम् अवाच्यम् । न कामयते न मलिनयति । अतिकालं सर्वदा । कर्मेत्यनुवृत्तिः ॥ १४ ॥ तथा युधिष्ठिरः त्वयि पापमकीर्तिं विसृज्य त्यक्त्वा न कदाचिद्व्यथायत इत्याह—अजातशत्रुरिति ॥ १५ ॥ उपक्रोशं निन्दाम् । अमुत्र परलोके नो वा न किं पापं प्रसज्जेत्संदध्यात् । अपि तु प्रसज्जेदेवेत्यर्थः ॥ १६ ॥ अधर्मशब्दोऽकीर्तिः । त्वत्समं त्वद्युक्तम् ॥ १७ ॥ एवंधर्मा एकादशधर्मा भवति स च नापदः संतितीर्षेत् संतरेत् । स्वार्थिकश्छान्दसः ॥ १८ ॥

[दुर्घ० ] *सञ्जयो धृतराष्ट्रं पुनरुवाच 'इमं च दृष्ट्वा तव कर्मदोषं पापोदर्कं घोरमवर्णरूपम् । यावत्परः कामयतेऽतिवेलं तावन्नरोऽयं लभते प्रशंसाम् ।' अस्यार्थः । इमं तव कर्मदोषं जतुगृहदाहं सभायां द्रौपद्याः वस्त्राकर्षणादि अपिश्चार्थः दृष्ट्वा ज्ञात्वा पापोदर्कमधर्मफलानुबन्धिनम् अवर्णरूपमपवादरूपं परवञ्चनीयम् एवं ज्ञात्वाऽपि परो युधिष्ठिरः त्वां यावत्कामयते स्वांशहेतोः अतिवेलमत्यर्थं तावदयं पुरुषो युधिष्ठिरो लोके प्रशंसां लभते अतो गुरुवृत्तितः परतन्त्रं युधिष्ठिरस्य न्यायलब्धेप्यंशे शुश्रूषामेव प्रयुङ्क्ते इति प्रशंसां प्राप्नोति त्वं तु निन्दां प्राप्नोषि न्यायलब्धस्य परांशस्यादानात् । तस्माच्छीघ्रमंशोऽस्य दीयतामिति भावः ॥ १४ ॥

[लक्षा० ] [ †नन्वेवमन्य इत्यत्र यत्र पुरुषे यत्कर्म यथावद्युक्तं भवति तस्य पुरुषस्य तदेव कर्म संपद्यत इति मन्ये

१३ ख. पार्थिवस्य । १४ ख. म. यावन्नरोऽध्यामयते त्रिकाल्यं । १६ ख. म. अङ्गात्मनः । ख. गतोसि घोरं नोचेत्तत्पापं प्रसजेदमुत्र । १८ ख. दीर्घावलोकी । ख. म. संतितीर्षेद्धीनवीर्यो । ख. विशिष्टः । * दुर्घटार्थपुस्तकेष्वियं टीका २३ श्लोकोत्तरं दृश्यते । † २६ श्रेन श्लोकेन सदृशमस्या मूलम् ।

कुले जातो बलवान् यो यशस्वी
बहुश्रुतः सुखजीवी यतात्मा ।
धर्माधर्मौ ग्रथितौ यो बिभर्ति
स ह्यस्य दिष्टस्य वशादुपैति ॥ १९ ॥
कथं हि मन्त्राग्र्यधरो मनीषी
धर्मार्थयोरापदि सम्प्रणेता ।
एवमुक्तः सर्वमन्त्रैरहीनो
नरो नृशंसं कर्म कुर्यादमूढः ॥ २० ॥

तव ह्यमी मन्त्रविदः समेत्य
समासते कर्मसु नित्ययुक्ताः ।
तेषामयं बलवान्निश्चयश्च
कुरुक्षये नियमेनोदपादि ॥ २१ ॥
अकालिकं कुरवो नाभविष्यन्
पापेन चेत्पापमजातशत्रुः ।
इच्छेज्जातु त्वयि पापं विसृज्य
निन्दा चेयं तव लोकेऽभविष्यत् ॥ २२ ॥

ननु इति पदयोजना । पौरुषं कर्मणो हीत्यत्र कर्मणः पौरुषं सामर्थ्यमाहुः । मातुः पितुः सकाशात् कर्मणा सिद्धेन भोजनेन ] शुष्ककर्मैव नालं किं तु हर्येनुग्रहोऽप्यपेक्षित इत्याह—परेति । परप्रयुक्तः परमात्मना प्रयुक्तः मन्ये- वरमित्यत्र मनुष्यात् मनुष्यप्रयत्नात् ॥ १३ ॥ इदं तव कर्म- दोषं च दृष्ट्वा मनुष्यात् कर्म दैवं च वरं मन्ये इति पूर्वे- णान्वयः ॥ १४ ॥ अङ्गात्मन इत्यत्र 'अङ्गेत्यामन्त्रणेऽव्य- यम्' इत्यमरः । अङ्गेति धृतराष्ट्रस्य संबोधनं, विशेषेण सृजन् विसृजन् अमुत्र इह च उपक्रोशं उपक्रोशति रोदितीत्यनेनेति उपक्रोशो दुःखं गतोऽसीति योजना ॥ १६ ॥ एवंधर्मा नापद इत्यत्र एवंधर्मा पूर्वोक्त- पापमेव धर्मो विशेषणं यस्य स तथोक्तः । व्यपायी विशेषेण धर्मार्थयोः सभ्योदितमन्त्राणां च अपायोऽस्या- स्तीति व्यपायी ॥ १८ ॥

[ नील० ] धर्माधर्मौ सत्यानृते ग्रथितौ सत्यं विना- ऽनृतं नास्ति निरधिष्ठानकभ्रमासंभवात् । अनृतं देहं विना च सत्यं ब्रह्म न प्रथते अत उभयं यो धत्ते केवलं ब्रह्म- निष्ठो न भवति स हि स एव दिष्टस्य वशात् भाग्यव- शात् अस्य कुलेजातत्वादिगुणजातस्य—कर्मणि षष्ठी—इदं गुणषट्कमुपैति प्राप्नोति त्वं तु कुलेजातोऽपि केवलमनृ- तोपजीवित्वात् गुणान्तरहीनोऽसीति भावः ॥ १९ ॥ अत एव सत्यामपि संपदि त्वया मौढ्यात् नृशंसं कृतमि- त्याह—कथमिति । मन्त्र एव अग्र्यः श्रेष्ठो येषां ते मन्त्राग्र्याः भीष्मादयः तेषां धरो धर्ता तैरेवम् उक्तरीत्या द्यूतं माकु- र्विन्युक्तः कथं नृशंसं कर्म पाण्डवप्रव्राजनं कुर्यान्न कथ- मपीत्यर्थः ॥ २० ॥ अमी कर्णादयः तेषां कुरुक्षये कुरुक्ष- यनिमित्तम् अयं राज्यं न देयमिति निश्चयः नियमेन उद-

पादि उत्पन्नः ॥ २१ ॥ अकालिकम् अकस्मादेव कुरवो नाभविष्यन् नष्टाः स्युश्चेत् तव पापेन कर्मणा प्रेरितोऽजात- शत्रुः त्वयि पापम् इच्छेत् । नन्वेवं तर्हि तस्य गोत्रवधदोषः स्यादित्याशङ्कयाह त्वयीति । स्वनाशहेतुम् अधर्मं कुर्वति त्वयि चोरे इव पापं निन्दां च विसृज्य राजा निष्पापोऽनिन्द्यश्च स्यादित्यर्थः ॥ २२ ॥

[ अर्जु० ] धर्मार्थयोः प्रणेता विचारयिता ॥ २० ॥ कुलक्षये कुलक्षयनिमित्तं निरयो नरकः वो युष्माकं उदपादि उत्पन्नः संभिरार्षः ॥ २१ ॥ अकालिकं तत्क्ष- णात् नाभविष्यन् मृता भवेयुः । पापेन दुर्योधनकृतेन विसृज्य निधाय ॥ २२ ॥

[सर्व०] सन् कुलेजातइत्यादिविशेषणवान् कथमेवं नृशंसं कर्म त्वत्कृतं कुर्यादित्यन्वयः । ग्रथितौ संवलितौ बिभर्ति [ नेत्रध—एव ] ॥ १९ ॥ अनायम्यमनन्याधीनम् ॥ २० ॥ कुलक्षयार्थे तन्निमित्तं निरयः क्लेशः पाण्डवानां व्यपादि विशेषेणोत्पादितः ॥ २१ ॥ अकालिकम् आसन्नकालिकं तत्करणात् कुरवो नाभविष्यन् । पापेनापकारेण त्वत्पाप- मपकारं कर्तुं त्वयीच्छेत्तदा च तस्य त्वयि पापं विसृज्य निधायापकारं कृत्वा तव येयं निन्दा सा तस्यैषाऽभवि- ष्यदित्यन्वयः ॥ २२ ॥

[ लक्षा० ] कालिकाः मृत्युकालवन्तो न भवन्तीत्य- कालिकाः अकालिका यथा भवन्ति तथा अकालिकमजा- तशत्रुः त्वयि जातु पापं हिंसारूपं पापं विसृज्य अकृत्वा पापे साक्षाद्भूताख्यपापकर्तरि दुर्योधने पापं तदैव हन- नाख्यं पापमिच्छेच्चेत् चरेच्चेत् तदैव कुरवो नाभवि ष्यन् यत् यस्मात्कर्मणः त्वयि निन्दा च । द्यूतं न निवारितवा- निति अकीर्तिश्च तव तवैवाभविष्यत् ॥ २२ ॥

१९ ख. धर्मवान् । ; ज. धनवान । ज. जितात्मा । ज. °दपैति ।२० ख. मात्राग्र्यवरो । ख. म. युक्तः सर्वमन्त्रैश्च हीनो अनायर्थं । २१ ख. तवापीमे । ख. म. कुलक्षयार्थे निरयानुपाती । २२ ख. इच्छेत्पापं त्वयि राजन् । ख. निसृज्य निन्दां चेमामात्मलोकानुरागः ।

किमन्यत्र विषयादीश्वराणां
यत्र पार्थः परलोकं स्म द्रष्टुम् ।
अत्यक्रामत्स तथा संमतः स्या-
न्न संशयो नास्ति मनुष्यकारः ॥ २३ ॥
एतान्गुणान्कर्मकृतानवेक्ष्य
भावाभावौ वर्तमानावनित्यौ ।
बलिर्हि राजा पारमविन्दमानो
नान्यत्कालात्कारणं तत्र मेने ॥ २४ ॥
चक्षुःश्रोत्रे नासिका त्वक् च जिह्वा
ज्ञानस्यैतान्यायतनानि जन्तोः ।
तानि प्रीतान्येव तृष्णाक्षयान्ते
तान्यव्यथो दुःखहीनः प्रणुद्यात् ॥ २५ ॥

[ नील० ] ईश्वराणां देवानां विषयादन्यत्र किं सर्वं देवाधीनमित्यर्थः । यत्र यतः पार्थोऽर्जुनः परलोकं द्रष्टुम् अत्यक्रामत् इमं लोकं सशरीर एव त्यक्तवान् स तादृशः नारदादिवदुभयलोकसंचारयोग्यत्वेन साधूनां संमतोऽपि यदि तथा वनवासेन क्लेशसहः स्यात् तदा मनुष्यकारो नास्तीत्यस्मिन्नर्थे संशयो न ॥ २३ ॥ एतानिति । एतान् शौर्यादीन् गुणान् कर्मकृतान्कर्मानुसारेण वृद्धिह्रासयुक्तान् अवेक्ष्य अत एव भावाभावौ ऐश्वर्यानैश्वर्ये अनित्यौ आगमापायिनौ च अवेक्ष्य बलिराजा पूर्वपूर्वकर्मकारणपारमन्तम् अविन्दमानः सन् कालात् ईश्वरादन्यत्कारणम् अभ्युदयादिहेतुरन्यत्किंचिन्नास्तीति मेने ॥ २४ ॥ अतः सर्वस्य देवायत्तत्वात् तृष्णाक्षयेणैव इन्द्रियप्रीतिः संपादनीया न तु नानायत्नसाध्यतत्तद्विषयसमर्पणेनेत्याह—चक्षुरिति । ननु स्वस्वविषयालाभे तेषां कथं प्रीतिः स्यादित्याशङ्क्य तानि निरोध्यान्येवेत्याह—तानीति । अव्यथः लाभालाभादौ वैषम्यहीनः प्रणुद्यात् स्वस्व गोचरेभ्यो निवर्तयेत् ॥ २५ ॥

[ अर्जु० ] 'किमन्यत्र विषयादीश्वराणां यत्र पार्थः परलोकं ददर्श । अत्यक्रामत् स तथा संमतः स्यादसंशयं नास्ति मनुष्यकारः ॥' यत्र प्रयोजने पार्थः परलोकं स्वर्गं ददर्श तत् किंप्रयोजनम् ईश्वराणां लोकपालानां विषयाद् गोचरादन्यत्र । दिव्यास्त्रहरणं हि तत्, तच्च लोकपालगोचरमेव । अत्यक्रामत् सर्वानतीत्य कृतवान्, एकत्र किरातेन शिवेन संगरः अन्यत्र देवद्विषां निवातकवचानां वधः स पार्थस्तेन तथा प्रकारेण संमतः सम्यक्कृतया मतः लोकपालानां स्यात् । अत्र हेतुमाह—असंशयं यथास्यादित्यर्थः मनुष्यकारः पुरुषकारः दैवमेव पार्थस्यास्त्रप्राप्तौ निमित्तमित्यर्थः । अन्ये व्याचक्षते । अन्यत्र अन्यः किमपि विषयादयं विषयः सामर्थ्यरूपः ईश्वराणां देवानामेव । अत एवार्जुनः परलोकं स्वर्गं ददर्श पश्चादत्यक्रामत् मर्त्य एव मृत्युं, तथा तेनैव शरीरेण संगतः स्यादस्त्रादिभिः युक्तः स्यात् । अन्यत्रशब्दोऽव्यय प्रथमान्तो दृष्टः । न संशयो नास्त्यत्र संशयो मनुष्यकारः पुरुषकारो नास्तीति दैवमेव बलवदिति भावः । अतो दैवसंपन्नत्वात् तवार्जुनो न स्पर्धनीय इति भावः ॥ २३ ॥ एतान् गुणान् पराक्रमादीन् भावाभावौ उत्पत्तिविनाशौ पारमुत्पत्तिविनाशयोः अविन्दमानः अलभमानः कालादीश्वरात् । कर्म वा ईश्वरो वा दैवम् ॥ २४ ॥ आयतनानि करणानि तानि प्रीत्या नैं प्रसज्जेत न सेवेत दुःखानि यस्मात् । अव्यथो नाशव्यथाशून्यः ॥ २५ ॥

[ सर्व० ] किमन्यत्र विषयाद्गोचरात् ईश्वराणां देवानाम् । अयमर्थो देवगोचर एव यत्र पार्थः परलोकं द्रष्टुम् अत्यक्रामत् अतिक्रान्तवान् गत इत्यर्थः । तथा इन्द्रादीनां संमतः प्रत्ययो विषयोऽस्त्रदानादौ स्यात् अभूत् । न संशयो यत्पाण्डवेषु मनुष्यकारः पुरुषकारो नास्ति । न तदिच्छया तेषां कल्याणं किंतु देवगोचरेणैव तेषां कल्याणमित्यर्थः ॥ २३ ॥ एतान् प्रसिद्धतया प्रत्यक्षव्यपदेशः, प्रसिद्धान् धैर्यादिगुणान् । तत्र कर्मकृतत्वे हेतुः भावाभावौ वर्तमानावनित्यौ । भावो भूतिः पुरुषकाराधीन. देहिपुरुषस्य भावो वा नित्यः स्यात् । नापि तच्छत्रोरभावस्यानित्यत्वं स्यात् (?) । पारं कारणान्तरनिश्चयरूपम् । कालादीश्वरात् कर्मानुरूपफलदायिनः ॥ २४ ॥ आयतनानि साधनानि तदेतेषामायत्तमिति तानि दुःखानि दुःखसाधनत्वात् न प्रीत्या प्रसज्जेत न दुःखसाधनेन सह संयोजयेत् । अपि तु प्रणुद्यात् अपनयेत् विषयेभ्यः अव्यथो विषय( वियोग )जदुःखरहितः ॥ २५ ॥

[ दुर्घ० ] पाण्डवेभ्यः समागतः सञ्जयो धृतराष्ट्रं निन्दन्नाह—किमन्यत्र विषयादीश्वराणां यत्र पार्थः परलोकं ददर्श । अत्यक्रामत्स तथा सङ्गतः स्यान्न संशयो नास्ति मनुष्यकारः ॥ अस्यार्थः । किमन्यत्र विषयादयं विषयः सामर्थ्यरूपः ईश्वराणां देवानामेव यदमृत एवार्जुनः परलोकं सुरलोकं ददर्श तथा तेनैव शरीरेण तत्पश्चादत्यक्रामन्मर्त्यमवर्तत तथा तेनैव शरीरेणेश्वरेण सङ्गतः अस्त्रादिभिश्च युक्तः स्यादभवत् । अन्यत्रशब्दोऽव्ययः प्रथमान्तो दृष्टः । न संशयो नास्त्यत्र संशयः नास्ति च मनुष्यकारः

२३ ख. लोकं ददर्श । २५ ख. म. भोगस्यै' । ख. म. प्रीत्या नैव दुःखानि सज्जेतान्यव्यथो दुःखनीतानि नुद्यात् ।

न त्वेवमन्ये पुरुषस्य कर्म
संवर्तते सुप्रयुक्तं यथावत् ।
मातुः पितुः कर्मणाऽभिप्रसूतः
संवर्धते विधिवद्भोजनेन ॥ २६ ॥
प्रियाप्रिये सुखदुःखे च राज-
न्निन्दाप्रशंसे च भजन्त एव ।
परस्त्वेनं गर्हयतेऽपराधे
प्रशंसते साधुवृत्तं तमेव ॥ २७ ॥
स त्वां गर्हे भारतानां विरोधा-
दन्तो नूनं भविताऽयं प्रजानाम् ।
नोचेदिदं तव कर्मापराधात्
कुरून्दहेत्कृष्णवर्त्मेव कक्षम् ॥ २८ ॥
त्वमेवैको जातु पुत्रस्य राजन्
वशं गत्वा सर्वलोके नरेन्द्र ।
कामात्मनः श्लाघनो द्यूतकाले
नागाः शमं पश्य विपाकमस्य ॥ २९ ॥
अनाप्तानां संग्रहात्त्वं नरेन्द्र
तथाऽऽप्तानां निग्रहाच्चैव राजन् ।
भूमिं स्फीतां दुर्बलत्वादनन्ता-
मशक्तस्त्वं रक्षितुं कौरवेय ॥ ३० ॥

---

पुरुषकारो नास्तीति दैवमेव बलवदिति भावः । अतो दैवसंपन्नत्वादर्जुनस्त्वया न स्पर्धनीय इत्यर्थः ॥ २३ ॥

इति श्रीमहा० दुर्घटार्थ० सुयोग० द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[ लक्षा० ] किमन्यत्र विषयादित्यत्र ईश्वराणां समर्थानामर्जुनादीनां विषयात् अन्यत्र किं किं वीर्यमस्ति यत्र यस्मात् मनुष्यकारः मनुष्यान् अधः करोति इति स तथोक्तः ॥२३॥

[ नील० ] एतद्दूषयति—नत्विति । एवं प्राप्ते सति अन्ये आहुः तदेवाह—पुरुषस्येति । संवर्तते सम्यक् फलवत् वर्तते । तदेवाह—मातुरिति । कर्माभावे जन्मवृद्धी न स्यातामित्यर्थः । पाठान्तरं तेनैव स्यातामित्यर्थः ॥२६॥ किंच—नो चेदिति । इदं मया उच्यमानं कर्म पाण्डवेभ्यो राज्यांशप्रदानात्मकं तव नो चेत् संमतमिति शेषः तर्हि तवापराधात् कृष्णवर्त्माग्निः कक्षं यथा दहति एवं कृष्णवर्त्मा कृष्ण एव मार्ग इव सुखप्रापको यस्य स कृष्णवर्त्माऽर्जुनः कुरून् दहेदित्यावृत्त्या योज्यम् ॥ २८ ॥ श्लाघनः आत्मानं कृतार्थं मन्वानः नागाः न गतवानसि ॥ २९ ॥ अनाप्तानां कर्णादीनाम् । आप्तानां विदुरादीनां निग्रहात् दूरीकरणात् ॥ ३० ॥

[ अर्जु० ] पुरुषकारव्यतिरेकेणापि दैवान्वये फलान्वय इत्याह—नन्वेवेति । यथावत् देशकालापेक्षया । मातुः पितुः कर्मणा मैथुनेन अभिप्रसूतः जातः संवर्धते । विधिवद्भोजनेन इति पुरुषकारव्यतिरेकेणापि फलान्वयदर्शनात् पुरुषकारो न कारणम् ॥ २६ ॥ एवं प्रियादिष्वपि दैवमेव कारणमित्याह–प्रियाप्रिये इत्यादि । सम्यक्चरणापराधयोः स्तुतिनिन्दे परस्तत्त्वानभिज्ञः करोति फलं तु तत्रापि दैववशादेव । तथा सति सम्यक्चरणापराधौ व्यर्थौ स्यातामिति चेन्न । एतयोः पुण्यापुण्ययोः भाविनि जन्मनि दैवशब्दवाच्ययोर्निष्पादने फलवत्तोपपत्तेः ॥ २७ ॥ सोऽहं त्वा त्वां गर्हे नो चेद् यदि इदं दैवम् ॥२८॥ जातपुत्रेषु प्रसूतेषु बलं सामर्थ्यं गन्ता प्राप्ता ॥ २९ ॥ अनाप्तानां कर्णादीनां प्रग्रहात् संग्रहात् ॥ ३० ॥

[ सर्व० ] पुरुषकाराभावेऽपि दैवाज्जीवनसिद्धिमाह—नत्वेवमन्य इति । कर्म यथावत् फलानुरूपं न संवर्तते न प्रवर्तते किंतु दैवमेव । तथाहि अभिप्रसूतो जातो मातृपितृकर्मणा स्वचेष्टाव्यतिरेकेऽपि भोजनेन क्षीरपानेन संरक्षते विधिवद्विधिनेव तदनुरूपेण ॥ २६ ॥ प्रियाप्रिये इति सुखव्ययमिति दृष्ट्वा प्रीतिप्रशंसे दुःखव्ययमिति दृष्ट्वाप्रियनिन्दे च भजते तत्त्वविदोऽर्थात् । परस्तु अतत्त्वविदेनमपराधे पुरुषकारहानौ गर्हयते तं च साधुवृत्तं प्रशंसते ॥२७॥ सोऽहं त्वां दैवप्रवर्तितमपि गर्हे भारतानां विरोधादन्तो भवितेत्येतावन्मात्रेण । वस्तुतस्तु दैववशत्वान्न भवान् गर्ह्य इत्यर्थः । यदि दैवमेव कारणं तदान्ते सत्यपि किं मां गर्हयसीत्याह । नो चेन्न यदि इदं कर्म पाण्डवनिस्सारणरूपं तवापराधात् प्रमादाद्भवेत् तदा कुरून् दहेत्, कथमिति शेषः । संभावितनिवारणमपि कर्म प्रमादादुपेक्षमाणो दैवस्य सहकारिभावेन भवानपराध्यतीति । पुरुषकारसहायापेक्षिणो दैवस्य तदभावेऽप्रवृत्तिरित्याशयः ॥ २८ ॥ अजातपुत्रेषु अजातेषु दुर्जातेषु पुत्रेषु वशमधीनत्वं गन्ता गमनशीलः । कामात्मनां पुत्राणां नान्यत् शमादुपशमादस्य विपाकं फलं पश्य ॥ २९ ॥

[लक्षा०] नान्यप्रीत इत्यत्र नान्यप्रीतः हरेरन्येषु विषयेषु प्रीतः । तत्र इन्द्रियेषु मातुः पितुः सकाशात् कर्मणा स्वकर्मणा भोजनेन कर्मणा प्राप्तभोजनेन ॥ २६ ॥ प्रजानामित्यत्र प्रजानां संततीनां नो चेत् संततिक्षयो नोचेत् ॥२८॥ नागाः शममित्यत्र शमं न अगा इति संबन्धः ॥२९॥

इति श्रीमहाभारते उद्यो० लक्षालंकारे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

---

२६ ज. नन्वेवमन्ये । ख. म. विप्रसूतः । २७ ख. भवेत्तथैव । २९ ख. ज. म. कोऽजातपुत्रेषु । ज. गन्ता । ख. ज. कामात्मनां श्लाघसे । ख. म. नान्यच्छमात् ।

अनुज्ञातो रथवेगावधूतः
श्रान्तोऽभिपद्ये शयनं नृसिंह ।
प्रातः श्रोतारः कुरवः सभाया-
मजातशत्रोर्वचनं समेताः ॥ ३१ ॥

**धृतराष्ट्र उवाच—**

अनुज्ञातोऽस्यावसथं परेहि
प्रपद्यस्व शयनं सूतपुत्र ।
प्रातः श्रोतारः कुरवः सभाया-
मजातशत्रोर्वचनं त्वयोक्तम् ॥ ३२ ॥

इति श्रीमहाभारते उद्योगपर्वणि द्वात्रिंशोऽध्यायः ॥ ३२ ॥

समाप्तं सञ्जययानपर्व ।

## ( प्रजागरपर्व ३ )

### त्रयस्त्रिंशोऽध्यायः ३३

संजयेन भृशं गर्हितेन धृतराष्ट्रेण श्वः किमयं वक्ष्यतीतिचिन्तया निद्रामलभमानेन विदुरानयनम् ॥ १ ॥ विदुरेण नीतिकथन-मुखेन पाण्डवेभ्यस्तद्भागदानमन्तरेण न ते शान्तिर्भवित्रीति कथनम् ॥ २ ॥

**वैशम्पायन उवाच—**

द्वाःस्थं प्राह महाप्राज्ञो धृतराष्ट्रो महीपतिः ।
विदुरं द्रष्टुमिच्छामि तमिहानय माचिरम् ॥ १ ॥
प्रहितो धृतराष्ट्रेण दूतः क्षत्तारमब्रवीत् ।
ईश्वरस्त्वां महाराजो महाप्राज्ञ दिदृक्षति ॥ २ ॥
एवमुक्तस्तु विदुरः प्राप्य राजनिवेशनम् ।
अब्रवीद्धृतराष्ट्राय द्वाःस्थं मां प्रतिवेदय ॥ ३ ॥

**द्वाःस्थ उवाच—**

विदुरोऽयमनुप्राप्तो राजेन्द्र तव शासनात् ।
द्रष्टुमिच्छति ते पादौ किं करोतु प्रशाधि माम् ॥४॥

**धृतराष्ट्र उवाच—**

प्रवेशय महाप्रज्ञं विदुरं दीर्घदर्शिनम् ।
अहं हि विदुरस्यास्य नाकल्यो जातु दर्शने ॥ ५ ॥

**द्वाःस्थ उवाच—**

प्रविशान्तःपुरं क्षत्तर्महाराजस्य धीमतः ।
नहि ते दर्शनेऽकल्पो जातु राजाऽब्रवीद्धि माम् ॥६॥

**वैशम्पायन उवाच—**

ततः प्रविश्य विदुरो धृतराष्ट्रनिवेशनम् ।
अब्रवीत्प्राञ्जलिर्वाक्यं चिन्तयानं नराधिपम् ॥ ७ ॥
विदुरोऽहं महाप्राज्ञ संप्राप्तस्तव शासनात् ।
यदि किंचन कर्तव्यमयमस्मि प्रशाधि माम् ॥ ८ ॥

**धृतराष्ट्र उवाच—**

सञ्जयो विदुर प्राप्तो गर्हयित्वा च मां गतः ।
अजातशत्रोः श्वो वाक्यं सभामध्ये स वक्ष्यति ॥ ९ ॥
तस्याद्य कुरुवीरस्य न विज्ञातं वचो मया ।
तन्मे दहति गात्राणि तदकार्षीत्प्रजागरम् ॥ १० ॥
जाग्रतो दह्यमानस्य श्रेयो यदिह पश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ ११ ॥
यतः प्राप्तः सञ्जयः पाण्डवेभ्यो
न मे यथावन्मनसः प्रशान्तिः ।
सर्वेन्द्रियाण्यप्रकृतिं गतानि
किं वक्ष्यतीत्येव मेऽद्य प्रचिन्ता ॥ १२ ॥

---

[नील०] अवधूतस्तिरस्कृतः अत एव श्रान्तः प्रपद्ये प्राप्नुयाम् ॥ ३१ ॥ आवसथं गृहं परेहि गच्छ प्रपद्यस्व सेवस्व ३२॥

इति उद्यो० नैलकण्ठीये भारतभावदीपे द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[अर्जु०] निपद्ये पतामि ॥ ३१ ॥ परेहि गच्छ ॥ ३२ ॥

इति श्रीमन्महाभा० मर्जुनमिश्र० उद्यो० द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[सर्व०] अभिपद्ये गच्छामि ॥३१॥ प्रपद्य गच्छ ॥३२॥

श्रीनारायणसर्वज्ञव्याख्यानविशदीकृताः ।
सन्तु सञ्जयवाक्यानां सुगमाः पदपङ्क्तयः ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञ० द्वात्रिंशोऽध्यायः ॥ ३२ ॥

[नील०] अकल्पो न किंतु कल्पः समर्थ एव सर्वदा विदुरसंदर्शनं मम अप्रत्याख्येयमित्यर्थः जातु कदाचित् । अथवा कल्पः कल्पना संशय इत्यर्थः ॥ ५ ॥ प्रजागरं निद्राया अभावम् ॥ १० ॥ यतः यदा प्राप्तः संजयस्तदारभ्येत्यर्थः । प्रचिन्ता प्रकृष्टा चिन्ता ॥ १२ ॥

[अर्जु०] प्रतिवेदय कथय ॥ ३ ॥ अकाल्यः अनवसरः ॥ ५ ॥

[लक्ष्मा०] नाकाल्यो जातु दर्शन इत्यत्र अकाल्यः कालायोग्यः न ॥ ५ ॥

---

३१ ख. म. निपद्ये शयनं प्रपद्य । ख. वचनं समग्रम् । इति द्वात्रिंशो०॥३२॥

७ ख. सर्वस्य स्थाने—एवमुक्तः प्रविश्याथ क्षत्ता राजानमब्रवीत् ।

विदुर उवाच—

अभियुक्तं बलवता दुर्बलं हीनसाधनम् ।
हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ॥ १३ ॥
कच्चिदेतैर्महादोषैर्न स्पृष्टोऽसि नराधिप ।
कच्चिन्न परवित्तेषु गृद्ध्यन्न परितप्यसे ॥ १४ ॥

धृतराष्ट्र उवाच—

श्रोतुमिच्छामि ते धर्म्यं परं नैश्रेयसं वचः ।
अस्मिन् राजर्षिवंशे हि त्वमेकः प्राज्ञसंमतः ॥ १५ ॥

[ विदुर उवाच—

राजा लक्षणसंपन्नस्त्रैलोक्यस्याधिपो भवेत् ।
प्रेष्यस्ते प्रेषितश्चैव धृतराष्ट्र युधिष्ठिरः ॥ १ ॥
विपरीततरश्च त्वं भागधेये न संमतः ।
अर्चिषां प्रक्षयाच्चैव धर्मात्मा धर्मकोविदः ॥ २ ॥
आनृशंस्यादनुक्रोशाद्धर्मात्सत्यात्पराक्रमात् ।
गुरुत्वात्त्वयि संप्रेक्ष्य बहून् क्लेशाँस्तितिक्षते ॥ ३ ॥
दुर्योधने सौबले च कर्णे दुःशासने तथा ।
एतेष्वैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ ४ ॥
आत्मज्ञानं समारम्भस्तितिक्षा धर्मनित्यता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ ५ ॥ ]
निषेवते प्रशस्तानि निन्दितानि न सेवते ।
अनास्तिकः श्रद्दधान एतत्पण्डितलक्षणम् ॥ १६ ॥

---

[ नील० ] अभियुक्तमित्यर्धोपात्त एकः त्रयोऽन्ये च प्रजागरावेशभाजनानि ॥ १३ ॥ गृद्ध्यन् लिप्सावान् ॥ १४ ॥ [ कचित्पुस्तकान्तरे स्थितस्य मूलस्य व्याख्या— प्रेष्यः प्रकर्षेण एषणीयः प्रार्थ्य इति यावत् । ते त्वया प्रेषितो वनमिति शेषः ॥ १ ॥ विपरीतः राजलक्षणहीनः सर्वेषां द्वेष्यः भागधेये राज्यांशे अर्चिषां नेत्ररश्मीनां प्रक्षयात् न संमतस्त्वं धर्मात्माऽपि सन्निति उपहासः । अथवा भागधेयेन राज्यभागित्वेन हेतुनाऽपि संमत इत्यप्युपहास एव ॥ २ ॥ आनृशंस्यात् क्रूरत्वाभावात् । अनुक्रोशात् दयालुत्वात् । तितिक्षते युधिष्ठिर इति शेषः ॥ ३ ॥ एतेष्विति एतेषामधीनो भूत्वेत्यर्थः ॥ ४ ॥ एतेषु पाण्डित्यं नास्तीति वक्तुं पण्डितलक्षणान्याह—आत्मज्ञानमित्यादिना । आत्मज्ञानं शास्त्रीयापेक्षम् । समारम्भः शक्त्यपेक्षः । तितिक्षा वैराग्यापेक्षा । धर्मनित्यता श्रद्धापेक्षा । एतानि अयथाभूतानि मूढान् पुरुषार्थात् भ्रंशयन्ति न तु पण्डितानित्यर्थः ॥ ५ ॥ ] अनास्तिकः परलोकाद्यस्तीति जानन् श्रद्दधानः श्रद्धा गुरुवेदवाक्यादिषु फलावश्यंभावनिश्चयस्तद्वान् ॥ १६ ॥

[ अर्जु० ] अतः प्रभृति कानिचिद् वाक्यानि धृतराष्ट्रनिन्दापराणि कानिचिद् युधिष्ठिरप्रशंसापराणि कानिचित् सामान्योपदेशपराणि बोद्धव्यानि । तत्राभियुक्तमित्यादिश्लोको धृतराष्ट्रनिन्दापरः । यतो भीमादिसहायेन युधिष्ठिरेणाभियुक्तः त्वं च दुर्बलोऽधार्मिकत्वात् । हीनसाधनश्चासि यतो भीष्मादयः स्वमरणकृतनिश्चयाः । हृतस्वश्चापि यतोऽधर्मेण स्थितोऽसि । सतां च धर्म एव स्वं, कामी च परराज्यकामुकश्चेत्, चौरश्च त्वं द्यूतच्छलेन परधनादानात् अतो युक्तः प्रजागरः ॥ १३ ॥

[ दुर्घ० ] प्रजागरे धृतराष्ट्रेणाहूतो विदुरः पृष्टः कथं न निद्रां लभत इति तं प्रत्याह 'अभियुक्तं बलवता दुर्बलं हीनसाधनम् । हृतस्वं कामिनं चोरमाविशन्ति प्रजागराः ।' अत्र पादद्वयेन एको द्वितीयपादद्वयेन त्रय एवं चतुरः पुरुषान् प्रजागरा आविशन्तीत्यर्थः । अतःप्रभृति विदुरवाक्यानि कानिचिद्धृतराष्ट्रनिन्दापराणि कानिचिद्युधिष्ठिरप्रशंसापराणि कानिचित्साधारणोपदेशपराणि बोद्धव्यानि । तत्राऽयं श्लोको धृतराष्ट्रनिन्दापरः । यतोऽभियुक्तोऽसि उपक्रान्तोऽसि बलवता दिव्यास्त्रविदर्जुनसहायेन धर्मयुक्तेन युधिष्ठिरेण त्वं दुर्बलो अधार्मिकत्वात् । उक्तं च—'धर्म एव हतो हन्ति' इति । त्वया च स्वयमेवोक्तं तदा नाशंसे विजयाय संजयेति । नहि समर्थस्यानाशंसा भवति । हीनसाधनश्चाऽसि यस्माद्भीष्मद्रोणादयः स्वमरणकृतनिश्चया युधिष्ठिरस्यैव जयमाशंसन्ते अल्पबलश्चाऽसि यतो धर्मे न स्थितोऽसि यस्मात्सतां सुहृदां वाक्यमवमन्यसे । त्वं कामी परराज्यकामुकस्त्वमेव चोरवच्छलेन परस्वाऽपहरणात् । अतो युज्यत एव जागरागमो रात्रिभव इत्यर्थः ॥ १३ ॥

[ लक्षा० ] आविशन्ति प्रजागरा इत्यत्र प्रजागराः जाग्रदवस्थाः ॥ १३ ॥ [राजलक्षणसंपन्न इत्यत्र त्रैलोक्यस्यापि यः राजलक्षणसंपन्नो भवति तं युधिष्ठिरं प्रति दूताः प्रेषिताः उपरि प्रेष्यन्ते च । राजलक्षणसंपन्ने युधिष्ठिरे राज्यादानात् दूतप्रेषणं व्यर्थमिति भावः । एतदेव सूचयितुं प्राक्तद्विशेषणम् ॥ १ ॥ विपरीतः दुःशीलदुर्योधनादिभ्यो विपरीतः धर्मराजः ॥ २ ॥] एकस्माद्वृक्षादित्यत्र । एकस्मादश्वत्थवृक्षात् यज्ञपात्राणि स्रुक् काष्ठादिना जायते । तथा पीडिनी पीडाकर्त्री लोडिनी विषादिरसानां लोडनकर्त्री

---

१४ ख. कच्चिन्न । ख. विपरितप्यसे । ३ ख. गुरुत्वं । १६ शात प्राक् क. एकस्माद्वृक्षाद्यज्ञपात्राणि राजन् स्रुक्च द्रोणी पेठनीपीडनेच । एतस्माद्राजन्सु-वतो मे निबोध एकस्माद्वै जायतेऽसच्च सच्च । इत्यधिकम् ।

क्रोधो हर्षश्च दर्पश्च ह्रीस्तम्भो मान्यमानिता ।
यमर्थान्नापकर्षन्ति स वै पण्डित उच्यते ॥ १७ ॥
यस्य कृत्यं न जानन्ति मन्त्रं वा मन्त्रितं परे ।
कृतमेवास्य जानन्ति स वै पण्डित उच्यते ॥ १८ ॥
यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः ।
समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते ॥ १९ ॥
यस्य संसारिणी प्रज्ञा धर्मार्थावनुवर्तते ।
कामादर्थं वृणीते यः स वै पण्डित उच्यते ॥ २० ॥
यथाशक्ति चिकीर्षन्ति यथाशक्ति च कुर्वते ।
न किंचिदवमन्यन्ते नराः पण्डितबुद्धयः ॥ २१ ॥
क्षिप्रं विजानाति चिरं शृणोति
विज्ञाय चार्थं भजते न कामात् ।
नासंपृष्टो व्युपयुङ्क्ते परार्थे
तत्प्रज्ञानं प्रथमं पण्डितस्य ॥ २२ ॥
नाप्राप्यमभिवाञ्छन्ति नष्टं नेच्छन्ति शोचितुम् ।
आपत्सु च न मुह्यन्ति नराः पण्डितबुद्धयः ॥ २३ ॥
निश्चित्य यः प्रक्रमते नान्तर्वसति कर्मणः ।
अवन्ध्यकालो वश्यात्मा स वै पण्डित उच्यते ॥ २४ ॥
आर्यकर्मणि रज्यन्ते भूतिकर्माणि कुर्वते ।
हितं च नाभ्यसूयन्ति पण्डिता भरतर्षभ ॥ २५ ॥
न हृष्यत्यात्मसंमाने नावमानेन तप्यते ।
गाङ्गो ह्रद इवाक्षोभ्यो यः स पण्डित उच्यते ॥ २६ ॥
तत्त्वज्ञः सर्वभूतानां योगज्ञः सर्वकर्मणाम् ।
उपायज्ञो मनुष्याणां नरः पण्डित उच्यते ॥ २७ ॥
प्रवृत्तवाक् चित्रकथ ऊहवान् प्रतिभानवान् ।
आशु ग्रन्थस्य वक्ता च यः स पण्डित उच्यते ॥ २८ ॥

---

द्रोणी द्रोणाख्यः पात्रविशेषश्च जायते । एवं तव कुल एव सुपुत्रोऽपि जातः दुष्पुत्रोऽपि जात इति भावः ॥ १६ ॥

[ नील० ] दर्पः परावज्ञानम् स्तम्भः असन्नतिः । मान्यमानिता मान्यं मानार्हम् आत्मानं मन्यत इति मान्यमानी तस्य भावस्तत्ता ॥ १७ ॥ संसारिणी स्वभावतोऽनवस्थिताऽपि कामात् ऐहिकसुखात् उभयलोकसुखावहं धर्ममर्थं वृणीते स पण्डितः कामो धर्मार्थापेक्षया निकृष्ट इत्यर्थः । कामादिति यस्तु कामं त्यक्त्वा अर्थं वृणीते सः अर्थार्थी मोक्षादेव सर्वमर्थं विन्दति ज्ञानफले मोक्षे कृत्स्नस्यार्थस्यान्तर्भावात् स जनकादितुल्यः अतः पण्डित उच्यते ॥ २० ॥ चिरं शृणोति ज्ञानदार्ढ्याय । असंपृष्टः यथावदपृष्टः व्युपयुङ्क्ते वाग्व्ययं करोति परार्थे विषये । प्रज्ञानं चिह्नम् ॥ २२ ॥ निश्चित्य स्वयत्नसाध्यत्वं कर्मणः अन्तर्मध्ये न वसति नोपरमते किंतु समापयत्येव । अवन्ध्यकालः सर्वदा सप्रयोजनमेव कर्माचरन् ॥ २४ ॥ आर्याः शिष्टाः तद्योग्यकर्मणि भूतिरैश्वर्यं तत्प्राप्त्यर्थं कर्माणि ॥ २५ ॥ तत्त्वं विनाशित्वम् । भूतानां जातानामैश्वर्यादीनाम् । योगो रचनाप्रकारः उपायस्तदर्थसामग्री । मनुष्याणां मध्ये स नरः पण्डितः ॥ २७ ॥ प्रवृत्तवाक् अकुण्ठितवचनः । चित्रकथो लोककथाभिज्ञः । ऊहस्तर्कः । प्रतिभानं तत्कालस्फूर्तिः ॥ २८ ॥

[ अर्जु० ] यस्य संसारिणी व्यापिनी ॥ २० ॥ चिरं शृणोति ज्ञातमपि पुनः शृणोति असंपृष्टो असम्यक् पृष्टः । प्रज्ञानं लक्षणम् ॥ २२ ॥ प्रक्रमते प्रारभते अन्तर्मध्ये न वसति नोदास्ते प्रारब्धं कर्म समापयत्येव अवन्ध्यकालः सत्कर्म विना न तिष्ठति वश्यात्मा जितेन्द्रियः ॥ २४ ॥ भूतानां प्राणिनां पृथिव्यादीनां वा योग उपायः मनुष्याणां मध्ये ॥ २७ ॥ प्रवृत्तवाक् अलम्रवाक् ऊहः अनुमानेन बोधस्तद्वान् प्रतिभानवान् स्फुरन्मनाः ॥ २८ ॥

[ सर्व० ] दर्पः परावज्ञानम् । अमान्ये अनभिमानविषये मानिताभिमानः ॥ १७ ॥ संसारिणी प्रसारिणी कामात् कामापेक्षया । साधारणं चैतत् तेन धर्मापेक्षयेत्यपि ॥ २० ॥ चिरं शृणोति शङ्कानिरासावधि । अर्थं फलम् न कामादिच्छामात्रात् । असंपृष्टो यथावदपृष्टः उपयुङ्क्ते वाक्यं समादत्ते परार्थे विषये । प्रज्ञानं चिह्नम् ॥ २२ ॥ निश्चित्य उपायं शीघ्रकारी नान्तर्वसति कर्मणः आरभ्य न चिरयति । अवन्ध्यकालः सर्वदा प्रयोजनवत्कर्मकारित्वात् ॥ २४ ॥ भूतानां पृथिव्यादीनां तत्त्वं विनाशित्वादियोगो युक्तिरौचित्यं मनुष्याणां मनुष्यकर्तव्योपायज्ञः ॥ २७ ॥ प्रवृत्तवागकुण्ठवचनः । चित्रकथो भूतकथाभिज्ञः । ऊहस्तर्क । प्रतिभानं तत्कालस्फूर्तिः ॥ २८ ॥

[ लक्षा० ] क्रोधो हर्ष इत्यत्र हर्षः धनमदाधीनः हर्षः । ह्रीः पूज्यपूजने लज्जा । मान्यमानिता मानश्चित्तसमुन्नतिरिति वचनात् अहं सर्वेभ्यो मान्य इति चित्तसमुन्नतिः । अर्थाः अर्थरूपा इमे पदार्थाः ॥ १७ ॥ यस्य कृत्यं न विघ्नन्तीत्यत्र विघ्नन्ति विशेषेण घ्नन्ति विघ्नन्ति ॥ १९ ॥ नान्तर्वसतीत्यत्र कर्मणः अन्तः मध्य एव न वसति कर्मासमाप्य न तिष्ठतीत्यर्थः ॥ २४ ॥ प्रवृ-

---

२१ ख. पण्डिता भरतर्षभ । २२ ख. ह्यपयुङ्क्ते परस्य ।

श्रुतं प्रज्ञानुगं यस्य प्रज्ञा चैव श्रुतानुगा ।
असंभिन्नार्यमर्यादः पण्डिताख्यां लभेत सः ॥ २९ ॥
अश्रुतश्च समुन्नद्धो दरिद्रश्च महामनाः ।
अर्थांश्चाकर्मणा प्रेप्सुर्मूढ इत्युच्यते बुधैः ॥ ३० ॥
स्वमर्थं यः परित्यज्य परार्थमनुतिष्ठति ।
मिथ्याचरति मित्रार्थे यश्च मूढः स उच्यते ॥ ३१ ॥
अकामान्कामयति यः कामयानान्परित्यजेत् ।
बलवन्तं च यो द्वेष्टि तमाहुर्मूढचेतसम् ॥ ३२ ॥
अमित्रं कुरुते मित्रं मित्रं द्वेष्टि हिनस्ति च ।
कर्म चारभते दुष्टं तमाहुर्मूढचेतसम् ॥ ३३ ॥
संसारयति कृत्यानि सर्वत्र विचिकित्सते ।
चिरं करोति क्षिप्रार्थे स मूढो भरतर्षभ ॥ ३४ ॥
श्राद्धं पितृभ्यो न ददाति दैवतानि न चार्चति ।
सुहृन्मित्रं न लभते तमाहुर्मूढचेतसम् ॥ ३५ ॥
अनाहूतः प्रविशति अपृष्टो बहु भाषते ।
अविश्वस्ते विश्वसिति मूढचेता नराधमः ॥ ३६ ॥
परं क्षिपति दोषेण वर्तमानः स्वयं तथा ॥
यश्च क्रुध्यत्यनीशानः स च मूढतमो नरः ॥ ३७ ॥
आत्मनो बलमज्ञाय धर्मार्थपरिवर्जितम् ।
अलभ्यमिच्छन्नैष्कर्म्यान्मूढबुद्धिरिहोच्यते ॥ ३८ ॥
अशिष्यं शास्ति यो राजन्यश्च शून्यमुपासते ।
कदर्यं भजते यश्च तमाहुर्मूढचेतसम् ॥ ३९ ॥
अर्थं महान्तमासाद्य विद्यामैश्वर्यमेव वा ।
विचरत्यसमुन्नद्धो यः स पण्डित उच्यते ॥ ४० ॥
एकः संपन्नमश्नाति वस्ते वासश्च शोभनम् ।
योऽसंविभज्य भृत्येभ्यः को नृशंसतरस्ततः ॥४१॥
एकः पापानि कुरुते फलं भुङ्क्ते महाजनः ।
भोक्तारो विप्रमुच्यन्ते कर्ता दोषेण लिप्यते ॥४२॥

---

त्तवाक् 'वृत्तं पद्ये चरित्रे च' इति वचनात् प्रकृष्टानां वृत्तं चरित्रं वक्तीति प्रवृत्तवाक् ॥ २८ ॥

[ नील० ] प्रज्ञानुगं बुद्धिवश्यम् । श्रुतानुगा शास्त्रानुसारिणी ॥ २९ ॥ अकर्मणा हीनकर्मणा द्यूतादिनेत्यर्थः । तादृशो दुर्योधनः ॥ ३० ॥ स्वमर्थमिति तादृशः शकुनिः ॥ ३१ ॥ अकामान् त्वयि भक्तिहीनान् कर्णादीन् । कामयानान् त्वयि भक्तिमतः पाण्डवान् । बलवन्तं युधिष्ठिरम् ॥ ३२ ॥ दुष्टं जतुगृहदाहादि ॥ ३३ ॥ संसारयति भृत्यादिद्वारा प्रवर्तयति ॥ ३४ ॥ नैष्कर्म्यात् अयत्नतः ॥ ३८ ॥ शून्यं राजदारादीन् अज्ञातं यथा स्यात्तथा उपास्ते । कदर्यम् अदातारम् ॥३९॥ असमुन्नद्धः अनुद्धतः ॥ ४० ॥

[ अर्जु० ] श्रुतप्रज्ञे परस्परानुगे यस्येत्यर्थः ॥ २९ ॥ समुन्नद्धोऽहंयुः महामना महेच्छुः । अकर्मणा कृषिवाणिज्यादि विना ॥ ३० ॥ स्वमन्नं स्वभक्तं परान्नं परभक्तं मम स्यादिति लिप्सते । परार्थमित्यसम्यक् ॥ ३१ ॥ अकामान् अनिच्छन्तः ॥ ३२ ॥ संसारयति ज्ञापयति सेव्यानि मन्त्रितानि । विचिकित्सति संदेग्धि ॥ ३४ ॥ (अप्रमत्तेषु सावधानेषु ।) नैष्कर्म्यात् औदासीन्यात् ॥ ३८ ॥ अशिष्यमजिज्ञासुं, शून्यं दरिद्रम्, कदर्यं कृपणम् ॥ ३९ ॥ असमुन्नद्धोऽनहंयुः ॥ ४० ॥ संपन्नं सुष्ठु वस्ते आच्छादयति भूतेभ्यः प्राणिभ्यः, नृशंसतरोऽतिनिष्ठुरः ॥ ४१ ॥ एकः पापानिकुरुते इत्यादि । एको मुख्यः पापानि राजद्रोहादीनि, फलं पापफलं, महाजनः सत्सु मुख्यः । भोक्तारोऽयुक्तकर्मफलभोक्तारः विप्रमुच्यते पापैरिति शेषः । यतः कर्ता पापकर्ता प्रधानः दोषेण पापफलेन लिप्यते त्वमेव पुत्रधनादिनाशं नरकं च प्राप्स्यसि नतु तथा शकुनिप्रभृतय इति भावः ॥ ४२ ॥

[ सर्व० ] श्रुतमित्यन्योन्यानुरूपश्रुतप्रज्ञ इत्यर्थः॥२९॥ अकर्मणा दैवमात्रेण ॥ ३० ॥ स्वमर्थं प्राप्तमपि त्यक्त्वा परार्थप्राप्त्यर्थं मिथ्याचरति मिथ्याभिधानेन मित्रं प्रतारयति ॥ ३१ ॥ संसारयति लोके प्रसारयति । क्षिप्रार्थे क्षिप्रसाध्येऽर्थे ॥ ३४ ॥ अलभ्यं धर्मार्थवर्जितं सच्छलं (?) नैष्कर्म्यात् पुरुषकारं विना ॥ ३८ ॥ शून्यं निरुत्पत्तिदेशम् । कदर्यं कृपणम् ॥ ३९ ॥ 'एकः पापानि' इत्यादि तस्मात् पुत्राद्यर्थे पापं कुर्वन् मूढ इत्युच्यते बुधैरित्यर्थः ॥ ४२ ॥

[ लक्ष्मा० ] अश्रुतः शास्त्रश्रवणरहितः ॥ ३० ॥ स्वमर्थं यः परित्यज्येत्यत्र स्वं स्वकीयम् अर्थं स्नानजपादिकं, परार्थं परेषां शूद्रादीनामर्थं नीचसेवनादिकम् ॥ ३१ ॥ अकामान् कामायोग्यान् परदारादीन्, कामयानान् स्वदारान् ॥ ३२ ॥ संसारयति कृत्यानीत्यत्र कृत्यानि पुण्यकर्माणि संसारयति सृ गताविति धातोः सर्वान् प्रति प्रापयति उपदिशतीत्यर्थः । स्वयं तु नाचरतीति भावः । विचिकित्सते संशयं करोति ॥ ३४ ॥ एकः पापानि कुरुत इत्यत्र फलं तत्संसर्गवशादैहिकानर्थरूपं, मुच्यन्ते पारत्रिकनरकाद्यनर्थात् ॥ ४२ ॥

**एकं हन्यान्न वा हन्यादिषुर्मुक्तो धनुष्मता ।**
**बुद्धिर्बुद्धिमतोत्सृष्टा हन्याद्राष्ट्रं सराजकम् ॥ ४३ ॥**

[ नील० ] एकयेति बुद्धिर्बुद्धिमतेत्युपक्रमादेकया बुद्धयेति व्याख्याद्वयेऽपि समानम् । द्वे नीतौ कार्याकार्ये । अध्यात्मपक्षे नित्यानित्ये विनिश्चित्य सम्यगवधार्य । त्रीन् नीतौ मित्रोदासीनशत्रून् । पक्षे कामक्रोधलोभान् । चतुर्भिः सामदानभेददण्डैः । मित्रं साम्नैव दानभेदाभ्यामुदासीनं सर्वैः शत्रुं वशीकुरु । पक्षे शमदमोपरमश्रद्धाभिः । पञ्च पक्षद्वयेऽपि इन्द्रियाणि जित्वा । षड्विदित्वा संधिविग्रहादीन् ज्ञात्वा । पक्षे अशनायां पिपासां शोकं मोहं जरां मृत्युं च । सप्त हित्वा 'स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च' इति सप्त हेयानि । पक्षे पञ्चेन्द्रियाणि बुद्धिमनसी च त्यक्त्वा सुखी भव । तथाच श्रुतिः— यदा पञ्चावतिष्ठन्ते ज्ञानानि मनसा सह । बुद्धिश्च न विचेष्टेत तामाहुः परमां गति ' इति । पूर्वमिन्द्रियाणां प्रत्याहार उक्तः इदानीं तु प्रविलापनमिति भेदः ॥ ४४ ॥

[ अर्जु० ] उत्सृष्टा प्रयुक्ता ॥ ४३ ॥ एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु । पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव । एकया संशितया बुद्ध्या द्वे कार्याकार्ये निश्चित्य इदं कार्यमिदं हेयमिति व्यवस्य त्रीन् शत्रुमित्रोदासीनान् वशे कुरु सामदानभेददण्डैः चतुर्भिरुपायैः करणभूतैः मित्रस्य वश्यत्वेऽपि दृढमैत्रीकरणमेव तस्य वशीकरणं, पञ्चेन्द्रियाणि जित्वा विदित्वा षट् संधिविग्रहयानासनसंश्रयद्वैधीभावान् गुणान्, सप्त हित्वा स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ४४ ॥

[ सर्व० ] एकया बुद्ध्या द्वे कार्याकार्ये विशेषतो निश्चित्य । त्रीन् मित्रोदासीनशत्रून् । चतुर्भिः सामाद्यैः । पञ्च इन्द्रियाणि । षट् सन्धिविग्रहादीनि । सप्त व्यसनानि-'स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च' इति ॥ ४४ ॥

[ दुर्घ० ] 'एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु । पञ्च जित्वा विजित्वा षट् सप्त हित्वा सुखीभव'॥ एकया दण्डनीत्या बुद्ध्या द्वे कार्याकार्ये विनिश्चित्य किं हेयं किमुपादेयं किं कार्यं किमकार्यमित्यनेनाकारेण विचार्य त्रीन् मित्रोदासीनशत्रून् । उक्तञ्च—'मुनेरपि वनस्थस्य स्वानि कर्माणि कुर्वतः । संभवन्ति त्रयः पक्षा मित्रोदासीनशत्रवः ।' चतुर्भिः सामदानभेददण्डैरुपायैः यद्यपि सप्तोपाया भृगुणा प्रोक्तास्तथाऽपि मन्त्रौषधीनिन्द्रजालानां भेद एवान्तर्भावाच्चतुर्भिरित्युक्तम् । वशीकुर्वीत मित्रस्याऽपि मैत्रदृढीकार एव वश्यत्वम् । पञ्चपञ्चेन्द्रियाणि जित्वा । उक्तं च—'इन्द्रियाणां जये यत्नमातिष्ठेत्प्रथमं नृपः' इति विदित्वा षट् सन्धिविग्रहयानासनैद्वैधीभावसमाश्रयान् । उक्तं च 'षड् गुणा विदिता येन स नीतिमधितिष्ठति' इति । सप्त हित्वेति व्यसनानि 'स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् । महच्च दण्डपारुष्यमर्थदूषणमेव च' इति । तत्र प्रथमचतुष्टयं कामजो गणः, परः क्रोधजः । एतानि तु सर्वाणि युधिष्ठिरे संभाव्यानि । बहुवक्तव्यमेतद्विस्तरभयान्न प्रतन्यत इति ॥ ४४ ॥

**एकया द्वे विनिश्चित्य त्रींश्चतुर्भिर्वशे कुरु ।**
**पञ्च जित्वा विदित्वा षट् सप्त हित्वा सुखी भव ॥४४॥**

[ लक्षा० ] एकया द्वौ विनिश्चित्येत्यत्र एकया कर्मकाण्डब्रह्मकाण्डयोरन्यतरया कर्मकाण्डरूपया वेदवाचा, द्वौ प्रवृत्तिनिवृत्तिमार्गौ विनिश्चित्य विभागेन निश्चित्य पुनः 'अथातो धर्मजिज्ञासा' इति प्रथमसूत्रोक्तरीत्या 'अपाम सोमममृता अभूम अगन्मज्योतिरविदाम देवान्' इति श्रुत्यर्थपर्यालोचनया ज्ञानद्वारा मोक्षसाधननिवृत्तिधर्माणामेव सर्वत्र जिज्ञासितत्वान्निवृत्तिमार्गो विशिष्ट इति च निश्चित्य, चतुर्भिः फलमनपेक्ष्य केवलं कृष्णार्पणबुद्ध्या कृतैः "त्रयो धर्मस्कन्धाः यज्ञोऽध्ययनं दानमिति प्रथमं तप एव" इति श्रुतेः यज्ञाध्ययनदानतपोरूपैश्चतुर्भिर्निवृत्तिधर्मैः, त्रीन् धर्मार्थकामरूपान् प्रवृत्तिधर्मान् वशे कुरु तद्वशस्त्वं माभूः किंतु तानेव वशीकृत्य प्राणधारणार्थं यावदवश्यं भवेत् तावदेव कुरु नतु तत्रैव श्रद्धां कुर्वित्यर्थः । "कर्मणा ज्ञानमातनोति" इति श्रुतेः । उक्तैर्निवृत्तिधर्मैः शुद्धान्तःकरणस्त्वं पुनः एकया ब्रह्मकाण्डरूपया वेदवाचा द्वौ द्वासुपर्णेत्यादिश्रुत्युक्तौ जीवपरमौ विनिश्चित्य प्रथमद्वितीयाध्यायोक्तैः 'भेदव्यपदेशात्' 'स्थित्यदनाभ्यां च' इत्यादिभेदप्रतिपादकसूत्रैः विलक्षणाविति निश्चित्य पुनः समन्वयाविरोधाध्यायद्वयोक्तगुणपूर्णत्वनिर्दोषत्वाख्यधर्मबलात् तयोर्मध्ये विष्णुर्विशिष्ट इति च निश्चित्य पुनः साधनाध्यायोक्तरीत्या चतुर्भिः वैराग्यभक्त्युपास्त्यपरोक्षज्ञानाख्यैश्चतुर्भिः साधनैः, तदनन्तरं फलाध्यायोक्तरीत्या "यत्र तत्परमं पदं विष्णोर्लोको न हीयते । लोका यत्र ज्योतिष्मन्तः तत्र मामभृतं कृधि" इत्यादिश्रुतेः, 'यज्ञो दानमध्ययनं तपश्च द्वाराण्येतान्यन्ववेतानि सद्भिः' इति अत्रैव वक्ष्यमाणत्वाच्च । 'एनापवर्गाख्यम्' (?)इति स्मृतेश्च । त्रीन् अपवर्गाभिधान् वैकुण्ठश्वेतद्वीपानन्तासनाख्यांस्त्रीन् विष्णुलोकान् वशे कुरु यदा यस्मिँल्लोके तिष्ठासा तदा तत्र स्थितिर्यथा भवेत् तथा हरेरनुग्रहं संपादयेति भावः । तदनन्तरं प्रारब्धकर्मभो-

एकं विषरसो हन्ति शस्त्रेणैकश्च हन्यते ।
सराष्ट्रं सप्रजं हन्ति राजानं मन्त्रविप्लवः ॥ ४५ ॥
एकः स्वादु न भुञ्जीत एकश्चार्थान्न चिन्तयेत् ।
एको न गच्छेदध्वानं नैकः सुप्तेषु जागृयात् ॥४६॥
एकमेवाद्वितीयं तद्यद्राजन्नावबुध्यसे ।
सत्यं स्वर्गस्य सोपानं पारावारस्य नौरिव ॥ ४७ ॥
एकः क्षमावतां दोषो द्वितीयो नोपपद्यते ।
यदेनं क्षमया युक्तमशक्तं मन्यते जनः ॥ ४८ ॥
सोऽस्य दोषो न मन्तव्यः क्षमा हि परमं बलम् ।
क्षमा गुणो ह्यशक्तानां शक्तानां भूषणं क्षमा ॥४९॥
क्षमा वशीकृतिर्लोके क्षमया किं न साध्यते ।
शान्तिखड्गः करे यस्य किं करिष्यति दुर्जनः॥५०॥
अतृणे पतितो वह्निः स्वयमेवोपशाम्यति ।
अक्षमावान्परं दोषैरात्मानं चैव योजयेत् ॥ ५१ ॥
एको धर्मः परं श्रेयः क्षमैका शान्तिरुत्तमा ।
विद्यैका परमा तृप्तिरहिंसैका सुखावहा ॥ ५२ ॥
द्वाविमौ ग्रसते भूमिः सर्पो बिलशयानिव ।
राजानं चाविरोद्धारं ब्राह्मणं चाप्रवासिनम् ॥५३॥
द्वे कर्मणी नरः कुर्वन्नस्मिँल्लोके विरोचते ।
अब्रुवन् परुषं किंचिदसतोऽनर्चयंस्तथा ॥ ५४ ॥
द्वाविमौ पुरुषव्याघ्र परप्रत्ययकारिणौ ।
स्त्रियः कामितकामिन्यो लोकः पूजितपूजकः॥५५॥
द्वाविमौ कण्टकौ तीक्ष्णौ शरीरपरिशोषिणौ ।
यश्चाधनः कामयते यश्च कुप्यत्यनीश्वरः ॥ ५६ ॥
द्वावेव न विराजेते विपरीतेन कर्मणा ।
गृहस्थश्च निरारम्भः कार्यवांश्चैव भिक्षुकः ॥ ५७ ॥
द्वाविमौ पुरुषौ राजन् स्वर्गस्योपरि तिष्ठतः ।
प्रभुश्च क्षमया युक्तो दरिद्रश्च प्रदानवान् ॥ ५८ ॥
न्यायागतस्य द्रव्यस्य बोद्धव्यौ द्वावतिक्रमौ ।
अपात्रे प्रतिपत्तिश्च पात्रे चाप्रतिपादनम् ॥ ५९ ॥

---

गानां परिपाके सति पञ्चबाह्यज्ञानेन्द्रियाणि तथा पञ्चकर्मेन्द्रियाणि च जित्वा, षट् कामक्रोधादीन् अन्तःकरणधर्मान् विजित्वा, सप्त त्वक्-चर्म-रुधिर-मांस-मेदो-मज्जाऽस्थिरूपान् सप्तधातून् हित्वा, सुखी आनन्दमीमांसोक्तस्वरूपसुखानुभववान् भव । अनवच्छिन्नब्रह्मसुखस्य अलभ्यतया भवत्याशीर्वादायोगात् स्वयोग्यसुखमेवात्रोच्यत इति भावः । सु शोभनानि प्रसन्नानि खानि येन भवन्ति तत्सुखमिति व्युत्पत्तेः स्वरूपभूताना मे (?) न्द्रियैर्व्यज्यमानसुखवान्भव नतु मायिरीत्या स्वरूपभूतचिद्रूपदेहस्याप्यभाववान्भव । सुखीत्युक्त्वा स्वरूपभूतदेहे सुखादावपि विशेषशक्त्या अङ्गाङ्गिभावः सुखत्वं सुखित्वमित्यादिभेदव्यवहारोऽप्यस्तीति समग्रवाक्यार्थो ज्ञेयः ॥ ४४ ॥

[ नील० ] सत्यं यथार्थभाषणं स्वर्गस्य, पक्षे सत्यं ब्रह्म स्वर्गो मोक्षः पारावारस्य समुद्रस्य ॥ ४७ ॥ अहिंसेति पुत्राणां विग्रहेण कुलक्षयं मा कुर्विति भावः ॥ ५२ ॥ द्वावित्यादिषु किंचित्प्रकृतोपयोग्यमुच्यते किंचित् प्रसङ्गात् दृष्टान्तार्थं चेति ज्ञेयम् ॥ ५३ ॥ असतः शकुन्यादींस्त्वमर्चयसीति भावः ॥ ५४ ॥ पूजितेति पुत्रेण पूजितं कर्णं त्वमपि पूजयसीत्यर्थः ॥ ५५ ॥ अनीश्वरत्वं त्वत्पुत्रे ॥ ५६ ॥ निरारम्भ उदासीनस्त्वं पुत्रकलहनिवारणे ॥ ५७ ॥ प्रभुः पाण्डवः ॥ ५८ ॥ पात्रे धर्मे ॥ ५९ ॥

[अर्जु०] मन्त्रविप्लवो मन्त्रभेदः स तु गृहीतस्वधर्मंहेतुत्वात् (?) ॥ ४५ ॥ न चिन्तयेत् भ्रमसंभवात् न गच्छेदनर्थसंभवात् न जागृयात् बीभत्सदर्शनश्रवणादनिष्टापत्तेः ॥ ४६ ॥ यद् राजन्नावबुध्यसे इति काकुः ॥ ४७ ॥ परं शत्रुं दोषैः पारुष्यादिभिः ॥ ५१ ॥ धर्मादीन् स्तौति एको धर्म इति ॥ ५२ ॥ ग्रसते भूमिः जन्मभूमावेव विलयं गच्छतः कीर्तिमन्तौ न भवत इत्यर्थः । यथा दुर्योधनः परमार्थश्च सुबोधः ॥ ५३ ॥ परप्रत्ययकारिणौ परस्य प्रत्ययेन ज्ञानेन कुर्वत इत्येवंशीलौ विचारपराङ्मुखौ ॥ ५५ ॥ कण्टकौ स्वस्यैवेति शेषः ॥ ५६ ॥ प्रभुः समर्थः ॥ ५८ ॥

[ सर्व० ] मन्त्रविप्लवो मन्त्रस्य प्रसरणम् ॥ ४५ ॥ नैको भुञ्जीत भोजने पापोत्पत्तेः । नैको गच्छेदध्वानं प्रत्यवायबाहुल्यात् । नैको जागृयात् रात्रौ प्रेतादिदर्शनेन भये प्रतीकारासंभवात् ॥ ४६ ॥ सत्यं धर्मः एतदेवोदाहरिष्यति—एको धर्मः परं श्रेय इति । स्वर्गस्य सुखस्य । पारावारस्य पारावारागमनस्य ॥ ४७ ॥ अक्षमावानिति परमारणे हिंस्रस्य हिंसादोषः परस्य मृत्युरिति दोषः ॥ ५१ ॥ [ अपरयोः ] विरोचते प्रकाशते ॥ ५४ ॥ परस्य चेष्टया प्रत्ययः संप्रयः (?) तेन कर्माणि कुर्वाते इति ॥ ५५ ॥ शरीरं स्वशरीरं, तत्परिशोषिणौ ॥ ५६ ॥ अतिक्रमोऽन्यायेन तत्प्रवृत्तिः ॥ ५९ ॥

[लक्षा०] एकमेवाद्वितीयं तदित्यत्र एकं स्वगतभेदवर्जितम्, अस्य गोद्वितीयेन भवितव्यमित्युक्ते सदृशो गौरेवानीयते नाश्वो न गर्दभ इति वचनात् अद्वितीयम् असदृशम् ॥ ४७ ॥ सर्पो बिलेशयानिवेत्यत्र बिलेशयान् मूषिकान् ॥ ५३ ॥

द्वावम्भसि निवेष्टव्यौ गले बद्ध्वा दृढां शिलाम् ।
धनवन्तमदातारं दरिद्रं चातपस्विनम् ॥ ६० ॥
द्वाविमौ पुरुषव्याघ्र सूर्यमण्डलभेदिनौ ।
परिव्राड्योगयुक्तश्च रणे चाभिमुखो हतः ॥ ६१ ॥
त्रयोऽपाया मनुष्याणां श्रूयन्ते भरतर्षभ ।
कनीयान्मध्यमः श्रेष्ठ इति वेदविदो विदुः ॥ ६२ ॥
त्रिविधाः पुरुषा राजन्नुत्तमाधममध्यमाः ।
नियोजयेद्यथावत्तांस्त्रिविधेष्वेव कर्मसु ॥ ६३ ॥
त्रय एवाधना राजन् भार्या दासस्तथा सुतः ।
यत्ते समधिगच्छन्ति यस्य ते तस्य तद्धनम् ॥ ६४ ॥
हरणं च परस्वानां परदाराभिमर्शनम् ।
सुहृदश्च परित्यागस्त्रयो दोषाः क्षयावहाः ॥ ६५ ॥
त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ६६ ॥
वरप्रदानं राज्यं च पुत्रजन्म च भारत ।
शत्रोश्च मोक्षणं कृच्छ्रात्त्रीणि चैकं च तत्समम् ॥ ६७ ॥
भक्तं च भजमानं च तवास्मीति च वादिनम् ।
त्रीनेताञ्छरणं प्राप्तान्विषमेऽपि न संत्यजेत् ॥ ६८ ॥
चत्वारि राज्ञा तु महाबलेन
वर्ज्यान्याहुः पण्डितस्तानि विद्यात् ।
अल्पप्रज्ञैः सह मन्त्रं न कुर्या-
न्न दीर्घसूत्रै रभसैश्चारणैश्च ॥ ६९ ॥
चत्वारि ते तात गृहे वसन्तु
श्रियाभिजुष्टस्य गृहस्थधर्मे ।
वृद्धो ज्ञातिरवसन्नः कुलीनः
सखा दरिद्रो भगिनी चानपत्या ॥ ७० ॥
चत्वार्याह महाराज साद्यस्कानि बृहस्पतिः ।
पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे ॥ ७१ ॥

[ नील० ] अप्रदातारं त्वत्पुत्रम् ॥ ६० ॥ उपाया इति छेदः । युद्धं कनीयान् भेददाने मध्यमः साम उत्तमः । अपाया इतिच्छेदे काम्ययोगः कनीयान् काम्यधर्मो मध्यम इहलोकलोभोऽधमः (?) । त्रयो न्याया इति पाठः स्पष्टार्थः ॥ ६२ ॥ यथावन्नियोजयेत् त्वया त्वधमाः कर्णादय उत्तमे मन्त्रकार्ये नियुज्यन्त इति भावः ॥ ६३ ॥ त्वयि सति त्वत्पुत्रोऽधनोऽतस्त्वमेव पाडवानां राज्यं दातुं प्रभुरसीत्यर्थः ॥ ६४ ॥ हरणादयस्त्रयोऽपि दोषाः कामादित्रयसहितास्त्रय्येव सन्तीत्यर्थः ॥ ६५ ॥ शत्रोर्युधिष्ठिरस्य कृच्छ्राद्गोत्रवधात् ॥ ६७ ॥ भक्तादयः पाण्डवाः शरणं गृहं विषमेपि संकटेऽपि तव तु तन्नास्तीत्यर्थः ॥ ६८ ॥ दीर्घसूत्रैः क्षिप्रसाध्ये कार्ये चिरं कुर्वद्भिः रभसैः हर्षतरलैः । अलसैरित्यपि पाठः । चारणैः स्तावकैः अरणैरितिच्छेदो वा रणविरोधिभिर्द्यूताद्यासक्तैरित्यर्थः । अशनैरिति पाठे बहुभोक्तृभिः ॥ ६९ ॥ वृद्धः कुलधर्मानुपदिशति । कुलीनः शिशून् आचारं ग्राहयति । सखा हितं वदति तादृशा भीष्मद्रोणविदुराः । भगिनी धनं रक्षति । तत्र गृहे सर्वेऽपि सन्ति परंतूपदेशं न गृह्णासीति भावः ॥ ७० ॥ साद्यस्कानि सद्यःफलानि ॥ ७१ ॥

[ अर्जु० ] अधना धनानधिकारिणः । समधिगच्छन्ति त्रय एवाधना इति वचनात् दुर्योधनस्य राज्याधिकारो नास्तीति त्वमुपालभ्यसे ॥ ६४ ॥ चारणैरित्यत्र अशनैरिति च पाठः । अशनैर्भोजनपरैः चारणैरिति पाठोऽनार्षः ॥ ६९ ॥ वृद्धो ज्ञातिः कुलधर्मज्ञत्वात् अवसन्न इति स हि आश्रयदानादात्मनः आश्रयोन्नतिर्भवत्विति आश्रयोन्नतिं प्राणैरपि वाञ्छति । सखा दरिद्रो नित्यसापेक्षत्वात् । भगिनी चानपत्या भर्तृपुत्रयोरभावे भ्रातर्येव महास्नेहात् तस्माज्ज्ञानवृद्धत्वादवसन्नत्वाच्च युधिष्ठिरस्त्वया पार्श्वे स्थापनीयः । श्रान्तो ज्ञातिरित्यसम्यक् ॥ ७० ॥

[ सर्व० ] त्रयो न्यायाश्चारित्रं कनीयानल्पः, श्रेष्ठोऽतिशयितः । तदाह इति वृत्तविद इति ॥ ६२ ॥ भक्तं प्रागेव भजमानं तत्काले तवास्मीतिवादिनं न तु हृदयतः । शरणं स्वस्थानम् ॥ ६८ ॥ दीर्घसूत्रैश्चिरकारिभिः । रभसैर्हर्षतरलैस्तेषां हर्षादिना मन्त्रभेदप्रसङ्गात् । चारणैः परस्तुतिमात्रजीवनैः तेषां स्तुत्यर्थे मिथ्याभिधायित्वात् । 'रभसैः' इतिस्थाने 'अलसैः' इति क्वचित्पाठः ॥ ६९ ॥ वृद्धो ज्ञातिर्गृहे स्थितस्य कुलधर्मोपदेशकत्वात् । अवसन्नः श्रान्तः । कुलीनः अतिथित्वेन । सखा दरिद्रः । एवं भगिन्यामपि ॥ ७० ॥ साद्यस्कानि सद्यःफलानि ॥ ७१ ॥

[ दुर्घ० ] 'सद्यः फलानि चत्वारि यानि प्राह बृहस्पतिः । पृच्छते त्रिदशेन्द्राय तानीमानि निबोध मे । देवतानां च संकल्पमनुभावश्च धीमताम् । विनयं कृतविद्यानां विनाशं पापकर्मणाम्' । देवतानां संकल्पं चिकीर्षितं शापानुग्रहरूपफलं सद्यःफलमिति । तथा धीमतां प्राज्ञानां अनुभावः प्रभावः सम्यङ्नित्यानुष्ठानलक्षणः सद्यो नचिरेण कार्यसिद्धिं प्रसूयते । विनयः कर्तव्याकर्तव्यस्य निश्चयः सद्यः फलति शुभाशुभलक्षणं कार्यं कृतविद्यानां सम्यगभ्यस्तवेदवेदाङ्गादीनाम् । पापकर्मिणां महापातकादिपातकिनां विनाशो मरणं सद्यो नरकफलं नरकहेतुः । इत्येतान्सद्यःफलदान् त्वं निबोधेति सर्वत्र संब-

देवतानां च संकल्पमनुभावं च धीमताम् ।
विनयं कृतविद्यानां विनाशं पापकर्मिणाम् ॥ ७२ ॥
चत्वारि कर्माण्यभयंकराणि
भयं प्रयच्छन्त्ययथाकृतानि ।
मानाग्निहोत्रमुत मानमौनं
मानेनाधीतमुत मानयज्ञः ॥ ७३ ॥
पञ्चाग्नयो मनुष्येण परिचर्याः प्रयत्नतः ।
पिता माताऽग्निरात्मा च गुरुश्च भरतर्षभ ॥ ७४ ॥
पञ्चैव पूजयंल्लोके यशः प्राप्नोति केवलम् ।
देवान्पितॄन्मनुष्यांश्च भिक्षूनतिथिपञ्चमान् ॥ ७५ ॥
पञ्च त्वानुगमिष्यन्ति यत्र यत्र गमिष्यसि ।
मित्राण्यमित्रा मध्यस्था उपजीव्योपजीविनः ॥७६॥
पञ्चेन्द्रियस्य मर्त्यस्य छिद्रं चेदेकमिन्द्रियम् ।
ततोऽस्य स्रवति प्रज्ञा दृतेः पादादिवोदकम् ॥७७॥
षड् दोषाः पुरुषेणेह हातव्या भूतिमिच्छता ।
निद्रा तन्द्रा भयं क्रोध आलस्यं दीर्घसूत्रता ॥७८॥
षडिमान्पुरुषो जह्याद्भिन्नां नावमिवार्णवे ।
अप्रवक्तारमाचार्यमनधीयानमृत्विजम् ॥ ७९ ॥
अरक्षितारं राजानं भार्यां चाप्रियवादिनीम् ।
ग्रामकामं च गोपालं वनकामं च नापितम् ॥८०॥
षडेव तु गुणाः पुंसा न हातव्याः कदाचन ।
सत्यं दानमनालस्यमनसूया क्षमा धृतिः ॥ ८१ ॥

---

ध्यते । तस्मादेतत्सकलरूपयोगात् कृष्णयुधिष्ठिरादयो न कोप्याः ॥ ७१ ॥

[ लक्षा० ] शत्रोश्च मोक्षणमित्यत्र शत्रोः सकाशात् ॥ ६७ ॥

[ नील० ] देवताः स्वर्गभाजः स्वर्गपदार्थश्च 'यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् । अभिलाषोपनीतं च तत्सुखं स्वः पदास्पदम्' इत्येवंरूपः अतस्ते सत्यसंकल्पाः धीमताम-गस्त्यादीनामनुभावं समुद्रपानादिप्रभावं तेऽपि देवतुल्या इत्यर्थः । विनयोऽपि गुरुप्रसादकरत्वेन सद्यःफलः । विनाशहेतुकर्मापि चौर्यादिकं तच्च त्वय्येवास्ति ॥७२॥ तव तु सर्वं कर्म मानार्थमेवेति भावः ॥ ७३ ॥ अग्निवत् पित्रादयोऽपि पूज्या एव नास्कन्दनीयाः । तव पुत्रस्तु गुरुं युधिष्ठिरं न पूजयतीति भावः ॥ ७४ ॥ पितॄन् अग्निष्वात्तादीन् गोत्रप्रवर्तकानृषींश्च । मनुष्यान् पित्रादीन् 'ज्येष्ठो भ्राता पितुः समः' इति पितृतुल्यस्त्वत्पुत्रस्य युधिष्ठिर इति भावः ॥ ७५ ॥ त्वा त्वाम उपजीव्याः गुरवः । इह लोके साश्रिता मित्रादयः इहपरलोके जन्मान्तरे वा स्वं स्वं कार्यं कुर्वन्तीत्यर्थः । मित्रेषु पाण्डवेषु मैत्रीमाचरेति भावः । त्वं तु अन्धत्वात् दुर्जनवचनप्रतारितः पाण्डवानां गुणान् न पश्यसीति भावः ॥ ७६ ॥ दृतेश्चर्ममयाज्जलपात्रात् ॥ ७७ ॥ षडिति क्रोधोऽत्र तन्मूलको द्वेषो ग्राह्यः ॥ ७८ ॥ पाण्डवानामरक्षिता राजा त्वम् अन्येषामपि त्याज्यो भविष्यसीत्यर्थः ॥ ८० ॥ दुर्योधनत्यागार्थं तव धृतिर्धैर्यं नास्तीति भावः ॥ ८१ ॥

[ अर्जु० ] साद्यस्कानि सद्यःफलानि । संकल्पं वाञ्छितं विनाशं पापकर्मणाम् ॥ ७२ ॥ चत्वारि कर्माण्यभयंकराणि इत्यादि । एतानि चत्वारि कर्माणि मानेन प्रमाणेन वेदविधिना कृतानि अभयंकराणि नान्यथा ॥ ७३ ॥ दृतेश्चर्मणः पादादेकदेशात् ॥ ७७ ॥ तन्त्री रोगादिना ज्ञानभ्रंशः ॥ ७८ ॥

[ सर्व० ] सङ्कल्पोऽभिलाषः । अनुभावः प्रभावः । विनाशं विनाशनं विनाशयितुः सद्यःफलम् ॥ ७२ ॥ मनुष्यानृषीन् ॥ ७५ ॥ छिद्रमसंवृतमप्रत्याहृतं क्षरति त्रुट्यति । प्रज्ञा प्रकृष्टं ज्ञानम् । दृतेश्चर्मजलपात्रस्य पादः ॥ ७७ ॥ तन्द्रा जाग्रतोऽपि मनसः प्रलीनता । भयं स्वोच्छेदबुद्धिः । आलस्यं प्रवृत्तिवैमुख्यम् । दीर्घसूत्रता अप्रतिबन्धबुद्ध्या चिरकारिता ॥ ७८ ॥ अप्रवक्तारं रहस्यस्य । अनधीयानम् अध्ययनस्य मुख्यत्वात् ॥ ७९ ॥ ग्रामकामं ग्रामवासकामं वने वाससंभवेन, गोरक्षणस्य वनवाससाध्यत्वात् । एवं वनकामं तत्र वासेच्छुं तत्कार्यस्य ग्रामे एव संभवात् ॥ ८० ॥

[ दुर्घ० ] 'चत्वारि कर्माण्यभयङ्कराणि भयं प्रयच्छन्त्ययथाकृतानि । मानाग्निहोत्रमुत मानमौनं मानेनाधीतमुतमानयज्ञः ।' मानाग्निहोत्रं मानमौनं मानाध्ययनं मानयज्ञ इति चत्वारि अग्निहोत्रादीनि कर्माणि मानेन प्रमाणेन यथाशास्त्रनिश्चयेन क्रियमाणान्यभयङ्कराणि । यथोक्तफलदानि भवन्तीत्यर्थः । अशास्त्रविधिना देशकालपात्ररहितानि क्रियमाणानि भयंकराणीति विपरीतफलानि भवन्तीत्यर्थः । मानेन प्रमाणेन अग्निहोत्रमित्येवं सर्वत्र समासः । अत्र विदुरस्याऽयमाशयः । दुर्योधनस्याग्निहोत्रमप्रमाणं तथा पाण्डवानामंशाऽदाने मौनमित्यप्रमाणम् । अत एव स्वाध्यायाध्ययनमप्रमाणं यज्ञोऽप्यप्रमाणं परस्वेन बहुस्वर्णादिसंपादनात् सर्वमिदं विपरीतफलं भविष्यतीति विदुरस्याऽभिप्रायः ॥ ७३ ॥

इति श्रीम० दुर्घटार्थप्र० मुद्योग० त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

---

७८ ख. वृद्धिमिच्छता ।

अर्थागमो नित्यमरोगिता च
प्रिया च भार्या प्रियवादिनी च ।
वश्यश्च पुत्रोऽर्थकरी च विद्या
षड् जीवलोकस्य सुखानि राजन् ॥ ८२ ॥
षण्णामात्मनि नित्यानामैश्वर्यं योऽधिगच्छति ।
न स पापैः कुतोऽनर्थैर्युज्यते विजितेन्द्रियः ॥८३॥
षडिमे षट्सु जीवन्ति सप्तमो नोपलभ्यते ।
चौराः प्रमत्ते जीवन्ति व्याधितेषु चिकित्सकाः ॥८४॥
प्रमदाः कामयानेषु यजमानेषु याजकाः ।
राजा विवदमानेषु नित्यं मूर्खेषु पण्डिताः ॥८५॥
षडिमानि विनश्यन्ति मुहूर्तमनवेक्षणात् ॥
गावः सेवा कृषिर्भार्या विद्या वृषलसंगतिः ॥८६॥
षडेते ह्यवमन्यन्ते नित्यं पूर्वोपकारिणम् ।
आचार्यं शिक्षिताः शिष्याः कृतदाराश्च मातरम्॥८७॥
नारीं विगतकामास्तु कृतार्थाश्च प्रयोजकम् ।
नावं निस्तीर्णकान्तारा आतुराश्च चिकित्सकम्॥८८॥
आरोग्यमानृण्यमविप्रवासः
सद्भिर्मनुष्यैः सह संप्रयोगः ।
स्वप्रत्यया वृत्तिरभीतवासः
षड् जीवलोकस्य सुखानि राजन् ॥ ८९ ॥
ईर्षुर्घृणी नसंतुष्टः क्रोधनो नित्यशङ्कितः ।
परभाग्योपजीवी च षडेते नित्यदुःखिताः ॥ ९० ॥
सप्त दोषाः सदा राज्ञा हातव्या व्यसनोदयाः ।
प्रायशो यैर्विनश्यन्ति कृतमूला अपीश्वराः ॥ ९१ ॥
स्त्रियोऽक्षा मृगया पानं वाक्पारुष्यं च पञ्चमम् ।
महच्च दण्डपारुष्यमर्थदूषणमेव च ॥ ९२ ॥
अष्टौ पूर्वनिमित्तानि नरस्य विनशिष्यतः ।
ब्राह्मणान्प्रथमं द्वेष्टि ब्राह्मणैश्च विरुध्यते ॥ ९३ ॥
ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति ।
रमते निन्दया चैषां प्रशंसां नाभिनन्दति ॥ ९४ ॥
नैनान्स्मरति कृत्येषु याचितश्चाभ्यसूयति ।
एतान्दोषान्नरः प्राज्ञो बुध्येद्बुद्ध्वा विसर्जयेत् ॥९५॥
अष्टाविमानि हर्षस्य नवनीतानि भारत ।
वर्तमानानि दृश्यन्ते तान्येव स्वसुखान्यपि ॥ ९६ ॥
समागमश्च सखिभिर्महांश्चैव धनागमः ।
पुत्रेण च परिष्वङ्गः संनिपातश्च मैथुने ॥ ९७ ॥
समये च प्रियालापः स्वयूथ्येषु समुन्नतिः ।
अभिप्रेतार्थलाभश्च पूजा च जनसंसदि ॥ ९८ ॥

---

[ नील० ] षण्णामिति आत्मनि चित्ते नित्यानां षण्णाम् । 'कामक्रोधौ शोकमोहौ मदमानौ च षट्पदी' इत्युक्तानाम् । ऐश्वर्यं वशित्वं त्वं तु राज्यकामः पापैरनर्थैश्च युक्तोऽसीति भावः ॥ ८३ ॥ पण्डिताः पाण्डवाः मूर्खेषु त्वत्पुत्रेषु राज्यं लप्स्यन्त्येवेत्यर्थः ॥ ८५ ॥ वृषलः शूद्रः पुत्रस्नेहाक्रान्तेन त्वया सद्विद्याऽनवेक्षणान्नाशिता अन्यथा सत्यं न जह्या इति भावः ॥ ८६ ॥ आतुरा आरोग्ये सतीति शेषः त्वं तु कृत्स्नराज्यलाभेन कृतकृत्यत्वात्पाण्डवानवमन्यसे ॥ ८८ ॥ स्वप्रत्यया स्वानुकूला वृत्तिर्जीविका तव सत्सङ्गो नास्तीत्यर्थः ॥ ८९ ॥ ईर्षुरिति त्वयि तु ईर्षुत्वं घृणा दया तव तु वश्यः पुत्रो नास्तीति भावः ॥ ९० ॥ वाक्पारुष्यं दण्डपारुष्यं च पाण्डवेषु त्वत्पुत्रैः कृतम् ॥ ९२ ॥ द्वेष्टि मनसाऽनिष्टं चिन्तयति विरुध्यते कर्मणा ॥ ९३ ॥ अष्टसु चरमं त्वत्पुत्रे मैत्रेयस्यावमानतो भविष्यतीति जानामीति भावः ॥ ९४ ॥ जनसंसदि सभायां द्रौपद्या आनयनेन पूजाऽपि तव नष्टा ॥ ९८ ॥

[ अर्जु० ] षण्णां सत्त्वादीनाम् । पापैश्च पापहेतुभिः हिंसादिभिः । कुतोऽनर्थैः नरकादिपातैः ॥ ८३ ॥ चौरा इत्यादि । चौरादीनां मध्ये न त्वमेकोऽपि तत्कथं पाण्डवेभ्यो धनमुपजीवसि ॥ ८४ ॥ व्यसनोदयाः दुःखहेतवः कृतमूला दृढमूलाः ॥ ९१ ॥ स्त्रियः धातुक्षयहेतुत्वेन शरीरनाशहेतुत्वात् । अक्षा धनक्षयहेतुत्वात् । मृगया व्यालादिभ्यो नाशहेतुत्वात् । पानं चित्तभ्रान्तिहेतुत्वात् । वाक्पारुष्यं सर्वोद्वेगहेतुत्वात् । दण्डपारुष्यं वैरकारणत्वात् । अर्थदूषणं सर्वक्षयहेतुत्वात् ॥ ९२ ॥ द्वेष्टि हिनस्ति विरुध्यते सह नावतिष्ठते ॥ ९३ ॥ कृत्येषु ज्ञातार्थकार्येषु ॥ ९५ ॥ सखिभिः सुखदुःखसहकारिभिः ॥ ९७ ॥ समये विरहदग्धस्य वसन्तादौ । स्वयूथ्येषु ज्ञातिवर्गेषु ॥ ९८ ॥

[ सर्व० ] षण्णाम् इन्द्रियाणामैश्वर्यं वशित्वम् आत्मनि शरीरे नित्यानां नित्यं वसतां किञ्चिदेकापायेऽपि सर्वापायाभावात् समुदायापेक्षया नित्यत्वम् । पापैः कल्मषैः । कृतानर्थैः कृतदुःखैः ॥ ८३ ॥ स्वप्रत्यया स्वनिश्चयपूर्विका प्रवृत्तिर्न गतानुगतिका ॥ ८९ ॥ अर्थदूषणमर्थेषु दोषोत्पादनं नाशनमिति यावत् ॥९२॥ द्वेष्टि दोषपात्रं करोति । विरुध्यते वाक्कलहं करोति ॥९३॥ कृत्येषु आभ्युदयिकेषु । अभ्यसूयति समक्षमेव दूषयति ॥ ९५ ॥ हर्षस्थानानि वर्तन्ते ना इति (?) । इदानीमपि सुखानि सुखोदर्काणि

अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ९९ ॥
नवद्वारमिदं वेश्म त्रिस्थूणं पञ्चसाक्षिकम् ।
क्षेत्रज्ञाधिष्ठितं विद्वान् यो वेद स परः कविः ॥१००॥
दश धर्मं न जानन्ति धृतराष्ट्र निबोध तान् ।
मत्तः प्रमत्त उन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ॥१०१॥
त्वरमाणश्च लुब्धश्च भीतः कामी च ते दश ।
तस्मादेतेषु सर्वेषु न प्रसज्जेत पण्डितः ॥ १०२ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् ।
पुत्रार्थमसुरेन्द्रेण गीतं चैव सुधन्वना ॥ १०३ ॥
यः काममन्यू प्रजहाति राजा
पात्रे प्रतिष्ठापयते धनं च ।
विशेषविच्छ्रुतवान् क्षिप्रकारी
तं सर्वलोकः कुरुते प्रमाणम् ॥ १०४ ॥
जानाति विश्वासयितुं मनुष्यान्
विज्ञातदोषेषु दधाति दण्डम् ।
जानाति मात्रां च तथा क्षमां च
तं तादृशं श्रीर्जुषते समग्रा ॥ १०५ ॥
सुदुर्बलं नावजानाति कंचि-
द्युक्तो रिपुं सेवते बुद्धिपूर्वम् ।
न विग्रहं रोचयते बलस्थैः
काले च यो विक्रमते स धीरः ॥ १०६ ॥
प्राप्यापदं न व्यथते कदाचि-
दुद्योगमन्विच्छति चाप्रमत्तः ।
दुःखं च काले सहते महात्मा
धुरंधरस्तस्य जिताः सपत्नाः ॥ १०७ ॥
अनर्थकं विप्रवासं गृहेभ्यः
पापैः संधिं परदाराभिमर्शम् ।
दम्भं स्तैन्यं पैशुनं मद्यपानं
न सेवते यश्च सुखी सदैव ॥ १०८ ॥
न संरम्भेणारभते त्रिवर्ग-
माकारितः शंसति तत्त्वमेव ।
न मित्रार्थे रोचयते विवादं
नापूजितः कुप्यति चाप्यमूढः ॥ १०९ ॥

---

॥ ९६ ॥ समये हर्षादिसमये प्रियस्य प्रशंसादिरूपस्यालापः । समुन्नतिः उन्नतिः ॥ ९८ ॥

[लक्षा०] महच्च दण्डपारुष्यमित्यत्र राज्ञो दण्डदानसमये पारुष्यं दण्डपारुष्यम् । अर्थदूषणं तत्तस्य द्रव्यस्य दूषणम् ॥ ९२ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[नील०] नवेति श्रोत्रादिपञ्चकं मनोबुद्ध्यहंकाराः स्थूलशरीरं चेति नव द्वाराणीव द्वाराणि विषयग्रहणमार्गा यस्मिंस्तत् । तिस्रः स्थूणाः स्तम्भा इव विधारका यस्य ते च अविद्या कामः कर्म च । वेश्म गृहं देहद्वयात्मकम् । पञ्च साक्षिवदुदासीनाः शब्दादयो ग्राह्या यस्मिन् । पञ्चभूमिकमिति पाठे पञ्च भूमयः प्रचारस्थानानीति त एव । पाञ्चभौतिकमित्यर्वाचीनः पाठ उपेक्ष्यः । क्षेत्रज्ञेन चिदात्मना अधिष्ठितमिदं क्षेत्रं तत्त्वेन यो विद्वान् वेद स परः सर्वोत्कृष्टः कविर्ब्रह्मविदित्यर्थः ॥ १०० ॥ मत्तो मद्यादिना । प्रमत्तो विषयान्तरासक्त्याऽनवहितः । उन्मत्तो धातुदोषात् एतेषां मध्ये त्वं लुब्धोऽसीति भावः ॥ १०१ ॥ काममन्यू कामक्रोधौ विशेषवित् तारतम्यज्ञः ॥ १०४ ॥ मात्राम् अपराधानुसारेण दण्डप्रमाणं ब्राह्मणादौ अपराधस्य क्षमां च जानाति ॥ १०५ ॥ युक्तः छिद्रप्रेक्षणेऽवहितः ॥ १०६ ॥ धुरंधरः कार्यभारसहः ॥ १०७ ॥ संरम्भेण क्रोधेन त्रिवर्गं धर्मकामार्थान् आकारितः आहूतः पाठान्तरे मात्रार्थे अल्पार्थे ॥ १०९ ॥

[अर्जु०] इदं वेश्म शरीरं नासिकाक्षिश्रवणानि प्रत्येकं द्वयं द्वयमिति षट् मुखपायूपस्था इति नवद्वारम् । त्रयो वातपित्तश्लेष्माणः सत्त्वरजस्तमांसि वा स्थूणा धारणायष्टयो यस्य । पञ्च पृथिव्यप्तेजोवाय्वाकाशानि उपर्युपरि साक्षिभूमयो यस्य । क्षेत्रज्ञ आत्मा एवं बहुच्छिद्रं शरीरं तत्रस्थस्य तवान्यायेन राज्याभिलाषो नानुरूपः ॥ १०० ॥ दशेत्यादि । मत्तो धनादिना, प्रमत्तो मोहेन, उन्मत्तो वायुप्रकोपादिना । श्रान्तो भारादिना ॥१०१॥ असुरेन्द्राय प्रह्लादाय ॥ १०३ ॥ काममन्यू एतौ धार्तराष्ट्रे तिष्ठत इति भावः । प्रतिष्ठापयति स्थिरयति । विशेषवित् गुणागुणज्ञः । श्रुतवान् शास्त्रज्ञः ॥ १०४ ॥ मात्रा इन्द्रियाणि क्षमासमभिव्याहारात् ॥ १०५ ॥ युक्तस्तच्छिद्रे एकाग्रचित्तः बुद्धिपूर्वं ममेति ज्ञात्वा ॥ १०६ ॥ उद्यानमुत्थानं, धुरंधरः कार्योद्वहनक्षमः ॥ १०७ ॥ आकारितः पृष्टः मात्रार्थे स्वल्पे वस्तुनि ॥ १०९ ॥

[सर्व०] अक्षिद्वयनासाद्वयश्रोत्रद्वयमुखपायूपस्थानि नव द्वाराणि वेश्मानुप्रवेशे । त्रयः सत्त्वादयो गुणाः स्तम्भाः धारणहेतुत्वात् । भूमिः स्थलम् । सा पञ्चभिर्भूतैरस्य

न योऽभ्यसूयत्यनुकम्पते च
न दुर्बलः प्रातिभाव्यं करोति ।
नात्याह किंचित् क्षमते विवादं
सर्वत्र तादृग्लभते प्रशंसाम् ॥ ११० ॥
यो नोद्धतं कुरुते जातु वेषं
न पौरुषेणापि विकत्थतेऽन्यान् ।
न मूर्च्छितः कटुकान्याह किंचि-
त्प्रियं सदा तं कुरुते जनो हि ॥ १११ ॥
न वैरमुद्दीपयति प्रशान्तं
न दर्पमारोहति नास्तमेति ।
न दुर्गतोस्मीति करोत्यकार्यं
तमार्यशीलं परमाहुरार्याः ॥ ११२ ॥
न स्वे सुखे वै कुरुते प्रहर्षं
नान्यस्य दुःखे भवति प्रहृष्टः ।
दत्त्वा न पश्चात् कुरुतेऽनुतापं
स कथ्यते सत्पुरुषार्यशीलः ॥ ११३ ॥
देशाचारान्समयान् जातिधर्मान्
बुभूषते यः स परावरज्ञः ।
स यत्र तत्राभिगतः सदैव
महाजनस्याधिपत्यं करोति ॥ ११४ ॥

दम्भं मोहं मत्सरं पापकृत्यं
राजद्विष्टं पैशुनं पूगवैरम् ।
मत्तोन्मत्तैर्दुर्जनैश्चापि वादं
यः प्रज्ञावान् वर्जयेत्स प्रधानः ॥ ११५ ॥
दानं मोहं दैवतं मङ्गलानि
प्रायश्चित्तान् विविधाँल्लोकवादान् ।
एतानि यः कुरुते नैत्यकानि
तस्योत्थानं देवता राधयन्ति ॥ ११६ ॥
समैर्विवाहं कुरुते न हीनैः
समैः सख्यं व्यवहारं कथां च ।
गुणैर्विशिष्टांश्च पुरो दधाति
विपश्चितस्तस्य नयाः सुनीताः ॥ ११७ ॥
मितं भुङ्क्ते संविभज्याश्रितेभ्यो
मितं स्वपित्यमितं कर्म कृत्वा ।
ददात्यमित्रेष्वपि याचितः सं-
स्तमात्मवन्तं प्रजहत्यनर्थाः ॥ ११८ ॥
चिकीर्षितं विप्रकृतं च यस्य
नान्ये जनाः कर्म जानन्ति किंचित् ।
मन्त्रे गुप्ते सम्यगनुष्ठिते च
नाल्पोऽप्यस्य च्यवते कश्चिदर्थः ॥ ११९ ॥

---

क्षेत्रज्ञाधिष्ठितं न चाधानं यो वेद ॥ १०० ॥ मत्तः सुरया । प्रमतो विषयान्तरासक्तः । उन्मत्तः धातुदोषात् ॥ १०१ ॥ पुत्रार्थं पुत्रमुद्दिश्य । अत्रैव धर्मज्ञानविषय एव ॥ १०३ ॥ मात्रां आयस्येयत्ताम् ॥ १०५ ॥ युक्तः अपकारोद्युक्तः ॥ १०६ ॥ उद्यानमुत्थानम् अप्रमत्तः कार्यान्तरासक्तः । धुरन्धरः कार्यधुराणामत्यागी ॥ १०७ ॥ संरम्भेण परसंपद्दर्शनजक्रोधमात्रेण । आकारितः आहूतः प्रश्नार्थे मात्रार्थे अल्पार्थे ॥ १०९ ॥

[ नील० ] प्रातिभाव्यं प्रतिकूलो भावः चित्ताभिप्रायः तस्य भावः प्रातिभाव्यं विरोधम् अत्याह अतिक्रम्य ब्रवीति ॥ ११० ॥ समयान् भाषाभेदान् बुभूषते ऐश्वर्यं प्राप्तुमिच्छति परावरज्ञः उत्तमाधमविवेकवान् ॥ ११४ ॥ दम्भं परवञ्चनेच्छया धर्मानुष्ठानं मोहम् अनात्मन्यात्मबुद्धिं मत्सरं द्वेषं पापकृत्यं पापक्रियाम् अभिचारादिरूपां पूगवैरं बहुभिः सह वैरम् ॥ ११५ ॥

[ अर्जु० ] नाभ्यसूयति (कस्मैचिदिति शेषः) कंचनेति शेषः । प्रतिभावं प्रतिभूत्वम् । नात्याह नातिक्रम्य किंचिद् ब्रूते ॥ ११० ॥ मूर्छितः क्रुद्धः ॥ १११ ॥ मन्युं शोकम् ॥ ११२ ॥ प्रतीतस्तुष्टः ॥ ११३ ॥ उत्थानमुदयं राधयन्ति साधयन्ति ॥ ११६ ॥ पुरोदधाति अनुकरोति ॥ ११७ ॥ विप्रकृतमसत्कारं हृदयस्थमन्ये न जानन्ति । अल्पोऽप्यर्थो न च्यवते न प्रकटतां गच्छति ॥ ११९ ॥

[ सर्व० ] नाभ्यसूयति गुणिनं तथाऽनुकम्पते दीनम् । दुर्बलो दरिद्रः । नात्याह कश्चिदतिक्रम्य नाह न क्षिपतीति यावत् । क्षमते विवादं विरुद्धवादं परस्य अन्यान् लक्ष्यीकृत्य ॥ ११० ॥ मूर्छितस्तन्द्रितो भूत्वा ॥ १११ ॥ नास्तमेति नात्मानं गोपायति । करोति मन्युं शोकम् ॥ ११२ ॥ समयान् पूर्वप्रतिज्ञातनियमान् । बुभूषते कर्तुमिच्छति ण्यर्थान्तर्भावात् । यश्च परावरज्ञ उत्तमाधमविवेकवान् ॥ ११४ ॥ दम्भं परवञ्चनेच्छया धर्मानुष्ठानम् । मोहम् अनात्मन्यात्मबुद्धिम् । मत्सरं द्वेषम् । पापकृत्यं पापक्रियाम् । पूगवैरं सर्ववैरम् ॥ ११५ ॥ दैवतं देवतार्थं कर्म । लोकवादान् लोकव्यवहारसिद्धकर्माणि । उत्थानं बुद्धिं राधयन्ति साधयन्ति ॥ ११६ ॥ व्यवहारं विवादं च ॥ ११७ ॥ विप्रकृतं विरुद्धकृतम् । च्यवते चलति ॥ ११९ ॥

य: सर्वभूतप्रशमे निविष्टः
सत्यो मृदुर्मानकृच्छुद्धभावः ।
अतीव स ज्ञायते ज्ञातिमध्ये
महामणिर्जात्य इव प्रसन्नः ॥ १२० ॥
य आत्मनाऽपत्रपते भृशं नरः
स सर्वलोकस्य गुरुर्भवत्युत ।
अनन्ततेजाः सुमनाः समाहितः
स तेजसा सूर्य इवावभासते ॥ १२१ ॥
वने जाताः शापदग्धस्य राज्ञः
पाण्डोः पुत्राः पञ्च पञ्चेन्द्रकल्पाः ।
त्वयैव बाला वर्धिताः शिक्षिताश्च
तवादेशं पालयन्त्याम्बिकेय ॥ १२२ ॥
प्रदायैषामुचितं तात राज्यं
सुखी पुत्रैः सहितो मोदमानः ।
न देवानां नापि च मानुषाणां
भविष्यसि त्वं तर्कणीयो नरेन्द्र ॥ १२३ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

## चतुस्त्रिंशोऽध्यायः ३४

धृतराष्ट्रेण कुरूणां श्रेयःसाधनं पृष्टो विदुरो नीतिमुपदिशति ॥ १ ॥

**धृतराष्ट्र उवाच—**

जाग्रतो दह्यमानस्य यत्कार्यमनुपश्यसि ।
तद्ब्रूहि त्वं हि नस्तात धर्मार्थकुशलो ह्यसि ॥ १ ॥
त्वं मां यथावद्विदुर प्रशाधि
प्रज्ञापूर्वं सर्वमजातशत्रोः ।
यन्मन्यसे पथ्यमदीनसत्व
श्रेयस्करं ब्रूहि तद्वै कुरूणाम् ॥ २ ॥
पापाशङ्की पापमेवानुपश्यन्
पृच्छामि त्वां व्याकुलेनात्मनाऽहम् ।
कवे तन्मे ब्रूहि सर्वं यथाव-
न्मनीषितं सर्वमजातशत्रोः ॥ ३ ॥

**विदुर उवाच—**

शुभं वा यदि वा पापं द्वेष्यं वा यदि वा प्रियम् ।
अपृष्टस्तस्य तद्ब्रूयाद्यस्य नेच्छेत्पराभवम् ॥ ४ ॥
तस्माद्वक्ष्यामि ते राजन् हितं यत्स्यात् कुरून्प्रति ।
वचः श्रेयस्करं धर्म्यं ब्रुवतस्तन्निबोध मे ॥ ५ ॥
मिथ्योपेतानि कर्माणि सिद्ध्येयुर्यानि भारत ।
अनुपायप्रयुक्तानि मा स्म तेषु मनः कृथाः ॥ ६ ॥

[ नील० ] जात्यः अभिजातः उत्तमे आकरे जातः ॥ १२० ॥ आत्मना अपत्रपते परैरज्ञातेऽपि स्वव्यलीके स्वयमेव लज्जते ॥ १२१ ॥ तर्कणीयः शङ्क्यः ॥ १२३ ॥

इति श्रीनैल० उद्योग० भा०भा० त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[ अर्जु० ] सर्वभूतप्रशमे मैत्र्यां मृदुर्वचसि संज्ञायते प्रकाशते जात्यः जातिभवः ॥ १२० ॥ आत्मना स्वयमेव ॥ १२१ ॥ तर्कणीयः शङ्कनीयः ॥ १२३ ॥

इति श्रीमहाभारतटीकायामर्जुनमिश्रकृतायामुद्योगपर्वणि त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[ सर्व० ] सर्वभूतप्रशमे [ पुत्रकधे ] संज्ञायते सम्यक् ज्ञायते ॥ १२० ॥ आत्मनाऽपत्रपते आत्मनाऽनुक्तेऽपि स्वव्यलीके स्वयं ज्ञात्वा लज्जते ॥ १२१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

[ नील० ] दह्यमानस्य चिन्ताग्निनेति शेषः। धर्मार्थयोः कुशलः मोक्षेऽस्य वक्तुमनधिकाराद्द्वयोरेव ग्रहः ॥ १ ॥ अजातशत्रोः पथ्यं कुरूणां च श्रेयस्करम् ॥ २ ॥ पापाशङ्की भाविदुःखादुद्विजन् पापं स्वकृतं पूर्वापराधं पश्यन् कवे हे सर्वज्ञ ॥ ३ ॥ मिथ्योपेतानि कपटद्यूतादीनि अनुपायैः असदुपायैः प्रयुक्तानि दुःखफलानीत्यर्थः ॥ ६ ॥

[ अर्जु० ] अजातशत्रोः युधिष्ठिरस्य पथ्यं परिणतिसुरसं, श्रेयस्करं कुरूणामित्यन्वयः ॥ २ ॥ मनीषितं मनःस्थम् ॥३॥ भावमुत्तरोत्तरसत्ताम्। भवमित्यपि पाठः ॥५॥ अनुपायेन पुरुषव्यापारं विना तत्र हि दैवं कारणम् ॥ ६ ॥

[ सर्व० ] अजातशत्रोः पथ्यं श्रेयस्करम् ॥ २ ॥ कुरूणां पापाशङ्की पापमात्मनो दुष्कृतं पश्यन् ॥ ३ ॥ भावं भूतिम् ॥ ५ ॥ मिथ्योपेतानि मिथ्यावचनानि ॥ ६ ॥

[ लक्षा० ] मिथ्योपेतानीत्यत्र मिथ्योपेतानि छद्मना सहितानि । अनु अनन्तरं तापप्रयुक्तानि तापैः तमः(?)तपनादितापैः प्रकर्षेण युक्तानि । कर्माणि यदि सिद्ध्येयुः तात्कालिकजयाख्यफलेन फल·········मनः मास्म कृथा इति योजना ॥ ६ ॥

१२१ ख. परो भ° । इति त्रयस्त्रिंशोऽध्यायः ॥ ३३ ॥

५ ख. भावमिच्छन्कुरू° ६ ख. अनुपायेन ।

तथैव योगविहितं यत्तु कर्म न सिध्यति ।
उपाययुक्तं मेधावी न तत्र ग्लपयेन्मनः ॥ ७ ॥
अनुबन्धानपेक्षेत सानुबन्धेषु कर्मसु ।
संप्रधार्य च कुर्वीत न वेगेन समाचरेत् ॥ ८ ॥
अनुबन्धं च संप्रेक्ष्य विपाकं चैव कर्मणाम् ।
उत्थानमात्मनश्चैव धीरः कुर्वीत वा न वा ॥ ९ ॥
यः प्रमाणं न जानाति स्थाने वृद्धौ तथा क्षये ।
कोशे जनपदे दण्डे न स राज्येऽवतिष्ठते ॥ १० ॥
यस्त्वेतानि प्रमाणानि यथोक्तान्यनुपश्यति ।
युक्तो धर्मार्थयोर्ज्ञाने स राज्यमधिगच्छति ॥ ११ ॥
न राज्यं प्राप्तमित्येव वर्तितव्यमसांप्रतम् ।
श्रियं ह्यविनयो हन्ति जरा रूपमिवोत्तमम् ॥ १२ ॥
भक्ष्योत्तमप्रतिच्छन्नं मत्स्यो बडिशमायसम् ।
लोभाभिपाती ग्रसते नानुबन्धमवेक्षते ॥ १३ ॥

यच्छक्यं ग्रसितुं ग्रस्यं ग्रस्तं परिणमेच्च यत् ।
हितं च परिणामे यत्तदाद्यं भूतिमिच्छता ॥ १४ ॥
वनस्पतेरपक्वानि फलानि प्रचिनोति यः ।
स नाप्नोति रसं तेभ्यो बीजं चास्य विनश्यति ॥१५॥
यस्तु पक्वमुपादत्ते काले परिणतं फलम् ।
फलाद्रसं स लभते बीजाच्चैव फलं पुनः ॥ १६ ॥
यथा मधु समादत्ते रक्षन् पुष्पाणि षट्पदः ।
तद्वदर्थान्मनुष्येभ्य आदद्यादविहिंसया ॥ १७ ॥
पुष्पं पुष्पं विचिन्वीत मूलच्छेदं न कारयेत् ।
मालाकार इवारामे न यथाङ्गारकारकः ॥ १८ ॥
किंनु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।
इति कर्माणि संचिन्त्य कुर्याद्वा पुरुषो न वा ॥१९॥
अनारभ्या भवन्त्यर्थाः केचिन्नित्यं तथाऽगताः ।
कृतः पुरुषकारो हि भवेद्येषु निरर्थकः ॥ २० ॥

---

[ नील० ] अनुबन्धान् प्रयोजनानि संप्रधार्य निश्चित्य ॥ ८ ॥ विपाकः फलसिद्धावपि परिपाकः उत्थानम् उद्यमं वा नवेति, सिद्धिपक्षे कुर्वीत नान्यथेत्यर्थः ॥ ९ ॥ प्रमाणं निश्चयद्वारं स्थानादीनि सर्वदा विचार्याणीत्यर्थः । स्थाने दुर्गादौ दण्डे सेनायाम् ॥१०॥ एतानि स्थानादिज्ञापकानि प्रमाणानि लेख्यादीनि ॥ ११ ॥ असांप्रतम् अयुक्तं यथा स्यात्तथा न वर्तितव्यम् ॥ १२ ॥ भक्ष्येति मुखे मिष्टमन्ते मृत्युदं कर्म न कर्तव्यमित्यर्थः । अनुबन्धं पश्चाद्बन्धनम् ॥ १३ ॥ आद्यं भक्षणीयम् ॥ १४ ॥ अङ्गारकारको हि मूलत उत्कृत्य काष्ठं दहति अङ्गार इङ्गालः ॥ १८ ॥ अनारभ्याः प्रबलैः सह वैरादयः अगताः कदाचिदप्यप्राप्ताः ॥ २० ॥

[ अर्जु० ] योगः शास्त्रम् उपाययुक्तम् दुष्टैः साधनैः संपन्नं तदारभ्यमानं नड्डहम् (?) ॥७॥ अनुबन्धान् आरम्भान्तरप्रबन्धान् । संप्रधार्य विमृश्य वेगेनौत्सुक्येन ॥ ८ ॥ विपाकान् विरुद्धपरिणामान् उत्थानमुदयम् अनुबन्धविपाकयोः सतोरपि तदा लाभात् कुर्वीत । अथवा ताभ्यां दूषितत्वादुदयः फलमपि न कुर्वीतेति परमार्थः ॥ ९ ॥ स्थाने तदवस्थायां कोशे च जनपदे च दण्डे सेनायां च प्रत्येकमेषु ये स्थानवृद्धिक्षयाः तेषु अनुबन्धविपाकोदयलक्षणादिप्रमाणानि यो न वेद स न राज्ये प्राप्ते व्यवतिष्ठते स्थिरो न भवतीत्यर्थः ॥ १० ॥ युक्तः एकाग्रः ॥११॥ असांप्रतमयुक्तम् ॥१२॥ भक्ष्योत्तमप्रतिच्छन्नमित्यादि । भक्ष्येणोत्तमेन किंच उल्मुककलिकादिना(?) रूपमात्रदर्शनेनाभिपततीत्येवंशीलः । रूपातिपातीति पाठः साधुः । लोभातिपातीत्यपि ॥ १३ ॥ परिणमेत् रसभावेन जीर्येत् । आद्यं भक्षणीयम् ॥ १४ ॥ बीजमङ्कुरहेतुः ॥ १५ ॥ नित्यं तथा गताः कर्तुमशक्यं रोगं कुर्वन्ति ॥ २० ॥

[ सर्व० ] अभिचाराणि अनुपायस्तद्विरोधिनोऽप्युपायास्तैः प्रयुक्तानि विनाभूतानि दुःखोदर्काणीति यावत् । योगो युक्तिस्तद्विहितम् । उपायो दृष्टोपायस्तस्यादृष्टप्रतिबन्धेनाशक्यत्वात् । तत्र मनो न ग्लपयेत् ॥ ७ ॥ अनुबन्धान् प्रतिबन्धान् ॥ ८ ॥ विपाकान् फलानि । उत्थानम् उद्यमयोग्यताम् ॥ ९ ॥ प्रमाणं कारणम् । कोषादिषु त्रिषु स्थानादयस्त्रयः [ प्रत्येकं दण्डे तत्र स्वधने युक्त उद्युक्तः ] ॥ १० ॥ रूपातिपाती भक्षे रूपदर्शनमात्रेण पतन् । अनुबन्धं पश्चाद्बन्धनम् प्रमाणं न जानातीत्यस्यैव निदर्शनम् ॥ १३ ॥ कुर्याद्वा पुरुषो न वेति तथा ज्ञात्वा पुनर्विमृशेत् दोषाणां दुरूहत्वादित्यर्थः ॥१९॥ नित्यं तथागताः अगता अप्राप्ताः केनचित्पर्वतपाटनादयः ॥ २० ॥

[ लक्ष्मा० ] उपाययुक्तम् उप समीपे कालान्तरे जन्मान्तरे वा आयेन फललाभेन युक्तम् । योगं विहितं योगः नियोगः विधिः तेन विहितं कर्म यदि न सिध्येत् तत्र तस्मिन् कर्मणि ॥ ७ ॥ अनुबन्धानित्यत्र अनुबन्धान् सहायान् ॥ ८ ॥ उत्थानमभिवृद्धिम् ॥ ९ ॥ वर्तितव्यमसांप्रतमित्यत्र असांप्रतमयुक्तं यथा भवति तथा ॥ १२ ॥ केचिन्नित्यं तथागता इत्यत्र तथा आगताः स्वप्रयत्नं विना दैवेनैव आगताः पुरुषकारः पुरुषप्रयत्नः ॥ २० ॥

---

९ ख. विपाकान् । ११ ख. न्युपसेवते ।

प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥२१॥
कांश्चिदर्थान्नरः प्राज्ञो लघुमूलान्महाफलान् ।
क्षिप्रमारभते कर्तुं न विघ्नयति तादृशान् ॥ २२ ॥
ऋजु पश्यति यः सर्वं चक्षुषा नु पिबन्निव ।
आसीनमपि तूष्णीकमनुरज्यन्ति तं प्रजाः ॥ २३ ॥
सुपुष्पितः स्यादफलः फलितः स्याद्दुरारुहः ।
अपक्वः पक्वसंकाशो न तु शीर्येत कर्हिचित् ॥२४॥
चक्षुषा मनसा वाचा कर्मणा च चतुर्विधम् ।
प्रसादयति यो लोकं तं लोकोऽनुप्रसीदति ॥ २५ ॥
यस्मात्त्रस्यन्ति भूतानि मृगव्याधान्मृगा इव ।
सागरान्तामपि महीं लब्ध्वा स परिहीयते ॥ २६ ॥
पितृपैतामहं राज्यं प्राप्तवान्स्वेन कर्मणा ।
वायुरभ्रमिवासाद्य भ्रंशयत्यनये स्थितः ॥ २७ ॥
धर्ममाचरतो राज्ञः सद्भिश्चरितमादितः ।
वसुधा वसुसंपूर्णा वर्धते भूतिवर्धनी ॥ २८ ॥
अथ संत्यजतो धर्ममधर्मं चानुतिष्ठतः ।
प्रतिसंवेष्टते भूमिरग्नौ चर्माहितं यथा ॥ २९ ॥
य एव यत्नः क्रियते परराष्ट्रविमर्दने ।
स एव यत्नः कर्तव्यः स्वराष्ट्रपरिपालने ॥ ३० ॥
धर्मेण राज्यं विन्देत धर्मेण परिपालयेत् ।
धर्ममूलां श्रियं प्राप्य न जहाति न हीयते ॥ ३१ ॥
अप्युन्मत्तात्प्रलपतो बालाच्च परिजल्पतः ।
सर्वतः सारमादद्यादश्मभ्य इव काञ्चनम् ॥ ३२ ॥
सुव्याहृतानि सूक्तानि सुकृतानि ततस्ततः ।
संचिन्वन् धीर आसीत शिलाहारी शिलं यथा॥३३॥
गन्धेन गावः पश्यन्ति वेदैः पश्यन्ति ब्राह्मणाः ।
चारैः पश्यन्ति राजानश्चक्षुर्भ्यामितरे जनाः ॥ ३४ ॥
भूयांसं लभते क्लेशं या गौर्भवति दुर्दुहा ।
अथ या सुदुहा राजन्नैवं तां वितुदन्त्यपि ॥ ३५ ॥
यदतप्तं प्रणमति न तत्संतापयन्त्यपि ।
यच्च स्वयं नतं दारु न तत्संतापयन्त्यपि ॥ ३६ ॥
एतयोपमया धीरः संनमेत बलीयसे ।
इन्द्राय स प्रणमते नमते यो बलीयसे ॥ ३७ ॥

[ नील० ] लघुमूलान् अल्पोपायान् ॥ २२ ॥ चक्षुषा प्रीतिमयेन ॥ २३ ॥ सुपुष्पितः वाचा चक्षुषा चानुग्रहं दर्शयन्नपि अफलः स्यात् भृत्यं न धनेन वर्धयेत् । सफलोऽपि सन् दुरारुहः भृत्यवश्यो न भवेत् । अपक्व इति अन्तर्बलहीनोऽपि बलवत्तां बहिः प्रकाशयेदेवेत्यर्थः ॥ २४ ॥ कर्मणा दानेन लोकं भृत्यवर्गम् ॥ २५ ॥ अनये स्थितः अनीतिमान् ॥ २७ ॥ प्रतिसंवेष्टते संकुचति बहुफलं न प्रयच्छतीत्यर्थः ॥ २९ ॥ न जहाति श्रियम् ॥ ३१ ॥ सुव्याहृतानि पाण्डित्यवचनानि सूक्तानि शोभनतयोक्तानि मातृपितृगुर्वादीनि सुकृतानि तदुपदिष्टकर्माणि । शिलं कणिशाद्यर्जनम् । 'उञ्छः कणश आदानं कणिशाद्यर्जनं शिलम्' इति यादवः । त्वमपि अस्मदादिवाक्यात्सारं गृहीत्वेति भावः ॥ ३३ ॥ गन्धेनेति पाण्डवबलं ज्ञातुं चारान् नियुङ्क्ष्वेति भावः ॥ ३४ ॥ भूयांसमिति श्लोकत्रयतात्पर्यं पाण्डवान्प्रति त्वया नम्रीभवितव्यं तेन बलाधिष्ठात्री देवता इन्द्रश्च त्वामनुग्रहीष्यतीति ॥ ३५ ॥

[ अर्जु० ] चक्षुषेत्यादि । चक्षुरादिभिश्चतुर्भिर्यो लोकं प्रीणयति तस्मिन् लोकः प्रीयत इति भावः ॥ २५ ॥ प्रतिसंवेष्टते संकुचति॥ २९ ॥ परिसर्पत इतस्ततो धावतः ॥३२॥ शिलाहारी कणिशभोजी शिलं कणिशम् ॥ ३३ ॥ यथा दुर्दुहा बलवद्भिः पुरुषैर्बद्धा दुह्यत इति बहुतरं दुःखमनुभवति एवं न्याय्यमप्रयच्छन्तस्तव पुत्रा दुःखमनुभविष्यन्तीत्यर्थः ॥३५॥ यदतप्तं वंशादि प्रणतं तन्न तप्येत लोहादिवत् यच्च स्वयमात्मना नतं दारु तन्न स्तब्धवंशादिवत् नाम्यते ॥ ३६ ॥

[ सर्व० ] ऋजु न क्रोधात्तिर्यक् । अनुपिबन्नात्मनोऽन्तःकुर्वन्निव ॥ २३ ॥ चतुर्विधमिति क्रियाविशेषणम् ॥२५॥ अनये स्थितोऽनीत्यां स्थितः । उत्थितः ॥ २७ ॥ प्रतिसंवेष्टते सङ्कोचयति ॥ २९ ॥ य एवेति । यो यावान् स तावान् ॥ ३० ॥ परिसर्पतः सर्वतो धावतोऽस्थिरस्य ॥ ३२ ॥ संचिन्वन्नात्मनि समुच्चितीकुर्वन् । शिलाहारी कणिशाहारः । शिलं कणिशम्, क्वचित्तालव्यादिपाठः, शिलशब्दस्य तालव्यादेरपि दर्शनात् ॥ ३३ ॥ भूयांसमित्येतेन सुशीलः स्यादित्युक्तम् ॥ ३५ ॥ इन्द्रायेति अबलापेक्षया बलवानेवेन्द्रः अतस्तत्प्रणतिर्न लाघवाय ॥ ३७॥

[ लक्षा० ] आसीनमपि तूष्णीकमित्यत्र 'तूष्णींशीलस्तु तूष्णीकः' इत्यभिधानात् तूष्णीकं तूष्णींशीलम् ॥ २३ ॥ शिलाहारी शिलं यथेत्यत्र शिलाहारी शिलाकणभक्षकः पारावतः ॥ ३३ ॥ यदतप्तं प्रणमते इत्यत्र अतप्तमयःसारकृतशस्त्रादि ॥ ३६ ॥

२७ ख स्वेन तेजसा । ३४ ख. वाडवाः । ३५ ख. तां विनियुञ्जते । ३६ ख. संतापमर्हति ।

पर्जन्यनाथाः पशवो राजानो मन्त्रिबान्धवाः ।
पतयो बान्धवाः स्त्रीणां ब्राह्मणा वेदबान्धवाः ॥३८॥
सत्येन रक्ष्यते धर्मो विद्या योगेन रक्ष्यते ।
मृजया रक्ष्यते रूपं कुलं वृत्तेन रक्ष्यते ॥ ३९ ॥
मानेन रक्ष्यते धान्यमश्वान् रक्ष्यत्यनुक्रमः ।
अभीक्ष्णदर्शनं गाश्च स्त्रियो रक्ष्याः कुचेलतः ॥४०॥
न कुलं वृत्तहीनस्य प्रमाणमिति मे मतिः ।
अन्तेष्वपि हि जातानां वृत्तमेव विशिष्यते ॥ ४१ ॥
य ईर्षुः परवित्तेषु रूपे वीर्ये कुलान्वये ।
सुखसौभाग्यसत्कारे तस्य व्याधिरनन्तकः ॥ ४२ ॥
अकार्यकरणाद्भीतः कार्याणां च विवर्जनात् ।
अकाले मन्त्रभेदाच्च येन माद्येन्न तत्पिबेत् ॥ ४३ ॥
विद्यामदो धनमदस्तृतीयोऽभिजनो मदः ।
मदा एतेऽवलिप्तानामेत एव सतां दमाः ॥ ४४ ॥
असन्तोऽभ्यर्थिताः सद्भिः कचित्कार्ये कदाचन ।
तावन्न तस्य सुकृतं किंचित्कार्यं कदाचन ।
मन्यन्ते सन्तमात्मानमसन्तमपि विश्रुतम् ॥ ४५ ॥
गतिरात्मवतां सन्तः सन्त एव सतां गतिः ।
असतां च गतिः सन्तो न त्वसन्तः सतां गतिः॥ ४६ ॥
जिता सभा वस्त्रवता मिष्टाशा गोमता जिता ।
अध्वा जितो यानवता सर्वं शीलवता जितम् ॥४७॥
शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः॥ ४८ ॥
आढ्यानां मांसपरमं मध्यानां गोरसोत्तरम् ।
तैलोत्तरं दरिद्राणां भोजनं भरतर्षभ ॥ ४९ ॥
संपन्नतरमेवान्नं दरिद्रा भुञ्जते सदा ।
क्षुत्स्वादुतां जनयति सा चाढ्येषु सुदुर्लभा ॥५०॥

[ नील० ] एतच्च मन्त्रिभिः सहालोचनीयम् । सत्यं च संरक्ष्यमित्याह पर्जन्येति त्रिभिः ॥ ३८ ॥ योगेन अभ्यासेन मृजया उद्वर्तनेन ॥ ३९ ॥ अनुक्रमः व्यायामशिक्षादिः ॥ ४० ॥ प्रमाणं धर्मस्य कारणं न कुलमिति द्वयोर्वृत्तमाश्रय ईर्ष्यां त्यजेति भावः ॥ ४१ ॥ अकाले इष्टसिद्धेः प्राक् भीतः स्यात् येन माद्येत् लोभादिना तन्न पिबेत् नाश्रयेत् ॥ ४३ ॥ अभिजनः सहायः तव तु भयं दमश्च नास्तीत्यर्थः ॥ ४४ ॥ असन्त इति सार्द्धश्लोको वाक्यं सद्भिरर्थिता असन्तस्तत्कार्यमल्पमप्यकृत्वा असन्तमिति ख्यातमप्यात्मानं सन्तं मन्यन्त इति तदर्थः । किंचिदपि तस्य कार्यं यावत् सुष्ठु न कृतं तावदेव मन्यन्त इति योजना ॥ ४५ ॥ गतिरिति पाण्डवा एव त्वामुपकरिष्यन्ति न तु त्वं तानिति भावः ॥ ४६ ॥ जितेति शीलं संरक्ष्यं त्वयेति द्वयोर्भावः ॥ ४७ ॥ आढ्यानामिति त्रयस्य शीलवतस्ते दारिद्र्यप्राप्तिरपि श्रेय इति भावः ॥ ४९ ॥ संपन्नं मिष्टम् ॥ ५० ॥

[ अर्जु० ] पर्जन्यनाथाः । मित्रबान्धवाः तैः समये उपक्रियमाणत्वात् । मन्त्रिबान्धवा इति पाठे तैः सन्मन्त्रदानेन राज्यादिरक्षणात् । पतयो बान्धवाः भरणकारकत्वात् वेदबान्धवा वेदेन यज्ञाद्यनुष्ठानात् ॥ ३८ ॥ योगेनाभ्यासेन मृजया उद्वर्तनेन ॥ ३९ ॥ मानेन धान्यं तदपरिमितं जना हरन्ति । अनुक्रमो धुरि बन्धनम् अचेलता वस्त्रहीनता मलिनवस्त्रता वा तयापि सत्रपाः मुखमपि नेक्षन्ते परस्य । कुचेलतेत्यपि पाठः ॥ ४० ॥ कुलं वंशः ॥ ४१ ॥ अनन्तकः कुलादीनामन्यतमदर्शनादपि ईर्षानलोत्पादस्य सुलभत्वात् ॥ ४२ ॥ अकाले फलसिद्धेः प्राक् उत्तरत्र मन्त्रभेदेऽपि न दोषः ॥ ४३ ॥ [यदि पुनर्बिभयात् येन मद्येन माद्येत तदपि पिबेत् मद्यमेव पिबेत् मद्यमेव पीतं स्यात् इति विद्यामदतात्पर्यार्थः?] ॥४४॥ असन्तमपि आत्मानं सन्तं मन्यन्त इत्यन्वयः ॥ ४५ ॥ गतिर्मार्गः आत्मवतां जितात्मनाम् ॥ ४६ ॥ मांसपरमं मांसप्रधानं, गोरसो दुग्धम्, उत्तरं प्रधानम् ॥ ४९ ॥ संपन्नतरं प्रयत्नसिद्धम् ॥ ५० ॥

[ सर्व० ] मित्रं मित्रमण्डलम्, तद्बान्धवास्तैरुपकर्तव्यत्वात् ॥ ३८ ॥ योगेनाभ्यासेन । मृजया उद्वर्तनेन ॥ ३९ ॥ मानेन इयत्ताविनिश्चयेन, अमितस्य चौरैर्नयनसंभवात् । अनुक्रमणम् आक्रमणं नीराजनादि । अभीक्ष्णदर्शनं गाः, मध्ये घासाद्यलाभे नाशसंभवात् । अचेलता कुचेलता । तदा हि बहिर्न गच्छति ॥४०॥ प्रमाणं कारणं धर्मस्य विशिष्यते धर्महेतुत्वेन ॥ ४१ ॥ ईर्ष्युरसहनः । अकार्यकरणादिह परत्र च भयम् ॥ ४२ ॥ येन मद्येन माद्येत् तन्न पिबेत् । अकाले फलनिष्पत्तेः प्राक् ॥ ४३ ॥ असन्तं विश्रुतम् असत्तया ख्यातम् ॥ ४५ ॥ आत्मवतां चेतनमात्राणाम् ॥ ४६ ॥ संपन्नतरं स्वादुतरम् ॥ ५० ॥

[ लक्षा० ] अश्वान्रक्षेदनुक्रमादित्यत्र अनुक्रमात् अनुकूलात् पादविक्षेपात् इतस्ततो धावनादित्यर्थः ॥ ४० ॥ स्वमाख्या गोमता जितेत्यत्र समाख्या सम्यगाख्या प्रथमनं यस्याः सा विद्वत्सभा गोमता वाक्यवता वाग्मिनेत्यर्थः ॥ ४७ ॥ आढ्यानां मांसपरममित्यत्र आढ्यानां स्थूलकायानां मदान्धानाम् इदानीं तव पुत्राणां, मध्यमानामीषद्रा-

प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते ।
जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ॥ ५१ ॥
अवृत्तिर्भयमन्त्यानां मध्यानां मरणाद्भयम् ।
उत्तमानां तु मर्त्यानामवमानात्परं भयम् ॥ ५२ ॥
ऐश्वर्यमदपापिष्ठा मदाः पानमदादयः ।
ऐश्वर्यमदमत्तो हि नापतित्वा विबुध्यते ॥ ५३ ॥
इन्द्रियैरिन्द्रियार्थेषु वर्तमानैरनिग्रहैः ।
तैरयं ताप्यते लोको नक्षत्राणि ग्रहैरिव ॥ ५४ ॥
योजितः पञ्चवर्गेण सहजेनात्मकर्षिणा ।
आपदस्तस्य वर्धन्ते शुक्लपक्ष इवोडुराट् ॥ ५५ ॥
अविजित्य यथाऽऽत्मानममात्यान् विजिगीषते ।
अमित्रान्वाऽजितामात्यः सोऽवशः परिहीयते ॥ ५६ ॥
आत्मानमेव प्रथमं द्वेष्यरूपेण यो जयेत् ।
ततोऽमात्यानमित्रांश्च न मोघं विजिगीषते ॥ ५७ ॥
वश्येन्द्रियं जितात्मानं धृतदण्डं विकारिषु ।
परीक्ष्यकारिणं धीरमत्यन्तं श्रीर्निषेवते ॥ ५८ ॥
रथः शरीरं पुरुषस्य राज-
न्नात्मा नियन्तेन्द्रियाण्यस्य चाश्वाः ।
तैरप्रमत्तः कुशली सदश्वै-
र्दान्तैः सुखं याति रथीव धीरः ॥ ५९ ॥
एतान्यनिगृहीतानि व्यापादयितुमप्यलम् ।
अविधेया इवादान्ता हयाः पथि कुसारथिम् ॥ ६० ॥
अनर्थमर्थतः पश्यन्नर्थं चैवाप्यनर्थतः ।
इन्द्रियैरजितैर्बालः सुदुःखं मन्यते सुखम् ॥ ६१ ॥

ग्यवतां दरिद्राणामर्थरहितानां पाण्डवानां लवणोत्तरं लवणसमुद्रा एव उत्तरा यस्य एतादृशं राज्यमेव भोजनम् ॥ ४९ ॥ संपन्नतरमेवान्नमित्यत्र दरिद्राः पाण्डवाः संपन्नान् सम्यग्युद्धाय प्राप्तान् तरत्यतिक्राम्यत्यनेनेति संपन्नतरं शौर्यं तदेवमन्नम् अन्नमिव भुञ्जते । भुज पालनाभ्यवहारयोरिति धातोः पालयन्ति ॥ ५० ॥

[ नील० ] शीलाभावे सत्सु अवमानो महान् क्लेश इत्याह—अवृत्तिरिति ॥ ५२ ॥ ऐश्वर्यमदः पापिष्ठो निन्दिततमो येभ्यस्ते पानमदादयो मदाः ॥ ५३ ॥ इन्द्रियार्थेषु शब्दादिषु, ग्रहैः सूर्यादिभिः, आक्रमोऽत्र तापनम् ॥ ५४ ॥ पञ्चवर्गः श्रोत्रादिगणः त्वमैश्वर्यमत्तोऽजितेन्द्रियश्चावश्यमापदं प्राप्स्यसीति त्रयस्य भावः ॥ ५५ ॥ आत्मानं मनः अमात्यान् पुत्रादीन् द्वेष्यरूपेण शत्रुवत् । मन एव प्रथमं जेतव्यं ततोऽमात्यादीन् विजिगीषते तत् न मोघं न निष्फलं भवति ॥ ५७ ॥ त्वं त्वजितमनस्कतया पुत्रादिवशो न लक्ष्मीयोग्य इति त्रयाणां भावः ॥ ५८ ॥ एतदेव रथिरथादिरूपककल्पनया आह—रथ इति ॥ ५९ ॥ व्यापादयितुं नाशयितुम् अविधेयाः अवशाः ॥ ६० ॥ अर्थतोऽर्थहेतोः अनर्थतः अन्यायतः ॥ ६१ ॥

[ अर्जु० ] प्रायेण श्रीमतां लोक इत्यादि । अयमत्राभिप्रायः । श्रीमतो दुर्योधनस्य एतां श्रियं भोक्तुं शक्तिर्न विद्यते । यतो दरिद्रैरपि तैः काष्ठभूता निष्ठुरा अपि किर्मीरबकादयः परिणमिताः ॥ ५१ ॥ अवृत्तेर्जीविकाया अभावात् ॥ ५२ ॥ इन्द्रियार्थेषु विषयेषु अनिग्रहैरनिवारितैः ॥ ५४ ॥ पञ्चवर्गेण इन्द्रियैः सहजेन शरीरसमकालभाविना आत्मकर्षिणा आत्मानं क्षेत्रज्ञं तनूकुर्वता यावदिन्द्रियाणि विषयमनुधावन्ति तावदात्मा तत्क्रियाभिरेव तिरोधीयते तदेव तनूकरणम् ॥ ५५ ॥ देशरूपेणेति देश उपदेशः सतां तस्मिन्निरूपणीयो नयो रूपं तेन देशरूपेण यो जयेत् वशीकुर्यात् । दृष्टरूपेणेत्यसम्यक् ॥ ५७ ॥ विकारिषु विरुद्धकारिषु ॥ ५८ ॥ अर्थतः अर्थेन । आद्यन्तमिति च पाठः । अनर्थं कलहादिः । अनर्थतस्तेयादेः अर्थं धनं पश्यन् भविष्यतीति मन्यमानः ( प्रवृत्तः ) ॥ ६१ ॥

[ सर्व० ] अवृत्तिर्भक्ष्यालाभः ॥ ५२ ॥ ऐश्वर्यमदः पापिष्ठो निन्दिततरो येभ्यो मदेभ्यः ॥ ५३ ॥ ग्रहैरादित्यादिभिः । आक्रमणमात्रं तापनम् ॥ ५४ ॥ पञ्चवर्गेण बाह्यविषयैः । सहजेन सहशरीरोत्पन्नेन ॥ ५५ ॥ आत्मानमविजित्य इन्द्रियनियमनमकृत्वा । अजितामात्योऽमात्यानविजित्यामित्रजये परिभवभाक् ॥ ५६ ॥ देशरूपेण देश उद्देशस्तदनुरूपेण कर्मणा । एवं कृत्वा अमात्यान् यद्विजिगीषते न तन्मोघम् ॥ ५७ ॥ विकारिणां विरुद्धकारिणां शत्रूणाम् ॥ ५८ ॥ अर्थतोऽर्थेषु सुखहेतुषु मध्येऽर्थत्वेनेतियावदेवमनर्थत इत्यत्र । प्रसृतो भ्रमन्द्रष्टुम् ॥ ६१ ॥

[ दुर्घ० ] 'प्रायेण श्रीमतां लोके भोक्तुं शक्तिर्न विद्यते । जीर्यन्त्यपि हि काष्ठानि दरिद्राणां महीपते ।' अस्याऽयमभिप्रायः—दुर्योधनस्य श्रियमिमां भोक्तुं शक्तिर्नास्ति दुर्विनीतत्वात् । उक्तं च 'दुर्विनीतः श्रियं प्राप्य विद्यामैश्वर्यमेव वा । न तिष्ठति चिरं भद्रे यथाहं मदगर्वितः' इति दुर्योधनेनैव घोषयात्रायां प्रायोपविष्टेन । दरिद्रा अपि पाण्डवा एतां श्रियं भोक्तुं शक्ताः । यतः काष्ठभूता अतिनिष्ठुरा अपि हिडिम्बबकप्रभृतयोऽपि तैः

५९ ख. सर्वमात्मा । ६१ ख. प्रसृतैर्बालः ।

धर्मार्थौ यः परित्यज्य स्यादिन्द्रियवशानुगः ।
श्रीप्राणधनदारेभ्यः क्षिप्रं स परिहीयते ॥ ६२ ॥
अर्थानामीश्वरो यः स्यादिन्द्रियाणामनीश्वरः ।
इन्द्रियाणामनैश्वर्यादैश्वर्याद्भ्रश्यते हि सः ॥ ६३ ॥
आत्मनाऽऽत्मानमन्विच्छेन्मनोबुद्धीन्द्रियैर्यतैः ।
आत्मा ह्येवात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ६४॥
बन्धुरात्मात्मनस्तस्य येनैवात्मात्मना जितः ।
स एव नियतो बन्धुः स एव नियतो रिपुः ॥६५॥
क्षुद्राक्षेणेव जालेन झषावपिहितावुरू ।
कामश्च राजन् क्रोधश्च तौ प्रज्ञानं विलुम्पतः ॥६६॥
समवेक्ष्येह धर्मार्थौ संभारान् योऽधिगच्छति ।
स वै संभृतसंभारः सततं सुखमेधते ॥ ६७ ॥
यः पञ्चाभ्यन्तरान् शत्रूनविजित्य मनोमयान् ।
जिगीषति रिपूनन्यान् रिपवोऽभिभवन्ति तम् ॥६८॥
दृश्यन्ते हि महात्मानो बध्यमाना स्वकर्मभिः ।
इन्द्रियाणामनीशत्वाद्राजानो राज्यविभ्रमैः ॥६९॥
असंत्यागात्पापकृतामपापां-
स्तुल्यो दण्डः स्पृशते मिश्रभावात् ।
शुष्केणार्द्रं दह्यते मिश्रभावा-
त्तस्मात्पापैः सह संधिं न कुर्यात् ॥ ७० ॥
निजानुत्पततः शत्रून्पञ्च पञ्चप्रयोजनान् ।
यो मोहान्न निगृह्णाति तमापद्ग्रसते नरम् ॥ ७१ ॥
अनसूयाऽऽर्जवं शौचं संतोषः प्रियवादिता ।
दमः सत्यमनायासो न भवन्ति दुरात्मनाम् ॥७२॥

---

परिणामिताः । विनीतत्वादतिबलवत्त्वाद्व्यसनैरनाक्रान्तत्वा( दरिषड्वर्गजया )च्च प्रायेणाऽहं मन्य इत्यर्थः ॥ ५१ ॥

इति श्रीम० दुर्घटार्थप्र० उद्योग० चतुर्स्त्रिंशोऽध्यायः ॥३४॥

[ लक्षा० ] नक्षत्राणि ग्रहैरिवेत्यत्र गृह्णन्त्यप इति ग्रहाः सूर्यकिरणाः तैः ॥५४॥ यो जित इत्यत्र पञ्चवर्गेण पञ्चेन्द्रियसमूहेन ॥ ५५ ॥

[ नील० ] इन्द्रियाणां वश इच्छा तदनुसारी इन्द्रियवशानुगः ॥६२॥ कृत्स्नस्योपदेशस्य फलमाह—आत्मनेत्यर्धेन । आत्मना बुद्ध्या आत्मानं प्रत्यक्चैतन्यरूपमन्विच्छेत् । तत्रोपायमाह—मनसः संकल्पात्मकस्य बुद्धेश्च तन्मूलभूतायाः इन्द्रियाणां च निग्रहेणेत्यर्थः । अत्र न तव सहायान्तरापेक्षेत्याह—आत्मेति । धीजय एव पुरुषार्थ इत्यर्थः ॥ ६४ ॥ स एव धीरेव जीवस्य बन्धुः रिपुश्च ॥ ६५ ॥ द्वावपि मोहजालपिहितौ झषौ मीनौ उरू महान्तौ तत्र द्वितीयोऽन्यस्य जातिस्वभावाच्छत्रुरपि जालच्छेदार्थं मित्रत्वमापन्नो बन्धुरपि भवति । एवं धीश्चिदात्मनः संसारप्रदत्वाच्छत्रुरपि मोहच्छेदार्थं तस्य मित्रमपि भवतीति भावः । क्षुद्राक्षेण सूक्ष्मच्छिद्रेण यद्वा उत्तरान्वय्येवायमर्धः । कामक्रोधयोरावरकं प्रज्ञानं तौ नाशयतः जालमिव महामीनावित्यर्थः ॥ ६६ ॥ समवेक्ष्य अनुरुध्य संभारान् जयसाधनानि ॥ ६७ ॥ आभ्यन्तरान् श्रोत्रादीन् मनोमयान् मनसो विकारभूतान् । तथा च श्रुतिः—मनसा ह्येव पश्यति मनसा शृणोतीति ॥ ६८ ॥ राजानो रावणादयः राज्यविभ्रमैः ऐश्वर्यविलासैः स्वकर्मभिः सीताहरणादिभिः ॥ ६९ ॥ पञ्च इन्द्रियाणि पञ्च प्रयोजनानि शब्दश्रवणादीनि येषां तान् उत्पततः उत्पथेन गच्छतः । त्वं तु अजितचित्तत्वाद्दुःसङ्गाच्चापद्ग्रस्तोऽसीति भावः ॥ ७१ ॥ अनायासः अचापल्यम् ॥ ७२ ॥

[ अर्जु० ] आत्मना चिद्रूपेण आत्मानं तमेव अन्विच्छेत् प्रतीयात् न मनःप्रभृतिकरणजालैः ॥ ६४ ॥ क्षुद्राक्षेण जालेन स्वल्पच्छिद्रेण मत्स्यपाशेन इन्द्रियवर्गेणेति यावत् । झषाविव झषौ सर्वस्मात् सत्त्वात् ऊरू महान्तौ । उभावित्यसम्यक् । अपिहितौ छन्नौ प्रज्ञानं शुभज्ञानं विलुम्पत आच्छादयतः ॥ ६६ ॥ नानाचेष्टाभिः समवेक्ष्य रक्षित्वा संभारान् विषयान् संभ्रियन्ते पुष्टाः क्रियन्ते इति कृत्वा अधिगच्छति भुङ्क्ते ॥६७॥ पञ्चाभ्यन्तरान् पञ्चसु विषयेषु वा अभ्यन्तरानन्तर्वर्तिनः शत्रून् उत्कटकामक्रोधादीन् मतिक्षयान् मतिर्मन एव क्षयो येषां मनोमयानित्यसम्यक् ॥६८॥ उत्पतत उत्पथेन गच्छतः पञ्च इन्द्रियाणि पञ्चविषया प्रयोजनं येषां तान् ॥७१॥ दमो यथेष्टविनियोगयोग्यता मनसः । अनायासः क्लेशातिशयेन तपःकरणम् ॥७२॥

[ सर्व० ] क्षुद्राक्षेण चक्षूरन्ध्रेण जालेनेवेन्द्रियैः । एतेन अनुपलक्ष्यत्वमुक्तम् । ऊरू महान्तौ ॥ ६६ ॥ संभारान् साधनानि ॥ ६७ ॥ मनोमयान् मनआश्रयान् ॥ ६८ ॥ उत्पततः उत्पथेन पततः, पञ्च शत्रूनिन्द्रियाणि, पञ्च विषयजाः पञ्च बुद्धयः प्रयोजनानि येषाम् ॥ ७१ ॥ अनायास आयाससहिष्णुता ॥ ७२ ॥

[ लक्षा० ] आत्मनात्मानमन्विच्छेदित्यत्र आत्मानं परमात्मानम् ॥ ६४ ॥ आत्मा अन्तःकरणं तस्य जीवस्य । येन पुरुषेण । 'आत्मा देहे धृतौ यत्ने इति वचनात् आत्मना प्रयत्नेन ॥ ६५ ॥ क्षुद्राक्षेण क्षुद्रमनसा ॥ ६६ ॥ शुष्केणार्द्रमित्यत्र शुष्केण काष्ठेन आर्द्रमिन्धनम् ॥ ७० ॥

---

६९ 'मनैश्वर्याद्राजानश्चित्तविभ्रमैः ।

आत्मज्ञानमनायासस्तितिक्षा धर्मनित्यता ।
वाक् चैव गुप्ता दानं च नैतान्यन्त्येषु भारत॥७३॥
आक्रोशपरिवादाभ्यां विहिंसन्त्यबुधा बुधान् ।
वक्ता पापमुपादत्ते क्षममाणो विमुच्यते ॥ ७४ ॥
हिंसा बलमसाधूनां राज्ञां दण्डविधिर्बलम् ।
शुश्रूषा तु बलं स्त्रीणां क्षमा गुणवतां बलम् ॥७५॥
वाक्संयमो हि नृपते सुदुष्करतमो मतः ।
अर्थवच्च विचित्रं च न शक्यं बहु भाषितुम् ॥७६॥
अभ्यावहति कल्याणं विविधं वाक् सुभाषिता ।
सैव दुर्भाषिता राजन्ननर्थायोपपद्यते ॥ ७७ ॥
रोहते सायकैर्विद्धं वनं परशुना हतम् ।
वाचा दुरुक्तं बीभत्सं न संरोहति वाक्क्षतम्॥७८॥
कर्णिनालीकनाराचान्निर्हरन्ति शरीरतः ।
वाक्शल्यस्तु न निर्हर्तुं शक्यो हृदिशयो हि सः ॥७९॥
वाक्सायका वदनान्निष्पतन्ति
यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ये पतन्ति
तान्पण्डितो नावसृजेत्परेभ्यः ॥ ८० ॥
यस्मै देवाः प्रयच्छन्ति पुरुषाय पराभवम् ।
बुद्धिं तस्यापकर्षन्ति सोऽवाचीनानि पश्यति ॥८१॥
बुद्धौ कलुषभूतायां विनाशे प्रत्युपस्थिते ।
अनयो नयसंकाशो हृदयान्नापसर्पति ॥ ८२ ॥
सेयं बुद्धिः परीता ते पुत्राणां भरतर्षभ ।
पाण्डवानां विरोधेन न चैनानवबुध्यसे ॥ ८३ ॥
राजा लक्षणसंपन्नस्त्रैलोक्यस्यापि यो भवेत् ।
शिष्यस्ते शासिता सोऽस्तु धृतराष्ट्र युधिष्ठिरः ॥८४॥
अतीव सर्वान्पुत्रांस्ते भागधेयपुरस्कृतः ।
तेजसा प्रज्ञया चैव युक्तो धर्मार्थतत्त्ववित् ॥ ८५ ॥
अनुक्रोशादानृशंस्याद्योऽसौ धर्मभृतां वरः ।
गौरवात्तव राजेन्द्र बहून्क्लेशांस्तितिक्षति ॥ ८६ ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

---

पञ्चप्रयोजनानित्यत्र पञ्च इन्द्रियाणि पञ्चप्रयोजनान् रूपरसादिपञ्चविषयानुभवप्रयोजनान् ॥ ७१ ॥

[नील०] तितिक्षा द्वन्द्वसहनशीलता वाक् गुप्ता असंबद्धप्रलापाद्रक्षिता अन्त्येषु नीचेषु त्वत्पुत्रेष्वार्जवादिकं गुप्तवाक्त्वं च नास्तीति तेऽन्त्याः ॥७३॥ आक्रोशो रूक्षभाषणं, परिवादो निन्दा तयोर्वक्ता त्वत्पुत्रः हिंस्रश्चातो नासौ जयभाक् ॥ ७४ ॥ वाक्संयमो नियतं वचनं विचित्रं चमत्कारयुक्तम् ॥ ७६ ॥ बीभत्सं निन्दितं यतो न संरोहति ॥ ७८ ॥ कर्णी कर्णाकृतिफलको बाणः नालीकः नलीकया प्रक्षेप्यो बाणः । निर्हरन्ति निःसारयन्ति ॥ ७९ ॥ नामर्मसु किन्तु ममस्वेव । सभायां द्रौपदीं प्रति दुर्वचनं वदतां त्वत्पुत्राणामपराधः क्षन्तुमयोग्योऽस्तीति भावः ॥ ८० ॥ अवाचीनानि नीचकर्माणि ॥ ८१ ॥ शिष्यस्ते त्वदाज्ञाकारी शासिता पृथिव्याः ॥ ८४ ॥ भागधेये राज्यांशे पुरस्कृतः । मूर्धाभिषिक्तस्य पाण्डोः पुत्रास्ते राज्यार्हाः । अतथाभूतस्यान्धस्य तव पुत्रास्ते न राज्यार्हा इत्यर्थः ॥ ८५ ॥ अनुक्रोशात् दयालुत्वात् आनृशंस्यात् अक्रौर्यात् ॥ ८६ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे चतुस्त्रिंशोऽध्यायः ॥ ३४॥

[ अर्जु० ] आत्मज्ञानं परमात्मज्ञानम् । अन्त्येषु जघन्येषु ॥ ७३ ॥ बीभत्सं जुगुप्सितम् ॥ ७८ ॥ कर्णिनालीकनाराचा इति । कर्णिनः फलके कर्णयोगिनः । नालीका नलिकाक्षेप्याः । नाराचाः सर्वलोहाः । निर्वहन्ति निःसरन्ति ॥ ७९ ॥ अपाचीनानि अपचयकारीणि अवाचीनानीत्यपि पाठे स एवार्थः ॥ ८१ ॥ परीता गता ॥ ८३ ॥ शमिता शत्रूणामिति शेषः ॥ ८४ ॥ अतीव अतिक्रम्य ॥ ८५ ॥ अनुक्रोशात् कृपायाः आनृशंस्यादहिंसातः गौरवात् तव राजेन्द्र बहुन् क्लेशांस्तितिक्षति ॥ ८६ ॥

इति श्रीमन्महा० मर्जुनमि० उद्यो० चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[ सर्व० ] वाक्च गुप्ता रक्षिता, अवाच्यसंबन्धात् परिमितत्वेनाल्पत्वाद्वा दानं च गुप्तमित्यनुषङ्गः ॥ ७३ ॥ आक्रोशः अशुभाशंसनं परीवादो ग(र्वि? हिं)ताभिधानम् ॥ ७४ ॥ राज्ञां संयमोऽनुबन्धादिनियतं वचनम् । विचित्रं विस्मयकारणम् ॥ ७६ ॥ बीभत्सं निन्दितं भवति यतो न संरोहति वाक्क्षतम् ॥ ७८ ॥ कर्णिः कर्णाकृतिफलको बाणः । नालिका नलिकातो निस्सारिणः । निर्हरन्ति निर्गच्छन्ति नाराचा इति प्रथमान्तत्वात् ॥ ७९ ॥ अवाचीनानि विपर्यस्तानि ॥ ८१ ॥ शासिताऽन्येषां ते शिष्योऽस्तु । तव पुत्रादप्यतिक्रम्य तदपेक्षयाऽप्यधीनतर इति यावत् ॥ ८४ ॥ भागदेयेन भागदानेन पुरस्कृतः पूजितः सन् ॥ ८५ ॥ अनुक्रोशात् कृपालुतया । आनृशंस्यात् अक्रौर्यात् ॥ ८६ ॥

इति श्रीमहाभारतोद्योग० सर्व० टीकायां चतुस्त्रिंशत्तमोऽध्यायः ॥३४॥

---

७३ ख. आत्मज्ञानसमारम्भः । ७८ ख. संरोहतीषुणाविद्धं । ८० ख. सृजेत्परेषु । इति चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

## पञ्चत्रिंशोऽध्यायः ३५

धृतराष्ट्रं प्रति विदुरेण नीत्युपदेशः ॥ १ ॥

**धृतराष्ट्र उवाच—**

ब्रूहि भूयो महाबुद्धे धर्मार्थसहितं वचः ।
शृण्वतो नास्ति मे तृप्तिर्विचित्राणीह भाषसे ॥ १ ॥

**विदुर उवाच—**

सर्वतीर्थेषु वा स्नानं सर्वभूतेषु चार्जवम् ।
उभे त्वेते समे स्यातामार्जवं वा विशिष्यते ॥ २ ॥
आर्जवं प्रतिपद्यस्व पुत्रेषु सततं विभो ।
इह कीर्तिं परां प्राप्य प्रेत्य स्वर्गमवाप्स्यसि ॥ ३ ॥
यावत्कीर्तिर्मनुष्यस्य पुण्या लोके प्रगीयते ।
तावत्स पुरुषव्याघ्र स्वर्गलोके महीयते ॥ ४ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विरोचनस्य संवादं केशिन्यर्थे सुधन्वना ॥ ५ ॥
स्वयंवरे स्थिता कन्या केशिनी नाम नामतः ।
रूपेणाप्रतिमा राजन् विशिष्टपतिकाम्यया ॥ ६ ॥
विरोचनोऽथ दैतेयस्तदा तत्राजगाम ह ।
प्राप्तुमिच्छँस्ततस्तत्र दैत्येन्द्रं प्राह केशिनी ॥ ७ ॥

**केशिन्युवाच—**

किं ब्राह्मणाः स्विच्छ्रेयांसो दितिजाः स्विद्विरोचन ।
अथ केन स्म पर्यङ्कं सुधन्वा नाधिरोहति ॥ ८ ॥

**विरोचन उवाच—**

प्राजापत्यास्तु वै श्रेष्ठा वयं केशिनि सत्तमाः ।
अस्माकं खल्विमे लोकाः के देवाः के द्विजातयः ॥ ९ ॥

**केशिन्युवाच—**

इहैवावां प्रतीक्षाव उपस्थाने विरोचन ।
सुधन्वा प्रातरागन्ता पश्येयं वां समागतौ ॥ १० ॥

**विरोचन उवाच—**

तथा भद्रे करिष्यामि यथा त्वं भीरु भाषसे ।
सुधन्वानं च मां चैव प्रातर्द्रष्टाऽसि संगतौ ॥ ११ ॥

**विदुर उवाच—**

अतीतायां च शर्वर्यामुदिते सूर्यमण्डले ।
अथाजगाम तं देशं सुधन्वा राजसत्तम ॥
विरोचनो यत्र विभो केशिन्या सहितः स्थितः ॥ १२ ॥
सुधन्वा च समागच्छत्प्राह्रादिं केशिनीं तथा ।
समागतं द्विजं दृष्ट्वा केशिनी भरतर्षभ ॥
प्रत्युत्थायासनं तस्मै पाद्यमर्घ्यं ददौ पुनः ॥ १३ ॥

**सुधन्वोवाच—**

अन्वालभे हिरण्मयं प्राह्रादे ते वरासनम् ।
एकत्वमुपसंपन्नो न त्वासेऽहं त्वया सह ॥ १४ ॥

---

[ लक्षा० ] अस्मानयं बाधत इति सर्वान् प्रति रोदनमाक्रोशः ॥ ७४ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-
लक्षालंकारे चतुस्त्रिंशोऽध्यायः ॥ ३४ ॥

[ नील० ] आर्जवम् अवैषम्यम् ॥२॥ सुधन्वा ब्राह्मणः पर्यङ्कम् अधिरोहत्येव त्वं तु नीचो दैत्यः सन् किमर्थं तत्प्रत्याख्यानं करोषीति भावः ॥ ८ ॥ इह स्थाने उपस्थाने मामुपस्थातुं वां दैत्यब्राह्मणौ अहं पश्येयम् ॥ १० ॥ समागच्छत् उभयोः संमुखम् अगच्छत् समागतं संमुखं प्राप्तम् ॥ १३ ॥ विरोचनेन सौवर्णे पीठे मया सह उपवेश्यतामिति प्रार्थितः सुधन्वा उवाच अन्वालभे स्पृशाम्येव हे प्राह्रादे एकत्वं त्वया सह साम्यम् उपसंपन्नश्चेत् भवेदहं गच्छेयमिति शेषः । न तु त्वया सह एकासने आसे उपविशामि ॥ १४ ॥

[ अर्जु० ] समे एव स्यातामिति नियमस्याविवक्षितत्वात् आर्जवं वा विशिष्यत इति (न) विरोधः ॥ २ ॥ आर्जवं धर्मानुकारिणीं (वृत्तिं) पुत्रेषु निजेषु पाण्डवेषु चेति ॥ ३ ॥ महीयते पूजां लभते ॥ ४ ॥ अत्र आर्जवे ॥ ६ ॥ किं स्विदिति व्यवहितेनान्वयः ॥ ८ ॥ आस्व तिष्ठ । आवामित्यसम्यक् । उपस्थाने स्थानविशेषे ॥ १० ॥ अन्वालभे कल्पयामि एकत्वं समत्वमुपसंपन्नः प्राप्तः आसेयम् उपविशेयम् ॥ १४ ॥

[ सर्व० ] आर्जवममिथ्याप्रवृत्तिः ॥ ३ ॥ अत्रामिथ्याप्रवृत्तिविषये ॥ ५ ॥ किंस्विदिति संबन्धः । पर्यङ्कं पार्थिवासनम् ॥ ८ ॥ सुधन्वा ब्राह्मणः । प्रतीक्षावः उपस्थाने सुधन्वोपस्थिते स्थाने ॥ १० ॥ आसनमुपरिशयम् ॥ १३ ॥ एकत्वं समानासनोपवेशेन ॥ १४ ॥

[ लक्षा० ] प्राजापत्या वयमित्यत्र प्राजापत्याः कश्यपप्रजापतेः पुत्राः ॥ ९ ॥ न त्वासेयं त्वया सहेत्यत्र त्वया सह नतु आसेयं नोपविशेयम् ॥ १४ ॥

---

२ ख. सर्ववेदेषु वा स्नानं । १२ ख. प्रभातायां तु शर्वर्यां । १३ ख. पद्यवासनम् ।

**विरोचन उवाच—**

तवार्हते तु फलकं कूर्चं वाऽप्यथवा बृसी ।
सुधन्वन्न त्वमर्होऽसि मया सह समासनम् ॥ १५ ॥

**सुधन्वोवाच—**

पितापुत्रौ सहासीतां द्वौ विप्रौ क्षत्रियावपि ।
वृद्धौ वैश्यौ च शूद्रौ च न त्वन्यावितरेतरम् ॥ १६ ॥
पिता हि ते समासीनमुपासीतैव मामधः ।
बालः सुखैधितो गेहे न त्वं किंचन बुध्यसे ॥ १७ ॥

**विरोचन उवाच—**

हिरण्यं च गवाश्वं च यद्वित्तमसुरेषु नः ।
सुधन्वन्विपणे तेन प्रश्नं पृच्छाव ये विदुः ॥ १८ ॥

**सुधन्वोवाच—**

हिरण्यं च गवाश्वं च तवैवास्तु विरोचन ।
प्राणयोस्तु पणं कृत्वा प्रश्नं पृच्छाव ये विदुः ॥ १९ ॥

**विरोचन उवाच—**

आवां कुत्र गमिष्यावः प्राणयोर्विपणे कृते ।
न तु देवेष्वहं स्थाता न मनुष्येषु कर्हिचित् ॥ २० ॥

**सुधन्वोवाच—**

पितरं ते गमिष्यावः प्राणयोर्विपणे कृते ।
पुत्रस्यापि स हेतोर्हि प्रह्लादो नानृतं वदेत् ॥ २१ ॥

**विदुर उवाच—**

एवं कृतपणौ क्रुद्धौ तत्राभिजग्मतुस्तदा ।
विरोचनसुधन्वानौ प्रह्लादो यत्र तिष्ठति ॥ २२ ॥

**प्रह्लाद उवाच—**

इमौ तौ संप्रदृश्येते याभ्यां न चरितं सह ।
आशीविषाविव क्रुद्धावेकमार्गमिहागतौ ॥ २३ ॥
किं वै सहैवं चरथो न पुरा चरथः सह ।
विरोचनैतत् पृच्छामि किं ते सख्यं सुधन्वना ॥ २४ ॥

**विरोचन उवाच—**

न मे सुधन्वना सख्यं प्राणयोर्विपणावहे ।
प्रह्लाद तत्त्वं पृच्छामि मा प्रश्नमनृतं वदेः ॥ २५ ॥

**प्रह्लाद उवाच—**

उदकं मधुपर्कं वाऽप्यानयन्तु सुधन्वने ।
ब्रह्मन्नभ्यर्चनीयोऽसि श्वेता गौः पीवरीकृता ॥ २६ ॥

**सुधन्वोवाच—**

उदकं मधुपर्कं च पथिष्वेवार्पितं मम ।
प्रह्लाद त्वं तु मे तथ्यं प्रश्नं प्रब्रूहि पृच्छतः ।
किं ब्राह्मणाः स्विच्छ्रेयांस उताहो स्विद्विरोचनः ॥ २७ ॥

**प्रह्लाद उवाच—**

पुत्र एको मम ब्रह्मंस्त्वं च साक्षादिहास्थितः ।
तयोर्विवदतोः प्रश्नं कथमस्मद्विधो वदेत् ॥ २८ ॥

---

[ नील० ] फलकं काष्ठपीठं कूर्चं बृसी वर्तितदर्भमयं पीठं वा तत्र अर्हते योग्यं भवति ॥ १५ ॥ उपासीत सेवते अधः स्थित्वेति शेषः ॥ १७ ॥ प्रश्नम् आवयोः कः श्रेष्ठ इति प्रश्नं ये विदुस्तान् पृच्छाव ॥ १८ ॥ सह न चरितं वैरात् ॥ २३ ॥ पीवरी पुष्टा कृता मधुपर्कार्थमुपकल्पिता ॥ २६ ॥ पथिष्विति प्रश्ननिर्णयेनैतत्प्राप्तमिति भावः ॥ २७ ॥

[ अर्जु० ] फलकं पट्टम् अधो मदासनात् । कूर्चं दर्भासनम् । बृषीं स्वल्पासनम् । समासनमेकासनत्वम् ॥ १५ ॥ पिता ते प्रह्लादः स्थाता उपस्थाता ॥ १७ ॥ न चरितं सह न सहासितम् ॥ २३ ॥ किंवा सहैव चरितं किमाक्षेपे वां युवयोः चरितमागमनम् । आक्षेपहेतुमाह—न पुरा चरथः सहेति सख्यं संप्रतीति हेतुः ॥ २४ ॥ प्रह्लादेतिपितृसंबोधनमुदासीनत्वसूचनाय ॥ २५ ॥ पीवरीकृता प्रहृष्टीकृता । अर्घ्यं इति शेषः ॥ २६ ॥ पथ एव मार्गादेव पञ्चमी विभक्तिः मार्गोपस्थितेरेवार्घ्यहेतुतामाह ॥ २७ ॥ पुरोधा ममान्यो ब्रह्मंस्त्वं च साक्ष्य इह स्थितौ । पुरो गर्भनिष्क्रमणात् शुक्ररूपेण धीयते इति पुरोधाः पुत्रः पुरोधा मम पुत्रः त्वं चान्यः साक्ष्ये साक्ष्यार्हे कर्मणि स्थितावित्यन्वयः । पुत्र एको मम ब्रह्मंस्त्वं च साक्षादिह स्थितः । इति प्रायशः पाठः ॥ २८ ॥

[ सर्व० ] फलकं काष्ठासनम् । कूर्चं कुशविष्टरः । बृषी वर्तितदर्भमया ॥ १५ ॥ स्थाता प्रश्नार्थमुपस्थाता ॥ २० ॥ न चरितं सह नैकवर्त्मनि गतं ब्रूयात् ॥ २३ ॥ पीवरीकृता पुष्टाकृता मधुपर्कार्थमुपकल्पिता ॥ २६ ॥ पथ एव पथ्येव अर्पितं मम मयि । नौ आवयोः ॥ २७ ॥

---

१७ ख. तामधः । २१ ख. पुत्रस्यापि हिते प्रश्नं । २५ ख. पृच्छावः । २७ ख. सर्वमेवार्पितं । २८ ख. पुत्रवान्योभवेद्ब्रह्मन्साक्ष्ये चैव तथा स्थितः ।

**सुधन्वोवाच—**

गां प्रदद्यास्त्वौरसाय यद्वाऽन्यत्स्यात्प्रियं धनम् ।
द्वयोर्विवदतोस्तथ्यं वाच्यं च मतिमंस्त्वया ॥ २९ ॥

**प्रह्लाद उवाच—**

अथ यो नैव प्रब्रूयात्सत्यं वा यदि वाऽनृतम् ।
एतत्सुधन्वन्पृच्छामि दुर्विवक्ता स्म किं वसेत् ॥ ३० ॥

**सुधन्वोवाच—**

यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः ।
यां च भाराभितप्ताङ्गो दुर्विवक्ता स्म तां वसेत् ॥ ३१ ॥
नगरे प्रतिरुद्धः सन् बहिर्द्वारे बुभुक्षितः ।
अमित्रान्भूयसः पश्येद्यः साक्ष्यमनृतं वदेत् ॥ ३२ ॥
पञ्च पश्वनृते हन्ति दश हन्ति गवानृते ।
शतमश्वानृते हन्ति सहस्रं पुरुषानृते ॥ ३३ ॥

---

पुरो धीयते पूज्यते इति पुरोधाः । पूज्यस्तथा ततोऽन्यः पूज्यो मम विरोचनः पुत्रत्वात् । भवानयं च साक्षिसंबधिकर्मनिमित्तं स्थित उपस्थितः । पुत्रस्यापि अप्रियं वक्ता सत्यं पश्चात्पुत्रपरितोषः कार्यं इति तात्पर्यम् ॥ २८ ॥

[ नील० ] दुर्विवक्ता दुष्टविवेककर्ता अन्याय्यवक्तेत्यर्थः । किं वसेत् किं दुःखं प्राप्नुयात् ॥३०॥ अधिविन्नाकृतसपत्नीका स्त्री तां रात्रिं वसेत्तद्वद्दुःखं प्राप्नुयात् ॥३१॥ नगरे इति शरणमलभमानः क्षुधार्तः शत्रुभिर्वेष्टितश्च यत् दुःखं लभते सः अनृतसाक्ष्यवक्ताऽपि लभेतेत्यर्थः ॥ ३२ ॥ पञ्च पूर्वजान् पश्वनृते अजादिपश्वर्थमनृते उक्ते सति हन्ति नाशयति परलोकात् च्यावयति एवमुत्तरत्र ॥ ३३ ॥

[ अर्जु० ] औरसाय पुत्राय नोऽस्मभ्यं वा उत्तमं परीक्ष्य प्रदद्यास्तथा सति प्रियं धनं स्यादित्यन्वयः ॥ २९ ॥ नैव प्रब्रूयात् तूष्णीं तिष्ठेत् एतच्च सभाप्रवेशधारणपरं, किंचन किं फलं प्राप्नुयादित्यन्वयः । किं वसेदिति प्रायशः पाठः ॥ ३० ॥ यां रात्रिमित्यादि । अधिविन्ना कृतसापत्निका यां रात्रौ संनिहितां त्यक्त्वा पतिः स्त्र्यन्तरं गतः । एते यादृशीं रात्रिमनुशोचन्तो वसन्ति तादृशीमेव रात्रिं मिथ्यावादी शोचन् वसति ॥ ३१ ॥ ३२ ॥ पञ्च पश्वनृते हन्ति पञ्च पुरुषान् । पुरुषानृते मनुष्यनिमित्तं मिथ्योक्तौ ॥३३॥

[ सर्व० ] अधिविन्ना कृतसापत्निका स्त्री परपुरुषापेक्षिचित्ता गृहीता बन्धनभयेन वा । दुर्विवक्ताऽसम्यग्वादी ॥ ३१ ॥ पञ्च पुरुषान्हन्ति निरयपातनात् ॥ ३३ ॥

[ दुर्घ० ] यां रात्रिमधिविन्ना स्त्री यां चैवाक्षपराजितः । यां च भाराभितप्ताङ्गो दुर्विवक्तास्य तां वसेत् प्रह्लादेन मिथ्यावक्तुः किं भवतीति पृष्टः सुधन्वा प्राह रात्रौ यां सन्निहितामनुकूलां त्यक्त्वा भर्ता स्त्र्यन्तरं गतः साऽधिविन्ना स्त्री तथाऽक्षेऽक्षनिमित्तं यः पराजितो दानासमर्थः पुरुषो यश्च भारोद्वहनेन अतीव तप्ताङ्गः एते यादृशीं दुःखरात्रिमनुशोचमानास्तिष्ठन्ति तादृशीमेव रात्रिं दुःखिता मिथ्यावादिनो बहुकालं वसन्तीत्यर्थः ॥ ३० ॥

इति श्रीमहा० दुर्घटार्थप्रकाशिन्यामुद्योग० पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

[ लक्षा० ] [ धृतराष्ट्रं महाप्राज्ञमित्यत्र धृतराष्ट्रेति हंसस्य नाम ॥ २ ॥ पृष्टो धर्मे न विब्रूयादित्यत्र गोकर्णशिथिलं गौः वाक् कर्णात् शिथिला स्रंसिता यथा भवति तथा गोकर्णशिथिलं चरन् आचरन् ॥ ६ ॥ धर्म एतान् संरुजतीत्यत्र अनुकूलजान् कूलमनुसृत्य जातान् वृक्षान् नदी यथा ॥ ७ ॥ भवेत्पादश्च कर्तरीत्यत्र कर्तरि निन्दायोग्यपापकर्तरि ॥ ८ ॥ ] या रात्रिमधिविन्ना स्त्रीत्यत्र अभिविन्ना

---

२९–३० स्थाने क.

'यद्येतत्त्वं न वक्ष्यसि यदि वापि विवक्ष्यसि ।
प्रह्लाद प्रभमतुलं मूर्धा ते विफलिष्यति ॥ १ ॥

विदुर उवाच ।

आदित्येन सहायान्तं प्रह्लादो हंसमब्रवीत् ।
धृतराष्ट्र महाप्राज्ञ सर्वज्ञं सर्वदर्शिनम् ॥ २ ॥

प्रह्लाद उवाच ।

पुत्रो वाऽन्यो भवेद्ब्रह्मन्साक्ष्ये चापि भवेत्स्थितः ।
तयोर्विवदतोर्हंस कथं धर्मः प्रवर्तते ॥ ३ ॥

हंस उवाच ।

गां प्रदद्यादौरसाय यद्वान्यत्स्यात्प्रियं धनम् ।
द्वयोर्विवदतो राजन्प्रभं सत्यं यथा वदेत् ॥ ४ ॥

प्रह्लाद उवाच ।

अथ यो नैव प्रब्रूयात्सत्यं वा यदि वाऽनृतम् ।
हंस तत्त्वं च पृच्छामि कियदेनः करोति सः ॥ ५ ॥

'हंस उवाच ।

पृष्टो धर्मं न विब्रूयाद्गोकर्णशिथिलं चरन् ।
धर्माद्भ्रश्यति राजंस्तु नास्य लोकोऽस्ति न प्रजाः ॥ ६ ॥
धर्म एतान्संरुजति यथा नद्यस्तु कूलजान् ।
ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते ॥ ७ ॥
श्रेष्ठोऽर्धं तु हरेत्तत्र भवेत्पादश्च कर्तरि ।
पादस्तेषु सभासत्सु यत्र निन्द्यो न निन्द्यते ॥ ८ ॥
अनेना भवति श्रेष्ठो मुच्यन्तेऽपि सभासदः ।
कर्तारमेनो गच्छेद्वा निन्द्यो यत्र हि निन्द्यते ॥ ९ ॥

प्रह्लाद उवाच ।

मोहाद्वा चैव कामाद्वा मिथ्यावादं यदि ब्रुवन् ।
धृतराष्ट्र तत्त्वं पृच्छामि दुर्विवक्ता तु किं वसेत् ॥ १० ॥

हंस उवाच । इति ।

हन्ति जातानजातांश्च हिरण्यार्थेऽनृतं वदन् ।
सर्वं भूम्यनृते हन्ति मा स्म भूम्यनृतं वदेः ॥ ३४ ॥

**प्रह्राद उवाच—**

मत्तः श्रेयानङ्गिरा वै सुधन्वा त्वद्विरोचन ।
माताऽस्य श्रेयसी मातुस्तस्मात्त्वं तेन वै जितः ॥३५॥
विरोचन सुधन्वाऽयं प्राणानामीश्वरस्तव ।
सुधन्वन्पुनरिच्छामि त्वया दत्तं विरोचनम् ॥ ३६ ॥

**सुधन्वोवाच—**

यद्धर्ममवृणीथास्त्वं न कामादनृतं वदीः ।
पुनर्ददामि ते पुत्रं तस्मात्प्रह्राद दुर्लभम् ॥ ३७ ॥
एष प्रह्राद पुत्रस्ते मया दत्तो विरोचनः ।
पादप्रक्षालनं कुर्यात्कुमार्याः संनिधौ मम ॥ ३८ ॥

**विदुर उवाच—**

तस्माद्राजेन्द्र भूम्यर्थे नानृतं वक्तुमर्हसि ।
मा गमः ससुतामात्यो नाशं पुत्रार्थमब्रुवन् ॥ ३९ ॥

न देवा दण्डमादाय रक्षन्ति पशुपालवत् ।
यं तु रक्षितुमिच्छन्ति बुद्धया संविभजन्ति तम् ॥४०॥
यथा यथा हि पुरुषः कल्याणे कुरुते मनः ।
तथा तथाऽस्य सर्वार्थाः सिद्धयन्ते नात्र संशयः ॥४१॥
नैनं छन्दांसि वृजिनात्तारयन्ति
मायाविनं मायया वर्तमानम् ।
नीडं शकुन्ता इव जातपक्षा-
श्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ४२ ॥
मद्यपानं कलहं पूगवैरं
भार्यापत्योरन्तरं ज्ञातिभेदम् ।
राजद्विष्टं स्त्रीपुंसयोर्विवादं
वर्ज्यान्याहुर्यश्च पन्थाः प्रदुष्टः ॥ ४३ ॥
सामुद्रिकं वणिजं चोरपूर्वं
शलाकधूर्तं च चिकित्सकं च ।
अरिं च मित्रं च कुशीलवं च
नैतान्साक्ष्ये त्वधिकुर्वीत सप्त ॥ ४४ ॥

---

अधि अधिकं विन्ना पतिवियोगाद्वेदनां प्राप्ता । बहिर्द्वारो बुभुक्षित इत्यत्र ' स्त्रीद्वार्द्वारं प्रतीहार ' इत्यमरः । द्वारः द्वारस्य ॥ ३२ ॥ पञ्च पश्वनृतं हन्तीत्यत्र महिष्यादिपशोरर्थे अनृते उक्ते सति पञ्च पुरुषान् हन्ति ॥ ३३ ॥

[ नील० ] भूमितुल्या केशिनी तदर्थम् अनृतं भूम्यनृतम् ॥ ३४ ॥ अङ्गिराः सुधन्वनः पिता त्वत् त्वत्तः ॥ ३५ ॥ पादप्रक्षालनं हरिद्रया पादधावनं कुमार्याः केशिन्याः विवाहे दम्पत्योः परस्परं हरिद्रया पादधावनं कुर्वन्तीति प्रसिद्धम् । अस्यैव भार्या केशिनी भवत्वित्यर्थः ॥ ३८ ॥ प्रकृते आख्यायिकोपयोगमाह—तस्मादिति । अब्रुवन्सत्यमिति शेषः ॥ ३९ ॥ तव दैवं प्रतिकूलम् अधीतं च निष्फलमित्याह त्रयेण—न देवा इति ॥ ४० ॥ छन्दांसि वेदाः ॥ ४२ ॥ अन्तरं वियोगं विवादं वैरप्रवर्तनं ज्ञातिभेदे कलहे च तव प्रवृत्तिर्न योग्येति भावः ॥ ४३ ॥ सामुद्रिकं हस्तरेखादिपरीक्षकम् । वणिजं चोरपूर्वं पूर्वं चोरः पश्चाद्वणिग्भूतस्तं कूटतुलावन्तं वा । शलाकधूर्तं शलाकया पाशादिना वा शकुनादिकमुक्त्वा योऽन्यान् वञ्चयति तम् । अरिं विपरीतसाक्ष्यभयात् । मित्रं परीक्षकाणामविश्वासात् । कुशीलवं कुत्सितं शीलं वाति अनुसरतीति तम् । नर्तकीदासं विटोन्मत्तादिकं वा । तव तु कूटद्यूतकारी शकुनिः कुशीलव एव प्रमाणम् ॥ ४४ ॥

[ अर्जु० ] अङ्गिरा सुधन्वपिता मत्तो मत् त्वत्तः त्वत् मातुस्तवेति शेषः ॥ ३५ ॥ तन् तस्मात् वदीः वादीः ॥ ३७ ॥ मत्तापानं मत्तानां पानगोष्ठीं विकलमसंपूर्णं कार्यं, मद्यपानं कलहमित्यसम्यक् । अन्तरं छिद्रम् ॥४३॥ सामुद्रकं नौकादिसाधनम् । शलाकधूर्तम् अक्षदेविनं कुशीलवम् ॥ ४४ ॥

[ सर्व० ] अङ्गिराः सुधन्वपिता । त्वत् त्वत्तः । माता तवेति शेषः ॥ ३५ ॥ छन्दांसि वेदाः न मायाविनं मायासंबन्धिनं तारयन्ति नापि तेन वर्तमानं व्यवहरन्तमित्यर्थः ॥ ४२ ॥ मत्तापानं मद्यमत्तानां पानं गोष्ठी विकलं कलारहितमकुशलं तस्य भाव एव विकलं तद्धितलोपात् ॥ ४३ ॥ समुद्रे वाणिज्यं यस्य स सामुद्रकः , सामुद्रकादीनामर्थमात्रपरतया धर्मादिविषयाज्ञानादसाक्ष्यम् । चौरा एव पूगः समुदायो यस्य पुंसः तं चौरपूगम् । शलाकः पाशकः तेन धूर्तं कितवमित्यर्थः । कुशीलवं नटनवृत्तिं [ मियेर स्वस्येव राज ] उत्तरकालं तद्वचनस्य सभायामग्रहणेन वैयर्थ्यात् ॥ ४४ ॥

[ लक्षा० ] सुधन्वा त्वद्विरोचनेत्यत्र सुधन्वा त्वत् त्वत्तः श्रेयान् ॥ ३५ ॥ चोरपूर्वं पूर्वं चोरश्चोरपूर्वस्तम् । शलाकसूत्रं शलाके सूत्रं परितो वेष्टयित्वा विक्रेता शलाकसूत्रस्तम् ॥ ४४ ॥

---

३५ ख. मातुस्तेन त्वममुना जितः । ४३ ख. भक्तापानं विकलं; म. मत्तापानं विफलं । ४४ ज. सामुद्रकं वणिजं चोरपूगं ।

मानाग्निहोत्रमुतमानमौनं
मानेनाधीतमुत मानयज्ञः ।
एतानि चत्वार्यभयंकराणि
भयं प्रयच्छन्त्ययथाकृतानि ॥ ४५ ॥
अगारदाही गरदः कुण्डाशी सोमविक्रयी ।
पर्वकारश्च सूची च मित्रध्रुक्पारदारिकः ॥ ४६ ॥
भ्रूणहा गुरुतल्पी च यश्च स्यात्पानपो द्विजः ।
अतितीक्ष्णश्च काकश्च नास्तिको वेदनिन्दकः ॥४७॥
स्रुवप्रग्रहणो व्रात्यः कीनाशश्चात्मवानपि ।
रक्षेत्युक्तश्च यो हिंस्यात्सर्वे ब्रह्महभिः समाः ॥ ४८ ॥
तृणोल्कया ज्ञायते जातरूपं
वृत्तेन भद्रो व्यवहारेण साधुः ।
शूरो भयेष्वर्थकृच्छ्रेषु धीरः
कृच्छ्रेष्वापत्सु सुहृदश्चारयश्च ॥ ४९ ॥
जरा रूपं हरति हि धैर्यमाशा
मृत्युः प्राणान्धर्मचर्यामसूया ।
क्रोधः श्रियं शीलमनार्यसेवा
ह्रियं कामः सर्वमेवाभिमानः ॥ ५० ॥
श्रीर्मङ्गलात्प्रभवति प्रागल्भ्यात्संप्रवर्धते ।
दाक्ष्यात्तु कुरुते मूलं संयमात्प्रतितिष्ठति ॥५१॥
अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च दमः श्रुतं च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ५२ ॥

---

[ नील० ] सत्कर्मद्वाराऽपि तस्य साधुत्वं न मन्तव्यमित्याह—मानेति । मानः लोकेषु उत्कर्षः तदर्थान्यग्निहोत्रादीनि भयदानीत्यर्थः । मौनं ध्यानम् ॥४५॥ कुण्डाशी भगभक्षः जीवति भर्तरि जाराज्जातः कुण्डस्तेन निमित्तेनाशितुं शीलः । सोमविक्रयी प्रसिद्धः । पर्वकारः शरकृत् आयुधमात्रकर्तेत्यर्थः । सूची सूचको नक्षत्रादीनां परदोषाणां च ज्यौतिषिकः पिशुनो वा ॥ ४६ ॥ काकः काकवत् क्षतोद्वर्तनेन दुःखितस्यापि दुःखप्रदः नास्तिकः परलोकादिद्वेषी ॥ ४७ ॥ स्रुवप्रग्रहणः राजकीयवृत्तिबलेन सर्वेभ्यो वणिग्भ्यः स्रुवेण धान्यादिकमादत्ते खोंचीग्राहक इति भाषायां प्रसिद्धः ग्रामपुरोहित इत्यन्ये । व्रात्यः अतीतोपनयनकालः पतितसावित्रीको वा । कीनाशः कर्षकः आत्मवान्समर्थोऽपि यो रक्षेत्युक्तो हिंस्यात् एतेष्वाद्यं द्वयं त्वत्पुत्रेषु दृष्टम् ॥४८॥ तृणोल्कया तृणज्वालया जातरूपं रूपवद्वस्तु ज्ञायतेऽन्धकारे सति । भद्रो वृषः धर्म इति यावत् । वृत्तेन शीलेन सोऽस्ति नास्तीति ज्ञायते । व्यवहारेण अहिंसादिप्रधानेन । कृच्छ्रेषु दुर्भिक्षादिसंकटेषु । त्वत्पुत्रेषु धर्मः साधुत्वं च नास्तीत्यर्थः ॥४९॥ जरेति त्वत्पुत्रेऽभिमानदोषोऽस्ति ॥ ५० ॥ श्रीरिति दाक्ष्यं शीघ्रकारित्वं त्वयि संयमाभावान्न श्रीः स्थास्यति ॥ ५१ ॥ अष्टाविति राज्ञा पुरस्कृतं पुरुषं प्रज्ञादयो हठादनुसरन्तीति श्लोकद्वयार्थः ॥ ५२ ॥

[ अर्जु० ] मानेनाधीतमित्यादि मीयते अनेनेति मानं कालः तस्मिन् यथाकाले अग्निहोत्रादीनि साङ्गानि अभयंकराणि अयथाकृतानि अकालकृतानि भयदानि । प्रकृते तु त्रयोदशवर्षपर्यन्तं छलेनासत्येन पाण्डवानां वञ्चनं यथा तथास्तु सांप्रतं तु अकालकृताग्निहोत्रादिवत्तेषां वञ्चनं भयप्रदमेवेत्यभिप्रायः ॥ ४५ ॥ अगारदाहीत्यादि अगारदाही गरदः स्वत्पुत्र एव । कुण्डाशी बहुभुक् अथवा मृते भर्तरि जारजः कुण्डस्तस्यान्नाशी सोमविक्रयी सोमलताविक्रायकः । पर्वकारः पर्वसु दर्शादिषु मूल्यं गृहीत्वा श्राद्धादिकारकः । सूची नक्षत्रसूचकः वृत्त्यर्थं राज्ञि पैशुन्यकर्ता वा ॥ ४६॥ भ्रूणहा भ्रूणो गर्भः सगर्भास्त्री वा स्वशाखाध्यायी ब्राह्मणो वा तद्धन्ता । अतितीक्ष्णपरुषवाक् । काकोऽशुचिः ॥ ४७ ॥ स्रुवप्रग्रहणोऽभिचारयज्ञकारी ग्रामयाजी वा । व्रात्यः संस्कारविहीनः कीनाशः कीनं पापं तेन सह अश्नाति अन्नवानिति तस्यैव विशेषणम् । अन्ने सति अदत्त्वा भुञ्जान इत्यर्थः ॥ ४८ ॥ तृणोल्कया वह्निना, भद्रो गौः युगे धुरः काष्ठे, व्यवहारेण ऋणपरिशोधनेन, सुहृद उपकारे, अरयोऽपकारे ॥ ४९ ॥ मङ्गलात् मङ्गल्यवस्तुदर्शनादेः । संयमात् अतिव्ययाकरणात् ॥ ५१ ॥ कौल्यं कुलीनता ॥ ५२ ॥

[ सर्व० ] मानोऽभिमानः, परापेक्षयोत्कर्षातिशयस्तदर्थमग्निहोत्रं मानाग्निहोत्रम् । मौनं मौनादितपः । एतानि अग्निहोत्रादीनि चत्वारि वस्तुतोऽभयङ्कराण्यपि अयथाकृतानि अविधिकृतानि मानार्थत्वेन कृतानि भयं नरकरूपं प्रयच्छन्ति॥४५॥कुण्डाशी बहुभोजी । पर्ववदको ज्यौतिषिकः । सूची सूचकः ॥ ४६ ॥ अतितीक्ष्णः हिंस्रः। काकस्तीर्थप्रतिग्रहजीवी ॥ ४७ ॥ स्रुवप्रग्रहणः ग्रामयाजनार्थं स्रुवं गृहीत्वैव सदा वर्तमानः । अर्थवानपि कीनाशः कर्षकः ॥ ४८ ॥ तृणोल्का ज्वलितं तृणम् । युगे लाङ्गलवहनकाष्ठे । भद्रो वृषः । व्यवहारे संव्यवहारे । अर्थकृच्छ्रेषु प्रयोजनसंदेहेषु । उपकारापकाराभ्यां सुहृदोऽरयश्च ॥ ४९ ॥ दाक्ष्यं शीघ्रकारित्वम् । संयमात् व्यसनेभ्यः आत्मनि प्रसादं व्ययेनार्थनियमाच्च ॥ ५१ ॥

---

४८ म. ज. श्चार्थवानपि । ४९ ज. युगेन भद्रो । ५२ म. नास्ति ।

एतान् गुणांस्तात महानुभावा-
नेको गुणः संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं
सर्वान् गुणानेष गुणो विभाति ॥ ५३ ॥
अष्टौ नृपेमानि मनुष्यलोके
स्वर्गस्य लोकस्य निदर्शनानि ।
चत्वार्येषामन्ववेतानि सद्भि-
श्चत्वारि चैषामनुयान्ति सन्तः ॥ ५४ ॥
यज्ञो दानमध्ययनं तपश्च
चत्वार्येतान्यन्ववेतानि सद्भिः ।
दमः सत्यमार्जवमानृशंस्यं
चत्वार्येतान्यनुयान्ति सन्तः ॥ ५५ ॥
इज्याध्ययनदानानि तपः सत्यं क्षमा घृणा ।
अलोभ इति मार्गोऽयं धर्मस्याष्टविधः स्मृतः ॥ ५६ ॥
तत्र पूर्वचतुर्वर्गो दम्भार्थमपि सेव्यते ।
उत्तरश्च चतुर्वर्गो नामहात्मसु तिष्ठति ॥ ५७ ॥
न सा सभा यत्र न सन्ति वृद्धा
न ते वृद्धा ये न वदन्ति धर्मं ।
नासौ धर्मो यत्र न सत्यमस्ति
न तत्सत्यं यच्छलेनाभ्युपेतम् ॥ ५८ ॥
सत्यं रूपं श्रुतं विद्या कौल्यं शीलं बलं धनम् ।
शौर्यं च चित्रभाष्यं च दशेमे स्वर्गयोनयः ॥ ५९ ॥
पापं कुर्वन्पापकीर्तिः पापमेवाश्नुते फलम् ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यमत्यन्तमश्नुते ॥ ६० ॥
तस्मात्पापं न कुर्वीत पुरुषः संशितव्रतः ।
पापं प्रज्ञां नाशयति क्रियमाणं पुनःपुनः॥६१॥
नष्टप्रज्ञः पापमेव नित्यमारभते नरः ।
पुण्यं प्रज्ञां वर्धयति क्रियमाणं पुनः पुनः॥६२॥
वृद्धप्रज्ञः पुण्यमेव नित्यमारभते नरः ।
पुण्यं कुर्वन्पुण्यकीर्तिः पुण्यं स्थानं स्म गच्छति ।
तस्मात्पुण्यं निषेवेत पुरुषः सुसमाहितः ॥ ६३ ॥
असूयको दन्दशूको निष्ठुरो वैरकृच्छठः ।
स कृच्छ्रं महदाप्नोति नचिरात्पापमाचरन् ॥ ६४ ॥
अनसूयुः कृतप्रज्ञः शोभनान्याचरन्सदा ।
नकृच्छ्रं महदाप्नोति सर्वत्र च विरोचते ॥ ६५ ॥

---

[ लक्षा० ] सुराप्रह्लापण इत्यत्र पुष्पाग्रं छित्वा ह्लापयति त्याजयतीति सुराप्रह्लापगः ॥ ४८ ॥ तृणोल्कया ज्ञायते जातरूपमित्यत्र तृणोल्कया तृणोपरिपतितकान्त्या जातरूपं सुवर्णम् ॥ ४९ ॥

[ नील० ] एष गुणो राजसत्कारः विभाति भासयति कर्णादिषु सत्कृतेषु आगन्तुका एते गुणाः सन्ति न स्वाभाविकाः अतस्ते नोपयोक्ष्यन्त इति भावः ॥ ५३ ॥ इमानि वक्ष्यमाणानि अन्ववेतानि नित्यसंबद्धानि अनुयान्ति यत्नेन भजन्ति ॥ ५४ ॥ तत्रेति असत्यपि दमादौ दम्भार्थं यज्ञादिसंभवात् ॥ ५७ ॥ रूपं विनयमुद्रा श्रुतम् अध्ययनं विद्या देवताद्युपासनं चित्रभाष्यं युक्तियुक्तं वचनम् । दश संसर्गजा गुणा इति पाठे तद्युक्तैः सह संगे कृते एते जायन्ते तेन सत्सङ्गः कर्तव्य इति भावः ॥ ५९ ॥ पापकीर्तिः कलङ्कित्वेन प्रसिद्धः ॥ ६० ॥ दन्दशूको मर्मच्छेत्ता निष्ठुरः अप्रियवाक् नचिरात् शीघ्रम् ॥ ६४ ॥ नकृच्छ्रं समस्तं पदं सुखवाची ॥ ६५ ॥

[ अर्जु० ] कोऽसौ गुण इत्याह–राजसत्कार इति । अतिभाति अतिक्रम्य प्रकाशते ॥ ५३ ॥ एषां वक्ष्यमाणानां मध्ये अन्ववेतानि आश्रितानि । अन्ववयन्ति आश्रयन्ते ॥ ५४ ॥ कौल्यं कुलाचारः । चित्रभाष्यं आश्चर्यवादिता । संसर्गयोनयः संसर्गस्य सेव्यतायाः योनयः कारणम् ॥ ५९ ॥ असूयकः परनिन्दकः । दन्दशूकः परमर्मप्रहरणशीलः । अकृतप्रज्ञ इति च पठन्ति ॥ ६४ ॥ ( एवंप्रकृतिः एवंस्वभावः ॥ ) अकृच्छ्रं सुखम् ॥ ६५ ॥

[ सर्व० ] [ प्रतिसंहृतैः स्वयं वर्तमानः ] एतान् प्रसह्यासतोऽपि बलादानयतीत्यर्थः । एष गुणो राजसत्कारः ॥ ५३ ॥ अन्ववयन्ति प्रयत्नेन तैः समृद्धयन्ते ॥ ५४ ॥ अन्ववेतानि नित्यसंबद्धानि ॥ ५५ ॥ असत्यपि दमादौ दम्भार्थं यज्ञादिसंभवात् ॥ ५७ ॥ रूपममलिनाकारता । श्रुतं शास्त्रम् । विद्या वेदः शौर्यं परेभ्योऽतीतस्य (?) पराक्रमः । चित्रभाष्यं विस्मयहेतुवाक्यभाषित्वम् । संसर्गस्य संबन्धस्य योनयः कारणानि । एतद्युक्तैः संसृजते सर्व इति शेषः ॥ ५९ ॥ पापा कीर्तिर्लोकप्रकाश्या यस्य स पापकीर्तिः ॥ ६० ॥ दन्दशूकोऽरुन्तुदः । निष्ठुरोऽप्रियवाक् । नकृच्छ्रं सुखम् ॥ ६४ ॥

[ लक्षा० ] चत्वार्येतान्यन्ववेतानीत्यत्र अन्ववेतानि अनु अनुकूलतया अवेतानि ज्ञातानि यज्ञादीनि चत्वारि स्वर्गसाधनत्वात् स्वर्गात्प्रागनुकूलतया ज्ञातानीति

---

५३ ज. एष गुणोऽतिभाति । ५४ ज मन्ववयन्ति सन्तः । ५९ ख. दश संसर्गजा गुणाः । ६५ म. अनसूयः कृतश्च । म. अकृच्छ्रात्सुखमा॰ ।

प्रज्ञामेवागमयति यः प्राज्ञेभ्यः स पण्डितः ।
प्राज्ञो ह्यवाप्य धर्मार्थौ शक्नोति सुखमेधितुम् ॥६६॥
दिवसेनैव तत्कुर्याद्येन रात्रौ सुखं वसेत् ।
अष्टमासेन तत्कुर्याद्येन वर्षाः सुखं वसेत् ॥ ६७ ॥
पूर्वे वयसि तत्कुर्याद्येन वृद्धः सुखं वसेत् ।
यावज्जीवेन तत्कुर्याद्येन प्रेत्य सुखं वसेत् ॥ ६८ ॥
जीर्णमन्नं प्रशंसन्ति भार्यां च गतयौवनाम् ।
शूरं विजितसंग्रामं गतपारं तपस्विनम् ॥ ६९ ॥
धनेनाधर्मलब्धेन यच्छिद्रमपिधीयते ।
असंवृतं तद्भवति ततोऽन्यदवदीर्यते ॥ ७० ॥
गुरुरात्मवतां शास्ता शास्ता राजा दुरात्मनाम् ।
अथ प्रच्छन्नपापानां शास्ता वैवस्वतो यमः ॥७१॥
ऋषीणां च नदीनां च कुलानां च महात्मनाम् ।
प्रभवो नाधिगन्तव्यः स्त्रीणां दुश्चरितस्य च ॥७२॥
द्विजातिपूजाभिरतो दाता ज्ञातिषु चार्जवी ।
क्षत्रियः शीलभाग्राजंश्चिरं पालयते महीम् ॥ ७३ ॥
सुवर्णपुष्पां पृथिवीं चिन्वन्ति पुरुषास्त्रयः ।
शूरश्च कृतविद्यश्च यश्च जानाति सेवितुम् ॥ ७४ ॥
बुद्धिश्रेष्ठानि कर्माणि बाहुमध्यानि भारत ।
तानि जङ्घाजघन्यानि भारप्रत्यवराणि च ॥ ७५ ॥
दुर्योधनेऽथ शकुनौ मूढे दुःशासने तथा ।
कर्णे चैश्वर्यमाधाय कथं त्वं भूतिमिच्छसि ॥ ७६ ॥
सर्वैर्गुणैरुपेतास्तु पाण्डवा भरतर्षभ ।
पितृवत्त्वयि वर्तन्ते तेषु वर्तस्व पुत्रवत् ॥ ७७ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चत्रिंशोऽध्यायः ॥ ३५ ॥

भावः । अन्ववायन्ति अनुकूलतया जानन्ति स्वर्गे व्यपेक्षितत्वात् । दमादीनि चत्वारि स्वर्गे वर्तमानाश्च अनुकूलतया जानन्तीति भावः ॥ ५५ ॥

[ नील० ] आगमयति आनयति ॥ ६६ ॥ वर्षा इत्यत्यन्तसंयोगे द्वितीया ॥ ६७ ॥ गतपारं प्राप्ततत्त्वम् ॥ ६९ ॥ परिपाकसुखं कर्म त्वत्पुत्रा न कुर्वन्ति अन्यायेन च सुखं लिप्सन्ति तत्तु विपरीतमेवेत्याह–धनेनेति ॥७०॥ आत्मवतां जितचित्तानां प्रच्छन्नपापो दुर्योधनः ॥ ७१ ॥ प्रभवः माहात्म्यम् । 'प्रभवो जन्ममूले स्याज्जन्महेतौ पराक्रमे' इति मेदिनी । नाधिगन्तव्यः नाधिगन्तुं शक्योऽनन्तत्वात् ॥ ७२ ॥ ज्ञातिषु अनार्जवी दुर्योधनः ॥ ७३ ॥ शूराः पाण्डवाः सर्वत्र सुवर्णभाज इति भावः ॥ ७४ ॥ बुद्धिरेव येषां फलसिद्धौ साधनं तानि बुद्धिश्रेष्ठानि प्रशस्ततमानि कर्माणि । बाहुमध्यानि बाहुबलसाध्यानि मध्यानि । जङ्घेति गोपनीयत्वं लक्ष्यते तेन कपटसाध्यानि जघन्यानि नीचानि । येषां सिद्धौ स्वशिरसि भारः संकटं पतति तानि नीचतराणि ॥ ७५ ॥ तत्रान्त्यद्वयवन्तो दुर्योधनादय इति मत्वा प्राह–दुर्योधने इति ॥ ७६ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे पञ्चत्रिंशोऽध्यायः ॥ ३९ ॥

[ अर्जु० ] आगमयति गृह्णाति ॥ ६६ ॥ गतपारं मनस्विनं शुद्धमनस्वितया जन्मप्रभृतिविनाशपर्यन्तम् । हीनं तपस्विनमिति च पाठः ॥ ६९ ॥ अपिधीयते आच्छाद्यते ॥ ७० ॥ प्रभव उत्पत्तिस्थानं नाधिगन्तव्यो न परीक्षणीयः ॥ ७२ ॥ जङ्घाजघन्यानि पादपर्यटनसाध्यत्वेन हीनानीत्यर्थः । प्रत्यवराणि हीनादपि निकृष्टानि ॥ ७५ ॥

इति श्रीमन्म० मर्जुनमि० सुयो० पञ्चत्रिंशोऽध्यायः ॥ ३९ ॥

[ सर्व० ] विगतो निर्गतः सङ्ग्रामोऽस्मादिति । यः सङ्ग्रामं जित्वा निवर्तेत इत्यर्थः । तपस्विनं गतपारम् अतिक्रान्तसंसारपारम्, अन्यथान्तरा योगविघ्नसंभवात् ॥ ६९ ॥ छिद्रमधर्मरूपमपिधीयते दानादिना निवारणात् । अवदीर्यते छिद्रान्तरं भवति ॥ ७० ॥ आत्मवताम् आत्मनि ज्ञानार्थसंबन्धानाम् ॥ ७१ ॥ प्रभव उत्पत्तिः । नाधिगन्तव्यो नाधिगन्तुं शक्यः ॥ ७२ ॥ सुवर्णपुष्पां सुवर्णमेव तेभ्यो या पुष्यति ताम् ॥ ७४ ॥ बुद्धिव्यापारमात्रेण कर्म श्रेष्ठं येभ्यस्ते तथा । एवं बाह्वादौ । प्रत्यवरमतिजघन्यम् ॥ ७५ ॥

इति श्रीमहाभारतोद्यो० सर्व० टीकायां पञ्चत्रिंशोऽध्यायः ॥ ३९ ॥

[ लक्षा० ] गुरुरात्मवतामित्यत्र आत्मवतां वशीकृतचित्तानां मुनीनाम् ॥ ७१ ॥ बुद्धिश्रेष्ठानीत्यत्र केवलं बुद्ध्यैव कृतत्वाच्छ्रेष्ठानि आज्ञामात्रेण राज्यपरिपालनादीनि वीरक्षत्रियकर्माणि बुद्धिश्रेष्ठानि, बाहुभ्यां कृतत्वान्मध्यानि कृषिवाणिज्यादीनि वैश्यकर्माणि बाहुमध्यानि, भारप्रत्यवराणि भारेण प्रत्यवराणि नीचानि यानि शूद्रादीनां काष्ठोद्वहनादिकर्माणि अत एव जघन्यानि अधमानि तानि । सर्वं वाक्यं सावधारणमिति न्यायात् तान्येव जङ्घाभ्यां तु प्रागुक्तमध्यमोत्तमकर्माणीति योजना ॥ ७५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चत्रिंशोऽध्यायः ॥ ३९ ॥

७० ख. अन्यत्र च विदीर्यते । ७३ ख. सर्वभाग् । इति पञ्चत्रिंशो० ॥३५॥

## षट्त्रिंशोऽध्यायः ३६

धृतराष्ट्राय विदुरेण नीत्युपदेशः ॥ १ ॥

**विदुर उवाच—**

अत्रैवोदाहरन्तीममितिहासं पुरातनं ।
आत्रेयस्य च संवादं साध्यानां चेति नः श्रुतम् ॥१॥
चरन्तं हंसरूपेण महर्षिं संशितव्रतम् ।
साध्या देवा महाप्राज्ञं पर्यपृच्छन्त वै पुरा ॥ २ ॥

**साध्या ऊचुः—**

साध्या देवा वयमेते महर्षे
दृष्ट्वा भवन्तं न शक्नुमोऽनुमातुम् ।
श्रुतेन धीरो बुद्धिमांस्त्वं मतो नः
काव्यां वाचं वक्तुमर्हस्युदाराम् ॥ ३ ॥

**हंस उवाच—**

एतत्कार्यममराः संश्रुतं मे
धृतिः शमः सत्यधर्मानुवृत्तिः ।
ग्रन्थिं विनीय हृदयस्य सर्वं
प्रियाप्रिये चात्मसमं नयीत ॥ ४ ॥
आक्रुश्यमानो नाक्रोशेन्मन्युरेव तितिक्षतः ।
आक्रोष्टारं निर्दहति सुकृतं चास्य विन्दति ॥ ५ ॥
नाक्रोशी स्यान्नावमानी परस्य
मित्रद्रोही नोत नीचोपसेवी ।
न चाभिमानी न च हीनवृत्तो
रूक्षां वाचं रुषतीं वर्जयीत ॥ ६ ॥
मर्माण्यस्थीनि हृदयं तथाऽसून्
रूक्षा वाचो निर्दहन्तीह पुंसाम् ।
तस्माद्वाचमुषतीं रूक्षरूपां
धर्मारामो नित्यशो वर्जयीत ॥ ७ ॥
अरुन्तुदं परुषं रूक्षवाचं
वाक्कण्टकैर्वितुदन्तं मनुष्यान् ।
विद्यादलक्ष्मीकतमं जनानां
मुखे निबद्धां निर्ऋतिं वै वहन्तम् ॥ ८ ॥
परश्चेदेनमभिविद्ध्येत बाणै-
र्भृशं सुतीक्ष्णैरनलार्कदीप्तैः ।
स विद्ध्यमानोऽप्यतिदह्यमानो
विद्यात्कविः सुकृतं मे दधाति ॥ ९ ॥

[ नील० ] अत्रैवेति ॥ १ ॥ हंसरूपेण परिव्राजकरूपेण ॥ २ ॥ अनुमातुं लिङ्गेन ज्ञातुं काव्यां विद्वल्लक्षणाभिधायिनीम् ॥ ३ ॥ मे मया संश्रुतं गुरुभ्य इति शेषः । तदेवाह—धृतिरिति। धृतिः दुःखैरभिघातेऽपि अवैकल्यम् । दमः सर्वेन्द्रियजयः । सत्यधर्माः ब्रह्मप्रापका धर्माः धारणाध्यानसमाधयः तेषामनुवृत्तिरविच्छेदः । तैश्च ग्रन्थिं चिज्जडयोरात्मान्तःकरणयोरेकलोलीभावं विनीय तयोः पृथक्करणेन शिथिलीकृत्य प्रियाप्रिये सुखदुःखे । आत्मसमम् आत्मसाम्यं नयीत प्रापयेत् । प्रियाप्रियधर्मिणोऽन्तःकरणस्यात्मन्यध्यस्तस्य स्वाधिष्ठाने प्रलये सति तयोरपि तत्रैव लय इत्यर्थः । यथा रज्ज्वां रज्जुसर्पे लीने सति भीषणत्वादयोऽपि तत्रैव लीयन्ते तद्वत् ॥ ४ ॥ नाक्रोशेत् न शपेत् यतस्तितिक्षतो मन्युः क्रोध एव आक्रोष्टारं दहति ॥ ५ ॥ रुषतीं रोषवतीं पाठान्तरे उषतीं दाहिकां वा ॥ ६ ॥ निर्ऋतिम् अलक्ष्मीं मृत्युं वा ॥ ८ ॥ बाणैः वाग्बाणैः दधाति पुष्णाति ॥ ९ ॥

[ अर्जु० ] हंसरूपेण हंसः परिव्राड्विशेषः ॥ २ ॥ स्मो भवामः ॥ ३ ॥ ग्रन्थिमहंकारममकारौ उभयघटनात्मकत्वात् विनीय त्यक्त्वा ॥ ४ ॥ अतिमानी सर्वानतीत्याहं मतिमान् इति यो मन्यते । रुषतीं हिंस्राम् । उषतीमिति पाठेऽकल्याणीम् ॥ ६ ॥ धर्मारामो धर्मक्रीडनकः ॥ ७ ॥ अरुन्तुदं मर्मच्छिदम् । निर्ऋतिमलक्ष्मीम् ॥ ८ ॥ बाणैः रुक्षशब्दैः । उग्रत्वमसह्यत्वात् । दीप्तत्वं दाहकत्वात् । सुकृतं दधातीति कविः पण्डितो विद्यात् ॥ ९ ॥

[ सर्व० ] हंसः प्रव्राजकभेदस्तद्रूपेण ॥२॥ अस्मो भवामः । छान्दसोऽकारलोपाभावः । काव्यां कविर्विद्वान्, तल्लक्षणाभिधायिनीम् ॥ ३ ॥ ग्रन्थिः संदेहः आत्मादिषु॥४॥ नाक्रोशेन्न शपेत् अपि तु क्षमेत मन्युः शोक एव तितिक्षतो भवति । यदा नाक्रोशेत्, तदा क्रोष्टारं दहति ॥ ५ ॥ अवमानी मानः पूजा परविषया या तामवनयति न करोति । रुशतीं रोषकारिणीं परस्य ॥ ६ ॥ धर्मारामो धर्मरतिः ॥ ७ ॥ निर्ऋतिमलक्ष्मीम् ॥ ८ ॥

३ ख. म. वयं स्मो महर्षे । ख. घोरा वाचो । ८ ख. वाक्सायकैः ९ ख. म. परंतु योनाभिवध्येत बाणैर्भृशं सुतीक्ष्णैरनलोग्रदीप्तैः । ख. विरिच्यमानोऽप्यतिरिच्यमानो ।

यदि सन्तं सेवति यद्यसन्तं
तपस्विनं यदि वा स्तेनमेव ।
वासो यथा रङ्गवशं प्रयाति
तथा स तेषां वशमभ्युपैति ॥ १० ॥
अतिवादं न प्रवदेन्न वादये-
द्योऽनाहतः प्रतिहन्यान्न घातयेत् ।
हन्तुं च यो नेच्छति पापकं वै
तस्मै देवाः स्पृहयन्त्यागताय ॥ ११ ॥
अव्याहृतं व्याहृताच्छ्रेय आहुः
सत्यं वदेद्व्याहृतं तद्द्वितीयम् ।
प्रियं वदेद्व्याहृतं तत्तृतीयं
धर्म्यं वदेद्व्याहृतं तच्चतुर्थम् ॥ १२ ॥
यादृशैः संनिविशते यादृशांश्चोपसेवते ।
यादृगिच्छेच्च भवितुं तादृग्भवति पूरुषः ॥ १३ ॥
यतो यतो निवर्तते ततस्ततो विमुच्यते ।
निवर्तनाद्धि सर्वतो न वेत्ति दुःखमण्वपि ॥ १४ ॥
न जीयते चानुजिगीषतेऽन्या-
न्न वैरकृच्चाप्रतिघातकश्च ।
निन्दाप्रशंसासु समस्वभावो
न शोचते हृष्यति नैव चायम् ॥ १५ ॥
भावमिच्छति सर्वस्य नाभावे कुरुते मनः ।
सत्यवादी मृदुर्दान्तो यः स उत्तमपूरुषः ॥ १६ ॥
नानर्थकं सान्त्वयति प्रतिज्ञाय ददाति च ।
रन्ध्रं परस्य जानाति यः स मध्यमपूरुषः ॥ १७ ॥

---

परश्चेदेनम् अतिविध्येत बाणैः । बाणधातुर्वचनार्थो घञन्तः । वि[वि?रि]च्यमानो हीनः क्रियमाणः । अतिरिच्यमानो ऽतिरिक्तो महान् क्रियमाणः पूज्यमान इत्यर्थः । दधाति पुष्णाति ॥ ९ ॥

[ लक्षा० ] रुशतीं वर्जयेतेत्यत्र ' रुशती वागकल्याणी' इत्यमरः । रुशतीममङ्गलाम् ॥ ६ ॥ विरिच्यमानोप्यतिरिच्यमान इत्यत्र विरिच्यमानः विशेषेण सृष्टिं कुर्वन् अत एव अतिरिच्यमानः अतिशयं प्राप्नुवन् ब्रह्मादिरपि । बाणैर्वाग्बाणैर्नाभिविध्येत सः कविरिति विद्यात् ॥ ९ ॥

[ नील० ] त्वत्पुत्रा रूक्षवाचस्त्वमपि तत्संगात्तादृशो भविष्यसीत्याह—यदीति । रङ्गस्य नीलादेर्वशं नीलताम् ॥ १० ॥ अतिप्रोक्तोऽपि न वदेत् वादयेद्वा । अनाहतो नैव प्रतिहन्यात् आहतोऽपि पापकं हन्तारं यदि हन्तुं नेच्छेत् स देवानामपि श्रेष्ठो भवतीत्यर्थः ॥ ११ ॥ अव्याहृतं मौनं ततोऽपि श्रेयः सत्यवचनं सत्यमपि प्रियं चेत्ततोऽपि श्रेयः तदपि धर्मादनपेतं चेत् श्रेष्ठतममित्यर्थः ॥ १२ ॥ तस्मात्सत्संग एव त्वयाऽपि कर्तव्य इत्याशयेनाह—यादृशैरिति ॥ १३ ॥ यतो यत इति । यथा स्वप्ने बाह्याद्विषयान्निवृत्तस्तज्जेन दुःखेन मुच्यते एवं जाग्रति स्वाप्नविषयजेन सुषुप्तौ समाधौ च सर्वतो निवृत्तो दुःखलेशमपि न भजतेऽतो निवृत्तिरेव त्वया कार्येति भावः ॥ १४ ॥ अस्यामवस्थायां पुरुषस्य न किंचिद्दुःखादिकमस्तीत्याह—न जीयते चेति । नानुजिगीषते इति पाठे ना पुरुषः ॥ १५ ॥ भावं कल्याणम् अभावे अकल्याणे ॥१६॥ अनर्थकं मिथ्या न सान्त्वयति ॥ १७ ॥

[ अर्जु० ] रङ्गवशं रागम् ॥ १० ॥ न प्रतिहन्यात् स्वयं, न घातयेत् परेण । आगताय ॥ ११ ॥ अव्याहृतं मौनम् । व्याहृतात् सत्यासत्याभ्यामनिरूपितात् । सत्यं व्याहृतं द्वितीयं द्विगुणम् अव्याहृतादिति संबन्धनीयम् । तत् सत्यं प्रियरूपं द्विविशेषणं व्याहृतं, तृतीयं प्रियाप्रियसाधारणत्वात् सत्यादिति योजनीयम् । तत् सत्यं धर्मरूपं त्रिविशेषणं व्याहृतं, चतुर्गुणं धर्माधर्मसाधारणात् प्रियात् ॥ १२ ॥ संनिविशते सहवासं करोति संविवदत इत्यसम्यक् । यादृगिच्छेच्च भवितुम् तादृक् तन्मयचित्तो भवेदिति ॥ १३ ॥ यतो विषयाद् विमुच्यते तत्कृतदुःखैरणु सूक्ष्मम् ॥ १४ ॥ उपजिगीषते द्रोहरहितत्वात् ॥ १५ ॥ भावमुदयम् ॥ १६ ॥ सान्त्वयति साम्ना वैरं निवर्तयति राद्धापराद्धे सेवापराधौ ॥ १७ ॥

[ सर्व० ] रङ्गवशं नील्यादिरागवशम्, तद्रूपानुकारित्वात् ॥ १० ॥ न प्रतिहन्यात् स्वयं, न प्रतिघातयेत्परेण ॥ ११ ॥ व्याहृतादनिर्धारितसत्यासत्यभावात् । व्याहृतं सत्यं तद्द्वितीयं श्रेयः ॥ १२ ॥ संनिविशते संवसति ॥ १३ ॥ यतो विषयात् निवर्तते न तत्र रज्यते । विमुच्यते इत्येतद्व्याख्यानं न वेत्ति दुःखमण्वपीति ॥१४॥ न जीयते कामादिभिः । अन्यान् प्राणिनः ॥ १५ ॥ सान्त्वयति प्रियं वदति । नानर्थकं न मिथ्या राद्धमाराधनम्, अपराद्धमपराधः ॥ १७ ॥

[लक्षा०] यो नाहतः प्रतिहन्यान्नेत्यत्र यो ना पुरुषः ॥ ११ ॥ सत्यं वदेद्व्याहृतमित्यत्र सत्यं व्याहृतं वदेत् तद्द्वितीयं श्रेयः इति संबन्धः । एवमुत्तरत्रापि द्रष्टव्यम् ॥ १२ ॥ निवर्तितात्तु सर्वत इत्यत्र निवर्तितात् निवर्तनात् ॥ १४ ॥ भावं भद्रम् ॥ १६ ॥

---

११ ख. म. यो हन्तुकामस्य न पापमिच्छति । १७ ख. म. रन्ध्रं परस्य नो वाति ।

दुःशासनस्तूपहतोऽभिशस्तो
नावर्तते मन्युवशात्कृतघ्नः ।
न कस्यचिन्मित्रमथो दुरात्मा-
कलाश्चैता अधमस्येह पुंसः ॥ १८ ॥
न श्रद्दधाति कल्याणं परेभ्योऽप्यात्मशङ्कितः ।
निराकरोति मित्राणि यो वै सोऽधमपूरुषः ॥१९॥
उत्तमानेव सेवेत प्राप्तकाले तु मध्यमान् ।
अधमाँस्तु न सेवेत य इच्छेद्भूतिमात्मनः ॥ २० ॥
प्राप्नोति वै वित्तमसद्बलेन
नित्योत्थानात्प्रज्ञया पौरुषेण ।
न त्वेव सम्यग्लभते प्रशंसां
न वृत्तमाप्नोति महाकुलानाम् ॥ २१ ॥

धृतराष्ट्र उवाच—

महाकुलेभ्यः स्पृहयन्ति देवा
धर्मार्थनित्याश्च बहुश्रुताश्च ।
पृच्छामि त्वां विदुर प्रश्नमेतं
भवन्ति वै कानि महाकुलानि ॥ २२ ॥

विदुर उवाच—

तपो दमो ब्रह्मवित्तं वितानाः
पुण्या विवाहाः सततान्नदानम् ।
येष्वेवैते सप्त गुणा वसन्ति
सम्यग्वृत्तास्तानि महाकुलानि ॥ २३ ॥
येषां न वृत्तं व्यथते न योनि-
श्चित्तप्रसादेन चरन्ति धर्मम् ।
ये कीर्तिमिच्छन्ति कुले विशिष्टां
त्यक्तानृतास्तानि महाकुलानि ॥ २४ ॥
अनिज्यया कुविवाहैर्वेदस्योत्सादनेन च ।
कुलान्यकुलतां यान्ति धर्मस्यातिक्रमेण च ॥ २५ ॥
देवद्रव्यविनाशेन ब्रह्मस्वहरणेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥२६॥
ब्राह्मणानां परिभवात्परीवादाच्च भारत ।
कुलान्यकुलतां यान्ति न्यासापहरणेन च ॥ २७ ॥

---

[ नील० ] उपहतो गदया घोषयात्रायां गन्धर्वैस्ताडितः । अभिशस्तः अभितः शस्त्रैर्विदीर्णः । मन्युवशात् क्रोधवशात् नावर्तते न ऋजुर्भवति यतः कृतघ्नः पाण्डवैस्तदा मोचितोऽपि तदुपकारं हन्त्येव, एताः कलाः चित्तस्य वृत्तयः अधमस्यैव ॥ १८ ॥ अधमलक्षणमाह—नेति । परेभ्यः गुरुभ्यः आत्मन्येव शङ्कितः विश्वासहीनः ॥ १९ ॥ महाकुलेभ्य इति स्पृहेरीप्सित इति कर्मणिचतुर्थी ॥ २२ ॥ तपः कृच्छ्रचान्द्रायणादि दमः इन्द्रियजयः ब्रह्मवित्तं ब्राह्मणस्य धनं वेदाध्ययनं वेदाध्यापनं च वितानाः यज्ञकर्माणि सम्यग्वृत्ताश्च ये तानि 'क्लीबत्वं विधेयापेक्षया' महाकुलानि विद्धि ॥ २३ ॥ न व्यथते न चलति न योनिः पित्रादयोऽपि येषां दोषेण न व्यथन्ते किंतु गुणैरेव तुष्यन्ति ॥२४॥ परीभवात्ताडनात् परीवादात् निन्दातः ॥ २७ ॥

[ अर्जु० ] नावर्तते न निवर्तते । मन्युवशाद्धेतोः परापकारादिति शेषः । कला आरम्भकावयवा विद्या वा ॥ १८ ॥ परेभ्यः हेतुभ्यः कल्याणं स्वस्य शुभं दृश्यमानमपि न श्रद्दधाति । आत्मशङ्कितः यथाऽहं परोपकारं न करोमि तथा अन्योऽपीति शङ्कितः ॥ १९ ॥ असतां बलेन कपटादिना उत्थानादुद्यमात् पौरुषेण पुरुषकर्मणा सेवादिना ॥ २१ ॥ वितानाः यज्ञाः । सम्यग्वृत्ता सम्यगाचाराः कार्याणि येषां गुणानाम् ॥ २३ ॥ व्यथते चलति वृत्तिप्रसादेन विजातीयवृत्त्यनभिभवेन । ये पुरुषाः कुले कीर्त्तिमिच्छन्ति ते एव पुत्रपौत्रादिरूपेण संतन्यमाना महाकुलानि ॥ २४ ॥ अविवाहैः अविधिना दारपरिग्रहैः उत्सादनेन स्वधर्मत्यागेन ॥ २५ ॥ परिभवात् ताडनादिरूपात् ॥ २७ ॥

[ सर्व० ] मन्योः क्रोधस्य वशात् वश्यतायाः नावर्तते न निवर्तते, मन्युवश एव भवति । अथो अपि तु दुरात्मैव भवति । एताः दुःशासनस्था अधमस्य कलाः विद्याः शिक्षाविषय इति यावत् ॥ १८ ॥ कल्याणं पुण्यं परेभ्यः परेषां आत्मनोऽसद्वृत्तदर्शनेन तेषु शङ्कितः ॥ १९ ॥ प्राप्ते काले अयोग्ये काले ॥ २० ॥ असद्बलेन असता द्यूतादिबलेन । प्रज्ञया अर्थमात्रपरया ॥ २१ ॥ वितानाः यज्ञाः । सम्यग्वृत्ताः पुरुषाः तानि महाकुलानीत्यर्थः । अत एवाग्रेऽपि ये त्यक्तानृतास्तानि महाकुलानि ॥ २३ ॥ न व्यथते न चलति । प्रसादोऽनाविलत्वं मलासंबन्ध इति यावत् । तेन चरन्ति प्राप्नुवन्ति धर्मम् ॥ २४ ॥ कुविवाहैः अविवाहैः ॥ २५ ॥ परिभवाच्छातनात् । परीवादान्निन्दातः ॥ २७ ॥

[ लक्ष्मा० ] परेभ्योऽप्यात्मशङ्कित इत्यत्र आत्मशङ्कितः आत्मनि शङ्कितः किं कुर्यादिति शङ्कावान् ॥ १९ ॥ महाकुलानाम् अतिशयेन कुलरहितानां(?) वृत्तं नाप्नोति

---

१८ ख म. दुःशासनस्तूपहतान्तरात्मा । २० ख. म. इच्छेच्छ्रेय आत्मनः । २३ ख. म. येष्वेतेवै । २५ ख म. अनिज्ययाऽविवाहैश्च । ख. म. ब्राह्मणाति क्रमेण च । २६ ख. म. नास्त्येवायं श्लोकः ।

कुलानि समुपेतानि गोभिः पुरुषतोऽर्थतः ।
कुलसंख्यां न गच्छन्ति यानि हीनानि वृत्ततः ॥२८॥
वृत्ततस्त्वविहीनानि कुलान्यल्पधनान्यपि ।
कुलसंख्या च गच्छन्ति कर्षन्ति च महद्यशः॥२९॥
वृत्तं यत्नेन संरक्षेद्वित्तमेति च याति च ।
अक्षीणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः ॥ ३० ॥
गोभिः पशुभिरश्वैश्च कृष्या च सुसमृद्धया ।
कुलानि न प्ररोहन्ति यानि हीनानि वृत्ततः ॥ ३१ ॥
मा नः कुले वैरकृत्कश्चिदस्तु
राजाऽमात्यो मा परस्वापहारी ।
मित्रद्रोही नैकृतिकोऽनृती वा
पूर्वाशी वा पितृदेवातिथिभ्यः ॥ ३२ ॥
यश्च नो ब्राह्मणान्हन्याद्यश्च नो ब्राह्मणान् द्विषेत् ।
न नः स समितिं गच्छेद्यश्च नो निर्वपेत्कृषिम् ॥ ३३ ॥
तृणानि भूमिरुदकं वाक् चतुर्थी च सूनृता ।
सतामेतानि गेहेषु नोच्छिद्यन्ते कदाचन ॥ ३४ ॥
श्रद्धया परया राजन्नुपनीतानि सत्कृतिम् ।
प्रवृत्तानि महाप्राज्ञ धर्मिणां पुण्यकर्मिणाम् ॥ ३५ ॥
सूक्ष्मोऽपि भारं नृपते स्यन्दनो वै
शक्तो वोढुं न तथाऽन्ये महीजाः ।
एवं युक्ता भारसहा भवन्ति
महाकुलीना न तथाऽन्ये मनुष्याः ॥ ३६ ॥
न तन्मित्रं यस्य कोपाद्बिभेति
यद्वा मित्रं शङ्कितेनोपचर्यम् ।
यस्मिन्मित्रे पितरीवाश्वसीत
तद्वै मित्रं संगतानीतराणि ॥ ३७ ॥
यः कश्चिदप्यसंबद्धो मित्रभावेन वर्तते ।
स एव बन्धुस्तन्मित्रं सा गतिस्तत्परायणम् ॥ ३८ ॥
चलचित्तस्य वै पुंसो वृद्धाननुपसेवतः ।
पारिप्लवमतेर्नित्यमध्रुवो मित्रसंग्रहः ॥ ३९ ॥

---

॥ २१ ॥ न्यासापहरणेन चेत्यत्र न्यस्यत इति न्यासो न्यस्तं द्रव्यम् ॥ २७ ॥

[ नील० ] गोभिर्वाग्भिर्विद्ययेत्यर्थः पुरुषतः सत्पुरुषैः अर्थतः धनैश्च कुलानि कुलसंख्यां कुलेषु गणनाम् ॥२८॥ वृत्ततः धर्मेण । कर्षन्ति आहरन्ति ॥ २९ ॥ गोभिर्विद्याभिः ॥ ३१ ॥ नैकृतिकः कपटी वैरकृदादयः कुलघ्ना इत्यर्थः ॥ ३२ ॥ प्रसङ्गाद्वृत्तलक्षणमाह यश्चेति । न इति अस्मच्छब्दस्यादेशचतुष्टयं न नः स इति पाठे । न तस्येति पाठे तु त्रयमेव । निर्वपेत् कुर्यात् । पितॄनिति पाठे नो निषेधार्थः ॥ ३३ ॥ नोच्छिद्यन्ते किंत्वतिथीनुपगच्छन्त्येव ॥ ३४ ॥ सत्कृतिं सत्कारं कर्तुं प्रवृत्तानि तृणादीनि ॥ ३५ ॥ युक्ताः स्यन्दनवदविकलाः ॥ ३६ ॥ प्रकृतमाह—न तदिति । तव तु शङ्काकुलस्य मय्यपि मित्रत्वबुद्धिर्नास्तीति भावः। संगतानि संबन्धमात्राणि ॥ ३७ ॥ मूर्खस्य तु दुर्योधनादेः कुलशीलादिभिरसंबद्धोऽपि कर्णादिर्मित्रभावेनास्तीत्याशयेनाह—य इति । बन्धुः संबन्धी मित्रम् उपकारकृत् ॥ ३८ ॥ पारिप्लवमतेः चलबुद्धेः ॥ ३९ ॥

[ अर्जु० ] पुरुषतोऽश्वत इति तृतीयाबहुवचने तसिल् ॥२८॥ वृत्तितो वृत्तिभक्तेने (?) ॥ ३० ॥ निर्वपेत् कुर्यात् ॥ ३३ ॥ तृणानीत्यादि धनाभावे एभिरर्थैः प्रीणनीयः एषामप्यभावे सूनृता वाक् चतुर्थी चतुर्णां पूरणी ॥ ३४ ॥ सूक्ष्मोऽपि स्यन्दनो भारं वोढुं शक्त इत्यन्वयः । महीजा वृक्षाः एवं युक्ता वृत्तेनेति शेषः ॥ ३६ ॥ यच्छङ्कितेनोपचर्यं तदपि न मित्रमित्यन्वयः ॥ ३७ ॥ परिप्लवमतेरन्यत्रान्यथामन्यमानस्य ॥ ३९ ॥

[ सर्व० ] पुरुषतोऽर्थतः पुरुषार्थैः ॥ २८ ॥ समितिं मेलकम् । निर्वपेत् क्षिपेत् । कृषिं कृष्यर्थबीजानि ॥ ३३ ॥ धर्मिणां प्रवृत्तानि प्रवृत्तयः आतिथ्यादीनि परया श्रद्धया उपेतानि तथा परां सत्कृतिम् उपनीतानि परमसत्कारसहितानि भवन्ति ॥ ३५ ॥ युक्ता उद्युक्ताः ॥ ३६ ॥ सङ्गतानि संबन्धमात्राणि ॥ ३७ ॥ पारिप्लवमतेः चलबुद्धेः मित्रेण संग्रहः संभवः (?) ॥ ३९ ॥

[ लक्षा० ] कुलानि समवेतानीत्यत्र गोभिः प्रियवचनैः पुरुषतः पुरुषसत्त्वभावात् । अर्थतः परोपकारकरणात् समवेतानि सदायुक्तानि कुलानि भवन्ति । वृत्ततः हीनानि कुलसंख्यां कुलेषु संख्यां न गच्छन्ति ॥ २८ ॥ [ राज्ञावध्य इत्यत्र राज्ञा परराष्ट्राधिपेन । ] यश्च नो ब्राह्मणं हन्यादित्यत्र नः अस्माकं मध्ये इत्युत्तरत्रापि । समितिं सभाम् ॥ ३३ ॥ तृणानि भूमिरुदकमित्यत्र तृणानि दर्भाद्यासनतृणानि भूमिः उपवेशनाय स्थलमुदकं पानाय उदकम् ॥ ३४ ॥ श्रद्धया परयेत्यत्र पुण्यकर्मिणां धर्मिणां प्रवृत्तानि प्रकृष्टानि वृत्तानि वर्तनानि परया श्रद्धया सत्कृतिमतिथ्यभ्यागतादीनां पूजामुपनीतानि उपपन्नतया नीतानि येभ्यस्तानि । भवन्ति इति योग्यक्रियया संबन्धः ॥ ३५ ॥ महीजा वृक्षाः । एवंयुक्ता

---

२८ ख. म. पुरुषोऽश्वतः । ३०–३१ ख. म. न स्तः । ३२ ख. यः परस्वाप° ।

चलचित्तमनात्मानमिन्द्रियाणां वशानुगम् ।
अर्थाः समभिवर्तन्ते हंसाः शुष्कं सरो यथा ॥४०॥
अकस्मादेव कुप्यन्ति प्रसीदन्त्यनिमित्ततः ।
शीलमेतदसाधूनामभ्रं पारिप्लवं यथा ॥ ४१ ॥
सत्कृताश्च कृतार्थाश्च मित्राणां न भवन्ति ये ।
तान्मृतानपि क्रव्यादाः कृतघ्नान्नोपभुञ्जते ॥ ४२ ॥
अर्चयेदेव मित्राणि सति वाऽसति वा धने ।
नानर्थयन्प्रजानाति मित्राणां सारफल्गुताम् ॥४३॥
संतापाद्भ्रश्यते रूपं संतापाद्भ्रश्यते बलम् ।
संतापाद्भ्रश्यते ज्ञानं संतापाद्व्याधिमृच्छति ॥ ४४ ॥
अनवाप्यं च शोकेन शरीरं चोपतप्यते ।
अमित्राश्च प्रहृष्यन्ति मा स्म शोके मनः कृथाः ४५
पुनर्नरो म्रियते जायते च
पुनर्नरो हीयते वर्धते च ।
पुनर्नरो याचति याच्यते च
पुनर्नरः शोचति शोच्यते च ॥ ४६ ॥
सुखं च दुःखं च भवाभवौ च
लाभालाभौ मरणं जीवितं च ।
पर्यायशः सर्वमेते स्पृशन्ति
तस्माद्धीरो न च हृष्येन्न शोचेत् ॥ ४७ ॥
चलानि हीमानि षडिन्द्रियाणि
तेषां यद्यद्वर्धते यत्र यत्र ।
ततस्ततः स्रवते बुद्धिरस्य
छिद्रोदकुम्भादिव नित्यमम्भः ॥ ४८ ॥

**धृतराष्ट्र उवाच—**

तनुरुद्धः शिखी राजा मिथ्योपचरितो मया ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥४९॥
नित्योद्विग्नमिदं सर्वं नित्योद्विग्नमिदं मनः ।
यत्तत्पदमनुद्विग्नं तन्मे वद महामते ॥ ५० ॥

**विदुर उवाच—**

नान्यत्र विद्यातपसोर्नान्यत्रेन्द्रियनिग्रहात् ।
नान्यत्र लोभसंत्यागाच्छान्तिं पश्यामि तेऽनघ ५१

---

इत्यत्र युक्ताः अन्योन्यं स्नेहेन युक्ताः ॥ ३६ ॥ [ यद्वै मित्रमित्यत्र कोपने शक्यं नो ] ॥ ३७ ॥ पारिप्लवमतेः 'चञ्चलं तरलं चैव पारिप्लवपरिप्लवे' इत्यभिधानात् चञ्चलबुद्धेः ॥ ३९ ॥

[ नील० ] समभिवर्तन्ते सम्यगभित एव वर्तन्ते न तु स्पृशन्ति । समतिवर्तन्त इत्यपि पठन्ति ॥ ४० ॥ अभ्रं मेघः ॥ ४१ ॥ मित्राणां हितायेति शेषः ॥ ४२ ॥ अनर्थयन्प्रार्थनाशून्यः । लुब्धस्तु मित्राणां सारफल्गुत्वे जानातीत्यतः स कार्यार्थी वणिक्तुल्यो न तु मित्रम् ॥ ४३ ॥ संतापात् इष्टवियोगात् शोकात् ॥ ४४ ॥ अनवाप्यं न प्राप्यं शोकेन शोकमात्रेण इष्टमिति शेषः ॥ ४५ ॥ दुःखादेरागमापायित्वादपि न शोकादिकं कर्तव्यमित्याह—पुनरिति ॥ ४६ ॥ सर्वे पुरुषमात्रम् ॥ ४७ ॥ षट् मनसा सह श्रोत्रादीनि पञ्च । स्रवते स्वार्थाद् भ्रश्यति ततो विषयसेवनात् ॥ ४८ ॥ तनुः शरीरमभिव्यक्तिस्थानं काष्ठं तत्र रुद्धोऽनभिव्यक्तः शिखी अग्निस्तथाऽयं राजा धर्मेण रुद्धः तनुना सूक्ष्मेण धर्मेण वा रुद्धः ॥ ४९ ॥ उद्विग्नं भीतं चलितं च अनुद्विग्नमभयमचलं च पदं पदनीयं प्राप्यं ब्रह्म ॥ ५० ॥ तत्प्राप्तिसाधनान्येवाह—नान्यत्रेति । विद्याऽध्ययनजा तपः स्वधर्माचरणं त्वं तु लोभी तत्पदं प्राप्तुमनर्ह इति भावः । शान्तिं कल्याणम् ॥ ५१ ॥

[ अर्जु० ] अभ्रं मेघः पारिप्लवं पवनवशत्वात् ॥ ४१ ॥ पुरुषदशाया अव्यवस्थामाह—पुनर्नर इति ॥ ४६ ॥ तनुस्तपसा कृशः उच्चः स्वभावादुदारः शिखी यज्ञेषु कृतचूडः राजा युधिष्ठिरः मिथ्या छलेन द्यूतेनोपचरितः यद्वा शिखी वह्निः स च तनुरुच्चो दह्यप्राप्तौ प्रबलः, तद्वत् नान्तं नशेषं निःशेषं हन्तेत्यर्थः ॥ ४९ ॥ उद्विग्नं भीतं सत्वं बुद्धिः कार्ये कारणोपचारात् ॥ ५० ॥ शान्तिं निर्वाणम् ॥ ५१ ॥

[ सर्व० ] अनात्मानमवशीकृतात्मानम् ॥ ४० ॥ अभ्रमेव पारिप्लवं वातेन चाल्यमानं तस्येव कोपप्रसादौ गर्जितागर्जिते ॥४१॥ कृतोऽर्थः प्रयोजनं येषां कृतार्थाः ॥४२॥ संतापः शोकः नष्टपरिदेवनरूपः ॥ ४४ ॥ शोकेनापि यन्नष्टं तदनवाप्यमप्राप्यमेवेत्यर्थः ॥ ४५ ॥ तेषां मध्ये यद्वर्धते यत्र यत्र येषु विषयेषु तत्र स्रवते हीना बुद्धिर्भवति ॥ ४८ ॥ तनुः कृशो दीक्षोपवासादिना धर्मपरत्वात् । शिखी द्युतिमत्त्वाद्वह्निरेव । मिथ्या छद्मना ॥४९॥ उद्विग्नं भीतम् इदं मम सत्वम् आत्मा ॥ ५० ॥ विद्या आत्मज्ञानम् । लघु शीघ्रम् ॥ ५१ ॥

[ लक्षा० ] सत्कृताश्च कृतार्थाः इत्यत्र कृतार्थास्तृप्ताः अथवा कृतः अर्थः प्रतिप्रयोजनं यैस्ते कृतार्थाः ॥ ४२ ॥ नानर्थयन्विजानातीत्यत्र अनर्थयन् द्रव्यस्याप्रदाने अनर्थे

---

४३ ख. म. अर्थयेदेव । ४९ ख. म. तनुरुच्चः शिखी । ५० ख. म. नित्योद्विग्नमिदं सत्त्वं ।

बुद्ध्या भयं प्रणुदति तपसा विन्दते महत् ।
गुरुशुश्रूषया ज्ञानं शान्तिं योगेन विन्दति ॥ ५२ ॥
अनाश्रिता दानपुण्यं वेदपुण्यमनाश्रिताः ।
रागद्वेषविनिर्मुक्ता विचरन्तीह मोक्षिणः ॥ ५३ ॥
स्वधीतस्य सुयुद्धस्य सुकृतस्य च कर्मणः ।
तपसश्च सुतप्तस्य तस्यान्ते सुखमेधते ॥ ५४ ॥
स्वास्तीर्णानि शयनानि प्रपन्ना
न वै भिन्ना जातु निद्रां लभन्ते ॥
न स्त्रीषु राजन् रतिमाप्नुवन्ति ।
न मागधैः स्तूयमाना न सूतैः ॥ ५५ ॥
न वै भिन्ना जातु चरन्ति धर्मं
न वै सुखं प्राप्नुवन्तीह भिन्नाः ।
न वै भिन्ना गौरवं प्राप्नुवन्ति ।
न वै भिन्नाः प्रशमं रोचयन्ति ॥ ५६ ॥
न वै तेषां स्वदते पथ्यमुक्तं
योगक्षेमं कल्पते नैव तेषाम् ।
भिन्नानां वै मनुजेन्द्र परायणं
न विद्यते किंचिदन्यद्विनाशात् ॥ ५७ ॥
संपन्नं गोषु संभाव्यं संभाव्यं ब्राह्मणे तपः ।
संभाव्यं चापलं स्त्रीषु संभाव्यं ज्ञातितो भयम् ५८॥
तन्तवोऽऽप्यायिता नित्यं तनवो बहुलाः समाः ॥
बहून्बहुत्वादायासान्सहन्तीत्युपमा सताम् ॥ ५९ ॥
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ ६० ॥

---

कुर्वन् ॥ ४३ ॥ अनवाप्यं च शोकेनेत्यत्र शोकेन प्रयो· जनमनवाप्यमिति योग्यपदाध्याहारेण योजना ॥ ४५ ॥ तनुरुच्चशिखीत्यत्र तनुः अल्पकः मया मिथ्यावृत्त्याऽराजा राजेत्युपचरितः दुर्योधनः ॥ ४९ ॥

[ नील० ] बुद्ध्या आत्मज्ञानेन भयं संसारम् । विन्दते महत् सद्गुरुशास्त्रादिकं लभते । ततो गुरुशुश्रूषया ज्ञानं ग्रन्थजम् । योगेन सर्वचित्तवृत्तिनिरोधेन शान्तिम् ॥ ५२ ॥ शान्तिप्राप्तौ सर्वं तुच्छमित्याह—अनाश्रिता इति । दानजं पुण्यं तत्फलं स्वर्गादीत्यर्थः । अनाश्रिताः नाश्रयन्ते तुच्छत्वात्तस्य ॥ ५३ ॥ तस्यान्ते स्वधीतादीनां कर्मणामन्ते नाशे सुखं परमानन्दं विन्दते । जगत्कारण-दर्शनादेव सकलकर्मनाशे सति अकारणं शुद्धं प्राप्नोतीत्यर्थः । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे । परो हिरण्यगर्भोऽवरो नीचो यस्मात्कारणात्तस्मिन् दृष्टे सति ॥ ५४ ॥ तदन्यद्दुःखरूपमेवेत्याह स्वास्तीर्णानीति । भिन्नाः भेददृष्टिमन्तः “ द्वितीयाद्वै भयं भवति ” इति श्रुतेरद्वैततत्त्वात् प्रच्युता इत्यर्थः । पक्षे भिन्नाः ज्ञातिभेद-वन्तः ॥ ५५ ॥ प्रशमम् अक्रोधम् ॥ ५६ ॥ योगः अलब्धलाभः क्षेमं लब्धपरिपालनं तदुभयं न कल्पते न युज्यते ॥ ५७ ॥ तदेवाह—संपन्नमिति । संपन्नं क्षीरादिसंपत्तिः ॥ ५८ ॥ तन्तवः कुलतन्तवः पाण्डवाः आप्यायिताः त्वयैव संवर्द्धिताः पूर्वरूपमार्षम् । तनवः सूक्ष्माः बाला इत्यर्थः । बहुलाः समाः बहून्संवत्सरान् । बहुत्वात् बन्धूनामन्येषां च ऋषीणां बहुत्वात् वने आयासान्सहन्ति अतः सताम् उपमा भवन्ति पाण्डवा इव सन्त इति लोके वदन्ति । अतः सत्तमाः पाण्डवास्त्वया न वञ्चनीया इति भावः ॥५९॥ अन्ये तु ज्ञातयो न पाण्डवतुल्या इत्याह—धूमायन्ते इति । व्यपेतानि पृथग्भूतानि ॥ ६० ॥

[ अर्जु० ] भयं मरणभयम् । महत् ब्रह्म, त्यागेन संन्यासेन ॥ ५२ ॥ विचरन्ति जानन्ति, गत्यर्थानां ज्ञानार्थत्वात् ॥ ५३ ॥ भिन्नाः संहत्यादेः ते हि निद्रादिकं न प्राप्नुवन्ति ॥ ५५ ॥ योगक्षेमं योगोऽलब्धलाभः क्षेमो लब्धरक्षा न कल्पते न समर्थं भवति एकाकिनि परिभवसंभवात् ॥ ५७ ॥ संपन्नं संपत्तिः ॥ ५८ ॥ तनवः सूक्ष्माः, आयता दीर्घाः, बहुलाः घनाः, समा एकमानाः । आयासान् तन्तुवायघातादीन् सहन्ति प्रशंसायां तात्पर्यम् ॥ ५९ ॥ धूमायन्ते न ज्वलन्ति व्यपेतानि अमिलितानि उल्मुकानि तृणाद्युल्काः ॥ ६० ॥

[ सर्व० ] बुद्ध्या आत्मबुद्ध्या । भयं दुःखप्रतिसंधानजम् । महत् ब्रह्म तच्चात्मज्ञानं गुरुशुश्रूषया । त्यागेन विषयाणां, शान्तिं दोषहानिम् ॥ ५२ ॥ वेदपुण्यं यज्ञादिवेदोक्तकर्मजं पुण्यम् ॥ ५३ ॥ अधीतादीनां फलं सुखं तस्य रागद्वेषमोक्षस्यान्ते लभन्ते ॥५४॥ भिन्ना ज्ञातिभेदवन्तः विघटितज्ञातितया निद्रां न लभन्ते इति । अत्रापि निद्राभङ्गादिकं ज्ञातिभेदजमित्यर्थः । प्रशमं क्रोधाभावं, सदा क्रुद्धा भवन्तीत्यर्थः ॥ ५६ ॥ योगोऽलब्धलाभो, लब्धपरिरक्षणं क्षेमम्, उत्तमं योगक्षेमं न कल्पते नोपपद्यते ॥ ५७ ॥ एतदेव दृष्टान्तेन दर्शयति—संभाव्यमिति । सपन्नं संपत्तिः क्षीरादेः ॥ ५८ ॥ तनवः कृशाः आयता दीर्घाः तनोर्दैर्घ्यं शीघ्रच्छेदहेतुरित्याशयः बहुलाः समाः बहुलान्वर्षान् । सताम् उपमा । सन्त एतयोपमया व्यवहरन्तीत्यर्थः ॥ ५९ ॥

[लक्षा०] न वै भिन्ना इत्यत्र भिन्नाः बुद्धिभेदं प्राप्ताः ॥ ५४ ॥ संभाव्यं गोषु संपन्नमित्यत्र संपन्नं क्षीरं गोषु संभाव्यम ॥ ५८ ॥

ब्राह्मणेषु च ये शूराः स्त्रीषु ज्ञातिषु गोषु च ।
वृन्तादिव फलं पक्वं धृतराष्ट्र पतन्ति ते ॥ ६१ ॥
महानप्येकजो वृक्षो बलवान् सुप्रतिष्ठितः ।
प्रसह्य एव वातेन सस्कन्धो मर्दितुं क्षणात् ॥ ६२ ॥
अथ ये सहिता वृक्षाः संघशः सुप्रतिष्ठिताः ।
ते हि शीघ्रतमान् वातान् सहन्तेऽन्योन्यसंश्रयात् ॥ ६३ ॥
एवं मनुष्यमप्येकं गुणैरपि समन्वितम् ।
शक्यं द्विषन्तो मन्यन्ते वायुर्द्रुममिवैकजम् ॥ ६४ ॥
अन्योन्यसमुपष्टम्भादन्योन्यापाश्रयेण च ।
ज्ञातयः संप्रवर्द्धन्ते सरसीवोत्पलान्युत ॥ ६५ ॥
अवध्या ब्राह्मणा गावो ज्ञातयः शिशवः स्त्रियः ।
येषां चान्नानि भुञ्जीत ये च स्युः शरणागताः ॥ ६६ ॥
न मनुष्ये गुणः कश्चिद्राजन्सधनतामृते ।
अनातुरत्वाद्भद्रं ते मृतकल्पा हि रोगिणः ॥ ६७ ॥
अव्याधिजं कटुकं शीर्षरोगि
पापानुबन्धं परुषं तीक्ष्णमुष्णम् ।
सतां पेयं यन्न पिबन्त्यसन्तो
मन्युं महाराज पिब प्रशाम्य ॥ ६८ ॥
रोगार्दिता न फलान्याद्रियन्ते
न वै लभन्ते विषयेषु तत्त्वम् ।
दुःखोपेता रोगिणो नित्यमेव
न बुध्यन्ते धनभोगान्न सौख्यम् ॥ ६९ ॥
पुरा ह्युक्तं नाकरोस्त्वं वचो मे
द्यूते जितां द्रौपदीं प्रेक्ष्य राजन् ।
दुर्योधनं वारयेत्यक्षवत्यां
कितवत्वं पण्डिता वर्जयन्ति ॥ ७० ॥
न तद्बलं यन्मृदुना विरुध्यते
सूक्ष्मो धर्मस्तरसा सेवितव्यः ।
प्रध्वंसिनी क्रूरसमाहिता श्री-
र्मृदुप्रौढा गच्छति पुत्रपौत्रान् ॥ ७१ ॥

[ नील० ] ब्राह्मणादिसाहचर्यात् ज्ञातयोऽप्यत्रायुद्धार्थिन एव ग्राह्याः तादृशांश्च पाण्डवान् जिघांसन्तः पतिष्यन्त्येवेत्यर्थः ॥ ६१ ॥ एकजः एकाकी प्रसह्यः शक्यः ॥ ६२ ॥ सधनताम् ऋते विना, अनातुरत्वात् ऋते च । भद्रं ते अस्तु इत्याशीर्वचनमाप्तत्वसूचनार्थम् ॥ ६७ ॥ धनवाननातुरश्च त्वं गुणी सन् शमं प्राप्नुहीत्याह— अव्याधिजमिति । कटुकम् अरोचकम् , परुषं रूक्षम् , तीक्ष्णं छेदकम् , उष्णं दुःसहस्पर्शम् , पेयं गिलनीयम् , मन्युं दैन्यम् 'मन्युर्दैन्ये क्रतौ क्रुधि' इति कोशात् । प्रशाम्य शान्तिं क्षमां प्राप्नुहि ॥ ६८ ॥ संतापाद्व्याधिमृच्छतीत्युक्तमतस्तौ द्वावपि निन्दति फलानि पुत्रपश्वादीनि । तत्त्वमिष्टानिष्टविवेकं पित्तोपहतरसनत्वात् । एवं सर्वत्र भोगः रूयादिसङ्गः धनादिजं सुखं लब्धमपि न बुध्यन्ते । अतः संतापं जागरादिद्वारा रोगोत्पादकं त्यजेत्यर्थः ॥ ६९ ॥ कितवत्वं द्यूतप्रियत्वम् ॥ ७० ॥ मृदुना सहिष्णुना धर्मः दायविभागाख्यः क्रूरे त्वत्पुत्रे समाहिता मृदुना युधिष्ठिरेण प्रौढा सती ॥ ७१ ॥

[ अर्जु० ] एकज एक एव जातः । एक कर्तृतिच् (?)। प्रसह्यः शक्यः शाखास्कन्धमिति शाखास्कन्धसमाहारत्वात् वृक्षस्य ॥ ६२ ॥ अनातुरत्वात् अरोगित्वादन्यः कश्चिन्न मनुष्ये गुण इत्यर्थः । भद्रं ते कल्याणं तवास्तु ॥ ६७ ॥ अव्याधिजं कटुकम् । अव्याधिजं मोहजत्वात्, कटुकं दाहकत्वात्, शीर्षरोगि शिरोव्यथाहेतुत्वात्, पापानुबन्धं तद्धेतुत्वात्, परुषमसह्यत्वात्, तीक्ष्णं शरीरेन्द्रियभेदकत्वात्, उष्णं तापकरत्वात् । सतां पेयं संहार्यं यन्न पिबन्ति न संहरन्ति असन्तः । किं तदित्याह । मन्युं क्रोधं पिब संहर । प्रशाम्य निवर्तस्व । अपकर्मण इति शेषः ॥ ६८ ॥ आद्रियन्ते न वै इति न वै लभन्ते विषयेषु तत्त्वमिति काकाक्षिन्यायादन्वयः । तत्त्वं विषयतत्त्वम् ॥ ६९ ॥ विरुध्यते मार्दवं बाधत इति भावः । अथवा तद् बलमेव न भवति यन्मृदुनार्जवेन विरुध्यते मिश्रो धर्मः मार्दवक्रौर्याभ्यामिति शेषः । सूक्ष्मो धर्म इति च पाठः । प्रौढाः क्रूराः ॥ ७१ ॥

[ सर्व० ] स्त्रीष्वित्यसमर्थोपलक्षणम् । तेनासमर्थोऽपि न पीडनीयो ज्ञातिरित्यर्थः ॥ ६१ ॥ प्रसह्यः शक्यः ॥६२॥ धनवतामप्यनातुरत्वादन्यो न गुणः । भद्रं त इति कल्याणाशंसनेन संबोधनं गौरवात्, यथा राजसंबोधने जय विज्ञापये इत्यादि ॥ ६७ ॥ कटुकं कटु । कर्म कार्यम् । परुषमधर्माविलम् । तीक्ष्णं छेदकम् । उष्णं दाहकम् ॥ ६८ ॥ विषयेषु रूपादिषु तत्त्वं स्वरूपं, मिथ्याज्ञानानुभवात् । तदेवं तवापि जागरादिना शोकेन रोगो भविष्यति ततः प्रशाम्य शोको न स्यादिति रोगनिन्दातात्पर्यम् ॥ ६९ ॥ मृदुना सहिष्णुना सह यद्विरुद्ध्यते तन्न बलं किंतु यत्र क्रोधस्तेन, मृदवः पाण्डवाः तद्राज्यं न च

इति षट्त्रिंशोऽध्यायः ॥ ३६ ॥

६२ ख. म. प्रसह्यैव हि वातेन शक्यः स्कन्धे प्रमर्दितुम् ।

धार्तराष्ट्राः पाण्डवान्पालयन्तु
पाण्डोः सुतास्तव पुत्रांश्च पान्तु ।
एकारिमित्राः कुरवो ह्येककार्या
जीवन्तु राजन् सुखिनः समृद्धाः ॥ ७२ ॥
मेढीभूतः कौरवाणां त्वमद्य
त्वय्याधीनं कुरुकुलमाजमीढ ।
पार्थान्बालान्वनवासप्रतप्तान्
गोपायस्व स्वं यशस्तात रक्षन् ॥ ७३ ॥
संधत्स्व त्वं कौरवान्पाण्डुपुत्रै-
र्मा तेऽन्तरं रिपवः प्रार्थयन्तु ।
सत्ये स्थितास्ते नरदेव सर्वे
दुर्योधनं स्थापय त्वं नरेन्द्र ॥ ७४ ॥

इति श्रीमहाभारते उद्योगपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

## सप्तत्रिंशोऽध्यायः ३७

विदुरेण धृतराष्ट्रं प्रति नीत्युपदेशः ॥ १ ॥

**विदुर उवाच—**
सप्तदशेमान् राजेन्द्र मनुः स्वायंभुवोऽब्रवीत् ।
वैचित्रवीर्य पुरुषानाकाशं मुष्टिभिर्घ्नतः ॥ १ ॥
दानवेन्द्रस्य च धनुरनाम्यं नमतोऽब्रवीत् ।
अथो मरीचिनः पादानग्राह्यान् गृह्णतस्तथा ॥ २ ॥
यश्चाशिष्यं शास्ति वै यश्च तुष्ये-
द्यश्चातिवेलं भजते द्विषन्तम् ।
स्त्रियश्च यो रक्षति भद्रमश्नुते
यश्चायाच्यं याचते कत्थते वा ॥ ३ ॥
यश्चाभिजातः प्रकरोत्यकार्यं
यश्चाबलो बलिना नित्यवैरी ।
अश्रद्दधानाय च योऽब्रवीति
यश्चाकाम्यं कामयते नरेन्द्र ॥ ४ ॥

बलेन त्वया प्राप्तमित्यर्थः । मिश्रो धर्ममिश्रोऽधर्मः सेवितव्यो नाधर्ममात्रम् । क्रूरो हिंसामात्ररुचिः । मृदुप्रौढा मृदुपूर्वं प्रौढा तीक्ष्णा ॥ ७१ ॥

[ लक्षा० ] सतां पेयं संहर्तुं शक्यम् ॥ ६८ ॥ मृदुप्रौढा गच्छतीत्यत्र मृदुभिः प्रकर्षेण ऊढा श्रीः पुत्रपौत्रान् गच्छति ॥ ७१ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-लक्षालंकारे षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[ नील० ] मेढीभूतः स्वयं निर्व्यापारोऽपि परितः संचरमाणानां बलीवर्दानामिव पुत्राणां यथेष्टप्रचारनिरोधकः ॥ ७३ ॥ अन्तरं भेदं, स्थापय युद्धान्निवर्तयस्व ॥ ७४ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[ अर्जु० ] मेढीभूतः अचलस्तम्भीभूतः मर्यादाकरणात् ॥ ७३ ॥ अन्तरं छिद्रं, स्थापय सत्य इत्यनुषज्यते । कौरवान् रक्ष ॥ ७४ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृताया-मुद्योगपर्वणि षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[ सर्व० ] मेढीभूतः व्यापारविरहात् ॥ ७३ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृत-टीकायां षट्त्रिंशोऽध्यायः ॥ ३६ ॥

[ नील० ] सप्तदशेति ॥ १ ॥ दानूनां मेघानां समूहो दानवं तस्मिन् । सुपां सुलुगिति सप्तम्या लुक् डादेशो वा इन्द्रस्य धनुः वर्षासु दृश्यमानम् अनाम्यं धूमज्योतिषोः सन्निपातरूपत्वात् नामयितुमयोग्यं नमतः नामयतः मरीचिनः मरीचिमतः सूर्यचन्द्रादेः । व्रीह्यादित्वान्मत्वर्थीय इनिः पादान् रश्मीन् आकाशहननादिकमकार्यं कुर्वतोऽतिमूढानित्यर्थः ॥ २ ॥ अशिष्यं शासनानर्हं दुर्योधनादिं यः शास्ति । तुष्येत् अल्पलाभेनेति शेषः द्विषन्तं भजते स्वकार्यार्थमिति शेषः । कार्यमेवाह—भद्रमश्नुत इति । शत्रुसेवया स्त्रीरक्षया च यो भद्रमश्नुते तौ द्वौ मूर्खावित्यर्थः । यः कत्थते किंचित्कृत्वा श्लाघते स षष्ठो मूर्खः ॥ ३ ॥ अभिजातः कुलीनः ॥ ४ ॥

[ अर्जु० ] इन्द्रस्य धनुर्मेघस्थम् । मरीचिनः सूर्यस्य ॥ २ ॥ अशिष्यमजिज्ञासुम् । स्त्रियं यो रक्षति अशक्यत्वात् तद्रक्षणस्य, स्वयं रक्षिता हि साध्व्यः । अयाच्यं कृपणं निर्धनं वा ॥ ३ ॥ अकामान् अकाम्यान् समुद्रतरणादीन् ॥ ४ ॥

[ सर्व० ] इन्द्रकार्मुकं रोहितम् । मरीचयः किरणाः तद्वान्सूर्यः, तस्य पादान्रश्मीन् । एतेनाशक्यविषयप्रयत्नवत्ता दर्शिता ॥ २ ॥ अशिष्यं शिष्यलक्षणहीनं कुप्येदतिवेलं,

२ ख. म. तानेवेन्द्रस्य कार्मुकमनाम्यं ।

वध्वाऽवहासं श्वशुरो मन्यते यो
वध्वाऽवसन्नभयो मानकामः ।
परक्षेत्रे निर्वपति यश्च बीजं
स्त्रियं च यः परिवदतेऽतिवेलम् ॥ ५ ॥
यश्चापि लब्ध्वा न स्मरामीति वादी
दत्त्वा च यः कत्थति याच्यमानः ।
यश्चासतः सत्त्वमुदानयीत
एतान्नयन्ति निरयं पाशहस्ताः ॥ ६ ॥
यस्मिन् यथा वर्तते यो मनुष्य-
स्तस्मिँस्तथा वर्तितव्यं स धर्मः ।
मायाचारो मायया वर्तितव्यः
साध्वाचारः साधुना प्रत्युपेयः ॥ ७ ॥
जरा रूपं हरति हि धैर्यमाशा
मृत्युः प्राणान्धर्मचर्यामसूया ।
कामो ह्रियं वृत्तमनार्यसेवा
क्रोधः श्रियं सर्वमेवाभिमानः ॥ ८ ॥

**धृतराष्ट्र उवाच—**

शतायुरुक्तः पुरुषः सर्ववेदेषु वै यदा ।
नाप्नोत्यथ च तत्सर्वमायुः केनेह हेतुना ॥ ९ ॥

**विदुर उवाच—**

अतिमानोऽतिवादश्च तथाऽत्यागो नराधिप ।
क्रोधश्चात्मविधित्सा च मित्रद्रोहश्च तानि षट् ॥ १० ॥
एत एवासयस्तीक्ष्णाः कृन्तन्त्यायूंषि देहिनाम् ।
एतानि मानवान् घ्नन्ति न मृत्युर्भद्रमस्तु ते ॥ ११ ॥
विश्वस्तस्यैति यो दारान् यश्चापि गुरुतल्पगः ।
वृषलीपतिर्द्विजो यश्च पानपश्चैव भारत ॥ १२ ॥
आदेशकृद्वृत्तिहन्ता द्विजानां प्रेषकश्च यः ।
शरणागतहा चैव सर्वे ब्रह्महणः समाः ।
एतैः समेत्य कर्तव्यं प्रायश्चित्तमिति श्रुतिः ॥ १३ ॥

स्वार्थसिद्ध्यर्थमिति शेषः । स्वार्थोऽपि कोऽपि न शक्यः । एवमन्यत्रापि । द्विषन्तं भजते अयाच्यं याचितुमनर्हम् ॥३॥ अकार्यं करोतीत्यादौ स्वार्थसिद्ध्यर्थमिति पूरणीयम्, स्वरूपमात्रस्यैषामशक्यत्वाभावात् । अकामानिच्छतः अकामामिति पाठस्तदा स्त्रियमिति शेषः ॥ ४ ॥

[नील०] श्वशुरः सन् यो वध्वा पुत्रभार्यया सह अवहासं परिहासं तत्पित्रादिभिरिव मन्यते स एकादशः । वध्वा स्नुषया भूतया अवसन्नभयो नष्टभयः वधूपित्रादिभिरापदि त्रातोऽपि तत्रैव मानं कामयते यः स द्वादशो मूर्खः । अन्ये तु वध्वा सह रतिं कुर्वन्नपि अभयो मानकामश्चेति व्याचख्युः तद्विगीतत्वादुपेक्ष्यं परक्षेत्र इत्यनेन संगृहीतं च ॥ ५ ॥ दत्त्वा तीर्थे वाचा दानं कृत्वा गृहे याचकेन याच्यमानः सन् कत्थते दानमकृत्वैव श्लाघते असतो दुष्टस्य सत्त्वं साधुत्वम् असतः मृषार्थस्य सत्त्वं सत्यत्वं वा उपानयीत समर्थयते स सप्तदशो मूर्खः ॥ ६ ॥ यस्मिन्निति साधुषु पाण्डवेषु त्वयाऽपि साधुना भवितव्यमित्याशयः ॥ ७ ॥ जरेति अभिमानं त्यजेति भावः ॥ ८ ॥ अभिमानः सर्वहर इत्युक्तेऽभिमानवतां मत्पुत्राणां यदि स्वल्पमेवायुरस्ति तर्हि त्यक्तेऽप्यभिमाने न जीविष्यन्ति यदि बहु तर्हि सत्यपि तस्मिन्न मरिष्यन्तीत्याशयेनाह—शतायुरिति ॥ ९ ॥ अत्यागः उत्कृष्टोऽपराधश्चौर्यादिर्गरदानादिर्वा । अत्याश इति पाठे बहुभोजित्वम् । आत्मविधित्सेति पोषणार्थस्य धाञः सनि रूपम् । आत्मपोषणेच्छा शिश्नोदरपरायणतेत्यर्थः ॥१०॥ असयः खड्गाः भद्रमस्तु ते एतेषां षण्णां त्यागेन तव पुत्राः शतायुषो भवन्त्वित्यर्थः ॥ ११ ॥ वृषली शूद्रा द्विजस्त्रैवर्णिकः पानपः मद्यपः ॥ १२ ॥ आदेशकृत् ग्रामणीः, प्रेषकः द्विजान् दास्ये नियोजयन्, समेत्य संसृज्य । यदि त्वत्पुत्रा अतिमानादीन्न त्यजन्ति तर्हि तेषां पाण्डववृत्तिहन्तॄणां संगस्त्वया न कार्य इति भावः ॥ १३ ॥

[अर्जु०] वध्वा वधूसंबन्धिनं हास्यं मन्यते न निषेधति, वध्वा वसन् दारव्यवहारं कुर्वन्, परक्षेत्रेषु परदारेषु बीजं शुक्रम्, परिवदति निन्दति ॥ ५ ॥ अनुविधित्सा वैरनिर्यातनेच्छा ॥ १० ॥ विश्वस्तस्य ममायं भार्यां रक्षिष्यतीति प्रतीतस्य । वृषली द्विजस्य प्रथमोढा शूद्रा ॥ १२ ॥ एकदेशमुच्चार्य तच्छेषपाठाङ्गीकारी आदेशकृत् ॥ १३ ॥

[सर्व०] वध्वा सह हासं नर्म मन्यतेऽनुमन्यते तथापि मानकाम इत्याशयः । वध्वा सह वसन् रतिं कुर्वन्नपि मानकामः संमानकामः ॥ ५ ॥ यस्मिन्यस्मिन् यः परस्तस्मिन् ॥ ७ ॥ अतिवादः सर्वानतिक्रम्याभिभूय वादो वचनम् । एवं सर्वानतिक्रम्य मानो निजोत्कर्षप्रत्ययोऽतिमानः । अत्यागो दानसमयेऽप्यदानमतिभ्यादिभ्यः । अत्याश इति पाठे बह्वाशित्वम् । अनुविधित्सा उपकृते प्रत्युपकारेच्छा ॥ १० ॥ तल्पशब्देन शय्यावाचिना भार्योपलक्ष्यते । परिस्रवात्कर्मण्युत्वे(?)॥ १२ ॥

७ ख. म. याचमानम् । ख. म. येचासन्तः सन्तमुपासतीह एतेनुयान्त्यनिलं पाशहस्ताः । १० ज. श्चानुविधित्सा च ।

गृहीतवाक्यो नयविद्वदान्यः
 शेषान्नभोक्ता ह्यविहिंसकश्च ।
नानर्थकृत्याकुलितः कृतज्ञः
 सत्यो मृदुः स्वर्गमुपैति विद्वान् ॥ १४ ॥
सुलभाः पुरुषा राजन्सततं प्रियवादिनः ।
अप्रियस्य तु पथ्यस्य वक्ता श्रोता च दुर्लभः ॥१५॥
यो हि धर्मं समाश्रित्य हित्वा भर्तुः प्रियाप्रिये ।
अप्रियाण्याह पथ्यानि तेन राजा सहायवान् ॥१६॥
त्यजेत्कुलार्थे पुरुषं ग्रामस्यार्थे कुलं त्यजेत् ।
ग्रामं जनपदस्यार्थे आत्मार्थे पृथिवीं त्यजेत् ॥ १७ ॥
आपदर्थे धनं रक्षेद्दारान् रक्षेद्धनैरपि ।
आत्मानं सततं रक्षेद्दारैरपि धनैरपि ॥ १८ ॥
द्यूतमेतत्पुरा कल्पे दृष्टं वैरकरं नृणाम् ।
तस्माद् द्यूतं न सेवेत हास्यार्थमपि बुद्धिमान् ॥ १९ ॥
उक्तं मया द्यूतकालेऽपि राज-
 न्नेदं युक्तं वचनं प्रातिपेय ।
तदौषधं पथ्यमिवातुरस्य
 न रोचते तव वैचित्रवीर्य ॥ २० ॥
काकैरिमाश्चित्रबर्हान्मयूरा-
 न्पराजयेथाः पाण्डवान्धार्तराष्ट्रैः ।
हित्वा सिंहान् क्रोष्टुकान्गूहमानः
 प्राप्ते काले शोचिता त्वं नरेन्द्र ॥ २१ ॥
यस्तात न क्रुध्यति सर्वकालं
 भृत्यस्य भक्तस्य हिते रतस्य ।
तस्मिन्भृत्या भर्तरि विश्वसन्ति
 न चैनमापत्सु परित्यजन्ति ॥ २२ ॥
न भृत्यानां वृत्तिसंरोधनेन
 राज्यं धनं संजिघृक्षेदपूर्वम् ।
त्यजन्ति ह्येनं वञ्चिता वै विरुद्धाः
 स्निग्धा ह्यमात्याः परिहीनभोगाः ॥ २३ ॥
कृत्यानि पूर्वं परिसंख्याय सर्वा-
 ण्यायव्यये चानुरूपां च वृत्तिम् ।
संगृह्णीयादनुरूपान्सहायान्
 सहायसाध्यानि हि दुष्कराणि ॥ २४ ॥
अभिप्रायं यो विदित्वा तु भर्तुः
 सर्वाणि कार्याणि करोत्यतन्द्री ।
वक्ता हितानामनुरक्त आर्यः
 शक्तिज्ञ आत्मेव हि सोऽनुकम्प्यः ॥ २५ ॥
वाक्यं तु यो नाद्रियतेऽनुशिष्टः
 प्रत्याह यश्चापि नियुज्यमानः ।
प्रज्ञाभिमानी प्रतिकूलवादी
 त्याज्यः स तादृक् त्वरयैव भृत्यः ॥ २६ ॥

---

आदेशकृत् मान्यानामपि आदेशकृत् । वृत्तिर्जीवनोपायः । समेत्य संसृज्य ॥ १३ ॥

[ लक्षा० ] वध्वावासं श्वशुरो मन्यते य इत्यत्र वधूर्जाया स्नुषा स्त्रीत्यभिधानात् वध्वा स्नुषया सह वासं नेदं युक्तं च ॥ ५ ॥

[ नील० ] गृहीतवाक्यः विद्यावान् नयवित् नीतिज्ञः वदान्यो दाता । गृहीतवाग्योऽनपविद्धवाक्य इति पाठे मितभाषी अनिरस्तगुरुवचनः ॥ १४ ॥ इदं द्यूतं न युक्तमिति वचनं मया उक्तमिति संबन्धः ॥ २० ॥ भक्तस्य सेवां कुर्वतः ॥ २२ ॥ अपूर्वं परकीयं स्निग्धा हि स्नेहवन्तोऽपि ॥ २३ ॥ कृत्यानि परिसंख्याय साध्यासाध्यनिश्चयं कृत्वा तथा वृत्तिं भृत्यजीविकाम् आयव्ययानुरूपां कृत्वेत्यर्थः । दुष्कराणि परराष्ट्रग्रहणादीनि ॥ २४ ॥ अनुकम्प्यो मादृशो वचनस्वीकारेणानुग्राह्य इति प्रार्थयते ॥ २५ ॥ प्रत्याह प्रत्याख्यानं करोति प्रतिकूलम् आज्ञाविरुद्धं वदतीति प्रतिकूलवादी ॥ २६ ॥

[ अर्जु० ] गृहीतवाक्यो वृद्धादेः पितृदेवाद्युपभुक्तादन्यदन्नं शेषम् ॥ १४ ॥ त्यजेत् कुलार्थे इति पूर्वं विवृतम् ॥ १७ ॥ प्रातिपेय प्रतीपकुलसंभव ॥ २० ॥ गूहमानो रक्षन् ॥ २१ ॥ भक्तस्य सेवमानस्य ॥ २२ ॥ उचितावरुद्धाः उचितमवरुद्धं येषाम् ॥ २३ ॥ पूर्वं प्रारम्भकाले परिसंख्याय परिर्वर्जने संसम्यक् ते इति (?) तथा कर्तव्यमिदं नेति प्रकथ्येत्यर्थः । आयव्ययौ परिसंख्यायेत्यर्थः । अनुरूपां सेवकाद्युचिताम् ॥ २४ ॥ नाद्रियते न श्रद्धत्ते प्रत्याह निराकरोति ॥ २६ ॥

[ सर्व० ] अनयविद्धवाक्योऽनाक्षिप्तवाक्यः ॥ १४ ॥ नेदं युक्तं द्यूतमिति वचनम् ॥ २० ॥ भक्तस्य सेवां कुर्वतः ॥ २२ ॥ उचिते न्याय्ये दायेऽवरुद्धाः उचितावरुद्धाः ॥ २३ ॥ परिसङ्ख्याय नियम्य आयव्ययौ आ-

---

२२ ख. भक्तस्य चिराश्रितस्य । २३–२९ श्लोकाः ख. ५८ स्योत्तरं दृश्यन्ते । ख. ते भृत्यानां । ख. वाह्यं जनं संजिघृक्षेत पूर्वम् । ख. ह्येनमुचितावरु° । २४ ख. ण्यायव्ययावनुरूपां ।

अस्तब्धमक्लीबमदीर्घसूत्रं
सानुक्रोशं श्लक्ष्णमहार्यमन्यैः ।
अरोगजातीयमुदारवाक्यं
दूतं वदन्त्यष्टगुणोपपन्नम् ॥ २७ ॥
न विश्वासाज्जातु परस्य गेहे
गच्छेन्नरश्चेतयानो विकाले ।
न चत्वरे निशि तिष्ठेन्निगूढो
न राजकाम्यां योषितं प्रार्थयीत ॥ २८ ॥
न निह्नवं मन्त्रगतस्य गच्छे-
त्संसृष्टमन्त्रस्य कुसंगतस्य ।
न च ब्रूयान्नाश्वसिमि त्वयीति
सकारणं व्यपदेशं तु कुर्यात् ॥ २९ ॥
घृणी राजा पुंश्चली राजभृत्यः
पुत्रो भ्राता विधवा बालपुत्रा ।
सेनाजीवी चोद्धृतभूतिरेव
व्यवहारेषु वर्जनीयाः स्युरेते ॥ ३० ॥

---

गमापायावेताविति निश्चित्य । वृत्तिर्वेतनम् ॥ २४ ॥ शक्तिज्ञ एतावन्मह्यं दातुं शक्नोतीति जानन् ॥ २५ ॥ प्रत्याह प्रतिक्षिपति । दोषाविष्करणेन प्रतिकूलवादी अप्रियवचाः ॥ २६ ॥

[ लक्षा० ] न प्रातिपेयमित्यत्र प्रकर्षेण अत्यन्तं पेयं पानयोग्यं तव नाभूत् ॥ २० ॥

[ नील० ] अस्तब्धं दर्पशून्यम् । अक्लीबं सामर्थ्यवन्तम् । अदीर्घसूत्रं क्षिप्रकारिणम् । सानुक्रोशं सदयम् । श्लक्ष्णं मञ्जुलम् । अहार्यमभेद्यम् । अरोगजातीयं रोगलेशशून्यम् । उदारं युक्तियुक्तं महार्थं च वाक्यं यस्य तं दूतं प्रेष्यम् ॥ २७ ॥ विकाले सायंकाले परस्य अविश्वस्तस्य गेहे न गच्छेत् । प्रार्थयीत भोक्तुमिति शेषः ॥ २८ ॥ संसृष्टः बहुकर्तृकत्वेन मिश्रो मन्त्रो यस्य त्वादृशस्य कर्णादिसहायवतो राज्ञो निह्नवं मन्त्रस्य अपहारं न गच्छेत् मादृशः तं मन्त्रं न दूषयेत् तैः सर्वैः सह विरोधापत्तेरिति भावः । त्वयि बहूनां शास्ये अहं नाश्वसिमीति न ब्रूयात् किंतु मम किंचित्कार्यमस्तीति तथा व्यपदेशं व्याजं कृत्वा तादृशान्मन्त्रादपसरेदेवेत्यर्थः ॥ २९ ॥ घृणी लज्जावान् स हि यथोक्तं दण्डमधमर्णेषु पातयितुं न शक्तः क्रूरोऽयमिति लोकापवादभयात् । उद्धृतभूतिः दूरीकृताधिकारः एते व्यवहारे धनदानादौ वर्जनीयाः द्रव्यनाशभयात् एतेभ्यो न ग्राह्यं च । अधमर्णो घृणी लज्जावांश्चेदतिनिर्बन्धेन याच्यमानः प्राणानेव जह्यात् एवमन्यत्राप्यूह्यम् । त्वमपि नाशभयात् पुत्राय राज्यं मा देहीति भावः ॥ ३० ॥

[ अर्जु० ] सानुक्रोशं सकृपम् अहार्यमभेद्यम् । अरोगिजातीयमरोगिकुलोत्पन्नम् । उदारवाक्यमदीनवचनम् ॥ २७ ॥ विकालेऽनवसरे प्रदोषे वा । राजकाम्यां मम योषिद् भवेदिति न प्रार्थयेत् ॥ २८ ॥ निह्नवमपलापं मन्त्रगतस्य मिलितस्य सत्रगतस्येति पाठे छद्मिन इत्यर्थः । संसृष्टमन्त्रस्य संसृष्टः शत्रुणा मिलितो मन्त्रो यस्य । कुसंगतस्य कुत्सितैः संगतस्य, व्यपदेशं व्याजमन्यस्मिन् चिकीर्षितेऽन्यद् (व्यव)ह्रियते तच्च सकारणमित्यर्थः ॥ २९ ॥ घृणी करुणावान्, स हि करुणकृतैर्दानैर्निर्धनः । राजा च किंचिदवसरलाभेऽपि करप्रपातनं कुर्यात् । पुंश्चली प्रार्थ्यमाना त्वयाहं रंस्य इति ब्रूयात् । राजभृत्यो बलं कुर्यात् । पुत्रभ्रात्रोर्धनस्वामित्वात् । विधवाया बालपुत्राया धनहरणादिना पीडयितुमयोग्यत्वात् । सेनाजीविनो राजदण्डसंभवात् । उद्धृतभक्तस्य ग्रासमात्रलाभेन धनाभावात् । व्यवहारेऽर्थसंबन्धे ऋणादिप्रयोग इत्यर्थः ॥ ३० ॥

[ सर्व० ] श्लक्ष्णं मृदु । अहार्यमभेद्यम् । अरोगजातीयमरोगजन्मानम् । जातिर्जन्म तेन जन्मावधिरोगरहितमित्यर्थः । उदारं महत्, महत्त्वं च वाक्ये महार्थतया ॥ २७ ॥ न परस्य गेह इति । विकाले सायङ्काले परस्य गेहं न गच्छेदित्यर्थः । राजकाम्यां योषितं योषित्त्वेन न प्रार्थयीत कामयेत ॥ २८ ॥ निह्नवं स्नेहम् । सत्रगतस्य सत्रसङ्गतस्य । संसृष्टमन्त्रस्य शत्रुष्वस्य मन्त्रः संसृष्टः संबन्धितो येन । अत एव कुसंगतस्य । व्यपदेशं व्याजम् । तस्य मन्त्रादौ असन्निधानार्थम् । सकारणमन्त्राकृते वा गन्तव्यमिति(?)॥ २९ ॥ घृणी कृपावान्, तेन ऋणदानादि न कार्यं स हि कृपावितीर्णसर्वधनत्वान्निन्यः । राज्ञो राजभृत्यस्य सभाजीविनां चादाने दण्डासंभवात् । पुंश्चल्या सह व्यवहारे सतां तदुपगमापवादशङ्कापत्तेः । पुत्रादित्रयस्य, उद्धूतभक्तस्य धनार्थं पीडनेऽकीर्तिसंभवात् । भक्तं वेतनमुद्धूतमाकृष्टं यस्य स उद्धूतभक्तः ॥ ३० ॥

[ लक्षा० ] चत्वरे प्राङ्गणे ॥ २८ ॥ न निह्नवं मन्त्रगतस्य गच्छेदित्यत्र अपलापस्तु निह्नव इत्यभिधानात् निह्नवमपलापम् । कुसंगतस्य कुत्सितैः सह संगतस्य संसृष्टमन्त्रस्य कुत्सितेषु स्वस्मिंश्च समानतया संसृष्टमन्त्रस्येत्यर्थः । मन्त्रगतस्य राज्ञः निह्नवमपलापं न गच्छेन्न कुर्यात् । तादृशस्थले प्रियमेव कुर्यादिति भावः । सकारणं व्यपदेशं च कुर्यादित्यत्र सकारणं मध्ये नदी वर्तते वर्षा-

---

२८ ख. न. विश्वसेत् । ख. गच्छन्नरः । २९ ख. सर्वगतश्चे ।

अष्टौ गुणाः पुरुषं दीपयन्ति
प्रज्ञा च कौल्यं च श्रुतं दमश्च ।
पराक्रमश्चाबहुभाषिता च
दानं यथाशक्ति कृतज्ञता च ॥ ३१ ॥
एतान्गुणाँस्तात महानुभावा-
नेको गुणः संश्रयते प्रसह्य ।
राजा यदा सत्कुरुते मनुष्यं
सर्वान्गुणानेष गुणो बिभर्ति ॥ ३२ ॥
गुणा दश स्नानशीलं भजन्ते
बलं रूपं स्वरवर्णप्रशुद्धिः ।
स्पर्शश्च गन्धश्च विशुद्धता च
श्रीः सौकुमार्यं प्रवराश्च नार्यः ॥ ३३ ॥
गुणाश्च षण्मितभुक्तं भजन्ते
आरोग्यमायुश्च बलं सुखं च ।
अनाविलं चास्य भवत्यपत्यं
न चैनमाद्यून इति क्षिपन्ति ॥ ३४ ॥
अकर्मशीलं च महाशनं च
लोकद्विष्टं बहुमायं नृशंसम् ।
अदेशकालज्ञमनिष्टवेष-
मेतान् गृहे न प्रतिवासयेत ॥ ३५ ॥
कदर्यमाक्रोशकमश्रुतं च
वनौकसं धूर्तममान्यमानिनम् ।
निष्ठूरिणं कृतवैरं कृतघ्न-
मेतान्भृशार्तोऽपि न जातु याचेत् ॥ ३६ ॥
संक्लिष्टकर्माणमतिप्रमादं
नित्यानृतं चादृढभक्तिकं च ।
विसृष्टरागं पटुमानिनं चा-
प्येतान्न सेवेत नराधमान् षट् ॥ ३७ ॥

---

कालः कथमिदानीं राजकार्यमिति कारणेन सहितं कार्यव्यपदेशं कुर्यात् नतु तूष्णीमेव भवेत् ॥ २९ ॥ विधवाबालपुत्रेत्यत्र बालाः बालकाः पुत्राः यस्याः सा विधवा साऽपि स्वपुत्रजीवनाशभयादुक्तं शृणोतीति भावः ॥ ३० ॥

[नील०] स्वरो ध्वनिः तस्य प्रशुद्धिः मञ्जुलता । वर्णाः कादयः तेषां प्रशुद्धिर्यथास्थानकरणं विस्पष्टमुच्चारणम् । स्पर्शः मृदुता । सौकुमार्यं लावण्यम् ॥ ३३ ॥ मितभुक्तं मितभोजिनम् आद्यूनो बहुभोजीति क्षिपन्ति निन्दन्ति ॥ ३४ ॥ अनिष्टवेषं क्षपणकादिवेषधरम् ॥ ३५ ॥ कदर्यम् अदातारम् । आक्रोशकं गालयितारम् । अश्रुतं मूर्खम् । वनौकसं कैवर्तकम् । धूर्तं कितवम् । निष्ठूरिणं निर्दयं हिंस्रं कृतवैरमन्येन स्वेन वा ॥ ३६ ॥ संक्लिष्टकर्माणम् आततायिनं स च षड्विधः ' अग्निदो गरदश्चैव शस्त्रपाणिर्धनापहः । क्षेत्रदारहरश्चैव षडेते आततायिनः' इति प्रसिद्धः । अतिप्रमादं सदाव्यग्रम् । विसृष्टरागं त्यक्तस्नेहम् । पटुमानिनं कुशलंमन्यम् ॥ ३७ ॥

[ अर्जु० ] अष्टौ गुणा इत्यादि प्रागुक्तमपि पुनर्वचनमादरार्थम् ॥ ३१ ॥ बलमाप्यायनेन, रूपं मलापगमनेन, स्वर उदात्तादिः षड्जादिश्च, वर्णः अकारादीन्यक्षराणि तेषां प्रसिद्धिः तदभिव्यञ्जकस्थानानां स्नानेन परिपोषात्, स्पर्शगन्धौ मृदुसुरभी । श्रीः शोभा लक्ष्मीर्वा ॥ ३३ ॥ मितभुक्तं परिमितान्नम् । आरोग्यमजीर्णादिविरहात् । आद्यूनो बहुभुक् ॥ ३४ ॥ कदर्यं कृपणम् । अश्रुतं मूर्खम् । अमान्यमानिनं नीचप्रियम् ॥ ३६ ॥ अतिप्रवादं बहुभाषिणं, निकृष्टरागं रागान्धम् ॥ ३७ ॥

[ सर्व० ] रूपम् अवयवसंस्थानभेदः । स्वर उदात्तादिः, वर्णोऽकारादिः, तदुभयप्रशुद्धिः शुद्धता । स्पर्शगन्धौ गुणपदसामानाधिकरण्यादुत्तमौ । प्रवरा नार्योऽपि तत्संगमस्य गुणत्वात् ॥३३॥ गुणाश्चेति । मितं भुक्तं भोजनं यस्य स मितभुक्तः । अनाविलमनामयमन्यथा बहुभुक्त्वेनात्मदोषसंभवेनाविलत्वप्रसङ्गात् । आद्यूनो बह्वाशी । क्षिपन्त्याक्षिपन्ति ॥ ३४ ॥ अश्रुतं शास्त्राश्राविणम् । वराकसंभूतं वराकः क्षुद्रस्ततो जातम् । मान्यानाममानिनमपूजकम् । निष्ठूरी निष्ठुरः । दीर्घत्वमिनिश्च स्वार्थे छान्दसम् ॥ ३६ ॥ संश्लिष्टकर्माणमविवेचितकारिणम् । अतिप्रवादं बहुभाषिणम् । निकृष्टरागमाकृष्टानुरागम(न)नुरक्तमित्यर्थः ॥ ३७ ॥

[ लक्षा० ] न चैनमाद्यून इतीत्यत्र आद्यूनः स्यादौदरिके विजिगीषाविवर्जित इत्यमरः । आद्यूनः उदरंभरः ॥ ३४ ॥ अनिष्टवेषमित्यत्र इष्टो न भवतीत्यनिष्टो वेषः अलंकारो यस्य । वेश्यागन्तृवत् विकृताकार इत्यर्थः ॥३५॥ स्यादर्यः स्वामिवैश्ययोरित्यभिधानात् कदर्यः कुत्सितस्वामी, अश्रुतं न विद्यते श्रुतं शास्त्रश्रवणं यस्य तम् । वनौकसं धूर्तमिति पाठे वनौकसं किरातम्, अमान्यमानिनममान्यान् मानयितुमयोग्यान् नीचान् मानयतीत्यमान्यमानी तं, निष्ठूरिणम् ' अपि माषं मषं कुर्याच्छन्दोभङ्गं न कारयेत् ' इति वचनात् निष्ठूरिणमित्युक्तम् ॥ ३६ ॥ संश्लि-

---

३७ ख. विकृष्टरागं।

सहायबन्धना ह्यर्थाः सहायाश्चार्थबन्धनाः ।
अन्योन्यबन्धनावेतौ विनान्योन्यं न सिध्यतः ॥३८॥
उत्पाद्य पुत्राननृणांश्च कृत्वा
वृत्तिं च तेभ्योऽनुविधाय कांचित् ।
स्थाने कुमारीः प्रतिपाद्य सर्वा
अरण्यसंस्थोऽथ मुनिर्बुभूषेत् ॥ ३९ ॥
हितं यत्सर्वभूतानामात्मनश्च सुखावहम् ।
तत्कुर्यादीश्वरे ह्येतन्मूलं सर्वार्थसिद्धये ॥ ४० ॥
वृद्धिः प्रभावस्तेजश्च सत्त्वमुत्थानमेव च ।
व्यवसायश्च यस्य स्यात्तस्यावृत्तिभयं कुतः ॥ ४१ ॥
पश्य दोषान्पाण्डवैर्विग्रहे त्वं
यत्र व्यथेयुरपि देवाः सशक्राः ।
पुत्रैर्वैरं नित्यमुद्विग्नवासो
यशःप्रणाशो द्विषतश्च हर्षः ॥ ४२ ॥
भीष्मस्य कोपस्तव चैवेन्द्रकल्प
द्रोणस्य राज्ञश्च युधिष्ठिरस्य ।
उत्सादयेल्लोकमिमं प्रवृद्धः
श्वेतो ग्रहस्तिर्यगिवापतन् खे ॥ ४३ ॥

तव पुत्रशतं चैव कर्णः पञ्च च पाण्डवाः ।
पृथिवीमनुशासेयुरखिलां सागराम्बराम् ॥ ४४ ॥
धार्तराष्ट्रा वनं राजन् व्याघ्राः पाण्डुसुता मताः ॥
मा वनं छिन्धि सव्याघ्रं मा व्याघ्रा नीनशन्वनात् ४५
न स्याद्वनमृते व्याघ्रान् व्याघ्रा न स्युर्ऋते वनम् ॥
वनं हि रक्ष्यते व्याघ्रैर्व्याघ्रान् रक्षति काननम् ॥४६॥
न तथेच्छन्ति कल्याणान् परेषां वेदितुं गुणान् ॥
यथैषां ज्ञातुमिच्छन्ति नैर्गुण्यं पापचेतसः ॥ ४७ ॥
अर्थसिद्धिं परामिच्छन् धर्ममेवादितश्चरेत् ॥
नहि धर्मादपैत्यर्थः स्वर्गलोकादिवामृतम् ॥ ४८ ॥
यस्यात्मा विरतः पापात् कल्याणे च निवेशितः ॥
तेन सर्वमिदं बुद्धं प्रकृतिर्विकृतिश्च या ॥ ४९ ॥
यो धर्ममर्थं कामं च यथाकालं निषेवते ॥
धर्मार्थकामसंयोगं सोऽमुत्रेह च विन्दति ॥ ५० ॥
सन्नियच्छति यो वेगमुत्थितं क्रोधहर्षयोः ॥
स श्रियो भाजनं राजन् यश्चापत्सु न मुह्यति॥५१॥
बलं पञ्चविधं नित्यं पुरुषाणां निबोध मे ॥
यत्तु बाहुबलं नाम कनिष्ठं बलमुच्यते ॥ ५२ ॥

---

ष्टकर्माणमित्यत्र संश्लिष्टं संश्लेषः, भावे क्तप्रत्ययः बहुजनसमागम इत्यर्थः । तस्मिन् सति कर्म संध्यावन्दनादिकं यस्य तं दाम्भिकमित्यर्थः ॥ ३७ ॥

[ नील० ] एवं निर्गुणानां स्वपुत्राणां पक्षपातेन सगुणान् पाण्डुपुत्रान् मा त्यजेत्युक्तम् । संप्रति सर्वेषामैकमत्येनाभ्युदयं प्रसाध्यस्व हितमेव कुर्वित्याह—सहायेत्यादिना ॥ ३८ ॥ ईश्वरे कालान्तरीयफलप्रतिभूभूते एतदेव स्वपरहिताचरणं मूलं हेतुभूतम् एतद्विना ईश्वरोऽपि फलं दातुं न समर्थ इत्यर्थः ॥ ४० ॥ ननु परहितकरणे स्वहितं कथं स्यादित्यत आह—वृद्धिरिति । वृद्धिः सहायमेलनेन धनादीनां प्रचयः । बुद्धिरिति पाठे मित्रसंग्रहधीः । प्रभावः शत्रूणां पराजयः । तेजः तद्धेतुभूतं शौर्यम् । सत्वं धर्मज्ञानैश्वर्यरूपम् । उत्थानं उद्यमः । व्यवसायः निश्चयः । अवृत्तिर्जीविकाया अभावः ॥ ४१ ॥ श्वेतो ग्रहः धूमकेतुः ॥ ४३ ॥ नीनशन् नाशं प्राप्नुयुः ॥ ४५ ॥ परेषां पाण्डवानां पापचेतसो दुर्योधनाद्याः ॥ ४७ ॥ आत्मा चित्तं पापात् इदं मे स्यादिदं मे स्यादित्येवंरूपात्संकल्पात् । कल्याणे भूमानन्दे ब्रह्मणि । प्रकृतिस्त्रिगुणात्मिका माया । विकृतिर्महदादिः । आत्मज्ञानात्सर्वज्ञानप्रसिद्धेः ॥ ४९ ॥ मोक्षानधिकारिणं प्रत्याह—य इति ॥ ५० ॥

[ अर्जु० ] सहायेत्यादि बन्धनं कारणम् । एतावदर्थसहायौ ॥ ३८ ॥ हितं सुखम् । ईश्वरो हिताहितसमर्थोऽपि हितमेव कुर्यात् । हि यस्मात् मूलं कारणमेतत् ॥ ४० ॥ उत्थानमुद्योगः । व्यवसायः स्थैर्यमावृत्तिभयं संसारभयम् ॥ ४१ ॥ श्वेतग्रहः शुक्रः ॥ ४३ ॥ मा नीनशो नाशय ॥ ४५ ॥

[ सर्व० ] बन्धनं स्थिरीकरणम् । ईश्वरो यथाकर्तु समर्थोऽपि । हिशब्दः अप्यर्थे ॥ ३८ ॥ एतत् परहिताचरणं मूलं कारणम् ॥ ४० ॥ बुद्धिः शास्त्रादिः । प्रभावः शक्तिः । तेजः परैरसह्यत्वम् । सत्त्वं बलम् । उत्थानमुद्यमः । व्यवसायो निश्चयः ॥ ४१ ॥ भीष्मस्य कोपस्तव च ॥ ४३ ॥ नीनशो नाशय ॥ ४५ ॥ वेगमारम्भम् ॥ ५१ ॥ यत्त्विति । उत्तरोत्तरं बलं श्रेष्ठम् ॥ ५२ ॥

[ लक्षा० ] सहायबन्धना इत्यत्र अर्थाः प्रयोजनानि सहायबन्धनाः जनसहायनिमित्तकाः सहायाश्च अर्थबन्धनाः स्वस्वप्रयोजननिमित्तकाः ॥ ३८ ॥ तस्य वृत्तिभयं कुत इत्यत्र वृत्तौ वर्तने भयं कुतः ॥ ४१ ॥ श्वेतो ग्रहस्तिर्यगिवापतन्नित्यत्र श्वेतो ग्रहः धूमकेतुरुल्कापातो वा ॥४३॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

---

३९ ख. प्रतिपादयित्वा ह्यर॰ ४० ख. ईश्वरो ह्ये॰ । ४२ ख. द्विषतां प्रहर्षः । ४५ ख. नीनशुर्व॰ ४७ ख. यथैव । ४८ ख. धर्मादपेतार्थः ।

अमात्यलाभो भद्रं ते द्वितीयं बलमुच्यते ।
तृतीयं धनलाभस्तु बलमाहुर्मनीषिणः ॥ ५३ ॥
यत्त्वस्य सहजं राजन् पितृपैतामहं बलम् ।
अभिजातबलं नाम तच्चतुर्थं बलं स्मृतम् ॥ ५४ ॥
येन त्वेतानि सर्वाणि संगृहीतानि भारत ॥
यद्बलानां बलं श्रेष्ठं तत्प्रज्ञाबलमुच्यते ॥ ५५ ॥
महते योऽपकाराय नरस्य प्रभवेन्नरः ।
तेन वैरं समासज्य दूरस्थोऽस्मीति नाश्वसेत् ॥५६॥
स्त्रीषु राजसु सर्पेषु स्वाध्यायप्रभुशत्रुषु ।
भोगेष्वायुषि विश्वासं कः प्राज्ञः कर्तुमर्हति ॥५७॥
प्रज्ञाशरेणाभिहतस्य जन्तो-
श्चिकित्सकाः सन्ति न चौषधानि ।
न होममन्त्रा न च मङ्गलानि
नाथर्वणा नाप्यगदाः सुसिद्धाः ॥ ५८ ॥
सर्पश्चाग्निश्च सिंहश्च कुलपुत्रश्च भारत ।
नावज्ञेया मनुष्येण सर्वे ह्येतेऽतितेजसः ॥ ५९ ॥
अग्निस्तेजो महल्लोके गूढस्तिष्ठति दारुषु ।
न चोपयुङ्क्ते तद्दारु यावन्नोद्दीप्यते परैः ॥ ६० ॥
स एव खलु दारुभ्यो यदा निर्मथ्य दीप्यते ।
तद्दारु च वनं चान्यन्निर्दहत्याशु तेजसा ॥ ६१ ॥
एवमेव कुले जाताः पावकोपमतेजसः ।
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ॥ ६२ ॥
लताधर्मा त्वं सपुत्रः शालाः पाण्डुसुता मताः
न लता वर्धते जातु महाद्रुममनाश्रिता ॥ ६३ ॥
वनं राजंस्तव पुत्रोऽम्बिकेय
सिंहान्वने पाण्डवांस्तात विद्धि ।
सिंहैर्विहीनं हि वनं विनश्येत्
सिंहा विनश्येयुर्ऋते वनेन ॥ ६४ ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

## अष्टात्रिंशोऽध्यायः ३८

विदुरेण धृतराष्ट्रं प्रति नीत्युपदेशः ॥ १ ॥

**विदुर उवाच—**

ऊर्ध्वं प्राणा ह्युत्क्रामन्ति यूनः स्थविर आयति ।
प्रत्युत्थानाभिवादाभ्यां पुनस्तान्प्रतिपद्यते ॥ १ ॥
पीठं दत्त्वा साधवेऽभ्यागताय
आनीयापः परिनिर्णिज्य पादौ ।
सुखं पृष्ट्वा प्रतिवेद्यात्मसंस्थां
ततो दद्यादन्नमवेक्ष्य धीरः ॥ २ ॥

---

[ नील० ] अभिजातबलं कुलबलम् ॥ ५४ ॥ औषधाद्याश्चिकित्सकाः न सन्ति तैरचिकित्स्य इत्यर्थः । आथर्वणा वेदमन्त्रा अपि किंपुनर्भाषामन्त्रादयः । सुसिद्धाः अगदाः पारदादयः ॥ ५८ ॥ कुलपुत्रो ज्ञातिः ॥ ५९ ॥ कुले जाताः पाण्डवाः ॥ ६२ ॥ शालाः महावृक्षाः पाण्डवान् आश्रित्य सपुत्रो वर्धस्वेत्यर्थः ॥ ६३ ॥ त्वत्पुत्राभिहत्य पाण्डवा अपि स्नेहान्नश्येयुरेवेति भावः ॥ ६४ ॥

इति उद्यो० नैलकण्ठीये भारतभावदीपे सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ अर्जु० ] आथर्वणाः प्रत्यङ्गिरोमन्त्राः अगदाः औषधादरोगाः ॥ ५८ ॥ उद्दीप्यते घर्षणादिना ॥ ६० ॥ शाला वृक्षाः ॥ ६३ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ सर्व० ] अभिजातबलं कुलबलम्, कुलीनतया हि प्रजानुरागः ॥ ५४ ॥ सर्वाणि वस्तूनि संगृहीतानि ॥ ५५ ॥ औषधान्योषधिविकाराः । आथर्वणा अथर्वमन्त्रा जपार्थम् । अगदास्ततोऽन्यानि भेषजानि ॥ ५८ ॥ कुलपुत्रो जातिः ॥ ५९ ॥ उद्दीप्यते घर्षणादिनाऽभिव्यज्यते ॥ ६० ॥ सालाः वृक्षशाखाः ॥ ६३ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

[ नील० ] ऊर्ध्वमिति । आयति आगच्छति ॥ १ ॥ निर्णिज्य प्रक्षाल्य आत्मसंस्थां स्वस्थितिं प्रतिवेद्य निवेद्य ॥ २ ॥

[ अर्जु० ] यूनः स्थविर आयति आगच्छति सति ॥ १ ॥ परिनिर्णिज्य प्रक्षाल्य । आत्मसंस्थं सुखमेव । प्रतिवेद्य बोधयित्वा ॥ २ ॥

[ सर्व० ] आयत्यागच्छति ॥ १ ॥ परिनिर्णिज्य

---

५३ ख. माहुर्मनीषिणः । ५५ ख. बलानामपि बलम् । ५६ ख. समासाद्य । ५७ ख. स्वाध्याये शत्रुसेविनि । ५८ ख. न होममन्त्रा विधिसंप्रयुक्ता नाथर्वणा चाप्यगदाः सयुक्ताः । ६२ ख. शोभते । इति सप्तत्रिंशोऽध्यायः ॥ ३७ ॥

यस्योदकं मधुपर्कं च गां च
न मन्त्रवित् प्रतिगृह्णाति गेहे ।
लोभाद्भयादथ कार्पण्यतो वा
तस्यानर्थं जीवितमाहुरार्याः ॥ ३ ॥
चिकित्सकः शल्यकर्ताऽवकीर्णी
स्तेनः क्रूरो मद्यपो भ्रूणहा च ।
सेनाजीवी श्रुतिविक्रायकश्च
भृशं प्रियोऽप्यतिथिर्नोदकार्हः ॥ ४ ॥
अविक्रेयं लवणं पक्वमन्नं
दधि क्षीरं मधु तैलं घृतं च ।
तिला मांसं फलमूलानि शाकं
रक्तं वासः सर्वगन्धा गुडाश्च ॥ ५ ॥
अरोषणो यः समलोष्टाश्मकाञ्चनः
प्रहीणशोको गतसंधिविग्रहः ।
निन्दाप्रशंसोपरतः प्रियाप्रिये
त्यजन्नुदासीनवदेष भिक्षुकः ॥ ६ ॥
नीवारमूलेङ्गुदशाकवृत्तिः
सुसंयतात्माऽग्निकार्येषु चोद्यः ।
वने वसन्नतिथिष्वप्रमत्तो
धुरंधरः पुण्यकृदेष तापसः ॥ ७ ॥
अपकृत्य बुद्धिमतो दूरस्थोऽस्मीति नाश्वसेत् ।
दीर्घौ बुद्धिमतो बाहू याभ्यां हिंसति हिंसितः ॥८॥
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद्भयमुत्पन्नं मूलान्यपि निकृन्तति ॥ ९ ॥
अनीर्षुर्गुप्तदारश्च संविभागी प्रियंवदः ।
श्लक्ष्णो मधुरवाक् स्त्रीणां न चासां वशगो भवेत् १०॥
पूजनीया महाभागाः पुण्याश्च गृहदीप्तयः ।
स्त्रियः श्रियो गृहस्योक्तास्तस्माद्रक्ष्या विशेषतः॥११॥
पितुरन्तःपुरं दद्यान्मातुर्दद्यान् महानसम् ।
गोषु चात्मसमं दद्यात्स्वयमेव कृषिं व्रजेत् ॥ १२ ॥
भृत्यैर्वाणिज्यचारं च पुत्रैः सेवेत च द्विजान् ।
अद्भ्योऽग्निर्ब्रह्मतः क्षत्रमश्मनो लोहमुत्थितम् ॥१३॥

---

प्रक्षाल्य । आत्मसंस्थमात्मानुगतं धनं सर्वं प्रतिवेद्य निवेद्य ॥ २ ॥

[ नील० ] यस्य कदर्यस्य । भयात् राज्यादिषु धनिकत्वप्रथाभयात् । अदीयमानत्वादेव न प्रतिगृह्णाति तस्य जीवितमनर्थं व्यर्थम् ॥ ३ ॥ शल्यकर्ता काण्डकृत् । अवकीर्णी नष्टब्रह्मचर्यः । नोदकार्ह उदकमात्रानर्होऽपि अतिथिः भृशं प्रियः प्रियवज्ज्ञामात्रादिवदर्चनीय एवेत्यर्थः ॥ ४ ॥ श्रुतिविक्रायकप्रसङ्गादन्यदप्यविक्रेयं यो न विक्रीणाति सोऽपि मान्य एवेति विवक्षयाऽविक्रेयाण्याह—अविक्रेयमिति ॥ ५ ॥ दोषवानप्यतिथिः पूज्यः किमुत गुणवानिति वक्तुं तद्गुणानाह—अरोषण इति । गतसंधिविग्रहः स्नेहवैररहितः उदासीनवत् रागद्वेषादिराहित्यात् ॥ ६ ॥ चोद्यः विधेयः सावधान इत्यर्थः । तापसो दरिद्रोऽप्यतिथिष्वप्रमत्तो भवेत्किं पुनर्भाग्यवानिति भावः ॥ ७ ॥ दीर्घौ बाहू बुद्ध्या दूरस्थमप्यादातुं शक्नुत इत्यर्थः । हिंसति हिनस्ति अतिथिभक्ता दूरस्था अपि पाण्डवा न हेलनीया इति भावः ॥८॥ अविश्वस्ते भीमे न विश्वासः कार्यः ॥९॥ अनीर्षुरित्यादिसार्धश्लोकत्रयस्य गुप्तदाराः पाण्डवाः तेषां स्त्री श्रीतुल्या द्रौपदी सा पित्रा त्वया रक्षणीयैवातस्तदतिक्रमात्तव भयमस्तीति तात्पर्यम् ॥१०॥ प्रसङ्गात् प्रकृतेऽनुपयुक्तानपि धर्मानाह—अद्भ्य इति । एतेषां च यथालाभं प्रकृतोपयोगित्वमप्यूह्यम् । अद्भ्य इत्यादिना मैत्रेयादीनां ब्राह्मणानामवज्ञा न कार्येति सूचितम् ॥ १३ ॥

[ अर्जु० ] चिकित्सक इत्यादि चिकित्सकस्यानुग्रहेण(?) मरणसंभवात् । शल्यकर्ता काण्डकारः । अवकीर्णी क्षतव्रतः । सेनाजीवी सेनाधिकारेण हिंसनेण जीवनात् । वेदविक्रायको मूल्यं गृहीत्वा अध्यापकः ॥ ४ ॥ उदासीनोऽरागद्वेषः वतिर्वाक्यालंकारे ॥ ६ ॥ मूलं कन्दः अचोद्योऽप्रेष्यः स्वयंप्रवृत्तत्वात् ॥ ७ ॥ बाहू इति तस्य बाहू इव बुद्धिरिति ॥ ८ ॥ श्लक्ष्णोऽकर्कशः ॥ १० ॥ पितुरन्तःपुरमित्यादि । पित्रधीनेऽन्तःपुरस्त्रीजने पितुरभेद्यत्वाद् रक्षा, महानसं अन्नादिस्थानं मातुर्गोचरे भक्ष्यादिकरणं, पुत्रभ्रात्रादिगोचर एव गवां रक्षा, कृष्यास्तु न कस्यापि गोचरे रक्षा इति ॥ १२ ॥

[ सर्व० ] न प्रतिगृह्णाति तेनादीयमानं दीयमानमपि वा । अदाने हेतुः—लोभाद्भयादिति । दीयमानाप्रतिग्रहे हेतुः—भयात् पापभयात् ॥ ३ ॥ शल्यकर्ता काण्डकृत् । अवकीर्णी क्षतव्रतः ॥ ४ ॥ अविक्रेयमित्यादेस्तद्विक्रयिणोऽन्नं न भोज्यमिति तात्पर्यम् ॥ ५ ॥ गतसन्धिविग्रहो मैत्रीवैररहितः । प्रियाप्रिये इति—उदासीनवद्रागद्वेषरहितः ॥ ६ ॥ अग्निकार्येष्वचोद्योऽन्येनाप्रवर्त्यः स्वतः प्रवृत्तत्वात् ॥ ७ ॥ दीर्घौ बाहू बुद्ध्या दीर्घीकृतौ ॥ ८ ॥ ईर्ष्या स्वस्त्रीदर्शनजपरद्वेषः । अत एव तदनुत्पत्तये गुप्तदारः स्यात् । श्लक्ष्णो मृदुः ॥ १० ॥

[ लक्षा० ] शल्यकर्तावकीर्णी इत्यत्र । अवकीर्णी क्षतंव्रत इत्यभिधानात् अवकीर्णी व्रतभ्रष्टः ॥ ४ ॥ अग्नि-

तेषां सर्वत्रगं तेजः स्वासु योनिषु शाम्यति ।
नित्यं सन्तः कुले जाताः पावकोपमतेजसः ॥ १४॥
क्षमावन्तो निराकाराः काष्ठेऽग्निरिव शेरते ।
यस्य मन्त्रं न जानन्ति बाह्याश्चाभ्यन्तराश्च ये ॥१५॥
स राजा सर्वतश्चक्षुश्चिरमैश्वर्यमश्नुते ।
करिष्यन्नप्रभाषेत कृतान्येव तु दर्शयेत् ॥ १६ ॥
धर्मकामार्थकार्याणि तथा मन्त्रो न भिद्यते ।
गिरिपृष्ठमुपारुह्य प्रासादं वा रहोगतः ॥ १७ ॥
अरण्ये निःशलाके वा तत्र मन्त्रोऽभिधीयते ।
नासुहृत्परमं मन्त्रं भारतार्हति वेदितुम् ॥ १८ ॥
अपण्डितो वाऽपि सुहृत् पण्डितो वाऽप्यनात्मवान् ।
नापरीक्ष्य महीपालः कुर्यात्सचिवमात्मनः ॥ १९ ॥
अमात्ये ह्यर्थलिप्सा च मन्त्ररक्षणमेव च ।
कृतानि सर्वकार्याणि यस्य पारिषदा विदुः ॥ २० ॥
धर्मे चार्थे च कामे च स राजा राजसत्तमः ।
गूढमन्त्रस्य नृपतेस्तस्य सिद्धिरसंशयम् ॥ २१ ॥
अप्रशस्तानि कार्याणि यो मोहादनुतिष्ठति ।
स तेषां विपरिभ्रंशाद्भ्रश्यते जीवितादपि ॥ २२ ॥

कर्मणां तु प्रशस्तानामनुष्ठानं सुखावहम् ।
तेषामेवाननुष्ठानं पश्चात्तापकरं मतम् ॥ २३ ॥
अनधीत्य यथा वेदान्न विप्रः श्राद्धमर्हति ।
एवमश्रुतषाड्गुण्यो न मन्त्रं श्रोतुमर्हति ॥ २४ ॥
स्थानवृद्धिक्षयज्ञस्य षाड्गुण्यविदितात्मनः ।
अनवज्ञातशीलस्य स्वाधीना पृथिवी नृप ॥ २५ ॥
अमोघक्रोधहर्षस्य स्वयं कृत्वाऽन्ववेक्षिणः ।
आत्मप्रत्ययकोशस्य वसुदैव वसुंधरा ॥ २६ ॥
नाममात्रेण तुष्येत छत्रेण च महीपतिः ।
भृत्येभ्यो विसृजेदर्थान्नैकः सर्वहरो भवेत् ॥ २७ ॥
ब्राह्मणं ब्राह्मणो वेद भर्ता वेद स्त्रियं तथा ।
अमात्यं नृपतिर्वेद राजा राजानमेव च ॥ २८ ॥
न शत्रुर्वशमापन्नो मोक्तव्यो वध्यतां गतः ।
न्यग्भूत्वा पर्युपासीत वध्यं हन्याद्बले सति ।
अहताद्धि भयं तस्माज्जायते नचिरादिव ॥ २९ ॥
दैवतेषु प्रयत्नेन राजसु ब्राह्मणेषु च ।
नियन्तव्यः सदा क्रोधो वृद्धबालातुरेषु च ॥३०॥

---

कार्येष्वशोध्य इत्यत्र अशोध्यः करोति नवेति शोधनायानर्हः । निश्चयेन कर्तेत्यर्थः ॥ ७ ॥

[ नील० ] सर्वतश्चक्षुश्चारैः परमन्त्रं जानन् ॥ १६ ॥ निःशलाके तृणैरनावृते तत्रापि कश्चिल्लीनश्चेन्मन्त्रभेदः संभवेदिति भावः ॥ १८ ॥ अनात्मवान् चपलवाक् ॥१९॥ पार्षदाः सभासदः कृतान्येव विदुः किमुतान्ये ॥ २० ॥ अप्रशस्तानि निन्द्यानि विपरिभ्रंशात् विपरीतत्वेन भ्रंशात् ॥ २२ ॥ षाड्गुण्यं षण्णां संधिविग्रहयानासनद्वैधीभावसमाश्रयाणां समूहः न श्रुतो येन सः ॥ २४ ॥ षाड्गुण्याभिज्ञत्वेन विदित आत्मा स्वरूपं यस्य तस्य स्थानं यथास्थितत्वावस्था अनवज्ञातं सत्कृतं शीलमस्य ॥ २५ ॥ नवेक्षिण इति पाठे नवमिवादरेण ईक्षितुं शीलमस्य आत्मनैव प्रत्ययो ज्ञानं यस्य स्वयमेव ज्ञातकोशस्य ॥ २६ ॥ नाममात्रेणैव राजा भवेत् भोगांस्तु भृत्यैः समानानेव भुञ्जीत ॥ २७ ॥

[ अर्जु० ] निराकारा निर्गतगुणव्यञ्जनाकाराः । शेरत इति वाचापि न प्रकाशयन्ति ॥ १५ ॥ अर्थान् दर्शयेत् प्रत्यक्षी कुर्यात् तदपि वचसा न कुर्यात् । वचसा प्रकाशे लघुताहेतुत्वात् ॥ १६ ॥ निःशलाके निर्जने यत्र अन्तर्धातुं शलाकापि नास्तीत्यर्थः ॥ १८ ॥ अनात्मवान् अनायत्तमनाः ॥ १९ ॥ स्थानेत्यादि स्थानं वृद्धिह्रासहीनतया तदवस्थता । षाड्गुण्यं संधिप्रभृतयो गुणाः । अनवज्ञातशीलस्य सुशीलस्य ॥ २५ ॥ अवन्ध्येत्यादि अवन्ध्यौ सफलौ क्रोधहर्षौ यस्य आत्मप्रत्ययकोषस्य स्वयं ज्ञातभाण्डारस्य वसुदैव धनदैव ॥ २६ ॥ नाममात्रेणापि स्वल्पेन अथवा अहं राजेति नाम्नैव तुष्येत् ॥ २७ ॥ ब्राह्मणो वेद तत्क्रियाभिज्ञत्वात् । भर्ता वेद रहश्चरिताभिज्ञत्वात् ॥२८॥ दैवतेषु प्रत्ययासंगात् । राजसु वधप्रसङ्गात् । ब्राह्मणादिषु वाक्पारुष्यदोषात् ॥ ३० ॥

[ सर्व० ] निराकारा निर्विकाराः । शेरत इत्यनुबन्धत्वे लक्षणा ॥१५॥ निश्शलाकं रहः ॥१८॥ अनात्मवान् अनात्मसम्बन्धः ॥ १९ ॥ अप्रशस्तानि पापफलानि । विपरिभ्रंशाद्विरोधेन भ्रंशात् ॥ २२ ॥ अननुष्ठानमयथावदनुष्ठानम् ॥ २३ ॥ षाड्गुण्यं सन्ध्यादिषड्गुणाः ॥ २४ ॥ अनवज्ञातमनवगतम ॥ २५ ॥ आत्मप्रत्ययकोषस्य आत्मना प्रतीतः कोषो यस्य ॥ २६ ॥ नाममात्रेण राजेत्यनेन अरञ्जनेऽकीर्तिं लभन्ते ॥ २७ ॥

[ लक्षा० ] धर्मकामार्थकार्याणि कृतान्येव दर्शयेदिति संबन्धः । तथा तथा सति मंत्रो न भिद्यते ॥ १६ ॥ अरण्ये निःशलाके चेत्यत्र निःशलाके तृणगुल्मादिशला-

निरर्थं कलहं प्राज्ञो वर्जयेन्मूढसेवितम् ।
कीर्तिं च लभते लोके न चानर्थेन युज्यते ॥ ३१ ॥
प्रसादो निष्फलो यस्य क्रोधश्चापि निरर्थकः ।
न तं भर्तारमिच्छन्ति षण्ढं पतिमिव स्त्रियः ॥ ३२ ॥
न बुद्धिर्धनलाभाय न जाड्यमसमृद्धये ।
लोकपर्यायवृत्तान्तं प्राज्ञो जानाति नेतरः ॥ ३३ ॥
विद्याशीलवयोवृद्धान् बुद्धिवृद्धांश्च भारत ।
धनाभिजातवृद्धांश्च नित्यं मूढोऽवमन्यते ॥ ३४ ॥
अनार्यवृत्तमप्राज्ञमसूयकमधार्मिकम् ।
अनर्थाः क्षिप्रमायान्ति वाग्दुष्टं क्रोधनं तथा ॥ ३५ ॥
अविसंवादनं दानं समयस्याव्यतिक्रमः ।
आवर्तयन्ति भूतानि सम्यक् प्रणिहिता च वाक् ॥ ३६ ॥
अविसंवादको दक्षः कृतज्ञो मतिमानृजुः ।
अपि संक्षीणकोशोऽपि लभते परिवारणम् ॥ ३७ ॥
धृतिः शमो दमः शौचं कारुण्यं वागनिष्ठुरा ।
मित्राणां चानभिद्रोहः सप्तैताः समिधः श्रियः ॥ ३८ ॥
असंविभागी दुष्टात्मा कृतघ्नो निरपत्रपः ।
तादृङ्नराधिपो लोके वर्जनीयो नराधिप ॥ ३९ ॥
न च रात्रौ सुखं शेते ससर्प इव वेश्मनि ।
यः कोपयति निर्दोषं सदोषोऽभ्यन्तरं जनम् ॥ ४० ॥
येषु दुष्टेषु दोषः स्याद्योगक्षेमस्य भारत ।
सदा प्रसादनं तेषां देवतानामिवाचरेत् ॥ ४१ ॥
येऽर्थाः स्त्रीषु समायुक्ताः प्रमत्तपतितेषु च ।
ये चानार्ये समासक्ताः सर्वे ते संशयं गताः ॥ ४२ ॥
यत्र स्त्री यत्र कितवो बालो यत्रानुशासिता ।
मज्जन्ति तेऽवशा राजन्नद्यामश्मप्लवा इव ॥ ४३ ॥

---

कारहिते ॥ १८ ॥ अमात्येऽप्यर्थलिप्सा चेत्यत्र अर्थलिप्सा प्रयोजनलिप्सा ॥ २० ॥

[ नील० ] लोकस्य पर्यायः इहलोकपरलोकवत्त्वं तेन तद्विषयवृत्तान्तं कर्मफलाधीनत्वस्वरूपं प्राज्ञो जानाति न तु बुद्ध्या धनं जाड्येन वा दारिद्र्यं लभ्यते सर्वत्र व्यभिचारदर्शनादिति भावः ॥ ३३ ॥ अभिजातः कुलीनः ॥ ३४ ॥ अविसंवादनं वञ्चनाशून्यं समयस्य स्वपरकृतमर्यादायाः आवर्तयन्ति शत्रूनपि स्वीयान्कुर्वन्ति प्रणिहिता प्रयुक्ता ॥ ३६ ॥ परिवारणं परिवारान् भृत्यमित्रादीन् ॥ ३७ ॥ समिधः उद्दीपिकाः ॥ ३८ ॥ असंविभागी पोष्येभ्योऽदत्त्वा स्वयं भुञ्जानः ॥ ३९ ॥ दुष्टेषु दूषितेषु वेतनाद्यतिक्रमात् ॥ ४१ ॥ समासक्ता निहिताः संशयं गताः कदाचित्प्राप्या इत्यर्थः ॥ ४२ ॥

[ अर्जु० ] न चानर्थेन युज्यते इत्यत्र कीर्तिं न लभत इत्यस्मात् द्वितीयो नकरोऽनुवर्तनीयः । तेनानर्थमपि न लभते इत्यर्थः ॥३१॥ न बुद्धिरित्यादि । बुद्धेरन्वयव्यतिरेकौ संपत्तदभावयोरकारणं चेत् किंतर्हि तयोः कारणमित्याह—लोकपर्यायवृत्तान्तमिति । लोक्यते प्राप्यते सुखदुःखप्राप्त्यप्राप्तिलक्षणं फलं लोकस्तस्य परि सर्वतोभावेनायनमागमनं आयः तत्र वृत्तोऽन्तो निर्णयो यस्य तल्लोकपर्यायवृत्तान्तं दैवं प्राक्तनं कर्मेत्यर्थः ॥ ३३ ॥ विद्येत्यादि । क एते किमेतैः सिध्यतीति अवमन्यते विद्यादिगुणसंपदा सूचितां दैवसंपदं तेषु तेषु मूढो न वेत्तीत्यर्थः ॥३४॥ अनर्था वधबन्धादयः ॥ ३५ ॥ अविसंवादनमवञ्चनं समयस्य मर्यादायाः अव्यतिक्रमोऽलङ्घनम्, आवर्तयति अभिमुखीकरोति सम्यक् हितभावेन प्रणिहिता प्रयुक्ता॥३६॥ परिवारणं सर्वतो वरणीयतां संग्रहणीयतामिति यावत् ॥३७॥ समिधः समुद्दीपकानि ॥३८॥ समासक्ता निक्षिप्ताः प्रथमोत्पतितेषु उक्षणेनाढ्यतां गतेषु । अनार्याः अकुलीनाः ॥ ४२ ॥ यत्र देशेषु अवशादेशाः अवशैरपराधीनैः अप्रतिष्ठितैरादेशः आज्ञा येषु ते तथा । अवशा अनधिष्ठिता देशा मण्डलानि । अवशा राजन्निति च पठन्ति ॥ ४३ ॥

[सर्व०] नचानर्थेषु युज्यते न संबध्यते ॥ ३१ ॥ नचेद्धनलाभाय बुद्धिः ( कथं तत् ) प्राप्यते इत्याह—लोकपर्यायेति । लोकयोरिहलोकपरलोकयोः पर्यायेण क्रमेण गमने सति यो वृत्तान्तो वार्ता तम् । एतादृशेन पुण्येन पापेन वा इतीह लोकपर्यायवृत्तान्तशब्दो दैवपरतया यथा कथंचित्कुसृष्टया व्याख्यातस्त ( दा ? दना ) दरणीयम् । यदि बुद्ध्या धनलाभस्तदा दैवाज्ञानेऽपि किम् । नहि दैवमज्ञातं न फलतीति ॥ ३३ ॥ अभिजनः कुलवान् ॥ ३४ ॥ अविसंवादनमवञ्चनम् । समयस्य मर्यादायाः स्वपरकृतायाः । आवर्तयन्ति परानप्यात्मीयान् कुर्वन्ति । भूतानि प्राणिनः । सम्यक्प्रणिहिता प्रयुक्ता ॥ ३६ ॥ परिवारणं परिवारान् भृत्यादीन् ॥ ३७ ॥ शमः क्रोधाभावः । दम इन्द्रियनिग्रहः ॥ ३८ ॥ असंविभागी अन्येभ्योऽदत्त्वा स्वयम्भुञ्जानः ॥ ३९ ॥ येषु दुष्टेषु कोपेन दूषितेषु ॥४१॥ समासक्ताः आयत्तीकृताः ॥ ४२ ॥

[ लक्ष्मा० ] आवर्तयन्ति भूतानीत्यत्र आवर्तयन्ति पराङ्मुखान्यपि स्वाभिमुखीकुर्वन्ति ॥ ३६ ॥ यत्र स्त्री यत्र कितव इत्यत्र बालो मूर्खः ॥ ४३ ॥

---

४२ म. प्रथमोत्पतितेषु च । ये चानार्यसमापन्नाः ४३ म. ते मज्जन्त्यवशा देशाः । इति अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

प्रयोजनेषु ये सक्ता न विशेषेषु भारत ।
तानहं पण्डितान्मन्ये विशेषा हि प्रसङ्गिनः ॥ ४४ ॥
यं प्रशंसन्ति कितवा यं प्रशंसन्ति चारणाः ।
यं प्रशंसन्ति बन्धक्यो न स जीवति मानवः ॥४५॥

हित्वा तान्परमेष्वासान् पाण्डवानमितौजसः ।
आहितं भारतैश्वर्यं त्वया दुर्योधने महत् ॥ ४६ ॥
तं द्रक्ष्यसि परिभ्रष्टं तस्मात्त्वमचिरादिव ।
ऐश्वर्यमदसंमूढं बलिं लोकत्रयादिव ॥ ४७ ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

---

## एकोनचत्वारिंशोऽध्यायः ३९

विदुरेण धृतराष्ट्रं प्रति नीत्युपदेशः ॥ १ ॥

**धृतराष्ट्र उवाच—**

अनीश्वरोऽयं पुरुषो भवाभवे
सूत्रप्रोता दारुमयीव योषा ।
धात्रा तु दिष्टस्य वशे कृतोऽयं
तस्माद्वद त्वं श्रवणे धृतोऽहम् ॥ १ ॥

**विदुर उवाच—**

अप्राप्तकालं वचनं बृहस्पतिरपि ब्रुवन् ।
लभते बुद्ध्यवज्ञानमवमानं च भारत ॥ २ ॥
प्रियो भवति दानेन प्रियवादेन चापरः ।
मन्त्रमूलबलेनान्यो यः प्रियः प्रिय एव सः ॥ ३ ॥

---

[ नील० ] ये भृत्याः विशेषा आधिक्यानि तेषु हि प्रदर्श्यमानेषु परस्परं स्वीयानामेव कलहप्रसङ्गान्मुख्यं प्रयोजनं नश्यतीति भावः । प्रसङ्गिनः प्रसङ्गः संघर्षस्तत्कारिणः ॥ ४४ ॥

इति श्रीनैल० उद्योग० भा०भा० अष्टात्रिंशोऽध्यायः॥ ३८ ॥

[ अर्जु० ] विशेषेषु अवान्तरदेशेषु एकविषयसक्तस्य विषयान्तरप्राप्तेरभावात् सामान्यनिष्ठस्य सामान्ये सर्वे विशेषाः सिध्यन्ति । तत्र हेतुर्विशेषा हीति । हि यस्मात्प्रसङ्गिनः सामान्यसिद्धौ प्रसङ्गात् सिद्धिभाजः ॥ ४४ ॥ कितवाः द्यूतकुशलाः, चारणा नर्तकाः, अपात्रे धनव्ययात् । बन्धक्यः कलिप्रसङ्गातिशयात् । एवंविधस्य जीवनमजीवनमेव ॥ ४५ ॥

इति श्रीमहाभारतटीकायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टात्रिंशोऽध्यायः॥ ३८ ॥

[ सर्व० ] प्रयोजनेषु प्रयोजनोपयोगिषु विशेषेषु अप्रयोजकतयायातविशेषेषु । यथा पुरुषसाध्येऽर्थे रूपवत्पुरुषान्वेषणम् । प्रसङ्गिनः अनवस्थाहेतवस्तेषामनवधित्वात् । यद्वा प्रयोजनमात्रे संभवति न तेषां विशेषेषु, ते हि प्रसङ्गिनः सामान्यसिद्धौ प्रसङ्गसिद्धिरित्यर्थः ॥ ४४ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामष्टात्रिंशोऽध्यायः ॥ ३८ ॥

[ लक्षा० ] प्रयोजनेषु ये सक्ता इत्यत्र प्रयुज्यते एभिः स्वकार्यमिति प्रयोजनाः स्वकार्यकारिणः, विशिष्यन्त इति विशेषाः अवशिष्टजनाः ॥ ४४ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अष्टात्रिंशोऽध्यायः ॥ ३८ ॥

---

[ नील० ] अनीश्वरोऽयमिति । भवाभवे ऐश्वर्यानैश्वर्ये । दिष्टस्य दैवस्य । वदैव न तु मां दूषयेति भावः । धृतः धृतिमान् ॥ १ ॥ बुद्ध्यवज्ञानम् अवज्ञातबुद्धित्वम् ॥ २ ॥ मन्त्रबलेन मूलबलेन च प्रियकृत् प्रियो भवति स च दानाद्यभावे पुनरप्रियो भवति अहं तु न तथाऽतस्त्वया प्राप्तकाले मदुक्तेऽनादरो न कर्तव्य इति भावः ॥ ३ ॥

[ अर्जु० ] भवाभवे उत्पत्तिविनाशौ दारुमयी योषा सूत्रसंचारणवशात् अनुदिष्टस्य आदेशस्य । श्रवणे आकर्णनमात्रे नतु क्रियायां धृतोऽहमवस्थितोऽस्मि ॥ १ ॥ बुद्ध्यवज्ञानं मूर्खताम् ॥ २ ॥ प्रिय इत्यादि । अनैसर्गिकप्रियत्वे उपाधीनाह—मूलं वशीकरणभेषजं, मन्त्रोऽपि तद्विषयः, यः प्रियः स्वभावादिति शेषः । एवशब्दोऽप्रियत्वं व्यवच्छिनत्ति ॥ ३ ॥

[ सर्व० ] दिष्टस्यादिष्टस्य । धृत उद्यतः ॥ १ ॥ बुद्ध्यवज्ञानमवज्ञाबुद्धित्वम् ॥ २ ॥ मन्त्रो हुंफडादि, मूलमौषधादि, तद्बलेन तत्प्रभावेण । यस्तु स्वभावात् प्रियः स एव प्रियः । एवकारो भिन्नक्रमः ॥ ३ ॥

[ लक्षा० ] भवाभवे शुभाशुभे ॥ १ ॥ यः प्रियः प्रिय एव स इत्यत्र यः परमात्मा प्रियः । औपाधिकप्रियास्तु उपाध्यभावे अप्रिया अपि भवन्तीति भावः । अन्यः इन्द्रादिः ॥ ३ ॥

द्वेष्यो न साधुर्भवति न मेधावी न पण्डितः ।
प्रिये शुभानि कार्याणि द्वेष्ये पापानि चैव ह ॥४॥
उक्तं मया जातमात्रेऽपि राज-
न्दुर्योधनं त्यज पुत्रं त्वमेकम् ।
तस्य त्यागात्पुत्रशतस्य वृद्धि-
रस्यात्यागात्पुत्रशतस्य नाशः ॥ ५ ॥
न वृद्धिर्बहुमन्तव्या या वृद्धिः क्षयमावहेत् ।
क्षयोऽपि बहु मन्तव्यो यः क्षयो वृद्धिमावहेत ॥६॥
न स क्षयो महाराज यः क्षयो वृद्धिमावहेत् ।
क्षयः स त्विह मन्तव्यो यं लब्ध्वा बहु नाशयेत् ॥७॥
समृद्धा गुणतः केचिद्भवन्ति धनतोऽपरे ।
धनवृद्धान्गुणैर्हीनान्धृतराष्ट्र विवर्जय ॥ ८ ॥

**धृतराष्ट्र उवाच—**

सर्वं त्वमायतीयुक्तं भाषसे प्राज्ञसंमतम् ।
न चोत्सहे सुतं त्यक्तुं यतो धर्मस्ततो जयः ॥९॥

**विदुर उवाच—**

अतीव गुणसंपन्नो न जातु विनयान्वितः ।
सुसूक्ष्ममपि भूतानामुपमर्दमुपेक्षते ॥ १० ॥
परापवादनिरताः परदुःखोदयेषु च ।
परस्परविरोधे च यतन्ते सततोत्थिताः ॥ ११ ॥
सदोषं दर्शनं येषां संवासे सुमहद्भयम् ।
अर्थादाने महान्दोषः प्रदाने च महद्भयम् ॥१२॥
ये वै भेदनशीलास्तु सकामा निस्त्रपाः शठाः ।
ये पापा इति विख्याताः संवासे परिगर्हिताः ॥१३॥
युक्ताश्चान्यैर्महादोषैर्ये नरास्तान् विवर्जयेत् ।
निवर्तमाने सौहार्दे प्रीतिर्नीचे प्रणश्यति ॥ १४ ॥
या चैव फलनिर्वृत्तिः सौहृदे चैव यत्सुखम् ।
यतते चापवादाय यत्नमारभते क्षये ॥ १५ ॥
अल्पेऽप्यपकृते मोहान्न शान्तिमधिगच्छति ।
तादृशैः संगतं नीचैर्नृशंसैरकृतात्मभिः ॥ १६ ॥
निशम्य निपुणं बुद्ध्या विद्वान्दूराद्विवर्जयेत् ।
यो ज्ञातिमनुगृह्णाति दरिद्रं दीनमातुरम् ॥ १७ ॥
स पुत्रपशुभिर्वृद्धिं श्रेयश्चानन्त्यमश्नुते ।
ज्ञातयो वर्द्धनीयास्तैर्य इच्छन्त्यात्मनः शुभम् ॥१८॥
कुलवृद्धिं च राजेन्द्र तस्मात्साधु समाचर ।
श्रेयसा योक्ष्यते राजन् कुर्वाणो ज्ञातिसत्क्रियाम् १९
विगुणा ह्यपि संरक्ष्या ज्ञातयो भरतर्षभ ।
किं पुनर्गुणवन्तस्ते त्वत्प्रसादाभिकाङ्क्षिणः ॥ २० ॥
प्रसादं कुरु वीराणां पाण्डवानां विशांपते ।
दीयन्तां ग्रामकाः केचित्तेषां वृत्त्यर्थमीश्वर ॥ २१ ॥
एवं लोके यशः प्राप्तं भविष्यति नराधिप ।
वृद्धेन हि त्वया कार्यं पुत्राणां तात शासनम् ॥२२॥
मया चापि हितं वाच्यं विद्धि मां त्वद्धितैषिणम् ।
ज्ञातिभिर्विग्रहस्तात न कर्तव्यः शुभार्थिना ।
सुखानि सह भोज्यानि ज्ञातिभिर्भरतर्षभ ॥ २३ ॥

---

[ नील० ] द्वेष्ये इति । यो यस्य द्वेष्यस्तस्मिन् तद्दृष्ट्या साधुत्वादिकं सदपि नास्ति प्रिये त्वसदपि तद्दृष्ट्याऽस्तीति भावः ॥ ४ ॥ आयतीयुक्तम् उदर्के हितम् ॥ ९ ॥ पुत्रं त्यक्तुमशक्तेन दुष्टाः शकुन्यादयो वा त्याज्या इत्याशयेनाह—अतीवेति । कुलविनाशो नोपेक्षणीय इति भावः ॥ १० ॥ सौहार्दे मैत्रीहेतौ निवर्तमाने सति प्रीतिः फलनिर्वृत्तिः सुखं च प्रणश्यति स नीचोऽपवादाय यतते क्षये च यत्नमारभते शान्तिं च न गच्छतीति द्वयोः संबन्धः ॥ १४ ॥ १५ ॥ संगतं संबन्धम् ॥ १६ ॥ निशम्य विचार्य ॥ १७ ॥ शुभार्थिना ऐश्वर्यलिप्सुना ॥ २३ ॥

[ अर्जु० ] साधुः कुशलकर्मा, मेधावी उपकारस्वान्, स्मरन् प्रिये शुभानि द्वेष्ये पापानि कुर्यादिति शेषः ॥ ४ ॥ आयतिरुत्तरकालः ॥ ९ ॥ अहं तु मन्ये किमायत्या यतो यस्मिन् धर्मः प्राग्भवीयस्ततस्तस्मिन् जयः । स्वभावगुणाः क्षमादयः सहजाः । विनयः शास्त्राऽऽहितो गुणः ॥ १० ॥ सदोषं दर्शनममङ्गलं येषां कुब्जकेकरादीनाम् । संवासे इति सहस्थितेः सुमहद्भयं प्राणभीतिः । अदाने दानाभावे किमपि प्रदाने स्वल्पं कुत्सितम् । आदत्तमिति दानादानयोर्यत् महद्भयं चित्ते दानादौ(?) ॥ १२ ॥ फलनिर्वृत्तिः सुखं च प्रणश्यतीत्यन्वयः ॥१५॥ निशम्य निश्चित्य ॥ १७ ॥

[ सर्व० ] द्वेष्यो न साधुः, साधुरपि । प्रिये त्वशुभान्यपि सर्वाणि शुभानि द्वेष्ये शुभानि पापानि, अतोऽश्रेयोऽहितवादित्वात् मा द्विषन्मन्त्रणेषु विश्वसि(षि?हि) त्वमित्यर्थः ॥४॥ आयतिरुदर्कस्तत्र युक्तमुचितम् । यतो धर्मस्ततो जयो धार्मिकाः पाण्डवा यद्यपि तथापि नोत्सह इत्यर्थः ॥ ९ ॥ स्वभावगुणाः करुणादयः । विनयः शास्त्राभ्यासे श्रद्धाबुद्धिः । उपमर्दं नाशम् ॥ १० ॥ परदुःखोदयेषु

---

१० म. स्वभावगुणसंपन्नो । म. ॰मवमर्दं प्रयोक्ष्यते । ११ म. संवादे । १४ म. विसर्जय । १५ म. चापकाराय । १७ म. निशाम्य ।

संभोजनं संकथनं संप्रीतिश्च परस्परम् ।
ज्ञातिभिः सह कार्याणि न विरोधः कदाचन ॥२४॥
ज्ञातयस्तारयन्तीह ज्ञातयो मज्जयन्ति च ।
सुवृत्तास्तारयन्तीह दुर्वृत्ता मज्जयन्ति च ॥ २५ ॥
सुवृत्तो भव राजेन्द्र पाण्डवान्प्रति मानद ।
अधर्षणीयः शत्रूणां तैर्वृतस्त्वं भविष्यसि ॥ २६ ॥
श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।
दिग्धहस्तं मृग इव स एनस्तस्य विन्दति ॥ २७ ॥
पश्चादपि नरश्रेष्ठ तव तापो भविष्यति ।
तान्वा हतान्सुतान्वाऽपि श्रुत्वा तदनुचिन्तय ॥२८॥
येन खट्वां समारूढः परितप्येत कर्मणा ।
आदावेव न तत्कुर्यादध्रुवे जीविते सति ॥ २९ ॥
न कश्चिन्नापनयते पुमानन्यत्र भार्गवात् ।
शेषसंप्रतिपत्तिस्तु बुद्धिमत्स्वेव तिष्ठति ॥ ३० ॥
दुर्योधनेन यद्येतत्पापं तेषु पुरा कृतम् ।
त्वया तत्कुलवृद्धेन प्रत्यानेयं नरेश्वर ॥ ३१ ॥
तांस्त्वं पदे प्रतिष्ठाप्य लोके विगतकल्मषः ।
भविष्यसि नरश्रेष्ठ पूजनीयो मनीषिणाम् ॥ ३२ ॥
सुव्याहृतानि धीराणां फलतः परिचिन्त्य यः ।
अध्यवस्यति कार्येषु चिरं यशसि तिष्ठति ॥ ३३ ॥

---

तद्दुःखोदयनिमित्तं ये यतन्ते ॥ ११ ॥ तान् विवर्जयेदित्यर्थः ॥ १४ ॥ या फलनिर्वृत्तिस्तदुपकारादिना । सौहृदे सौहार्दे च यत्सुखं या प्रीतिः कृतार्थताबोधः तत्सर्वं सौहार्दे स्नेहे निवर्तमाने नश्यतीत्यन्वयः ॥ १५ ॥ निशम्य विचार्य । दीनं कृपाविषयम् ॥ १७ ॥

[ लक्षा० ] साधुः द्वेष्यो न भवति पण्डितोऽपि द्वेष्यो न भवति । प्रिये शुभानि कर्माणि ज्ञापकानि । द्वेष्ये तु पापानि ज्ञापकानि ॥ ४ ॥ निवर्तमाने सौभाग्य इत्यत्र निवर्तमाने स्वस्मान्निवर्तमाने नीते विनीते या फलनिर्वृत्तिः फलनिष्पत्तिः सौहृदे च यत्सुखं तच्च विनश्यतीति पूर्वेणान्वयः ॥ १४ ॥ स्वल्पेऽप्यपकृत इत्यत्र अपकृते अपकारे सति निपुणं तादृशैः संगतं निशम्येति संबन्धः ॥ १६ ॥

[ नील० ] दिग्धहस्तं विषाक्तबाणहस्तं स श्रीमान् एनस्तस्य ज्ञातेरवसादजं पापं विन्दति मृगवधजं पापं व्याध इवेत्यर्थः ॥ २७ ॥ खट्वां समारूढश्चिन्तागारं प्रविष्टः लोके आगन्तुं लज्जमान इत्यर्थः ॥ २९ ॥ न कश्चिदिति भार्गवात् शुक्रादन्यत्र नीतिशास्त्रकर्तारं शुक्रं विहाय अन्यः कश्चिदपि न अपनयते इति न, अपि तु सर्वोऽप्यपनयते अनीतिं करोति अतः यत् अतीतं तत् अतीतमेव शेषस्य तत्कालोचितस्य अर्थस्य प्रतिपत्तिः विचारः कर्तव्य इत्यर्थः ॥ ३० ॥ तदेवाह–दुर्योधनेनेति । प्रत्यानेयं प्रतिकर्तव्यम् ॥ ३१ ॥ प्रतीकारमेवाह–तानिति । प्रतिष्ठाप्य राज्यांशदानेन स्थिरीकृत्य ॥ ३२ ॥ धीराणां उपदेष्टॄणां सुव्याहृतानि वचनानि अध्यवस्यति निश्चयं करोति उत्तमफलं कर्मारभत इत्यर्थः ॥ ३३ ॥

[ अर्जु० ] दिग्धो विषलिप्तः शरो हस्ते यस्य तं विनाशहेतुं मृगो यथा विन्दति तथा सश्रीको ज्ञातिरवसीदतो ज्ञातेः पापं विन्दति ॥ २७ ॥ खट्वां समारूढः शोकाभिभवादुत्थातुं गन्तुं चाशक्त इत्यर्थः ॥ २९ ॥ भार्गवात् शुक्रात् अन्यत्र अन्यः कश्चित् पुमान्नापनयते नापराध्यति न किं त्वपराध्यत्येव । शुक्रस्तु कुबेरस्य धनापहारात् रुद्रेण भक्षितो दशवर्षसहस्राणि कुक्षौ स्थितः स्तुतिपरितुष्टया रुद्राण्या मोचितः ततः प्रभृति नापराध्यति । ततश्च त्वत्पुत्रिषु कृतापराधेषु शेषस्य करणीया(दन्य ?र्थ )स्य संप्रतिपत्तिः कौरवपाण्डवानामैकमत्येन संवित्तिर्बुद्धिमत्सु तिष्ठत्येव स्थितियोग्या भवत्येव ॥ ३० ॥ प्रत्यानेयं निवर्त्यम् ॥ ३१ ॥

[ सर्व० ] दिग्धहस्तं विषाक्तशरहस्तमासाद्य मृग इव यो ज्ञातिः श्रीमन्तमासाद्यावसीदति स श्रीमान् तस्यावसन्नस्य एनो विन्दति ॥ २७ ॥ खट्वां समारूढः खट्वामिव कार्यमधिरूढः ॥ २९ ॥ न कश्चिद्भार्गवाच्छुक्रादन्यत्र अन्यो नापनयते अनीतं न करोतीति न स एव तु नीतिशास्त्रपरत्वात् नापनयते तर्हि किमस्मादृशां नीतिशिक्षयेत्यत आह–शेषेति । शेषस्य तत्कालोचितस्य उत्तरप्रतीकारभूतस्य सुनयस्य संप्रतिपत्तिर्ज्ञानं [सा बुद्धिमात्मवत्करोति । अतोऽत्रापि तवापि ना?] ते शेषसंप्रतिपत्तिरर्द्धराज्यादिदानेनास्माभिर्बुद्ध्या निरूपितेत्यर्थः ॥ ३० ॥ तदेतदेवाह—दुर्योधनेनेत्यादि । प्रत्यानेयं प्रतिकर्तव्यम् ॥ ३१ ॥ फलतः फलवत्तया ॥ ३३ ॥

[ लक्षा० ] यो ज्ञातिरवसीदतीत्यत्र अवसीदति अवसादयति । विषाक्ते दिग्धलिप्तकावित्यभिधानात् विषलिप्तहस्तात्पुरुषात् मृगो मृत्योरिव ॥ २७ ॥ न कश्चिन्नापनयते पुमानन्यत्र भार्गवादित्यत्र कुलालो भार्गवश्चैव कुम्भकारो निगद्यत इत्यभिधानात् भार्गवात् कुम्भकारात् अन्यत्र कश्चित्पुमान् शेषं दत्तस्य नापनयते पुनः प्रत्या-

---

२४ ख. कथंचन । ३० ब. नापनयति । ब. बुद्धिमत्स्ववतिष्ठति । ३३ ख. चिन्तयन् । ब. सुव्यक्तानि ।

असम्यगुपयुक्तं हि ज्ञानं सुकुशलैरपि ।
उपलभ्यं चाविदितं विदितं चाननुष्ठितम् ॥ ३४ ॥
पापोदयफलं विद्वान् यो नारभति वर्धते ॥ ३५ ॥
यस्तु पूर्वकृतं पापमविमृश्यानुवर्तते ॥ ३६ ॥
अगाधपङ्के दुर्मेधा विषमे विनिपात्यते ।
मन्त्रभेदस्य षट् प्राज्ञो द्वाराणीमानि लक्षयेत् ॥३७॥
अर्थसंततिकामश्च रक्षेदेतानि नित्यशः ।
मदं स्वप्नमविज्ञानमाकारं चात्मसंभवम् ॥ ३८ ॥
दुष्टामात्येषु विश्रम्भं दूताच्चाकुशलादपि ।
द्वाराण्येतानि यो ज्ञात्वा संवृणोति सदा नृप ॥३९॥
त्रिवर्गाचरणे युक्तः स शत्रूनधितिष्ठति ।
न वै श्रुतमविज्ञाय वृद्धाननुपसेव्य वा ॥ ४० ॥
धर्मार्थौ वेदितुं शक्यौ बृहस्पतिसमैरपि ।
नष्टं समुद्रे पतितं नष्टं वाक्यमशृण्वति ॥ ४१ ॥
अनात्मनि श्रुतं नष्टं नष्टं हुतमनग्निकम् ।
मत्या परीक्ष्य मेधावी बुद्ध्या संपाद्य चासकृत् ॥४२॥
श्रुत्वा दृष्ट्वाऽथ विज्ञाय प्राज्ञैर्मैत्रीं समाचरेत् ।
अकीर्तिं विनयो हन्ति हन्त्यनर्थं पराक्रमः ॥४३॥

---

वृत्त्या न नयति । कुम्भकारो हि बहुतरब्राह्मणभोजनार्थमल्पद्रव्याश्रयात्प्राग्दत्तमेव भाण्डादिकं पुनर्नीत्वा नवीकृत्य विक्रीणातीति लोकप्रसिद्धम् । संप्रतिपत्तिः दत्तस्य पुनरपहारः ॥ ३० ॥

[ नील० ] सुकुशलैरप्युपयुक्तम् उपदिष्टं तत् ज्ञानम् असम्यगेव यतः उपलभ्यं ज्ञेयं तेन अविदितं न ज्ञातं विदितं ज्ञातं वा तत् नानुष्ठितम् । मदुक्तं त्वयि निष्फलमेवेति भावः ॥ ३४ ॥ यस्य श्येनादेः फलं ब्रह्मवधादि पापोदयं पापहेतुः तत्फलं फलहेतुभूतं कर्म यो नारभते स वर्धते ॥ ३५ ॥ अविमृश्य अविचार्य पापमेवानुवर्तते सततं करोति ॥ ३६ ॥ पङ्के नरके ॥ ३७ ॥ अर्थसन्ततिः अर्थानामविच्छेदेन वृद्धिः तत्कामः । मदं सुरापानजं चित्तवैक्लव्यम् । स्वप्नं निद्राम् । अविज्ञानं परकीयगुप्तचारादेरज्ञानम् । आत्मसंभवम् आकारं नेत्रवक्त्रविकारादिकम् । तावतैव परदूता मन्त्रमुन्नयन्ति ॥ ३८ ॥ मन्त्रभेदस्य द्वाराणि संवृणोति पिदधाति ॥ ३९ ॥ श्रुतं शास्त्रम् ॥ ४० ॥ मत्या मननेन युक्तिभिरनुचिन्तनेन । जात्येति पाठे कुलीनत्वेन । बुद्ध्या स्वानुभवेन संपाद्य कार्ययोग्यतां निश्चित्य ॥ ४२ ॥ श्रुत्वा परतः, दृष्ट्वा स्वयम् आकृत्या ज्ञात्वा विज्ञाय पुनःपुनर्विशेषेण ज्ञात्वा प्राज्ञताम् ॥ ४३ ॥

[ अर्जु० ] असम्यग् इत्यादि । न्यायेन फलं प्राप्यापि विदितं तदुपदेशकशास्त्रात् सम्यग्ज्ञातमपि अनुष्ठितं यत्नेनापि असम्यगुपयुक्तत्वादविदितमेवेत्यर्थः ॥ ३४ ॥ तत्पापोदयफलं चरति संवर्धते ॥ ३५ ॥ यस्तु पूर्वकृतं मिथ्यादिपापं पूर्वकृतम् । सेवके सेव्येन सेव्ये वा सेवकेन अविमृश्यानुवर्तते पुनः सेवते सोऽन्यकृतेऽपराधे त्वया कृत इति तेन सेव्येन पात्यते ॥ ३६ ॥ सन्ततिः संघटनम् । मदं सुराप्रभवं, स्वप्नं कदाचिन्मन्त्रस्य प्रलापेन श्रवणात् । अवज्ञानं मन्त्रसहायकारिणाम् आकारं व्यञ्जकं भ्रूक्षेपादिकम् ॥ ३८ ॥ विश्रम्भं विश्वासम् ॥ ३९ ॥ अधितिष्ठति उपरि वर्तते । श्रुतं शास्त्रम् ॥ ४० ॥ अनात्मनि मूढे जात्या उत्तममध्यमया । मत्येति च पाठः । संपाद्य एवं वयमिति निश्चित्य ॥४२॥ श्रुत्वा आप्तेभ्यो गुणागुणाविति शेषः अवृत्तिं वर्तनाभावम् ॥ ४३ ॥

[ सर्व० ] आस्तां धीरैः संदेशकरणम्, मन्त्रिभिर्दुर्नये कारितेऽपि स्वयं प्रतिकर्तुं युज्यत इत्याह—असम्यगुपयुक्तं हीति । असम्यक्तया ज्ञानमुपयुक्तं जनितं स्वकुशलैरात्ममतिभिर्भ्रमाद्विपरीतफलमेव हि तत्साधनतया ज्ञापितं स्वयमुपलभ्य ज्ञात्वापि विदितमसम्यक्तया पश्चादनुष्ठितं कृतं सत् विदितमसम्यक्तया तत्पापोदयं फलं यस्य तादृशस्तथाफलदर्शनात् निश्चित्य यो नाचरति पुनः न करोति यस्तु पूर्वकृतमेकदा कृतं पापं पापोदयत्वात् । कर्म तादृक्फलताया अविमृश्यानुवर्तते ॥ ३४ ॥ ३६ ॥ तत्र अगाधपङ्के अनुत्तरणीयापाये ॥ ३७ ॥ अर्थसन्ततिरर्थोत्पत्तिः । एवं स्वप्नोऽवज्ञानं किमेतत् किमेतत्प्रकीर्तनेन भविष्यतीति । आकारं मुखविकारादिसूचकम् ॥ ३८ ॥ अधितिष्ठत्यभिभवति श्रूयत इति श्रुतं शास्त्रम् ॥ ४० ॥ आत्मा बुद्धिः, अनात्मनि अबुद्धौ । जात्या परीक्ष्य मन्त्रिणम्, अयमसज्जातो भवति न वेति । मत्येतिपाठे मतिर्मतमनुमानं तया कार्यं परीक्ष्य तत्तस्य विचाररूपं परीक्ष्यरूपत्वात् । बुद्ध्या प्रत्यक्षेण फलाद्युपलम्भेन संपाद्य उपपाद्य उपपन्नमेतन्न मिथ्येति निश्चित्य ॥ ४२ ॥ एवमर्थमित्यत्रोपमानमुक्त्वा प्राप्तवाक्येनापि निश्चयं दर्शयति । श्रुत्वाऽऽप्तेभ्यः । तत्रापि फलादि कचिद्दृष्ट्वा सर्वादिनाप्तद्वारावधारणात् । पश्चाद्विज्ञाय कार्यत्वेन निश्चित्य प्राज्ञैः समं मैत्री मंत्रणसाचिव्यम् । अवृत्तिं जीवनोपयुक्तार्थाभावम् ॥ ४३ ॥

---

३४ ज.स्वकुश । ज.उपलभ्य । ३६ ज. विमृज्या° ३७ ख.सोऽन्यापराधदुमे° ४० ज. त्रिवर्गंव° । ४२ ज. जात्या । ४३ ख. मन्त्रै । ज. ख. भवृत्तिं ।

हन्ति नित्यं क्षमा क्रोधमाचारो हन्त्यलक्षणम् ।
परिच्छदेन क्षेत्रेण वेश्मना परिचर्यया ॥ ४४ ॥
परीक्षेत कुलं राजन् भोजनाच्छादनेन च ।
उपस्थितस्य कामस्य प्रतिवादो न विद्यते ॥ ४५ ॥
अपि निर्मुक्तदेहस्य कामरक्तस्य किं पुनः ।
प्राज्ञोपसेविनं वैद्यं धार्मिकं प्रियदर्शनम् ॥ ४६ ॥
मित्रवन्तं सुवाक्यं च सुहृदं परिपालयेत् ।
दुष्कुलीनः कुलीनो वा मर्यादां यो न लङ्घयेत् ॥४७॥
धर्मापेक्षी मृदुर्ह्रीमान् स कुलीनशताद्वरः ।
ययोश्चित्तेन वा चित्तं निभृतं निभृतेन वा ॥ ४८ ॥
समेति प्रज्ञया प्रज्ञा तयोर्मैत्री न जीर्यति ।
दुर्बुद्धिमकृतप्रज्ञं छन्नं कूपं तृणैरिव ॥ ४९ ॥
विवर्जयीत मेधावी तस्मिन्मैत्री प्रणश्यति ।
अवलिप्तेषु मूर्खेषु रौद्रसाहसिकेषु च ॥ ५० ॥
तथैवापेतधर्मेषु न मैत्रीमाचरेद्बुधः ।
कृतज्ञं धार्मिकं सत्यमक्षुद्रं दृढभक्तिकम् ॥ ५१ ॥
जितेन्द्रियं स्थितं स्थित्यां मित्रमत्यागि चेष्यते ।
इन्द्रियाणामनुत्सर्गो मृत्युनाऽपि विशिष्यते ॥ ५२ ॥
अत्यर्थं पुनरुत्सर्गः सादयेद्दैवतानपि ।
मार्दवं सर्वभूतानामनसूया क्षमा धृतिः ॥ ५३ ॥
आयुष्याणि बुधाः प्राहुर्मित्राणां चाविमानना ।
अपनीतं सुनीतेन योऽर्थं प्रत्यानिनीषते ॥ ५४ ॥
मतिमास्थाय सुदृढां तदकापुरुषव्रतम् ।
आयत्यां प्रतिकारज्ञस्तदात्वे दृढनिश्चयः ॥ ५५ ॥
अतीते कार्यशेषज्ञो नरोऽर्थैर्न प्रहीयते ।
कर्मणा मनसा वाचा यदभीक्ष्णं निषेवते ॥ ५६ ॥
तदेवापहरत्येनं तस्मात्कल्याणमाचरेत् ।
मङ्गलालम्भनं योगः श्रुतमुत्थानमार्जवम् ॥ ५७ ॥
भूतिमेतानि कुर्वन्ति सतां चाभीक्ष्णदर्शनम् ।
अनिर्वेदः श्रियो मूलं लाभस्य च शुभस्य च ॥५८॥

---

[नील० ] परिच्छदः भोग्यवस्तुसामग्री क्षेत्रेण जन्मस्थानेन कुग्रामवासिषु प्रायेण विवेकाभावात् परिचर्यया आचारेण ॥ ४४ ॥ वैद्यं विद्यावन्तम् ॥ ४६ ॥ चित्तं ज्ञानमात्रं निभृतं गूढाचारप्रवृत्तं मन्त्रयन्त्रादि प्रज्ञा विशेषतोऽर्थोन्नयनक्षमता ॥ ४८ ॥ रौद्राः कोपनाः साहसिकाः अविमृश्यकारिणस्तेषु ॥ ५० ॥ इन्द्रियाणामुत्सर्गो विषयेषु प्रवृत्तिः अनुत्सर्गो विषयेभ्यो निवृत्तिः सा मृत्युतुल्या दुरनुष्ठेयेत्यर्थः ॥ ५२ ॥ आयुष्याणि आयुःकराणि अपनीतमन्यायेन नाशितम् ॥ ५४ ॥ आयत्यामागामिनि काले दुःखस्य प्रतीकारज्ञः तदात्वे वर्तमाने दृढनिश्चयः भोगं विना प्राप्तस्य दुःखस्य नाशो नास्तीति ज्ञात्वा तत्संबन्धेऽपि नोत्तपति ॥ ५५ ॥ मङ्गलानां दधिदूर्वागवादीनामालम्भनं स्पर्शः योगः सहायसंपत् उत्थानमुद्यमः ॥ ५७ ॥ अनिर्वेदः उद्योगात् अनुपरमः ॥ ५८ ॥

[ अर्जु० ] परिच्छदेन परिवारेण । क्षेत्रेण देशेन ॥ ४४ ॥ [ तत् उपसेवनं च ] वैद्यं वेदेन व्यवहरन्तम् ॥ ४६ ॥ नैभृतं निश्चलता ॥ ४८ ॥ अवलिप्तेषु अहंकारिषु, रौद्राः कोपनाः, साहसिका अपरामृष्यकारिणः ॥ ५० ॥ तेषु अत्यागि आपद्यपि अत्यजनशीलम् अनुत्सर्गोऽप्रेरणं न विशिष्यते । इन्द्रियप्रेरणे मृत्यौ च शब्दादीनां विषयाणामग्रहणसंभवात् ॥ ५२ ॥ अत्यर्थं रागातिशयेन प्रेरणातिशयः ॥ ५३ ॥ अपनीतं नयादपगतम् ॥ ५४ ॥ आयत्यामुत्तरकाले । तदात्वे कार्यारम्भकाले कर्तव्यमेवेति दृढनिश्चयः ॥ ५५ ॥ अतीते निष्पन्ने कार्यशेषज्ञोऽस्मिन् कृते इदं भावि प्रयोजनम् ॥ ५६ ॥ हरति तन्मयतया एनं निषेवकम् । मङ्गलालम्भनं दध्यक्षतादिबन्धनं योग उपायज्ञता । श्रुतं शास्त्रप्रेरणम् ॥ ५७ ॥ अनिर्वेदः कार्यतत्परता ॥ ५८ ॥

[ सर्व० ] परिच्छेदः ज्ञानं वा । परिचर्या परितश्चरणं आचारः पित्रादिदर्शनेनात्यन्तनिर्धनतानिरासः । तादृशस्य किञ्चिद्गृहीत्वा भेदकरणस्य संभवात् ॥ ४४ ॥ वैद्यं विद्यावन्तम् ॥ ४६ ॥ नैभृत्यं गूढाकारप्रवृत्तिता । चित्तं ज्ञानमात्रम् ॥४८॥ प्रज्ञा परीक्षाकारा बुद्धिः । समेति समतामेति अकृतप्रज्ञं कृतघ्नम् ॥ ४९ ॥ रौद्रेषु कोपनेषु साहसिकेषु अविमृश्यकारिषु ॥५०॥ इन्द्रियाणामनुत्सर्गोऽत्यन्तं विषयेभ्यो निवृत्तिः । अतो मृत्युरवशिष्यतेऽतो जीवताऽशक्यः अत्यतमुत्सर्गोप्यवसादयतीति क्रमेण निवर्तनं कार्यमित्यर्थः । क्वचिन्मृत्युनाऽपि विशिष्यते इति पाठस्तत्र पञ्चम्यर्थे तृतीया ॥ ५२ ॥ अपनीतं अपनयेन नाशितम् ॥ ५४ ॥ आयत्यामागामिनि सुखे दुःखे वा प्रतिकारज्ञः । प्रतिकारः कार्यशेषः शेषे संप्रतिपत्तिरित्यत्र दर्शितः ॥ ५५ ॥ अपहरति जयति । योग उद्योगः । उत्थानं प्राप्ते काले कार्यारम्भः । आर्जवं कौटिल्याभावः ॥ ५७ ॥ अनिर्वेदः शोकाभावः, प्रारब्धस्य शीघ्रफलादर्शनेऽप्यत्यागो वा ॥ ५८ ॥

[ लक्षा० ] ब्रह्मचर्यया ब्रह्मचर्यधर्मेण, वेदाभ्यासेन वा

---

४६–४७ ज. उत्तरार्धं पूर्वार्धे न स्तः । ज. राजोप° । ४८ ख. शनैर्वरः । ज. वृत्तेन वा वृत्तं नैभृत्यं । ४९ ख. मकृतात्मानं ।

महान् भवत्यनिर्विण्णः सुखं चानन्त्यमश्नुते ।
नातः श्रीमत्तरं किंचिदन्यत्पथ्यतमं मतम् ॥ ५९ ॥
प्रभविष्णोर्यथा तात क्षमा सर्वत्र सर्वदा ।
क्षमेदशक्तः सर्वस्य शक्तिमान् धर्मकारणात् ॥
अर्थानर्थौ समौ यस्य तस्य नित्यं क्षमा हिता॥६०॥
यत्सुखं सेवमानोऽपि धर्मार्थाभ्यां न हीयते ।
कामं तदुपसेवेत न मूढव्रतमाचरेत् ॥ ६१ ॥
दुःखार्तेषु प्रमत्तेषु नास्तिकेष्वलसेषु च ।
न श्रीर्वसत्यदान्तेषु ये चोत्साहविवर्जिताः ॥६२॥
आर्जवेन नरं युक्तमार्जवात्सव्यपत्रपम् ।
अशक्तं मन्यमानास्तु धर्षयन्ति कुबुद्धयः ॥ ६३ ॥
अत्यार्यमतिदातारमतिशूरमतिव्रतं ।
प्रज्ञाभिमानिनं चैव श्रीर्भयान्नोपसर्पति ॥ ६४ ॥
न चातिगुणवत्स्वेषा नात्यन्तं निर्गुणेषु च ।
नैषा गुणान्कामयते नैर्गुण्यान्नानुरज्यते ॥ ६५ ॥
उन्मत्ता गौरिवान्धा श्रीः क्वचिदेवावतिष्ठते ।
अग्निहोत्रफला वेदाः शीलवृत्तफलं श्रुतम् ॥६६॥
रतिपुत्रफला दारा दत्तभुक्तफलं धनम् ।
अधर्मोपार्जितैरर्थैर्यः करोत्यौर्ध्वदेहिकम् ॥ ६७ ॥
न स तस्य फलं प्रेत्य भुङ्क्तेऽर्थस्य दुरागमात् ।
कान्तारे वनदुर्गेषु कृच्छ्रास्वापत्सु संभ्रमे ॥ ६८ ॥
उद्यतेषु च शस्त्रेषु नास्ति सत्ववतां भयम् ।
उत्थानं संयमो दाक्ष्यमप्रमादो धृतिः स्मृतिः॥६९॥
समीक्ष्य च समारम्भा विद्धि मूलं भवस्य तु ।
तपो बलं तापसानां ब्रह्म ब्रह्मविदां बलम् ॥७०॥
हिंसा बलमसाधूनां क्षमा गुणवतां बलम् ।
अष्टौ तान्यव्रतघ्नानि आपो मूलं फलं पयः ॥७१॥
हविर्ब्राह्मणकाम्या च गुरोर्वचनमौषधम् ।
न तत्परस्य संदध्यात् प्रतिकूलं यदात्मनः ॥ ७२ ॥

॥ ४४ ॥ इन्द्रियाणामनुत्सर्ग इत्यत्र अनुत्सर्गः विषयेष्वप्रेषणममृत्युना मृत्युरहितमोक्षेण ॥ ५२ ॥ अपनीतं सुनीतेनेत्यत्र अपनीतमविनीतं पुरुषं सुनीतेन सुनयेन अर्थं प्रति प्रयोजनं प्रति आनिनीषति ॥ ५४ ॥

[ नील० ] तस्य मध्यमस्य यो न शक्तः नाप्यशक्तस्तस्येत्यर्थः सर्वेषां क्षमा श्रेयस्करीत्यर्थः ॥ ६० ॥ मूढव्रतमाहारादौ अतिनिर्बन्धम् ॥ ६१ ॥ अदान्तेषु लिप्साहीनेषु ॥ ६२ ॥ सव्यपत्रपं सलज्जम् ॥ ६३ ॥ अत्यार्यमत्यन्तमकुटिलम् ॥ ६४ ॥ और्ध्वदेहिकं परलोकसाधनं यज्ञदानादि ॥ ६७ ॥ संयमः इन्द्रियाणां निग्रहः ॥ ६९ ॥ भवस्य ऐश्वर्यस्य ॥ ७० ॥ ब्राह्मणकाम्या ब्राह्मणस्य इच्छा तदाज्ञयेत्यर्थः । संदध्यात् कुर्यात् ॥ ७२ ॥

[ अर्जु० ] महान् महाफलभाजनम ॥ ५९ ॥ प्रभविष्णौ समर्थे । क्षमाशब्दं निरूपयति अर्थानर्थावित्यादि । यथा अर्थे यथा प्रतीकारे बुद्ध्यनुत्पादस्तथाऽऽक्रोशादावनर्थेऽपि ॥ ६० ॥ सव्यपत्रपं सलज्जम् ॥ ६३ ॥ अत्यार्यमतिपण्डितं मामयं विचारेणासारां करिष्यतीति, दानेन मां तुच्छीकरिष्यतीति । अतिशूरं पतितेऽस्मिन्निराश्रया स्यामिति, अतिव्रतं निरुपभोगा स्यामिति । प्रज्ञाभिमानिनं (इति साम्यं)दुराज्ञादानेन नाशयिष्यतीति ॥६४॥ शेषवतां आयुःशेषवतां भयं मरणं, संयमोऽतिव्ययात् ॥६९॥ भवस्य विभूतेः ब्रह्म वेदः ॥ ७० ॥ आपत्पतितस्य व्रतिनः कृतानि चाव्रतघ्नानि मूलफलपयसामेकवर्गीकरणादेव षट्संख्या ॥ ७१ ॥ हविर्हुतशेषः ॥ ब्राह्मणकाम्या तदिच्छा । अष्टाविति च यथाश्रुत्या पठन्ति । संदध्यात् संयोजयेत् ॥७२॥

[ सर्व० ] अर्थोऽर्थसाधनशक्तिः अर्थसाधनताया अशक्तिरनर्थः । तेन समशक्त्यशक्तेर्मध्यमस्यापि क्षमा हितेत्यर्थः ॥ ६० ॥ न मूढव्रतमत्यन्तं सुखपरित्यागेनैव व्रतसिद्धिरिति मूढस्य व्रतम् ॥ ६१ ॥ मृदुत्वात् कृपालुत्वात् ॥६३॥ अत्यार्यमत्यन्ताकुटिलम् । आर्यदात्रोर्दानेन अक्षयतया तु वसति । अतिशूरातिव्रतयोस्तेजोसहिष्णुत्वात् प्रज्ञाभिमानिन्यभिमानद्वेषात् ॥६४॥ वृत्तमाचारः ॥६६॥ कान्तारं शून्यवत् । कृच्छ्रास्वापत्सु रोगादौ । संभ्रमे दुर्भिक्षादौ ॥ ६८ ॥ शेषवतामायुःशेषवताम् । संयम इन्द्रियाणाम् ॥ ६९ ॥ भवस्य भूतेः । ब्रह्म वेदः ॥ ७० ॥ षडेतान्यव्रतघ्नानि भुक्तानि ॥ ७१ ॥ हविर्यज्ञशेषः । तथा औषधं तच्च गुरोर्वचनमुच्यते इति गुरुवचनम्, गुरूक्तमनुमतमित्यर्थः । तथा ब्राह्मणकाम्या ब्राह्मणेच्छया तदनुज्ञयेति यावत् । इच्छामात्रे षु यः(?) काम्या अप्रत्ययः सुपां सुलुगिति तृतीयालोपः । तदेवं ब्राह्मणगुर्वनुमतमिति विशिष्टमौषधमेकमिति यत् । अष्टौ तानीति पाठे केनचिदनुमतमप्यौषधं न दुष्यतीति तात्पर्येण । औषधमात्रस्य भेदाभावाष्टत्वविरोध इति मन्तव्यम् । ब्राह्मणानुमत्यादेस्तु पृथग्वचनं तु तत्र सत्यत्यन्तदोषाभावः औषधमात्रे तु दोषाल्पतेति दर्शयितुम् । संदध्यात् संध्यायेत् ॥ ७२ ॥

[ लक्षा० ] मार्दवात्सव्यपत्रपमित्यत्र अपगता त्रपा

६२ ज. दुःखार्तेष्वप्रशान्तेषु । ६४ख. चाविमानिताम् । ६५ ज. नैवाति । ज. उत्तरार्धं नास्ति । ६७ ज. नारी । ६९ ज. शेषवतां ।

संग्रहेणैष धर्मः स्यात्कामादन्यः प्रवर्तते ।
अक्रोधेन जयेत्क्रोधमसाधुं साधुना जयेत् ॥ ७३ ॥
जयेत्कदर्यं दानेन जयेत्सत्येन चानृतम् ।
स्त्रीधूर्तकेऽलसे भीरौ चण्डे पुरुषमानिनि ॥ ७४ ॥
चौरे कृतघ्ने विश्वासो न कार्यो न च नास्तिके ।
अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ॥ ७५ ॥
चत्वारि संप्रवर्धन्ते कीर्तिरायुर्यशोबलम् ।
अतिक्लेशेन येऽर्थाः स्युर्धर्मस्यातिक्रमेण वा ॥७६॥
शत्रोर्वा प्रणिपातेन मा स्म तेषु मनः कृथाः ।
अविद्यः पुरुषः शोच्यः शोच्यं मैथुनमप्रजम् ॥७७॥
निराहाराः प्रजाः शोच्या शोच्यं राष्ट्रमराजकम् ।
अध्वा जरा देहवतां पर्वतानां जलं जरा ॥ ७८ ॥
असंभोगो जरा स्त्रीणां वाक्शल्यं मनसो जरा ।
अनाम्नायमला वेदा ब्राह्मणस्याव्रतं मलम् ॥७९॥
मलं पृथिव्या वाह्लीकाः पुरुषस्यानृतं मलम् ।
कौतूहलमला साध्वी विप्रवासमलाः स्त्रियः ॥८०॥
सुवर्णस्य मलं रूप्यं रूप्यस्यापि मलं त्रपु ।
ज्ञेयं त्रपुमलं सीसं सीसस्यापि मलं मलम् ॥८१॥
न स्वप्नेन जयेन्निद्रां न कामेन जयेत्स्त्रियः ।
नेन्धनेन जयेदग्निं न पानेन सुरां जयेत् ॥ ८२ ॥
यस्य दानजितं मित्रं शत्रवो युधि निर्जिताः ।
अन्नपानजिता दाराः सफलं तस्य जीवितम् ॥८३॥
सहस्रिणोऽपि जीवन्ति जीवन्ति शतिनस्तथा ।
धृतराष्ट्र विमुञ्चेच्छां न कथंचिन्न जीव्यते ॥ ८४ ॥
यत्पृथिव्यां व्रीहियवं हिरण्यं पशवः स्त्रियः ।
नालमेकस्य तत्सर्वमिति पश्यन्न मुह्यति ॥ ८५ ॥
राजन्भूयो ब्रवीमि त्वां पुत्रेषु सममाचर ।
समता यदि ते राजन् स्वेषु पाण्डुसुतेषु वा ॥८६॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

---

अपत्रपा । सा न भवतीति व्यपत्रपा । सम्यग्लज्जेत्यर्थः तयासहितम् ॥ ६३ ॥ आर्यानतिक्रम्य वर्तमानः अत्यार्यः तं व्रतमतिक्रम्य वर्तमानः अतिव्रतः तम् ॥ ६४ ॥ यः करोत्यौर्ध्वदैहिकमित्यत्र और्ध्वदैहिकं देहादूर्ध्वं विद्यमान-स्वर्गादिफलसाधनं कर्म ॥ ६७ ॥ न तत्परस्य संदध्यादित्यत्र तत्परस्य उक्ताष्टविधधर्मपरस्य विषये ॥ ७२ ॥

[ नील० ] अन्योऽधर्मः कामात् इच्छया साधुना कर्मणा ॥ ७३ ॥ स्त्रीधूर्तके स्त्रियां धूर्ते चेत्येकवद्भावः ॥ ७४ ॥ वाक्शल्यं दुर्वचनम् । अनाम्नायः अनभ्यास एव मलं येषाम् ॥ ७९ ॥ बाल्हीकाः । पञ्चानां सिन्धुषष्ठानां नदीनां यत्र संगमः । बाल्हीका नाम ते देशाः । विप्रवासः प्रवासः ॥८०॥ स्वप्नेन शयनेन ॥८२॥ यदि ते स्वेषु पुत्रेषु पाण्डवेषु च समताऽस्ति तर्हि सर्वेषु सममेवाचर यथाभागं राज्यं तेभ्यो देहीत्यर्थः ॥ ८६ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[ अर्जु० ] संग्रहेण संक्षेपेण क्रोधादयः शब्दाः कर्तरि भावे च योज्याः ॥ ७३ ॥ स्त्रीधूर्तके स्त्रियां धूर्तके च अथवा कुट्टनात् स्त्री चञ्चलत्वात्, धूर्तको वञ्चकत्वात्, कुट्टने द्रव्यलोभात्, अलसे अननुष्ठानात्, भीरौ भयात्, चण्डे क्रोधात्, पुरुषमानिनि गर्वात् ॥ ७४ ॥ चौरेऽनृतमयत्वात्, कृतघ्ने उपकृतनाशकत्वात्, नास्तिकेऽधार्मिकत्वात् भङ्गसंभवात् एषु विश्वासो न कार्यः ॥ ७५ ॥ अनाम्नायोऽनभ्यासः ॥ ७९ ॥ वाहीका स्तद्देशोद्भवा ब्राह्मणाः । ते च दास्यामीति लोभयित्वा न दातारः । विप्रवासो भर्तारं विहाय स्थितिः ॥८०॥ त्रपू रङ्गम् ॥८१ ॥ स्वप्नेन निद्रया कामेनोपभोगेन ॥ ८२ ॥ अलं पर्याप्तये आकाङ्क्षानिवृत्तय इति यावत् ॥ ८५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि
एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[ सर्व० ] संग्रहेण संक्षेपेण । कामादिच्छायां सत्यामेतावदेव तु पर्याप्तमित्यर्थः । अक्रोधेन क्रोधं क्रोद्धारम् । साधुना साधुत्वेन ॥ ७३ ॥ अनृतमनृतवादिनम् । स्त्री च धूर्तश्च स्त्रीधूर्तकम् ॥ ७४ ॥ आश्वासस्तद्वचनविश्वासः, स्त्रीणां स्वभावात्, धूर्तानां द्रव्यलोभात्, अलसस्य नियोगभयात्, भीरोर्भयमात्रात्, चण्ड—पुरुषमानिनोः क्रोधस्तुतिपरत्वात्, चौरे द्रव्यलोभात्, कृतघ्ननास्तिकयोश्च स्वभावादनृतवादित्वात् ॥ ७५ ॥ वाक्शल्यं दुर्वचनम्, तेन मनसश्चलत्वसंभवात् । अनाम्नायोऽनभ्यासः ॥ ७९ ॥ वाहीकाः कर्षकाः, वाहीकदेशोद्भवा वा । विप्रवासः प्रातिबोधेन(?) वासः ॥ ८० ॥ स्वप्नेन निद्रासेवया । कामेन कामोपभोगेन ॥ ८२ ॥ यदि तव पितृव्यत्वेन समभावो वस्तुतोऽस्ति तदा सममाचर प्रवर्तस्व ॥ ८६ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायामूनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[ लक्षा० ] अनाम्नायमला वेदा इत्यत्र म्ना अभ्यासे

---

७५ ज. वाश्वासो । ७६ ज. संप्रवर्तन्ते । ८० ज. वाह्लीकाः । ८५ म. यत्रं यच्च किंचिदजाविकम् । इति एकोनचत्वारिंशोऽध्यायः ॥३९॥

## चत्वारिंशोऽध्यायः ४०

विदुरेण धृतराष्ट्रं प्रति नीतिकथनपूर्वकं युधिष्ठिराय राज्यदानोपदेशः ॥ १ ॥

**विदुर उवाच—**

योऽभ्यर्चितः सद्भिरसज्जमानः
करोत्यर्थं शक्तिमहापयित्वा ।
क्षिप्रं यशस्तं समुपैति सन्त-
मलं प्रसन्ना हि सुखाय सन्तः ॥ १ ॥
महान्तमप्यर्थमधर्मयुक्तं
यः संत्यजत्यनपाकृष्ट एव ।
सुखं सुदुःखान्यवमुच्य शेते
जीर्णां त्वचं सर्प इवावमुच्य ॥ २ ॥
अनृते च समुत्कर्षो राजगामि च पैशुनम् ।
गुरोश्चालीकनिर्बन्धः समानि ब्रह्महत्यया ॥ ३ ॥
असूयैकपदं मृत्युरतिवादः श्रियो वधः ।
अशुश्रूषा त्वरा श्लाघा विद्यायाः शत्रवस्त्रयः ॥ ४ ॥
आलस्यं मदमोहौ च चापलं गोष्ठिरेव च ।
स्तब्धता चाभिमानित्वं तथाऽत्यागित्वमेव च ॥५॥
एते वै सप्त दोषाः स्युः सदा विद्यार्थिनां मताः ।
सुखार्थिनः कुतो विद्या नास्ति विद्यार्थिनः सुखम् ६॥
सुखार्थी वा त्यजेद्विद्यां विद्यार्थी वा त्यजेत्सुखम् ।
नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः ।
नान्तकः सर्वभूतानां न पुंसां वामलोचना ॥ ७ ॥
आशा धृतिं हन्ति समृद्धिमन्तकः
क्रोधः श्रियं हन्ति यशः कदर्यता ।
अपालनं हन्ति पशूंश्च राज-
न्नेकः क्रुद्धो ब्राह्मणो हन्ति राष्ट्रम् ॥ ८ ॥
अजाश्च कांस्यं रजतं च नित्यं
मध्वाकर्षः शकुनिः श्रोत्रियश्च ।
वृद्धो ज्ञातिरवसन्नः कुलीन
एतानि ते सन्तु गृहे सदैव ॥ ९ ॥

---

इति धातोः अनाम्नायोऽनभ्यासः ॥ ७९ ॥ सीसस्यापि मलं मलमित्यत्र मलं मलोपमममेध्यं वा ॥८१॥ न कथंचन जीर्यतीत्यत्र न जीर्यति तामिच्छां विमुञ्चेत्यन्वयः ॥ ८४ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-
लक्षालंकारे एकोनचत्वारिंशोऽध्यायः ॥ ३९ ॥

[ नील० ] योऽभ्यर्चित इति । असज्जमानः अभिमानशून्यः शक्तिमहापयित्वा अनतिक्रम्य यथाशक्तीत्यर्थः सन्तं साधुमुपैति लभते यतः प्रसन्नाः सन्तः साधवः सुखाय अलं सुखं दातुं पर्याप्ताः ॥ १ ॥ अनपाकृष्टः परैरपकर्षमप्रापितोऽपि ॥ २ ॥ समुत्कर्षः अनृतेन जय इत्यर्थः ॥ ३ ॥ एकपदं सर्वात्मान ॥ ४ ॥ स्तब्धता औद्धत्यमभिमानः दर्पः तद्वत्त्वमत्यागित्वं लुब्धता मदमोहौ एकीकृत्य सप्त ॥ ५ ॥ आकर्षः विषादीनाम् ॥ ९ ॥

[ अर्जु० ] असज्जमानः अविलम्बमानः । शक्तिमहापयित्वा अत्यक्त्वा तं दातारं यशः समुपैति । प्रपन्नस्य भक्तस्य अलं समर्थाः । अर्थान्तरन्यासः ॥ १ ॥ अनुपाकुष्टोऽनिन्दितः ॥ २ ॥ समुत्कर्षे गुणातिशये अनृतं तदपहारी मिथ्यावादः । गुरोः पित्रादेः अलीकस्य मिथ्याचरितस्य निर्बन्धः प्रकाशनोद्यमः ॥ ३ ॥ तस्य एकपदं मृत्युः । अतिवादो बहु भाषणम् । अशुश्रूषा न श्रोतुमिच्छा । श्लाघा स्वगुणकीर्तनम् ॥ ४ ॥ समृद्धिं मानादि(?) विभूतिं अन्तरोऽन्तरात्मा । अथवा समृद्धिं श्रियम् अन्तको यमः तद्भोक्तृनयनद्वारेण हन्ति । कदर्यता दानभोगयोरभावः ॥ ८ ॥ रथो वाहनोपलक्षणम् । मध्वाकर्षः क्षौद्रग्राही । शकुनिः विषपरीक्षकश्चकोरादिः । वृद्धो ज्ञानवृद्धः ॥ ९ ॥

[ सर्व० ] असज्जमानोऽविलम्बमानः । शक्तिमहापयित्वा तद्विरुद्धाचरणेन शक्तिमत्यक्त्वा, यथाशक्तीति यावत् । प्रपन्नस्य भक्तस्य ॥ १ ॥ अनुपाकुष्टः अनिषिद्धो यः ॥ २ ॥ समुत्कर्षे स्पर्धायाम्, तेन तज्जन्यो व्यवहार उच्यते । तत्रानृतं साक्ष्येण, प्रश्ने सति अनृतभाषणमित्यर्थः । राजगामि राजगोचरेण च पैशुनमसूयामात्रेणापकरणम् । गुरोरलीके अप्रिये निर्बन्धः करणोद्यमः ॥ ३ ॥ असूयैकपदमेकं वस्तु मृत्युरात्मन इति शेषः । पदं लक्ष्माङ्घ्रिवस्तुष्विति कोषः । अतिवादो निन्दा अशुश्रूषा गुरूपासनाभावः । त्वराऽल्पकालेन बहुज्ञानेच्छा । श्लाघा उत्कर्षप्रत्ययः पर्याप्तमेतावत्या विद्यया ममेति ॥ ४ ॥ समृद्धिः पुत्रकलत्रादेः ॥ ८ ॥ मध्वाकर्षः शकुनिः कोकिलः ' मधुपः कोकिलः पिकः ' इति वचनात् ॥ ९ ॥

[ लक्षा० ] यो ह्यर्थितः सद्भिरसज्जमान इत्यत्र असज्जमानः दुर्जनेष्वसज्जमानः यः सद्भिरर्थितः सन् अर्थं तेषामर्थं करोति सद्भिः प्रशस्तं फलमुपैति ॥ १ ॥

---

१ ज. प्रपन्नस्य । २ म. इव क्षितीशः । ३ म. अनृतं च समुत्कर्षे । ख. म. तत्समं ब्र° । ९ म. कांस्य च रथं च ।

अजोक्षा चन्दनं वीणा आदर्शो मधुसर्पिषी ।
विषमौदुम्बरं शङ्खः स्वर्णनाभोऽथ रोचना ॥ १० ॥
गृहे स्थापयितव्यानि धन्यानि मनुरब्रवीत् ।
देवब्राह्मणपूजार्थमतिथीनां च भारत ॥ ११ ॥
इदं च त्वां सर्वपरं ब्रवीमि
पुण्यं पदं तात महाविशिष्टम्
न जातु कामान्न भयान्न लोभा-
द्धर्मं जह्याज्जीवितस्यापि हेतोः ॥ १२ ॥
नित्यो धर्मः सुखदुःखे त्वनित्ये
जीवो नित्यो हेतुरस्य त्वनित्यः ।
त्यक्त्वाऽनित्यं प्रतितिष्ठस्व नित्ये
संतुष्य त्वं तोषपरो हि लाभः ॥ १३ ॥
महाबलान्पश्य महानुभावान्
प्रशास्य भूमिं धनधान्यपूर्णाम् ।
राज्यानि हित्वा विपुलांश्च भोगान्
गताभरेन्द्रान् वशमन्तकस्य ॥ १४ ॥

मृतं पुत्रं दुःखपुष्टं मनुष्या
उत्क्षिप्य राजन् स्वगृहान्निर्हरन्ति ।
तं मुक्तकेशाः करुणं रुदन्ति
चितामध्ये काष्ठमिव क्षिपन्ति ॥ १५ ॥
अन्यो धनं प्रेतगतस्य भुङ्क्ते
वयांसि चाग्निश्च शरीरधातून् ।
द्वाभ्यामयं सह गच्छत्यमुत्र
पुण्येन पापेन च वेष्ट्यमानः ॥ १६ ॥
उत्सृज्य विनिवर्तन्ते ज्ञातयः सुहृदः सुताः ।
अपुष्पानफलान् वृक्षान् यथा तात पतत्रिणः॥१७॥
अग्नौ प्रास्तं तु पुरुषं कर्मान्वेति स्वयंकृतम् ।
तस्मात्तु पुरुषो यत्नाद्धर्मं संचिनुयाच्छनैः ॥ १८ ॥
अस्माल्लोकादूर्ध्वममुष्य चाधो
महत्तमस्तिष्ठति ह्यन्धकारम् ।
तद्वै महामोहनमिन्द्रियाणां
बुध्यस्व मा त्वां प्रलभेत राजन् ॥ १९ ॥

[ नील० ] अजेन सहितः उक्षा अजोक्षा औदुम्बरं ताम्रमयं पात्रजातम् । उदुम्बरं स्मृतं ताम्रे इति विश्वः । विषं लोहमिति सर्वज्ञः । स्वर्णनाभः शालग्रामः, दक्षिणावर्तः शङ्ख इति नारायणः ॥ १० ॥ धन्यानि मङ्गलावहानि ॥ ११ ॥ सर्वपरं सर्वेभ्यः पुण्यहेतुभ्यः परमुत्कृष्टं महाविशिष्टं महेन उत्सवेन अविशिष्टं समानं माङ्गलिकमित्यर्थः ॥ १२ ॥ अस्य जीवत्वस्य हेतुरविद्या । अनित्यं सुखदुःखे अविद्यां च । नित्ये धर्मे निरवद्ये आत्मनि च प्रतितिष्ठस्व निष्ठां कुरु । संतुष्य संतोषं प्राप्नुहि । तोषः पर उत्कृष्टः यस्मिन् लाभे ॥ १३ ॥ गृहात् निर्हरन्ति दूरीकुर्वन्ति ॥ १५ ॥ उत्सृज्य मृतस्य देहं त्यक्त्वा ॥ १७ ॥ अस्माल्लोकादूर्ध्वं स्वर्गे अमुष्य अमुष्मात् स्वर्गात् चात् अस्माच्च अधः पाताले महत्तमः तमोगुणप्रधानैः पुरुषैः प्राप्यं स्थानमन्धकारमप्रकाशं तत् अन्धं तमः अन्धतामिस्राख्यं नरकं बुध्यस्व मा त्वां रागान्धं प्रलभेत स्पृशेत् ॥ १९ ॥

[ अर्जु० ] अजः छागः । विषं शुल्बी । औदुम्बरं ताम्रम् ॥ १० ॥ धने साधूनि धन्यानि ॥ ११ ॥ सर्वपरं सर्वोत्कृष्टम् ॥ १२ ॥ नित्यो धर्मः नित्यं मोक्षं प्रति हेतुत्वात् । जीवः क्षेत्रज्ञः । धातुः शरीरं श्लेष्मादिधात्वारब्धत्वात् । हेतुरिति प्रायशः पाठः । अनित्यान् सुखादीन् । प्रतितिष्ठस्व एकाकी व्रज नित्ये क्षेत्रज्ञे संतुष्य तोषश्चासौ परश्चेति तोषपरः ॥ १३ ॥ अस्मादित्यादि । लोक्यत इति लोको देहः । ऊर्ध्वं प्राप्तुकामः । अमुष्य प्राप्यस्य देहस्य पूर्वमघोवक्ति महत्तमस्तिष्ठति अज्ञानरूपम् । अन्धकारमिन्द्रियज्ञानविरहरूपं तत् तत्त्वज्ञानं वै प्रसिद्धम्, इन्द्रियाणां महामोहनमिति प्रसहेत अभिभवेत् ॥ १९ ॥

[ सर्व० ] अजश्च उक्षा च अजोक्षा । आर्षः । विषं लोहः तीक्ष्णोपलक्षणत्वात्, औदुम्बरं ताम्रं, स्वर्णनाभो दक्षिणावर्तशङ्खः ॥ १० ॥ धन्यानि माङ्गल्यानि । देवब्राह्मणातिथिपूजार्थे चन्दनसर्पिषी । अन्यानि मङ्गलार्थमात्रेण ॥ ११ ॥ सर्वपरं पुण्यं सर्वस्मात्पुण्यहेतोरुत्तमम् महाविशिष्टमित्युक्त्याऽन्येभ्योऽपि ॥ १२ ॥ नित्यो धर्मः परलोकेऽपि स्थायी । यतस्तस्याश्रयो जीव आत्मा नित्यः । धातुः धत्ते पुष्णाति सुखेनात्मानमिति शरीरं, तस्यानित्यत्वात्तज्जन्यसुखदुःखेऽपि अनित्ये, न परलोकस्थायिनी । अनित्यान् सुखदुःखादीन् । नित्ये धर्मे संतुष्य अल्पेऽपि पर्याप्तिप्रत्ययं कुरु । तोषः सन्तोषः पर उत्तमो यस्माल्लोकात् लोकप्राप्तिजन्यात्सुखात् स लोकः ॥ १३ ॥ निर्हरन्ति निःसारयन्ति ॥ १५ ॥ उर्ध्वमाकाशं अमुष्यास्य लोकस्याधः पाताले महत् तमो नरकमन्धकारं अन्धताकरमिन्द्रियाणां महामोहनं दुःखेन विषयान्तराऽग्रहणात् । उद्बुध्यस्व ज्ञात्वा धर्मं चर । तन्मा त्वां प्रसहेत् अभिभवेत् ॥ १९ ॥

१० ख. म. अजोऽश्वश्च° ख. स्वर्णभामरणं वृषः । १३ ख. म. धातुरस्य

१४ ख. महाधनान्य° ।

इदं वचः शक्ष्यसि चेद्यथाव-
न्निशम्य सर्वं प्रतिपत्तुमेव ।
यशः परं प्राप्स्यसि जीवलोके
भयं न चामुत्र न चेह तेऽस्ति ॥ २० ॥
आत्मा नदी भारत पुण्यतीर्था
सत्योदया धृतिकूला दयोर्मिः ।
तस्यां स्नातः पूयते पुण्यकर्मा
पुण्यो ह्यात्मा नित्यमलोभ एव ॥ २१ ॥
कामक्रोधग्राहवतीं पञ्चेन्द्रियजलां नदीम् ।
नावं धृतिमयीं कृत्वा जन्मदुर्गाणि संतर ॥ २२ ॥
प्रज्ञावृद्धं धर्मवृद्धं स्वबन्धुं
विद्यावृद्धं वयसा चापि वृद्धम् ।
कार्याकार्ये पूजयित्वा प्रसाद्य
यः संपृच्छेन्न स मुह्येत्कदाचित् ॥ २३ ॥
धृत्या शिश्नोदरं रक्षेत्पाणिपादं च चक्षुषा ।
चक्षुः श्रोत्रे च मनसा मनो वाचं च कर्मणा ॥ २४ ॥
नित्योदकी नित्ययज्ञोपवीती
नित्यस्वाध्यायी पतितान्नवर्जी ।
ऋतं ब्रुवन् गुरवे कर्म कुर्व-
न्न ब्राह्मणश्च्यवते ब्रह्मलोकात् ॥ २५ ॥
अधीत्य वेदान्परिसंस्तीर्य चाग्नी-
निष्ट्वा यज्ञैः पालयित्वा प्रजाश्च ।
गोब्राह्मणार्थे शस्त्रपूतान्तरात्मा
हतः संग्रामे क्षत्रियः स्वर्गमेति ॥ २६ ॥
वैश्योऽधीत्य ब्राह्मणान् क्षत्रियांश्च
धनैः काले संविभज्याश्रितांश्च ।
त्रेतापूतं धूममाघ्राय पुण्यं
प्रेत्य स्वर्गे दिव्यसुखानि भुङ्क्ते ॥ २७ ॥

---

[लक्षा०] विषमौदुम्बरमित्यत्र विषमुदकम् ॥ १० ॥ नित्ये धर्मे प्रतितिष्ठस्व ॥ १३ ॥ तद्वै महन्मोहनमिन्द्रियाणामित्यत्र इन्द्रियाणां महन्मोहनमज्ञानप्रदं तत् ऊर्ध्वाधोलोकगमनं बुध्यस्व त्वां मा प्रलभेत न वञ्चयीत ॥ १९ ॥

[नील०] प्रतिपत्तुं ज्ञातुं शक्ष्यसि चेदिति संबन्धः ॥२०॥ आत्मा जीवो नदी पुण्यं धर्म एव तीर्थं यस्याम् । सत्यं ब्रह्म तस्मादुदयो यस्याः । तस्यां स्नातः निष्णातः प्रत्यग्रूपे मग्न इत्यर्थः । पूयते शुद्ध्यति कः पुण्यकर्मा पुण्यमपि किं नित्यमलोभ एव वैराग्यान्न परं पुण्यमित्यर्थः ॥ २१ ॥ नदीं संसारनदीं जन्मदुर्गाणि संतर मोक्षार्थं यतस्वेत्यर्थः ॥ २२ ॥ धृत्येति काममशनायां च धैर्येण जित्वा शिश्नोदरं दोषात् रक्षेत् । सम्यग्दृष्ट्वा वस्तूनामादानेन दृष्टपूते स्थले पदन्यासेन च पाणिपादं चक्षुषा रक्षेत् । चक्षुःश्रोत्रे मनसैव परस्त्र्यादिभ्यः कुशब्देभ्यश्च व्यावर्तनेन रक्षेत् । मनो वाचं च कर्मणा संयमनेन रक्षेत् ॥ २४ ॥ नित्योदकी नित्यं यथाकालं स्नानाचमनपरः ॥ २५ ॥ परिसंस्तीर्याग्नीन् परिस्तरणैः एतेनाग्निहोत्रमुपलक्षयतीति नारायणः । परिसंस्तीर्य वितत्य स्वे स्वे स्थाने आधायेत्यर्थः । ततो यज्ञैरिष्ट्वा शस्त्रपूतः अन्तरात्मा चित्तं यस्य गोब्राह्मणार्थं मृत इत्यर्थः संग्रामे हतो वा क्षत्रियः ॥२६॥ अधीत्य वेदं शास्त्रमिति शेषः त्रेता अग्नित्रयं तस्याः पूतं धूममाघ्राय पुण्यं पावनं प्रेत्य मृत्वा ॥ २७ ॥

[अर्जु०] इदं वचो निशम्य प्रतिपत्तुं न शक्ष्यसीत्यन्वयः ॥ २० ॥ आत्मा नदी नदीव तापनिवर्तकत्वात् पुण्यतीर्था पुण्यं तीर्थमवतारमार्गो यस्याः । सत्योदका पापक्षालनहेतुत्वात् । धृतिकूला मनःप्रसवनिरोधहेतुत्वात् । दमोर्मिः दमो यथेष्टगतिनिरोधो मनसः स एवोर्मिः आत्मोल्लासहेतुत्वात् । अम्भोऽम्भ एव न तादृक् पावनम् ॥ २१ ॥ नदीं चित्तनदीं कामक्रोधग्राहवतीमिति आत्मनि प्रवृत्तां चित्तरागनदीं व्यावर्तयति ॥ २२ ॥ काले पर्वकाले त्रेता अग्नित्रयी ॥ २७ ॥

[सर्व०] प्रतिपत्तुं कर्तुम् ॥ २० ॥ पुण्यं धर्मस्तीर्थं यस्यास्तथा धृतिकूला धृतितटा । दया ऊर्मिर्यस्यां तस्यां स्नातो निष्णातः कुशलः । पुण्यो ह्यात्मा आत्मैव हि पुण्यम् ॥ २१ ॥ तां नदीं कामक्रोधेन्द्रियरूपाम् । जन्मदुर्गाणि संतर मोक्षाय यतस्व ॥ २२ ॥ मनो वाचं कर्मणा कर्महेतुना प्रयत्नेन ॥ २४ ॥ नित्योदकी सदोदकसमीपवासी नित्ययज्ञोपवीती सदा दैवकर्मपरत्वात् ॥ २५ ॥ परिसंस्तीर्य परिस्तरणैरग्नीन्, एतेनाग्निहोत्रहोममुपलक्षयति । गोब्राह्मणार्थे शस्त्रपूतः संग्रामे हतः इति वा विकल्पः ॥ २६ ॥ त्रेतयाऽग्नित्रयेण पूतं धूममाघ्रायेति अग्निहोत्रहोममुपलक्षयति ॥ २७ ॥

[लक्षा०] आत्मा नदीत्यत्र आत्मा देहः पुण्यतीर्था पुण्यानि तीर्थानि शास्त्राणि यस्यां सा पुण्यवन्तो जनाः आत्मानं परमात्मानं प्राप्य यथारूपं ते तथेति पूर्वेणान्वयः ॥ २१ ॥

---

२१ ज. सत्योदका । ख. म. दमोर्मिः । ख. म. ज. नित्यमम्भोऽम्भ एव । २५ ज. सत्यं ब्रुवन् । २६ ज. गोब्राह्मणार्थे ।

ब्रह्म क्षत्रं वैश्यवर्णं च शूद्रः
क्रमेणैतान्न्यायतः पूजयानः ।
तुष्टेष्वेतेष्वव्यथो दग्धपाप-
स्त्यक्त्वा देहं स्वर्गसुखानि भुङ्क्ते ॥ २८ ॥
चातुर्वर्ण्यस्यैष धर्मस्तवोक्तो
हेतुं चानुब्रुवतो मे निबोध ।
क्षात्राद्धर्माद्धीयते पाण्डुपुत्र-
स्तं त्वं राजन् राजधर्मे नियुङ्क्ष्व ॥ २९ ॥

धृतराष्ट्र उवाच—
एवमेतद्यथा त्वं मामनुशाससि नित्यदा ।
ममापि च मतिः सौम्य भवत्येवं यथाऽऽत्थ माम् ३०॥
सा तु बुद्धिः कृताऽप्येवं पाण्डवान्प्रति मे सदा ।
दुर्योधनं समासाद्य पुनर्विपरिवर्तते ॥ ३१ ॥
न दिष्टमभ्यतिक्रान्तुं शक्यं भूतेन केनचित् ।
दिष्टमेव ध्रुवं मन्ये पौरुषं तु निरर्थकम् ॥ ३२ ॥

इति श्रीमहाभारते उद्योगपर्वणि चत्वारिंशोऽध्यायः ॥ ४० ॥

समाप्तं प्रजागरपर्व ।

## ( सनत्सुजातपर्व ४ )

### एकचत्वारिंशोऽध्यायः ४१

धृतराष्ट्रेण ब्रह्मतत्त्वं पृष्टो विदुर आत्मनः शूद्रयोनावुत्पन्नत्वं विचिन्त्य सनत्सुजातं चिन्तयामास ॥ १ ॥ चिन्तनानन्तर-मुपस्थितं च तं पूजयित्वा धृतराष्ट्रसंशयनिवर्तनप्रार्थना ॥ २ ॥

धृतराष्ट्र उवाच—
अनुक्तं यदि ते किंचिद्वाचा विदुर विद्यते ।
तन्मे शुश्रूषतो ब्रूहि विचित्राणि हि भाषसे ॥ १ ॥

विदुर उवाच—
धृतराष्ट्र कुमारो वै यः पुराणः सनातनः ।
सनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत ॥ २ ॥
स ते गुह्यान्प्रकाशांश्च सर्वान् हृदयसंश्रयान् ।
प्रवक्ष्यति महाराज सर्वबुद्धिमतां वरः ॥ ३ ॥

धृतराष्ट्र उवाच—
किं त्वं न वेद तद्भूयो यन्मे ब्रूयात्सनातनः ।
त्वमेव विदुर ब्रूहि प्रज्ञाशेषोऽस्ति चेत्तव ॥ ४ ॥

विदुर उवाच—
शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे ।
कुमारस्य तु या बुद्धिर्वेद तां शाश्वतीमहम् ॥ ५ ॥
ब्राह्मीं हि योनिमापन्नः सुगुह्यमपि यो वदेत् ।
न तेन गर्ह्यो देवानां तस्मादेतद्ब्रवीमि ते ॥ ६ ॥

---

[ नील० ] क्षात्राद्धर्मात्पृथिवीपालनरूपात् राज्यादिति यावत् राजधर्मे राज्ये ॥ २९ ॥ मामनुशाससि अनुशास्सि ॥ ३० ॥

इति श्रीनैल० उद्यो० भारतभावदीपे चत्वारिंशोऽध्यायः ॥ ४० ॥

[ अर्जु० ] क्षात्राद्धर्मात् पृथिवीपालनात् ॥ २९ ॥ [ युधिष्ठिरः सर्वदुःखातिगः स्यात्सर्वाणि दुःखानि अतिक्रम्य गच्छेत् ॥ ] प्रजागरे विदुरोक्तिगूढार्थ प्रतिपत्तये । टीकेयं रचिता धीरैर्यथेष्टमवलोक्यताम् ॥

इति श्रीमन्महा० मर्जुनमि० उद्यो० चत्वारिंशोऽध्यायः ॥ ४० ॥

[ सर्व० ] क्षात्राद्धर्मात् प्रजापालनरूपात् ॥ २९ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृत-टीकायां चत्वारिंशोऽध्यायः ॥ ४० ॥

[लक्षा०] क्षात्राद्धर्माद्धीयत इत्यत्र ईयते ज्ञायते ॥ २९ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-लक्षालंकारे चत्वारिंशोऽध्यायः ॥ ४० ॥

[ नील० ] एवं ब्रह्मविद्याधिकारिविशेषणीभूता साधनसंपत्तिः सम्यगुपपादिता तत्र क्वचित्क्वचित्प्रसंगात् यतो यतो निवर्तत इत्यादिना संक्षेपेण ब्रह्मविद्या सूचिता तां विस्तरेण श्रोतुकामो धृतराष्ट्र उवाच अनुक्तमिति ते त्वया ॥ १ ॥ मृत्युः जन्ममरणप्रवाहात्मकः संसारः ॥ २ ॥ ते तुभ्यं गुह्यान् गोप्यान् योगकलादीन् प्रकाशान् शमादीन् हृदयसंश्रयान् धर्मान् प्रवक्ष्यति ॥ ३ ॥ वर्णाश्रमक्रममुल्लङ्घ्य ब्रह्मविद्यां नोपदिशेदित्याख्यायिकामुखेनाह किं त्वमित्यादिना सनातनापरनामा सनत्सुजातः ॥ ४ ॥

[ लक्षा० ] न तेन गर्ह्य इत्यत्र तेन कारणेन एतत् न वदामीत्येतत् ॥ ६ ॥

इति श्रीभा० उद्योग० वादि० लक्षालंकारे एक-चत्वारिंशोऽध्यायः ॥ ४१ ॥

---

२८ ख. देवसुखानि । ३२ ख. मर्त्येन केन चित् । इति चत्वारिंशो० ॥४०॥

४ ख. किमेष वेद । ६ ख. योनिं संपन्नः । ख. वेदात्मा तस्मा° ।

धृतराष्ट्र उवाच—

ब्रवीहि विदुर त्वं मे पुराणं तं सनातनम् ।
कथमेतेन देहेन स्यादिहैव समागमः ॥ ७ ॥

वैशम्पायन उवाच—

चिन्तयामास विदुरस्तमृषिं शंसितव्रतम् ।
स च तच्चिन्तितं ज्ञात्वा दर्शयामास भारत ॥ ८ ॥
स चैनं प्रतिजग्राह विधिदृष्टेन कर्मणा ।
सुखोपविष्टं विश्रान्तमथैनं विदुरोऽब्रवीत् ॥ ९ ॥
भगवन् संशयः कश्चिद्धृतराष्ट्रस्य मानसः ।
यो न शक्यो मया वक्तुं त्वमस्मै वक्तुमर्हसि ॥१०॥
यं श्रुत्वाऽयं मनुष्येन्द्रः सर्वदुःखातिगो भवेत् ।
लाभालाभौ प्रियद्वेष्यौ यथैनं न जरान्तकौ ॥११॥
विषहेरन्भयामर्षौ क्षुत्पिपासे मदोद्भवौ ।
अरतिश्चैव तन्द्री च कामक्रोधौ क्षयोदयौ ॥ १२ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

## द्विचत्वारिंशोऽध्यायः ४२

धृतराष्ट्रेण सनत्सुजातं प्रति मृत्युसत्त्वासत्त्वादिप्रश्नः । सनत्सुजातेन तदुत्तरदानम् ॥ १ ॥

वैशम्पायन उवाच—

ततो राजा धृतराष्ट्रो मनीषी
संपूज्य वाक्यं विदुरेरितं तत् ।
सनत्सुजातं रहिते महात्मा
पप्रच्छ बुद्धिं परमां बुभूषन् ॥ १ ॥

[ नील० ] विधिदृष्टेन शास्त्रादवगतेन कर्मणा मधुपर्कादिना ॥ ९ ॥ विद्याप्राप्तिफलमाह यं श्रुत्वेति ॥ ११ ॥ विषहेरन् बाधेरन् अमर्षः असहिष्णुता उद्भव उत्कृष्टैश्वर्यं क्षयोदयौ तयोर्हेतुभूते पापपुण्ये च ॥ १२ ॥

इति श्रीनैल० उद्योगप० भारतभावदीपे एकचत्वारिंशोऽध्यायः ॥ ४१ ॥

[ सर्व० ] विषहेरन् दुःखजननेनाभिभवेयुः ॥ १२ ॥

इति श्रीमहा० उद्योगप० सर्वज्ञ० टीकायामेकचत्वारिंशोऽध्यायः ॥४१॥

श्रीमच्छंकरभगवत्पादविरचितं भाष्यम् ।

नमः पुंसे पुराणाय पूर्णानन्दाय विष्णवे ।
निरस्तनिखिलध्वान्ततेजसे विश्वहेतवे ॥
नम आचार्येभ्यो ब्रह्मविद्यासंप्रदायकर्तृभ्यः ॥

सनत्सुजातीयविवरणं संक्षेपतो ब्रह्मजिज्ञासूनां सुखाववोधायारभ्यते—स्वतश्चित्सदानन्दाद्वितीयब्रह्मस्वरूपोऽप्यात्मा स्वाश्रयया स्वविषयया अविद्यया स्वानुभवगम्यया साभासया स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मभावात्प्रच्युतः अनात्मनि देहादावात्मभावमापन्नः अप्राप्ताशेषपुरुषार्थः प्राप्ताशेषानर्थः अविद्याकर्मपरिकल्पितैरेव साधनैरिष्टप्राप्तिमनिष्टपरिहृतिं चाकाङ्क्षन् लौकिकवैदिकसाधनैरनुष्ठितैरपि परमपुरुषार्थं मोक्षाख्यमलभमानो मकरादिभिरिव रागद्वेषादिभिरितस्तत आकृष्यमाणः सुरनरतिर्यगादिप्रभेदभिन्नासु नानायोनिषु परिवर्तमानो मोमुह्यमानः संसरन् कथंचित्पुण्यवशाद्वेदोदितेन ईश्वरार्थकर्मानुष्ठानेनापगतरागादिमलः अनित्यादिदोषदर्शनेनोत्पन्नेहामुत्रफलभोगविरागः वेदान्तेभ्यः प्रतीयमानं ब्रह्मात्मभावं बुभुत्सुः वेदोदितशमदमादिसाधनसंपन्नः ब्रह्मविदमाचार्यमुपेत्य आचार्यानुसारेण वेदान्तश्रवणादिना 'अहं ब्रह्मास्मि' इति ब्रह्मात्मतत्त्वमवगम्य निवृत्ताज्ञानतत्कार्यः ब्रह्मरूपोऽवतिष्ठत इतीयं वेदान्तानां मर्यादा । एतत्सर्वं क्रमेण दर्शयिष्यति भगवान् सनत्सुजातः॥

धृतराष्ट्रः शोकमोहाभितप्तः 'तरति शोकमात्मवित्' इति वेदान्तवादमुपश्रुत्य ब्रह्मविद्यया विना शोकापनयनमशक्यं मन्वानः 'अनुक्तं यदि ते किंचिद्वाचा विदुर विद्यते । तन्मे शुश्रूषवे ब्रूहि विचित्राणीह भाषसे' इति विदुरायोक्तवान् । स च श्रुतवाक्योऽपि परमकारुणिकः सर्वज्ञः सन् ब्रह्मविद्यां विशिष्टाधिकारिविषयां मन्वानः 'शूद्रयोनावहं जातो नातोऽन्यद्वक्तुमुत्सहे' इति शूद्रयोनिजत्वादौपनिषदब्रह्मात्मतत्त्वज्ञाने नाहमधिकृत इत्युक्त्वा कथमेनं ब्रह्मविद्यया परमे पदे परमात्मनि पूर्णानन्दे स्वाराज्ये स्थापयिष्यामीति मन्वानः छान्दोग्योपनिषत्प्रसिद्धमितिहासं स्मृत्वा नान्योऽस्मादस्मै भूमानं तमसः परं परमात्मानं दर्शयितुं शक्नुयादिति मत्वा तमेव भगवन्तं सनत्सुजातं योगबलेनाहूय प्रत्युत्थानादिभिर्भगवन्तं पूजयित्वा 'भगवन्संशयः कश्चिद्धृतराष्ट्रस्य मानसे । यो न शक्यो मया वक्तुं त्वमस्मै वक्तुमर्हसि ॥ श्रुत्वायं यं मनुष्येन्द्रः सर्वदुःखातिगो भवेत् । लाभालाभौ प्रियद्वेष्यौ तथैव च जरान्तकौ ॥ विषहेत मदोन्मादौ क्षुत्पिपासे भयाभये । अरतिं चैव तन्द्रीं च कामक्रोधौ क्षयोदयौ' इति भगवन्, येनासौ सकलसंसारकारणधर्माधर्मविवर्जितः

११ ख. लाभालाभे प्रियद्वेष्ये यथैनं तं जरान्तकौ । इति एकचत्वा० ॥४१॥

१ ख. संपूज्य तं धर्मभृतां वरिष्ठम् ।

**धृतराष्ट्र उवाच—**

**सनत्सुजात यदिदं शृणोमि**
**न मृत्युरस्तीति तव प्रवादम् ।**
**देवासुरा ह्याचरन्ब्रह्मचर्य-**
**ममृत्यवे तत्कतरन्नु सत्यम् ॥ २ ॥**

सुखदुःखातिगो मुक्तो भवेत् तमस्मै धृतराष्ट्राय वक्तुमर्हसी-त्युक्तवान्—तत इति । ततः एतद्वाक्यसमनन्तरं विदुरेण सनत्सुजातं प्रति ईरितम् उक्तं यत् वाक्यं तत् संपूज्य संमान्य सनत्सुजातं सनदिति सनातनं ब्रह्मोच्यते हिरण्यगर्भाख्यम्, तस्मात्सनातनात् ब्रह्मणो मानसात् ज्ञानवैराग्यादिसमन्वितः सुष्ठु जात इति सनत्सुजातः इत्युक्तो भगवान् सनत्कुमारः; तं रहिते रहसि प्राकृतजनवर्जिते देशे महात्मा महाबुद्धिः पप्रच्छ पृष्टवान् बुद्धिं परमाम् उत्तमां पूर्णानन्दाद्वितीयत्रिषयाम् । किमर्थम ? बुभूषन्, भवितुमिच्छन्, ब्रह्मविद्यया अपहृतमात्मानं लब्धुमिच्छन्नित्यर्थः॥१॥

[ नील० ] उद्योगपर्वणि सनत्सुजातीये भाष्यकारादिभिर्व्याख्यातान्संप्रतितनपुस्तकेषु च स्थितान्पाठान् श्लोकांश्च गुणोपसंहारन्यायेनैकीकृत्य व्याख्यायते—ततो राजेति । मनीषी शास्त्रसंस्कृतमनीषावान् रहिते एकान्ते परमां बुद्धिं परविद्याम् 'अथ परा यया तदक्षरमधिगम्यते' इति श्रुतिप्रसिद्धां पप्रच्छ एतेन विषयो दर्शितः । प्रयोजनं दर्शयति—महात्मा बुभूषन्निति, परं ब्रह्म भवितुमिच्छन् । ब्रह्म वेद ब्रह्मैव भवतीति ब्रह्मज्ञानस्य ब्रह्मभावफलकत्वश्रवणात् । विदुरेरितं वाक्यम् 'सनत्सुजातः प्रोवाच मृत्युर्नास्तीति भारत' इति मृत्युशब्दितस्य बन्धस्याभावं श्रुत्वा प्रतिपूज्यासंगत्वात्कपटवतोऽपि मम पापात् भयं नास्तीति संतोषं प्राप्य । तेन ज्ञानस्य सर्वकर्मोन्मूलनहेतुत्वं दर्शितम् । यथोक्तम्—हत्वाऽपि स इमाँल्लोकान्न हन्ति न निबध्यत इति ॥ १ ॥

[ अर्जु० ] इदानीं सनत्सुजातवाक्यानि विव्रियन्ते । धृतराष्ट्रः पाण्डवेभ्यः स्वपुत्राणां मरणं पश्यन्नार्त्तः सनत्सुजातं परं पदं पृच्छति—ततो राजेति । राजेति क्षत्रियतां मनीषीति नित्यानित्यवस्तुज्ञतां महात्मेति महति परमात्मनि आत्मा यस्येति उपदेशयोग्यतां च प्रतिपादयति । सनत्सुजातं सनत् सनातनं सुजातं कुमारं रहिते एकान्ते बुभूषन् स्वरूपेण भवितुमिच्छन् प्राप्तुमिच्छन् वा । काकाक्षिन्यायेन बुद्धिमेव ॥ १ ॥

[सर्व०] कचिद्गभीराः कचिदप्रसन्नाः
कचिच्च वेदानुकृतिं भजन्तीः ।
सनत्सुजातस्य गिरस्तनोतुं(?)
विधीयतेऽस्माभिरसावुपायः ॥ १ ॥

नमः पुंसे पुराणाय पूर्णानन्दाय विष्णवे ॥
निरस्तनिखिलध्वान्ततेजसे विश्वहेतवे ॥ २ ॥

मनीषी शास्त्रसंस्कृतमनीषावान् । महात्मा महाभागधेयः, विशिष्टभाग्याभावे तादृगुपदेशलाभासंभवात् । सनत्पदं नित्यत्वबोधकम् "सनद्वाजसनम्" इति छन्दसि तथा दर्शनात् । सुष्ठु जातः स्वधर्माविर्भूतदेहत्वादिति । रहिते एकान्ते पप्रच्छ अग्रे वक्ष्यमाणम् । परमां बुद्धिमात्मविषयां बुभूषन् प्राप्तुमिच्छन्निति ॥ १ ॥

[ लक्षा० ] सनत्कुमारं रहित इत्यत्र रहिते जनरहिते स्थले, परमां बुद्धिं बुभूषन् भू प्राप्ताविति धातोः, बुभूषन् प्राप्तुमिच्छन् ॥ १ ॥

[ शंक० ] हे सनत्सुजात, यत् मृत्युर्हि नास्तीति शिष्यान्प्रति उपदिष्टमिति विदुरः प्राह, देवासुराः पुनः अमृत्यवे मृत्योरभावाय अमृतत्वप्राप्तये ब्रह्मचर्यमाचरन् इन्द्रविरोचनादयः गुरौ वासं कृतवन्तः । श्रूयते च छान्दोग्ये 'तद्धोभये देवा असुरा अनुबुबुधिरे' इत्याद्यारभ्य 'तौ ह द्वात्रिंशतं वर्षाणि ब्रह्मचर्यमूषतुः' इत्यन्तेनेन्द्रविरोचनयोः प्रजापतौ ब्रह्मचर्यचरणम् 'एकशतं ह वै वर्षाणि मघवा प्रजापतौ ब्रह्मचर्यमुवास' इति च । यदि मृत्युर्नास्तीति तव पक्षः, कथं तर्हि देवासुराणाममृत्यवे ब्रह्मचर्यचरणम् । तत् तयोर्मृत्युसद्भावासद्भावपक्षयोः कतरन्नु सत्यम्, यत्सत्यं तद्वक्तुमर्हसीत्यभिप्रायः ॥ २ ॥

[ नील० ] प्रश्नमेवाह—सनत्सुजातेति । मृत्युरिति ध्रुवं जन्म मृतस्य चेति साहचर्याज्जन्ममरणप्रवाहरूपो बन्ध उच्यते स नास्तीति तव प्रकर्षेण वादं पूर्वोक्तं विदुरादीनां मुखात् शृणोमि । हे सनत्सुजात सनत् सर्वदा सुष्ठु जातं जन्म यस्य नित्यकुमारत्वेन जरामरणविवर्जितेत्यर्थः । श्रुतिश्चैतदाह—न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थतेति । नु तथा अमृत्यवे मृत्योरभावाय । एकशतं वर्षाणि मघवा प्रजापतौ ब्रह्मचर्यमुवासेति बन्धनिवृत्त्यर्थो यत्नश्च श्रूयते । न ह्यसतो नित्यनिवृत्तस्य निवृत्त्यर्थं यत्नो युज्यते । तदनयोः पक्षयोः कतरत् मतं सत्यं तद्ब्रूहीति शेषः ॥ २ ॥

[ अर्जु० ] मृत्युर्नास्तीति तव पक्षः । अस्तीति देवासुराणां पक्षः । स च ब्रह्मचर्येण प्रतिकरणीय इति वादिविप्रतिपत्त्या संदेहात् पृच्छति कतरदिति । नु वितर्के ।

२. क. ख. म. यदिमं । ज. मृत्युर्नास्तीति तवोपदेशम् । क. तवोपदेशम् । ज. देवासुरा अवसन् । ख. ह्यचरन् । म. अवरन् ।

**सनत्सुजात उवाच—**

**अपृच्छः कर्मणा यच्च मृत्युर्नास्तीति चापरम् ।**
**शृणु मे ब्रुवतो राजन्यथैतन्मा विशङ्किथाः ॥ ३ ॥**

**उभे सत्ये क्षत्रियैतस्य विद्धि**
**मोहान्मृत्युः संमतोऽयं कवीनाम् ।**
**प्रमादं वै मृत्युमहं ब्रवीमि**
**तथाऽप्रमादममृतत्वं ब्रवीमि ॥ ४ ॥**

अस्तीति वा नास्तीति वा सत्यमिति प्रश्नार्थः । ब्रह्मणे ब्रह्मप्राप्तये चर्यत इति ब्रह्मचर्यं तच्चात्रैव वक्ष्यते ॥ २ ॥

[सर्व०] अथ प्रकृतं प्रवादं प्रसिद्धं वादम् । देवासुरा अमृत्यवे ब्रह्मचर्यमचरन्निति मृत्युरस्तीति लक्ष्यते, असतो निवर्तनासंभवात् । तत्र देवासुराणां च विप्रतिपत्तिर्मृत्युसंदेहः । ततः कतरत् सत्यमिति ब्रूहि । नु जिज्ञासाविकारे । ब्रह्म वेदस्तत्प्रतिपत्तुं चर्यमाचारो ब्रह्मचर्यं वेदाभ्यासादि । यदुक्तं भृगुणा—' अनभ्यासेन वेदानामाचारस्य च वर्जनात् । आलस्यादन्नदोषाच्च मृत्युर्विप्राञ्जिघांसति ' अतोऽन्यथा न हन्तीत्यर्थः । श्रुतिरपि—"मृत्योः पुरस्तादमृता भवन्ति ये ब्राह्मणा ब्रह्मचर्यं चरन्ति " इति प्रवादम् ॥ २ ॥

[लक्ष्मा०] सनत्सुजात यदिममित्यत्र सनदितिपदेन सह सु सुष्ठु जातं प्रसिद्धं नाम कुमारेति नाम यस्य स तथोक्तः । अन्यथा सनत्कुमारं रहित इत्युपक्रमविरोधात् । देवासुराभ्यन्तरचारिणस्त इत्यत्र देवानामसुराणामभ्यन्तरे अन्तर्हृदि चारिणः कामरूपेण संचरत इत्यर्थः । अनेन मृत्योरभावे मृत्युपरिहाराय देवैरमृतपानं किमर्थं कृतमसुरैश्च अमृत्यवे रुद्रादीन् प्रति उग्रं तपः कस्मात्कृतमिति ध्वनयति ॥ २ ॥

[शंक०] एवं पृष्टः प्राह भगवान् सनत्सुजातः—केचित् पुनरविद्याधिरूढाः परमार्थतो मृत्युसद्भावं मन्यमानाः वेदोक्तेन कर्मणा अमृत्युः अमृतत्वं भवतीति मत्वा अमृत्यवे अमृतत्वप्राप्तये वेदोक्तं कर्माचरन्ति; तथा अन्ये विषयविषान्धाः विषयव्यतिरेकेण निर्विषयं मोक्षममन्यमानाः कर्मणैव अमृत्युम् अमरत्वं देवादिभावं वर्णयन्ति; तत्रैव च रागिगीतं श्लोकमुदाहरन्ति—' अपि वृन्दावने शून्ये सृगालत्वं स इच्छतु । न तु निर्विषयं मोक्षं कदाचिदपि गौतम ' इति । तथैव च परमात्मव्यतिरेकेण द्वितीयमपश्यन्तो ज्ञानकर्मभ्याममृतत्वं वर्णयन्ति । अपरे पुनरद्वितीयात्मदर्शिनः आत्मव्यतिरेकेण द्वितीयमपश्यन्तो मृत्युर्नास्तीति वर्णयन्ति हे राजन् यथा एतत्पक्षयोरविरोधः संभवति तथा ब्रुवतो मे मम वाक्यं शृणु मा विशङ्किथाः मयोक्तेऽर्थे शङ्कां मा कृथाः ॥ ३ ॥ कथम्—उभे इति । ये पूर्वोक्ते मृत्योरस्तित्वनास्तित्वे ते उभे हे क्षत्रिय, आद्यप्रवृत्ते य आदिसर्गस्तमारभ्य प्रवृत्ते । अथवा, क्षत्रियाद्य क्षत्रियप्रधान, प्रवृत्ते वर्तमाने । कथं पुनरुभयोः परस्परविरुद्धयोः अतिस्तत्वनास्तित्वयोः सत्यत्वमिति ? तत्राह—मोहो मृत्युः संमतो यः कवीनाम् इति । भवेदयं विरोधः अस्तित्वनास्तित्वयोः, यदि परमार्थरूपो मृत्युः स्यात् । कस्तर्हि मृत्युः ? यो मोहो मिथ्याज्ञानम् अनात्मन्यात्मत्वाभिमानः, स मृत्युः केषांचित् कवीनां मतः; अहं तु न तथा मृत्युं ब्रवीमि, कथं तर्हि ? प्रमादं वै मृत्युम् अहं ब्रवीमि । प्रमादः प्रच्युतिः स्वाभाविकब्रह्मभावात् तं प्रमादं मिथ्याज्ञानस्यापि कारणम् आत्मानवधारणमात्माज्ञानं मृत्युं जननमरणादिसर्वानर्थबीजम् अहं ब्रवीमि । तथा सदाऽप्रमादं स्वाभाविकस्वरूपेणावस्थानम् अमृतत्वं ब्रवीमि । तथा च श्रुतिः स्वरूपावस्थानमेव मोक्षपदं दर्शयति—'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते ' इति । तथा अनुगीतासु स्पष्टमाह—' एको यज्ञो नास्ति ततो द्वितीयो यो हृच्छयस्तमहमनुब्रवीमि । यस्मिन्निष्ठा सर्वमिदं प्रसित्वा स्वरूपसंस्थाश्च भवन्ति मर्त्याः ' इति । यत एवं स्वरूपावस्थानलक्षणो मोक्षः, अत एव चतुर्विधक्रियाफलविलक्षणत्वादेव न कर्मसाध्यममृतत्वम् ; नापि समुच्चिताभ्यां ज्ञानकर्मभ्यामिति ' अमृत्युः कर्मणा केचित् इत्येतदनुपपन्नमेवेत्युक्तं भवति । वक्ष्यति चास्य पक्षस्य स्वयमेव निराकरणम्—' कर्मोदये कर्मफलानुरागात्तत्रानुयान्ति न तरन्ति मृत्युम् । ज्ञानेन विद्वांस्तेजोऽभ्येति नित्यं न विद्यते ह्यन्यथा तस्य पन्थाः ' इति ॥ ४ ॥

[नील०] यत् कर्मणा ब्रह्मचर्येण मृत्युर्नास्तीति तेन सत्यस्य बन्धस्य साधनेन नाश इति अपृच्छः पृष्टवानसि । यच्चापरं मृत्युः स्वरूपत एव नास्तीत्यपृच्छः । एतत् एतयोः पक्षयोः परस्परविरुद्धत्वं मा विशङ्किथाः मा मंस्थाः । अमृत्युः कर्मणा केचिदिति पाठे कर्मसाध्यममृतत्वमुत ज्ञानसाध्यमिति पक्षद्वयोपन्यासः तयोश्च क्रमसमुच्चयपक्षाश्रयेण विरोधाभावं मन्वानो मा विशङ्किथा इति ब्रवीतीत्यर्थः ॥ ३ ॥ अविरोधमेवाह उभे इति । एतस्य एकस्यैव पुंसोऽवस्थाभेदेन उभे अपि सत्ये एव हे क्षत्रिय विद्धि अविद्यावस्थायां बन्धः सत्यः कर्मनाश्यश्च । विद्यावतां तु रज्जूरगवत्कालत्रयेऽपि नास्ति मोहाद्भासमानस्य तु ज्ञान-

३ क. अमृत्युं कर्मणा केचिन्मृत्युर्नास्तीति चापरे । ख. यन्मां । ४ क. शां. क्षत्रियाद्यप्रवृत्ते । क. शां. मोहो । क. शां. यः क° । क. शां. सदाऽप्रमाद° ।

**प्रमादाद्वै असुराः पराभव-**
**न्नप्रमादाद्ब्रह्मभूता भवन्ति ।**

**नवै मृत्युर्व्याघ्र इवात्ति जन्तू-**
**न्नह्यस्य रूपमुपलभ्यते हि ॥ ५ ॥**

मात्रेण निवृत्तिर्भवतीति भावः । आद्यप्रवृत्ते इति पाठे उभे अपि मते अनादिनी नित्ये इत्यर्थः । सिद्धान्तमाह मोहादिति । निर्मोहानां तु नास्त्येव मृत्युरित्यर्थः । मोहं विवृणोति प्रमादमिति आत्मतत्त्वानवेक्षणं प्रमादः मूलाज्ञानमिति यावत् तदेव मृत्युः, मृत्युर्वै तम इतिश्रुतेः । अप्रमादमवहिततां सम्यगवेक्षणं ज्ञानमिति यावत् ज्ञानं सम्यगवेक्षणमिति स्मृतेः । अमृतत्वममृतत्वहेतुः ॥ ४ ॥

[ अर्जु० ] उत्तरं दातुं प्रश्नमनुवदति अपृच्छ इति । कर्मणा ब्रह्मचर्येण यत् परमस्तीतिपक्षादन्यत् नास्तीति यावत् 'एतद् यथा परमार्थं शृणु इत्यर्थः मा विशङ्किथाः मा विरुद्धं शङ्कस्व ॥ ३ ॥ उत्तरमाह–उभेइति । एतस्य प्रश्नस्य संबन्धिनी उभे सत्ये अस्तीति नास्तीति च । क्षत्रियेति संबोधनं, क्षत्रियाद्य क्षत्रियश्रेष्ठ, इति वा । अस्तित्वनास्तित्वयोरौपाधिकनैसर्गिकव्यवस्थया दोषं परिहरन्नाह–मोहादिति । आत्मनश्चित्सदानन्दरूपेण ज्ञानं ज्ञानं ततो देहादिरूपतया विपरीतज्ञानं मोहः । ततो देहन्यासात्स्वोच्छेदभ्रमो मरणमित्यौपाधिको मृत्युस्तदाह–प्रमादमिति ब्रह्मण्येकाग्रतामसृतत्वं मृत्योरभावम् । इत्युपाधिनिसर्गनिवेशितया मृत्युभावाभावयोरविरोधः ॥ ४ ॥

[ सर्व० ] अमृत्युः कर्मणा मृत्युर्नास्तीत्यपरं च ततोऽन्यत् स्वरूपत एव मृत्युर्नास्तीति यन्मां तद्यथा तथा शृणु, मा विशङ्किथाः विरुद्धमेतदिति शङ्कां मा कृथाः ॥ ३ ॥ उभे सत्ये अस्तित्वनास्तित्वे तस्य मृत्योर्विद्धि । क्षत्रियेति क्षत्रधर्ममात्रवेदित्वात्तवेतिसंशयो युक्त इति दर्शयति । न वै विरोध इत्याह मोहो मिथ्याज्ञानम् तत्त्वतस्तु मृत्युनाशस्य वक्ष्यमाणत्वादपरोऽस्तीति मोहादेवायं व्यवहारो मृत्युः अतस्तद्विपरीतमेवामृतत्वं ब्रवीमि । न तु वेदाभ्यासादिमात्रान्मृत्युर्जीयत इत्यर्थः ॥ ४ ॥

[ लक्षा० ] अमृत्युः कर्मणा केचिदित्यत्र केचित् अस्ति मृत्युः कर्मणा पुण्यकर्मणा अमृत्युः मृत्युपरिहारो भवतीति वदन्ति ॥ ३ ॥ उभे सत्ये क्षत्रियाद्य प्रवृत्त इत्यत्र हे क्षत्रियाद्य धृतराष्ट्र उभे मृत्युरस्ति नास्तीति चोभे वाक्ये सत्ये । मोहो मृत्युः संमतो यः कवीनामित्यत्र यो मोहः सः मृत्युरिति कवीनां संमतः । अमोहश्चामृत्युरिति शेषः । अहं तु प्रमादं मृत्युं ब्रवीमि । सदा अप्रमादममृतत्वं ब्रवीमि । तस्मान्मतद्वयमपि प्रामाणिकमिति भावः ॥ ४ ॥

[ शंक० ] कथमेतदवगम्यते प्रमादो मृत्युरप्रमादोऽमृतत्वमिति, तत्राह—प्रमादादिति । प्रमादात् स्वाभाविकब्रह्मभावप्रच्यवनात् अनात्मनि देहादावात्मभावात्–असुराः विरोचनप्रभृतयः पराभवन् पराभूताः । तथा च श्रुतिः—'अनुपलभ्यात्मानम्' इत्यारभ्य 'देवा वा असुरा ते पराभविष्यन्ति' इत्यन्तेन । तथा अप्रमादात् स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मना अवस्थानात् ब्रह्मभूताः सुराश्च इन्द्रादयः । तथा च श्रुतिः—'तं वा एतं देवा आत्मानमुपासते तस्मात्त तेषां सर्वे लोका आप्ताः सर्वे च कामाः' इत्यादिना । अथवा, असुषु प्राणेषु इन्द्रियेष्वेव रमन्त इत्यसुराः अनात्मविदो वैषयिकाः प्राणिनोऽसुराः ते स्वाभाविकब्रह्मभावमतिक्रम्य अनात्मनि देहादावात्मभावमापन्नाः पराभवन् तिर्यगादियोनिमापन्नाः । तथा च बह्वृचब्राह्मणोपनिषत्—'तस्मान्न प्रमाद्येत्तन्नातीयाद्ब्रह्मत्यायन्पूर्वे येऽत्यायंस्ते पराबभूवुः' इत्यारभ्य 'या वै ता इमाः प्रजास्तिस्रोऽत्यायमायंस्तानीमानि वयांसि वङ्गावगधाश्चेरपादाः' इति । तथा स्वस्मिन्नात्मन्येव रमन्ति इत्यात्मविदः सुराः । तथा चोक्तम्—'आत्मन्येव रतिर्येषां स्वस्मिन्ब्रह्मणि चाचले । ते सुरा इति विख्याताः सूरयश्च सुरा मताः' इति । ते अप्रमादात् स्वाभाविकब्रह्मात्मना अवस्थानात् ब्रह्मभूताः निवृत्तमिथ्याज्ञानतत्कार्याः ब्रह्मैव संवृत्ता इत्यर्थः । नन्वन्य एव सर्वजन्तूनामुपसंहारको मृत्युः प्रसिद्धः, कथमुच्यते 'प्रमादं वै मृत्युमहं ब्रवीमि' इति, तत्राह—न वै मृत्युरिति । न वै मृत्युर्व्याघ्र इव अत्ति भक्षयति प्राणिनः । यदि भक्षयेत् व्याघ्रस्येव अस्य रूपमुपलभ्येत; न च उपलभ्यते तस्मान्नास्त्येव मृत्युः ॥ ५ ॥

[ नील० ] प्रमादात् अज्ञानात् असुराः असुषु रममाणाः कामक्रोधाद्यासुरवृत्तिभिराक्रान्ताः पराभवन् मृत्युवशा अभूवन् । तथा अप्रमादात् ज्ञानात् ब्रह्मभूताः पूर्वं ब्रह्मैव सन्तः अविद्ययाऽब्रह्मत्वमात्मनो मन्यमानाः विद्यया पुनर्ब्रह्मैव भवन्ति । ब्रह्मैव सन् ब्रह्माप्येतीति श्रुतेः । सुराश्चेति पाठे सुराः शमदमादिमन्तः ब्रह्मभूताः ब्रह्मभावं गता इत्यर्थः । मृत्युरज्ञानं जन्तून् अत्ति संसारसंकटे पातयति न तु व्याघ्र इव दृश्यते कार्यमेवास्य दृश्यते न स्वरूपमित्यर्थः । हि यतः अस्य रूपं निरीक्ष्यमाणमपि न उपलभ्यते नहि रज्जूरगोपादानमज्ञानमुरगवद्द्रष्टुं शक्यमित्यर्थः ॥५॥

[ अर्जु० ] पराभवन् मृताः । ब्रह्मभूतः ब्रह्म प्राप्ताः, ब्रह्मस्वरूपा वा । मृत्योरशरीरत्वं सप्रमाणकमाह । न वै मृत्युरिति । व्याघ्र इव यदि शरीरी स्यात् व्याघ्रस्येव

५ ख. म. अप्रमादाद्वै ब्रह्मभूता हि देवाः; ज. अप्रमदाद्वा ब्रह्मभूताः सुराश्च, नैव मृ°। १ ज. अमवक्षित्यधिकम्।

**यमं त्वेके मृत्युमतोऽन्यमाहु-**
**रात्मावसन्नममृतं ब्रह्मचर्यम् ।**
**पितृलोके राज्यमनुशास्ति देवः**
**शिवः शिवानामशिवोऽशिवानाम् ॥ ६ ॥**

मृत्योरपि शरीरं लभ्येत । तस्मादनुपलब्धेरेव प्रमाणादभावः सिद्धः । हिशब्दोऽनुपलब्धेः प्रसिद्धतामाह ॥ ५ ॥

[ सर्व० ] पराभवन् मृताः ब्रह्मभूताः ब्रह्मप्राप्ताः । एवं तद्वन्मुक्तात्मनस्तथैव मृत्युरिति हि यस्मात् अतोऽशरीर एव प्रमादरूपो मृत्युरित्यर्थः ॥ ५ ॥

[ लक्षा० ] अप्रमादाद्ब्रह्मभूताः सुराश्चेत्यत्र ब्रह्मणि परमात्मनि भूता जाताः तद्ध्याननिरता इत्यर्थः । बृह बृंह वृद्धाविति धातोः वृद्धिमन्तो जाता इति वा । तर्हि मारिका काचन मृत्युर्देवतास्तीति लोकप्रवादस्य का गतिरिति चेत् । सत्यम् तस्या अपि मूलभूतत्वात्, सर्वैर्दृश्यमानत्वाच्च । प्रमादाख्यो मृत्युः प्रबल इति स एवास्माभिरुक्तः । प्रसिद्धा मृत्युदेवता तु प्रमादाख्यमृत्यौ सत्येव मारयति तत्रापि न प्रत्यक्षतो मारयतीत्युपेक्षितेति भावेनाह—न वै मृत्युर्व्याघ्र इवात्ति जन्तूनिति । अनेन व्याघ्रान्मृत इतिवत् मृत्योर्मृत इति लोकप्रवादाभावाच्च सा नोक्तेति सूचयति ॥ ५ ॥

[ शंक० ] ननूपलभ्यते सावित्र्युपाख्याने—‘ अथ सत्यवतः कायात्पाशबद्धं वशंगतम् । अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलात् ’ इति । कथमुच्यते नास्य रूपमुपलभ्यत इति? तत्राह—यममिति । सत्यमुपलभ्यते; तथापि नासौ साक्षान्मृत्युः । कस्तर्हि? यः प्रमादाख्यो मृत्युः अज्ञानं स एव, साक्षाद्विनाशहेतुत्वात् । तथा अज्ञानस्य विनाशहेतुत्वं श्रूयते ‘न चेदिहावेदीन्महती विनष्टिः’ इति। बृहदारण्यके प्रमादाख्यस्याज्ञानस्य साक्षान्मृत्युत्वं दर्शितम्—‘ मृत्युर्वै तमो ज्योतिरमृतम् ’ इति । यस्मात्प्रमाद एव साक्षात्सर्वानर्थबीजम्, तस्मान्न प्रमाद्येत चित्सदानन्दाद्वितीयब्रह्मभावेनावतिष्ठेत इत्यर्थः । तथा चाज्ञानस्य बन्धहेतुत्वं विज्ञानस्य मोक्षहेतुत्वमुक्तं भगवता—‘ अज्ञानेनावृतं ज्ञानं तेन मुह्यन्ति जन्तवः ’ इति । यस्मात्प्रमाद एव मृत्युः अप्रमादोऽमृतत्वम् , अत एव न कर्मसाध्यं नापि कर्मप्राप्यम्; नित्यसिद्धत्वात् , नित्यप्राप्तत्वाच्च । तथा च श्रुतिः ‘ एष नित्यो महिमा ब्राह्मणस्य न कर्मणा वर्धते नो कनीयान् । तस्यैव स्यात्पदवित्तं विदित्वा न लिप्यते कर्मणा पापकेन ’ इति । तथा—‘ तमेव विदित्वाति मृत्युमेति नान्यः पन्था विद्यतेऽयनाय ’ ‘ तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः ’ इति ज्ञानस्यैव मोक्षसाधनत्वं दर्शितम् । तथा—‘ न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः ’ इति । वक्ष्यति च भगवान् ज्ञानस्यैव मोक्षसाधनत्वम्—‘ अन्तवन्तः क्षत्रिय ते जयन्ति लोकाञ्जनाः कर्मणा निर्मितेन ’ इति, ‘ एवं मृत्युं जायमानं विदित्वा ज्ञानेन तिष्ठन्न बिभेति मृत्योः ’ इति च । तथा च मोक्षधर्मे—‘ कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ’ इति । ‘ ज्ञानं विशिष्टं न तथा हि यज्ञा ज्ञानेन दुर्गं तरते न यज्ञैः ’ इति च । तथा च ज्ञानस्यैव मोक्षसाधनत्वं मन्यमानः सर्वकर्मपरित्यागमाह भगवान् वेदाचार्यो मनुः—‘ यथोक्तान्यपि कर्माणि परिहाप्य द्विजोत्तमः । आत्मज्ञाने शमे च स्याद्वेदाभ्यासे च यत्नवान् ’ इति । तथाह भगवान्परमेश्वरः—‘ ज्ञानं तु केवलं सम्यगपवर्गफलप्रदम् । तस्माद्ब्रवद्भिर्विमलं ज्ञानं कैवल्यसाधनम् ॥ विज्ञातव्यं प्रयत्नेन श्रोतव्यं दृश्यमेव च । एकः सर्वगो ह्यात्मा केवलश्चितिमात्रकः ॥ आनन्दो निर्मलो नित्यः स्यादेतत्सांख्यदर्शनम् । एतदेव परं ज्ञानमेतन्मोक्षोऽनुगीयते ॥ एतत्कैवल्यममलं ब्रह्मभावश्च वर्णितः । आश्रित्यैतत्परं तत्त्वं तन्निष्ठास्तत्परायणाः ॥ गच्छन्ति मां महात्मानो यतयो वीतमत्सराः ’ इति । ननु एवं चेत्तर्हि कर्माणि नानुष्ठेयानि ? न नानुष्ठेयानि, किंतु ज्ञानिना अननुष्ठेयान्येव । तथा चाह भगवान्वासुदेवः—‘ यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः । आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते ’ इति । तथा च ब्रह्माण्डपुराणे कावषेयाः—‘ किमद्य नश्चाध्ययनेन कार्यं किमर्थवन्तश्च मखैर्यजामः । प्राणं हि वाप्यनले जोहवीमः प्राणानले जुहवीमीति वाचम् ’ इति । तथा च बह्वृचब्राह्मणोपनिषत्—‘ किमर्थं वयमध्येष्यामहे ’ इति तथा च बृहदारण्यके विदुषः कर्मसंन्यासं दर्शयति—‘ एतद्ध स्म वैतत्पूर्वे विद्वांसः प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्मायं लोक इति ते ह स्म पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ’ इति । तथा लैङ्गे—‘ ज्ञानामृतेन तृप्तस्य कृतकृत्यस्य योगिनः । नैवास्ति किंचित्कर्तव्यमस्ति चेन्न स तत्त्ववित् ’ इति । तथा च आथर्वणी श्रुतिः—‘ नैतद्विद्वानृषिणा विधेये न रुन्ध्यते विधिना शब्दकारः ’ इति । केन तर्ह्यनुष्ठेयानि ? अज्ञानिना आरुरुक्षुणा सर्वकर्माणि सर्वदा अनुष्ठेयानि; न ज्ञानिना । तथा चाह भगवान्—‘लोकेऽस्मिन्द्विविधा निष्ठा पुरा प्रोक्ता मयानघ । ज्ञानयोगेन

६ क. ज. शां० भा. °रात्मावासममृतं ब्रह्मचर्यम्; ख. म. °रात्मावसन्नमृतं ब्रह्मचर्यम् ।

सांख्यानां कर्मयोगेन योगिनाम् ' इति ' आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते । योगारूढस्य तस्यैव शमः कारणमुच्यते ' इति च । तथा चाह भगवान्सत्यवतीसुतः—' द्वाविमावथ पन्थानौ यत्र वेदाः प्रतिष्ठिताः । प्रवृत्तिलक्षणो धर्मो निवृत्तौ च व्यवस्थितः ' इति ॥ नन्वेवमारुरुक्षूणामपि कर्माणि नानुष्ठेयानि, कर्मणां बन्धहेतुत्वात् । तथा चोक्तम्—' कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते ' इति । सत्यम् , तथापि ईश्वरार्थतया फलनिरपेक्षमनुष्ठीयमानानि न बन्धहेतूनि । तथा चोक्तं भगवता—' यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः । तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ' इति । किमर्थं तर्हि तेषामनुष्ठानम् ? सत्त्वशुद्ध्यर्थमिति ब्रूमः । तथा चोक्तं भगवता—' कायेन मनसा बुद्ध्या केवलैरिन्द्रियैरपि । योगिनः कर्म कुर्वन्ति सङ्गं त्यक्त्वात्मशुद्धये ' इति, ' यज्ञो दानं तपश्चैव पावनानि मनीषिणाम् ' इति, ' गतसङ्गस्य मुक्तस्य ज्ञानावस्थितचेतसः । यज्ञायाचरतः कर्म समग्रं प्रविलीयते ' इति च । तथा च—' कषायपक्तिः कर्माणि ज्ञानं तु परमा गतिः । कषाये कर्मभिः पक्वे ततो ज्ञानं प्रवर्तते ' इति । ननु कर्मणामपि मोक्षहेतुत्वं श्रूयते—' विद्यां चाविद्यां च यस्तद्वेदोभयं सह ' इति ' कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः ' इति च । तथा च मनुः—' तपो विद्या च विप्रस्य निःश्रेयसकरे उभे ' इति । नैतत् , पूर्वापराननुसंधाननिबन्धनोऽयं भ्रमः । तथा हि—' विद्यां चाविद्यां च यस्तद्वेदोभयं सह ' इत्युक्त्वा ' अविद्यया मृत्युं तीर्त्वा विद्ययामृतमश्नुते ' इति विद्याविद्ययोर्भिन्नविषयत्वेन समुच्चयाभावः श्रुत्यैव दर्शितः । इममेवार्थं स्पष्टयन् भगवान्मनुः—' तपो विद्या च विप्रस्य निःश्रेयसकरे उभे ' इत्युक्ते समुच्चयाशङ्का मा भूदिति ' तपसा कल्मषं हन्ति विद्ययामृतमश्नुते ' इति तपसो नित्यनैमित्तिकलक्षणस्य कर्मणः अन्तःकरणशुद्धावेव विनियोगं दर्शितवान् । तथा ' ईशावास्यमिदं सर्वम् ' इति सर्वस्य तावन्मात्रत्वमुक्त्वा तदात्मभूतस्य सर्वस्य तावन्मात्रत्वं पश्यतस्तद्दर्शनेनैव कृतार्थस्य साध्यान्तरमपश्यतः ' तेन त्यक्तेन भुञ्जीथाः ' इति त्यागेनैवात्मपरिपालनमुक्त्वा अतदात्मवेदिनः केन तर्हि आत्मपरिपालनमित्याशङ्क्याह—' कुर्वन्नेवेह कर्माणि जिजीविषेच्छतं समाः । एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे ' इति । एवंभूते त्वयि नरमात्राभिमानिन्यज्ञे अविद्यानिमित्तोत्तरपूर्वाघयोरश्लेषविनाशाभावात् कुर्वन्नेव सदा यावज्जीवं कर्म जिजीविषेदित्यज्ञस्य नरमात्राभिमानिनः शुद्ध्यर्थं यावज्जीवं कर्माणि दर्शयति । अत एभिरपि वाक्यैः शुद्धिसाधनत्वमेवावगम्यते, न मोक्षसाधनत्वम् । यदप्युक्तम्—' तेनेति ब्रह्मवित्पुण्यकृत्तैजसश्च ' इति चशब्दात्समुच्चयोऽत्रगम्यते इति—तदपि प्रसिद्धश्रुतिविनियोगानुसारेणैव योजयितव्यम् । तथा च अनुगीतासु स्पष्टमाह भगवान् कर्मणां शुद्धिद्वारेणैव मोक्षसाधनत्वम्—' नित्यनैमित्तिकैः शुद्धैः फलसङ्गविवर्जितैः । सत्त्वशुद्धिमवाप्याथ योगारूढो भविष्यति ॥ योगारूढस्ततो याति तद्विष्णोः परमं पदम् ॥ गुरुभक्त्या च धृत्या च धर्मभक्त्या श्रुतेन च । विष्णुभक्त्या च सततं ज्ञानमुत्पद्यतेऽमलम् ॥ तस्माद्धर्मपरो भूत्वा वेदास्तिक्यसमन्वितः । कुर्वन्वै नित्यकर्माणि यथाशक्ति स बुद्धिमान् ॥ फलानि पर आसाद्य वासुदेवे परात्मनि । शुद्धसत्त्वो भवत्येव योगारूढश्च जायते ' इति । वक्ष्यति च भगवान् सनत्सुजातः शुद्धिद्वारेणैव मोक्षसाधनत्वम्—' तदर्थमुक्तं तपसैव कर्मणा ताभ्यामसौ पुण्यमुपैति विद्वान् । पुण्येन पापं विनिहत्य पश्चात्स जायते ज्ञानविदीपितात्मा ' ज्ञानेन चात्मानमुपैति विद्वान् ' इति । ननु कथं सत्त्वशुद्धिद्वारेणैव मोक्षसाधनत्वम् ? विनापि सत्त्वशुद्धिं ज्ञानेनैव मोक्षः सिध्यत्येव । सत्यम् । ज्ञानेनैव मोक्षः सिध्यति; किंतु तदेव ज्ञानं सत्त्वशुद्धिं विना नोत्पद्यत इति वयं ब्रूमः । तथा चोक्तम्—'ज्ञानमुत्पद्यते पुंसां क्षयात्पापस्य कर्मणः' इति । तथा अनेकजन्मसंसारचिते पापसमुच्चये । नाक्षीणे जायते पुंसां गोविन्दाभिमुखी मतिः ॥ जन्मान्तरसहस्रेषु तपोध्यानसमाधिभिः । नराणां क्षीणपापानां कृष्णे भक्तिः प्रजायते' इति। तथा चोक्तं भगवता—'अनेकजन्मसंसिद्धस्ततो याति परां गतिम् । तपस्विभ्योऽधिको योगी ज्ञानिभ्योऽपि मतोऽधिकः ॥ कर्मिभ्यश्चाधिको योगी तस्माद्योगी भवार्जुन ' इति । ' स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः । स्वकर्मनिरतः सिद्धिं यथा विन्दति तच्छृणु ॥ यतः प्रवृत्तिर्भूतानां येन सर्वमिदं ततम् । स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः ' इति । तथा चाह याज्ञवल्क्यः—' तथाविपक्वकरण आत्मज्ञानस्य न क्षमः ' इति । यस्मात् विशुद्धसत्त्वस्यैव नित्यानित्यविवेकद्वारेण मोक्षसाधनज्ञाननिष्पत्तिः, तस्मात्सत्त्वशुद्ध्यर्थं सर्वेश्वरमुद्दिश्य सर्वाणि वाङ्मनःकायलक्षणानि श्रौतस्मार्तानि कर्माणि समाचरेत् यावद्विशुद्धसत्त्व इहामुत्रफलभोगविरागो योगारूढो भवति। तथा चाह भगवान्—' आरुरुक्षोर्मुनेर्योगं कर्म कारणमुच्यते ' इति । संन्यासस्तु महाबाहो दुःखमाप्तुमयोगतः इति । तस्य लक्षणमुक्तम् 'यदा हि नेन्द्रियार्थेषु न कर्मस्वनुषज्जते। सर्वसंकल्पसंन्यासी योगारूढस्तदोच्यते' इति। यस्तु पुनरेवं यज्ञदानादिना विशुद्धसत्त्व इहामुत्रफलभोगविरागो योगारूढो भवति, तस्य शम एव कारणं न कर्म । तथा चोक्तम्—' योगारूढस्य तस्यैव शमः कारण-

मुच्यते ' इति। यस्माद्योगारूढस्य शम एव कारणं न कर्म, तस्माच्छमदमादिसाधनसंपन्नः श्रवणादिसमन्वितः 'योगी युञ्जीत सततमात्मानं रहसि स्थितः । निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः ॥ कथं तर्हि योगानुष्ठानम्? शृणु—समे देशे शर्करावह्निवालुकाशब्दजलाशयादिवर्जिते मनोनुकूले शुचौ नात्युच्छ्रितं नातिनीचं चैलाजिनकुशोत्तरं स्थिरमासनं प्रतिष्ठाप्य, तत्रोपविश्यासनं स्वस्तिकं पद्मासनं वा लब्ध्वा, समं कायशिरोग्रीवं धारयन्, विश्वादीन् क्रमेण कार्यकारणविनिर्मुक्ते पूर्णात्मनि उपसंहृत्य पूर्णात्मना स्थित्वा, ध्यायेत्पुरिशयं देवं पूर्णानन्दं निरञ्जनम्। अपूर्वमनपरं ब्रह्म नेति नेत्यादिलक्षणम् अशनायाद्यसंस्पृष्टमनुदितानस्तमितज्ञानात्मनावस्थितं परमात्मानमोमिति। तथा चोक्तं ब्रह्माण्डपुराणे कावषेयगीतासु—' तस्माद्विमोक्षाय कुरु प्रयत्नं दुःखाद्विमुक्तो भवितासि येन। ॐ ब्रह्म शून्यं परमं प्रधानमानन्दमात्रं प्रणवं जुषस्व, इति। एवं युञ्जन् सदात्मानं परमात्मत्वेन यदा साक्षाज्जानाति, तदा निरस्ताज्ञानतत्कार्यो वीतशोकः कृतकृत्यो भवति। तथा च बृहदारण्यके—' आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनु संज्वरेत् ' इति। तथा च ईशावास्ये—' यस्मिन्सर्वाणि भूतानि आत्मैवाभूद्विजानतः। तत्र को मोहः कः शोक एकत्वमनुपश्यतः ' इति। तथा च कठवल्लीषु—' तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ' ' निचाय्य तं मृत्युमुखात्प्रमुच्यते ' इति । ' आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन ' इति। ' भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे '। तथा चाह भगवान्—' अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते । तस्मादेवं विदित्वैनं नानुशोचितुमर्हसि ' ' एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत ' इति। तथा च कावषेयगीतासु—' आत्मनः शोकसंतीर्णो न बिभेति कुतश्चन । मृत्योः सकाशान्मरणादथवान्यकृताद्भयात् ॥ न जायते न म्रियते न वध्यो न च घातकः। न बद्धो बद्धकारी वा न मुक्तो न च मोक्षदः ॥ पुरुषः परमात्मायं यत्ततोऽन्यदसच्च तत्। अज्ञानपाशे निर्भिन्ने छिन्ने महति संशये ॥ शुभाशुभे च संक्षीर्णे दग्धे बीजे च जन्मनाम्। प्रयाति परमानन्दं तद्विष्णोः परमं पदम् ' इति। तथा चाह भगवान्मनुः—' सर्वेषामपि चैतेषामात्मज्ञानं परं स्मृतम्। तद्ध्यग्र्यं सर्वविद्यानां प्राप्यते ह्यमृतं ततः ' ' एतद्धि जन्मसाफल्यं ब्राह्मणस्य विशेषतः। प्राप्यैतत्कृतकृत्यो हि द्विजो भवति नान्यथा ' इति। यस्मात्तद्विज्ञानादेव परमपुरुषार्थप्राप्तिः, तस्मात्तमेव च परमात्मानं पूर्णानन्दमात्मत्वेन जानीयात् ' अहमस्मि ' इति, न किंचिदन्यच्चिन्तयेत्। तथा च श्रुतिः-' तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत ब्राह्मणः। नानुध्यायाद्बहूञ्शब्दान्वाचो विग्लापनं हि तत् ' इति। ' तमेवैकं जानथात्मानमन्या वाचो विमुञ्चथ ' इति। ' एतज्ज्ञेयं नित्यमेवात्मसंस्थं नातः परं वेदितव्यं हि किंचित् ' इति। तथा च भगवान्वासुदेवः—' संकल्पप्रभवान्कामांस्त्यक्त्वा सर्वानशेषतः। मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ शनैः शनैरुपरमेद्बुद्ध्या धृतिगृहीतया । आत्मसंस्थं मनः कृत्वा न किंचिदपि चिन्तयेत् ' इति। एवं प्रसङ्गात्सर्वशास्त्रार्थः संक्षेपतः प्रदर्शितः ॥

अथेदानीं प्रकृतमनुसरामः—यस्मात्प्रमाद एव सर्वानर्थबीजं तस्मात्प्रमादं वै मृत्युमहं ब्रवीमि, न यमम्। यमं तु पुनः एके विषयविषान्धाः अविद्यारूढाः स्वात्मव्यतिरेकेण द्वितीयं पश्यन्तो मृत्युम् अतो मयोक्तान्मृत्योः प्रमादाख्यात् अन्यं मृत्य्वन्तरं वैवस्वतम् आहुः आत्मावासम् आत्मनि बुद्धौ वसतीत्यात्मावासः तम्। तथा चाह मनुः—' यमो वैवस्वतो राजा यस्तवैष हृदि स्थितः। तेन चेदविवादस्ते मा गङ्गां मा कुरून्गमः ' इति। अमृतम् अमरणधर्माणं ब्रह्मचर्यं ब्रह्मणि स्वात्मभूते रममाणं ब्रह्मनिष्ठमित्यर्थः। श्रूयते कठवल्लीषु—'कस्तं मदामदं देवं मदन्यो ज्ञातुमर्हति' इति। किंच, पितृलोके राज्यमनुशास्ति देवः। कथमनुशास्ति? शिवः सुखप्रदः शिवानां पुण्यकर्मणाम्, अशिवः असुखप्रदः अशिवानां पापकर्मणाम् ॥ ६ ॥

[ नील० ] ननु यदि मृत्योः रूपं नोपलभ्यते तर्हि तत्सत्त्वे किं प्रमाणमत आह–यममिति। अतः अज्ञानाख्यान्मृत्योरन्यं यमसंज्ञमेके मूढाः मृत्युमाहुः। अथ सत्यवतः कायात्पाशबद्धं वशंगतम्। अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादिति। अस्य व्यतिरेकमुखेन आत्मनि कल्पितत्वमाह—आत्मावसन्नमिति। आत्मनि प्रतीच्येवाऽवसन्नं लीनं, तेन रज्जूरगादिवद्यमादिकमपि आत्मनि कल्पितमेवेत्यर्थः। आत्मावासमिति पाठे आत्माश्रयमित्यर्थः। यमप्रशमोपायमाहामृतमिति। ब्रह्मचर्यं ब्रह्मणि चर्या आत्मानुसंधानं निरस्ताखिलकल्पनाजालममृतं मोक्षहेतुः, योगिनां यमभयं नास्तीत्यर्थः। न तस्य रोगो न जरा न मृत्युरिति श्रुतेः। ननु कल्पितस्य यमस्य मृगजलादेरिवार्थक्रियाकारिकत्वं न युक्तमत आह–पितृलोक इति। यादृशो यक्षस्तादृशो बलिरिति न्यायेन आत्मनि कल्पितगरुडभावस्य विषनिवर्तकत्ववत् तत्राप्यर्थक्रियाकारित्वमस्तीति भावः । अत्र युक्तिमाह शिव इति शीतोष्णादिवदेकस्मिन् सत्यस्य विरुद्धधर्मद्वयस्यासंभवात् तस्मिन्नेव शिवत्वाशिवत्वे रज्ज्वां सर्पदण्डादिवत्कल्पिते इत्यर्थः ॥ ६ ॥

**अस्यादेशान्निःसरते नराणां**
**क्रोधः प्रमादो लोभरूपश्च मृत्युः ।**
**अहंगतेनैव चरन्विमार्गा-**
**न्न चात्मनो योगमुपैति कश्चित् ॥ ७ ॥**

[ अर्जु० ] पक्षान्तरमाह–अतो मोहप्रमादाभ्यामन्यं यमं मृत्युलोके पौराणिका आहुः । यथा सावित्र्युपाख्याने–अङ्गुष्ठमात्रं पुरुषं निश्चकर्ष यमो बलादिति । अमृतं तु तेषामपि तदेव संमतमित्याह–आत्मेति । वसन् बुद्धौ सदा वर्तमानोऽमृतं तदेव ब्रह्मचर्यं बुद्धौ परिवृत्तेरेव ब्रह्मप्राप्त्यर्थचर्यारूपत्वात् । यमस्य मृत्योर्व्यापारमाह–पितृलोक इति । शिवः कल्याणकृन् शिवानां शान्तानां, विपरीतोऽन्यः ॥६॥

[ सर्व० ] तर्हि शरीरी यमो मृत्युरिति मिथ्यैव लोकप्रसिद्धिः, वेदे वेदाभ्यासादाचारादिभिर्मृत्युतरणोपदेश इत्यत आह—यमं त्वेक इति । एके देवासुराः अतः प्रमादादन्यं तन्मतेन मृत्युमाहुः । आत्मावसन्नमात्मावसादकमेव ब्रह्मचर्यं वेदोक्तत्वात् ऋतं सत्यं तत्त्वतो ऽमृत्युरूपमाहुः । आत्मावसन्नपदेन तत्वतोऽस्य मृत्युतां दर्शयन् मृतत्वामृतत्वज्ञानं तेषां मिथ्येति दर्शयति । अवश्यदोषा दुःखसन्ततिस्तज्जनकवचनात् (?) अवसन्नमित्यत्र कर्तरि क्तः । स यमः केनचिदनुपलभ्यमानोऽपि कथं मृत्युत्वेन कल्प्यते इत्याह—पितृलोक इति । देवपितॄणां प्रत्यक्ष एवासावित्यर्थः । शिवः सुखदः शिवानां शुभकर्मकृताम् । अशिवो दुःखदः अशिवानां पापिनाम् ॥ ६ ॥

[ लक्ष्मा० ] इतोऽपि मृत्युदेवता उपेक्षितेत्याह । यमं त्वेके मृत्युमतोऽन्यमाहुरिति । एके मृत्योरपि प्रेरकत्वाद्यममेव मृत्युमाहुः । केचित्तु अतः यमात् अन्यं मृत्युदेवतामेव मृत्युमाहुः । एवं च परप्रेष्यत्वादपि सा नोक्तेति भावः । तर्हि उक्तैर्नानाविधैर्मृत्युभिरस्पृष्टं वस्तु किमित्यत आह—आत्मावासीदमृतं ब्रह्मचर्यमिति । आत्मा वा इदमेक एवाग्र आसीदिति श्रुत्युक्तम् । ब्रह्म वेदः तेन चरगतिभक्षणयोरिति धातोः चर्यम् अवगमनहेतुयोग्यं नारायणाख्यं वस्तु अमृतं मृतिपदोक्तनानाविधमृत्युरहितं प्रलयेऽप्यवशिष्टत्वात् । तस्यैवामृतत्वं शोभत इति सूचनाय श्रुतिप्रतीकग्रहणम् । बुद्धिसिद्धं च तस्यामृतत्वमिति भावेनाह—पितृलोक इति । शिवानां शुभजीवानां शिवः शोभनप्रदाता । अशिवानामशुभजीवानामशिवः अमङ्गलदाता । रामो यमसभातल इति वचनात् रामचन्द्ररूपी देवो नारायणः पितृलोकराज्यमनुशास्ति । सर्वयमपूज्यत्वादपि तस्य न मृत्युरिति भावः ॥ ६ ॥

[ शंक० ] एवं तावत् 'प्रमादं वै मृत्युम्' इति मृत्योः स्वरूपं निर्धारितम् । अथेदानीं तस्यैव कार्यात्मनावस्थानं दर्शयति–आस्यादिति । यः प्रमादाख्यः अज्ञानमृत्युः स प्रथममास्यात्मना परिणमते । आस्यः अभिमानात्मकोऽहंकारः । तथा चोक्तम्–'सर्वार्थाक्षेपसंयोगादसुधातुसमन्वयात् । आस्य इत्युच्यते घोरो ह्यहंकारो गुणो महान्' इति । एवमहंकारात्मना स्थित्वा ततोऽहंकारात् निःसरते निर्गच्छति कामात्मना । ततः कामः स्वविषये प्रवर्तमानः प्रतिहतः क्रोधः प्रमादो मोहरूपश्च भवति । ततः अहंगतेन अहंरूपमापन्नेनाहंकाराद्यात्मना अवस्थितेनाज्ञानेन तदात्मभावमापन्नः 'ब्राह्मणोऽहं क्षत्रियोऽहं कृशोऽहं स्थूलोऽहममुष्य पुत्रोऽस्य नप्ता' इत्येवमात्मको रागद्वेषादिसमन्वितः चरन् विमार्गान् श्रौतस्मार्तविपरीतमार्गान् न चात्मनः परमात्मनो योगं समाधिलक्षणम् उपैति किंचिदपि । अथवा, अविद्याकामकर्माणि संसारस्य प्रयोजकभूतानि । पूर्वत्र मोहो मृत्युः संमतो यः इत्यनेनाग्रहणान्यथाग्रहणात्मिका अविद्योक्ता उत्तरत्र कर्मोदये इति कर्म वक्ष्यति । अथेदानीं कामोऽभिधीयते–अस्यन्ते क्षिप्यन्तेऽनेन संसारे प्राणिन इत्यास्यः कामः । अथवा आस्यवदास्यं सर्वजग्धृत्वात् । तथा चोक्तं भगवता–'काम एष क्रोध एषः' इति । एष मृत्युरास्यात्मना कामात्मना स्थित्वा ततः क्रोधात्मना परिणमते । उक्तं च– 'कामात्क्रोधोऽभिजायते' इति । ततः अहंगतेन अहंकारमापन्नेनाज्ञानेन अहंकारममकारफलकारूढेन चिदाभासेन चरन्विमार्गान्न चात्मनो योगमुपैति किंचित्* ॥ ७ ॥

[ नील० ] अस्येति । अस्य यमस्य आदेशादाज्ञातः क्रोधादिरूपो मृत्युर्मरणहेतुर्निःसरति उद्भवति । अत्र यथाऽज्ञानाभिमानिनी देवता यमः एवं क्रोधाद्यभिमानिन्योऽपि देवताः यमस्य दासभूताः सन्तीत्यधिदैवमर्थः । अध्यात्मं तु अज्ञानादेव क्रोधादय उद्भवन्ति ततो म्रियत इत्यर्थः । ननु यद्यात्मावासमज्ञानं तर्हि तत् आत्मनः पृथक्सिद्धमपृथक्सिद्धं वा । अन्त्ये मुक्तानामपि पुनर्बन्धापत्तिः । आद्ये सांख्यप्रकृतिवत्तदनाशापत्तिरित्याशङ्क्य मृत्युं विशिनष्टि नराणामहंगतेनैव विमार्गान् चरन्निति जीवानां योऽहंकारस्तेन सह गतं गमनमहंकारसाहित्यं तेन विमार्गान् अनात्मगान् मार्गान् चरन् विषयान्भुञ्जान इत्यर्थः । मुक्तौ अज्ञानाश्रयस्य अहमर्थस्य चिदाभासस्य नष्टत्वात् न शुद्धादात्मनः सकाशादज्ञानं पुनरुदेति नापि पृथगवतिष्ठत इति भावः । ननु सुषुप्तावहंकारलयोऽपि दृश्यत इत्यत आह–न चेति । तदानीमपि सूक्ष्मस्याहमर्थस्य सत्त्वान्न कश्चित् ज्ञानं विना आत्मयोगमुपैति स्वं रूपं प्राप्नोतीत्यर्थः । अतोऽहं-

७ अ. शां. आस्यादेष निःसरते । ख. ज म. मोहरूपश्चमृत्युः । म. उत्तरार्धं नास्ति । अ. कंचित् ; क. कश्चित् ; शां. किंचित् । * अ. कंचित् ।

**ते मोहितास्तद्वशे वर्तमाना**
**इतः प्रेतास्तत्र पुनः पतन्ति ।**
**ततस्तान्देवा अनु विप्लवन्ते**
**अतो मृत्युर्मरणाख्यामुपैति ॥ ८ ॥**

कारनाशात्प्राक् आत्मनः क्रोधादिरूपस्य मृत्योरुदयो युज्यत एवेत्यर्थः। आस्यादेष इति पाठे आस्तेऽस्मिन्नित्यास्यमज्ञानस्याधिष्ठानमहंकारस्तस्मान्निःसरतः इतिपूर्ववत् ॥७॥

[ अर्जु० ] यमस्य व्यापारान्तरमाह—अस्येति। अस्य यमस्यादेशादाज्ञया निःसरते अन्तःकरणादुद्भवति ॥ ७ ॥

[ सर्व० ] तर्तिकयतामो (?) मृत्युरित्याह—अस्यादेशान्निःसरत इति। प्रमादो हि मृत्युः तस्य सहकारिणौ च क्रोधमोहौ तद्वैतत्सर्वं तत्तन्मात्ररूपेण तस्यादेशात् इच्छातो निस्सरते उत्पद्यत इति मृत्युफलकत्वात् मृत्युपदेनाभिधीयत इत्यर्थः ॥ ७ ॥

[लक्षा० ] नारायणस्य क्रोधप्रमादमृत्युरहितत्वे युक्त्यन्तरं चाह—अस्यादेशादिति। अस्य नारायणस्य आदेशात् आज्ञाशक्तेः 'आस्यादेषः' इति पाठे आस्ये भवमास्यं परुषवचनादिकं तस्मादित्यर्थः। तर्हि मृत्युतरणोपायः क इत्यतः परमात्मनो भक्तियोग एव मृत्युतरणोपायः। स त्वविवेकिनां न लभ्य इत्याह—अहंगतेनैव चरन्निति। अहमिति गतं राजसभायां विद्वत्सभायां च गमनं येन सोऽहंगतः अहंकार इन्यर्थः। तेन विमार्गानेव विरुद्धमार्गानेव चरन् गुरुदेवताद्यवज्ञामेव कुर्वन्नित्यर्थः। आत्मनः परमात्मनः कंचिद्योगं कर्मयोगज्ञानयोगभक्तियोगेषु एकमपि योगं नोपैति ॥ ७ ॥

[ शंक० ] किंच—ते इति। तेन अहंकारादिरूपेण परिणताज्ञानेन ते मोहिताः देहादिष्वात्मभावमापादिताः तद्वशे अहंकाराद्यात्मना परिणतप्रमादाख्यमृत्युवशे वर्तमाना इतः अस्मात् प्रेता धूमादिमार्गेण गत्वा तत्र परलोके यावत्संपातमुषित्वा पुनः आकाशवायुवृष्टिसस्यान्नशुक्रशोणितादिक्रमेण देहग्रहणाय पतन्ति निपतन्ति। श्रूयते च—'तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' इति। ततः अनन्तरं पुनः देहग्रहणावस्थायां तं देवा इन्द्रियाणि अनुसृत्य कर्माणि परि समन्तात् प्लवन्ते समन्ततः परिवर्तन्त इत्यर्थः। अतः अस्मात्कारणादिन्द्रियगुणानुसरणात् मृत्युं मरणं याति। ततो मरणात् जन्मान्तरम् अभ्युपैति ततो मृत्युम्। एवं जननमरणप्रबन्धाधिरूढो न कदाचिद्विमुच्यत इत्यर्थः। आत्माज्ञाननिमित्तत्वात्संसारस्य यावत् परमात्मानमात्मत्वेन साक्षान्न विजानाति तावदयं तापत्रयाभिभूतो मकरादिभिरिव रागादिभिरितस्ततः समाकृष्यमाणः मोमुह्यमानः संसरन्नवतिष्ठत इत्यर्थः ॥८॥

[ नील० ] आत्मयोगाभावे दोषमाह ते इति। ते नराः मोहिताः क्रोधादिभिरिति शेषः। तद्वशे क्रोधादिरूपस्य मृत्योर्वशे वर्तमानाः सन्तः इतोऽस्माल्लोकात् प्रेताः गताः सन्तः तत्र यमलोके पुनरित्यसकृद्गमनसूचनार्थं पतन्ति गच्छन्ति नरकादाविति शेषः। ततस्तान् तत्रगतान् अनु देवा इन्द्रियाणि प्लवन्ते तत्रैव गच्छन्ति। तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्तीति श्रुतेः। मृङ प्राणत्यागे इत्यनुशासनाच्च मृत्युरज्ञानं मरणसंज्ञामपि लभते। अयं भावः—मृत्युरत्यन्तविस्मृतिरिति स्मृतेरज्ञानं प्रत्यगानन्दविस्मारकत्वेन यमश्च प्रत्यक्त्वेन गृहीतस्य देहस्य च विस्मारकत्वेन साम्यात् द्वयमपि मृत्युशब्दितम्। तथा च मुख्यो मृत्युरज्ञानं गौणो यम इति ॥ ८ ॥

[ अर्जु० ] क्रोधादिगृहीतानां गतिमाह—ते मोहिता इति। तद्वशे यमवशे इतो देहात्प्रेताः प्रकर्षेण गताः। यथा पुनर्न विशन्तीमं देहं तत्र देहान्तरे पुनरिति प्रवाहस्याविच्छेदं सूचयति। देहान्तरप्रतिपत्तौ सहकारिणमाह—ततस्तं देवा अनुविप्लवन्ते अतो मृत्युर्मरणाख्यामुपैति। अतोऽनन्तरं तं गच्छन्तं अनु पश्चात् देवा इन्द्रियाणि उपलक्षणं चैतत् कर्म संस्काराश्चेति बोद्धव्यम्। विप्लवन्ते विशेषेण गच्छन्ति। अथवा देवास्तमनु विप्लवन्ते उपसंहरन्ति। यमस्य मृत्युरूपत्वमुपसंहरन्तीत्यर्थः। ततस्तदादेशात् प्रवृत्तेः मृत्युर्यमः मरणाख्यां मृत्युसंज्ञामुपैति ॥ ८ ॥

[ सर्व० ] एतेषां साक्षाद्दुःखहेतुत्वान्मृत्युत्वं मुख्यमित्याह। ते मोहिताः मोहं प्राप्ताः तद्वशे वर्तमानाः इतः प्रेतास्तत्र पुनः पतन्ति उपलक्षणं चैतत्। क्रुद्धाः प्रमत्ता इत्यपि द्रष्टव्यम्। तद्वशे तेषां क्रोधादीनां वशे इतो लोकात्प्रेताः प्रकर्षेणात्यन्तं देहत्यागेन गताः तत्र स्वर्गे नरके वा पतन्ति। स्वर्गस्यापि पुनःपातादिदुःखशबलतया नरकतुल्यत्वं दर्शितम्। पतन्तीति सामान्यतोऽभिधानं च। ननु भवन्त्वेते दुखिनः दुःखरहितानां त्विन्द्रादीनां ब्रह्मचर्येणैवामृतत्वं भूतं तत्कथमित्यत आह ततस्तं देवा अनुविप्लवन्तेऽनुगच्छन्ति यमेन नातोऽपि देवैश्वर्यमासादयति। येन देवा अपि तमनुगच्छन्तीत्यर्थः। अतो मृत्युरिह लोके मृत्युत्वेन प्रसिद्धो देवोऽपि मरणाख्यामुपैति। मरणं हि दुःखसंतानाविच्छेद एव। स च देवेष्वप्यस्ति तेषामपि कर्मविशेषलब्धैश्वर्याणां मानुषलोकानुगमादिदुःखाविच्छेदादित्यर्थः ॥ ८ ॥

[ दुर्घ० ] ततस्तं देवा अनुविप्लवन्ते ततो मृत्युर्मरणाख्यामुपैति। कर्मोदये कर्मफलानुरागास्तत्रानु ते यान्ति

८ ख. म. ज. ञां. ततस्तं देवाः। शां. अनु परिप्लवन्ते। क. मृत्युर्मरणादभ्युपैति। ञां. मृत्युंमरणादभ्युपैति।

**कर्मोदये कर्मफलानुरागा-**
**स्तत्रानु ते यान्ति न तरन्ति मृत्युम् ।**

न तरन्ति मृत्युम् । सनत्सुजातश्चोदितो धृतराष्ट्रेण कथं मोक्षं जन्तुर्लभते किं ज्ञानेन कर्मणा वा स्वाध्यायेन वा त्रिभिर्वा, स्थानं कीदृशम् , आत्मा वा किंलक्षणः कथं वा ज्ञेयः के वा तं पश्यन्ति, कानि वा प्रतिबुद्धस्यात्मदर्शने निमित्तानि कथं वा जन्तुर्बध्यते मुच्यते च तत्सर्वं कथयस्वेति । सनत्सुजातस्त्वेवं पृष्टः क्रमेण कथयामास । तत्र मृत्युर्नास्ति यथा तदुच्यते ततस्तमित्यादि । अयमाशयः—नहि तावन्मृत्युं दण्डमादायागच्छन्तं कश्चिदपरोक्षयति । किन्तु प्रमादोयम् कामक्रोधाभिभूतो हि पुमानात्मदर्शने प्रमाद्यन् शरीरभेदमेव मृत्युरिति मन्यते । अतः शरीरभेदे सति मरणाख्यामुपैति तमनु पश्चाद्देवा इन्द्रियाणि विप्लवन्ते समाधौ (?) स्वविषयग्राहकाणि न भवन्ति । देवशब्द इन्द्रियवाचकः साङ्ख्ये दृष्टः । उक्तं च—'प्रकाशो विषयाकारो देवद्वारो न वा क्वचित् । प्रबोधव्यक्तिहेतुत्वाद्दोषो मृत्युर्मतिर्मम ॥ इति । स एव शरीरभेद एव मृत्युर्मरणमिति च संज्ञायते । ततः प्रमादतो नान्योऽस्ति मृत्युरित्यर्थः । कर्मोदये काम्यकर्मोदये काम्यकर्मसंपत्तौ कर्मफलं स्वर्गस्तदनुगास्ते भोक्तारस्तु जन्तवः तत्र संसारे अनुयान्ति पुनः पुनः पतन्ति । न तरन्ति मृत्युं प्रमादादात्मनोऽदर्शनादिति भावः ॥ ८ ॥

[ लक्षा० ] तर्हि तेषां का गतिरित्यतः संसारचक्रे पौनःपुन्येन भ्रमणमेव गतिरित्याह—ते मोहिता इति । तद्वशे मोहवशे तत्र यमलोके प्रेताः पुनरितः अस्मिल्लोके पतन्तीत्यर्थः । तर्हि तत्त्वाभिमानिनो देवास्तत्वाभिदेवाः तं परमात्मानमनुसृत्य तं जीवं ततः मातुर्गर्भपतनानन्तरं परि परितः प्लवन्ते आक्रमन्ति । पादघातेन करताडनेन च अयोग्यजीवं पीडयन्तीतिसूचनाय प्लवन्त इत्युक्तम् । तत्करेण पापं कारयितुमेवायान्ति नतु तदुपकारायेति सूचनायात्मनेपदं च । ततः देवताप्रवेशानन्तरं मरणात् तस्य मरणमुद्दिश्य 'ल्यब्लोपनिमित्ता पञ्चमी' मृत्युः अभ्युपैति अभितः उपैति । शिखास्थाने मारिका मृत्युः प्रमादमोहादयः स्वस्वस्थानेषु विशन्तीत्यर्थः ॥ ८ ॥

[ शंक० ] एवं तावदविद्याकामयोः बन्धहेतुत्वमभिहितम् । अथेदानीं कर्मणां बन्धहेतुत्वमाह—कर्मोदय इति । अमृत्युः कर्मणा केचित् इति कर्मणा अमृतत्वं भवतीति यन्मतान्तरमुपन्यस्तम्, तन्निराकरोति—न केवलं कर्मणा अमृतत्वं भवति, अपि तु कर्मोदये कर्मणामुत्पत्तौ कर्मफलानुरागाः सन्तः तत्र तस्मिन्कर्मफले अनुयान्ति । यस्मात्त-

**सदर्थयोगानवगमात्समंता-**
**त्प्रवर्तते भोगयोगेन देही ॥ ९ ॥**

त्रैवानुयान्ति, अतो न तरन्ति मृत्युं पुनः पुनः जननमरणात्मके संसारे परिवर्तन्त इत्यर्थः । कस्मात्पुनः कर्मोदये कर्मफलानुरागाः तत्रैव परिवर्तन्ते ? सदर्थयोगानवगमात् सदर्थेन योगः सदर्थयोगः परमात्मना योगः तस्य सदर्थयोगस्य एकत्वस्य अनवगमात् स्वात्मनश्चिदानन्दाद्वितीयब्रह्मभावानवगमादित्यर्थः । समन्तात् समन्ततः प्रवर्तते भोगयोगेन विषयरसबुद्ध्या देही । यथा ह्यन्धो निम्नोन्नतकण्टकस्थलादिषु परिभ्रमति एवमसावपि विवेकहीनः सर्वत्र विषयसुखाकाङ्क्षया परिभ्रमति ॥ ९ ॥

[ नील० ] ननु प्राङ्मरणान्मृत्युभयं मृतस्य तु कृतकृत्यतैवास्तीत्याशङ्क्याह कर्मोदय इति । भोगप्रदस्य कर्मण उदये सति कर्मफलभोगेऽनुरागो येषां ते तथाभूताः तत्र स्वर्गादावनुयान्ति भोगवासनया पूर्वदेहं त्यक्त्वा गच्छन्ति अतो मृत्युं न तरन्ति देहनाशमात्रेण न मुच्यन्त इत्यर्थः । तथा च श्रुतिः—येयं प्रेते विचिकित्सा मनुष्येऽस्तीत्येके नायमस्तीति चैके इति मृतस्यास्तित्वनास्तित्वे उपक्षिप्य—योनिमन्ये प्रपद्यन्ते शरीरत्वाय देहिनः । स्थाणुमन्येऽनुसंयन्ति यथाकर्म यथाश्रुतमिति, अस्तीत्येवोपलब्धव्य इति चास्तित्वं देहान्तरप्राप्तिं चाह । अत्र हेतुः सदर्थेति सत् ब्रह्म तत्प्राप्त्यर्थो योगः सदर्थयोगः यमाद्यष्टाङ्गोपेतः तस्यानवगमादलाभात्समन्तात् ऊर्ध्वाधस्तिर्यग्योनिषु भोगयोगेन भोगलिप्सया देही देहाभिमानी प्रवर्तते ॥ ९ ॥

[ अर्जु० ] न केवलं ते क्रोधादिपरवशाः कर्मपरवशा अपि इत्याह—कर्मोदय इति । कर्मणां कुशलाकुशलानामुदये तत्र कर्मफले सुखदुःखलक्षणे कामक्रोधाभ्यामनुयान्ति । अतः कामक्रोधलक्षणं न तरन्ति । कर्मफलानुगा इति स्फुटार्थं पुनर्वचनम् । अथवायमर्थः धृतराष्ट्रेण सनत्सुजातः पृष्टः कथं जन्तुर्मोक्षं लभते किं ज्ञानेन कर्मणा वा स्वाध्यायेन वा त्रिभिर्वा ज्ञानं वा कीदृशं आत्मा वा किंलक्षणः कथं वा ज्ञेयः, के वा तं पश्यन्ति कानि वा आत्मदर्शननिमित्तानि कथं वा जन्तुर्बध्यते मुच्यते वा तत्सर्वं कथं वेत्येवं पृष्टः क्रमेण कथयामास । तत्र मृत्युर्नास्ति यथा तदुच्यते—ततस्तमित्यादि । अयमाशयः—न तावदिह मृत्युं दण्डमादायायान्तं कश्चित् पश्यति, किंतु प्रमादोऽयं, कामक्रोधाभिभूतो हि पुमान् आत्मनोऽदर्शनेन प्रमाद्यन् शरीरभेदमेव मृत्युरिति मन्यते । ततः शरीरभेदे सति तदनु पश्चात् देवा इन्द्रियाणि विप्लवन्ते स्वविषयग्राहका न भवन्ति । देवशब्दश्चेन्द्रियवचनः सांख्ये दृष्टः । स एव शरीरभेदो मृत्युर्मरणमिति

१ ख. म. कर्मफलानुगास्ते तत्रानु यान्ति । ख. म. अस्योत्तरार्धमराम्भ सार्धं श्लोकद्वयं नास्ति । १ प्रवाहः; प्रवादः । २ रूपस्वाद्राणो; भूमिरवात ।

तद्वै महामोहनमिन्द्रियाणां
मिथ्यार्थयोगस्य गतिर्हि नित्या ।
मिथ्यार्थयोगाभिहतान्तरात्मा
स्मरन्नुपास्ते विषयान्समन्तात् ॥ १० ॥

अभिध्या वै प्रथमं हन्ति लोकान्
कामक्रोधावनुगृह्याशु पश्चात् ।
एते बालान्मृत्यवे प्रापयन्ति
धीरास्तु धैर्येण तरन्ति मृत्युम् ॥ ११ ॥

च संज्ञायते । ततश्च प्रमादतोऽन्यो नास्ति मृत्युरित्यर्थः । कर्मोदये काम्यफलसंपत्तौ कर्मफलानुगारते कर्मफल-स्वर्गनरकभोक्तारस्ते जन्तवः तत्र संसारे अनुयान्ति पुनः प-तन्ति न तरन्ति मृत्युं प्रमादे आत्मादर्शनादिति भावः ॥ ९ ॥

[ सर्व० ] तर्ह्येतद्वशो मनुष्य एव लब्धदेवैश्वर्योऽमृतो-ऽस्तु तावतापि वैदिककर्मणाममृत्युहेतुत्वसंभवादित्याह—कर्मोदय इति । तपोलब्धदैवैश्वर्यफलानुगाः कर्मफलं वेदक-र्मफलमनुगता इच्छन्तः भूलोकगमनहेतोः कर्मण उदये कालविशेषलाभरूपे जन्मनि अत्र भूलोकेऽनुयान्ति पश्चा-त्पुनरायान्ति । अतो न तेन वेदोक्तकर्मणा मृत्युं तरन्तीति व्यवस्थितमित्यर्थः ॥ ९ ॥

[ लक्षा० ] कर्मोदये कर्मफलानुरागा इत्यत्र कर्मो-दये प्रारब्धकर्मपरिपाके सति कर्मफलानुरागाः स्रक्चन्दन-वनितादिग्राम्यविषयभोगानुरागाश्च तत्र अनुयान्ति । तेन कारणेन मृत्युं न तरन्ति सदर्थयोगानवगमादित्यत्र सन् उत्तमोऽर्थः सदर्थः परमात्मा तस्य योगानवगमात् भोगयोगेन प्रवर्तते ॥ ९ ॥

[ शंक० ] किंच—तद्वै इति । यद्रागाभिभूतस्य इन्द्रि-याणां विषयेषु वर्तनं तत् महामोहनम् । एतदुक्तं भवति—यस्य विषयेषु अवास्तवबुद्धिः तस्येन्द्रियाणि विषयेषु न प्रवर्तन्ते । तस्य विषयेषु प्रवृत्त्यभावात् प्रत्यगात्मन्येव प्रवृत्तिः, ततश्च मोहननिवृत्तिः । यस्य विषयेषु वास्तव-बुद्धिः तस्येन्द्रियाणां पराग्भूतेषु विषयेषु प्रवृत्तत्वात् न स इमं सदद्वितीयं प्रत्यग्भूतं परमात्मानमात्मत्वेन साक्षा-ज्जानाति । तथा चोक्तम्—'स्त्रीपिण्डसंपर्ककलुषीकृतचे-तसो विषयविषान्धा ब्रह्म न जानन्ति' इति । ततश्च महामोहनं पुनः पुनः विषयेषु प्रवृत्तिः । तथा चाह भगवा-न्मनुः—'न जातु कामः कामानामुपभोगेन शाम्यति । हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते' इति । ततश्च मिथ्यार्थैरविद्यापरिकल्पितैः शब्दादिविषयैः योगो भवति; तस्मिन् मिथ्यार्थयोगे अस्य देहिनो गतिः संसारगतिः नित्या नियता । प्रसिद्धं ह्येतत्—स्वात्मभूतं परमात्मा-नमेवमनवगम्य विषयेषु प्रवर्तमानाः पराग्भूतास्तिर्यगादियो-निं प्राप्नुवन्तीति । तथा च बह्वृचब्राह्मणोपनिषत्—'या वै ता इमाः प्रजास्तिस्रोऽत्यायमायंस्तानीमानि वयांसि वङ्गाव-गधाश्चेरपादाः' इति । वक्ष्यति च—'कामानुसारी पुरुषः कामाननु विनश्यति' इति । कस्मात्पुनः मिथ्यार्थयोगेऽस्य-गतिर्हि नित्या इति? तत्राह—मिथ्यार्थयोगाभिहतान्त-रात्मा इति । मिथ्याभूतविषयसंयोगेन अभिहतान्तरा-त्मा अभिहतस्वाभाविकब्रह्मात्मभावः स्मरन् रूपादिवि-षयान् तानेव उपास्ते, न परमात्मानं समन्तात् सम-न्ततः ॥ १० ॥ ततः किमिति चेत् तत्र यद्भवति तत् शृणु—अभिध्येति । अभिध्या विषयाभिध्यानं प्रथमं हन्ति विनाशयति स्वरूपात्प्रच्युतिं करोति । ततो विषयध्याना-भिहतम् एनं विषयसंनिधौ शीघ्रं प्रगृह्य कामश्च हन्ति, ततः कामाभिहतमेनं प्रगृह्य क्रोधश्च हन्ति । तत एते अभिध्या-दयः तानभिध्याकामक्रोधवशंगतान् बालान् विवेकहीना-न्मूढान् मृत्यवे प्रापयन्ति प्रक्षिपन्ति । श्रूयते च कठवल्ली-षु—'पराचः कामाननुयन्ति बालास्ते मृत्योर्यन्ति विततस्य पाशम् । अथ धीरा अमृतत्वं विदित्वा ध्रुवमध्रुवेष्विह न प्रार्थयन्ते' इति । धीरास्तु पुनः धैर्येण विषयान् जित्वा परमात्मानमात्मत्वेनावगम्य तरन्ति मृत्युम् । श्रूयते च—'निचाय्य तं मृत्युमुखात्प्रमुच्यते' इति ॥ ११ ॥

[ नील० ] भोगमेव निन्दति तद्वा इति । यत् अस्य पुंसः मिथ्याभूतेषु अर्थेषु शब्दादिविषयेषु योगो रागस्त-दर्थं गतिः प्रवृत्तिः नित्या स्वाभाविकी तदेव इन्द्रियाणां महामोहनम् । अर्थानां मिथ्यात्वं संकल्पकृतत्वात् यदाहा-क्षपादः—दोषनिमित्तं रूपादयो विषयाः संकल्पकृता इति । दोषो रागादिः । मिथ्यार्थयोगेन विषयसंगेन अभिहतान्त-रात्मा व्यथितचित्तः सन् विषयान्स्मरन् स्मरणपूर्वकमुपास्ते हेतौ शतृप्रत्ययः । स्मरणमेव विषयोपासनाहेतुरतस्तेषां वि-स्मरणमेव कर्तव्यमित्यर्थः ॥ १० ॥ तत्स्मरणे दोषमाह अभिध्येति । अभिध्या विषयस्मरणं प्रथमं ततः कामस्तत्प्रा-प्त्यभिलाषः, केनचिन्निमित्तेन तत्प्रतिहतौ क्रोधः । एते अभिध्यादयः एवं क्रमेण बालान् अजितचित्तान् मृत्यवे मोहाय प्रापयन्ति । ये तु धीराः जितचित्ताः निष्कामास्ते मृत्युं तरन्ति । पाठान्तरे धर्मं योगाभ्यासं चरन्ति ॥ ११ ॥

[ अर्जु० ] कामादीनां मृत्यूनां प्रवृत्तिक्रममाह—अभिध्या वै प्रथमं हन्ति लोभात् कामक्रोधाववगृह्याशु पश्चात् । एते बालान् मृत्यवे प्रापयन्ति धीरास्तु धैर्येण चरन्ति

११ क. प्रथमं हन्ति चैनं कामक्रोधौ गृह्य चैनं च पश्चात् । एतान्बालान् । शां. हन्ति चैनं कामक्रोधौ गृह्य चैनं तु ।

**सोऽभिध्यायन्नुत्पतितान्निहन्या-**
**दनादरेणाप्रतिबुद्ध्यमानः ।**

धर्मम् । अभिध्या विषयाणां चिन्तनं हन्ति आत्मतत्वात् प्रच्याव्य विषयप्रवणं करोति । अयमेव प्रथमः प्रहारः । तथा चिन्तिते कामं रागं करोति तत्परिपन्थिनि द्वेषं क्रोधमित्युपलक्षणम् । प्रवृत्तिनिवृत्ती इत्यपि । धावति मृत्युपरंपराम् । बालान् अज्ञान् । धीरास्तत्वदर्शिनः । अथवा अभिध्या विषयचिन्तनं प्रथमं प्रागेव हन्ति लोकान् पुरुषान् परमार्थादाकृष्य विषयान् प्रापयति बालान् प्रमाद्यतः । कथं ? लोभात् लोभप्रयुक्तया आशु शीघ्रं [ अज्ञम व्याघ्रः ] यथा व्याख्यानं पाठः । कामक्रोधाववगुह्यालिङ्ग्य हतः तस्मादत एवाभिध्याकामक्रोधलोभमोहाः बालान् अज्ञान् मृत्यवे प्रापयन्ति । धीरास्तु धैर्येण धर्मं तरन्ति चरन्ति इत्यपि पाठः ॥ ११ ॥

[ सर्व० ] अभिध्या आत्मत्वेन विषयेषु परिणतेः सुरसत्वेनाभिध्यानम् । प्रथममादौ सहकारित्वेन कामक्रोधाववगृह्य गृहीत्वा पश्चात्तदनन्तरमाशु लोकान्हन्तीत्यन्वयः । तत्किं प्रमादो न हन्त्येव तथाच कथमसौ मृत्युरत आह— एते सर्वे बालान्मर्त्यान्मृत्यवे आत्मज्ञानानुद्यमरूपाय प्रापुवन्ति, एतद्वशाद्धि नात्मज्ञानार्थं यतन्ते तदेवमेषां हन्तृत्वं, अतो मृत्युत्वमित्यर्थः । धीराः । शास्त्रसंस्कृतमतयः धैर्येण धीरत्वेन हेतुना तं धर्मं निःश्रेयसहेतु धर्मसाधनत्वादात्मज्ञानं चरन्ति आचरन्ति ॥ ११ ॥

[ दुर्घ० ] अभिध्या वै प्रथमं हन्ति लोभात्कामक्रोधाववगृह्याशु पश्चात् । एते बालान्मृत्यवे प्रापयन्ति धीरास्तु धैर्येण चरन्ति धर्मम् । अभिध्या विषयानुचिन्तनं सा प्रथमं प्रागेव हन्ति पुरुषान्परमार्थादाकृष्य विषयान्प्रापयति बालान्प्रमाद्यतः । कथं लोभाल्लोभप्रयुक्त्या आशु शीघ्रं पश्चात्कामक्रोधावप्यवगृह्याऽलिङ्ग्यावहन्ति । तस्मादत एव कामक्रोधादयोऽभिध्या लोभमोहकामादयः बालान्मृत्यवे प्रापयन्ति मृत्युप्रयोगहेतव इत्यर्थः । धीरास्तु पण्डिताः पुनर्धैर्येण कामक्रोधलोभमोहादीनां वेगं विधार्याऽत्मज्ञानसाचिव्येन चरन्ति धर्मम् । अमृत्युधर्ममिति भावः ॥ ११ ॥

[ लक्ष्मा० ] मिथ्यार्थयोगेऽस्य गतिर्हि नित्येत्यत्र मिथ्यैष व्यवसायस्त इतिवचनात् मिथ्यार्थो व्यर्थोऽर्थः । पदं मिथ्याकारयते स्वरादिदोषदुष्टमसकृदुच्चारयतीति वैयाकरणवचनात् दुष्टोऽर्थो वा मिथ्यार्थः ॥ १० ॥ अभिध्या वै प्रथमं हन्ति चैनमित्यत्र अभिध्या अभितो दुर्विषयचिन्ता । धीरास्तु धैर्येणेत्यत्र धीराः परमात्मचिन्ताकारकाः दुर्विषयाणामवशाश्च ॥ ११ ॥

**नैनं मृत्युर्मृत्युरिवात्ति भूत्वा**
**एवं विद्वान्यो विनिहन्ति कामान् ॥ १२ ॥**

[शंक०] कथं पुनर्धीरास्तु धैर्येण विषयान् जित्वा मृत्युं तरन्तीत्याह—योऽभिध्यायन्निति । योऽभिध्यायन् अनित्याशुचिदुःखानुविद्धतया चिन्तयन् उत्पतिष्णून् उत्पत्योत्पत्य पतन्तीत्युत्पतनशीला उत्पतिष्णवो विषयाः तान् निहन्यात् परित्यजेत् अनाचारेण अनादरेण औदासीन्येनामेध्यदर्शन इव अप्रतिबुध्यमानः पुनरचिन्तयन् स वै पुरुषो मृत्योरपि मृत्युर्भूत्वा मृत्युरिवात्ति मृत्युम् । उक्तं च—'विषयप्रतिसंहारं यः करोति विवेकतः । मृत्योर्मृत्युरिति ख्यातः स विद्वानात्मवित्कविः' इति । एवमनित्यादिरूपेण विद्वाननादरादिना अभिहन्ति कामान् ॥ १२ ॥

[नील०] स इति । सः मृत्युतरणकामः योगी वा अभिध्यायन् आत्मानं चिन्तयन् उत्पतितान् कामानेव निहन्यात् । हननोपायमाह अनादरेण तुच्छत्वबुद्ध्या पथि पतिततृणवत् स्त्र्यादीन् प्राप्तानपि अप्रतिबुद्ध्यमानः अचिन्तयन् । य एवं विद्वान् भूत्वा कामान्निहन्ति एनं पुरुषं मृत्युरज्ञानं मृत्युरिव यम इव नात्ति न ग्रसते । निष्कामस्य मृत्युभयं नास्तीत्यर्थः ॥ १२ ॥

[ अर्जु० ] नन्वेवं कर्मफलपरवशस्य कदाचिदपि कामक्रोधात्मकमृत्युतरणं न स्यात् विशेषहेतोरभावादित्याह— सोऽभिध्यायन्नुत्पतितान्निहन्यादनादरेणाप्रतिबुध्यमानः । नैनं मृत्युं मृत्युरिवाभिभूयादेवं विद्वान् यो विनिहन्ति कामान् । स एवं गुरुप्रसादादधिगतात्मस्वरूपः तदेवाभिध्यायन् विजातीयानन्तरतत्प्रत्ययप्रवाहं कुर्वन् उत्पतितान् उत्तरोत्तरोदितान् रागादीन् निहन्यात् । अनादरेण विषयाणां स्रक्-चन्दन-वनितादीनां दोषदर्शनादसंबुद्ध्या अप्रतिबुध्यमानो निमित्तापायादेव नैमित्तिकापायः इति जानन् औदासीन्यमवलम्बमानः विषयगुणग्रहणं रागप्रवृत्तौ निमित्तं तस्मिन् निवृत्ते निवृत्त एव रागः किमुपायान्तरेणेति भावः । मृत्युरिव मृत्युकारणं व्याघ्रादिरिव । एवं विद्वान् उक्तेन प्रकारेण जानन् यः कामान् विनिहन्ति सोऽयं मृत्युतरणस्य विशेषहेतुः ॥ १२ ॥

[ सर्व० ] ननु यदि कर्मणाऽमृत्युर्न भवति तत्कथं क्रोधादिनाशात् प्रमादरूपमृत्योरभाव इत्याह—सोऽभिध्यायन्निति । सोऽमृत्युमिच्छुरभिध्यायन् आत्मानं योगशास्त्रोक्तप्रकारेणाभि सर्वतो ध्यायन् उत्पतितानुत्पन्नान् क्रोधप्रमादमोहान् मृत्यून्निहन्यात्, तदभिध्यानस्य क्रोधमोहप्रमादविरोधित्वात् न तैः सहावस्थानं संभवतीत्यर्थः । तर्ह्यस्तु प्रमादविरोधित्वं तस्य तत्प्रतियो-

१२ ज. योऽभिध्यायन्नुत्पतिष्णून्निहन्यात् । ख. स वै मृत्युं मृत्युरि°; ब. स वै मृत्युर्मृत्युरिवात्ति भूत्वा ह्येवं विद्वान्योऽभिहन्तीह ।

**कामानुसारी पुरुषः कामाननु विनश्यति ।**
**कामान् व्युदस्य धुनुते यत्किंचित्पुरुषो रजः॥१३॥**

गिकत्वात् , क्रोधमोहविरोधित्वं तु कथमित्याह—अनादरेणेति । अप्रतिबुध्यमानो विषयान्तरम् । आत्मातिरिक्तवस्तुग्रहे हि क्रोधमोहयोः सत्ता क्रोधस्य स्वप्रतिपक्षप्रतिसंधानजन्यत्वात् , मोहस्याप्यनात्मन्यारोपरूपस्यानात्मधर्मिप्रतिसन्धानाधीनत्वात् । धर्मिप्रतीत्यभावे आरोपानुपपत्तेः । यदा तु आत्मनिष्ठतयाऽन्यत्रास्यानादरस्तदा नान्यद्बुध्यते । तथाच क्रोधमोहौ नोत्पद्यत इत्यर्थः । ननु तथापि कथमेतत्तथैव मृत्युशब्दो न यम इत्याह—नैनं मृत्युरिति । एनमात्माभिध्यायिनं मृत्युर्यमो मृत्युरिव भूत्वा अन्यान्प्रति मृत्युत्वेन च तं प्रत्यपि मृत्युतुल्यो भूत्वा नात्ति न भक्षयति । य एवमात्मानं विद्वान्कामान् कामः स्वर्गादिफलेच्छा तज्जन्यतया कामान् प्रमादमोहान्विनिहन्ति । तदेवं [सत्यपि प्रमेये सत्यपि ?] क्रोधादिषु मरणाभावात् सत्सु च तेषु यमस्य तद्द्वारैव मृत्युजनकत्वात् एते मुख्यतो मृत्यवः तज्जनकतया तु यमस्यापि मृत्युत्वमुपचरितमित्यविरोधः ॥ १२ ॥

[ लक्षा० ] योऽभिध्यायन् प्रत्यभीक्ष्णं निहन्यादित्यत्र निहन्यात् पशूभिहन्यात् 'प्रेत्य खादन्ति ते च तान्' इति वचनात् स वै मृत्युः पशुमारणाख्यो मृत्युः मृत्युर्भूतानीव एनमत्ति, एवं विद्वान् यः सः इह कामान् निहन्ति ॥ १२ ॥

[ शंक० ] यस्तु पुनरनादरादिना नाभिहन्ति स किं करोतीत्याह—कामानुसारीति । यस्तु पुनर्विषयाभिध्यानेन कामानुसारी भवति स कामाननु विनश्यति कामविषये नष्टे कामाननु कामैः सह विनश्यति, अनित्याः कामगुणाः प्रतिक्षणं विनाशान्विताः, तद्वत्कामी विशीर्णो भवति । यस्तु पुनर्विषयदोषदर्शनेन कामान्परित्यजति स कामान्व्युदस्य परित्यज्य धुनुते विवेकबुद्ध्या ध्वंसयति यत्किंचित् इह जन्मनि जन्मान्तरे वा उपार्जितं रजः पुण्यपापादिलक्षणं कर्म ॥ १३ ॥ कथं पुनरस्य देहस्य काम्यमानस्य हेयत्वमित्याशङ्क्याह—देहेति । यः अयं भूतानां देहो दृश्यते सः अप्रकाशः तमोऽचिद्घनः केवलं नरकः श्लेष्मासृक्पूयक्रिमिविण्मूत्रपरिपूर्णत्वात् । तथाह भगवान्मनुः—'अस्थिस्थूणं स्नायुबद्धं मांसशोणितवेष्टितम् । चर्मापिनद्धं दुर्गन्धि पूर्णं मूत्रपूरीषयोः ॥ जराशोकसमाविष्टं रोगायतनमातुरम् । रजस्वलमनित्यं च भूतावासमिमं त्यजेत्' इति । एवमत्यन्तबीभत्सितमपि स्त्र्यादिदेहं कमनीयबुद्ध्या

१३ ख. म. कामानुदस्य; ज. कामान्व्युदस्यन् १४ ज. देहोऽप्रकाशो । ख.

**तमोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते ।**
**मुह्यन्त इव धावन्ति गच्छन्तः श्वभ्रवत्सुखम्॥१४॥**

गृध्यन्तः अभिकाङ्क्षन्त एव धावन्ति अनुधावन्ति । गच्छन्तः श्वभ्रमुन्मुखाः यथा अन्धाः कूपादिकं विवेक्तुमशक्ताः कूपादिषून्मुखाः पतन्ति एवं स्त्र्यादिकमभिकाङ्क्षन्तो विषयविषान्धाः उन्मुखाः नरकेष्वेव पतन्तीत्यर्थः ॥ १४ ॥

[ नील० ] सकामं निन्दति—कामानुसारीति । विषयार्थी विषयमनुविनश्यति । यथोक्तम्—कुरङ्गमातङ्गपतङ्गभृङ्गमीना हताः पञ्चभिरेव पञ्चेति । फलितमाह—कामानिति । विषयांस्त्यक्त्वा रजो दुःखरूपं यत्किंचित् सर्वं धुनुते नाशयति ॥ १३ ॥ विपक्षे दोषमाह—तम इति । अयं कामः भूतानां तमः अज्ञानं तत्कार्यकरत्वात् यतः अप्रकाशः नास्ति प्रकाशो विषयविवेको यस्मिन्स तथा अत एव नरकवद्दुःखदः । एतदेवाह—मुह्यन्त इति । यथा मुह्यन्तो मदिरामत्ताः । गृह्यन्त इति पाठे ग्रहगृहीताः पथि गच्छन्तः श्वभ्रवत् गर्तयुक्तं देशं धावन्ति तथा कामिनः संसारे वर्तमानाः सुखं सुखप्रदं भार्यादिं प्रति धावन्तीत्यर्थः ॥ १४ ॥

[ अर्जु० ] एवमुपायमभिधाय तद्व्यतिरेके मृत्य्वतिक्रमव्यतिरेकमाह—कामानुसारी पुरुषः कामाननु विनश्यति कामान् व्युदस्य धुनुते यत्किंचित्पुरुषो रजः । काम्यन्त इति कामा विषयाः विषयनाशाद्विनश्यति । विषयार्थीयाः प्रवृत्तेर्नरकहेतुतामाह—कामानिति । कामान् व्युदस्य विशिष्टे उदस्य बुद्ध्या चित्ताग्रे क्षिप्त्वा विषयानुद्दिश्येति भावः । यत्किंचिद्रजो यत् कर्म, कार्ये करणोपचारात् । धुनुते चालयति प्रवर्तयतीति यावत् ॥ १३ ॥ तस्य फलमाह—तमोऽप्रकाशो भूतानां नरकोऽयं प्रदृश्यते । गृह्यन्त इति धावन्ति गच्छन्तः श्वभ्रवत् सुखम् । अविद्या तमः अनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः स एवाप्रकाशः तत्वस्येति शेषः । भूतानां स्थावरजङ्गमानामयमेव नरको दुःखबहुलत्वात्प्रदृश्यते प्रत्यक्षो नरक इत्यर्थः । सुखं दुःखमेवारोपितसुखभावं धावन्ति वेगेन गच्छन्ति । तत्र दृष्टान्तो गच्छन्त इव श्वभ्रे, यथा विलेपन्त (?) इत्यर्थः । गृह्यन्त इव शत्रुभिः गृह्यमाणा इवेति बाधाशतसंकुलत्वात्प्रत्यक्षनरकः ॥ १४ ॥

[सर्व०] तदेवमन्वयव्यतिरेकाभ्यां क्रोधादित्रयस्यैव दुःखहेतुत्वं तदेव तु मृत्युरिति दर्शयति—कामानुसारी पुरुष इति । कामानुसारी पूर्ववत्कामान् क्रोधप्रमादमोहाननुभवति तदधीनः सन् प्रवर्तते यः स तानेव कामाननु

म. गृह्यन्त इव; ज. गृह्यन्त इव । ज. गच्छन्तश्च भ्रमन्मुखाः ।

अमूढवृत्तेः पुरुषस्येह कुर्या-
त्किं वै मृत्युस्तार्ण इवास्य व्याघ्रः ।
अमन्यमानः क्षत्रिय किंचिदन्य-
न्नाधीयीत निर्णुदन्निवास्य चायुः ॥ १५ ॥
स क्रोधलोभौ मोहवानन्तरात्मा
स वै मृत्युस्त्वच्छरीरे य एषः ।
एवं मृत्युं जायमानं विदित्वा
ज्ञाने तिष्ठन्न बिभेतीह मृत्योः ।
विनश्यते विषये तस्य मृत्यु-
र्मृत्योर्यथा विषयं प्राप्य मर्त्यः ॥ १६ ॥

लक्ष्मीकृत्य विनश्यति म्रियते । यत्किंच्छिद्रजो दुःखं धुनुते परितः क्षिपते । अत्र च विनश्यतीत्यनेनान्वयव्यतिरेके रजश्शब्दस्य दुःखपर्यायस्याभिधानाद्दुःखमेव मृत्युरिति दर्शितम् । अयं च कामः तमः समुदायाभिप्रायमेकवचनम् । यतो भूतानां संबन्धिप्रकाशविरोधी नरको दुःखहेतुत्वात् प्रदृश्यते धीरैः तं च स्वभावदुःखं गच्छन्तः प्राप्नुवन्तः सुखं गृध्नन्तो गृह्णन्तः विकरणव्यत्ययात् । सुखहेतुत्वेन गृह्णन्त इत्यर्थः । धावन्ति सुखदुःखजनककर्मार्थं शीघ्रं प्रवर्तन्ते १३

[ लक्षा० ] गृध्यन्त एव धावन्तीत्यत्र गृधु अभिकाङ्क्षायामिति धातोः गृध्यन्त एव विषयाभिलाषां कुर्वन्त एव धावन्ति इतस्ततो धावन्ति । तेन तं नरकं गच्छन्ति स्म ॥ १४ ॥

[ शंक० ] य एवं गृध्यन्त एव धावन्ति तेषां देहो निरर्थक इत्याह—अमन्यमान इति । यः स्त्र्यादिकमभिकाङ्क्षन् अनुधावति स विषयविषान्धः तद्यतिरिक्तं स्वात्मभूतं परमात्मानम् अमन्यमानः अप्रतिबुध्यमानः नाधीयते तद्विषयमध्यात्मशास्त्रं नाधिगच्छति । तस्य अस्य विषयविषान्धस्य षडङ्गवेदविदुषोऽपि देहस्तृणनिर्मितो व्याघ्र इव निरर्थको भवति । तथा चाह भगवान्वसिष्ठः—'चतुर्वेदोपि यो विप्रः सूक्ष्मं ब्रह्म न विन्दति । वेदभारभराक्रान्तः स वै ब्राह्मणगर्दभः' इति । न केवलं देहो निरर्थकः, य एवंभूतः स एव तस्य मृत्युरित्याह—क्रोधाल्लोभान्मोहभयान्तरात्मा इति । क्रोधलोभाभ्यां हेतुभ्यां मोहभयसमन्वितः अन्तरात्मा त्वच्छरीरे य एष तवात्मा दृश्यते स एव तव मृत्युः । यस्तु पुनः अजितेन्द्रियः क्रोधलोभादिसमन्वितो विषयेषु प्रवर्तते स एव तस्य मृत्युः विनाशहेतुत्वात् । उक्तं च—'आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः' इति ॥ १५ ॥ केन तर्ह्युपायेन मृत्योर्विनाश इत्याह—एवमिति । एवं क्रोधादिरूपेण जायमानं प्रमादाख्यं मृत्युं जननमरणादिसर्वानर्थबीजं विदित्वा क्रोधादीन् भूतदाहीयान् दोषान् परित्यज्य अक्रोधादीन् संपाद्य ज्ञानेन चित्सदानन्दाद्वितीयब्रह्मात्मना तिष्ठन्न बिभेति मृत्योः । तथा च श्रुतिः—'आनन्दं ब्रह्मणो विद्वान् न बिभेति कुतश्चन' इति । कस्मात्पुनर्ज्ञानेन तिष्ठन्न बिभेति मृत्योरिति ? तत्राह—विनश्यते तस्य ज्ञानिनो विषये गोचरे परमात्मनि साक्षात्क्रियमाणे प्रमादाख्योऽज्ञानमृत्युः यथा मृत्योः विषयं संसारमागतो मृत्युना अभिभूतो नष्टो भवति मर्त्यः एवमात्मवेदिनो विषयमागतोऽज्ञानमृत्युर्नष्टो भवति । उक्तं च नाममहोदधौ—'ज्ञानसंस्थानसद्भावो ज्ञानाभिर्ज्ञानवज्रभृत् । मृत्युहन्तेति विख्यातः स वीरो वीतमत्सरः' इति ॥ १६ ॥

[ नील० ] अमूढवृत्तेः कामेनानभिभूतचित्तस्य पुंसस्तु तृणमयव्याघ्रवत् मृत्युर्यमः किं कुर्यान्न किमपीत्यर्थः । यस्मादेवं तस्मात् अस्य कामस्य आयुः जीवनं मूलाज्ञानं निर्णुदन् अपनेष्यन् अन्यत् किंचित् काम्यमानं स्त्र्यादिकममन्यमानः अगणयन् नाधीयीत न स्मरेत् । तुच्छत्वबुद्ध्या विषयविस्मरणमेव काममूलोच्छेदहेतुरित्यर्थः । यदाह वसिष्ठः—भ्रमस्य जागतस्यास्य जातस्याकाशवर्णवत् ॥ अपुनःस्मरणं मन्ये साधो विस्मरणं वरम् । तथाऽपि तव न स्वास्थ्यं सर्वविस्मरणादृते इति च ॥ १५ ॥ यमं त्वेके इत्यत्र आत्मावसन्नमिति यमोऽप्यात्मनि कल्पित इत्युक्तं तद्याचष्टे—स क्रोधलोभाविति । यस्त्वच्छरीरे एषः अहंप्रत्ययविषयः अन्तरात्मा बाह्यात्मानं शरीरमपेक्ष्य आन्तरः चिदचिद्ग्रन्थिरूपो जीवः स मोहवान् अतस्मिंस्तद्बुद्धिर्मोहः अनात्मनि देहादावात्मबुद्धिर्विपर्ययरूपं ज्ञानं तद्वान् क्रोधलोभमृत्युरूपो भवति । शुकनलिकान्यायेन स्वयं बन्धहीनोऽपि अज्ञानात्स्वात्मानं बद्धं मन्यते तेन कामादिवशो भवतीत्यर्थः । उपसंहरति—एवमिति । जायमानं मोहादिति शेषः मोहविरोधिनि ज्ञाने तिष्ठन्निष्ठावान् यमान्न बिभेति । तत्र दृष्टान्तः—विषये गोचरे तस्य ज्ञानस्य मृत्युर्बन्धः विनश्यते । मृत्योर्यमस्य । मर्त्यः देहः । अज्ञानकृतो बन्धो ज्ञानेनैव नश्यति न कर्मणेति प्रघट्टकार्थः॥१६॥

[ अर्जु० ] [ कर्मफलम् ] अमूढवृत्तेः पुरुषस्येह कुर्यात् किं वै मृत्युस्तार्ण इवास्य सर्पः । स क्रोधलोभमोहवानन्तरात्मा स वै मृत्युस्तु स्थविरे य एषः । न मूढाः स्नेहबन्धेन विषयैरिन्द्रियवृत्तयो यस्य तस्य पुरुषस्य मृत्युस्तार्णः सर्प इव किं कर्तुं समर्थः । आत्माभेदबोधनिश्चयेन

१५ म. ज. ख. पूर्वार्धं नास्ति किंतु तत्स्थाने एकादशः श्लोकोऽस्ति । ख. धीयीत तार्ण इवास्य व्याघ्र; ज. नाधीयते । १६ ख. म. भीक्रोधलोभादिस्तान्त°; ज. क्रोधाल्लोभान्मोहभयान्त° ।

**धृतराष्ट्र उवाच—**

**यानेवाहुरिज्यया साधुलोकान्**
**द्विजातीनां पुण्यतमान्सनातनान् ।**
**तेषां परार्थं कथयन्तीह वेदा**
**एतद्विद्वान्नोपैति कथं नु कर्म ॥ १७ ॥**

प्रवृत्तस्य भेत्तुमशक्यत्वात् ॥ १५ ॥ आत्मैव स क्रोधलोभमोहयुक्तो मृत्युसंज्ञको यथा तवैव धृतराष्ट्रस्येत्यर्थः । बालदृष्टान्तेन भ्रान्तत्वमश्मव्याघ्रदृष्टान्तेनाचेतनत्वम् । मृत्युमुक्त्वा तत्परिहारमाह—एवं मृत्युं जायमानं विदित्वा ज्ञाने तिष्ठन् न बिभेतीह मृत्योः । विनश्यते विषये तस्य मृत्युर्मृत्योर्यथा विषयं प्राप्य मर्त्यः । अर्थः सुबोधः ॥ १६ ॥

[ सर्व० ] अमन्यमानः क्षत्रिय किंचिदन्यन्नाधीयीत बाल इवाश्मव्याघ्र इति । अमन्यमान आत्मनोऽन्यत्किंचिदजानन्नात्मपरः किंचिदन्यद्विषयजातं नाधीयीत नाधिगच्छेत् न प्राप्नुयात् । यथा बालो न प्राप्नोति विषयानल्पचेतनत्वात् अश्मव्याघ्र इवाचेतनत्वादपश्यन्नाधिगच्छतीति ॥ १५ ॥ एवमात्मज्ञानस्वरूपमुक्त्वा पूर्वोक्तो मृत्युस्तवाप्यस्तीत्याह—क्रोधलोभमोहभयान्तरात्मा स वै मृत्युस्त्वच्छरीरे य एषः । यस्तु कामादिचतुष्टयान्तर आत्मा स एव मृत्युः मृत्योः प्रमादस्य हेतुत्वात्, य एष त्वच्छरीरे स्थितः । एवं मृत्युं जायमानमेभ्यो हेतुभ्यो जायमानं विदित्वा तद्धेतुप्रतिबन्धक्षमत्वान्न बिभेति ज्ञाने ज्ञाननिमित्तं तिष्ठन्नवतिष्ठन् तस्य पुरुषस्य गोचरे तस्मिन्निति यावत् । मृत्युर्विनश्यते नश्यति मृत्योर्विषयं प्राप्य यथा मर्त्यः ॥ १६ ॥

[ दुर्घ० ] 'अमूढवृत्तेः पुरुषस्येह कुर्यात् किं वै मृत्युस्तार्ण इवास्य सर्पः । सक्रोधलोभमोहवानन्तरात्मा स वै मृत्युस्त्वच्छरीरे य एषः ।' न मूढा स्नेहबन्धेन विषयैरिन्द्रियवृत्तिर्यस्य तस्य पुरुषस्य मृत्युस्तार्णसर्पवत्तृणविहितसर्पवत् किं कर्तुं समर्थः आत्माभेदबोधनिश्चयेन प्रवृत्तस्य भेत्तुमशक्यत्वात् । आत्मैव हि सक्रोधलोभमोहो मृत्युसंज्ञकोऽयं तवैव धृतराष्ट्रस्येत्यर्थः ॥ १६ ॥

[ लक्षा० ] अमूढवृत्तेः पुरुषस्येह कुर्यात्किं वै मृत्युस्तार्ण इवास्य व्याघ्र इत्यत्र अस्य अमूढवृत्तेः पुरुषस्य मृत्युः तार्णः तृणमयो व्याघ्र इव अकिंचित्कर इत्यर्थः । अमन्यमानः क्षत्रियः कंचिदन्यं नाधीयीत निर्णुदन्निवास्य वायुरित्यत्र यः क्षत्रियः कामादन्यं कंचित्पुरुषार्थममन्यमानः नाधीयीत वेदाध्ययनादिकं न कुर्वीत । निर्णुदन् नितरां नुदन् । णुदप्रेरण इति धातोः शता । तृणादिकं प्रेरयन् अभिवायुः अभितो विद्यमानो वायुः । चक्रवायुरित्यर्थः ।

**सनत्सुजात उवाच—**

**एवं ह्यविद्वानुपयाति तत्र**
**तत्रार्थजातं च वदन्ति वेदाः ।**
**अनीह आयाति परं परात्मा**
**प्रयाति मार्गेण निहत्य मार्गान् ॥ १८ ॥**

अस्य पुरुषस्य वा उपमा । वा विकल्पोपमानयोरित्यमरः । विषयान्धोऽसौ संसार एव भ्राम्यतीति भावः ॥ १५ ॥ विनश्यते विषये तस्य मृत्युरित्यत्र मृत्योर्विषयं प्राप्य मर्त्यः यथा विनश्यते तथा अस्य ज्ञानिनो राज्ञः विषये मृत्युः स्वयमेव विनश्यते ॥ १६ ॥

[ शंक० ] एवं तावत् 'कर्मोदये' इत्यादिना कर्मणां बन्धहेतुत्वमुक्त्वा 'ज्ञानेन तिष्ठन्न बिभेति मृत्योः' इति ज्ञानस्यैव मोक्षसाधनत्वमभिहितम् । तत्र चोदयति धृतराष्ट्रः—यानिति । ननु कथं कर्मणां बन्धहेतुत्वम् ? यावता यानेवाहुरिज्यया ज्योतिष्टोमादिना साधुलोकान् साधुभिः धार्मिकैरारूढान् पुण्यतमान् पवित्रान् सनातनान् । तेषां ब्रह्मलोकपर्यन्तानां लोकानां परार्थं परमपुरुषार्थत्वं कथयन्ति इह अस्मिन् संसारमण्डले वेदाः । एतत् लोकानां परमपुरुषार्थत्वं विद्वान् कथं नु साधनं कर्म नैति नानुतिष्ठति । अथवा, एतत् ब्रह्मलोकपर्यन्तानां लोकानां साधनभूतं कर्म विद्वान् ब्रह्मवित् कथं नैति न गच्छति ॥ १७ ॥ एवं पृष्टः प्राह भगवान्—एवमिति । सत्यम् एवं ब्रह्मलोकादिसाध्यं सुखं मन्यमानो विषयविषान्धो ह्यविद्वान् परियाति तत्र तस्मिन् ब्रह्मलोकादिसाधनभूते कर्मणि न विद्वान्; अविद्यादिदोषदर्शनात् । तथा च बृहदारण्यके—'अनन्दा नाम ते लोका अन्धेन तमसावृताः । तांस्ते प्रेत्याभिगच्छन्त्यविद्वांसोऽबुधा जनाः' इति । तथा अर्थजातं प्रयोजनजातं च तस्यैव अविदुषो वदन्ति वेदाः । यस्मादविदुष एव वदन्ति न विदुषः, तस्मात् नेह सः विद्वान् ब्रह्मलोकाद्यनित्यसुखे तत्साधने वा कर्मणि आयाति प्रवर्तते । किं तर्हि करोति ? परमात्मानमात्मत्वेनावगम्य परात्मा सन् ब्रह्मैव सन् परं प्रयाति मार्गेण निहन्ति च अमार्गान् संसारहेतुभूतानात्मनो विरुद्धमार्गान् धर्माधर्मोपासनारूपान् । अथवा, 'एवं हि विद्वान्परियाति तत्र' इति पाठे सगुणं ब्रह्म विद्वान् तत्र ब्रह्मलोकादावुपासनफलं परियाति प्राप्नोति । तथा अर्थजातं च अस्य वदन्ति वेदाः । कीदृशं वदन्ति ? स नेहायाति स विद्वानिह अस्मिन् लोके कर्मिवन्नायाति न जायते, किंतु ब्रह्मोपासनया अमार्गान् विरुद्धमार्गान् निहन्ति । एवं

१७ ख. ज. म. पुस्तकेषु सप्तदशमारभ्य पञ्चश्लोका न दृश्यन्ते । क. एतद्विद्वान्नेति कथं नु तत्र । १८ क. सवेह आयाति ।

धृतराष्ट्र उवाच—

कोऽसौ नियुङ्क्ते तमजं पुराणं
सचेदिदं सर्वमनुक्रमेण ।
किं वाऽस्य कार्यमथवा सुखं च
तन्मे विद्वन्ब्रूहि सर्वं यथावत् ॥ १९ ॥

---

तत्र गत्वा संसारहेतूनमार्गान्निहत्य परात्मा सन् कालेन परं ब्रह्म प्रयातीत्यर्थः ॥ १८ ॥

[ नील० ] अत्र शङ्कते—यानिति । साधु इज्यया सोपासनेन अश्वमेधादिना कर्मणा पुण्यतमान् इन्द्रलोकाद्यपेक्षया पुण्यान् सनातनान् व्यवहारापेक्षया नित्यान् लोकान् सत्यलोकाख्यान् इह वेदे आहुः वेदविदः । तेषां लोकानां परार्थं परार्थत्वं मोक्षप्रापकत्वं वेदाः कथयन्ति । एतत्कर्मणां क्रममुक्तिहेतुत्वं विद्वान् जानन् कर्म कथं नु न उपैति न शरणीकरोति । कर्मभिरेव मोक्षसिद्धौ किं ज्ञानेनेति भावः ॥ १७ ॥ समाधत्ते—एवमिति । अविद्वान् एवं त्वदुक्तक्रमेण तत्र मोक्षपदे उपयाति । तथैव अर्थजातं भोगमोक्षाख्यं प्रयोजनसामान्यं वेदाः वदन्ति । तथा अनीहो निष्कामः परात्मा परमनात्मानं देहादिकमविद्यया आत्मत्वेन गृह्णन् जीवः परं निर्गुणात्मानमायाति आभिमुख्येन प्राप्नोति । निष्कामस्तत्तदुपाध्याकारतां त्यक्त्वा निष्कलेन रूपेणावतिष्ठत इत्यर्थः । अन्यथा तु स एव जीवः मार्गेण सुषुम्नानाड्या मार्गान् तत्तल्लोकप्रापकान् निहत्य निरस्य ब्रह्मलोकद्वारा परं प्रयाति । "तयोर्ध्वमायन्नमृतत्वमेति" इति श्रुतेः । तथाच बृहदारण्यके—तद्यथा पेशस्कारी पेशसो मात्रामुपादायान्यन्नवतरं कल्याणतरं रूपं कुरुते एवमेवेदं शरीरं निहत्य विद्यां गमयित्वाऽन्यन्नवतरं कल्याणतरं रूपं कुरुते पित्र्यं वा गान्धर्वं वा दैवं वा प्राजापत्यं वा ब्राह्मं वेति तु कामयमानोऽथाकामयमानो योऽकामो निष्काम आप्तकामः स्यान्न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्त इति कामयमानस्य अस्माद्देहादुत्क्रान्तस्य देहं मरणेनासद्रूपत्वं नयतः स्वर्णकारदृष्टान्तेन पित्र्यगान्धर्वादिरूपान्तरकर्तृत्वमुक्त्वा निष्कामस्य पूर्णब्रह्मभावं गतस्य उत्क्रान्तिर्निषिध्यते ॥ १८ ॥

[ लक्षा० ] तेषामपार्थान् कथयन्तीह वेदा इत्यत्र वेदा नान्यः पन्था अयनाय विद्यते, नास्त्यकृतः कृतेन, क्षीणे पुण्ये मर्त्यलोके विशन्ति, इत्याद्याः । तेषां लोकान् काम्यकर्मफलीभूतलोकान् एवं विद्वान् कर्म काम्यकर्म कथं नोपैति इति योजना ॥ १७ ॥ एवं विद्वानित्यत्र एवं विद्वान् पूर्वोक्तप्रकारेण काम्यकर्मणां लोका अपार्था इति विद्वान् । तत्र निष्कामकर्मस्वेव प्रतियान्ति । तथा प्रतियातानां वेदाः 'अपाम सोमममृता अभूम,' 'कर्मणा ज्ञानमातनोति' इत्याद्या वेदाः, अर्थजातं ज्ञानमोक्षादिपुरुषार्थसमूहं च वदन्ति । सः पुनः इह काम्यकर्मसु नायाति सर्वथा काम्यकर्मसंबन्धाभावं सूचयितुं विसंधिकरणम् । परात्मा परमात्मनि चित्तवान् मार्गेण अर्चिरादिमार्गेण परं परमपुरुषमेव प्रयाति । मार्गान् गमयन्ति स्वर्गं पुनर्मारयन्ति इति प्रवृत्तिमार्गाः तान्निहन्ति च ॥ १८ ॥

[ शंक० ] एवं तावत्प्रमादाख्यस्याज्ञानस्य मृत्युत्वम् अप्रमादस्य स्वरूपावस्थानलक्षणस्यामृतत्वम् 'प्रमादं वै मृत्युमहं ब्रवीमि' इत्यादिना दर्शयित्वा 'आस्यादेष निःसरते' इत्यादिना 'स वै मृत्युस्त्वच्छरीरे य एषः' इत्यन्तेन तस्यैव कार्यात्मना परिणतस्य सर्वानर्थहेतुत्वं दर्शयित्वा, कथमस्य मृत्योर्विनाश इत्याशङ्क्य, 'एवं मृत्युं जायमानं विदित्वा ज्ञानेन तिष्ठन्न बिभेति मृत्योः' इत्यात्मज्ञानेन मृत्युविनाशं दर्शयित्वा, 'यानेवाहुरिज्यया' इत्यादिना ब्रह्मलोकादेः पुरुषार्थत्वमाशङ्क्य, 'एवं ह्यविद्वान्' इत्यादिना तेषामविद्यावद्विषयत्वेनापुरुषार्थत्वमुक्त्वा 'परं परात्मा प्रयाति मार्गेण' इति ज्ञानमार्गेण मोक्षः उपदिष्टः । तत्र 'परं परात्मा प्रयाति' इति जीवपरयोरेकत्वमुक्तम् । तदसहमानश्चोदयति धृतराष्ट्रः—कोऽसाविति । ननु यदि स एव सत्यादिलक्षणः परमात्मा क्रमेणाकाशादि धरित्र्यन्तं जगत्सृष्ट्वा तदनुप्रविश्यान्नमयाद्यात्मना अवस्थितः संसरति चेत्, कोऽसौ तं सत्यादिलक्षणं पुराणमजं संसारे नियुङ्क्ते प्रेरयति । किमन्येन, स्वयमेवेति चेत् किं वास्य नानायोनिषु वर्तमानस्य कार्यं प्रयोजनम् ? अथवा, नानायोनिष्वप्रवर्तमानस्य तूष्णींभूतस्य स्वे महिम्नि व्यवस्थितस्य संसाराननुप्रवेशे असुखम् अनर्थजातं वा किं भवति ? हे विद्वन्, मे ब्रूहि सर्वं यथावत् । तथा च ब्रह्मविदामेकः पुण्डरीको भगवान्याज्ञवल्क्यः तत एव सर्वस्य सृष्टिमुक्त्वा तस्यैव जीवत्वमभ्युपगम्य—'यद्येवं स कथं ब्रह्मन् पापयोनिषु जायते । स ईश्वरः कथं भावैरनिष्टैः संप्रयुज्यते' इति । 'कोऽसौ नियुङ्क्ते' इत्यनेन भगवतोक्तमेव ब्रह्मजीववादपक्षे वावदूकचोद्यं स्पष्टमुक्तवान् ॥ १९ ॥

[ नील० ] ननु जीवः परं प्राप्नोति चेदन्यस्यान्यात्मताऽयोगात्पर एव जीवत्वं प्राप्नोतीत्युक्तं भवति तच्चायुक्तम्, अनियोज्यब्रह्मात्मत्वात्परस्येत्याशङ्कते—कोऽसाविति । तं परमात्मानमजं जन्मादिहीनं पुराणं पुराऽपि नवमित्यनेन परिणामित्वं निरस्तं तादृशं परं कोऽसौ नियुङ्क्ते यन्नियोगादयं दुःखादिभाग्भवति । नियोजकान्तरसत्त्वे तस्याप्यन्यस्तस्याप्यन्य इति पराऽनवस्थेति भावः । ननु पर एव नियोजकान्तरं विना इदं सर्वं चेतनाचेतनं

**सनत्सुजात उवाच—**

**दोषो महानत्र विभेदयोगे**
**ह्यनादियोगेन भवन्ति नित्याः ।**
**तथाऽस्य नाधिक्यमपैति किंचि-**
**दनादियोगेन भवन्ति पुंसः ॥ २० ॥**

विश्वम् “ तत्सृष्ट्वा तदेवानुप्राविशत् ” इति श्रुतेः क्रमेण भवतीति शङ्कते—स चेदिति । एतद्दूषयति—किं वेति । अस्य परस्यावाप्तकामतया निष्कामस्य किं वा कार्यं कर्तव्यमस्ति न किमपीत्यर्थः । प्रयोजनमनुद्दिश्य न मन्दोऽपि प्रवर्तत इति न्यायेन प्रयोजनं विना परे प्रवृत्तिर्न संभवतीत्यर्थः । ननु लोकवत्तु लीलाकैवल्यमिति न्यायेन लोके निष्प्रयोजनाऽपि चतुरङ्गादिक्रीडा दृश्यते तद्वत्परस्यापि लीलैव जगत्सृष्टिप्रवेशादिकमित्याशङ्क्याह—अथवेति । चतुरङ्गादिक्रीडाऽपि सुखार्थमेव क्रियते न च परस्य सुखलिप्सास्ति न च स्वात्मानं स्वयमेव संकटे पातयतः सुखं वाऽस्तीति न परस्य स्वतः सृष्टौ प्रवृत्तिः संभवति नापि तेन सह जीवस्याभेदः संभवति । जीवपरयोर्भेदे तु जीवादृष्टानुरोधेन राजवत् परो जीवभोगार्थं सृष्ट्यादौ प्रवर्तते स्वकृतमर्यादापरिपालनार्थं चेति युज्यतेऽतः न तयोरभेदः संभवतीत्यर्थः ॥ १९ ॥

[ लक्षा० ] कोऽसौ नियुङ्क्ते तमजं पुराणमित्यत्र तमजं पुराणं परमपुरुषं कोऽसौ नियुङ्क्ते न कोऽपि । अन्यैरनियतोऽपि स परमात्मा स्वेच्छयैव इदं सर्वमनुक्रमेत चेत् स्वेच्छया कर्तुमारभेत चेदस्य परमात्मनः जगत्करणेन कार्यं प्रयोजनं किम् ? अथवा सुखं च किं तन्मे ब्रूहीति योजना ॥ १९ ॥

[ शंक० ] एवं पृष्टः प्राह भगवान्—दोष इति । यद्येवं चोदयत एषोऽभिप्रायः—नियोज्यनियोजकत्वादिभेददर्शनादेकस्य कूटस्थस्य तदसंभवात् भेदेन भवितव्यमिति । तत्र यदि ब्रह्मण एव नानात्वमभ्युपगम्यते, तदा अत्र अस्मिन् विभेदयोगे ब्रह्मणो नानात्वयोगे दोषो महान्; को दोषः ? अद्वैतिनो ह्यतथ्यवादिनोऽवैदिका भवेयुः, वेदहृदयं परमार्थमद्वैतं च बाध्यं स्यात् । किंच—नानारूपेण परिणतत्वादनित्यत्वादिदोषः, अस्थूलादिवाक्यविरोधश्च प्रसज्येत । अथोच्यते—ब्रह्मणो नानात्वं नास्माभिरभ्युपगम्यते, अपि तु जीवपरयोर्भेदोऽभ्युपगम्यते इति । तत्रापि महान् दोषो विनाशः प्राप्नोति । श्रूयते च, ‘ यदा ह्येवैष एतस्मिन्नु दरमन्तरं कुरुते । अथ तस्य भयं भवति ’ ‘ मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति ’ ‘ अथ योऽन्यां देवतामुपास्ते अन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुः’ ‘अथ येऽन्यथाऽतो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति’ ‘ सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद ’ इति । अथवा, जीवपरयोर्भेदेऽभ्युपगम्यमाने ‘ तत्त्वमसि ’ ‘ अहं ब्रह्मास्मि ’ ‘ अयमात्मा ब्रह्म ’ ‘ यत्साक्षादपरोक्षाद्ब्रह्म ’ ‘ य आत्मा सर्वान्तरः ’ ‘ एष त आत्मान्तर्याम्यमृतः ’ ‘ अयमेव स योऽयमात्मेदममृतम् ’ ‘ इदं ब्रह्मेदं सर्वम् ’ ‘ इदं सर्वं यदयमात्मा ’ एष त आत्मा सर्वान्तरः ’ इति ‘ त्वं वा अहमस्मि भगवो देवते अहं वै त्वमसि ’ इति ‘ स वा एष महानज आत्माजरोऽमृतोऽभयो ब्रह्माभयं वै ब्रह्माभयं हि वै ब्रह्मेति ’ इत्येवमादिश्रुतिस्मृतीतिहासपुराणविरुद्धभाषितत्वादवैदिकत्वं नाम महान्दोषो भवति । कथं तर्हि त्वत्पक्षे जीवेश्वरादिव्यवहारभेदः ? कथं वा तेषां नित्यत्वमिति ? तत्राह—‘ अनादियोगेन भवन्ति नित्याः’ इति । अनादिरविद्याख्या माया । तथा चोक्तं भगवता—‘प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि ’ इति । ‘ इयं हि साक्षाज्जगतो योनिरेका सर्वात्मिका सर्वनियामिका च । माहेश्वरी शक्तिरनादिसिद्धा व्योमाभिधाना दिवि राजतीव ’ इति च तद्योगेन अनादिमायायोगेन भवन्ति जीवादयो नित्याः, अद्वितीयस्यापि परमात्मनो मायया बहुरूपत्वमुपपद्यत एवेत्यर्थः । श्रूयते च एकस्य मायया बहुरूपत्वम्—‘ रूपं रूपं प्रतिरूपो बभूव ’ ‘ इन्द्रो मायाभिः पुरुरूप ईयते ’ ‘ एको देवः सर्वभूतेषु गूढः ’ ‘ एकं सद्विप्रा बहुधा वदन्ति ’ ‘ एकं सन्तं बहुधा कल्पयन्ति ’ एको देवो बहुधा निविष्टः’ ‘ एकः सन् बहुधा विचारः ’ ‘ त्वमेकोऽसि बहूननुप्रविष्टः ’ ‘ अजायमानो बहुधा विजायते ’ इति । तथा च मोक्षधर्मे—‘ एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत् ’ इति । तथा च याज्ञवल्क्यः—‘ आकाशमेकं हि यथा घटादिषु पृथग्भवेत् । तथात्मैकोऽप्यनेकश्च जलाधारेष्विवांशुमान् ’ इति । तथा च कावषेयगीतासु—‘एकश्च सूर्यो बहुधा जलाधारेषु दृश्यते । आभाति परमात्मापि सर्वोपाधिषु संस्थितः ॥ ब्रह्म सर्वशरीरेषु बाह्ये चाभ्यन्तरे स्थितम् । आकाशमिव कुम्भेषु बुद्धिगम्यं न चान्यथा ’ इति । तथा चाह परमेश्वरः—‘नित्यः सर्वगतो ह्यात्मा कूटस्थो दोषवर्जितः । एकः सन्भिद्यते शक्त्या मायया सर्वभावतः ’ इति । यस्मादेकस्यैव मायया बहुरूपत्वं तस्मात्स एव कारणात्मा परमेश्वरः कार्यात्मानं जीवात्मानं नियुङ्क्ते कृतप्रयत्नापेक्षः सन्मायया, न परमार्थतः संसरति संसारयति वा । तथा चोक्तं कावयेषगीतासु— ‘ न जायते न म्रियते न वध्यो न च घातकः । न बद्धो बन्धकारी वा न मुक्तो न च मोक्षदः ॥ पुरुषः परमात्मा

तु यत्ततोऽन्यदसच्च तत्' इति। तथा चाह भगवान्परमेश्वरः—'अहं प्रशास्ता सर्वस्य मायातीतस्वभावतः। न चाप्ययं संसरति न च संसारयेत्प्रभुः' इति। किंच, मायानिमित्तभेदेऽभ्युपगम्यमाने अस्य परमात्मनः कार्यकारणात्मना अवस्थितस्यापि आधिक्यं स्वरूपाधिक्यं नापैति किंचित् किंचिदपि, मायात्मकत्वात्संसारस्य पूर्ववत्कूटस्थ एव भवतीत्यर्थः। यस्मादेवं तस्मात् अनादियोगेन अनाद्यविद्यायोगेन भवन्ति पुंसः पुमांसो जीवाः बहवो भवन्ति। अथवा, पुंसः पुरुषस्य पूर्णस्य परमात्मनो या माया अनादिसिद्धा तद्योगेन बहवो भवन्ति। तथा चैतत्सर्वमनुगीतासु स्पष्टमाह—अज्ञानगुणरूपेण तत्स्वरूपेण च स्थितम्। ममत्वे यदि संसारो नोच्छिद्येत कथंचन॥ अविद्याशक्तिसंपन्नः सर्वयोनिषु वर्तते। तत्त्याज्यं सर्वविदुषां मोहनं सर्वदेहिनाम्॥ तन्नाशेन महानात्मा राजते नात्र संशयः। अहंकारस्य विजये ह्यात्मा सिद्धो भविष्यति॥ सिद्धे चात्मनि निर्दुःखी पूर्णबोधो भविष्यति। पूर्णबोधं परानन्दमनन्तं लोकभावनम्॥ भजत्यव्यभिचारेण परमात्मानमच्युतम्। तद्भक्तस्तत्प्रसादेन ज्ञानानलसमन्वितः॥ अखिलं कर्म दग्ध्वान्ते विष्ण्वाख्यममृतं शुभम्। प्राप्नोति सर्वसिद्धार्थमिति वेदानुशासनम्॥ इति। तथाहि भगवान्परमगुरुः पराशरः आत्मव्यतिरिक्तस्य सर्वस्य मिथ्यात्वं दर्शयति—ज्ञानस्वरूपमत्यन्तनिर्मलं परमार्थतः। तमेवार्थस्वरूपेण भ्रान्तिदर्शनतः स्थितम्॥ ज्ञानस्वरूपमखिलं जगदेतदबुद्धयः। अर्थस्वरूपं पश्यन्तो भ्राम्यन्ते मोहसंप्लवे॥ ये तु ज्ञानविदः शुद्धचेतसस्तेऽखिलं जगत्। ज्ञानात्मकं प्रपश्यन्ति त्वद्रूपं परमेश्वर॥ ज्ञानस्वरूपो भगवान्यतोऽसावशेषमूर्तिर्न तु वस्तुभूतः। ततो हि शैलाब्धिधरादिभेदान् जानीहि विज्ञानविजृम्भितानि॥ यदा तु शुद्धं निजरूपि सर्वकर्मक्षये ज्ञानमपास्तदोषम्। तदा हि संकल्पतरोः फलानि भवन्ति नो वस्तुषु वस्तुभेदाः॥ वस्त्वस्ति किं कुत्रचिदादिमध्यपर्यन्तहीनं सततैकरूपम्। यच्चान्यथात्वं द्विज याति भूयो न तत्तथा तस्य कुतो हि तत्त्वम्॥ मही घटत्वं घटतः कपालिका कपालिका चूर्णरजस्ततोऽणुः। जनैः स्वकर्मस्तिमितात्मनिश्चयैरालक्ष्यते ब्रूहि किमत्र वस्तु॥ तस्मान्न विज्ञानमृतेऽस्ति किंचित्क्वचित्कदाचिद्द्विज वस्तुजातम्। विज्ञानमेकं निजकर्मभेदविभिन्नचित्तैर्बहुधाभ्युपेतम्॥ ज्ञानं विशुद्धं विमलं विशोकमशेषदोषादिनिरस्तसङ्गम्। एकं सदैकं परमः परेशः स वासुदेवो न यतोऽन्यदस्ति॥ सद्भाव एष भवतो मयोक्तो ज्ञानं यथा सत्यमसत्यमन्यत्। एतत्तु यत्संव्यवहारभूतमत्रापि चोक्तं भुवनाश्रयं ते॥ परमार्थस्तु भूपाल संक्षेपाच्छ्रूयतां मम। एको व्यापी समः शुद्धो निर्गुणः प्रकृतेः परः॥ जन्मवृद्ध्यादिरहितो ह्यात्मा सर्वगतोऽव्ययः। परज्ञानमयोऽसद्भिर्नामजात्यादिभिर्विभुः॥ न योगवान्न युक्तोऽभून्नैव पार्थिव योक्ष्यति। तस्यात्मपरदेहेषु सतोऽप्येकमयं हि तत्॥ विज्ञानं परमार्थोऽसौ द्वैतिनोऽतथ्यदर्शिनः। तदेतदुपदिष्टं ते संक्षेपेण महामते॥ परमार्थसारभूतं यदद्वैतमशेषतः। सितनीलादिभेदेन यथैकं दृश्यते नभः॥ भ्रान्तिदृष्टिभिरात्मापि तथैकः सन्पृथक्कृतः॥ एकः समस्तं यदिहास्ति किंचित्तदच्युतो नास्ति परं ततोऽन्यत्। सोहं स च त्वं स च सर्वमेतदात्मस्वरूपं त्यज भेदमोहम्॥ इतीरितस्तेन स राजवर्यस्तत्याज भेदं परमार्थदृष्टिः। स चापि जातिस्मरणाप्तबोधस्तत्रैव जन्मन्यपवर्गमाप॥ ज्योतींषि विष्णुर्भुवनानि विष्णुर्वनानि विष्णुर्गिरयो दिशश्च। नद्यः समुद्राश्च स एव सर्वं यदस्ति यन्नास्ति च विप्रवर्य॥ विस्तारः सर्वभूतस्य विष्णोर्विश्वमिदं जगत्। द्रष्टव्यमात्मनस्तस्मादभेदेन विचक्षणैः॥ विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते। आत्मनो ब्रह्मणो भेदमसन्तं कः करिष्यति॥ तद्भावभावमापन्नस्तदासौ परमात्मना। भवत्यभेदी भेदश्च तस्याज्ञानकृतो भवेत्॥ ज्ञानमेव परं ब्रह्म ज्ञानं बन्धाय चेष्यते। ज्ञानात्मकमिदं सर्वं न ज्ञानाद्विद्यते परम्॥ विद्याविद्ये च मैत्रेय ज्ञानमेवोपधारय इति।

तथा चैतत्सर्वं स्पष्टमाह भगवान् सनत्सुजातः ब्रह्माण्डपुराणे कावषेयगीताप्रसङ्गे—'वेदान्पठध्वं विधिवद्व्रतानि कृत्वा विवाहं च मखैर्यजध्वम्। उत्पाद्य पुत्रान्वयसो विरामे देहं त्यजध्वं नियतास्तपोभिः' इति। 'किमद्य नश्चाध्ययनेन कार्यं किमर्थवन्तश्च मखैर्यजामः। प्राणं हि वाप्यनले जोहवीमः प्राणानले जीहवीमीति वाचम्' इति कृतकृत्यत्वेन यज्ञाद्यनुष्ठानेन आत्मनः प्रयोजनाभावं दर्शयित्वा 'स्वर्गात्तु वेश्यागृहसंनिवेशात्पुण्यक्षयान्ते पतनं स्यादवश्यम्। मनुष्यलोके विजरा विदुःखम्...' इति यज्ञादिसाध्यस्य लोकस्यानित्यत्वादिदोषदुष्टत्वेन हेयत्वं दर्शयित्वा यजुर्वेदोपनिषदि 'सत्यं परं परम्' इत्यारभ्य सत्यादीनां माहात्म्यं दर्शयित्वा 'न्यासः' इत्यारभ्य 'तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' इत्यन्तेन नित्यसिद्धनिरतिशयानन्दब्रह्मप्राप्तिसाधनस्य तत्साधनत्वेन अपरादनित्यफलसाधनाद्यज्ञादेः सर्वस्मादुत्कृष्टत्वं संन्यासस्योक्तं तत्रैव श्रूयते—'न कर्मणा न प्रजया धनेन त्यागेनैके अमृतत्वमानशुः। परेण नाकं निहितं गुहायां विभ्राजते यद्यतयो विशन्ति। वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः। ते ब्रह्मलोकेषु परान्तकाले परामृतात्परिमुच्यन्ति सर्वे' इति। तथा च बृहदारण्यके सर्वकर्मसंन्यासं दर्शयति—'एतं वैतमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लो-

**य एतद्वा भगवान्स नित्यो**
**विकारयोगेन करोति विश्वम् ।**
**तथा च तच्छक्तिरिति स्म मन्यते**
**तथार्थयोगे च भवन्ति वेदाः ॥ २१ ॥**

कैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति ' इति । तथा च भगवान्वासुदेवः सर्वकर्मसंन्यासं दर्शयति—' निराशीर्यतचित्तात्मा त्यक्तसर्वपरिग्रहः । शारीरं केवलं कर्म कुर्वन्नाप्नोति किल्बिषम् ॥ अनपेक्षः शुचिर्दक्ष उदासीनो गतव्यथः । सर्वारम्भपरित्यागी यो मद्भक्तः स मे प्रियः ॥ यो न हृष्यति न द्वेष्टि न शोचति न काङ्क्षति । शुभाशुभपरित्यागी भक्तिमान्यः स मे प्रियः ॥ मानापमानयोस्तुल्यस्तुल्यो मित्रारिपक्षयोः । सर्वारम्भपरित्यागी गुणातीतः स उच्यते ॥ असक्तबुद्धिः सर्वत्र जितात्मा विगतस्पृहः । नैष्कर्म्यसिद्धिं परमां संन्यासेनाधिगच्छति ॥ सर्वधर्मान्परित्यज्य मामेकं शरणं व्रज । अहं त्वा सर्वपापेभ्यो मोक्षयिष्यामि मा शुचः ' इति । तथा चानुगीतासु कर्मणि प्रयोजनाभावं दर्शयति भगवान्—' नैवं धर्मी न चाधर्मी न चैव हि शुभाशुभी । यः स्यादेकासने लीनस्तूष्णीं किंचिदचिन्तयन् ' इति । ' प्रवृत्तिलक्षणो योगो ज्ञानं संन्यासलक्षणम् । तस्माज्ज्ञानं पुरस्कृत्य संन्यसेदिह बुद्धिमान् ' इति । तथा च शान्तिपर्वणि शुकं प्रत्युपदिष्टवान्भगवान्व्यासः—' कर्मणा बध्यते जन्तुर्विद्यया च विमुच्यते । तस्मात्कर्म न कुर्वन्ति यतयः पारदर्शिनः ॥ एषा वै विहिता वृत्तिः पुरस्ताद्ब्रह्मणा स्वयम् । एषा पूर्वतरैः सद्भिराचीर्णा परमर्षिभिः ॥ प्रव्रजेच्च परं स्थानं पारिव्राज्यमनुत्तमम् । तद्भावानेवमभ्यस्य वर्ततां श्रूयतां तथा ' इति । तथा च सर्वकर्मसंन्यासं दर्शयति भगवान्नारदः—संन्यस्य सर्वकर्माणि संन्यस्य विपुलं तपः । संन्यस्य विविधा विद्याः सर्वं संन्यस्य चैव हि ॥ शक्यं त्वेकेन मुक्तेन कृतकृत्येन सर्वशः । पिण्डमात्रमुपाश्रित्य चरितुं सर्वतोदिशम् ॥ हित्वा गुणमयं पाशं कर्म हित्वा शुभाशुभम् । उभे सत्यानृते त्यक्त्वा एवं भवति निर्गुणः ॥ परिग्रहं परित्यज्य भव तात जितेन्द्रियः । अशोकस्थानमातिष्ठ इह चामुत्र चाभयम् ' इति । तथा च सर्वकर्मसंन्यासिन एव ज्ञाने अधिकारः नेतरस्येत्याह भगवान्बृहस्पतिः—' प्रसृतैरिन्द्रियैर्दुःखी तैरेव नियतः सुखी । रागवान्प्रकृतिं ह्येति विरक्तो ज्ञानमाप्नुयात् ' इति । तथा चाश्वमेधिके ब्रह्मणा सम्यगुक्तं मुनीन्प्रति सर्वाश्रमिणां सर्वकर्मसंन्यासे अधिकार इति—' गृहस्थो ब्रह्मचारी वा वानप्रस्थोऽथ वा पुनः । य इच्छेन्मोक्षमास्थातुमुत्तमां वृत्तिमाश्रयेत् ' इति । ' एतत्तु ब्राह्मणं वृत्तमाहुरेकपदं सुखम् । एषा गतिर्विरक्तानामेष धर्मः सनातनः ' इति । यस्मादेवं तस्माद्विविदिषोर्मुमुक्षोश्च सर्वकर्मसंन्यास एवाधिकारः ॥ २० ॥

[ नील० ] उत्तरमाह—दोष इति । विभेदयोगे विशेषेण भेदो ययोस्तौ विभेदौ विभिन्नौ तयोर्योगे अभेदेन ऐक्ये महान् दोषः अन्यस्यान्यात्मत्वासंभवात् । अतो जीवपरयोस्तात्त्विको भेदो न युक्त इत्यर्थः । किं तर्हि अनादियोगेन । न अत्तुं शीलमस्येत्यनादिर्भोग्यवर्गः स्थूलसूक्ष्मदेहद्वयात्मकानि क्षेत्राणि तैः सह योगेन संबन्धेन पुंसः परस्मात्सकाशात् नित्याः जीवाः घटाकाशजलचन्द्रादिन्यायेन भवन्ति । तथा तेन औपाधिकेन भेदेनास्य आधिक्यं किंचिदपि न अपैति नहि जलचन्द्रे कम्पमाने मुख्यश्चन्द्रः कम्पते । नापि घटाकाशे चलति मुख्ये आकाशे चलनं संभाव्यते । तथा च श्रुतयः । एक एव तु भूतात्मा भूते भूते प्रकाशते ॥ एकधा बहुधा चैव दृश्यते जलचन्द्रवत् । यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् ॥ उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा । घटसंवृतमाकाशं नीयमाने यथा घटे । घटो नीयेत नाकाशं तद्वज्जीवो नभोपम इत्याद्या औपाधिकं जीवपरयोर्भेदं दर्शयन्ति एकधेति ईश्वररूपेण बहुधेति जीवरूपेण एक एव शुद्धः जलाशयतरङ्गचन्द्रन्यायेन प्रकाशत इत्याद्यश्रुतेरर्थः । एवं च जीवेशभेदप्रयुक्तः सर्वोऽपि व्यवहारः सेत्स्यति न च परान्तरकल्पनाऽवतरतीति सिद्धम् । कथंभूतेन अनादियोगाख्येन क्षेत्रसंबन्धेन अनादियोगेन अनादिना आदिशून्येनाज्ञानेन हेतुना योगः संबन्धोऽस्य सोऽनादियोगस्तेन भवन्ति जन्मादिभाज इति शेषः । पुंसः पुमांसः अज्ञानयोगोत्थः क्षेत्रयोग इत्यर्थः ॥ २० ॥

[लक्षा०] अयं महानत्र बिभेद योगैरित्यत्र महान् सर्वोत्तमः अवाप्तसकलकाम इत्यर्थः । अयं परमात्मा योगैः लीलाख्योपायैः अत्र जगति बिभेद जीवादीन् पञ्चधा भिन्नानकरोत् एते जीवादयः अनादियोगेन अनादिना [ स्वहत ? ] परमात्मानः संनिधानयोगेन नित्याः स्वरूपतो नित्या भवन्ति । तथा अस्य पुंसः अनादियोगेन अनादिकालीनोपायेन भवन्ति । देहयोगेनोत्पद्यन्ते । अत एव तेषां जीवानां मध्ये किंचिदपि जीवैचतन्यमाधिक्यमस्मात्पुंसः आधिक्यम्, आधिक्यमित्युपलक्षणं, साम्यं च नोपैति ॥ २० ॥

[ शंक० ] एवं तावदेकस्यैव परमात्मनोऽनादिमायायोगेन बहुरूपत्वमुक्तम् । इदानीं यदीश्वरस्य जगत्कारणत्वं तदपि मायोपाधिकमित्याह—यदेतदिति । यदेतत् अद्धा परमार्थभूतो भगवान् ऐश्वर्यादिसमन्वितः सः पर-

धृतराष्ट्र उवाच—
येऽस्मिन्धर्मान्नाचरन्तीह केचि-
त्तथा धर्मान्केचिदिहाचरन्ति ।
धर्मः पापेन प्रतिहन्यते स्वि-
दुताहो धर्मः प्रतिहन्ति पापम् ॥ २२ ॥

मेश्वरो नित्यं विकारयोगेन ईक्षणादिपूर्वकं विश्वं करोति इति तत्सर्वं तथा तच्छक्तिः परमात्मनः शक्तिः मायैव करोति न परमात्मा अपूर्वोदिलक्षणः इति स्म मन्ये । न स्वतः चिदानन्दाद्वितीयस्य कारणत्वम्, किंतु मायावेशवशादित्यर्थः । किं तर्ह्यस्य तथाभूतशक्तियोगे प्रमाणमिति चेत्, तत्राह—तदर्थयोगे तस्य परमात्मनो जगदुपादानभूतमायार्थयोगे च भवन्ति वेदाः । तस्य मायासद्भावे वेदाः प्रमाणं भवन्तीत्यर्थः । तथा च श्रुतिः—'इन्द्रो मायाभिः पुरुरूप ईयते' 'अस्मान्मायी सृजते विश्वमेतत्' 'मायिनं तु महेश्वरम्' 'देवात्मशक्तिं स्वगुणैर्निगूढाम्' इति । तथा चाह भगवान्वासुदेवः—'दैवी ह्येषा गुणमयी मम माया दुरत्यया । अजोऽपि सन्नव्ययात्मा भूतानामीश्वरोऽपि सन् । प्रकृतिं स्वामधिष्ठाय संभवाम्यात्ममायया । मयाऽध्यक्षेण प्रकृतिः सूयते सचराचरम्' इति । तथा च—'माया तवेयमज्ञातपदार्थानतिमोहिनी । अनात्मन्यात्मविज्ञानं यया मूढोऽधिरोहति । इयमस्य जगद्धातुर्माया कृष्णस्य गह्वरी । धार्यधारकभावेन यया संपीडितं जगत् ॥ अहो स्म दुस्तरा विष्णोर्मायेयमतिगह्वरी । यया मोहितचित्तस्तु न वेत्ति परमेश्वरम्' इति ॥ २१ ॥

[ नील० ] जीवेशयोर्भेदं निरस्य प्रपञ्चस्यापि परमेश्वरात् पृथक्सत्त्वं वारयति—य एतद्वेति । वाशब्द उपमार्थे य इति पुंस्त्वं विधेयापेक्षया एतत्परिदृश्यमानं जगत् यज्जगदिव भाति स नित्योऽविकारी भगवान्सर्वैश्वर्यसंपन्नः परमात्मैव । वाशब्दो मिथ्यात्वद्योतकः । तथाहि । यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति अहमद्य स्वप्ने गजमिवाद्राक्षमिति वेदे लोके च मिथ्यार्थानुवादे इवशब्दः प्रयुज्यते । श्रुतिश्च इदं सर्वं यदयमात्मा ब्रह्मैवेदं विश्वं सर्वं खल्विदं ब्रह्मेत्याद्या प्रपञ्चस्य ब्रह्मानन्यत्वमाह—विकारोऽनृतं माया तद्योगेन विश्वं करोति स्वप्नेन्द्रजालवन्न तु कनककुण्डलवज्जगद्ब्रह्मणोः परमार्थतो विकारविकारिभावोऽस्ति ब्रह्मणोऽप्यनित्यत्वापत्तेरित्यर्थः । ननु नित्यं परिणामि च प्रधानं स्वतन्त्रमेव जडस्य जगतो जडमेव कारणमस्तु सादृश्यात् न तु चेतनं वैलक्षण्यादित्याशङ्क्याह—तथा च तच्छक्तिरिति । तथा च तेनैव प्रकारेण स्वात्मनि स्वप्नवज्जगदवभासयन्ती तस्य परमात्मनः शक्तिस्तदनन्याऽस्तीति वेदोऽपि मन्यते स्म, तथाच श्रूयते—देवात्मशक्तिं स्वगुणैर्निगूढामिति । पराऽस्य शक्तिर्विविधैव श्रूयत इति च । ननु भोग्यत्वात् शक्तिः आत्मनः स्वं भोक्तृत्वादात्मा तत्स्वामी । तथा च तयोर्भेद इत्याशङ्क्याह—तथार्थेति । शक्तिर्हि न शक्तिमतः पृथग्दृष्टा वह्नेरिव दहनप्रकाशनशक्तिः । वेदा अपि बहु स्यां प्रजायेयेति स च त्यच्चाभवदित्यादयः । चकाराल्लोके शक्तिग्रहोऽपि तादृशार्थयोगे शक्तिशक्तिमतोरभेदेन संबन्धे प्रमाणं भवतीत्यर्थः ॥ २१ ॥

[ लक्षा० ] प्रधानचेतनसृष्टिमुक्त्वा जडसृष्टिमाह—यदेतदाहेति । यदेतद्दृश्यमानं जडं जगत् आह "विश्वं सत्यं मघवानायुवोरिदापश्चिन प्रमिनन्ति व्रतं वाम्" इत्यादिवेदः सत्यतया आह तद्विश्वं स भगवान् नित्यमनाद्यनन्तकालेषु विकारयोगेन प्रकृतेर्विकाराख्योपायेन करोति । न तु मायया करोति । तथा तस्य परमात्मनः शक्तिश्च तथा यथार्थजगन्निर्मा (?) कृतयैव इति मन्ये । अशक्तो हि मिथ्यासृष्टिं करोति नतु शक्त इति भावः । तथा अर्थयोगे हरेर्विचित्रशक्त्याख्यपदार्थयोगे वेदाः 'पराऽस्य शक्तिर्विविधैव श्रूयते' 'स्वाभाविकी ज्ञानबलक्रिया च' इत्यादिवेदाः भवन्ति प्रमाणं भवन्ति ॥ २१ ॥

[ शंक० ] एवं तावत् 'प्रमादं वै मृत्युमहं ब्रवीमि' इत्यादिना मृत्योः स्वरूपं तस्य कार्यात्मनाऽवस्थानं तन्निमित्तं चानेकानर्थं दर्शयित्वा केन तर्ह्यस्य विनाश इत्याशङ्क्य 'एवं मृत्युं जायमानं विदित्वा ज्ञानेन तिष्ठन्न बिभेति मृत्योः' इत्यादिना आत्मज्ञानादेवाभयप्राप्तिं दर्शितां श्रुत्वा प्रासङ्गिके चोद्यद्वये परिहृते, कर्मस्वरूपविज्ञानाय प्राह धृतराष्ट्रः—यस्माद्धर्मानिति । यस्माद्धर्मान् अग्निहोत्रादीन् आचरन्ति इह लोके केचित् । तथा अधर्मानिहाचरन्ति । किं तेषां धर्मः पापेन प्रतिहन्यते वा ? उताहो स्वित् धर्मः प्रतिहन्ति पापम् ? अथवा तुल्यबलत्वेनान्यतरेण अन्यतरस्यापि नाशः ? इति ॥२२॥

[ नील० ] एवं जीवेशयोरभेदाज्जगतो मिथ्यात्वाज्जगज्जन्मादिनिमित्तभूतायाः प्रकृतेर्ब्रह्मानन्यत्वाच्च ब्रह्माद्वैतं सिद्धम् । तेन मृत्युर्नास्तीति पक्षः स्थिरः । येषां च मते कर्मणा मृत्युनाशस्तेषामपि क्रममुक्तिप्रणाड्या कर्मणां मोक्षहेतुत्वं च स्थितं ये केचित्तु अस्मिन् मोक्षे निमित्ते धर्मान् अग्निहोत्रादीनि कर्माणि नाचरन्ति किंतु मोक्षार्थं संन्यासमेव कुर्वन्ति ये केचित् क्रममुक्त्यर्थं कर्माण्येव उपासना सहितानि कुर्वन्ति । येषां तु तादृशो महान् धर्मो नास्ति किं तु अल्प एवाग्निहोत्रादिर्नित्यानुष्ठानात्मकोऽस्ति तेषा-

**सनत्सुजात उवाच—**

**उभयमेव तत्रोपयुज्यते फलं**
**धर्मस्य वै कर्मणश्चेतरस्य च ॥ २३ ॥**
**तस्मिन्स्थितौ वाऽप्युभयं हि नित्यं-**
**ज्ञानेन विद्वान् प्रतिहन्ति सिद्धम् ।**
**तथाऽन्यथापुण्यमुपैति देही**
**तथागतं पापमुपैति सिद्धम् ॥ २४ ॥**

मपि स धर्मः पापेन रागादिदोषेण हन्यते उत धर्म एव पापं हन्तीति प्रश्नार्थः ॥ २२ ॥

[ अर्जु० ] मृत्युप्रश्नोत्तरे समाप्य धर्माधर्मप्रश्नमाह—येऽस्मिन्धर्मान्नाचरन्तीह केचित् तथा धर्मान् केचिदिहाचरन्ति । धर्मः पापेन परिहन्यतेऽस्य उताहो धर्मः प्रतिहन्ति पापम् । ये बाहुल्येन धर्मं नाचरन्ति तेषां धर्मः पापेन परिहन्यते नो वेत्येकः प्रश्नः । ये बाहुल्येन पापं नाचरन्ति तेषां पापं धर्मेण प्रतिहन्यते नो वेत्यपरः प्रश्नः । अन्यथा बाध्यबाधकभावानुपपत्तेः ॥ २२ ॥

[ सर्व० ] येऽस्मिन्निति । अस्मिल्लोके ये केचित्कचिद्धर्मानाचरन्ति तथाऽधर्मानप्याचरन्ति प्रायशो लोकस्याधर्ममात्रचारित्वात् । केचित्कचिदितिधर्मचरणे कादाचित्कत्वोपदर्शनम् ॥ २२ ॥

[ शंक० ] अविदुष उभयोरनुभव एव, नान्यतरेणान्यतरस्य नाशः । विदुषः पुनरुभयोरपि ज्ञानाग्निना नाश इत्युत्तरमाह—तस्मिन्निति । एवं पृष्टः प्राह भगवान् सनत्सुजातः—तस्मिन् पुण्यापुण्यात्मके कर्मणि स्थितोऽपि कुर्वन्नपि उभयं पुण्यापुण्यलक्षणं कर्म नित्यं नियमेन विद्वान् ज्ञानेन प्रतिहन्ति विनाशयति । कथमेतदवगम्यते ज्ञानेन विद्वान्प्रतिहन्तीति ? तत्राह—सिद्धं प्रसिद्धं ह्येतच्छ्रुतिस्मृतीतिहासपुराणेषु । तथा च श्रुतिः—'भिद्यते हृदयग्रन्थिः' इत्यादिः; 'यथा पुष्करपलाश आपो न श्लिष्यन्ते एवमेवंविदि पापं कर्म न श्लिष्यते' इति; 'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' इति 'तथा विद्वान्पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' इति । 'अश्व इव रोमाणि विधूय पापम्' इति । 'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन' इति । अथान्यथा ज्ञानविहीनश्चेत् पुण्यमुपैति देही तथागतं पापमुपैति तत्फलं चोपभुङ्क्ते । कथमेतदवगम्यत इति चेत्, तत्राह—सिद्धं प्रसिद्धं ह्येतदपि श्रुतिस्मृतीतिहासपुराणादिषु । तथा च श्रुतिः—'इष्टापूर्तं मन्यमाना वरिष्ठं नान्यच्छ्रेयो वेदयन्ते प्रमूढाः । नाकस्य पृष्ठे सुकृतेन भूत्वेमं लोकं पुनरेवाविशन्ति' इति । '*अनन्दा नाम ते लोका अन्धेन तमसाऽऽवृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति ॥ तथैव वासुदेवः—'त्रैविद्या माम्' इति, 'ते तं भुक्त्वा स्वर्गलोकं विशालम्' इति च ॥ २३ ॥

[ नील० ] उत्तरमाह—उभयमिति । तत्र मोक्षे उभयं संन्यासः सोपासनं कर्म च उपयुज्यते । तथा धर्मस्य फलं स्वर्गः चित्तशुद्धिर्वा । इतरस्य अधर्मस्य पापस्य नित्यकर्मत्यागस्य वा फलं नरकः उपयुज्यत इति ॥ २३ ॥ इदमेव संग्रहवाक्यं विवृणोति—तस्मिन्स्थिताविति द्वाभ्याम् । उभयं संन्यासः सोपासनं कर्म च तस्मिन्मोक्षे स्वस्वरूपे स्थितौ स्थितिनिमित्तं नित्यम् अविचलं वाशब्द एवार्थः । तयोर्विशेषमाह—ज्ञानेनेति। संन्यासपूर्वकेण ज्ञानेन ब्रह्मविद्यया सिद्धं नित्यनिर्वृत्तं ब्रह्म प्रतिहन्ति अनृतजडदुःखादिप्रातिकूल्येन सच्चिदानन्दात्मकं गच्छति प्राप्नोति । हन्तेरत्र गत्यर्थत्वं ज्ञेयम् । तथा सोपासनेन कर्मणा अन्यथा सिद्धाद्विपरीतं साध्यं पुण्यं प्रशस्तं देवतादिभावमुपैति । यतः देही देहाभिमानी भवति तथागतं तेन प्रकारेण स्थितं सिद्धं नरदेहाभिमानजं पापमपि कदाचित् उपैति । देवभावं प्राप्तोऽपि कदाचिन्मुच्यतेऽन्यथा जयविजयादिवत्ततो भ्रश्यत्यपीति ज्ञानमेव श्रेष्ठमिति भावः ॥ २४ ॥

[ अर्जु० ] उत्तरमुभयमेव इत्यादि । धर्मेण प्रायश्चित्तरूपेण तस्य धर्मचारिणः । यदि पुनर्धर्माधर्मयोः स्वरूपतया बाध्यबाधकता स्यात् तदा कश्चिन् मुख्य एव स्यात् । कश्चित्तु ( अ )मुख्य एव । न चैवं देवानामपि सुखदुःखलब्धेः [नीचत्वमपि] ॥ २३–२५ ॥

[ लक्षा० ] तस्मिन् स्थितो वाप्युभयमित्यत्र तस्मिन् परमात्मनि नित्यं स्थितः स्थैर्यवान् भगवन्निष्ठ इत्यर्थः । विद्वानपरोक्षज्ञानी उभयं पुण्यपापाख्यमुभयं सिद्धिं गत्वा तस्य फलभूतस्वर्गनरकगमनाख्यकार्य(स्य) सिद्धिं च । वाशब्दः समुच्चये । विनिहन्ति 'तदाविद्वान् पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति ' इति श्रुतेः अतोऽन्यथा ज्ञानी न भवति चेत्, देही देहाभिमानवान् जीवः पुण्यमुपैति । तथा आगतं पापं चोपैति । तयोः सिद्धिं फलं चोपैति ॥ २४ ॥

२३ शां. नास्त्ययं श्लोकः । ख. उभयं तत्रोपभुज्यते फलं । २४ शां. तस्मिन् स्थितो । शां. अथान्यथा । ख. अमुमारभ्य सार्धश्लोकोनास्ति । * ज. असुर्या इति पाठः ।

गत्वोभयं कर्मणा युज्यतेऽस्थिरं
शुभस्य पापस्य स चापि कर्मणा ।
धर्मेण पापं प्रणुदतीह विद्वान्
धर्मो बलीयानिति तस्य सिद्धिः ॥ २५ ॥

धृतराष्ट्र उवाच—
यानिहाहुः स्वस्य धर्मस्य लोका-
न्द्विजातीनां पुण्यकृतां सनातनान् ।
तेषां क्रमान्कथय ततोऽपि चान्या-
न्नैतद्विद्वन्वेत्तुमिच्छामि कर्म ॥ २६ ॥

[ शांक० ] किमविदुषः अनुभव एवोभयोः, उतान्यतरेणान्यतरनाश इति, तत्राह—गत्वा इति । गत्वा परलोकं प्राप्य उभयं पुण्यापुण्यसाध्यं फलं पुण्यापुण्यलक्षणेन कर्मणा भुज्यते अस्थिरम् । श्रूयते च बृहदारण्यके—' यो वा एतदक्षरं गार्ग्यविदित्वाऽस्मिँल्लोके जुहोति ' इति । 'अथ येऽन्यथातो विदुरन्यराजानस्ते क्षय्यलोका भवन्ति' इति च्छान्दोग्ये । स चापि सोऽपि विद्वान् कर्मणा धर्मेण पापं प्रणुदति विनाशयति इह लोके विद्वान् वक्ष्यमाणलक्षणो विनियोगज्ञ ईश्वरार्थं कर्मानुतिष्ठन् । तथा च वक्ष्यति—' तदर्थमुक्तं तप एतदिज्या ताभ्यामसौ पुण्यमुपैति विद्वान् । पुण्येन पापं विनिहत्य पश्चात्स जायते ज्ञानविदीपितात्मा ॥ ज्ञानेन चात्मानमुपैति विद्वानथान्यथा स्वर्गफलानुकाङ्क्षी । अस्मिन्कृतं तत्परिगृह्य सर्वममुत्र भुङ्क्ते पुनरेति मार्गम् ' इति । ' येषां धर्मे च विस्पर्धा न तद्विज्ञानसाधनम् । येषां धर्मे न च स्पर्धा तेषां तज्ज्ञानसाधनम् ' इति । यश्चैवं विनियोगज्ञ ईश्वरार्थं कर्मानुतिष्ठति, तस्य विदुषो धर्मः पापात् बलीयान् इति विद्धि विजानीहि । तस्य पुनः केवलकर्मिणो न बलीयान्; तस्योभयोरनुभव एव नान्यतरेणान्यतरस्य विनाशः ॥ २४ ॥

[ नील० ] फलं धर्मस्य वै कर्मणश्चेतरस्य चेत्युत्तरार्धं विवृणोति–गत्वेति । उभयं पुण्यस्य पापस्य च फलं स्वर्गनरकाख्यं तच्च अस्थिरं क्षयिष्णु गत्वा प्राप्य पुनरस्मिँल्लोके कर्मणा पूर्वसंस्कारानुगुणेन तत्तद्योन्युचितेन युज्यते योगं प्राप्नोति । कर्म कृत्वा तत्फलं भुक्त्वा पुनः कर्मैव कुरुते तेन कर्मपाशान्न मुच्यते इत्यर्थः । यद्यप्येवं तथाऽपि स चापि कर्मयोगी कर्मणा धर्मेण धर्मरूपेण पापं प्रणुदति दूरीकरोति विद्वान् । मूढस्तु कर्मणः फलं स्वर्गपश्वादिकमेवेच्छतीति भावः । अतो हेतोर्धर्मो बलीयान् न त्वधर्मः । इति हेतोस्तस्य धर्मं कुर्वतः सिद्धिः कालेन रागादिदोषनाशद्वारा मोक्षोऽप्यस्तीत्यर्थः । विद्धीति पाठे सिद्धिमिति शेषः ॥ २५ ॥ काम्यो धर्मः पापं च बन्धहेतुर्नित्यधर्मजं च पुण्यं मोक्षहेतुरितिमन्वानः पृच्छति—यानिहाहुरिति । अपाम सोमममृता अभूम । अक्षय्यं ह वै चतुर्मास्ययाजिनः सुकृतं भवति । यस्यैतेऽष्टाचत्वारिंशत्संस्काराः स ब्रह्मणः सायुज्यं सलोकतां गच्छतीत्याद्याः श्रुतयः स्मृतयश्च पुण्यकृतां द्विजातीनां स्वधर्मस्य फलभूतान्सनातनान्नित्यान् लोकान् आहुः तेषां क्रमान् धर्मतारतम्येन उच्चनीचभावं कथय । ततोऽपि चान्यान् निरतिशयान्प्रत्यगानन्दरूपान् बहुत्वं पूजायां मोक्षसुखं च कथय । एतत् स्वधर्मादन्यत्स्वाभाविकप्रवृत्तिविषयभूतं निषिद्धं काम्यं च कर्म वेदितुं न इच्छामि । एतेन स्वस्य वैराग्यं दर्शितं, प्रकृते च तदुपयोगोऽस्तीति ज्ञेयम् ॥ २६ ॥

[ अर्जु० ] धृतराष्ट्रः क्रियमाणानां कर्मणां क्रमेण भोगेऽभोगे च दोषं पश्यन् पृच्छति—यानिमानित्यादि । स्वस्य च ब्रह्मचर्यादेर्धर्मस्य साधारणस्य फलभूतांल्लोकान् नित्यान् तथाचान्यान् परिक्रमान् आश्रमादाश्रमान्तरं गमनानि कथयन्तः आहुरिति पूर्वेणान्वयः । तत्रेदं धृतराष्ट्रेण पृच्छ्यते ये च ब्रह्मचर्याश्रमधर्मास्तेषां फलं यदि भुज्यते तदाऽऽश्रमान्तरवैयर्थ्यं सनातनत्वेन पूर्वाश्रमधर्मस्य उत्तराश्रमधर्मफलस्य भोगानवकाशात् । अथ न भुज्यते इति पक्षं गृह्णाति—नैतदिति । भुज्यत इति नेत्यर्थः इति । उत्तरमाह । नैतत् कृतं च कर्मेति चकारेण फलवत्तां समुच्चित्य नकारेण निषेधति । अथ तस्य न सनातनत्वं तर्हि सनातनाँल्लोकानिति व्याघातः । विद्वन्निति संबोधने ॥ २६ ॥

[ सर्व० ] उभयं धर्ममकृतप्रायश्चित्ततया यश्च धर्मेण प्रायश्चित्तेनाधर्मं प्रणुदति तस्य चाधार्मिकस्य ॥ २५ ॥ यानिमानाहुः अस्य धर्मस्य लौकिकस्य तपस्यादिजन्यतया संबन्धिनो लोकान् भोगोद्देशान् सनातनान् चिरस्थायिनो यानाहुर्ऋषय इमानिति सर्वप्रसिद्धतामाह । तेषां लोकानां परिक्रमान्कथय परिक्रम्यन्ते प्राप्यन्ते लोका एभिरिति परिक्रमाः साधनानि तत्र आत्मज्ञानादन्यान् नैतद्विद्वन्नैव कृतं च कर्म त्वयोक्तमात्मज्ञानेनैव दुःखनाश इत्यतो नैत त्सर्वमस्ति हे विद्वन् नैव कृतं च कर्मायतिफलाभावात् । तथाचानेक इति पूर्वः पक्षः(?) ॥ २६ ॥

[ लक्षा० ] स्थित्वोभयं कर्मणीत्यत्र सः अविद्वान् एवंविधे कर्मणि स्थिरं यथा भवति तथा स्थित्वा शुभस्य पापस्य च कर्मणः उभयं फलं भोज्यते देवदूतैर्यमदूतैश्च

२५ शां. भुज्यते ख. धर्मेणाधर्मम् । शां. ख. तस्य विद्धि । २६ शां. नास्यर्थ लोकः । ख. यानिमानाहुः । ख. कथयततस्तथान्यान्नैतद्विद्वन्नैव कृतं च कर्म ।

**सनत्सुजात उवाच—**

**येषां व्रतेऽथ विस्पर्धा बले बलवतामिव ।**
**ते ब्राह्मणा इतः प्रेत्य ब्रह्मलोकप्रकाशकाः ॥ २७ ॥**

**येषां धर्मे च विस्पर्धा तेषां तज्ज्ञानसाधनम् ।**
**ते ब्राह्मणा इतो मुक्ताः स्वर्गं यान्ति त्रिविष्टपम् ॥ २८ ॥**

बलाद्भोज्यते इहलोके विद्वान् कर्मकौशलं जानन् धर्मेण अत्युत्कटधर्मेण पापं प्रणुदति इति योजना ॥ २५ ॥

[ शंक० ] केषां तर्हि स्वर्गादिसाधनम्, केषां वा चित्तशुद्धिद्वारेण ज्ञानसाधनम् ? इति; तत्राह श्लोकद्वयेन—येषामिति । येषां विषयपराणां स्वर्गादिवासे ऊर्वश्यादिभोगश्रवणात्तत्साधनभूतेषु ज्योतिष्टोमादिषु धर्मेषु विस्पर्धा संघर्षो वर्तते अस्मादहमुत्कृष्टतरं धर्मं कृत्वा अस्मादपि सुखी भूयासमिति । बले बलवतामिव, यथा बलवतो राज्ञः बलवन्तं राजानं दृष्ट्वा अहमस्मादपि बलवत्तां संपाद्यैनं जित्वा अस्मादपि सुखी भूयासमिति संघर्षो वर्तते तद्वत् । ते फलसङ्गसहिताः ब्राह्मणा यज्ञाधिकारिण इतः प्रेत्य धूमादिमार्गेण गत्वा स्वर्गे नक्षत्रादिरूपेण यान्ति प्राप्नुवन्ति प्रकाशताम् । श्रूयते च—'अथ य इमे इष्टापूर्ते दत्तमित्युपासते ते धूममभिसंभवन्ति' इत्यारभ्य 'एष सोमो राजा तद्देवानामन्नं तं देवा भक्षयन्ति यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' इति । येषां विषयानाकृष्टचेतसामनित्यफलसाधनज्योतिष्टोमादौ धर्मे न च स्पर्धा संघर्षो न वर्तते तेषां फलनिरपेक्षमीश्वरार्थं कर्मानुतिष्ठतां तत् यज्ञादिकं कर्म शुद्धिद्वारेण ज्ञानसाधनम् । वक्ष्यति च स्वयमेव भगवान् शुद्धिद्वारेणैव ज्ञानसाधनत्वम्—'पुण्येन पापं विनिहत्य पश्चात्स जायते ज्ञानविदीपितात्मा' इति । ये यज्ञादिभिः विशुद्धसत्त्वाः परमात्मानमात्मत्वेनावगच्छन्ति, ते ब्राह्मणा इतः अस्मात्कार्यकारणलक्षणाल्लोकात्प्रेत्य मुक्ताः स्वर्गं सुखलक्षणं पूर्णानन्दं ब्रह्म यान्ति प्राप्नुवन्ति । इतरस्मात्स्वर्गादस्य वैलक्षण्यमाह—त्रिविष्टपमिति । त्रिभिराध्यात्मिकादितापैः, सत्त्वादिभिर्वा, जाग्रदादिभिर्वा विमुक्तं स्वरूपाविष्टं पातीति त्रिविष्टपम् । अथवा, तैर्विष्टमधिकारिणं पातीति त्रिविष्टपम् ॥ २५ ॥ २६ ॥

[ नील० ] उत्तरमाह—येषामिति । व्रते यमनियमादिरूपे विस्पर्द्धा अहमन्येभ्योऽधिकं यमादीन्साधयिष्यामि अहमन्येभ्य इति संघर्षः विश्वामित्रादिव तपस्यभिनिवेश इति यावत् । बलवतां मल्लादीनामिव ते योगिनः ब्राह्मणाः सगुणब्रह्मविद इतो देहात्प्रेत्य गत्वा ब्रह्मलोके तेजस्विनः पूज्या भवन्ति ततो मुक्तिं च ब्रह्मणा सह प्राप्नुवन्ति । तथा च स्मर्यते—ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे । परस्यान्ते कृतात्मानः प्रविशन्ति परं पदमिति ॥ २७ ॥ सर्वधर्मश्रेष्ठस्य योगधर्मस्य फलमुक्त्वा इज्यादिधर्मस्य फलमाह—येषामिति । अहमेव यज्ञादीन्सर्वोत्कर्षेणानुतिष्ठेयमिति येषामाग्रहः तेषां तत् यज्ञादिकं ज्ञानस्य साधनं विविदिषोत्पादनद्वारा भवति । तथाच श्रुतिः तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसाऽनाशकेनेति । त्रिविष्टपं देवलोकं न तु सत्यलोकम् । विविदिषाद्यर्थमपि कर्मानुतिष्ठतामानुषङ्गिकं स्वर्गफलमपि भवतीत्यर्थः । यदाहापस्तम्बः । तद्यथाऽम्रे फलार्थे निमिते छाया गन्ध इत्यनूत्पद्येते एवं धर्मं चर्यमाणमर्था अनूत्पद्यन्त इति ॥ २८ ॥

[ अर्जु० ] येषां बले न विस्पर्धा बले बलवतामिव । ते ब्राह्मणा इतः प्रेत्य स्वर्गलोकप्रकाशकाः । बले विद्याबले, पुनरपि बले तपोबले, बलवतां देवानामपि । बलवतामपि बलवतामिवेति च पाठः । येषां विद्याबलेन बलवतामपि अबलवतामिव बलेन बाहुबलेन विस्पर्धा स्पर्धाविगम इति च व्याख्या । ते ब्राह्मणाः स्वर्गलोकमुद्द्योतयन्ति, एतदुक्तं भवति—क्रमेण कृतानामाश्रमधर्माणां स्वर्गे क्रमेणैव फलं भुज्यते । न च क्रमे सति सनातनत्वव्याघातः । चिरस्थायित्वाभिप्रायेण सनातनत्वोपपत्तेः । अथवा स्वर्गलोकप्रकाशका मोक्षिणो मोक्षश्च सनातनः चतुर्णामप्याश्रमधर्माणां तेन कर्मणि क्रमो न फल इति न सनातनत्वविरोधः ॥ २७ ॥

[ सर्व० ] येषां बलेन विस्पर्धा बले बलवतामिव येषां ब्राह्मणानां बलेन तपोबलेन विस्पर्धा यथा बलवतां क्षत्रियाणां शूरतयेति अन्योन्यस्पर्धयाधिकफललाभार्थं प्रवर्तकधर्मजनकं तपश्चरणमित्युक्तं भवति । निवर्तकधर्मस्य सर्वान्प्रति मोक्षरूपफलसाम्येन स्पर्धाया अभावात् स्पर्धापदेन तन्निवर्तनम् । इतो लोकात् । ते सकललोकमुपासते । अत इच्छात्मसु तादृशं कर्मोपदर्शितम् । कामादिभिरभिभवे क्षयिण्यपि स्वर्गे चिरकालस्थायित्वमात्रेण सनातनत्वबुद्ध्या इच्छा ततः यद्यस्येष्टं तं प्रति तत्साधनोपदेशे न कश्चिद्दोषः पापप्रवृत्त्युपदेशे दोषश्रवणात् ॥ २७ ॥ २८ ॥

[ लक्षा० ] येषां धर्मेषु विस्पर्धेत्यत्र धर्मेषु प्रवृत्तिधर्मेषु विशेषेण स्पर्धा तत्कृतपुण्यादपि मया अधिकं पुण्यं कर्तव्यमिति स्पर्धेत्यर्थः ॥ २७ ॥ येषां धर्मे न च स्पर्धेत्यत्र येषां ज्ञानिनां धर्मे प्रवृत्तिधर्मे स्पर्धा न च किंतु तमपि धर्मं

---

२७ ख. येषां बले न वि° । ख. वतामपि । ख. स्वर्गलोक° । २८ ख. नास्ति ।

तस्य सम्यक् समाचारमाहुर्वेदविदो जनाः ।
नैनं मन्येत भूयिष्ठं बाह्यमाभ्यन्तरं जनम् ॥ २९ ॥
यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोलपम् ।

फलाशां विहाय विष्णुप्रीत्यर्थमेव कुर्वन्ति । तेषां तत् धर्माचरणं ज्ञानसाधनम् । इतः प्रवृत्तिकर्मफलात् स्वर्गान्मुक्तास्ते ब्राह्मणाः त्रिविष्टपं त्रयः विष्टपाः वैकुण्ठादिलोकाः यस्मिन् तं स्वर्गं मोक्षं यान्ति ॥ २८ ॥

[ शंक० ] इदानीं ब्रह्मचर्यादेव सर्वाणि कर्माणि संन्यस्य वेदान्तश्रवणादिकं कृत्वा स्वे महिम्नि व्यवस्थितस्य परमहंसपरिव्राजकाचार्यस्य विदुषः समाचारमाह—तस्येति । तस्य विरक्तस्य विदुषः सम्यक्समाचारमाहुर्वेदविदो जनाः नैनं योगिनं मन्येत चिन्तयेत् भूयिष्ठं बहु बाह्यमाभ्यन्तरं जनं पुत्रमित्रकलत्रादि आभ्यन्तरम्, इतरद्बाह्यम् । यथा पुत्रमित्रादयो न गृह्णन्ति, तथा तेषामगोचर एव वर्तते इत्यर्थः ॥ २७ ॥ कीदृशे देशेऽस्य वास इत्याह—यत्र इति । यत्र यस्मिन् मृगगोचरादिपीडारहिते देशे अन्नपानादि भूयिष्ठं बहुलं विद्यत इति मन्येत प्रावृषीव वर्षाकाले तृणोदकं बहुलं विद्यते तद्वत् । तृणोलपमिति केचित्—'तृणोलपमिति ख्यातो मुनिभोज्यौदनादिषु' इति वदन्ति । दूर्वाविशेष इति केचित् । तत्र स्थित्वा तत् अन्नपानादिकमुपजीवेत् । नानुसंज्वरेत् संतप्तो न भवेत्, अन्यथा अन्नपानादिरहिते देशे कथं नाम देहयात्रा सिध्येदिति संतप्तो भवेत्; ततश्च न योगसिद्धिः ॥ २८ ॥ तत्राप्येवंविधजनसमीपे वास इत्याह—यत्रेति । यस्मिन्देशे अकथयमानस्य तूष्णींभूतस्य स्वमाहात्म्यं प्रच्छादयतो येनकेनचिदाच्छन्नस्य येनकेनचिदाशितस्य यत्रक्वचन शायिन आत्मानमेव लोकं पश्यतः जडमूकबालपिशाचादिवत्संचरतः परमहंसपरिव्राजकाचार्यस्य प्रयच्छत्यशिवं भयम् अकल्याणमवमानादिकं प्रयच्छति । तथा अतिरिक्तमिवाकुर्वन् यथा कश्चित् स्थितप्रज्ञलक्षणज्ञो ब्रह्मविदिति ज्ञात्वा प्रणिपातनमस्कारादिपूर्वकमीश्वरबुद्ध्या पूजयति तद्वदज्ञाततया अतिरिक्तं ब्राह्मणजातिमात्रप्रयुक्तपूजातिरिक्तं पूजान्तरं ब्रह्मविदनुरूपमकुर्वन् अवमानादिकमेव कुर्वन् यो जनः, सः अस्य विदुषः श्रेयान्, नेतरः यः प्रणिपातादिपूर्वकमीश्वरबुद्ध्या संपूजयति । तथा चाह भगवान्मनुः—'संमानाद्ब्राह्मणो विद्वानुद्विजेत विषादिव । अमृतस्येव चाकाङ्क्षेदवमानस्य सर्वदा' इति । तथा चाह भगवान्पराशरः—'संमानना परां हानिं योगर्द्धेः कुरुते यतः । जनेनावमतो योगी योगसिद्धिं च विन्दति' इति ॥ २९ ॥

अन्नं पानं ब्राह्मणस्य तज्जीवेन्नानुसंज्वरेत् ॥ ३० ॥
यत्राकथयमानस्य प्रयच्छत्यशिवं भयम् ।
अतिरिक्तमिवाकुर्वन्स श्रेयान्नेतरो जनः ॥ ३१ ॥

[ नील० ] ये तु अकरणे प्रत्यवायं मत्वा धर्मार्थमेव धर्ममनुतिष्ठन्ति न ज्ञानार्थं नापि स्वर्गार्थं तानाह—तस्येति । तस्य धर्मस्य समाचारं सम्यगनुष्ठानं वेदविदो वैदिकत्वाभिमानिनो जनाः सम्यगित्याहुः । न तु ततः किंचिदैहिकमामुष्मिकं वा फलं कामयन्ते । एनं जनं एनान् जनान् भूयिष्ठम् अत्यन्तं न मन्येत न मानयेत् किंचित्तु मानयेदेवेत्यर्थः । तमेव विशिनष्टि—बाह्यम् आत्मनि वर्णाश्रमवयोवस्थाभिमानित्वात् बहिर्मुखं वैदिकत्वान्निष्कामत्वाच्च आभ्यन्तरं, यतः अकामहतस्य श्रोत्रियस्य कामोपमर्दतारतम्येन हिरण्यगर्भादर्वाचीनानां मानुषादीनामानन्दगणनायामुत्तरोत्तरशतगुणितायां—स एक इन्द्रस्यानन्दः स एकः प्रजापतेरानन्द इति प्रतिपर्यायं श्रोत्रियस्य चाकामहतस्येति आनन्दोत्कर्षः श्रूयते ॥ २९ ॥ एवं योगिनामात्मविविदिषूणां निष्कामवर्णाश्रमाभिमानिनां च धर्मः उत्तममध्यमाधमभावेन प्रोक्तः । संप्रति अहिंसाप्रधानान्योगिधर्मानाह—यत्र मन्येतेति । यत्र गृहेऽन्नं पानं च ब्राह्मणस्य संन्यासिनः भूयिष्ठमस्तीति मन्येत् जानीयात् तत् गृहं प्राप्य जीवेत्प्राणयात्रां कुर्यात् । न क्षीणवृत्तिं गृहस्थं पीडयेदिति भावः । प्रावृषि वर्षाकाले तृणं च उलपः उच्छ्रिततरं तृणम् । 'उलपो न स्त्री गुल्मिन्यां ना तृणान्तरे' इति मेदिनी । तृणोदकमिति पाठान्तरम् । नानुसंज्वरेत् क्षुद्बाधया आत्मानं न पीडयेदित्यर्थः ॥ ३० ॥ यत्र देशे अकथयमानस्य स्वमाहात्म्यम् प्रकाशयतः अशिवममङ्गलं भयं प्रयच्छति सप्तम्यन्तमिदं भयप्रदेऽपि देशे स्थित्वा सत्यपि सामर्थ्ये तत्रत्यजनमध्ये आत्मानं स्वविद्यादिना अतिरिक्तमधिकमिव अकुर्वन् स्वोत्कर्षमप्रकाशयन् यो जनो भवति स श्रेयान् प्रशस्ततरः परपीडां मानं च त्यजेदिति श्लोकद्वयार्थः ॥ ३१ ॥

[ अर्जु० ] मोक्षिणामन्नोपादानविधिमाह—यत्र मन्येत भूयिष्ठं प्रावृषीव तृणोलपम् । अन्नं पानं ब्राह्मणस्य तज्जीवन्नानुसंज्वरेत् । यत्र गृहे भूयिष्ठं सुवहे(?)मेन्नं पानम् उलपं बल्वजाः तद्गृहं जीवन् जीवनार्थी नानुसंज्वरेत् न गतो हऽमिति संतापं न कुर्यात् । अन्नपानादौ रागं न कुर्यादिति भावः ॥ ३० ॥ मुमुक्षोः क्षमामाह—यत्राकथयमानस्य प्रयच्छत्यशिवं भयम् । अतिरिक्तमिवाकुर्वन् स श्रेयान्नेतरे जनाः । यत्र दुर्योधनकृताक्रोशताडनादिकर्मणि अव्य-

२९ ख. नास्ति । ३० शां. तृणोदकम् । अन्नपानं च ब्राह्मणस्तज्जीवेन्नानुसंज्वरेत् ।

**यो वा कथयमानस्य ह्यात्मानं नानुसंज्वरेत् ।**
**ब्रह्मस्वं नोपभुञ्जीत तदन्नं संमतं सताम् ॥ ३२ ॥**

थयमानस्य वाचापि निषेधमकुर्वतः, अप्रयतमानस्येति पाठे प्रतिकारमकुर्वतः, अशिवं मरणरूपं भयमप्यतिरिक्तं बहुतरं प्रयच्छति न प्रतिकरोतीति धिया । इवशब्दो वाक्यालंकारे । तत्र चाकुर्वन्नुदासीनो यः सः क्षमी श्रेयान् । नेतरे अक्षमिणः । अथवा ये भयं प्रयच्छन्ति तेभ्यः आत्मानमतिरिक्तमिवाकुर्वन् तेष्वप्यात्मनीव व्यवहरन् ॥ ३१ ॥

[ सर्व० ] एवं प्रसङ्गात्कृते प्रश्ने उत्तरमुक्त्वा पूर्वप्रक्रान्ततात्त्विकमृत्युतरणोपायं कथयति—यत्र मन्येतेति । यत्र देशे अन्नं पानं भूयिष्ठं बहुतरं मन्येत प्रावृषि यथा तृणोलपं उलपमुच्छ्रिततरं तृणं तत्स्थानं जीवत्पलीयसावीति(?)जीवनं नानुसंज्वरेत् अनुस्मृत्य तदलाभे दुःखं नैव कुर्यादिति लोभत्यागः साधनत्वेनोक्तः ॥ ३० ॥ भयादपि सत्याहिंसे न त्याज्ये इति दर्शयति । यत्र देशे सान्त्वादिकं न पश्यन्तश्चौरा अकथयमानस्य तात्त्विकस्य हिंसारुचित्वादशिवं प्रयच्छन्ति मारणं कुर्वन्तीति यावत् । तत्रापि देहनिस्पृहतया भयमतिरिक्तमकुर्वन्स श्रेयान् । तत्र हि संभ्रमे मिथ्याकथने मिथ्यादोषोऽन्यथा हिंसादोष इति । न इतरः संभ्रमी । एतच्च श्रुतौ विशिष्य प्रतिपादितम् ॥ ३१ ॥

[ लक्षा० ] नैनं मन्येत भूयिष्ठमित्यत्र आभ्यन्तरं स्थितिमात्रेण जनान्तर्विद्यमानं बाह्यं चारित्रेण लोकबाह्यमेनं ज्ञानिनं जनः भूयिष्ठमुत्तमं न मन्येत भूयिष्ठं बहुशो न मन्येत ॥ २९ ॥ द्रांस्तु(?)यत्र ज्ञानिनि दृष्टे सति प्रावृषि तृणोदकमिव तृणान्तर्निलीनोदकमिव भूयिष्ठमुत्तमं मन्येत अन्नं पानं ब्राह्मणस्य तज्जीवन्नानुसंज्वरेदित्यत्र यस्मात् अन्नं पानं च ब्राह्मणस्य भागः तत्तस्माज्जीवनार्थी ज्ञानी अनु अन्नादिकमनुसृत्य न संज्वरेत् क्लेशं न कुर्यात् ॥ ३० ॥ यत्र ज्ञानिनि अकथयमानस्य आह्वानमकुर्वतः पुंसः अशिवं पापं कर्तृ भयं नरकभयं प्रयच्छति । अतिरिक्तमित्यत्र यः आत्मानं प्रकथयन्नातिरिक्तमेव कोपाद्यतिरेकवन्तमिव आत्मानमकुर्वन् तिष्ठति सः श्रेयान् नेतरजनः ॥ ३१ ॥

[ शंक० ] कीदृशस्य तर्ह्यन्नं भोज्यमिति, अत्राह—यो वा इति । यो वा अकथयमानस्य तूष्णींभूतस्य सर्वोपसंहारं कृत्वा पूर्णानन्दात्मना अवस्थितस्य आत्मानं नानुसंज्वरेत् न तापयेत् ब्रह्मस्वं नोपहन्याद्वा ब्रह्मनिष्ठासाधनभूतं चेलाजिनकुशपुस्तकादिकं नोपहन्याद्वा । तथा चोक्तम्—‘ रत्नक्षौमादिकं नास्य योगिनः स्वं प्रचक्षते । कुश-

**यथा स्वं वान्तमश्नाति श्वा वै नित्यमभूतये ।**
**एवं ते वान्तमश्नन्ति स्ववीर्यस्योपसेवनात् ॥ ३३ ॥**

वल्कलचेलाद्यं ब्रह्मस्वं योगिनो विदुः ’ इति । अन्यदपि ब्रह्मस्वं ब्राह्मणस्वं नोपहन्याद्वा तदन्नं तस्यान्नं संमतं सतां भोज्यत्वेन ॥ ३० ॥ इदानीमगूढचारिणं कुत्सयन्नाह—ये इति । ‘ मूढो बाल इति प्रोक्तः श्वा च बाल इति स्मृतः ’ इति दर्शनात् यथा बालाः श्वानो वा मूढा वा वान्तम् उद्गीर्णं मश्नन्ति, एवं ये शिष्टा ब्रह्मविदः स्वमाहात्म्यं ख्यापयन्तः अगूढचारिणो वर्तन्ते, ते वान्तम् उद्गीर्णम् अश्नन्ति स्ववीर्यस्योपभोजनात् । यदिदं वान्ताशनं तदिदम् अभूतये अनर्थायैवेत्यर्थः । तस्मादूढः सन्नशिष्टवदेव समाचरेदित्यर्थः ॥ ३५ ॥

[ नील० ] ईदृशेन कस्यान्नं भोक्तव्यं तमाह—य इति । यः पुमान् आत्मानं कथयमानस्य स्वप्रौढिं दर्शयतो नरस्योपरि नानुसंज्वरेत् परोत्कर्षं दृष्ट्वा न संतप्येत । तथा ब्रह्मस्वं यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभाविति स्मृतेर्येत्यादिभ्योऽदत्त्वा यद्भोजनं तद्ब्रह्मस्वभोजनमकुर्वंश्च यो भवति तदन्नं तस्यान्नं सतां संमतम् । असूयारहितस्य श्रद्धापूर्वकं प्रयच्छत एवान्नं भोज्यमित्यर्थः ॥ ३२ ॥ श्वा शुनकः ते संन्यासिनः स्ववीर्यस्य स्वपाण्डित्यस्य उपजीवनात्पाण्डित्यादिकं प्रकाश्य भिक्षामिच्छन् यतिर्वान्ताशी भवतीत्यर्थः ॥ ३३ ॥

[ अर्जु० ] यस्यान्नं भोक्तव्यं तमाह—यो वाऽकथयतो दत्त्वा सह्यान्नं नानुसंज्वरेत् । ब्रह्मस्वं नोपभुञ्ज्याद्वा तदन्नं संमतं सताम् । वाशब्दः प्रसिद्धौ अकथयतो गोत्रविद्यादिकमप्रकाशयतोऽपि भिक्षोः सह्यं सहनीयं सुखपरिणाममिति यावत् अन्नं दत्त्वापि नानुसंज्वरेत् इति प्रसिद्धिः । ब्रह्मस्वं परस्वोपलक्षणम् ॥ ३२ ॥ वेदं पठित्वान्नप्रार्थनं निषेधति—यथा स्वं वान्तमश्नाति श्वा वै नित्यमभूतये । एवं ते वान्तमश्नन्ति स्ववीर्यस्योपजीवनात् । अर्थः सुगमः ॥ ३३ ॥

[ सर्व० ] यदीयान्नं योगिना भोक्तव्यं तद्दर्शयति—यो वा कथयमानस्येति । कथयमानस्य प्रार्थयमानस्य शक्यं वस्तु अनु लक्षीकृत्य न संज्वरेत् दातुं दुःखी न भवेत् । वाशब्द उत्तरपक्षापेक्षया समुच्चये । तदन्नं तस्यान्नं संमतं भोज्यतया ॥ ३२ ॥ यो वा कथयमानस्येत्युक्तमन्नं तादृशान्नत्यागिनस्तेषां दोषमाह—यथेति । स्वं वान्तं स्वयमेव श्वा अश्नाति अभूतयेऽलक्ष्मीनिमित्तं तथा ते नान्नभोजिनोऽपि तु वान्तभोजिनः । कोऽन्नदोषो येन वान्ततुल्य-

३२ ख. नोपभुङ्क्ते वा । ३३ ज्ञां. ये यथा वान्तमश्नन्ति बाला नित्यमभूतये ।

**नित्यमज्ञातचर्या मे इति मन्येत ब्राह्मणः ।**
**ज्ञातीनां तु वसन्मध्ये तं विदुर्ब्राह्मणं बुधाः ॥ ३४ ॥**

**को ह्यनन्तरमात्मानं ब्राह्मणो हन्तुमर्हति ।**
**निर्लिङ्गमचलं शुद्धं सर्वद्वैतविवर्जितम् ॥ ३५ ॥**

तेत्यत उक्तम्, स्ववीर्यस्योपजीवनात् । तदन्नभोगेन स्वस्य यद्वीर्यं धर्मरूपमुपात्तं तस्य तेनान्नादिना उपजीवनात् ग्रहणाद्वान्तवद्वीर्यहानिकरं तदित्यर्थः ॥ ३३ ॥

[ लक्षा० ] स्ववीर्यस्योपभोजनादित्यत्र स्वं द्रव्यं तद्वीर्यस्य तत्सामर्थ्यलब्धान्नपानादेरुपभोजनात् एवं ते वान्तमश्नन्ति सर्वं न्यस्तमिति संन्याससम(?)पुनः संगृह्य तेनोपभोजनं कुर्वन् यतिर्वान्तभुगिति भावः ॥ ३३ ॥

[ शंक० ] पुनरपि तस्यैव समाचारमाह—नित्यमिति। नित्यं नियमेन अज्ञातचर्या गूढचर्या मे मम कर्तव्येति मन्येत ब्राह्मणः ब्रह्मवित् । ज्ञातीनां पुत्रमित्रकलत्रादीनां मध्ये संनिधौ वसन् नैव विन्देत न प्रतिपद्येत किंचन किंचिदपि । कश्चनेति केचित् । योगी नैव विन्देत पुत्रमित्रकलत्रादिकं परित्यज्य केवलं स्वात्मनिष्ठो गूढचर्यो भवेदित्यर्थः । तथा च श्रुतिः—‘ कुटुम्बं पुत्रदारांश्च वेदाङ्गानि च सर्वशः । यज्ञं यज्ञोपवीतं च त्यक्त्वा गूढश्चरेन्मुनिः ’ इति । तथा चाह भगवान्वसिष्ठः—‘ यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम् । न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः ॥ जानन्नपि च मेधावी जडवल्लोक आचरेत् ’ इति ॥ ईदृशस्यैव ज्ञाननिष्ठाप्राप्तिलक्षणो मोक्षः नान्यस्य, विक्षेपबाहुल्यादिति भावः । अथवा, ‘ नित्यमज्ञातचर्या मे अज्ञाते चक्षुराद्यविषयभूते वाचामगोचरे अनुदितानस्तमितज्ञानात्मनाऽवस्थिते अशनायाद्यसंस्पृष्टे पूर्णानन्दस्वरूपे सर्वान्तरे प्रत्यग्भूते ब्रह्मणि चर्या निष्ठा समाधिलक्षणा मे मम कर्तव्या, न पराग्भूतदेहेन्द्रियपुत्रमित्रकलत्रादौ स्थूलोऽहं कृशोऽहं गच्छामि तिष्ठामि क्लीबः काणः मूको बधिरः अमुष्य पुत्रोऽस्य नप्ता ब्राह्मणोऽहं क्षत्रियोऽहं भार्या मे पुत्रो मे विभवो मे स्निग्धबन्धुसुहृदः इत्येवमात्मिका कर्तव्या ’ इति मन्येत ब्राह्मणो ब्रह्मवित् । तथा च श्रुतिः—‘यच्चक्षुषा न पश्यति येन चक्षूंषि पश्यति, तदेव ब्रह्म ’ इति । यस्मादेवमज्ञात एव ब्रह्मणि निष्ठा कर्तव्या, तस्मात् ज्ञातीनाम् ‘ क्रोधमानादयो दोषा विषयाश्चेन्द्रियाणि च । एत एव समाख्याता ज्ञातयो देहिनस्तव ’ इतीन्द्रियादीनां ज्ञातिशब्देनोक्तत्वात् इन्द्रियादीनां मध्ये वसन् पश्यन् शृण्वन् स्पृशन् जिघ्रन् गच्छन् अश्नन् मन्यमानो विजानन्नपि नैवमात्मानं प्रमात्रादिरूपेण विन्देत प्रतिपद्येत, तत्साक्षित्वादात्मनः । तथा च श्रुतिः—‘ अथ यो वेदेदं जिघ्राणीति स आत्मा ’ इति । देहद्वयतद्धर्मानात्मत्वेन न गृह्णीयादित्यर्थः ॥ ३१ ॥ कस्मात्पुनरेवं न गृह्यत इति, अत्राह—को इति । को हि निर्लिङ्गं स्थूलसूक्ष्मविवर्जितम् अचलं क्रियाकर्त्रादिशून्यं शुद्धम् अविद्यादोषरहितं सर्वद्वन्द्वविवर्जितम् अशनायापिपासाशोकमोहजरामृत्युशीतोष्णसुखदुःखादिधर्मविवर्जितम् अन्तरात्मानं सर्वान्तरं प्रमात्रादिसाक्षिणमात्मानं मानाविषयभूतं एवम् उक्तेन प्रकारेण देहद्वयतद्धर्मतया ‘ स्थूलोऽहं कृशोऽहं गच्छामि पश्यामि मूको बधिरः काणः सुख्यहं दुःख्यहम् ’ इति ब्राह्मणः सन् अर्हति मन्तुम् । तथा सति ब्राह्मणत्वमेव हीयेतेत्यर्थः । वक्ष्यति च—‘ य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ’ इति ॥ ३२ ॥

[ नील० ] यः ब्राह्मणः ब्रह्मवित् ज्ञातीनां मध्ये वसन्नपि ज्ञातयो मे मम नित्यमज्ञाता चर्या याभिस्ता अज्ञातचर्याः सन्तु इति मन्येत ज्ञातयो मे योगगतिं मा ज्ञासिषुरिति यस्य प्रच्छन्नतेजसो मतिः तं ब्राह्मणं ब्रह्मिष्ठं बुधाः तल्लक्षणज्ञाः विदुः ॥ ३४ ॥ ईदृशीं चर्यां विना अनन्तरम् उपाधिकृतव्यवधानशून्यमात्मानं प्रत्यञ्चं निर्लिङ्गमनुमानाद्यगम्यमचलं व्यापकं शुद्धमसङ्गं सर्वद्वैतविवर्जितं सजातीविजातीयस्वगतभेदशून्यं हन्तुं गन्तुं हन्तेर्गत्यर्थत्वमत्र ज्ञेयं ज्ञातुमित्यर्थः कोऽर्हति न कोऽपीत्यर्थः ॥ ३५ ॥

[ अर्जु० ] नित्यमज्ञातचर्येण इति मन्येत ब्राह्मणः । ज्ञातीनां हि वसन् मध्ये वेदान्तर्ब्राह्मणं बुधः । इतिशब्द उक्तवक्ष्यमाणप्रकारावाह । ताभ्यां मन्येत जानीयात् । ब्राह्मणः नित्यं सदा अज्ञातचर्येण अनुपलब्धचर्येण इति ज्ञातिमध्ये वसन् हि यस्मात् ज्ञातीनां मध्ये वसन् कश्चिदेवान्तर्मुखो ब्राह्मणम् ब्रह्मस्वरूपं वेदेत्यन्वयः ॥ ३४ ॥ कोहीत्यादि । अनन्तरमविद्यमानभेदचिह्नं नहि ब्राह्मणादिदेहे भेदप्रतिपादकलिङ्गसंज्ञादि विद्यते ॥ ३५ ॥

[ सर्व० ] गुप्तचर्यां दर्शयति । अज्ञातचर्येणाज्ञातचरणेन इत्येवं प्रकारं मन्येत जानीयात् । ब्राह्मणं ब्रह्मविदं ज्ञातीनां बन्धूनां मध्ये वसन् वसन्तमपि । द्वितीयार्थे प्रथमा । कश्चिदेव ब्राह्मणं वेद । ईदृशो गुप्तः स्यात्, येन ज्ञातयोपि न जानीयुरित्यर्थः ॥ ३४ ॥ ब्रह्मज्ञानस्यातिप्रयाससाध्यत्वमाह ‘ को ह्यनन्तरमात्मानं ब्राह्मणो मन्तुमर्हति । तस्माद्धि किञ्चित्क्षत्रिय ब्रह्मावसति पश्यति ’ अन्तरं विशेषो व्यावर्तको धर्मः । शरीरादेः सकाशादात्मनस्तदुहि(?)तमज्ञातत्वेनाभावोपचारात् । ब्रह्म वेद-

३४ ख. नित्यमज्ञात चर्येण । ख. वसेन्मध्ये वेदकश्चिद्धि ब्राह्मणम् ।

३५ ख. वेत्तुमर्हति । ख. उत्तरार्धं नास्ति ।

तस्माद्धि क्षत्रियस्यापि ब्रह्मावसति पश्यति ॥ ३६ ॥
योऽन्यथा सन्तमात्मानमन्यथा प्रतिपद्यते ।
किं तेन न कृतं पापं चौरेणात्मापहारिणा ॥ ३७ ॥
अश्रान्तः स्यादनादाता संमतो निरुपद्रवः ।
शिष्टो न शिष्टवत्स स्याद्ब्राह्मणो ब्रह्मवित्कविः ॥ ३८ ॥
अनाढ्या मानुषे वित्ते आढ्या दैवे तथा क्रतौ ।
ते दुर्धर्षा दुष्प्रकम्प्यास्तान्विद्याद्ब्रह्मणस्तनुम् ॥ ३९ ॥

स्तद्वेत्ता ब्राह्मणः सोपि तं मन्तुं ज्ञातुं [ कोहिता इति तत्स्यात् । किञ्चित्किञ्चिदित्यर्थे ? ] ॥ ३५ ॥

[ लक्षा० ] नित्यमज्ञातचर्या म इत्यत्र मे नित्यमज्ञातचर्या संचरणमस्तु इति ब्राह्मणः मन्येत ॥ ३४ ॥ कोऽत्यल्पतरमात्मानमित्यत्र अल्पात् प्रयत्नात् तरति संसारमित्यल्पतरः ॥ ३५ ॥

[ शंक० ] यस्त्वेवं मनुते स पापीयानित्याह—'य इति । योऽन्यथा सन्तमात्मानं ज्ञानात्मना निर्लिङ्गममलं शुद्धं सर्वद्वन्द्वविवर्जितं चित्सदानन्दाद्वितीयब्रह्मात्मना सन्तं स्वमात्मानम्, अन्यथा देहद्वयतद्धर्मात्मतया 'कर्ता भोक्ता सुखी दुःखी स्थूलोऽहं कृशोऽहममुष्य पुत्रोऽस्य नप्ता ब्राह्मणोऽहं क्षत्रियोऽहम्' इत्येवमात्मना प्रतिपद्यते, किं तेन मूर्खेणानात्मविदा आत्मचोरेणात्मापहारिणा न कृतं पापम् । महापातकादि सर्वं तेनैव कृतमित्यर्थः । तथा च श्रुतिः—'असुर्या नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति ये के चात्महनो जनाः' इति । तथा चोक्तम्—'ब्राह्मण्यं प्राप्य लोकेऽस्मिन्न मूको बधिरो भवेत् । नापक्रामति संसारात्स खलु ब्रह्मघातकः' इति । तस्माद्विषयभूतदेहेन्द्रियादिषु आत्मभावं परित्यज्य अज्ञात एव वागाद्यगोचरे परमात्मनि निष्ठा कर्तव्येत्यर्थः ॥ ३३ ॥ अन्यथा देहेन्द्रियतद्धर्माननुपाददतः किं भवतीत्यत आह—अश्रान्त इति । यः अनादाता अनात्मभूतदेहेन्द्रियतद्धर्मानात्मत्वेन नोपादत्ते, स पुरुषः अश्रान्तः स्यात् संसारश्रमयुक्तो न भवेत्, अशनायादेर्देहादिधर्मत्वात् । तथा च श्रुतिः—'अशनायापिपासे प्राणस्य शोकमोहौ मनसो जरामरणे शरीरस्य' इति । देहद्वयाध्यासे हि तद्धर्माध्यासो भवति । एवमश्रान्ततया निरुपद्रवः भवति । क्रोधहर्षलोभमोहादयोऽन्तराया उपद्रवाः, तद्धीनो निरुपद्रवः, स संमतः शिष्टत्वेन विद्वद्भिः संमतः शिष्टवन्न स्यात् नाचरेत् जडवच्चरेत् ब्राह्मणो ब्रह्मवित्कविः ॥ ३४ ॥ इदानीं योगिनं प्रशंसन्नाह—अनाढ्या इति । अनाढ्या अबहुमता असत्कारमानः मानुषे वित्ते जायापुत्रवित्तादिषु, आढ्या वेदेषु वेदप्रतिपाद्याहिंसासत्यास्तेयापरिग्रहब्रह्मचर्यसमाधिसाधनेषु ये द्विजाः, ते दुर्धर्षा दुष्प्रकम्प्या विद्यात्तान्ब्रह्मणः तनुं ब्रह्मस्वरूपभूतान् विद्यात् इत्यर्थः ॥ ३६ ॥

[ नील० ] तस्मादब्राह्मणस्यापि क्षत्रियादेरीदृक्चर्यावतः—कर्मणिषष्ठी—क्षत्रियमपि ब्रह्म स्वप्रकाशेन आवसति अधिरूढं भवति येन सोऽप्यात्मनो ब्रह्मभावं पश्यतीति । सार्धश्लोको वाक्यं, पाठान्तरं तु सुगमम् ॥ ३६ ॥ आत्माज्ञाने दोषमाह—य इति । अन्यथा आत्मत्वेन भासमानाद्देहादेर्विपरीतं सन्तम् अन्यथा कर्त्रादिरूपं शेषं स्पष्टम् ॥ ३७ ॥ आत्मतत्त्वप्रतिपत्त्युपायमाह—अश्रान्त इति । अश्रान्तः श्रमहीनः यतः अनादाता आदानशून्यः निष्परिग्रह इत्यर्थः । अत एव संमतः शिष्टानां निरुपद्रवश्च स्वयं भवति तथा शिष्टोऽपि शिष्टवन्न स्यात् शिष्टत्वं न प्रकाशयेत् । पाठान्तरे अशिष्टवत् यथेष्टाचरणकृन्न स्यात्किंतु शिष्ट एव वैदिकमर्यादापरिपालनपर एव स्यात् कविः क्रान्तदर्शी ॥ ३८ ॥ मानुषे वित्ते चक्षुर्ग्राह्यधनदारादिरूपे विषये अनाढ्याः दरिद्राः सर्वसङ्गत्यागिन इत्यर्थः । दैवे वित्ते श्रोत्रग्राह्ये पारलौकिके धर्मादौ आढ्याः संपन्नाः तथा क्रतौ ईश्वरोपासनायां स क्रतुं कुर्वीतेत्युपासनायामपि क्रतुशब्दप्रयोगदर्शनात् वैराग्यपूर्वककर्मोपासनानुष्ठानपरा निर्भया भवन्तीत्यर्थः । तनुं स्वरूपम् ॥ ३९ ॥

[ अर्जु० ] अज्ञाताचरणस्य फलमाह—तस्मादिति । तस्मादज्ञाताचरणात् ब्रह्म पश्यति किंचित् स्तोकं तदात्वाभ्यासप्रकर्षेण आवसति सर्वात्मनाऽधितिष्ठति ॥ ३६ ॥ ब्राह्मणस्य करणीयमाह—अश्रान्तः स्यादनादानात् संमतौ निरुपज्वरः । शिष्टो वा शिष्टवत्सस्यात् ब्राह्मणो ब्रह्मवित् कविः । अश्रान्तोऽविरतः आत्मन्येव सदा प्रवृत्त इति यावत् । तत्र हेतुरनादानात् विषयाणामग्रहणात्संमतोऽन्वेष्यः । तत्र हेतुः—निरुपज्वरो निरुपरोधः त्वमेव कुर्विति कस्याप्युपरोधे क्रियमाणे तच्छत्रवो द्वेषं कुर्युः । शिष्टो गुरुणोपदिष्टः दैवे तथा क्रतौ अशिष्टोऽनुपदिष्टः यथाध्ययनमुपेक्षते तथा न स्यात् । ब्राह्मणो ब्रह्मज्ञानार्हः । ब्रह्मवित् शास्त्रविहितार्थज्ञानवान्, कविरध्यात्मशास्त्रवित् ॥ ३८ ॥ अपरिग्रहफलमाह—अनाढ्या मानुषे वृत्ते आढ्या देवेषु जग्मुषः । ते दुर्धर्षा दुष्प्रकम्प्यास्तान् विद्यात् ब्रह्मणस्तनुम् । अनाढ्या निष्परिग्रहाः देवेषु द्योतनात्मकेषु पदेषु आढ्या आनन्देन चरन्ति जग्मुषो जग्मिवांसः विभक्तिव्यत्ययाद् ज्ञाता इत्यर्थः । नव्ये बलमाढ्या(?)

३६ तस्माद्धि किंचिद्राजन्य । ३७ ख. नास्ति । १८ ख. ॰दनादानात् । ॰ख. निरुपज्वरः ।

**सर्वान्स्विष्टकृतो देवान्विद्याद्य इह कश्चन।**
**न समानो ब्राह्मणस्य तस्मिन्प्रयतते स्वयम् ॥४०॥**

**यमप्रयतमानं तु मानयन्ति स मानितः।**
**न मान्यमानो मन्येत न मान्यमभिसंज्वरेत् ॥ ४१ ॥**

दुर्धर्षाः दुष्प्रकम्प्याश्च अनाधेयातिशयत्वेन उपकारासंभवात् तत्पूर्वोक्तविशेषणां ब्रह्मणस्तनुं विद्यात्। अथवा अनाढ्या दरिद्रा मानुषे वृत्ते विषयादौ, आढ्याः संपूर्णा दैवे वृत्ते विषयस्नेहनवर्जने काम्यकर्मपरित्यागे तथा क्रतौ अभययज्ञे, ते पुरुषा दुष्प्रधर्षा इन्द्रियैः कामादिभिः दुष्प्रकम्प्याः तां विषयादिभिरप्रधृष्यां तनुं स्वरूपं ब्रह्मणो विद्यादित्यर्थः। उक्तं च—अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम्। मृत्युमापद्यते मोहात्सत्येनामृतमश्नुते ॥३९॥

[ सर्व० ] हे क्षत्रिय ब्रह्म आत्मानमावसति आश्रयते ज्ञानार्थं प्रयत्नविषयी करोति तत्रापि कश्चिदेव तत्पश्यति। यथाह गीतासु—'यततामपि सिद्धानाम्' इति ॥ ३६ ॥ अश्रान्तः श्रमं न कुर्यात्, रोगादिना ध्यानविघ्नापत्तेः। अश्रान्तत्वे हेतुरनादानात्। आदानं संग्रहस्तदभावात्। अन्यसंग्रहादेव श्रमः स च तेन न कार्य इत्यर्थः। संमतोऽद्वेष्यः। उपह्वरं समीपम्। समीपस्थत्वमाह। तत्र हितः कस्यचित्संनिधौ न स्थितः। शिष्टो गुरुणानुशिष्टः अशिष्टवन्न स्यात् न हिंस्रः स्यादित्यर्थः। स ब्राह्मणः कविः विद्वान् ब्रह्मविद्भवतीति शेषः ॥ ३८ ॥ अन्यदपि मुक्तानां रूपमाह—अनाढ्या इति। मानुषे वृत्ते चरित्रे वित्ते वाऽसंपन्नाः दैवेषु वृत्तेषु देवमात्रगामिषु आढ्याः संपन्नाः वेदवित्तेन संपन्नाः ये जातास्ते मानुषवित्तेषु हिरण्यादिषु नाढ्या भवन्ति। दुर्धर्षा अनभिभाव्या दुष्प्रकम्प्याः तत्वज्ञानादसंभ्रमिणः तान्ब्रह्मणस्तनुं विद्यात्। ब्रह्मस्वरूपास्ते इत्यर्थः ३९ ॥

[ दुर्ध० ] 'अनाढ्या मानुषे वृत्ते आढ्या दैवे तथा क्रतौ। ते दुर्धर्षा दुःप्रकम्प्यास्तान्विद्याद्ब्रह्मणस्तनुम्' अनाढ्या दरिद्रा मानुषे लोके विषयसंभोगादौ वृत्ते आढ्याः संपूर्णा दैवे वृत्ते विषयस्नेहवर्जने काम्यकर्मपरित्यागे तथा क्रतौ यज्ञे ते पुरुषा दुष्प्रधर्षा इन्द्रियैरप्यधृष्याः कामक्रोधादिभिश्चाप्रकम्प्या न प्रचाल्याः तां विषयेन्द्रियक्रोधादिभिरप्रधृष्यतां तनुं स्वरूपं ब्रह्मणो विदुः। एतद्विपरीतां पुनर्मृत्योस्तनुं विद्यादित्यर्थः। उक्तं च—'अमृतं चैव मृत्युश्च द्वयं देहे प्रतिष्ठितम्। मृत्युरापद्यते लोभात्सत्येनामृतमश्नुते' इति ॥ ३९ ॥

[ शंक० ] किंच ब्रह्मविन्महिमैषः—सर्वानिति। सर्वान् अग्न्यादीन् स्विष्टकृतः सुष्ठु इष्टं कुर्वन्तीति। तथा च श्रुतिः—'स्विष्टं कुर्वन्स्विष्टकृत्' इति। देवान् प्रत्येकमुद्दिश्य त्यागार्थं विद्यात् य इह कश्चन सर्वदेवतायाज्यपि ब्राह्मणस्य न समानः ब्राह्मणेन ब्रह्मविदा न समान इत्यर्थः। नैतदाश्चर्यम्, यस्मिन् देवताविशेषे हविष उद्देशत्यागेन फलार्थं प्रयतते स्वयं यजमानः 'इदमग्नये इदमिन्द्राय' इति सोऽपि हविष्प्रतियोगी देवताविशेषो न समानो ब्रह्मविदा, किमु वक्तव्यं देवपशुर्यजमानो न समान इति। तथा च मोक्षधर्मे—'ब्राह्मणस्य न सादृश्ये वर्तते सोऽपि किं पुनः। इज्यते येन मन्त्रेण यजमानो द्विजोत्तमः' इति। तथा चाह भगवान्मनुः—'ब्रह्मविद्भ्यः परं भूतं न किंचिदिह विद्यते' इति ॥ ३७ ॥ पुनरपि तस्यैव समाचारमाह—यमिति। यं ब्रह्मविदम् अप्रयतमानं तूष्णींभूतं सर्वोपसंहारं कृत्वा स्वे महिम्नि व्यवस्थितं ब्रह्मचर्यादेव कृतसंन्यासं वेदान्तविज्ञानसुनिश्चितार्थं परमहंसपरिव्राजकाचार्यं गूढचारिणं केचिद्विद्वांसः स्थितप्रज्ञलक्षणज्ञाः ब्रह्मविदिति मत्वा मानयन्ति पूजयन्ति चेत्, सः तैः पूजितो विद्वान् मान्यमानः अहमिति न मन्येत। तथा, स्थितप्रज्ञलक्षणानामनभिज्ञाः जड इति मत्वा अवमानं कुर्वन्ति इति चेत्, तस्मिन् अवमानेऽवमाननिमित्ते नानुसंज्वरेत् नानुतपेत् ॥ ३८ ॥

[ नील० ] सर्वक्रतुभ्यो ब्रह्मज्ञानमेव श्रेष्ठमित्याह—सर्वानिति। स्विष्टं शोभनमिष्टं दिव्यरूपान्नपानादिकं ये यागेन प्रीताः सन्तो यजमानाय कुर्वन्ति ते स्विष्टकृतो देवाः तान्सर्वान् योऽश्वमेधान्तसकलक्रतुकर्ता वेद साक्षात्कुर्यात्सोऽपि ब्राह्मणस्य ब्रह्मविदः समानो न भवति। तत्र हेतुः—तस्मिन्निति। यतः तस्मिन् स्विष्टे निमित्ते स्वयं प्रयतते यत्नवान्भवति। अयं भावः—स्विष्टं क्रियासाध्यत्वादनित्यफलं ब्रह्म तु स्वतःसिद्धमेवाभिव्यज्यत इति तज्ज्ञानफलभूतो मोक्षोऽपि स्वतः सिद्धत्वान्नित्य इति न स्विष्टं ब्रह्मज्ञानसममिति ॥ ४० ॥ यमिति यमप्रयतमानं निरारम्भं यादृशं मानयन्ति देवादयः स एव ब्रह्मात्मवित् मानितो भवति। यं तु यज्ञादिकर्तायमिति मानयन्ति स देवानां पशुरमानित एव। तथा च श्रुतिः—अथ योऽन्यां देवतामुपास्तेऽन्योऽसावन्योऽहमस्मीति न स वेद यथा पशुरेव स देवानामिति। उपास्ते यज्ञादिना तर्पयति ततो हेतोः आत्मानमन्यैर्मान्यमानमपि मान्यं न मन्येत नापि अभिसंज्वरेत् अवमाने सतीति शेषः। नकारो भिन्नक्रमः ॥ ४१ ॥

[ भर्तृ० ] सर्वसृष्टिकृत इत्यादि। सर्वसृष्टिकृतः सर्वकर्तनदेवाय यत् यः इह इन्द्रियादिः कश्चित् विद्यात् नव्येति समत्वेन ख्यातः स समानो ज्ञानावदाभ्यां

४० ख. सर्वसृष्टिकृतो। ख. यदिह कश्चन। ४१ ख. नामानादभिसंज्वरेत्; डां. नावमाने विसंज्वरेत्।

ग्रयो. २१

**लोकः स्वभावृत्तिर्हि निमेषोन्मेषवत्सदा ।**
**विद्वांसो मानयन्तीह इति मन्येत मानितः ॥ ४२ ॥**

ब्रह्मणोऽयं स्वभावः ब्रह्मैव ब्राह्मणः तस्यासाधारणस्वरूपं प्रमाणं चाह—यस्मिन्निति । प्रयतते स्वयं स्वयमेव भवति केनाप्यपकृतमित्यर्थः । प्रमाणपक्षे प्रयतते प्रकाशयते स्वयमप्रकाशक इत्यर्थः(?) ॥ ४० ॥ मानितो हर्षं न कुर्यादित्याह–यमिति । अप्रयतमानं मानायेति शेषः । तथापि मानयन्ति जनाः । मानितो मान्यमान इति कालद्वयाभिधानेन सदाभावात् नातिसंज्वरेत् संतापं न कुर्यात् ॥४१॥

[ सर्व० ] सर्वसृष्टिकृतो देवान् ब्रह्मादीन् कथंचन शुभकर्मा त्रिद्यात् प्रत्यक्षेण जानीयात् । सोऽपि न ब्राह्मणस्य ब्रह्माभ्यासवतः समानः यतोऽसौ तस्मिन् ब्रह्मणि स्वयं प्रयतते । न तु तदर्थं वेदादीन् याचते । यद्वा स्वयं तस्मिन्नकुरसमानः(?)परामर्षात्प्रयतते । वेददर्शिनस्तु तादृशा नैष्ठिकप्रयत्नवन्त इत्यर्थः ॥ ४० ॥ यम ब्रह्मविदमप्रयतमानं संमानयन्ति स ब्रह्माभ्यासवान् मानितः पूर्वं, तदैव मान्यमानो वा न मन्येत नाभिमानं कुर्यात् । नाभिसंज्वरेन्न संतापं कुर्यात् ॥ ४१ ॥

[ दुर्घ० ] 'न मान्यमानो मन्येत न मान्यमभिसंज्वरेत् । विद्वांसो मानयन्तीति मानं मन्येत मानितः ।' अस्यार्थः । जनसंसदि मान्यमानो जनैर्दानादिभिः पूज्यमानो योगी तां पूजां न मन्येत योगविघ्नरूपत्वात् । स मान्यं गुरुं नाभिसंज्वरेत् न दुःखितं कुर्यात् । विद्वांसोऽधमोत्तमवेदिनो ये त उत्तमं पुरुषं मानयन्तीति धियाऽऽत्मपूजां मन्येत न पुनर्मदीयोपकारोऽयमिति मन्येत मानितो योगीत्यर्थः ॥ ४१ ॥

[ लक्षा० ] सर्वान् स्विष्टकृतो देवानित्यत्र इह लोके यः कश्चन पुरुषो वर्तते सः सर्वान् देवान् स्विष्टकृतः सुष्ठु स्वस्य अभीष्टं कुर्वन्तीति स्विष्टकृतः तान् विद्यात् न समान इत्यत्र ब्राह्मणः समानः मानेन अहंकरोमीत्यभिमानेन सहितो न स्यात् । यस्मिन्नभिमाने सति स्वयमेव प्रयतते स्वोदरपूरणार्थं गृहे गृहे गच्छतीत्यर्थः ॥ ४० ॥ न मान्यमानो मन्येतेत्यत्र यमप्रयतमानं मानयन्ति सः मान्यमानः नाभिमन्येत अहंकारं न कुर्यात् ॥ ४१ ॥

[ शंक० ] कथं तर्हि मानितेनावमानितेन वा मन्तव्यमित्याह श्लोकद्वयेन—लोक इति । यदिदं विद्वांसो

**अधर्मनिपुणा मूढा लोके मायाविशारदाः ।**
**न मान्यं मानयिष्यन्ति मान्यानामवमानिनः॥ ४३ ॥**

ब्रह्मविदं मानयन्ति इति तत्तेषां निमेषोन्मेषवत् स्वभाववृत्तिः स्वाभाविकी प्रवृत्तिः इति मन्येत । तथा अधर्मेति । जनैरवज्ञातो विद्वानेवं मन्येत—अधर्मविदुषो मूढाः विवेकहीनाः लोकशास्त्रविवर्जिताः न मान्यं मानार्हं मानयिष्यन्ति अमान्यानपि मानयिष्यन्ति इत्येतदविदुषां स्वभावः इति मन्येत अमानितः अपूजितो विद्वान् ॥ ३९ ॥ ४० ॥

[ नील० ] लोकः स्वभावादेव मां मानयति न तु मयि मानयोग्यताऽस्तीति मत्वा दर्पं न प्राप्नुयादित्याह—लोक इति ॥ ४२ ॥ ये न मानयन्ति तेऽपि पशुवन्निर्विवेकत्वादुपेक्ष्या एव न तु दण्डनीया इत्याह—अधर्मेति ॥ ४३ ॥

[ अर्जु० ] मानयितृगुणात् न स्वगुणान्मानं जानीयादित्याह—विद्वांस इत्यादि । मानयन्तीति विदुषां स्वभाव इत्यर्थः । अथवा जनसंसदि मान्यमानो जनैर्दानादिभिः पूज्यमानो योगी (न) मन्येत तां पूजां योगविघ्नभयात् न मान्यं गुरुमभिसंज्वरेत् दुःखितं कुर्यात् नावमन्येत । विद्वांसः अधरोत्तरवेदिनो ये ते उत्तमं पुरुषं मानयन्ति इति धिया पूजां मन्येत न पुनर्मदीयोपकारार्थमिति मन्येत मानितो योगीत्यर्थः ॥ ४२ ॥ अधर्मेत्यादि । अधर्मविदुषो धर्ममजानन्तः लोकशास्त्रं चाणक्यादिनीतिशास्त्रं, न मान्यं मानयिष्यन्तीति स्वभावोऽयमेषाम् । उत विकल्पे ॥ ४३ ॥

[ सर्व० ] अत्र यादृग्विवेकबलेनाभिमानो न भवति तदाह विद्वांसः स्वभावात्सर्वं संमानयन्ति । ततो न स्वगुणोत्कर्षोऽस्तीति निश्चितुं शक्यमिति मानितोऽनुमन्येत चिन्तयेत् ॥ ४२ ॥ अवमाने दुःखानुत्पादयितृभावनां दर्शयति—अधर्मविदुष इति । धर्मं न विद्वांसः लोकशास्त्रं लोकायतशास्त्रं तत्र विशारदाः न मानयिष्यन्ति ॥ ४३ ॥

[ लक्षा० ] लोकस्वभाव एषो हीत्यत्र इष इच्छायामिति धातोः भावे पचाद्यचि कृते गुणे च कृते एषः इच्छा वित्तादेरीषणमित्यर्थः । इह लोके मानितः पुरुषः परगुणपरमाणून् पर्वतीकृत्य नित्यं निजहृदि विकसन्तः सन्ति सन्तः कियन्तः इत्यादिनीतिविद्वांस एव मां मानय-

४३ शां. ज. अधर्मविदुषो मूढा लोकशास्त्रविवर्जिताः । शां. ज एवंमन्येदमानितः; ख. मन्येतोतापमानितः ।

**न वै मानं च मौनं च सहितौ वसतः सदा ।**
**अयं हि लोको मानस्य असौ मौनस्य तद्विदुः ॥ ४४ ॥**

**श्रीः सुखस्येह संवासः सा चापि परिपन्थिनी ।**
**ब्राह्मी सुदुर्लभा श्रीर्हि प्रज्ञाहीनेन क्षत्रिय ॥ ४५ ॥**

न्ति ननु मयि गुणोऽस्तीति मन्येत ॥ ४२ ॥ अधर्मविदुष इत्यत्र धर्मविदुषो न भवन्तीत्यधर्मविदुषः ॥४३॥

[ शंक० ] इदानीं मानमौनयोर्भिन्नविषयत्वमाह—न इति । न वै मानश्च मौनं च सहितौ एकत्र वसतः; सदा अयं हि प्रत्यक्षादिगोचरो लोको लोक्यत इति प्रपञ्चो मानस्य विषय इत्यर्थः । असौ परलोको मौनस्य कोऽसौ तत् विदुः तदिति ब्रह्मणो नाम । तथाह भगवान्—'ॐ तत्सदिति निर्देशो ब्रह्मणस्त्रिविधः स्मृतः' इति । तथा चानुगीतासु—'ॐ तत्सद्विष्णवे चेति सायुज्यादिप्रदानि वै' इति । तच्छब्दवाच्यं ब्रह्म मौनस्य विषय इत्यर्थः । एतदुक्तं भवति—मानात्संसारप्राप्तिः, मौनेन ब्रह्मप्राप्तिः इति । उक्तं च हैरण्यगर्भे—'अन्नाङ्गनादिभोगेषु भावो मान इति स्मृतः । ब्रह्मानन्दसुखप्राप्तिहेतुर्मौनमिति स्मृतः' इति ॥ ४१ ॥ इदानीं मानार्थसंवासे अपवर्गाभावं दर्शयति—श्रीरिति । हे क्षत्रिय, मानार्थसंवासात् मानविषयसंवासात् मानगोचरप्रपञ्चे परिवर्तमानस्य स्वर्गपश्वन्नाद्यादिसाधनभूतं कर्मानुतिष्ठतो विषयविषान्धस्य श्रीर्हि भवति । सा चापि श्रीः परिपन्थिनी श्रेयोमार्गविरोधिनी । तथा च मोक्षधर्मे—'निबन्धिनी रज्जुरेषा या ग्रामे वसतो रतिः । छित्त्वैनां सुकृतो यान्ति नैनां छिन्दन्ति दुष्कृतः' इति । य एवं श्रियाभिभूतो मूढः सन्विषयेषु प्रवर्तते, तेन प्रज्ञाहीनेन विद्याहीनेन ब्राह्मी ब्रह्मानन्दलक्षणा श्रीः सुदुर्लभा । तथा च हैरण्यगर्भे—'या नित्या चिद्घनानन्दा गुणरूपविवर्जिता । आनन्दाख्या परा शुद्धा ब्राह्मी श्रीरिति कथ्यते' इति । सा च सुदुर्लभा श्रवणायापि न शक्या । तथा च श्रुतिः—'श्रवणायापि बहुभिर्यो न लभ्यः' इति ॥ ४२ ॥

[ नील० ] न वा इति । मानं क्लीबत्वमार्षं, मुनेः कर्म मौनं योगिचर्या मानार्थिनां परलोको दुःसंपादः परलोकार्थिनां मौनिनां च इहलोको दुःसंपादः इति भावः ॥ ४४ ॥ श्रीरिति धनाभिजनैश्वर्यरूपा लक्ष्मीः सुखस्य मानरूपस्य संवासोऽधिष्ठानं तथाऽपि सा परिपन्थिनी चोरतुल्या परलोकस्य नाशिनी योगिनां तु सुतरामनिष्टकरीत्यर्थः । ब्राह्मी ब्राह्मणस्य योग्या श्रीः ऋग्यजुःसामात्मिका । ऋचः सामानि यजूꣳषि सा हि श्रीरमृता सतामिति श्रुतेः । प्रज्ञाहीनेन ऋगादीनां रहस्यं न प्राप्तुं शक्यमित्यर्थः ॥ ४५ ॥

[ अर्जु० ] अहंकारस्य मुनिभावस्य च परस्परविरोधो व्यक्त इत्याह—नवै मानं च मौनं च सहितौ चरतः सदा । अयं हि लोको मानस्य असौ मौनस्य तद् विदुः । मानं पूजा, मौनमात्मपरमजल्पः, नैतौ पदार्थौ सहितौ चरतः परस्परविरुद्धत्वात् । विरोधमेव दर्शयति—अयं हीति । अथवा मानोऽहंकारः मौनं मुनेर्भावः सहितावेककालं सममिति पाठे एककार्यम् । अयं लोको दृष्टं सुखम् । असौ परमानन्दः ॥४४॥ तदेव विवृणोति—श्रीः सुखस्येह संवाससा चापि परिपन्थिनी । ब्राह्मी सुदुर्धरा हि श्रीः प्रज्ञाहीनेन क्षत्रिय । सुखस्य ऐहिकस्य सुखस्य श्रीर्लक्ष्मीः संवासो निवासस्थानं, सा श्रीः परिपन्थिनी मुनिभावस्येति शेषः ब्राह्मी ब्रह्मसुखलक्षणा सुदुर्धरा ईषद्विकारेऽपि धर्तुमशक्या प्रज्ञाहीनेन बालेन ॥ ४५ ॥

[ सर्व० ] अभिमानतत्त्वज्ञानयोर्विरोधमाह—नेति । मानोऽभिमानः । मौनं मुनेर्भावो मननं तत्त्वज्ञानम् । न सहितौ चरतः विरुद्धफलहेतू भवतः । सममेकत्र देशे । तदाह—अयं हीति । अयं लोकोऽभिमानस्य तेनात्रैव सुखोत्पत्तेः । असौ मौनस्य परलोक एव सुखोत्पत्तेः ॥ ४४ ॥ मानसहकारिश्रीमौनयोरपि विरोधमाह—श्रीर्लक्ष्मीरिहसुखस्य ऐहलौकिकसुखस्य संवासः । सा चापि परिपन्थिनी विरुद्धा तत्त्वज्ञानस्य । सा तु ब्राह्मी श्रीर्ब्रह्मज्ञानश्रीः प्रज्ञाहीनेन वैराग्याद्युपस्कृतज्ञानहीनेन सुदुर्धरा दुःखेन धारणीया बहुविरोधित्वात् हे क्षत्रिय ॥ ४५ ॥

[ दुर्घ० ] न वै मानं च मौनं च सहितौ वसतः सदा । अयं हि लोको मानस्य असौ मौनस्य तद्विदुः । मानो नाम जनसंसदि पूजा । मौनं चाऽऽत्मपरत्वम् अजल्पम् । नैतौ पदार्थौ सहितौ चरतः सदा परस्परविरुद्धत्वात् । विरोधमेव दर्शयति । अयं सार्वजनीनो लोको मौनस्य संसदि पूजायाः कीर्त्यादिहेतुत्वेनैहिकफलत्वात् । मानस्य चासावन्य एवाऽध्यात्मसंबन्धेनाऽलौकिकफलत्वात् । तद्विदुरिति । एतच्च मुनय एव जानन्तीति ॥ ४४ ॥

इति श्रीमहा० दुर्घटार्थ० उद्योग० द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[ लक्षा० ] न वै मानं च मौनं चेत्यत्र मानमभिमानो मौनं तूष्णींभावश्च इत्येतौ धर्मौ सहितौ सन्तौ न वसतो वै अतः मानवता अवमाने कृते सति मौनं कर्तुं न शक्यमिति भावः । तर्हि मानः कदा मौनं कदेत्यत उक्तमयं हि लोक इति । मानस्य स्थानम् । असौ मोक्षाख्यो लोकः,

४४ शां. मानश्च । ख. चरतः समम् । शा. अयं मानस्य विषयोऽप्यसौ । ख. विद्धि तत् । ४५ शां. श्रीर्हि मानार्थसंवासात् ।

द्वाराणि तस्येह वदन्ति सन्तो
बहुप्रकाराणि दुराधराणि ।
सत्यार्जवे ह्रीर्दमशौचविद्या
यथा न मोहप्रतिबोधनानि ॥ ४६ ॥

इति श्रीमहाभारते उद्योगपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

## त्रिचत्वारिंशोऽध्यायः ४३

ब्रह्मज्ञानोपयोगिमौनतपःप्रभृतीनां लक्षणगुणदोषादिप्रदर्शनमुखेन स्वरूपोपपादनम् ॥ १ ॥

धृतराष्ट्र उवाच—
कस्यैष मौनः कतरन्नु मौनं
प्रब्रूहि विद्वन्निह मौनभावम् ।
मौनेन विद्वानुत याति मौनं
कथं मुने मौनमिहाचरन्ति ॥ १ ॥

सनत्सुजात उवाच—
यतो न वेदा मनसा सहैन-
मनुप्रविशन्ति ततोऽथ मौनम् ।
यत्रोत्थितो वेदशब्दस्तथाऽयं
स तन्मयत्वेन विभाति राजन् ॥ २ ॥

मौनस्य स्थानं मोक्षार्थिनो मौनमेव प्रियं संसारिणस्तु न मुञ्चन्तीति भावः ॥४४॥ श्रीर्हि मानार्थसंजातेत्यत्र श्रीः संपत् मानार्थसंजाता अहंकारजननाय निर्मिता ॥ ४५ ॥

इति श्रीभा० उद्योग० वादि० लङ्कालंकारे द्विचत्वारिंशो० ॥ ४२ ॥

[ शांक० ] इदानीं ब्रह्मलक्ष्मीप्रवेशद्वाराणि दर्शयति—द्वाराणीति । द्वाराणि ब्रह्मलक्ष्मीप्रवेशद्वाराणि सम्यक्प्रवदन्ति सन्तः बहुप्रकाराणि दुराचराणि दुःखाचरणानि । कानि तानि ? सत्यार्जवे सत्यं यथार्थसंभाषणं भूतहितं च । आर्जवम् अकौटिल्यम् । ह्रीः अकार्यकरणे लज्जा । दमशौचविद्याः दमः अन्तःकरणोपरतिः । बहिःकरणोपरतिरिति केचित् । शौचं कल्मषप्रक्षालनम् । विद्या ब्रह्मविद्या । षट् एतानि मानमोहप्रतिबन्धकानि ॥ ४३ ॥

इति श्रीशंकरभगवत्पादकृते सनत्सुजातीयभाष्ये प्रथमोऽध्यायः ॥ १ ॥

[ नील० ] तस्य ब्राह्मसुखस्य द्वाराणि प्राप्तिसाधनानि दुराधराणि दुःसंरक्ष्याणि । सत्यं यथार्थभाषणं आर्जवमवक्रता । ह्रीः लोकापवादभयं, दम इन्द्रियनिग्रहः, शौचं मृज्जलाभ्यां बाह्यम्, आन्तरं तु मनःशुद्धिः, विद्या वेदशास्त्राधिगमः । यथेति एतेषु सत्सु अनादिवासनया आगतोऽपि मोहो यथावन्न प्रभवति । षण्मानमोहप्रतिबन्धकानीति पाठे स्पष्टोऽर्थः ॥ ४६ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[ अर्जु० ] तस्याः श्रियः कारणान्याह—द्वाराणीत्यादि । द्वाराणि कारणानि । मानोऽहंकारः । मोहो मिथ्याज्ञानम् ॥ ४६ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[ सर्व० ] द्वाराणि कारणानि तस्या ब्राह्म्याः श्रियो दुराचराणि दुःखेनाचरणीयानि षट् सत्यादीनि च मानस्याभिमानस्य प्रतिबोधनानि प्रतिकूलबोधकानि ॥ ४६ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां द्विचत्वारिंशोऽध्यायः ॥ ४२ ॥

[ शांक० ] 'अयं मानस्य' इत्यादिना मौनमाहात्म्यं प्रदर्शितं श्रुत्वा प्राह धृतराष्ट्रः—कस्येति । कस्य कीदृशस्य एषः पूर्वोक्तो वागाद्युपरतिलक्षणो मौनः भवति । कतरन्नु एतयोरसंभाषणात्मस्वरूपयोः मौनं प्रब्रूहि हे विद्वन्, इह मौनभावं मौनस्य स्वभावं मौनेन तूष्णींभावेन विद्वानुपयाति मौनं ब्रह्म, आहोस्विदन्येन ? कथं मुने मौनमिहाचरन्ति ॥ १ ॥ एवं पृष्टः प्राह भगवान्—यत इति । यतः यस्मात् वेदा मनसा सह एनं परमात्मानं नानुप्रविशन्ति । तथा च श्रुतिः—'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' इति । ततः तस्मादेव कारणात् स एव वाचामगोचरः परमात्मा मौनम् । यद्येवं किंलक्षणस्तर्हि परमात्मा ? तत्राह—यत्रोत्थितो वेदशब्दः यस्मिन् अर्थे निमित्तभूते समुत्थितो वेदशब्दः शास्त्रादिकारणं ब्रह्मेत्यर्थः । अथवा, यस्मिन् संवेदनाख्ये उत्थितो वाचकत्वेन प्रयुक्तो वेदशब्द इत्यर्थः । तथा वेदशब्दप्रतिपाद्यः संविद्रूपः अयं परमात्मा । यदि वाचामगोचरः परमात्मा, कथमेतदवगम्यते संविद्रूपः परमात्मेति ? तत्राह—स परमात्मा तन्मयत्वेन ज्योतिर्मयत्वेनास्माकं विभाति राजन् । एवमेवास्माकमनुभवः नात्राविश्वासः कर्तव्य इत्यर्थः । अथवा, श्रुतिस्मृतीतिहासपुराणादिषु ज्योतिर्मयत्वेन प्रतीयते । तथा च श्रुतिः—'तं देवा ज्योतिषां ज्योतिः' 'अन्तःशरीरे ज्योतिर्मयो हि शुभ्रो यं पश्यन्ति

४६ ख. षड्मानमोहप्रतिबोधनानि; शां. दुराधराणि । इति द्विच० ॥ ४२ ॥

१ ख. नास्ति । २ ख. नास्ति । शां. मनुप्रविशन्ति ।

**धृतराष्ट्र उवाच—**

ऋचो यजूंषि यो वेद सामवेदं च वेद यः ।
पापानि कुर्वन्पापेन लिप्यते किं न लिप्यते ॥ ३ ॥

यतयः क्षीणदोषाः ' इति । तथा च भगवान्—' ज्योतिषामपि तज्ज्योतिस्तमसः परमुच्यते ' इति ॥ २ ॥

[ नील० ] पूर्वाध्यायान्ते मौनं ब्राह्मी श्रीः सत्यादिषट्कं च मोहात्मकस्य मृत्योः प्रतिरोधकानीत्युक्तं तान्येव प्रश्नपूर्वकं विवरीतुमध्यायान्तरमारभते—कस्यैष मौन इत्यादि । न्यासपूर्वकं स्वीक्रियमाणो मुनेर्धर्मो मौनसंज्ञः कस्य प्रयोजनस्यार्थे इत्येकः प्रश्नः । लोकप्रसिद्धेर्वाङ्नियमो वा, अमौनं च मौनं च निर्विद्याथ ब्राह्मण इति श्रौतप्रसिद्धेरमौनशब्दितात् पाण्डित्यबाल्यापरपर्यायात् श्रवणमननाख्यात् द्वयादन्यत्तत्समनियतं निदिध्यासनं वा मौनशब्दितं तयोर्मध्येऽत्र कतरन्मौनशब्दाभिधेयमिति द्वितीयः । तस्य च भावं स्वलक्षणं ब्रूहीति तृतीयः । तेन मौनेन विद्वान् मौनं मनःप्राणेन्द्रियक्रियाणां निरवशेषेणोपरमं निर्विकल्पं पदमिति यावत् । तदुत अपि यातीति चतुर्थः । कथं वा केन प्रकारेण मौनमाचरन्तीति पञ्चमः प्रश्नः ॥ १ ॥ पञ्चानामपि प्रश्नानां तन्त्रेणोत्तरमाह—यत इति । यस्माद्धेतोः एनं प्रत्यगात्मानं मनसा सह वेदा न अनुप्रविशन्ति । यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति वाङ्मनसातीतत्वश्रुतेः । ततो हेतोः मौनमिति एतन्नामेत्यर्थः । एतेन वाङ्मनसातीतपदप्राप्तिर्मौनस्य प्रयोजनं तच्च वागादिबाह्येन्द्रियनिग्रहरूपं मनोनिग्रहरूपं तेन च क्रमाद्बाह्याभ्यन्तरप्रपञ्चयोरभानं तेन चाभानेन प्राप्यं वाङ्मनसातीतं पदमिति प्रश्नचतुष्टयस्योत्तरमुक्तं भवति । पञ्चमप्रश्नस्योत्तरमाह—यत्रोत्थित इति । यत्र अधिष्ठाने भूमब्रह्मात्मनि वेदशब्दस्तथा अयमिति लौकिकशब्दश्च उत्थितः क्षेत्रे अङ्कुर इव समुद्रे तरङ्ग इव चाविर्भूतः स भूतात्मा तन्मयत्वेन शब्दमयत्वेन विभाति प्रकाशते हे राजन् । अयं भावः—वेदशब्देन वेदस्य सारतरः प्रणवः, भूरित्येव ऋग्वेदादजायत भुव इति यजुर्वेदात्स्वरिति सामवेदात्तानि शुक्राण्यभ्यतपत्तेभ्योऽभितप्तेभ्यस्त्रयो वर्णा अजायन्ताकार उकारो मकार इति तानेकधा समभरत्तदेतदोमिति बह्वृचब्राह्मणात् तस्य च प्रणवस्य. ओमित्येतदक्षरमिदं सर्वमिति सार्वात्म्यश्रुतेस्तन्मात्राणां च अकारोकारमकाराणां क्रमात्स्थूलसूक्ष्मकारणप्रपञ्चवाचकानां वाच्यवाचकयोरभेदात्पूर्वपूर्वस्य उत्तरोत्तरत्र प्रविलापने गुरूक्त्युक्तया क्रियमाणे स्थूलस्य जगतः सूक्ष्मे लव-

३ शां. यजू २ ष्यधीते यः सामवेदं च यो द्विजः । शां. लिप्यते न स ।

**सनत्सुजात उवाच—**

नैनं सामान्यृचो वाऽपि न यजूंष्यविचक्षणम्
त्रायन्ते कर्मणः पापान्न ते मिथ्या ब्रवीम्यहम् ॥ ४ ॥

णोदकन्यायेन प्रविलयो भवति । तथा सूक्ष्मस्य कारणे कारणस्य तुरीयेऽर्धमात्रावाच्येऽमात्राख्ये । शिवमद्वैतं चतुर्थं मन्यन्त इति श्रुतेर्गलिताखिलद्वैतभाने वाङ्मनसातीते प्रविलयो भवति अतः प्रणवाख्यशब्दमयत्वेन तद्द्वारा वाङ्मनसातीतं वस्तु भातीति युक्तमिति ॥ २ ॥

[लक्षा०] मानेन विद्वानित्यत्र मानेन वेदाख्यप्रमाणेन ॥ १ ॥ यतो न वेदा मनसैव हीनमित्यत्र यतः कारणात् वेदा एव मनसा ज्ञानेन हीनमेनं मनुष्यं नानुप्रविशन्ति अनुकूलतया न विशन्ति ततः कारणात् मौनं (चा?ना)स्ति, वेदं पठित्वापि ज्ञानाभावात् तत्रतत्र कलहं करोतीति भावः । यत्रोत्थितो वेदशब्दश्चेत्यत्र यत्र यस्मिन् पुरुषे वेदशब्दः वेदेन शब्द्यत इति वेदशब्दो नारायणः उत्कर्षेण मनसि स्थितः ध्यानपदवीं गत इत्यर्थः, सः पुरुषः तन्मयत्वेन भगवत्प्रधानत्वेन कारणेन विभाति मौनादिगुणविशिष्टो भाति इति योजना ॥ २ ॥

[ शंक० ] इदानीं वेदस्वभावपरिज्ञानाय प्राह धृतराष्ट्रः—ऋच इति । यः पापानि कुर्वन् ऋगादिवेदम् अधीते स तेन वेदाध्ययनेन पूयते न वा ? एतद्वक्तुमर्हसीत्यभिप्रायः ॥ ३ ॥ एवं पृष्टः प्राह भगवान्—नेति । यः पापानि कुर्वन् ऋगादिवेदमधीते, नैनं प्रतिषिद्धचारिणम् ऋगादयो वेदाः पापात् कर्मणः त्रायन्ते न रक्षन्ति । न ते मिथ्या ब्रवीम्यहम् एवमेवैतत्, नात्राविश्वासः कर्तव्य इत्यर्थः ॥ ४ ॥

[ नील० ] ननु यदि वेदशब्दमयत्वेन तद्द्वारा वाङ्मनसातीतं पदं भाति तज्ज्ञानाच्च यथैषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्त इति श्रुतेः सर्वपापनाशश्च भवति तर्हि मौनहीनस्यापि ऋगाद्यभ्यासेन तदुभयं भविष्यतीत्याशङ्कते—ऋच इति ॥ ३ ॥ अविचक्षणं वाङ्मनसनिग्रहासमर्थम् ॥ ४ ॥

[ अर्जु० ] ऋच इत्यादि । वेदान् यो वेद स पापानि कुर्वन् लिप्यते न वेति प्रश्नः ॥ ३ ॥ अविचक्षणं धनुः(?)-शास्त्रेऽपण्डितम् ॥ ४ ॥

[ सर्व० ] पापानि दुःखफलानि प्रवर्तककर्माणि पापेन तेन कर्मणा लिप्यते दुःखसंततिमनुभाव्यते नवेति प्रश्नः ॥ ३ ॥ उत्तरं नैनमिति । अत एनमात्मानमविद्वांसं पापात्त्रायन्ते मोचयन्ति ॥ ४ ॥

४ शां. वापि यजू २ षि च विचक्षण।

न छन्दांसि वृजिनात्तारयन्ति
मायाविनं मायया वर्तमानम् ।
नीडं शकुन्ता इव जातपक्षा-
श्छन्दांस्येनं प्रजहत्यन्तकाले ॥ ५ ॥

धृतराष्ट्र उवाच—
न चेद्वेदा विना धर्मं त्रातुं शक्ता विचक्षण ।
अथ कस्मात्प्रलापोऽयं ब्राह्मणानां सनातनः ॥ ६ ॥

सनत्सुजात उवाच—
तस्यैव नामादिविशेषरूपै-
रिदं जगद्भाति महानुभाव ।
निर्दिश्य सम्यक्प्रवदन्ति वेदा-
स्तद्विश्ववैरूप्यमुदाहरन्ति ॥ ७ ॥

[ शंक० ] किं कुर्वन्तीति चेत्, तत्राह—न इति । न छन्दांस्येनं वृजिनात् अधर्मात् नास्तिकं पापकारिणम् अधीतवेदम् अधीतवेदार्थं मायाविनं धर्मध्वजिनं मायया वर्तमानं मिथ्याचारिणं तारयन्ति न रक्षन्ति । किं करिष्यन्तीति चेत्—यथा शकुन्ताः पक्षिणः जातपक्षाः नीडं स्वाश्रयं परित्यजन्ति, एवं छन्दांसि अन्तकाले मरणकाले एनं स्वाश्रयभूतं प्रजहति परित्यजन्ति, न पुरुषार्थाय भवन्तीत्यर्थः ॥५॥ एवमुक्ते प्राह धृतराष्ट्रः—न इति । 'कर्मोदये' इत्यादिना नित्यानां काम्यानां च पितृलोकादिप्राप्तिहेतुत्वेन संसारानर्थहेतुत्वस्य दर्शितत्वात् प्रतिषिद्धस्य कर्मणः नरकहेतुत्वेनानर्थहेतुत्वस्य दर्शितत्वात् न वेदा वेदविदं त्रातुं शक्ताश्चेत्, अथ कस्मात् हेतोः अयं प्रलापः सनातनः चिरंतन इत्यर्थः । संसारानर्थहेतुत्वेन वेदाध्ययनतदर्थविचारतदनुष्ठानानि न कर्तव्यानीत्यर्थः ॥ ६ ॥ भवेदयं प्रलापः यद्येष एव वेदार्थः स्यात्, अन्य एव स्वर्गादेः परमपुरुषार्थो मोक्षाख्यो वेदार्थः; इतरस्य च कर्मराशेरुपासनायाश्च तत्प्राप्तिसाधनज्ञानसाधनान्तःकरणशुद्धिसाधनत्वेन पारम्पर्येण पुरुषार्थत्वादेव वेदप्रतिपाद्यत्वम् । तथाहि—तमेव परमात्मानं परमपुरुषार्थं दर्शयति वेदः—'अनन्दा नाम ते लोका अन्धेन तमसा वृताः । तांस्ते प्रेत्याभिगच्छन्ति अविद्वांसोऽबुधा जनाः' इति । स्वर्गादिलोकानामपुरुषार्थत्वमनानन्दात्मकत्वमविद्यावद्विषयत्वेन दर्शयित्वा—'आत्मानं चेद्विजानीयादयमस्मीति पूरुषः । किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेत्' इत्यात्मविदः कृतकृत्यतां दर्शयित्वा—'इहैव सन्तोऽथ विद्मस्तद्वयं न चेदिहावेदीन्महती विनष्टिः । य एतद्विदुरमृतास्ते भवन्त्यथेतरे दुःखमेवापियन्ति' इत्यात्मविदोऽमृतत्वप्राप्तिमनात्मविदः आत्मविनाशमनर्थप्राप्तिं च दर्शयित्वा—'यदैतमनुपश्यत्यात्मानं देवमञ्जसा । ईशानं भूतभव्यस्य न ततो विजुगुप्सते' इत्यादिभिर्वाक्यैस्तत्स्वरूपतदर्थदर्शनतत्फलानि भूयो भूयो दर्शयित्वा कथमेनं मकरादिभिरिव रागादिभिरितस्ततः समाकृष्यमाणं विषयाभिभूतं पापकारिणं मोक्षयित्वा परमपदे परमात्मनि पूर्णानन्दे स्वाराज्ये मोक्षाख्ये स्थापयिष्यामीति मत्वा तत्प्राप्तिसाधनज्ञानसाधनविविदिषासाधनत्वेन यज्ञादीन्विनियुङ्क्ते—'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन' इति । तस्मात्तदर्थत्वेनैव यज्ञादीनां पुरुषार्थत्वम् । इतरत्र तु पुनः स्वर्गादौ श्येनादीनामिवापुरुषार्थत्वम्, संसारानर्थहेतुत्वात् । तथा च श्रुतिः—'प्लवा ह्येते अदृढा यज्ञरूपा अष्टादशोक्तमवरं येषु कर्म । एतच्छ्रेयो येऽभिनन्दन्ति मूढा जरामृत्यू ते पुनरेवापियन्ति' इति । यस्मादेवं मोक्षतत्साधनप्रतिपादकत्वेन संसारानर्थनिवृत्तिहेतुत्वं वेदानाम्, तस्माद्वेदाः वेदविदं त्रातुं शक्ता एवेत्येतत्सर्वमभिप्रेत्याह श्लोकत्रयेण—तत्र प्रथमेन नित्यापरोक्षं परमपुरुषार्थं परमात्मानं दर्शयति—तस्यैवेति । तस्यैव परमात्मनो मायापरिकल्पितैः नामादिविशेषरूपैः इदं जगद्भाति हे महानुभाव । कथमेतदवगम्यते तस्यैव नामादिविशेषरूपैरिदं जगद्भातीति ? 'इन्द्रो मायाभिः पुरुरूप ईयते' इति मायानिर्मितं बहुरूपं निर्दिश्य तस्यैव सम्यग्रूपम् 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा ब्रह्म सर्वानुभूरित्यनुशासनम्' इति प्रवदन्ति वेदाः । तथा च—'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' इत्यादिना तस्यैव मूर्तामूर्तात्मकमात्मवज्जगत्स्वरूपं निर्दिश्य तस्य सम्यग्रूपम् 'नेति नेति' इत्यादिना प्रवदन्ति वेदाः । तथा—'आत्मन आकाशः संभूतः' इति वियदादिधरित्र्यन्तं तस्यैव कार्यं निर्दिश्य कोशोपन्यासमुखेन तस्यैव सम्यग्रूपम्, 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' इत्यादिना प्रवदन्ति वेदाः । 'अधीहि भगव इति होपससाद' इत्यादिना नामादिप्राणान्तं तस्यैव मायानिमित्तं जगन्निर्दिश्य 'यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा' इत्यादिना तस्यैव सम्यग्रूपं भूमानं तमसः पारं स्वे महिम्नि व्यवस्थितं प्रवदन्ति वेदाः । न केवलं वेदाः प्रवदन्ति, अपि तु मुनयोऽपि तत् ब्रह्म विश्ववैरूप्यं विश्वरूपविपरीतरूपम् उदाहरन्ति । तथा चाह भगवान्पराशरः—'प्रत्यस्तमितभेदं यत्सत्तामात्रमगोचरम् । मनसामात्मसंवेद्यं तज्ज्ञानं

५ अ. तृतीयचतुर्थचरणयोर्व्यत्यासः । ६ झां. चे द्वेदा वेदविदं । अ. शक्तास्त्रातुं विचक्षणम् । ७ झ. नास्ति ।

ब्रह्मसंज्ञितम् । तच्च विष्णोः परं रूपमरूपाख्यमनुत्तमम् । तद्विश्वरूपवैरूप्यलक्षणं परमात्मनः ' इति ॥ ७ ॥

[ नील० ] छन्दांसि वेदाः वृजिनात्पापात् । ननु अथागमो यां यां देवतां निराह तस्यास्तस्यास्ताद्भाव्यमनुभवतीति वचनात् यं यं वाऽपि स्मरन्भावमिति स्मृतेश्च नित्याभ्यासादन्तकाले यद्दैवत्यं मन्त्रं स्मरति तद्देवताताद्भाव्यमस्य भविष्यतीति किं वाङ्मनसनिग्रहरूपेण मौनेनेत्याशङ्क्याह—नीडमिति । मौनाभावेऽन्तकाले छन्दांस्येव न स्फुरन्तीत्यर्थः ॥ ५ ॥ धर्मं स्वाभाविकं शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्रह्मकर्म स्वभावजमिति गीतासूक्तं विना । प्रलापः, ऋग्यजुःसामभिः पूतो ब्रह्मलोके महीयते । यावतीर्वै देवतास्ताः सर्वा वेदविदि ब्राह्मणे वसन्तीति ब्राह्मणानां माहात्म्यप्रख्यापकोऽनर्थको वाक्यसंदर्भः प्रवृत्त इति शेषः । सनातनोऽनादिः ॥ ६ ॥ उत्तरमाह—तस्येति । अस्य महतो भूतस्य निश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद इत्यादिश्रुतेर्यस्य प्रलापोऽयं वेदशास्त्रादिप्रपञ्चस्तस्यैव परमात्मनः स्वयमव्याकृतस्य नामरूपात्मना व्याकृतस्य स्वरूपमिदं जगद्भाति । नामादिविशेषरूपैरितीत्थंभावे तृतीया । नामरूपात्मको यो विशेषस्तदात्मकस्वरूपस्येत्यर्थः । तथाच श्रुतिः—तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियतासौनामाऽयमिदंरूप इतीति । हे महानुभाव ! निर्दिश्य द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं चेत्यादिना कृत्स्नं दृश्यमदृश्यं च विश्वं ब्रह्मरूपत्वेन निर्दिश्य ब्रह्मैवेदमिति सम्यक् प्रवदन्तीत्यध्यारोपप्रसङ्गे अपवादप्रसङ्गे च तत् ब्रह्म विश्वस्मान्मूर्तामूर्तात् विरूपमेव वैरूप्यं विलक्षणमुदाहरन्ति । वेदा एव अथात आदेशो नेति नेति नह्येतस्मादन्यत्परमस्तीति नेतीत्यादयः । अत्र नेति नेतीति नञ्द्वयेन प्रकृते मूर्तामूर्ते निषिद्धय शून्यशेषत्वे प्रसक्ते एतस्मादात्मनोऽन्यत्परं कार्यं कारणं वाऽतिरिक्तं नास्तीति हेतोर्नेतीत्युच्यते न तु शून्यमवशेष्यत इति श्रुत्यैव ब्रह्मणो विश्ववैरूप्यमुक्तम् । ततश्च यत्प्रभवत्वेन वेदो मान्यस्तं वेदोक्तमार्गाननुष्ठानेनावजानतो वेदाध्ययनमपि निष्फलं भवति । भगवदाज्ञाभङ्गदोषादिति भावः । श्रूयते च—न तस्य वाच्यपिभागो अस्तीति । देहाद्यात्मबुद्ध्या परमात्मा नास्तीति मत्वा तं त्यजतः वेदोच्चारणमात्रसंभवेऽपि फलांशो नास्तीति श्रुत्यर्थः ॥ ७ ॥

[ अर्जु० ] एवं ह्याह—न वेदबलमाश्रित्य पापं कर्म समाचरेत् ॥ अज्ञानेन कृतं पापं वेदाभ्यासेन नश्यति ॥ मायाविदमपि मायामप्रयुञ्जानं छन्दांसि तारयन्ति तद्व्यवच्छेदार्थमाह–मायया वर्तमानमिति ॥ ५ ॥ प्रलापः कोलाहलः ॥ ६ ॥

[ सर्व० ] माया प्रवर्तकयज्ञादिकर्महेतुबुद्धिः तया, बलं मूढेषु माया च पुरमभिख्योति प्रज्ञाया (?) इति तज्जन्यत्वाच्च तादृशं कर्म मायया मृगयन्ते मायाविनो ममिरे अस्य मायया अस्यासामस्य (?) कर्मणा कर्मवन्तो ममिरे यज्ञं परिमितं कृतवन्त इति तस्यार्थः। तादृश कर्मज्ञो मायावी स चात्मज्ञो न भवतीति । अत उक्तं मायया वर्तमानमिति। अज्ञानपूर्वकेण कर्मणा तादृशफलप्रतिलम्भ इत्यत उक्तं मायाविनमिति । अन्तकाले मरणसमये नहि कर्माण्यनुगच्छन्ति येन तेन रक्षेयुरित्यर्थः । तदेतदर्थप्रकाशक ऋग्वेदे मन्त्रः—" उतत्वं सख्ये स्थिरपीतमाहुर्नैनं हिन्वन्त्यपि वाजिनेषु । अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पाम् " इति । अस्यार्थः—' उतत्वमिति तत्त्वज्ञानपर्यायः सख्ये तत्त्वज्ञानयोगिनां सख्ये स सखा यः सख्या न यजत इति उक्तेः । स्थिरपीतं स्थिरं निश्चलं पीतं पानं संतोषणमाहुस्तत्त्वज्ञाः । अत एनं वाजिनेषु वाजिनं हविः हविषां ये तत्त्वज्ञास्तत्त्वज्ञानवन्तः । एतेन यज्ञोपलक्षणं तेष्वेनं न हिन्वन्ति । यावद्धि तत्त्वज्ञत्वेन तस्य योगिभिः सह मैत्री न जाता तावदेव न तत्र प्रवर्तनीयः । एष त्वन्यः कर्मण्यः अधेन्वाऽदोग्ध्रा प्रवर्तककर्मणा चरति वाचं वेदवाचं स्वं प्रत्यफलामपुष्पां च शुश्रुवान् श्रुतवान् । तेन श्रुतापि वेदवाक् तं प्रत्यफलाऽपुष्पा यतोऽसौ प्रवृत्तिलक्षणधर्मपरः । यदुक्तमुपनिषदि—"तदेतत्पुष्पं फलं च वाचो यत्सत्यम् " इति ॥ ५ ॥ पुनः पृच्छति—न चेति । धर्मं निवर्तकं प्रलापो वेदाम्नायन्त इति । ब्राह्मणानां ब्रह्मविदुषामपि सनातनोऽनादिरिति एतेनैतत्कालमधीतोऽपीत्यर्थः ॥ ६ ॥

[ लक्षा० ] अथ कस्मात्प्रलापोऽयमित्यत्र प्रलापः अनर्थकवेदपाठः ॥ ६ ॥ तस्मात् तस्यैव नामादीत्यत्र तस्य परमात्मनः नामादिविशेषरूपैः नामवाक्यादिविशेषरूपैः वेदवाक्यैः इदं जगदपि भाति भगवतः समानकृष्य जगदपि सतो (?) वेदैर्व्यवहरन्तीति भावः। निर्दिश्य भगवन्तं सम्यक् निर्दिश्य जगदपि प्रवदन्ति । तत् तस्मात्

तदर्थमुक्तं तप एतदिज्या
ताभ्यामसौ पुण्यमुपैति विद्वान्।
पुण्येन पापं विनिहत्य पश्चा-
त्संजायते ज्ञानविदीपितात्मा ॥ ८ ॥
ज्ञानेन चात्मानमुपैति विद्वा-
नथान्यथा वर्गफलानुकाङ्क्षी।
अस्मिन्कृतं तत्परिगृह्य सर्व-
ममुत्र भुङ्क्ते पुनरेति मार्गम् ॥ ९ ॥
अस्मिँल्लोके तपस्तप्तं फलमन्यत्र भुज्यते।
ब्राह्मणानामिमे लोका धार्त्वे तपसि तिष्ठताम्॥ १० ॥

मुख्यतः सकलवेदप्रतिपाद्यत्वात् विश्वस्माद्वैरूप्यं भगवतः उदाहरन्ति ॥ ७ ॥

[ शंक० ] इदानीम् ईश्वरार्थमनुष्ठीयमानानां तत्प्राप्तिसाधनज्ञानापेक्षितशुद्धिद्वारेण पारम्पर्येण पुरुषार्थत्वम्, अन्येषां संसारानर्थहेतुत्वेनापुरुषार्थत्वं च दर्शयति श्लोकद्वयेन—तदिति। यद्विश्वरूपविपरीतरूपं ब्रह्म तदर्थमुक्तं वेदेन। किम्? तपः कृच्छ्रचान्द्रायणादि, इज्या ज्योतिष्टोमादि। किं ततो भवतीति चेत्—ताभ्याम् इज्यातपोभ्याम् असौ विद्वान् पूर्वोक्तविनियोगज्ञः ईश्वरार्थं कर्मानुतिष्ठन् पुण्यम् उपैति प्राप्नोति कर्मजन्यापूर्वसंयुक्तो भवति। तेन पुण्येन पापं विनिहत्य क्षपयित्वा पश्चात् उत्तरकालं क्षपिताशेषकल्मषो जायते ज्ञानविदीपितात्मा ज्ञानप्रकाशितचित्सदानन्दाद्वितीयब्रह्मस्वरूपो भवति। ज्ञानेन चात्मानं परमात्मानम् उपैति प्राप्नोति विद्वान् आत्मवित्। अन्यथा पुनरीश्वरार्थं कर्माननुष्ठानेनाक्षपिताशेषकल्मषो न ज्ञानी भवति। तदा वर्गफलानुकाङ्क्षी इन्द्रियफलानुकाङ्क्षी स्वर्गादिफलानुकाङ्क्षी सन् अस्मिन् लोके कृतं तत् यज्ञादिकं परिगृह्य सर्वम् अमुत्र परलोके तत्फलमुपभुङ्क्ते। ततः कर्मशेषेण पुनरेति मार्गं संसारमार्गम्। तथा च श्रुतिः—'तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' ॥ ८ ॥ ९ ॥ इदानीं विद्वदविद्वदपेक्षया कर्मणां फलवैषम्यमाह—अस्मिन् इति। अस्मिन् लोके यत् तपस्तप्तं तस्य फलम् अन्यत्र अमुष्मिन् लोके भुज्यते इति सर्वेषां समानम्। ब्राह्मणानां ब्रह्मविदां पुनरयं विशेषः—तपः स्वृद्धम् अतीव समृद्धं भवति फलवृद्धिहेतुर्भवतीत्यर्थः। तथा च श्रुतिः—'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' इति। अन्येषाम् अनात्मविदां वैषयिकाणां तावदेव तत् न समृद्धं भवति; यस्य कर्मणो यत्फलं श्रुतं तावन्मात्रफलसाधनं न फलसमृद्धिहेतुर्भवतीत्यर्थः ॥ १० ॥

[ नील० ] तदर्थमिति। यत् विश्वस्माद्विलक्षणं ब्रह्मप्रोक्तं तदर्थं तत्प्राप्त्यर्थमेतत् प्रसिद्धं तपः कृच्छ्रचान्द्रायणादि ध्यानधारणादि च उक्तं तपसा ब्रह्म विजिज्ञासस्वेति श्रुत्या प्रोक्तम्। तथा एषा इज्या यागादिरपि तदर्थमेव। तत्र क्रममाह—ताभ्यामिति। इज्यातपोभ्यां पुण्योत्पत्तिः पुण्येन पापनाशः निष्पापस्तु ज्ञानेन ब्रह्माकारया चेतोवृत्त्या विदीपितात्मा प्रकाशितात्मतत्त्वो भवति। एतेन इज्यातपसोः साक्षान्मोक्षहेतुत्वनिरसनेन ज्ञानकर्मसमुच्चयपक्षो निर्मूलो वेदितव्यः ॥ ८ ॥ किमात्मतत्त्वप्रकाशेनेत्यत आह—ज्ञानेन चात्मानमुपैतीति। आत्मलाभान्न परं विद्यते, आत्मानं चेद्विजानीयादयमस्मीति पूरुषः। किमिच्छन्कस्य कामाय शरीरमनुसंज्वरेदित्यादिशास्त्रादात्मप्राप्तिरेव परमपुरुषार्थ इति भावः। विपक्षे दोषमाह—अथेति। अथेति पक्षान्तरे। अन्यथा आत्मज्ञानाभावेनानात्मनि पुरुषार्थत्वबुद्ध्या वर्गफलानुकाङ्क्षी भवति। वृङ्क्ते आत्मानं स्वस्वविषयोपहारमुखेनावृणोतीति वर्ग इन्द्रियगणस्तस्य प्रियं फलं विषयसुखं तदाकाङ्क्षी सन् अस्मिँल्लोके कृतं यत्पुण्यं पापं वा तत्सर्वं परिगृह्य तं विद्याकर्मणी समन्वारभेते पूर्वप्रज्ञा चेति श्रुतेः। तमुत्क्रामन्तमिति श्रुतिपदस्यार्थः। अमुत्र स्वर्गे नरके वा तत्फलं सुखं दुःखं वा भुङ्क्ते। ततः पुनरिमं मार्गं लोकं कर्मशेषेण उपैति। तस्मिन् यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्तन्ते। तस्माल्लोकात्परैत्यस्मै लोकाय कर्मण इत्यादिश्रुतिभ्यः। संपतत्यनेनेति संपातः कर्म ॥ ९ ॥ नन्वेवं तर्हि स्वाध्यायप्रवचने एवेति नाको मौद्गल्यः। तद्धि तपस्तद्धि तप इत्यादरेणाध्ययनाध्यापनयोर्मुख्यतपस्त्वश्रवणादस्ति तयोरपि मोक्षहेतुत्वं तत्कथमुच्यते न छन्दांसि वृजिनात्तारयन्तीति मत्वा विद्वदविद्वत्तपसोर्भेदमाह—अस्मिन्निति। अविदुषां तपसः फलमामुष्मिकं विदुषां ब्राह्मणानां तु इमे एव लोकाः फलदाः ज्ञानं दृष्टफलमित्यर्थः। कीदृशानां धार्त्वे तपसि तिष्ठतां धार्त्वे धातव्ये। कृत्यार्थे तवैकेन्केन्यत्वनः इति धाञस्त्वन् अवश्यकर्तव्ये इत्यर्थः। तच्च शमो दमस्तपः शौचमिति प्रागेवोक्तम्। वृद्धे तपसीति पाठे स्पष्टोऽर्थः ॥ १० ॥

[ अर्जु० ] उत्तरमाह—अस्मिन्निति। कर्मलोके तपः फलमन्यत्र लोकान्तरे। तदिदं मन्दसंवेगिनः तपसः

८ ख. नास्ति। शां. स जायते। ९ ख. नास्ति। शां. विद्वान्न चान्यथा। १० ख. वृद्धे तपसि संयताः। शां ब्राह्मणानां तपः स्वृद्धमन्येषां तावदेव तत्।

क. दशमात्परम्—ब्राह्मणानां तपः स्वृद्धमन्येषां तावदेव तत्। एतत्समृद्धमत्यृद्धं तपो भवति केवलम् ॥ इत्यधिकम्।

**धृतराष्ट्र उवाच—**

कथं समृद्धमसमृद्धं तपो भवति केवलम् ।
सनत्सुजात तद्ब्रूहि यथा विद्याम तद्वयम् ॥ ११ ॥

**सनत्सुजात उवाच—**

निष्कल्मषं तपस्त्वेतत्केवलं परिचक्षते ।
एतत्समृद्धमप्यृद्धं तपो भवति केवलम् ॥ १२ ॥
तपोमूलमिदं सर्वं यन्मां पृच्छसि क्षत्रिय ।
तपसा वेदविद्वांसः परं त्वमृतमाप्नुयुः ॥ १३ ॥

**धृतराष्ट्र उवाच—**

कल्मषं तपसो ब्रूहि श्रुतं निष्कल्मषं तपः ।
सनत्सुजात येनेदं विद्यां गुह्यं सनातनम् ॥ १४ ॥

**सनत्सुजात उवाच—**

क्रोधादयो द्वादश यस्य दोषा-
स्तथा नृशंसानि दशत्रि राजन् ।
धर्मादयो द्वादशैते पितृणां
शास्त्रे गुणा ये विदिता द्विजानाम् ॥ १५ ॥

---

फलम् । तीव्रसंवेगिनस्तु तपसः फलमिमे प्रत्यक्षमनुभूयमाना लोक्यन्त इति लोकाः प्रीतिविशेषाः ऋद्धे तीव्रव्रतमुपगते संयता निबद्धमित्यपरः पाठः ॥ १० ॥

[ सर्व० ] उत्तरम्—अस्मिंल्लोक इति । अस्मिंल्लोके कर्मभूमौ तपःप्रवर्तकं फलमन्यत्र मरणानन्तरं लोकान्तरप्राप्त्यैव ब्राह्मणानां ब्रह्मविदामिमे सर्वकाल ऋद्धे समृद्धे तपसि वक्ष्यमाणऋद्धिमति निवृत्तिलक्षणे संयताः नियताः । न तु कश्चित्कर्मलोकस्तदन्य एव फललोकः फलभोगार्थमन्तरा मृत्योरावश्यकत्वं किंतु स एव लोकः सर्वं एव फललोकोऽपि अतस्तत्फलस्य सर्वलोकभोग्यतया न पुनरावृत्तिलक्षणजन्मदुःखादियोग इत्यर्थः । तदेवं स एव वेद उभयप्रतिपादकोऽपि उत प्रवर्तकधर्मप्रवृत्तान् प्रति नासौ वेदो मृत्युरूपपापनिस्तारहेतुः । निवर्तकधर्मप्रवृत्तानां तु स एव वेदः सम्यग्ज्ञानसाधनत्वेन पूर्वमुपयुक्तोऽपि पश्चान्निष्फल इति तदेव पापात्तारयतीत्युक्तं भवति ॥ १० ॥

[ लक्षा० ] तदर्थं भगवत्प्रीत्यर्थमेतत्तपः उक्तम्, इज्या च उक्ता । ताभ्यां भगवद्विषयकतपोयज्ञाभ्याम् । केवलं वेदपाठेन पापं न गच्छति वेदोक्तकर्मानुष्ठानजनितपुण्यात् पापं नश्यतीति समुदायार्थः ॥ ८ ॥ ब्राह्मणानां तपस्यर्धमित्यत्र ब्राह्मणानां तपसि यदर्धं अन्येषां क्षत्रियाणां तत् तपः तावदेव संपूर्णं शिलोञ्छवृत्त्यादिना परपीडाभावात् केवलपुण्यजनकमेतद्ब्राह्मणानां, क्षत्रियादितपसोऽपि अत्यर्थं समृद्धं भवति ॥ १० ॥

[ शंक० ] श्रुत्वैवमाह धृतराष्ट्रः—कथमिति । ऋज्वेतत् ॥ ११ ॥ एवं पृष्टः प्राह भगवान्—निष्कल्मषमिति । यदेतन्निष्कल्मषं तपः, तत्केवलं परिचक्षते केवलं बीजमित्युक्तम् । सर्वस्यास्य प्रपञ्चस्य बीजं निमित्तं यत्, तत्केवलमित्युक्तम् । आहोशना—' गुणसाम्ये स्थितं तत्त्वं केवलं त्विति कथ्यते । केवलादेतदुद्भूतं जगत्सदसदात्मकम ' इति । तत् एतत् एव केवलं तपः समृद्धमत्यर्थं च भवति नान्यथा यदा निष्कल्मषं न भवति सकल्मषं स्यात् तदा समृद्धमत्यर्थं च न भवति ॥ १२ ॥ एतदेव प्रशंसति—तपइति । स्पष्टार्थः श्लोकः ॥ १३ ॥ श्रुत्वैवमाह राजा—कल्मषमिति । ' निष्कल्मषं तपस्त्वेतत्केवलं परिचक्षते ' इति श्रुतस्य तपसः कल्मषं ब्रूहि हे सनत्सुजात, येन निष्कल्मषेण तपसा इदं ब्रह्म गुह्यं सनातनं विद्याम् ॥ १४ ॥ एवं पृष्टः प्राह भगवान्—क्रोधादय इति । क्रोधादयो द्वादश यस्य तपसो दोषाः तथा नृशंसानि च सप्त हे राजन्, यस्य तपसो दोषाः; तथा ज्ञानादयो द्वादश च आतताना: विस्तार्यमाणाः शास्त्रे वेदशास्त्रे ये विदिता गुणाः द्विजानां तानेतान् गुणान् दोषांश्च वक्ष्यामीत्यभिप्रायः ॥ १५ ॥

[ नील० ] समृद्धं विदुषः असमृद्धम् अविदुषश्च एकमेव तपः केवलं शुद्धं सत्कथं द्वैविध्यं प्राप्नोति पृच्छति कथमितीति ॥ ११ ॥ उत्तरमाह—निष्कल्मषमिति । कल्मषं कामः श्रद्धादिराहित्यं च तद्रहितं तपः केवलं कैवल्यसाधनत्वात्केवलमित्युच्यते । तदेव श्रद्धाद्युपेतमपि सकामं चेत्समृद्धमित्युच्यते । यत्तु केवलं दम्भार्थमेव क्रियते तदृद्धं तथाच श्रुतौ । यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवतीति तरप्प्रत्ययश्रुतेर्विद्याहीनस्यापि तपसो वीर्यवत्त्वावगमादृद्धत्वं गम्यते ॥ १२ ॥ तप एव प्रशंसति तप इति । इदं सर्वं भोग्यं तपोमूलं तपःप्राप्यं परममृतं मुक्तिम् ॥ १३ ॥ ननु निष्कल्मषं तपः श्रुतं तत्र किं तत्किल्बिषं यद्रहितेन तपसा सनातनं गुह्यं ब्रह्म विद्यां जानीयामिति पृच्छति कल्मषमिति ॥ १४ ॥ तदेवाह क्रोधादय इति । क्रोधादिगणो द्वादशकः दशत्रि त्रयोदशेत्यर्थः तावान् नृशंसवर्गश्च तपसः कल्मषं धर्मादिगुणविरुद्धत्वात् । तद्रहितधर्माद्युपेतं तु तपो निष्कल्मषं मोक्षहेतुरित्यर्थः पितृणां वंशकर्तृणां मन्वादीनाम् । आतताना इत्यपि पाठः ॥ १५ ॥

---

११ शां. समृद्धमत्यर्थं । शां. कथं विद्यामहं प्रभो । १२ ख. नास्ति । शां समृद्धमत्यर्थं तपो भवति नान्यथा । १३ ख. नास्ति । १४ ख. नास्ति । १५ ख. द्वादशामुष्य । ख. त्रयोदशात्र । ख. विहिताः । शां नृशंसानि च सप्त राजन् । ज्ञानोदयो द्वादश चातताना: शां ।

**क्रोधः कामो लोभमोहौ विधित्सा-**
**ऽकृपाऽसूये मानशोकौ स्पृहा च ।**
**ईर्ष्या जुगुप्सा च मनुष्यदोषा**
**वर्ज्याः सदा द्वादशैते नराणाम् ॥ १६ ॥**

[ अर्जु० ] तीव्रसंवेगित्वकारणं पृच्छति–कथमिति । समृद्धमतिवृद्धं तीव्रसंवेगीति यावत् । अव्यृद्धमिति पाठे विशब्दो नञ्पर्यायः व्यृद्धं अनृद्धं न व्यृद्धमव्यृद्धं, स एवार्थः । उत्तरमाह—क्रोधादय इत्यादिना किंभूयः श्रोतुमिच्छसि इत्यन्तेन । द्वादशदोषाणां त्रयोदशनृशंसानां विरोधे सति सत्सु द्वादशगुणेषु तदेव तपस्तीव्रसंवेगित्वं प्रतिपद्यत इति भावः । क्रोधादयो द्वादश यस्य दोषास्तथा नृशंसास्त्रिदशात्र राजन् । धर्मादयो द्वादशैते पितॄणां शास्त्रे गुणा ये विदिता द्विजानाम् । दोषनृशंसपदाभ्यां हानं गम्यते, गुणसंज्ञया उपादानं गम्यते, पितॄणामित्युपलक्षणम् ॥ १५ ॥

[ सर्व० ] अथ ऋद्धं तप इत्यत्र ऋद्धिशब्दार्थं पृच्छति कथं समृद्धमव्यृद्धं कथं समृद्धतया भवति ऋद्धेरन्वयमुखेन लक्षणाभिधानम । व्यतिरेकमुखेनैतत्प्रश्नः समृद्धिविरोधिनोपि धर्मा हेया इत्याशयेन, समृद्धेस्तद्विरोधिप्रतिसंधानाधीनत्वात् । अतएवाग्रे व्यृद्धिहेतुत्वेन द्वादश दोषा नृशंसाश्च त्रयोदश इत्युक्त्वा समृद्धिरूपानुगुणान् वक्ष्यतीति ॥ ११ ॥ उत्तरम्—क्रोधादय इति । यस्य तपसो दोषा दोषत्वेन विरोधिनस्तेषु सत्सु तत्तदा न भवतीति । नृशंसा हिंसकास्तैस्तस्य तपस उत्पन्नस्यापि नाशात् । यस्य तपसस्त्रिदश त्रयोदश गुण्यन्ते बहु भवन्त्येभिरिति गुणास्ते धर्मादयो द्वादश । पितॄणामुपदेशकर्तृतया परमगुरूणां सनत्कुमारकपिलादिद्विजानां शास्त्रे विदिता ज्ञापिताः । ण्यर्थान्तर्भात् । एते यस्य तपसो भवन्ति तत्तपः समृद्धमव्यृद्धमिति शेषः ॥ १५ ॥

[ शंक० ] क्रोधादीन् दर्शयति—क्रोधइति । क्रोधो नाम कामप्रतिघातादुत्पद्यमानः ताडनाक्रोशनादिहेतुः कामहानिहेतुकश्च अन्तःकरणविक्षेपो गात्रस्वेदकम्पनादिलिङ्गः । कामः स्त्र्याद्यभिलाषः । लोभः परद्रव्येच्छा, आर्जितस्य द्रव्यस्य तीर्थे विनियोगासामर्थ्यं च । मोहः कृत्याकृत्यविवेकशून्यता । विवित्सा विषयरसान्वेत्तुमिच्छा । अकृपा निष्ठुरता । असूया गुणेषु दोषाविष्करणम्, परगुणादिष्वक्षमा वा । मानः आत्मबहुमानित्वम् । शोकः इष्टार्थवियोगजोऽन्तःकरणविक्षेपः रोदनचिन्तनादिलिङ्गोऽप्रतीकारविषयः । स्पृहा विषयभोगेच्छा । ईर्ष्या परश्रियामसहिष्णुता । जुगुप्सा परगुणानपह्नोतुमिच्छा बीभत्सा वा । एते क्रोधादयो दोषाः तपसः कल्मषरूपाः सदा वर्ज्याः महागुणेन ब्राह्मणेन । ब्राह्मणानामुत्कृष्टगुणयोगः स्वभावसिद्धः । तथा चोक्तं भगवता—'शमो दमस्तपः शौचं क्षान्तिरार्जवमेव च । ज्ञानं विज्ञानमास्तिक्यं ब्राह्मं कर्म स्वभावजम्' इति । अथवा, महागुणो ब्रह्मप्राप्तिगुणः, तेन ब्रह्मप्राप्तिलक्षणेन महागुणेन समन्वितेन सदा वर्जनीया इत्यर्थः । उक्तं च नाममहोदधौ—'महान्ब्रह्मेति च प्रोक्तो महत्त्वान्महतामपि । तत्प्राप्तिगुणसंयुक्तो महागुण इति स्मृतः' इति ॥ १६ ॥

[ नील० ] क्रोधः इच्छाप्रतीघातोत्थ आक्रोशताडनादिहेतुर्मनस्तापः १ कामः स्त्र्यभिलाषः २ लोभो धनव्ययभीरुत्वं ३ मोहः कृत्याकृत्यविवेकराहित्यं ४ विधित्सा सत्यप्युत्तरोत्तरलाभे पिपासाख्या अतृप्तिः धेट् पाने इत्यस्य रूपम् ५ अकृपा निर्दयत्वम् ६ असूया परगुणेषु दोषदर्शनं ७ मान आत्मनि पूज्यताबुद्धिः ८ शोक इष्टार्थनाशे सति मनोवैक्लव्यं ९ स्पृहा भोग्यवर्गेष्वादरः १० ईर्ष्या परोत्कर्षासहिष्णुत्वं ११ जुगुप्सा परनिन्दा बीभत्सता वा १२ मनुष्याणां योगिनामयोगिनां चैते दोषाः सर्वेषामपि वर्ज्या इत्यर्थः ॥ १६ ॥

[ अर्जु० ] द्वादश दोषानाह—क्रोधः कामो लोभमोहौ विधित्सा कृपासूये मानशोकौ स्पृहा च । ईर्षा जुगुप्सा च मनुष्यदोषा वर्ज्याः सदा द्वादशैते नरेण । विधित्सा इदमदः करिष्यामीतीच्छा । विवित्सेति च पाठः शास्त्रप्रतिपन्नेऽप्यर्थ एवं स्यान्नवेति ज्ञातुमिच्छा । कृपा पुत्रादिमात्रविषया । जुगुप्सा परनिन्दा ॥ १६ ॥

[ सर्व० ] अत्र द्वादश दोषानाह—क्रोध इति । क्रोधः परहिंसेच्छा । कामस्तृष्णा । लोभः प्राप्तधनापरिहाणप्रयत्नः । मोहोऽनात्मन्यात्मधीः । विधित्सा तृष्णात्मककर्मसन्तानेच्छा । कृपा परदुःखदर्शनेन व्याकुलता, तस्या योगविरोधित्वाद्दोषत्वम् । या तु कृपा करुणारूपा ज्ञानिनो विहिता सा परदुःखप्रहाणेच्छामात्रमित्यविरोधः । असूया परगुणेषु दोषारोपः । मानोऽभिमानः स्वगुणेषूत्कटः प्रयत्नः । शोकः हितसाधननाशभावनम् । स्पृहा निष्प्रयोजनमिन्द्रियविषयरूपादिविशेषदर्शनेच्छा । ईर्ष्या परगुणोच्छेदप्रयत्नः, अतो नासूयया समानार्थत्वम् । जुगुप्सा बीभत्सदर्शनेन तत्प्रहाणेच्छासन्ततिः । मनुष्यस्य बाहुल्येन संबन्धिनो दोषाः । दोषसंज्ञाकरणफलमाह—वर्ज्या इति । नरेण तपश्चरता ॥ १६ ॥

---

१६ ख. नरेण । शां. ञ महागुणेन सदा वर्ज्या द्वादशैते नरेण । ज. महागुणेन सदावर्ज्या द्वादशैते द्विजेन ।

**एकैकः पर्युपास्ते ह मनुष्यान् मनुजर्षभ ।**
**लिप्समानोऽन्तरं तेषां मृगाणामिव लुब्धकः ॥१७॥**
**विकत्थनः स्पृहयालुर्मनस्वी बिभ्रत्कोपं चपलोऽरक्षणश्च ।**
**एतान्पापाः षण्नराः पापधर्मान्**
**प्रकुर्वते नोत्रसन्तः सुदुर्गे ॥ १८ ॥**

[ दुर्घ० ] क्रोधः कामो लोभमोहौ विधित्सा कृपाऽभ्यसूये मानशोकौ स्पृहा च । ईर्ष्या जुगुप्सा च मनुष्यदोषा वर्ज्याः सदा द्वादशैते नरेण ' ॥ तत्र क्रोधः परमारणेच्छा । कामो विषयाऽभिलाषः । लोभः परस्वादानेच्छा। मोहोऽप्यतस्मिंस्तद्ग्रहः । विधित्सा काम्यकर्मारम्भः । कृपा परदुःखप्रहाणेच्छा । अभ्यसूया परोन्नत्यसहिष्णुता । मानश्चित्तसमुन्नतिः । शोको गतानुतापः । स्पृहा कर्मसु चेष्टा । ईर्ष्या परकामाऽसहिष्णुत्वम् । जुगुप्सा परनिन्दा । एते द्वादश मनुष्यदोषाः मोक्षात्पुरुषं भ्रंशयन्ति ॥ १६ ॥

[ लक्षा० ] लोभमोक्षाविवित्सेत्यत्र विद्ल लाभ इति धातोः विवित्सा धनं लब्धुमिच्छा । अकृपा इति पदच्छेदः । अकृपा कृपाभावः ॥ १६ ॥

[ शंक० ] तेषां सदा वर्ज्यत्वे हेतुमाह—एकैकमिति । यथा मृगाणाम् अन्तरं छिद्रं लिप्समानो रन्ध्रान्वेषणपरो लुब्धको मृगयुरनुवर्तते, यथा च तच्छिद्रं लब्ध्वा तान् हन्ति; तथा तेषां मनुष्याणां रन्ध्रान्वेषणपरा एते क्रोधादयः एकैकं मनुष्यं पर्युपासते । अथवा, मनुष्यान् पर्युपासते इति पाठः, तस्मिन् एकैकं पृथक् पृथक् मनुष्यान् पर्युपासते इति योजना । तथा छिद्रं लब्ध्वा तान् घ्नन्ति । तस्मादेतेष्वेकोऽपि दोषो विनाशकारणम् । यस्मादेवं तस्मात्सदा वर्ज्या इत्यर्थः । उक्तं च हैरण्यगर्भे— 'यथा पान्थस्य कान्तारे सिंहव्याघ्रमृगादयः । उपद्रवकरास्तद्वत्क्रोधाद्या दुर्गुणा नृणाम् ' इति ॥ १७ ॥

[ नील० ] एतेषां मध्ये एकैकोऽपि मनुष्यं नाशयितुं समर्थः किमुत कतिपयसमुदायः सर्वसमुदायो वेत्याह एकैक इति । अन्तरं छिद्रम् ॥ १७ ॥ त्रयोदश नृशंसानि हिंस्राण्याह द्वाभ्यां, विकत्थन इति । विकत्थनः परगुणाक्षेपेण स्वगुणोत्कर्षाभिधानशीलः १ स्पृहयालुः अतियत्नपूर्वकं परस्त्र्यादिभोगेच्छावान् २ मनस्वी गर्वाधिक्यात् परावमानशीलः ३ बिभ्रत्कोपं निमित्तं विनाऽपि सदा कोपपरः ४ चपलः मित्रभावादिष्वस्थिरः ५ अरक्षणः शक्तौ सत्यां स्वीकृतस्त्र्यादेः पालनमकुर्वन् ६ एतान् षट् पापधर्मान् पापाः पापिनो नराः कुर्वते । के ते ये सुदुर्गे महासंकटे इह परत्र वा उपस्थिते नोत्रसंतः त्रासमकुर्वतः एकमिदं पदं सुप्सुपेति समासः एते षडत्यन्तं हिंस्रा इत्यर्थः ॥ १८ ॥

[ अर्जु० ] मनुष्यसंबन्धे हेतुमाह—एकैकः पर्युपास्तेह मनुष्यान् भरतर्षभ । लिप्समानोन्तरं तेषां मृगाणामिव लुब्धकः । एषां मध्ये एकैकः क्रोधादिः मनुष्यान् पर्युपास्त असेवत भूतनिर्देशः प्रसिद्धत्वद्योतनाय । अन्तरं छिद्रं लब्धुमिच्छन् ॥१७॥ त्रयोदशनृशंसमध्ये षडाह—विकत्थनः स्पृहयालुर्मनस्वी बिभ्रत्कोपं चपलो रक्षणश्च । एतान् प्राप्तान् षड्नराः पापधर्मान् प्रकुर्वते नोत्रसन्तः सुदुर्गे । विकत्थनः स्वगुणश्लाघी । स्पृहयालुर्लुब्धः । स्पृहातस्ताच्छील्यं भेदकम् । मनस्वी अपमानासहः । रक्षणो दानविमुखः; रूक्षण इति वा परुषवाक्; अरूक्षणं चेति पाठे बिभ्रदित्यन्वयः । शक्तोऽप्यरक्षिता प्राप्तान् मिलितान् ॥ १८ ॥

[ सर्व० ] वर्जने हेतुमनिष्टसाधनत्वमाह—एकैकमिति । एभ्यः समुदितेभ्यो मध्यादेकैकोऽप्येकः पर्युपासत अविवक्षितभूतकालः प्रयोगः इह मनुष्यलोकेऽन्तरं हिंसावसरम् ॥१७॥ अत्र त्रयोदशसु नृशंसेषु वाच्येष्वतिनृशंसतया प्रथममाह—विकत्थन इति । विकत्थनः परगुणापेक्षया स्वगुणोत्कर्षाभिधानशीलः । स्पृहयालुरिति । इह स्पृहा सप्रयोजनवस्तूपलम्भसन्तानप्रयत्नस्तच्छीलः स्पृहयालुः । तथाच निष्प्रयोजनस्पृहा सर्वथा तत्त्वज्ञानसहानवस्थितत्वेन दोषेषूक्ता । स्पृहयालुता च तत्त्वज्ञानकाले संभविष्यत्यपि तत्राशक्त्यानृशसंकतेति न कश्चिद्विरोधः। मनस्वी परावमानहेतुदुर्बलत्वादिदोषनाशवान् । बिभ्रत्कोपं परोक्षापरोक्षरूपप्रकोपहेतुपरापकारभावनं बिभ्रद्धारयन् । चपलोऽस्थिरः इष्टहेतुत्वेन स्वीकृतार्थस्य अनिमित्ततस्त्यागी । रक्षण इष्टसाधननाशदर्शनेन तद्रक्षणप्रयत्नवान् । रूक्षण इति कचित्पाठस्तत्र परुषभाषीत्यर्थः । अयं तु युक्तोऽग्रे तस्यैव षट्कस्यानुवादसमये परुषपदेनास्य वक्ष्यमाणत्वात् । एते षट् प्राप्ता लब्ध्वा नरान् पापधर्मान्नरान् सुदुर्गे नरके प्रकुर्वते तत्कृतं कुर्वन्ति नोत सतो न सतोऽपि तद्वितत्राप्यथ(?) । असत इव सतो नरके कुर्वन्ति इति नेत्यर्थः । तापवान् ॥ १८ ॥

[ दुर्घ० ] त्रयोदश नृशंसानाह । 'विकत्थनः स्पृहयालुर्मनस्वी बिभ्रत्कोपश्चञ्चलोऽरक्षणश्च । एतान्प्राप्ताः षण्नराः पापधर्माः पतन्ति वै लोभयुक्ताः सुदुर्गे ॥ ' विकत्थनः परतर्जनः । स्पृहयालुरसंतुष्टः । मनःस्वी विमानासहः । बिभ्रत्कोपो नित्यकोपनः । चञ्चलोऽस्थिरप्रकृतिः । अरक्षणः शक्तोप्यरक्षिता ॥ १८ ॥

[ लक्षा० ] एकैकमेतदित्यत्र एकैकं यथा भवति तथा

---

१७ शां. एकैकमेते राजेन्द्र मनुष्यं पर्युपासते । १८ ख. रूक्षणश्च । ख. एते प्राप्ताः षण्नरान् । शां. नास्ति ।

**संभोगसंविद्विषमोऽतिमानी**
**दत्तानुतापी कृपणो बलीयान् ।**
**वर्गप्रशंसी वनितासु द्वेष्टा**
**एते परे सप्त नृशंसवर्गाः ॥ १९ ॥**

**धर्मश्च सत्यं च दमस्तपश्च**
**अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।**
**यज्ञश्च दानं च धृतिः श्रुतं च**
**व्रतानि वै द्वादश ब्राह्मणस्य ॥२० ॥**

---

एषां क्रोधादीनामन्तरमवकाशं लप्स्यमानः पुरुषः मृगाणां लुब्धक इव हिंस्रः स्यात् ॥ १७ ॥ विकत्थन इत्यत्र मनस्वी मनसि स्वं वित्तं वर्तत इति मनस्वी वित्ताकाङ्क्षी-स्यर्थः । मानवानहंकारी वा ॥ १८ ॥

[ शंक० ] इदानीं नृशंससप्तकमाह—संभोगेति । संभोगे विषयसंभोगे संविद्बुद्धिर्यस्य वर्तते स संभोगसंवित् विषमेधमानः विषमिव परेषामुपद्रवं कृत्वा एधमानः वर्धमानः; अथवा, द्विषमेधमान इति पाठान्तरम्; द्विषं द्वेष्यं कर्म कृत्वा प्राणिनां तद्द्वारेणैव वर्धमानः । दत्तानुतापी यः पूर्वं धर्मबुद्धया धनादिकं दत्त्वा पश्चात् किमर्थमहं दत्तवानिति तप्तो भवति स दत्तानुतापी । कृपणः यत्किंचिदर्थलवलाभमात्रलोभात्सर्वावमानं सहते यः, स कृपणः । अबलीयान् ज्ञानबलवर्जितः । वर्गप्रशंसी इन्द्रियवर्गप्रशंसी । वनितां च द्वेष्टा अनन्यशरणां भार्यां यो द्वेष्टि सः । एते परे पूर्वोक्तेभ्यः क्रोधादिभ्यः सप्त नृशंसरूपाः ॥१८॥ इदानीं ज्ञानादयो द्वादश गुणा उच्यन्ते—ज्ञानमिति । ज्ञानं तत्त्वार्थसंवेदनम् । सत्यं यथार्थसंभाषणं भूतहितं च । दमो मनसो दमनम् । श्रुतम् अध्यात्मशास्त्रश्रवणम् । मात्सर्यं सर्वभूतेष्वसहमानता, तदभावः अमात्सर्यम् । ह्रीः अकार्यकरणे लज्जा । तितिक्षा द्वन्द्वसहिष्णुता । अनसूया परदोषानाविष्करणम् । यज्ञः अग्निष्टोमादिः, महायज्ञश्च । दानं ब्राह्मणेभ्यो धनादिपरित्यागः । धृतिः विषयसंनिधावपि इन्द्रियनिग्रहः । शमः अन्तःकरणोपरतिः, बहिःकरणोपरतिरिति केचित् । एते ज्ञानादयो महाव्रताः परपुरुषार्थसाधनभूताः ब्राह्मणस्य ॥ १९ ॥

[ नील० ] संभोगः स्त्रीसङ्गादिस्तद्विषया संवित् संमतिस्तदेव पुरुषार्थ इति या बुद्धिस्तया विषमो दुर्व्यवस्थितः १ अतिमानी अत्यन्तं दर्पवान् २ पाठान्तरे संभोगसंवित् भोगे बुद्धिमान् द्विषं द्वेषमेधनामो वर्धयन् दत्तानुतापी दानं कृत्वाऽपि लोभवशात् मम धनं नष्टमिति संतापवान् ३ कृपणः प्राणान्तेऽपि वित्तव्ययमसहमानः ४ बलीयान् अतिशयेन बलिमान् पूर्वराजभ्योऽप्यधिकं प्रजानां सकाशात् बलिं गृह्णन्नित्यर्थः ५ वर्गप्रशंसी वर्गो वृजिनं पराभिभवस्तत्प्रशंसनशीलः अन्येषां दुःखेन सुखीत्यर्थः ६ । वनितासु परिणीतासु द्वेष्टा ७ एते सप्त नृशंसाः पूर्वे च षट् एवं त्रयोदश ॥१९॥ गुणानाह धर्म इति । धर्मो वर्णाश्रमनियतः संध्योपासनादिः १ सत्यं हिंसावर्जं यथार्थभाषणं २ दमः जिह्वोपस्थादिनिग्रहः ३ तपः कृच्छ्रचान्द्रायणादि ४ अमात्सर्यं मत्सरः परगुणासहिष्णुत्वं तदभावः ५ ह्रीर्लज्जा ६ तितिक्षा सत्यपि क्रोधनिमित्ते तदनुत्पादः ७ अनसूया परगुणेषु दोषाविष्करणमसूया तदभावः ८ यज्ञो ज्योतिष्टोमादिः ९ दानं बहिर्वेदिसंविभागः १० धृतिः अत्यन्तापद्यपि व्रतादेरत्यागः ११ श्रुतमर्थग्रहणसहितं वेदाध्ययनम् १२ ब्राह्मणस्य ब्रह्मप्राप्तुमिच्छोः ॥ २० ॥

[ अर्जु० ] सप्त नृशंसानाह—संभोगसंधिर्विषमेधमानो दत्तानुतापः कृपणो बलीयान् । वर्गप्रशंसी वनितासु द्वेष्टा एते परे सप्त नृशंसरूपाः । संभोगः स्त्रीणां भोग एव संधिस्तपश्छिद्रं यस्य, संविदिति पाठे भोगे संवित् धीर्यस्य । विषमिव विषं विषयजातम् । एधमानो वर्धयन्, विषयावसान इति च विषयानुरक्तः । विषयावधान इति पाठेऽपि सोऽर्थः । दत्तानुताप इति च बलीयान् बलेन व्यवहरन् । वर्गप्रशंसी त्रिवर्गप्रशंसी मोक्षाप्रशंसी वा । वनितासु द्वेष्टा स्त्रीदोषानेव पश्यन्, देष्टा इति पाठे सर्वकार्येषु स्त्रियमेवादिशति । अत्र पाठे अर्थकृतस्तु विशेषः अस्ति दोषगणनृशंसगणयोः स्वतापपरतापहेतुत्वेन ॥ १९ ॥ द्वादशगुणानाह—धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षानसूया । यज्ञश्च दानं च धृतिः श्रुतं च व्रतानि वै द्वादश ब्राह्मणस्य ॥ तितिक्षा कलहादित्यागेच्छा, धृतिर्धैर्यं, श्रुतं शास्त्रावधारणम् ॥ २० ॥

[ सर्व० ] संभोगसंवित् भोगो विषयभोगस्तत्र संवित् कार्यत्वबुद्धिरवश्यकार्यतया व्यवस्थापनं द्विषं द्वेषं परेषां भावे क्विप् । एधमानो वर्धयन् ण्यर्थत्वात् तेन परद्वेष्टा परापकारकारीत्यर्थः । दत्तानुस्मरणजन्यदुःखवान् दत्तानुतापः । कृपणः दानभोगप्रतिबन्धकधनेच्छावान् । बलीयान् बलात्कारमात्रेणान्यायेन व्यवहरन् । वर्गप्रशंसी परमनोग्रहणार्थे परवर्गप्रशंसाशीलः । वनितासु द्वेष्टा स्त्रीविषयकक्रोधवान् । स च कामभोगप्रयत्नवतां तदलाभे भवतीति कामभोगाप्रयत्नादलाभदुःखित्वे अनेनोपलक्ष्येते ।

---

१९ ख. संभोगसंधिर्विषमेधमानो । ख. नृशंसधर्माः । शां. विषमेधमानो । शां. वनितां च । २० शां. ज्ञानं च सत्यं च दमः श्रुतं च । शां. धृतिः शमश्च महाव्रता द्वादश ।

यस्त्वेतेभ्यः प्रभवेद्द्वादशभ्यः
सर्वामपीमां पृथिवीं स शिष्यात् ।
त्रिभिर्द्वाभ्यामेकतो वाऽर्थितो यः
तस्य स्वमस्तीति स वेदितव्यः ॥ २१ ॥
*दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम् ।
तानि सत्यमुखान्याहुर्ब्राह्मणा ये मनीषिणः ॥२२॥

एते सप्त नृशंसरूपा धर्माः ॥ १९ ॥ गुणानाह—धर्म इति । धर्मो नन्वभिसंहितफलकर्मजन्यः । सत्यं यथादृष्टानुभाषणम् । दमस्तपःक्लेशसहिष्णुता । तपो निवृत्तिलक्षणधर्मजनकः कायक्लेशः । अमात्सर्यमक्रोधः । ह्रीर्लज्जाऽकर्तव्यकरणनिवृत्तिप्रयत्नः । तितिक्षा क्षमा कथंचिदुत्पन्नेपि क्रोधे तत्संतानविच्छेदेच्छा । अनसूया परगुणनाशेच्छायाः अभावः । यज्ञाः नित्यत्वेन देवताभ्यो हविस्त्यागाः । दानमितरेभ्यः प्राणिभ्यः तदपि नित्यबुद्धया । धृतिर्दुखहेतुनिपातेऽपि प्रारब्धकर्मापरिहाणहेतु ज्ञानम् । श्रुतं गुरूपदेशपूर्वकं वेदशास्त्रार्थबोधः । संमतानि गुणत्वेन ब्राह्मणस्य वेदार्थज्ञानहेतुः ॥ २० ॥

[ दुर्घ० ] 'संभोगसंविद्विषयावसानो दत्त्वानुतापी कृपणो बलीयान् । बहुप्रशंसी वनितां च द्वेष्टा एते परे सप्त नृशंसरूपाः ॥' संभोगसंविन्नित्यसंभोगशीलः । विषयावसानो विषयेष्वेवानुरक्तः । दत्त्वानुतापी दत्त्वात्मानं जुगुप्सते । कृपणो धने सत्यप्यदाता । बलीयान्सर्वत्रबलप्रधानः । बहुप्रशंसी त्रिवर्गप्रशंसी न मोक्षं प्रशंसते । वनितां च द्वेष्टा वनितामेव सर्वकार्येष्वादिशति न स्वयं व्याप्रियते । यदिवा वनिताद्वेषी । एवं पूर्वोक्तैः षड्भिरिदानीमुक्तैः सप्तभिस्त्रयोदश नृशंसरूपा निष्ठुररूपा दुर्भगा इत्यर्थः ॥१९॥ द्वादशगुणानाह—'धर्मश्च सत्यं च दमस्तपश्च अमात्सर्यं ह्रीस्तितिक्षानसूया । यज्ञश्च दानं च धृतिः श्रुतं च मतानि वै द्वादश ब्राह्मणस्य ।' सुगममेतत् ॥ २० ॥

[ शंक० ] ये 'ज्ञानादयो द्वादश चाततानाः' इति पूर्वत्र प्रस्तुताः, ते वर्णिताः । इदानीं गुणस्तुतिं करोति—यस्त्विति । यस्तु एतेभ्यः पूर्वोक्तेभ्यः अप्रवसेत् प्रवासं न करोति तैरेव समन्वितो भवेत्, स सर्वामिमां पृथिवीं प्रशिष्यात् प्रशास्ति आत्मवश्यां करोति । य एतेषां मध्ये त्रिभिर्द्वाभ्याम् एकतः एकस्मात् वा अविमुक्ताः, एतेषामन्यतमेनापि समन्वितास्ते एते क्रमेण विशिष्टा ज्ञानिनो भूत्वा मौनभूताः ब्रह्मभूता भवन्ति ॥ २० ॥

[ नील० ] यस्त्विति सर्वगुणाढ्यो ब्रह्मवित् सत्यकामादिगुणभाक् भवति । यस्तमात्मानमनुविद्य विजानाति स सर्वांश्च लोकानाप्नोति सर्वांश्च कामानिति श्रुतेः । एतेषां मध्ये त्रिभिर्द्वाभ्यामेकतो वा अर्थितः अर्थः वित्तं संजातमस्य स तथा स्वं दैवं वित्तम् ॥ २१ ॥ दमः जितेन्द्रियत्वम् । त्यागः कर्मणामीश्वरेऽर्पणम् । अप्रमादस्तत्त्वानुसंधानम् । अमृतं मुक्तिः । सत्यमुखानि सत्यप्रधानान्येव एतानि फलानि भवन्तीत्यर्थः ॥ २२ ॥

[ अर्जु० ] एषां गुणानां फलमाह—यस्त्वेतेभ्यः प्रवसेद् द्वादशभ्यः सर्वामपीमां पृथिवीं स शिष्यात् । त्रिभिर्द्वाभ्यामेकतो वान्वितो यो नास्ति स्वमस्तीति स वेदितव्यः । एतेभ्यो गुणेभ्यः प्रवसेत् विषयाभिवर्तते स सर्वां पृथिवीं प्रशास्यापि यदि विष्ठेत् नास्ति स्वमस्तीति वेदितव्यम् । किंवा वक्तव्यं द्वादशभ्य इति, त्रिभिर्द्वाभ्यामेकतोऽपि त्रिभिर्धर्मत्यागाऽप्रमादैः, द्वाभ्यां दमत्यागाभ्यां, एकतो दमेनैव ॥२१॥ त्रीनाह—दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम् । अमृतं मोक्षः । द्वादशानां पुराणप्रसिद्धं प्रसिद्ध्यन्तरमाह—तानीति । सत्यसुखमिति द्वादशानां परिभाषा ॥ २२ ॥

[ सर्व० ] यस्त्विति । एतेभ्यो गुणेभ्य एतद्गुणप्राप्त्यर्थं प्रवसेत्प्रवृत्तं कर्म त्यजेदिति यावत् । तथा चैतेषु मध्ये त्रिभिर्द्वाभ्यामेकतो वा यतोपि एकत एकेन प्राप्नुयामिष्टेनेति यदि प्रवसेत् स च सर्वां पृथिवीं प्रशास्यापि नास्य स्वमस्ति नास्य धनं बन्धनहेतुरस्तीति ततोपि तावन्मात्रेपि लक्षणे वेदितव्यम् ॥ २१ ॥ एतेषु मध्ये त्रिभिर्द्वाभ्यामेकत इति ये कथितास्तान्दर्शयति—दमस्त्याग इति । त्यागो दानपदोक्तः । पूर्वमप्रमादश्च परिगृहीतात्कर्मणो ध्वंसो धृतिपदेनामृतममृतत्वं सत्यमुखानि सत्यप्रधानानि एवं त्रिकमेकं च दर्शितम् । द्विकं तु दमादित्रयमध्यात्स्वयं बोद्धव्यमिति स्फुटतया न दर्शितम् ॥ २२ ॥

[ दुर्घ० ] त्रिभिर्द्वाभ्यामेकतो वार्थितो यस्तस्य स्वमस्तीति स वेदितव्यः । त्रिभिर्दमत्यागाप्रमादैर्द्वाभ्यां दमत्यागाभ्यामेकतो दमेनैव ॥ २१ ॥

[ लक्षा० ] [ नैव धर्मं सुधर्ममित्यत्र । धर्मं प्रवृत्तिधर्मं सुधर्मं निवृत्तिधर्मः ] यस्त्वेतेभ्यः प्रवसेदित्यत्र । एभ्यः गुणेभ्यः प्रवसेत् । तादर्थ्ये चतुर्थी एतद्गुणलाभाय प्रवसेत् स्वगृहं विहाय गुरुकुले निवसेत् । त्रिभिर्द्वाभ्यामेकतो वाऽविशिष्ट इत्यत्र उक्तगुणानां मध्ये त्रिभिर्गुणैर्द्वाभ्यां

२१ शां. यस्त्वेतेभ्योऽप्रवसे° । शां. सर्वमिमां पृथिवीं स प्रशिष्यात् । ख. प्रशास्यात् । त्रिभिर्द्वाभ्यामेकतमेन चापि नास्य स्वमस्तीति च वेदितव्यम् । शां. वाऽविमुक्ताः क्रमाद्विशिष्टा मौनभूता भवन्ति । २२ शां. नास्ति ।

*इतः प्रभृतिचत्वारिंशान्तानां श्लोकानां प्रायः सर्वासु टीकास्वन्यथान्यथा क्रमेण व्याख्यानान्मूलधृतक्रमाद्भ्रो व्याख्यातुमनूदितेषु श्लोकेषु तदर्थेषु व्याख्यायां च निवेशितो नतु सङ्गतिविच्छेदभयाट्टीका विभज्य मूलधृतक्रमेण योजिता ।

**दमो ह्यष्टादशगुणः प्रतिकूलं कृताकृते ।**
**अनृतं चाभ्यसूया च कामार्थौ च तथा स्पृहा ॥२३॥**
**क्रोधः शोकस्तथा तृष्णा लोभः पैशुन्यमेव च ।**

गुणाभ्यामेकतो वा यः अविशिष्टः सः तरस्वी संसारतरणवान् न स्यादिति वेदितव्यः ॥ २१ ॥

[ शंक० ] इदानीं दमदोषानाह श्लोकत्रयेण—दम इति । दमः अष्टादशदोषः स्यात् अष्टादशदोषसमन्वितो भवति । किमेतेषां दोषत्वमिति चेत्—प्रतिकूलं कृते भवेत् एतेषामन्यतमे कृते दमस्य प्रतिकूलं कृतं भवेत् । के ते ? अनृतम् अयथार्थवचनम् । पैशुनं परदूषणवचनम् । तृष्णा विषयेप्सा । प्रातिकूल्यं सर्वेषां प्रतिकूलता । तमः अज्ञानम् । अरतिः अयथालाभसंतुष्टिः । अथवा, रतिः स्त्रीभोगेष्वभिरतिः ॥ २१ ॥ लोकद्वेषः लोकानामुद्वेगाचरणम् । अभिमानः सर्वेषामप्रणतिभावः । विवादः जनकलहाचरणम् । प्राणिपीडनं स्वदेहपूरणाय प्राणिहिंसनम् । परिवादः समक्षे परदूषणाभिधानम् । अतिवादः निरर्थकोऽतिप्रलापः । परितापः वृथादुःखचिन्तनम् । अक्षमा द्वन्द्वासहिष्णुता । अधृतिः इन्द्रियार्थेषु चपलता ॥ २२ ॥ असिद्धिः धर्मज्ञानवैराग्याणाम् । पापकृत्यं प्रतिषिद्धाचरणम् । हिंसा अविहितहिंसा । इति इत्थं दमदोशाः प्रकीर्तिताः । एतैः अनृतादिभिः दोषैः विमुक्तो यो गुणः सः दम इति उच्यते सद्भिः ॥ २३ ॥

[ नील० ] अष्टादशदोषत्यागादष्टादशगुणत्वं दमस्याह—दम इति । कृते कर्मणि वैदिके प्रतिकूलमश्रद्धा आलस्यादि च । अकृते उपवासव्रतादौ प्रतिकूलं क्षुधाजिव्हालौल्यादि इदं द्वयमेको दोषः १ अनृताऽभ्यसूये प्रसिद्धे ३ कामः स्त्र्यभिलाषः ४ अर्थो धनार्जनार्थेऽतियत्नः ५ स्पृहा धनाद्यभिलाषः ६ ॥ २३ ॥ पैशुन्यं परदोषसूचकत्वं ११ परितापः अतिदुःखित्वम् १४ अरतिः सत्क्रियाऽनभिलाषः १५ ॥ २४ ॥ अपस्मारः कर्तव्याविस्मरणम् १६ अतिवादः पराक्रोशः १७ संभावना महत्त्वबुद्धिः १८ ॥२५॥

[ अर्जु० ] दमस्याङ्गान्याह—दमो ह्यष्टादशगुणः प्रतिकूलं कृताकृते । अनृतं चाभ्यसूया च कामार्थौ च तथा स्पृहा । क्रोधः शोकस्तथा लोभो दम्भः पैशुन्यमेव च । मत्सरश्च विहिंसा च परितापस्तथाऽरतिः । अपस्मारः सातिवादस्तथा संभावनात्मनि । गुणोऽङ्गमङ्गानां निवृत्तिरूपत्वान्निवृत्तेस्तु प्रतियोगिनिरूपणीयत्वात्प्रतियोगिनमाह—प्रतिकुलमित्यादि । प्रतिकूलं विरोधि, दमस्य कृतं सुकृतं,

**मत्सरश्च विहिंसा च परितापस्तथाऽरतिः ॥ २४ ॥**
**अपस्मारश्चातिवादस्तथा संभावनाऽऽत्मनि ।**
**एतैर्विमुक्तो दोषैर्यः स दान्तः सद्भिरुच्यते ॥२५ ॥**

तष्टकाम्यं(?) दमविरोधि अकृतं, दुष्कृतं कामार्थौ प्रीतिकार्यारम्भौ स्पृहा सुखादिलाभः । तृष्णा पेयाभिलाषः । लोभो धनाभिलाषः । इत्यपि पौनरुक्तम् । अपस्मारः प्रस्मरणम् । एषामष्टादशानां विमुक्तिर्दमगुणाः । केचिन्मदोऽष्टादशदोषः स्यादिति पठित्वा एते दोषा इति वदन्ति ॥ २३ ॥

[ सर्व० ] अत्र प्रसङ्गान्मदस्य विरोधिन आह । दोषा दूषकारिबोधनः । प्रतिकूलं प्रातिकूल्यं दुःखहेतुत्वेन तावान् कृताकृतेपि तपसि कृतस्य दुःखं प्रत्यक्षसिद्धम् । तत्तुल्यतयाप्यकृते दुःखभावनात् अप्रवृत्तिरिति कृतग्रहणम् । अभ्यसूया परस्मिन्दोषारोपः । कामार्थौ कामः स्त्रीभोगाद्यभिलाषः । अर्थो धनं तस्मिन्स्पृहेति तद्भोगेच्छायाः प्रापकत्वेन तपःक्लेशासहनात् ॥ २३ ॥ गौडपाठः—'क्रोधः शोकस्तथा तृष्णा लोभः पैशून्यमेव च । मत्सरश्च विहिंसा च परितापस्तथाऽरतिः । अपस्मारश्चातिवादस्तथा संभावनात्मनि । एतैर्विमुक्तो दोषैर्यः स दान्तः सद्भिरुच्यते ।' अस्यार्थः—तृष्णा सुखसन्तानाभिलाषः । लोभस्तत्साधनाविच्छेदेच्छा । पैशून्यं वस्तुसत्परदोषप्रकाशनम् । परितापोऽल्पदुःखहेतुसन्निपातेप्यतिदुःखित्वम् । अरतिः सत्क्रियानभिलाषः । अपस्मारः कर्तव्यविस्मरणम् । अतिवादः पराक्रोशः । तपसाभावितान्धता (?) आत्मोत्कर्षप्रत्यय इत्यष्टादश ॥ २४ ॥ २५ ॥

[ दुर्ध० ] एतदेवाह—दमस्त्यागोऽप्रमादश्च एतेष्वमृतमाहितम् ( २२ ) मदोऽष्टादशदोषः स्यात्त्यागो भवति षड्गुणः ( २६ ) अष्टौ दोषाः प्रमादस्य तान्दोषान्परिवर्जयेत् ( ३६ ) मदोऽष्टादशदोषः स्यात्प्रातिकूल्यं कृताकृते । अनृतं चाभ्यसूया च कामार्थौ च तथा स्पृहा ( २३ ) क्रोधशोकौ तथा लोभो दम्भः पैशून्यमेव च । मत्सरश्च विहिंसा च परिहासस्तथारतिः ( २४ ) अपस्मारः साभिवादस्तथा संभावनात्मनि ( २५ ) एते मददोषाः । त्यागो भवति षड्गुण इति । श्रेयांश्च षड्विधस्त्यागः प्रियं प्राप्य न हृष्यति ( २८ ) अप्रिये च समुत्पन्ने व्यथां जातु न गच्छति । इष्टान्पुत्रांश्च दारांश्च न च याचेत कर्हिचित् ( ३२ ) अर्हते याचमानाय प्रदेयं यच्छुभं भवेत् ( ३३ ) अप्यवाच्यं वदत्येव स तृतीयो गुणः स्मृतः ( २९ ) त्यक्तैर्द्रव्यैर्यद्भवति न्यायमुक्तैश्च कामतः । ( ३० ) न च

२३ शां. शदोषःस्यात् । शां. कृते भवेत् । अनृतं पैशुनं तृष्णा प्रातिकूल्यं तमोऽरतिः । २४ शां. लोकद्वेषोऽभिमानश्च विवादः प्राणिपीडनम् । परिवादोऽतिवादश्च परितापोऽक्षमाधृतिः । २५ शां. असिद्धिः पापकृत्यं च हिंसा चेति प्रकीर्तिताः ॥

मदोऽष्टादशदोषः स्यात्त्यागो भवति षड्विधः ॥
विपर्ययाः स्मृता एते मददोषा उदाहृताः ॥ २६ ॥
श्रेयांस्तु षड्विधस्त्यागस्तृतीयो दुष्करो भवेत् ।
तेन दुःखं तरत्येव भिन्नं तस्मिन् जितं कृते ॥२७॥
श्रेयांस्तु षड्विधस्त्यागः श्रियं प्राप्य न हृष्यति ।
इष्टापूर्ते द्वितीयं स्यान्नित्यवैराग्ययोगतः ॥ २८ ॥
कामत्यागश्च राजेन्द्र स तृतीय इति स्मृतः ।
अप्यवाच्यं वदन्त्येतं स तृतीयो गुणः स्मृतः ॥ २९ ॥
त्यक्तैर्द्रव्यैर्यद्भवति नोपयुक्तैश्च कामतः ।
न च द्रव्यैस्तद्भवति नोपयुक्तैश्च कामतः ॥ ३० ॥
न च कर्मस्वसिद्धेषु दुःखं तेन च न ग्लपेत् ।
सर्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत् ॥ ३१ ॥
अप्रिये च समुत्पन्ने व्यथां जातु न गच्छति ।
इष्टान्पुत्रांश्च दारांश्च न याचेत कदाचन ॥ ३२ ॥
अर्हते याचमानाय प्रदेयं तच्छुभं भवेत् ।
अप्रमादी भवेदेतैः स चाप्यष्टगुणो भवेत् ॥ ३३ ॥

---

कर्मसु सिद्धेषु दुःखं तेषु न च ग्लपेत् ( ३१ ) एते षट् त्यागगुणाः । यः खलु प्रियं प्राप्य न हृष्यति अप्रिये च न व्यथते । अयाच्यान्न याचते अर्हते विधिकारिणे तथा याचमानायावाच्यमपि वदते यो ददाति सतृतीयो गुणः पूर्वोक्तगुणत्रयेण सहवर्तेत इति सतृतीयश्चतुर्थ इत्यर्थः । त्यक्तैर्द्रव्यैर्यद्भवति सुखं न तत्कामयेत् । उपयुक्तैर्भवतीति यस्य मनः सोऽपि पञ्चमो गुणः । पूर्वोक्तगुणत्रयेऽपि आरम्भवैकल्येऽपि यस्य न दुःखं तेन च हेतुना न ग्लायते स षष्ठो गुणः । एवं त्यागोऽपि षड्विधो भवति ॥ २५ ॥

[ लक्षा० ] दमोऽष्टादशदोषः स्यादित्यत्र अष्टादश दोषा यस्येति समासः ॥ २३ ॥

[ शंक० ] इदानीं मददोषानाह—मद इति । मदोऽष्टादशदोषः स्यात् त्यागश्च षड्विधो भवति । विपर्ययाः स्मृता एते अनृतादिर्हिंसान्ताः ये दमदोषत्वेन स्मृताः, त एते विपर्ययाः स्मृताः सत्यादिरूपत्वेन स्मृताः मददोषाः मदनाशकराः उदाहृताः । के ते ? सत्यापैशुनातृष्णाप्रातिकूल्यातमोऽरतिलोकाद्वेषानभिमानाविवादाप्राणिहिंसापरिवादानतिवादापरितापक्षमाधृतिसिद्धयपापकृत्याहिंसा इत्येते मदनाशकरा उदाहृताः ॥ २४ ॥ 'त्यागो भवति षड्विधः' इत्युक्तम् । तत्राह—श्रेयानिति । श्रेयान् तु षड्विधस्त्यागः; तत्र एतेषु षड्विधत्यागेषु मध्ये तृतीयः त्यागो दुष्करो भवति दुःखसंपाद्यः । तेन तृतीयेन त्यागेन दुःखम् आध्यात्मिकादिभेदभिन्नं तरन्त्येव तस्मिन् त्यागे कृते सति सर्वं जितं भवेत् ॥ २५ ॥ त्यागषट्कं दर्शयति—अर्हते इति । अर्हते योग्याय याचमानाय पुत्रान् वित्तं ददाति इति यत् तदेतत्त्यागद्वयं षण्णां मध्ये प्रथमम् । इष्टापूर्तं द्वितीयं स्यात् इष्टं श्रौते कर्मणि यद्दानम् । पूर्तं स्मार्तकर्मणि । इष्टं देवेभ्यो दत्तम्, पूर्तं पितृभ्य इति केचित् । नित्यं वैराग्ययोगतः विशुद्धसत्त्वस्यानित्यत्वादिदोषदर्शिनः ततो विरक्ततया धनादिपरित्यागः कामत्यागश्च राजेन्द्र, स तृतीय इति स्मृतः । किमेतैर्भवतीत्यत आह—अप्रमादीति । अप्रमादिनां कामो नश्यति । उक्तं राजधर्मेषु—'अपध्यानमलो धर्मो मलोऽर्थस्य निगूहनम् । अप्रमादमलः कामो भूयः स गुणवर्धनः' । य एतैः षड्भिः समन्वितः त्यागैः, सः अप्रमादी भवेत् । सः अप्रमादः अष्टगुणः अष्टभिर्गुणैः समन्वितो भवति ॥ २६ ॥ २७ ॥

[ नील० ] मद इति । येषां विपर्यया दमगुणत्वेन उक्तास्त एव कृताकृतप्रतिकूलादयोऽष्टादश । तथा वक्ष्यमाणस्य षड्विधत्यागस्य च विपर्ययाः षट् । ते च लक्ष्मीप्राप्तौ हर्षः १ अप्रिये जाते व्यथा २ स्वीयेषु याच्ञा ३ पात्रेष्वप्रदानं ४ सत्यधिकारे इष्टापूर्तयोरकरणम् ५ कामस्यात्यागः प्रमादश्च ६ एते चतुर्विंशतिर्मददोषाः ॥२६॥ श्रेयान्प्रशस्ततरः तृतीयो वक्ष्यमाणः कामत्यागः तस्मिन्कामत्यागे कृते सति भिन्नं भेदः भावे निष्ठा द्वैतमिति यावत् स एव दुःखं 'द्वितीयाद्वै भयं भवति । यत्रान्यत्पश्यत्यन्यच्छृणोति तदल्पं अथ यदल्पं तद्दुःखम्' इत्यादिश्रुतिभ्यः । कामत्यागादेव सर्वदुःखनिवृत्तिरूपो मोक्षः सिद्धः । तथा च श्रुतिः । यदा सर्वे प्रमुच्यन्ते कामा येऽस्य हृदि स्थिताः । अथ मर्त्योऽमृतो भवत्यत्र ब्रह्म समश्नुत इति ॥ २७ ॥ त्यागमेवाह श्रेयानिति । श्रियं लक्ष्मीं विद्यां च न हृष्यति न दृप्यति १ इष्टं यागहोमादि आपूर्तं तडागारामादि २ ॥ २८ ॥ कामत्यागस्य परां काष्ठामाह—अपीति । अवाच्यं निर्वृत्तिकत्वात् तथा चोदाहृतं । यदा सर्वे प्रमुच्यन्ते इति ॥ २९ ॥ त्यक्तैरिति द्रव्यैः स्त्र्यादिभिस्त्यक्तैरेव यत् निष्कामत्वं

---

२६ ख. नास्ति । २७ ख. नास्ति । शां. तृतीयस्त्वत्र दुष्करः । शां. तरन्त्येव तस्मिंस्त्यक्ते जितं भवेत् । २८ ख. प्रियं प्राप्य । इत उत्तरमर्धद्वयं ख. नास्ति । शां. पूर्वार्धं नास्ति । त्रयस्त्रिंश पूर्वार्धेनास्योत्तरार्धेन सचैकः श्लोकः । तत्र पाठभेदः—याचमानाय पुत्रान्वित्तं ददाति यत् । इष्टापूर्तं…नित्यं । २९ ख. अस्योत्तरार्धमारभ्य एकत्रिंशान्ताः सार्धद्वाविंशोत्तरं ख. पुस्तके । शां. त्रयस्त्रिंशस्योत्तरार्धेनायमुत्तरार्धवान् । अस्य चोत्तरार्धमारभ्याद्वात्रिंशं श्लोका न सन्ति । ३० ख. यो भवति नोपभुंक्ते । अस्योत्तरार्धं नास्ति । ३१ ख. न च कर्मसु तद्धीनः शिष्यबुद्धिर्नरो यथा । सर्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत् । षट्प्रकारमिमं त्यागं बुद्धान्यन्नावाशिष्यते । दमोऽष्टादशदोषः स्यात्त्यागो भवति षड्गुणः ॥ ३२ ख. नचार्छति । ख. नचान्यस्तद्विधो भवेत् । ३३ ख. अर्हते या……तद्वचो भवेत् अप्यवाच्यं वदत्येष स तृतीयो गुणः स्मृतः ।

भवति तत्कामपूर्वकमुपभुक्तैर्न भवति । यथोक्तं–न जातु कामः कामानामुपभोगेन शाम्यतीति । निष्कामत्वं बहुभिर्लब्धैरपि द्रव्यैर्न भवति नाप्युपयुक्तैः काम्यद्वारा व्ययीकृतैरित्यर्थः ३ ॥ ३० ॥ न दुःखं कुर्यादिति शेषः तेन च दुःखेन न ग्लपेत् ग्लानिं न प्राप्नुयात् गुणैः कीर्त्यादिभिः ॥ ३१ ॥ अप्रिये कीर्तिवित्तनाशादिप्रभवे समुत्पन्नेऽपि यो व्ययां न गच्छति स चतुर्थस्त्याग इत्यर्थः ४ पञ्चमं त्यागमयाच्ञारूपमाह—इष्टानिति ५ ॥ ३२ ॥ षष्ठमाह अर्हत इति । अर्हते योग्याय ६ षड्विधत्यागफलमाह अप्रमादीति । स च अप्रमादश्च ॥ ३३ ॥

[ अर्जु० ] त्यागभेदानाह—श्रेयांस्तु षड्विधस्त्यागः प्रियं प्राप्य न हृष्यति ( २८ ) अप्रिये तु समुत्पन्ने व्यथां जातु न चर्च्छति । इष्टान् पुत्रांश्च दारांश्च न याचेत कथंचन ( ३२ ) अहितं याचमानाय प्रदेयं तद्वचो भवेत् ( ३३ ) अप्यवाच्यं वदत्येवं स तृतीयो गुणः स्मृतः ( २९ ) त्यक्तैर्द्रव्यैर्यद् भवति नोपयुङ्क्ते च कामतः (३०) न च कर्मसु सिद्धेषु दुःखं तेन प्रकल्पयेत् ( ३१ ) श्रेयांस्त्विति तुशब्दोऽवधारणे प्रकारान्तरत्यागानाम् । त्यागतोऽसत्वात् । न हृष्यतीति रागत्यागः व्यथां न चार्च्छति इति द्वेषत्यागः । प्रदेयमपि याचमानाय प्रतिनिधिमकृत्वा देयमित्याह—इष्टानिति । अहितं दुःखकरं दातुर्यथा भवति तथा याचमानाय प्रदेयं तद्वचो भवेदित्यन्वयः । तद्वचस्तस्य याचकस्य वचः, वचःशब्देनात्र तदर्थो देयोऽर्थो ग्राह्यो विषये विषयिण उपचारात् । याचितमवश्यं देयमिति यावत् । स एव याचको यद्यवाच्यमपि वदति तत्रापि तदभावात्परकीयवाच्यवादक(?) प्रतिषेधकं वचस्त्याज्यमित्यर्थः । यस्य त्यागस्य च तृतीयो गुणः प्रकारः ॥ चतुर्थं प्रकारमाह त्यक्तैरिति द्रव्यैस्त्यक्तैर्यस्त्यागो भवति स चतुर्थस्त्यागः पूर्वत्यागा रागादित्यागाः अयं तु द्रव्यत्याग इति यावत् ॥ पञ्चमप्रकारमाह–नोपयुङ्क्ते इति । रागनिबन्धनभोगत्यागः ॥ षष्ठमाह–न चेति । तद्धीनो द्रव्यत्यागहीनो वेत्यर्थः ॥ शिष्यत्वमाचर्यादिति बुद्धिर्यस्य स शिष्यबुद्धिः । यथायं तथा द्विविधत्यागीति वाक्यार्थः । अन्ये त्वेवं व्याचक्षते- यः प्रियं प्राप्य न हृष्यति अप्रिये च न व्यथति अयाच्यं न याचते अर्हतेऽधिकारिणे तथा याचमानायावाच्यमपि वदते यो ददाति स तृतीयेन पूर्वोक्तगुणत्रयेण सह वर्तत इति सतृतीयश्चतुर्थ इत्यर्थः । त्यक्ते यद् भवति सुखं तदुपयुक्ते न भवतीति मनो यस्य सोऽपि पञ्चमो गुणः । तथा कर्मसु अप्रसिद्धेषु आरम्भवैकल्येऽपि यस्य न दुःखं तेन च हेतुना न दूयते स षष्ठो गुणः । एवं त्यागस्य षड्विधतेति । यथोक्तगुणशालिनो दैवादत्यक्तानामपि द्रव्याणां त्याग एवेत्याह–सर्वैरेव गुणैर्युक्तो द्रव्यवानपि यो भवेत् ( ३१ ) सर्वैः षड्भिर्यथोक्तैर्युक्तो द्रव्यवानपि यो भवेत् सोऽपि त्यागीति शेषः । यदाह जनकः ‘ मिथिलायां प्रदग्धायां न मे किंचन दह्यति ’ इति ॥ २८–३३ ॥

[ सर्व० ] एवं दमस्य गुणभेदेन प्रकारानभिधायेदानीं दानरूपस्य त्यागस्य प्रकारान्दर्शयन्नदानरूपस्यापि संपदो दर्शयति—श्रेयांस्त्विति । श्रेयान् श्रेष्ठो यथोक्तत्यागात् । प्रियमिष्टं साधनं प्राप्य न हृष्यतीति । प्रियविषयरागत्यागः । अप्रियं चेत्यप्रियविषयव्यथापरनामद्वेषत्याग इति त्यागद्वयमुक्तम् ॥ २८ ॥ इष्टानिति । इष्टान् पुत्रादीन् याच्याँल्लक्षीकृत्य प्रार्थनार्थं धनं देहीति याचितुर्वचोऽहितं (अहित?) हेतुत्वात् ॥३२॥ तदपि बलो याचमानायाप्यवाच्यमवचनीयं वदत आक्रोशकाय प्रदेयमिति तृतीयो गुणस्त्यागरूपमुभयत्र वचःशब्देन तदर्थमभिप्रैति ॥ २९ ॥ त्यक्तैर्द्रव्यैर्यो भवतीति चतुर्थः । अयाचितेनापि द्रव्याणि देयानि एवं यो भवति सोपि गुण इति शेषः । नोपभुङ्क्ते कदाचनेति उपभोगत्यागः । उपरिपतितानपि विषयांस्तेषु सङ्गतिकालेऽपि नोपयुङ्क्ते ॥ ३० ॥ षष्ठं गुणमाह न चेति । न च कर्मसु यागादिषु तद्धीनस्त्यागहीनः कर्मसु दक्षिणान्तेषु धनस्यावश्यत्यागः इति षष्ठो गुणः । उपसंहरति–‘शिष्यबुद्धिर्मतो यथा । सर्वैरपि गुणैर्युक्तो द्रव्यवानपि यो भवेत् ’ इति । एतैः सर्वैर्गुणैर्युक्तो द्रव्यवान् वित्तवानपि यो भवेत् सोऽपि यथा शिष्यबुद्धिरनुशासनीयबुद्धिः शिष्यो योग्योऽन्यस्तथैव शिष्ययोग्यः ब्रह्मज्ञानयोग्यः उक्तत्यागप्रचाराभाव एव द्रव्यस्य ज्ञानविरोधित्वादित्यर्थः ॥ ३१ ॥ एवं प्रपञ्चेन दमत्यागयोर्गुणानुक्त्वाऽस्यागुणान् सङ्क्षेपेणाह—मदोऽष्टादशदोष इति । दमस्य विरोधी दमाभावोऽत्र मदशब्देनोक्तः । अथान्यत्राप्येते मदा मदान्धानामेत एव सतां दमा इति । एवं ये मददोषा विरोधिनस्ते दमस्य गुणा इति अर्थात् दमोऽष्टादशगुण इत्युक्तं भवतीति बोध्यम् । त्यागस्याह—त्याग इति ॥ २६ ॥

[ लक्षा० ] विपर्ययात्स्मृता एते इत्यत्र स्मृताः पूर्वश्लोकेन स्मारिताः । एते प्रागुक्ता दमदोषा एव विपर्ययात् शमस्यापि विपरीतकरणात् शमदोषा उदाहृताः ॥ २६ ॥ त्यक्त्वैव विप्रियमित्यत्र विप्रियं कामं त्यक्त्वैव बाल्य एव त्यक्त्वा भूयः कामतः नोपयुङ्क्ते फलं नोपयुङ्क्ते ॥३१॥ अप्रिये कामे समुत्पत्य सकृत्पतित्वा ॥ ३२ ॥ अप्रमादी भवेदित्यत्र एतैः उक्तैः लोभमोहकामत्यागैः एतत्पङ्क्तिपठितत्वादुक्तप्रायैः क्रोधमदमत्सरत्यागैश्चेति षड्भिस्त्यागैः । स चापि अप्रमादोऽपि ॥ ३३ ॥

सत्यं ध्यानं समाधानं चोद्यं वैराग्यमेव च ।
अस्तेयं ब्रह्मचर्यं च तथाऽसंग्रहमेव च ॥ ३४ ॥
एवं दोषा मदस्योक्तास्तान्दोषान्परिवर्जयेत् ।
तथा त्यागोऽप्रमादश्च स चाप्यष्टगुणो मतः ॥३५॥
अष्टौ दोषाः प्रमादस्य तान्दोषान्परिवर्जयेत् ।
इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत ।
अतीतानागतेभ्यश्च मुक्त्युपेतः सुखी भवेत् ॥३६॥
सत्यात्मा भव राजेन्द्र सत्ये लोकाः प्रतिष्ठिताः ।
ताँस्तु सत्यमुखानाहुः सत्ये ह्यमृतमाहितम् ॥ ३७॥
निवृत्तेनैव दोषेण तपोव्रतमिहाचरेत् ।
एतद्धातृकृतं वृत्तं सत्यमेव सतां व्रतम् ॥ ३८ ॥

[ शंक० ] के ते ? तान् दर्शयति—सत्यमिति । सत्यं यथार्थसंभाषणम् । ध्यानं चेतसः कस्मिंश्चिच्छुभाश्रये मण्डलपुरुषादौ तैलधारावत्संततयवच्छेदिनी प्रवृत्तिः । समाधानं प्रणवेन विश्वाद्युपसंहारं कृत्वा स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनावस्थानम् । चोद्यम् 'कोऽहं कस्य कुतो वा' इत्यादि । वैराग्यं दृष्टानुश्रविकविषयवितृष्णता । अस्तेयम् अचौर्यमात्मनो द्रव्यस्य वा । आत्मचौर्यमुक्तम्—'योऽन्यथा सन्तमात्मानम्' इति । ब्रह्मचर्यम् अष्टाङ्गमैथुनत्यागः । तथा चोक्तम्—'स्मरणं कीर्तनं केलिर्वीक्षणं गुह्यभाषणम् । संकल्पोऽध्यवसायश्च क्रियानिष्पत्तिरेव च ॥ एतन्मैथुनमष्टाङ्गं प्रवदन्ति मनीषिणः । विपरीतं ब्रह्मचर्यमेतदेवाष्टलक्षणम्' इति । असंग्रहः अपरिग्रहः पुत्रदारक्षेत्रादीनाम् । एतान्परिपालयेत् ॥ २८ ॥ दोषान् विवर्जयेदित्याह—एवमिति । दमोऽष्टादशदोषः स्यादिति ये दोषा उक्ताः, तान् दोषान् परिवर्जयेत् । कस्मादित्याह—तेषु दोषेषु त्यक्तेषु प्रमादी न भवेदित्यर्थः । सोऽपि अप्रमादः अष्टगुणो मतः; 'सत्यं ध्यानम्' इत्यादिना पूर्वमेवोद्दिष्टत्वादित्यर्थः ॥ २९ ॥ किं तदिति चेत्, तत्राह—इन्द्रियेति । हे भारत, इन्द्रियेभ्यः सविषयेभ्यः पञ्चभ्यः वर्तमानेभ्यः मनसश्चैव तथा अतीतेभ्यः अनागतेभ्यश्च मुक्तश्चेत्, स सुखी भवेत् मुक्त एव भवेदित्यर्थः ॥ ३४ ॥ इदानीं सत्यस्तुतिः क्रियते—सत्येति । सत्यात्मा सत्यस्वरूपो भव हे राजेन्द्र, सत्ये लोकाः प्रतिष्ठिताः तांस्तु सत्यमुखान् सत्यप्रधानान् सत्याधीनात्मलाभान् आहुः । सत्ये हि अमृतमाहितम्; अमृतं मोक्षः ॥ ३० ॥ निवृत्तेनैव दोषेण 'क्रोधादयः' इत्यादिना पूर्वोक्तदोषरहितः सन् तपोव्रतमिहाचरेत् । एतत् धात्रा परमेश्वरेण कृतं वित्तं सत्यमेव सतां वरम् ॥ ३१ ॥

[ नील० ] सत्यं यथार्थं वचनं १ ध्यानं मूर्तेरीश्वरस्य आत्मनो वाऽनुसंधानं २ समाधानं संप्रज्ञातासंप्रज्ञातभेदेन द्विविधः समाधिः ३ चोद्यं तर्कः येन समाधिफले सार्वकाम्यादौ दोषमुन्नयन्ति ४ वैराग्यमुपरमः ५ अस्तेयं परस्वापहरणाभावः ६ ब्रह्मचर्यं स्त्रीसङ्गराहित्यम् ७ असंग्रहो निष्परिग्रहता ८ ॥ ३४ ॥ उक्तमनुवदत्यप्रमादप्रतियोगिनं प्रमादं वक्तुम्—एवमिति ॥ ३५ ॥ पञ्चभ्य इन्द्रियेभ्यः षष्ठान्मनसश्च स्वस्वविषये रागद्वेषोत्थाः षट् प्रमादाः अतीते नष्टपुत्रशोकादिजः सप्तमः अनागते पुत्रकामस्य तदभावे यः क्लेशः सोऽष्टमः प्रमादः एतेभ्यः प्रमादेभ्यो मुक्त्युपेतो मुक्तिं प्राप्तः सुखी भवेत् ॥ ३६ ॥ दमत्यागाप्रमादानुक्त्वा तेषां सत्यमुखत्वं प्रागुक्तं विवृणोति—सत्यात्मेति । सत्ये आत्मा चित्तं यस्य स तथा तान्दमत्यागाप्रमादान् ॥ ३७ ॥ दोषनिवृत्त्यैव तपःसिद्धिर्धात्रा कृतेत्याह—निवृत्तेनैवेति ॥ ३८ ॥

[ अर्जु० ] मदस्याष्टादश, क्रोधाद्यो द्वादश, विकत्थनादयः षट् ॥ २६ ॥ प्रमादस्याष्टौ दोषाः, कामः क्रोधश्च लोभश्च शोक ईर्ष्या भयं तथा । असूया च जुगुप्सा च अष्टौ दोषाः प्रमादतः । दोषवियोगस्य प्रमादस्थानान्याह—इन्द्रियेभ्यश्च पञ्चभ्यो मनसश्चैव भारत । अतीतानागतेभ्यश्च मुक्तोऽप्येतैः सुखी भवेत् । इन्द्रियेभ्यः षड्भ्यः, अतीतानागतेभ्यश्चेत्युपलक्षणं वर्तमानेभ्योऽपीति । अतीतेभ्यो मुक्तविषयास्मरणेन, अनागतेभ्यो मनोबाह्यपरिहारेण, वर्तमानेभ्यो दोषदर्शनेन । प्रमाददोषैरेतैर्विमुक्तः यः स इन्द्रियैरेतैर्युक्तोऽपि सुखी भवेत् ॥ ३६ ॥ प्रकृतमर्थमुपसंहरति—एतदिति ॥ ३८ ॥

[ सर्व० ] इदानीमप्रमादस्य गुणानभिधास्यन् प्रमाददोषाभिधानेनैव तद्विरोधिनोऽप्रमादस्य ते एव गुणाः सिध्यन्तीति तद्दोषानेव दर्शयति—अष्टौ दोषाः प्रमादस्येति । माद्यन्ति तेनेति । अर्थचिन्तनाभावः तस्य च शुश्रूषाश्रवणग्रहणधारणोहापोहार्थविज्ञानतत्वज्ञानानुचिन्तनबुद्धिगुणा एव दोष इत्यर्थः । इन्द्रियेभ्य इति । मनःषष्ठेभ्य इन्द्रियेभ्यस्तथाऽतीतं स्वभावमतिक्रम्यागतमुत्पन्नं विषयजातमिति यावत् । अनागतमनुत्पन्नम् तेभ्य एवेन्द्रियादिभ्यो हेतुभूतेभ्यः सुखी भवेत् सः ॥ ३६ ॥

[ दुर्घ० ] अष्टौ दोषाः प्रमादस्य । 'कामः क्रोधश्च

३५ शां. दमस्योक्ताः । शां. दोषत्यागेऽप्रमादः स्यात् । ३६ ख. अष्टदोषः प्रमादः स्यात् । ख. युक्तोप्येतैः सु° । शां. पूर्वार्धं नास्ति । उत्तरमर्धद्वयं च
४० शाद्धूर्ध्वम् । तत्र पाठभेदा–मुक्तश्चेत्स सुखी भवेत् । ३७ ख. नास्ति । ३८ ख. नास्ति । शां. वित्तं सत्यमेव सतां वरम् ।

**दोषैरेतैर्वियुक्तस्तु गुणैरेतैः समन्वितः ।**
**एतत्समृद्धमत्यर्थं तपो भवति केवलम् ॥ ३९ ॥**
**यन्मां पृच्छसि राजेन्द्र संक्षेपात्तमब्रवीमि ते ।**
**एतत्पापहरं पुण्यं जन्ममृत्युजरापहम् ॥ ४० ॥**

**धृतराष्ट्र उवाच—**
**आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कथ्यते जनः ।**
**तथा चान्ये चतुर्वेदास्त्रिवेदाश्च तथा परे ॥ ४१ ॥**
**द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथा परे ।**
**तेषां तु कतरः स स्याद्यमहं वेद वै द्विजम् ॥ ४२ ॥**

लोभश्च शोक ईर्ष्या भयं तथा । असूया च जुगुप्सा च अष्टौ दोषाः प्रमाद्यतः' ॥ ३६ ॥

[ लक्षा० ] सत्यं न्यूनमित्यत्र हीनन्यूना ऊनगर्ह्याविस्त्यभिधानात् न्यूनं न्यूनशब्दवाच्यगर्ह्यकर्मणो निवृत्तिर्न्यूनः । चोद्यं कर्मसंशये प्राप्ते गुरून् प्रति विचारणा ॥ ३४ ॥ स चापि दोषत्यागोऽपि ॥ ३५ ॥ अतीतानागतेभ्यश्चेत्यत्र अतीतानि नष्टद्रव्यमुद्दिश्य क्रियमाणानि दुःखानि । अनागतानि अनागतद्रव्यलाभाय क्रियमाणानि दुःखानि तेभ्यः ॥ ३६ ॥ तान् अष्टविधान् दोषत्यागगुणान् सत्यमुखान् प्रागुक्तसत्यादीनष्टगुणान् ॥ ३७ ॥ निवर्तभेव दोषेणेत्यत्र दोषेण दोषात् ॥ ३८ ॥

[ शंक० ] इदानीम् 'कथं समृद्धमत्यर्थम्' इत्यनेन उपक्रान्तमर्थमुपसंहरति—दोषैरिति । दोषैरेतैः 'क्रोधादयः' इत्यादिना पूर्वोक्तैः वियुक्तं तु गुणैरेतैः ज्ञानादिभिश्च समन्वितं यत् एतत्समृद्धमत्यर्थं तपो भवति केवलम् ॥३२॥ किं बहुना—यन्मामिति । हे राजेन्द्र, यन्मां पृच्छसि तत् संक्षेपात् समासतः ब्रवीमि ते, एतत् वक्ष्यमाणं पापहरं शुद्धं जन्ममृत्युजरापहम् ॥ ३३ ॥ एवमुक्ते प्राह धृतराष्ट्रः—आख्यानेति । आख्यानं पुराणं पञ्चमं येषां वेदानां ते आख्यानपञ्चमाः । श्रूयते छान्दोग्ये—'इतिहासपुराणं पञ्चमम्' इति । तैः आख्यानपञ्चमैः वेदैः भूयिष्ठम् अत्यर्थं कत्थ्यते श्लाघ्यते बहुमन्यते सर्वस्मादधिकोऽयमिति । कथ्यते इति केचित्पठन्ति । आख्यानपञ्चमैर्वेदैः कश्चिज्जनः पञ्चवेदीति कथ्यत इत्यर्थः । तथा चान्ये चतुर्वेदाः त्रिवेदाः अपरे द्विवेदाः एकवेदाश्च अनृचश्च तथा अपरे परित्यक्तऋगादिवेदाः अपरे । एतेषु मनुष्येषु अधिकं श्रेष्ठं ब्रूहि, यमहं ब्राह्मणं वेद विद्याम् ॥३५॥

[ नील० ] प्रश्नव्याख्यानमुपसंहरति—दोषैरिति ॥३९॥ एवं विद्यासाधनान्यधिगम्य अध्ययनगृहीताद्वेदादधिगतवेद्यानामनेकत्वं मन्वानः किं तद्वेद्यं श्रेष्ठमिति पृच्छति—आख्यानेति । आख्यानमितिहासपुराणादि पञ्चमं येषु तैर्वेदैः, सर्वं खल्विदं ब्रह्म ब्रह्मैवेदं विश्वं पुरुष एवेदं सर्वमित्यादिभिर्भूयिष्ठं नामादिप्रपञ्चादधिकतमं भूमाख्यं परं ब्रह्म तदेव जनः स्थावरजङ्गमरूपं जगदिति कथ्यते । अन्ये शाखिनः पुनश्चतुर्वेदाः चत्वारि वेदयन्ति ते तथा । चत्वारः पुरुषा इति शार्थः । शरीरपुरुषश्छन्दःपुरुषो वेदपुरुषो महापुरुष इति । छन्दो गायत्र्यादि नियताक्षरपादं तच्च यजुःसाम्नोरप्युपलक्षणम् । वेदः कर्मचोदनात्मकं ब्राह्मणम् । तथा त्रिवेदाः त्रीन् क्षरमक्षरमुत्तमं चेति पुरुषं वेदयन्ते त्रिवेदाः । क्षरं प्रधानं अमृताऽक्षरं हरः क्षरात्मानावीशते देव एक इति । अमृतो जीवः कूटस्थः सोऽक्षरं सुलोपआर्षः ईशते ईष्टे । क्षरः सर्वाणि भूतानि कूटस्थोऽक्षर उच्यते । उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृत इति ॥ ४१ ॥ तथा द्विवेदाः द्वे ब्रह्मणी वेदितव्ये शब्दब्रह्म परं च यदिति वाच्यवाचकयोरभेदेन शब्दब्रह्मशब्देनात्र कृत्स्नो नामरूपात्मकः प्रपञ्च उच्यते । परं च तदतीतमिति द्वयमपि वेद्यत्वेन वदन्ति । एकवेदाः एकधैवानुद्रष्टव्यं नेह नानाऽस्ति किंचनेत्यादय एकमेव वेद्यं वेदयन्ति । अनृचश्च ऋच्यते स्तूयते इति ऋक् ईश्वरः स पृथक्त्वेन नास्ति येषां तेऽनृचः ब्रह्माद्वैतवादिनः । एकवेदानां व्युत्थानकाले द्वैतमस्ति समाधौ तु बाधितं तद्भवति । अनृचां तु अवस्थाद्वयेऽपि द्वैताभावस्तुल्य इति भेदः । एतेषां षण्णां मध्ये स कतरः कतमः यमहं वेद जानीयां द्विजं ब्राह्मणं ब्रह्मविदमित्यर्थः । अत्र भूयिष्ठं जन इति प्रथमः सविशेषाद्वैतपक्षः । द्वितीयो निरीश्वरपक्षः सांख्यानां मीमांसकानां च । त्रिवेदास्तु पातञ्जला जीवेशजगतां भेदं वदन्तः । द्विवेदास्त्वौडुलोमाः कार्यात्मना भेदं कारणात्मना अभेदं च सत्यमेव वदन्तः । यथा कटकमुकुटाद्यात्मना भेदोऽपि सत्यः कनकात्मनाऽभेदोऽपि सत्य एवेति । एकवेदानामपि किंचिद्बाधयोग्यं सत्त्वासत्त्वाभ्यामनिर्वचनीयं द्वैतमस्त्येव व्यावहारिकं प्रातिभासिकात्सद्योबाध्यात् रज्जूरगादेर्विलक्षणं यावन्मोक्षमबाध्यम् । अनृचां तु दृष्टिसृष्टिवादिनां यथा रज्ज्वामुरगः स्रक् च कल्पिता एवमात्मनि जाग्रत्स्वप्नौ समसत्ताकौ इति भेदः । 'तत्राध्यारोपापवादाभ्यां निष्प्रपञ्चं प्रपञ्च्यते' इति न्यायेन आद्यं पक्षचतुष्टयं व्यवहारस्य पारमार्थिकत्वपरमध्यारोपदृष्ट्योपन्यस्तम् । अन्त्यः पक्षोऽपवाददृष्ट्या व्यवहारापलापेन । एकवे-

३९ ख. विमुक्तं तु । ख. समन्वितम् । शां. वियुक्तं तु ... समन्वितम् । ४० ख. राजन्द्रे किं भूयः श्रोतुमिच्छसि । ख. उत्तरार्धं नास्ति । शां. संक्षेपात्तद्ब्रवी° । शां. शुद्धं जन्म । ४१ शां. कत्थ्यते । ४२ ख. वेद ब्राह्मणम् । शां. एतेषु मेऽधिकं ब्रूहि यमहं वेद ब्राह्मणम् ।

सनत्सुजात उवाच—

एकस्य वेदस्याज्ञानाद्वेदास्ते बहवः कृताः ।
सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः ॥ ४३ ॥

दपक्षस्तु व्यामिश्रदृष्ट्याऽनिर्वचनीयाख्यया । एवमेव दृष्टित्रयमाश्रित्य शास्त्रमपि प्रवृत्तम् । आकृतेः परिणामादिति अध्यारोपकाले परिणामदृष्टिः सूचिता । ब्रह्मैव कनककुंडलन्यायेन जगदाकारेण परिणतम् । तथा च श्रुतिः—तदात्मानं स्वयम सत्यं चानृतं च सत्यमभवत् । सत्यं व्यावहारिकं जाग्रद्रज्ज्वादि । अनृतं प्रातिभासिकं स्वप्नरज्जूरगादि। एतदुभयात्मकं सत्यं कालत्रयाबाध्यं ब्रह्मैव प्राप्तमिति श्रुत्यर्थः । तथा आत्मनि चैवं विचित्राश्च हीति स्वप्नकाले आत्मनि जाग्रत्काले मायेन्द्रजालमरीचिकोदकादयो हि प्रसिद्धतराः सृष्टयो भवन्ति विचित्राश्च ताः । न च ताः न सन्तीति वक्तुं शक्यमनुभूयमानत्वात् । नापि सन्तीति ज्ञानेन सद्यो बाधात् । एवं ब्रह्मण्यपि विचित्राऽनिर्वचनीया सृष्टिरस्तीति सूत्रार्थः । तथा चास्य जगतोऽनिर्वचनीयत्वे श्रुतिराह—को अद्धा वेद क इह प्रवोचत्कुत आजाता कुत इयं विसृष्टिरिति । तं कोऽपि न वेद न कोऽपि प्रावोचदिति श्रुत्यर्थः । सेयं व्यामिश्रदृष्टिः । अपवाददृष्टिस्तु ‘आह च तन्मात्रम्’ इति सूचिता । स यथा सैन्धवखिल्य उदके प्रास्त उदकमेवानुविलीयेत । स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवं वा अरेऽयमात्मा कृत्स्नः प्रज्ञानघन इति श्रुत्या च दर्शिता । यथा जले प्रास्तः सैन्धवखिल्यः स्वोपादानमुदकं जले लीनमनु स्वयमपि लीयते अन्यथा करकालये इव जले परिमाणाधिक्यं स्यात् । अतः सः अन्तरं कारणम् बाह्यं घनीभावः तदुभयवर्जितः केवलरसतन्मात्रात्मना जलेऽभिव्यक्तो दृश्यते । एवमयं प्रपञ्चः कार्यकारणोभयस्वरूपहीनः समाधौ केवलप्रज्ञानघनोऽभिव्यज्यते इति श्रुत्यर्थः । अनेन दृष्टित्रयेण जनबोधार्थं शास्त्रं प्रवृत्तम् । यथोक्तं संक्षेपशारीरके—आरोपदृष्टिरपवादकदृष्टिरेवं व्यामिश्रदृष्टिरिति दृष्टिविभागमेनम् । संगृह्य सूत्रकृदयं पुरुषं मुमुक्षुं सम्यक्प्रबोधयितुमुत्सहते क्रमेणेत्यादिना । श्रुतिवचांसि मुनिस्मरणानि च द्वयविशारदगीरपि सर्वशः ॥ त्रयमपेक्ष्य दृशां त्रितयं विना नहि घटामुपयान्ति कदाचनेत्यन्तेन ॥४२॥

[ अर्जु० ] एतैर्दोषैर्विमुक्तं गुणैरुपेतं तपः समृद्धं भवति नान्यत्रेति भावः । केवलमसहायम् ॥ ३९ ॥ ब्राह्मणः केन भवतीति पृच्छति—आख्यानपञ्चमैर्वेदैर्भूयिष्ठं कथ्यते जनः । तथैवान्ये चतुर्वेदास्त्रिवेदाश्च तथापरे । द्विवेदाश्चैकवेदाश्चाप्यनृचश्च तथापरे । तेषां तु कतरः सः स्याद्यमहं वेदविद्विजम् । आख्यानमितिहासः पञ्चमो येषां तैर्वेदैर्भूयिष्ठं बहुत्वभाजनं यथा भवति तथा कथ्यते जनः अनृचो जातिमात्रेण ब्राह्मणो जात्या वेदैर्वा, तत्र वेदपक्षेऽपि आख्यानपञ्चमैश्चतुर्भिस्त्रिभिर्द्वाभ्यामेकेन वा ब्राह्मणो भवतीति प्रश्नार्थः ॥ ४१ ॥ ४२ ॥

[ सर्व० ] य एतैर्दोषैर्विमुक्तो गुणैश्चान्वित इत्यर्थः ॥ ३९ ॥ आख्यानपञ्चमैरिति आख्यानं पुराणेतिहासादि वेदैरधीतैर्भूयिष्ठं प्रायशः कथ्यतेऽभिधीयते ब्राह्मणतया । जनो लोकः त्वंच ब्राह्मणस्य वेदैर्न किंचित्कार्यमिति वदसि तत्किन्विति । वेदाध्यायिनो ब्राह्मणा उतानृचः । ऋक्शब्देन वेदमुपलक्षयति अवेदा एव ब्राह्मणा इति । कतमः स्यात् स यमहं वेद जानीयां ब्राह्मणमिति ॥४१॥४२॥

[ दुर्घ० ] एतैर्दोषैर्मुक्तैर्गुणैरुपेतैः तपः समृद्धं भवति । विपरीतत्वेऽसमृद्धं भवतीति भावः ॥ ३९ ॥

[ लक्षा० ] आख्यानमितिहासपुराणं पञ्चमः पञ्चत्वसंख्यानिरूपको येषां ते तथोक्ताः ॥ ४१ ॥ अनृचश्च तथा पर इत्यत्र अनृचः न विद्यन्ते ऋचः, वेदश्रवणादिकं परित्यज्य ध्यानं गताः इत्यर्थः। ब्राह्मणं विप्रम् ॥ ४२ ॥

[ शंक० ] य एव स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनावस्थितः, स एव ब्राह्मण इति दर्शयिष्यन् तद्व्यतिरिक्तस्य सर्वस्य तदज्ञानमूलत्वं दर्शयति—एकवेदेति । एकस्य वेदस्य—वेद्यमिदंरूपम् अनिदंरूपम्, वेदनं वेदः—एकस्याद्वितीयस्य संविद्रूपस्येत्यर्थः । तस्य एकवेदस्य ब्रह्मणोऽनवगमादृगादयो वेदाः बहवोऽभवन् । अत्र ऋगादयो वेदाः तत्प्रतिपत्त्यर्थं विचारं कुर्वन्ति इति वेदाख्यानमवापुः । अथवा, सद्भावं साधयन्तीति वेदाः । विदन्ति वेदनसाधनभूता इति वा वेदाः । अथवा, ब्रह्माधीनमात्मानं लभन्त इति वा वेदाः । अथवा, ब्रह्मण आत्मतया लाभहेतव इति वा वेदाः* । विद विचारणे, विद सत्तायाम्, विद ज्ञाने, विदॢ लाभे,‡ एतेषां धातूनां विषये वर्तन्ते यस्मात्, ततो वेदा इत्युक्ताः । तदेकवेदस्वरूपं किमिति चेत्, ‘सत्यं ज्ञानमनन्तं ब्रह्म’ इति श्रुतेः । तस्मात् सत्यस्य एकवेदस्वरूपस्य ब्रह्मणोऽनवगमाद्वेदा बहवो व्याख्याताः सर्वे वेदास्तद्दर्शनहेतवः । हे राजेन्द्र, त्वमपि किमेवं ज्ञात्वा सत्येव ब्रह्मणि स्थितोऽसि? कश्चित् पुनः सत्ये अवस्थितः प्रतिष्ठित इति ॥ ३७ ॥

[ नील० ] एवमनेकेषु पक्षेषूपस्थापितेषु सिद्धान्तमाह—एकस्येति । ब्रह्मैव एकं वेद्यं तच्च सत्यं कालत्रयेऽप्यबाध्यं

४३ शां. एकवेदस्य चाज्ञानात् वेदास्ते बहवो भवन्

* ‘ब्रह्म वदन्तीति वा वेदाः’ अधिकम् । ‡ ‘वद भाषणे’ लि.पु.अधिकम्।

**एवं वेदमविज्ञाय प्राज्ञोऽहमिति मन्यते ।**
**दानमध्ययनं यज्ञो लोभादेतत्प्रवर्तते ॥ ४४ ॥**

तस्य अज्ञानात् बहूनि वेद्यानि उपास्यानि अब्रह्मभूतानि कृतानि कल्पितानि वेदे सत्यप्रतिपत्त्यर्थं तेषामब्रह्मत्वं वेद एवाह—तदेव ब्रह्म त्वं विद्धि नेदं यदिदमुपासत इति । तस्मिंश्च सत्ये ब्रह्मणि कश्चिदेव अवस्थितः ब्रह्मलाभोऽतिदुर्घट इत्यर्थः । श्रुतिरप्यज्ञानकार्यत्वं जगत आह—तुच्छेनाऽऽभ्वपिहितं यदासीत् तमसस्तन्महिनाऽजायतैकमिति । तुच्छेन रज्जूरगादिवदध्यस्तेन मिथ्याभूतेन तमसा आभु सर्वव्यापकं ब्रह्म अपिहितमाच्छादितं यत् आसीत् तत् एकमेव सत् तमसः अज्ञानस्य । तपस इति पाठे आलोचनस्य संकल्पमात्रस्य महिना माहात्म्येन अजायत प्रपञ्चाकारेण आविर्बभूव । यथा रज्जुरज्ञानावृता सर्पाकारेणाविर्भवति तद्वदिति श्रुत्यर्थः ॥ ४३ ॥

[ अर्जु० ] उत्तरमाह—एकस्य वेदस्याज्ञानाद्वेदास्ते बहवः कृताः । सत्यस्यैकस्य राजेन्द्र सत्ये कश्चिदवस्थितः । अल्पप्रज्ञैरल्पजीवितैरज्ञानादृग्यजुःसामाथर्वभेदेन बहवः कृताः । यथा सत्यस्य ब्रह्मणः एकस्यापि अद्वितीयस्याज्ञानात् बहूनि सत्यानि जीवभावेन कृतानि सत्ये एकरूपे ब्रह्मणि कश्चिदेव वीतरागोऽवस्थितः न सर्वः ॥ ४३ ॥

[ सर्व० ] एकस्येति । सत्यं ब्रह्म तद्वेदी च सर्ववेदी स एव ब्राह्मणः तदज्ञानिनां स्वर्गादिफललोभप्रवृत्तानां वेदाश्चतुस्त्रिद्व्यादिभिन्नाश्चिह्नमित्यर्थः । सत्ये तु वेदे कश्चिदेवावस्थितः ॥ ४३ ॥

[ लक्षा० ] एकवेदस्य चाज्ञानादित्यत्र अज्ञानात् ज्ञानशक्त्यभावात् । सत्यस्यैकस्य राजेंद्रेत्यत्र एकस्य अर्थक्रियाकारितया ब्रह्मणा सह एकाकारतया सत्याख्यपारमार्थिकसत्यस्य जगतः अज्ञानात् बहूनि सत्यानि पारमार्थिकव्यावहारिकप्रातिभासिकभेदेन त्रीणि सत्यानि केचिदाहुः । केचित् कश्चित् । मारुते वेधसि ब्रध्ने पुंसि कः कं शिरोऽम्बुनोरित्यभिधानात् कः वायुरूपः चित् चेतयति सर्वमिति चित् ज्ञानी सत्य एकस्मिन्नेव सत्ये अवस्थितः तथा सत्ये सता जगता ईयत इति ये प्राप्ये नारायणे चावस्थितः ॥ ४३ ॥

[ शंक० ] भूयो मे शृणु—य इति ॥ ३८ ॥ किमर्थम् ? नो चेत्, तत्र यद्भवति तच्छृणु—सत्यादिति । सत्यात् सत्यज्ञानादिलक्षणात् ब्रह्मणः प्रच्यवमानानां स्वाभाविकब्रह्मभावपरित्यागेन अनात्मनि देहादावात्म-

४४ ब. एकं वेदमनुत्साद्य; ख. एवं वेदमनुत्साद्य प्रज्ञां महति कुर्वते । शां. य एनं वेद तत्सत्यं प्राज्ञो भवति नित्यदा । शां. लोभा देव ।

**सत्यात्प्रच्यवमानानां संकल्पश्च तथा भवेत् ।**
**ततो यज्ञः प्रतायेत सत्यस्यैवावधारणात् ॥ ४५ ॥**

भावमापन्नानां संकल्पा वितथा अभवन् व्यर्था भवन्ति, स्वाभाविकसत्यसंकल्पादयो न सिध्यन्तीत्यर्थः । ततः कर्म यज्ञादिकं प्रतायेत विस्तृतं भवेत् । तदेतत्सर्वं सत्यस्य सत्यादिलक्षणस्य ब्रह्मणः अनवधारणात् अनवगमात् आत्माज्ञाननिमित्तत्वात् संसारस्य यावत्परमात्मानमात्मत्वेन साक्षान्न विजानाति, तावदयं तापत्रयाभिभूतो मकरादिभिरिव रागादिभिरितस्ततः समाकृष्यमाणो मोमुह्यमानोऽसत्यसंकल्पः स्वर्गपश्वन्नादिहेयसाधनेषु प्रवर्तेत इत्यर्थः ॥ ३९ ॥

[ नील० ] एवमिति । सत्यं प्रत्यगद्वयानन्दं वेद्यमज्ञात्वा बाह्यसुखलोभात् एतद्दानादिकं कर्तुं प्रवर्तत इत्यर्थः ॥ ४४ ॥ सत्यादिति । तथा भवेत् परमानन्दात्प्रच्युतस्य क्षुद्रानन्दविषयोऽभिलाषो भवेत् । ततश्चासौ यज्ञो ज्योतिष्टोमादिः प्रतायेत संतन्यते । सत्यस्य वेदवचनस्य ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यादेः अवधारणात् प्रामाण्यनिश्चयात् । संकल्पो वितथो भवेदिति पाठे सत्यज्ञस्यैव सत्यसंकल्पत्वमन्यस्य तु संकल्पो वन्ध्य इत्यर्थः । सनञ्पाठे यज्ञोऽपि सत्यस्यानवधारणादापरोक्ष्येण अनिश्चयादेव प्रवर्तते । ज्ञाते तु सत्ये ‘एतद्बुद्ध्वा बुद्धिमान्स्यात्कृतकृत्यश्च भारत’ इति कृतकृत्यत्वमेव स्मर्यते ॥ ४५ ॥

[ अर्जु० ] दृष्टान्तसिद्धमर्थं दार्ष्टान्तिके योजयति—एवं वेदमविज्ञाय प्राज्ञोऽहमिति मन्यते । दानमध्ययनं यज्ञो लोभादेतत्प्रवर्तते । सत्यात्प्रच्यवमानानां संकल्पाश्च तथा भवेत् । ततो यज्ञः प्रतायेत सत्यस्यैवावधारणात् । वेदमित्येकवचनमेकत्वविवक्षया अर्थाच्छाखादिभेदं परित्यज्य तमेव कारणं कृत्वेति यावत् । प्रज्ञा प्रमाणज्ञानं सोऽहमिति ब्रह्मणि ‘तत्वमसि श्वेतकेतो’ इत्यादि वेदान्तविज्ञानात् ब्रह्म यान्तीति यावत् । दानादौ ब्रह्मणस्त्वज्ञाने सति स्वर्गफललोभात् प्रवर्तते । सत्याद्ब्रह्मणः प्रच्यवमानानां पृथग्भवतां शबरसंवर्धितराजपुत्रस्य यथा स्वरूपाज्ञानात् शबरोचितं कर्म तथा दानादि सत्यात् प्रच्युतानामिति ॥ ४४ ॥ ४५ ॥

[ सर्व० ] एकं वेदं सत्यरूपमनुत्साद्यानासाद्य । उपसर्गाणामनेकार्थत्वात् । इतरैर्वेदैः प्राज्ञो विद्वानहमिति कुरुते बुद्धिमिति शेषः । तत्तु न, यज्ञाय हि वेदाः प्रवृत्तास्ते च फललोभैकमूलाः, स च दुःखोदर्क इत्याह—दानमित्या-

४५ शां. संकल्पा वितथा भवन् । ततः कर्म प्रतायेत सत्यस्यानवधारणात् ।

**मनसाऽन्यस्य भवति वाचाऽन्यस्याथ कर्मणा ।**
**संकल्पसिद्धः पुरुषः संकल्पानधितिष्ठति ॥ ४६ ॥**
**अनैभृत्येन चैतस्य दीक्षितव्रतमाचरेत् ।**
**नामैतद्धातुनिर्वृत्तं सत्यमेव सतां परम् ॥ ४७ ॥**
**ज्ञानं वै नाम प्रत्यक्षं परोक्षं जायते तपः ।**
**विद्याद्बहुपठन्तं तु द्विजं वै बहुपाठितम् ॥ ४८ ॥**

दिना ॥ ४४ ॥ नन्वेवं ज्ञानिनः प्रति वेदा निरर्थका एव स्युः यज्ञादिकं तेषां न कार्यं स्यादत आह—सत्यात्प्रच्यवमानानां सत्यवचनज्ञानविरहिणां संकल्पात् फलाभिलाषात् यो दानादिः स तथा भवेत् लोभप्रवृत्त्या निषिद्धो भवेत् । ततः सत्याद्यज्ञादयः प्रतीयन्त एव सत्यस्यैवेत्येवकारस्य भिन्नक्रमत्वात् । सत्यस्य ब्रह्मणोऽवधारणात् अवधारणार्थत्वमुद्देश्यत्वेन । हेतुविवक्षया पञ्चमी । तेन संकल्पपूर्वका यज्ञादयो निषिद्धा बन्धहेतुत्वात् तदर्थं चैतद्वेदाध्ययनं व्यर्थमित्युक्तम्, नतु ब्रह्मावधारणानुष्ठेयासङ्कल्पितफलयज्ञादिप्रतिपत्त्यर्थमप्यध्ययनमिति भावः ॥ ४५ ॥

[ लक्षा० ] तत्तस्मात्कारणात् । येऽन्नं प्रपञ्चं सत्यं यो वेद स वायुदेवः प्राज्ञः प्रज्ञासंबन्धित्वात्पूर्णप्रज्ञाख्यनामवान्भवति । यद्वा एकस्य ब्रह्मणि जगति चैकाकारतया स्थितस्य सत्यस्य भावप्रधानो निर्देशः पारमार्थिकसत्यत्वस्य अज्ञानात् सत्ये उक्तविधया अनेकस्मिन् सत्यत्वे कश्चिद्वादी अवस्थितः तस्मात् कारणात् एवं प्रपञ्चं सत्यं पारमार्थिकसत्यं यो वेद स प्राज्ञो भवतीति योजना । लोभात् । स्वर्गाख्यफलभोगात् ॥ ४४ ॥ सत्यात्प्रच्यवमानानामित्यत्र सत्यात् परब्रह्मणः । ततः कर्म प्रभासेतेत्यत्र ततः कारणात् सत्यस्य परमात्मनः अनवधारणात् कर्मैव प्रभासेत प्रकृष्टतया अज्ञानां मनसि भासेत ॥ ४५ ॥

[ शंक० ] इदानीं ब्राह्मणलक्षणमाह—विद्यादिति । बहुपठतम् आख्यानपञ्चमवेदाध्यायिनं बहुवागिति विद्यात् न साक्षात् ब्राह्मणमिति । कस्तर्हि मुख्यो ब्राह्मण इति चेत्—य एव सत्यात् सत्यादिलक्षणात् नापैति, स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनैवावतिष्ठत इत्यर्थः सः एव ज्ञेयो ब्राह्मणस्त्वया, नेतरः, यः सत्यात्प्रच्युतोऽकृतार्थः सन् कर्मणि प्रवर्तते । तथा च ब्रह्मविदमेव ब्राह्मणं दर्शयति श्रुतिः—' मौनं चामौनं च निर्विद्याथ ब्राह्मणः स ब्राह्मणः ' इति, ' विपापो विरजोऽविचिकित्सो ब्राह्मणो भवति ' इति च ॥ ४० ॥

[ नील० ] मनसेति । यज्ञ इत्यनुकृष्यते अन्यस्य एकस्य यज्ञो मनसा देवताध्यानादिरूपो भवति । वाचा ब्रह्मयज्ञजपादिरूपो यज्ञो भवति । कर्मणा प्रसिद्धो ज्योतिष्टोमादिः एतेषां पूर्वः पूर्वो ज्यायान् संकल्पसिद्धः सत्यसंकल्पः संकल्पानां कल्पनीयपदार्थानां ब्रह्मलोकादीनामधिष्ठाता भवति ब्रह्मवित् । तथा च श्रुतिः—आप्नोति स्वाराज्यम् आप्नोति मनसस्पतिं वाक्पतिश्चक्षुष्पतिः श्रोत्रपतिर्विज्ञानपतिः ' इति स्वराजो भावः स्वाराज्यं ब्रह्मैश्वर्यम् ॥ ४६ ॥ तस्य संकल्पस्य अनैभृत्येन अदार्ढ्येन आत्माज्ञानाद्वन्ध्यसंकल्पत्वे सतीत्यर्थः । दीक्षितव्रतं मुष्टीकरणवाग्यमनादिकं कुर्यात् । एतन्नाम दीक्षित इति तद्दीक्ष व्रतादेशे इत्यनेन धातुना निष्ठाप्रत्ययान्तेन निष्पन्नम् । कर्मजः संस्कार आगन्तुको विनाशी चेत्यर्थः । सतां तु सत्यमेव परं ब्रह्मैव श्रेष्ठम् अकृतकत्वेनाविनाशित्वात् ॥ ४७ ॥ एतदेव स्पष्टयति—ज्ञानमिति । प्रत्यक्षं शोकमोहनिवृत्तिरूपं ज्ञानफलं प्रत्यक्षमित्यर्थः । तपः कायिकं वाचिकं मानसिकं च तत् परोक्षमामुष्मिकफलप्रदमित्यर्थः । विद्यादित्यर्धेन परोक्षज्ञानस्य व्यावृत्तिरिह उच्यते ॥ ४८ ॥

[ अर्जु० ] यदि तद्ध्यानं स्यात् तथापि प्रवर्त्तते दानादि किंतु तद्ध्यानादपि प्रच्यवमानानां प्रवर्तत इत्याह—मनसान्यस्य भवति वाचान्यस्याथ कर्मणा । मनसा ज्ञानयज्ञः कर्मणा अग्निष्टोमयज्ञः । ब्रह्मावधानार्थमेतानि कर्माणि न व्रतस्वरूपसिद्ध्यर्थमित्याह—संकल्पसिद्धिर्वै पुंसः संकल्पाद्यावतिष्ठते । संकल्पः सम्यग्ज्ञानं तेन सिद्धिः प्राप्तिः सिद्ध इति पाठे सिद्धः प्राप्तः । यदाह भुविगत( हस्तगत )विस्मृतसुवर्णं संकल्पात् तत्त्वज्ञानात् अवतिष्ठते भ्रान्तिदर्शिताद् रूपात् परावृत्तः ब्रह्मस्वरूपेण भवति । तथा ब्रह्मापीति ॥ ४६ ॥ तत्वज्ञानं यमनियमादीनामेवोपयोगेन कर्मणामित्याह—अनैभृत्येन चैतस्य दीक्षितो व्रतमाचरेत् । एतस्य मनसः अनैभृत्येन चाञ्चल्येन दीक्षितो ब्रह्मोपदेशेन व्रतं यमनियमादिकमष्टविधं योगम् । नाम्नो निर्वचनमाह—नामैतद्धातुनिर्वृत्तं सत्यमेव सतां परम् । एतदनन्तरनिर्दिष्टं नाम धातुनिर्दिष्टम् । अस भुवीत्यस्मादस्तीति सत् । तदेव सत्यं स्वार्थे तद्धितविधानात् । यद्वा षद्लृ विशरणगत्यवसादनेषु इत्यस्मात् सीदति लयं गच्छति कार्यजातमस्मिन्नित्यधिकरणे क्विप् । सतां ब्रह्मविष्णुशिवानां सत्यमेव परं श्रेयो ध्येयत्वात् ॥ ४७ ॥ संक्षितान्याह—ज्ञानं वै नाम प्रत्यक्षं परोक्षं

४६ ख. वाचान्यस्याते । ख. भवतिष्ठते । शां. नास्ति । ४७ शां. नास्ति । ४८ ख. बहुपाठीति ब्राह्मणम् । शां. पूर्वार्धे नास्ति । शां तु बहुवागिति ब्राह्मणम् । ४८-४९ श्लोकोत्तरार्धाभ्यामेकः श्लोकः ।

तस्मात् क्षत्रिय मामंस्था जल्पितेनैव वै द्विजम् ।
य एव सत्यान्नापैति स ज्ञेयो ब्राह्मणस्त्वया ॥ ४९ ॥
छन्दांसि नाम क्षत्रिय तान्यथर्वा
पुरा जगौ महर्षिसंघ एषः ।
छन्दोविदस्ते य उत नाधीतवेदा
न वेदवेद्यस्य विदुर्हि तत्त्वम् ॥ ५० ॥
छन्दांसि नाम द्विपदां वरिष्ठ
स्वच्छन्दयोमेन भवन्ति तत्र ।
छन्दोविदस्तेन च तानधीत्य
गता न वेदस्य न वेद्यमार्याः ॥ ५१ ॥

जायते तपः । वै प्रसिद्धौ सत्यं ज्ञानमानन्दं ब्रह्मेत्यादिषु वेदान्तेषु प्रसिद्धं नाम सत्यशब्दार्थः संज्ञितानि संज्ञोपचाराः । प्रत्यक्षं साक्षात्कारः स्वरूपे विषये फले च । स्वरूपं चिदात्मता फलमानन्दः विषयः सन्मात्रता, एषां व्यतिरेकः कर्मणीत्याह—परोक्षमिति । तप इति सर्वकर्मणामुपलक्षणम् । एवं सत्यप्रतिष्ठया ब्राह्मणत्वमभिधाय वेदपाठकृतं विशेषमाह—विद्यादित्यादि । बहुपाठश्चतुर्वेदस्त्रिवेद इत्यादि ॥ ४८ ॥

[ सर्व० ] एतद्विविधो यज्ञस्तस्य ब्रह्मविद इत्याह—मनसाऽन्यस्येति । अन्यस्यैकस्य पूर्वं पूर्वं चात्र श्रेष्ठम् । तत्प्रथमं कर्मयज्ञो हविर्होमादिः । ततो निवृत्तस्य वाचा यज्ञो जपरूपः । ततोऽपि परावृत्तस्य मानसो ध्यानरूप इत्यर्थः ॥ ४६ ॥ ननु तर्हि संकल्पवत् कतिविधो यज्ञ इत्याह—आरभते कर्माणि तस्यास्य संकल्पस्य नैभृत्येन संभृतं तूष्णीम्भावो मानसो यज्ञस्तस्य ज्ञानं नैभृत्यं ततोऽन्यदज्ञानभूतं तस्मादस्य मानसयज्ञसाध्यत्वात्तदितरदीक्षितमेव वाचाचरेत् । दीक्षितस्य गृहीतसंकल्पस्य व्रतं दीक्षितव्रतम् । तच्च वाचा कर्मणा वा मानससंकल्पासाधकत्वादित्याशयः । ननु ज्ञानार्थिनाऽप्येतद्द्वयमेव संकल्पपूर्वकं किमनुष्ठीयत इत्यत आह—नामैतदिति । अस्तेर्धातोः निर्वृत्तं सत्यमिति नाम सन्निति च नाम सतामेतत्परमुद्देश्यमिति व्यत्ययात्तद्धितोत्पत्तौ सत्यसिद्धौ नामनिरुक्तेरेव सदुद्देशप्रवृत्तत्वं सतामवगम्यते सत्यप्राप्तिहेतुश्च मानस एव यज्ञः साक्षादिति कुतः संकल्पः कुतो वा यज्ञद्वैविध्यमिति भावः ॥ ४७ ॥ अत्र हेत्वन्तरमाह—ज्ञानं वै नामेति । 'नाम प्राकाश्येऽव्ययं' ज्ञानं नाम यज्ञानां नाम्नां देश्यं तत्प्रत्यक्षं तादृशं च भूयो भावनारूपमानसजन्ययज्ञ एव । तत्तु तपो वाचिकं कर्म वा तत्परोक्षं जायते जनयति । ण्यर्थत्वात् प्रत्यक्षज्ञानादितरदेव धर्मरूपं फलं जनयतीत्यतो न तत्त्वज्ञानस्य साक्षाद्धेतुरित्यर्थः । एतदेव जपयज्ञस्य कर्मयज्ञात्परस्याप्यप्रयोजकत्वं दर्शयति—विद्यादिति । पठन्तं यजन्तम् ॥ ४८ ॥

[ शंक० ] भवेदेतदेवं यदि तदेव ब्रह्म सिध्येत्; न च सिध्यति, अन्यपरत्वाद्वेदस्य इति; तत्राह—छन्दांसीति । हे द्विपदां वरिष्ठ, छन्दांसि वेदाः स्वच्छन्दयोगेन, स्वच्छन्दता स्वाधीनता, यथाकाममित्यर्थः । तत्र परमात्मनि भवन्ति तत्रैव प्रमाणं भवन्ति । श्रूयते च—'सर्वे वेदा यत्पदमामनन्ति' इति । 'वेदैश्च सर्वैरहमेव वेद्यः' इति च । पुरुषार्थपर्यवसायित्वाद्वेदस्य तद्व्यतिरिक्तस्य सर्वस्य अनित्याशुचिदुःखानुविद्धत्वेन पुरुषार्थत्वाभावात् तत्स्वरूपतज्ज्ञानतत्साधनप्रतिपादकत्वेन वेदानां प्रामाण्यमित्यर्थः । यस्मात् वेदाः स्वच्छन्दयोगेन तत्रैव परमात्मनि प्रमाणं भवन्ति, तेन च हेतुना तान् वेदान् अधीत्य अधिगम्य वेदान्तश्रवणादिकं कृत्वा गताः प्राप्ताः वेदस्य संविद्रूपस्य परमात्मनः स्वरूपं न वेद्यं प्रपञ्चम् आर्याः पण्डिता ब्रह्मविदः ॥ ४१ ॥

[ नील० ] उक्तमेवोपसंहरति—तस्मादिति । जल्पितेनैव केवलाध्ययनेनैव सत्यात् प्रत्यगद्वयानन्दात् । तथा च श्रुतिः—यो वा एतदक्षरं गार्गि विदित्वाऽस्माल्लोकात्प्रैति स ब्राह्मण इत्यपरोक्षज्ञानिनो ब्राह्मणत्वमुक्त्वाऽर्थादितरस्याब्राह्मणत्वं दर्शयति ॥ ४९ ॥ नन्वेवमध्ययनयागादेर्वैयर्थ्यं स्यादित्याशङ्क्येष्टापत्तिमाह—छन्दांसीति । एष उपनिषत्प्रसिद्धः अथर्वा महामुनिर्महर्षिसङ्घो यानि पुरा जगौ तान्येव छन्दांसि उपनिषद्रूपाणि नाम निश्चितं 'छादयन्ति ह वा एनं छन्दांसि पापात्कर्मणः' इति श्रुत्या छन्दःशब्दनिर्वचनात् । प्लवा ह्येते अदृढा यज्ञरूपा इति अथर्वणोपनिषदि यज्ञानां पापाद्रक्षितुमसामर्थ्यदर्शनात् ब्रह्मविद्यार्थानां छन्दसां मुख्यं छन्दस्त्वं कर्मार्थानां तु गौणमिति भावः । किंच उत अपि येऽपि अधीतवेदाः सोपनिषत्कं वेदं पाठतोऽर्थतश्च अधीतवन्तस्तेऽपि न छन्दोविदः यतः वेदवेद्यस्य औपनिषदस्य पुरुषस्य तत्त्वं याथात्म्यं न विदुः न जानन्ति । अधेन्वा चरति माययैष वाचं शुश्रुवाँ अफलामपुष्पामिति । पुष्पं हि फलं वाचः सत्यमिति श्रुतिश्चैतदाह सत्यं परं ब्रह्म ॥ ५० ॥ छन्दांसि नामेति द्विपदां मनुष्याणां मध्ये वरिष्ठ तत्र सत्ये ब्रह्मणि विषये छन्दांसि वेदाः स्वच्छन्दयोगेन स्वातन्त्र्यसंबन्धेनैव

४९ ख. जपितेनैव ब्राह्मणम् । शां. पूर्वार्धे नास्ति । ५० ख. क्षत्रिय ह्यन्यर्थषयो यस्मात्पुरस्ताद्दापिसर्गे एषः । छन्दोविवादस्ते नधीत्य न वेदविषयस्य विदुर्न । शां. ब. नास्त्येवायं श्लोकः । ५१ ख. नास्ति । शां. गता हि वेदस्य ।

**न वेदानां वेदिता कश्चिदस्ति**
**कश्चित्त्वेतान्बुध्यते चापि राजन् ।**
**यो वेद वेदान्न स वेद वेद्यं**
**सत्ये स्थितो यस्तु स वेद वेद्यम् ॥ ५२ ॥**

भवन्ति । कर्मकाण्डार्थज्ञानवत् ब्रह्मकाण्डार्थज्ञानं न मध्येऽनुष्ठानान्तरमपेक्षते । तथाहि । तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्चेति श्रुत्या दर्शनसार्वात्म्ययोर्मध्ये तिष्ठन्गायतीत्यादौ तिष्ठतिगायत्योर्मध्ये इव कार्यान्तरं वार्यते तेन च ज्ञातेन सत्येन, चकार एवकारार्थे, तेनैवेत्यर्थः छन्दोविदो भवन्ति न कर्ममात्रज्ञानेन । तान् छन्दोज्ञान् अधीत्य प्राप्य आर्याः वेदस्य वेद्यं वेदनीयं ब्रह्म न गता इति न अपि तु गताः प्राप्ता एवेत्यर्थः । एतेन तद्विज्ञानार्थं स गुरुमेवाभिगच्छेदित्यस्याः श्रुतेरर्थो दर्शितः ॥ ५१ ॥

[ अर्जु० ] जल्पितेन पठितेन । सत्याद्ब्रह्मणः ब्रह्म वेत्ति ब्राह्मणः ॥ ४९ ॥ छन्दसामृषित्वमाह—छन्दांसि नाम ऋषय इत्यादि । ऋष्यते ज्ञायते एभिरिति ऋषयः तत्पुरस्तात् तदनन्तरं तानि जानन्तीति ऋषयः कश्यपादयः तेषां समुत्पत्तिः । ये पुनश्छन्दोभिरर्थान्न विदन्ति तानाह—छन्दोविदस्त इत्यादि । छान्दसास्ते ये वेदवेद्यस्य न विदुर्वेदार्थं तं न विदुः विभक्तिव्यत्ययात्कर्मणि षष्ठी । उतेति स्तोभोऽनुकम्पायाम् । तान् वेदान् अधीत्य पठित्वा न वेदान् विदुरित्यन्वयः । अवेदनं च ऋषिच्छन्दोदेवताविनियोगानामज्ञानात् ॥ ५१ ॥

[ सर्व० ] जल्पितेन जपयज्ञेन ब्राह्मणं ब्रह्मज्ञानयोग्यम् । सत्याच्चापैति सत्यान्मनसो नापनयति मानसयज्ञरूपत्वात् ॥ ४९ ॥ छन्दांसि नामेति । नाम वाक्यारम्भे । ऋषीणां सर्गे ऋषीणां कश्यपादीनां सर्गे कर्तव्ये तान्दृष्ट्वाऽध्यापयितुं तत्पुरस्तात्तत्पूर्वमथर्वाङ्गिराः छन्दांसि जगौ अधीतवान् ब्रह्मणः तत्परम्पराध्ययनसंप्रदायः ते छन्दोविदो वेदमात्रवेदिनो ये त इति चार्थेत एत इति प्रगृह्यसंज्ञा(?)अधीत्य वेदं वेदवेद्यस्य वेदैर्ज्ञाप्यस्य प्रतिपादकत्वेन संबन्धिनो वेदानुपनिषदो न विदुः न तदन्तं निश्चितवन्त इत्यर्थः ॥ ५० ॥

[ लक्षा० ] छन्दांसीत्यत्र हे द्विपदांवरिष्ठ स्वच्छन्दयोगेन स्वेच्छानुसारतः पठनेन नाम इन्द्राग्न्यादीनां नामैव भवन्ति । तन्मुख्यार्थं गुरुमुखाच्छ्रवणाभावे कोऽपि न जानातीति भावः । तेन अभ्यासेन तान् वेदान् वेद्यं वेदस्य मुख्यप्रतिपाद्यं न गताः ॥ ५० ॥ छन्दांसि नाम द्विपदांवरिष्ठेत्यत्र हे द्विपदांवरिष्ठ वेदाक्षराणि यावन्ति पठितानि द्विजातिभिः तावन्ति हरिनामानि कीर्तितानि

५२ शां. नास्ति । ज. कश्चिच्चैतान् ।

**न वेदाना वेदिता कश्चिदस्ति**
**वेद्येन वेदं न विदुर्न वेद्यम् ।**
**यो वेद वेदं स च वेद वेद्यं**
**यो वेद वेद्यं न स वेद सत्यम् ॥ ५३ ॥**

न संशय इति वचनात् वस्तुगत्या छन्दांसि नाम भगवन्नामैव । एषोऽर्थः पुरस्तात् स्वर्गे देवैर्ऋषिभिश्च निर्णीतः । छन्दोविदस्तेनेत्यत्र छन्दोविदः केवलच्छन्दोविदः ॥५१॥

[ शंक० ] एवं तर्हि वेदवेद्यत्वे 'अन्यदेव तद्विदितादथो अविदितादधि' 'यतो वाचो निवर्तन्ते, अप्राप्य मनसा सह' इत्यादिश्रुतिविरोधः प्रसज्येतेत्याशङ्क्याह—न वेदेति । न वेदानाम् ऋगादीनां मध्ये कश्चिदपि वेदः परमात्मनो वाचामगोचरस्य संविद्रूपस्य वेदिता अस्ति । कस्मात् ? यस्मात् वेदेन ऋगादिरूपेण जडेन वेदं संविद्रूपं परमात्मानं न विदुः न वेद्यं प्रपञ्चमपि न विदुः, संविदधीनत्वात्सर्वसिद्धेः । यस्मात् संविदधीना सर्वसिद्धिः तस्मात् यो वेद जानाति वेदं संविद्रूपं परमात्मानम्, स च वेद वेद्यम् इदं सर्वम् । तथा च श्रुतिः—'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' इति । यो वेद वेद्यम् इति रूपं न स वेद न जानाति सत्यं सत्यादिलक्षणं परमात्मानम् ॥ ४२ ॥

[ नील० ] तथापि ब्रह्मणो दुर्ज्ञेयत्वमाह—नेति । वेदानां रहस्यवेदिता ज्ञाता कश्चिन्नास्ति । कश्चित्तु एतान्वेदान् रहस्यप्रतिपादकान् चित्तशुद्ध्यतिशयाद्बुध्यते । यो व्युत्थितस्तत्त्वमसिवाक्यार्थानुसंधाता वा वेदान् वेद स सविकल्पकः निर्विकल्पकं वेद्यं सर्ववृत्तिलये प्रकाशमानं ब्रह्म न वेद किंतु सत्ये सर्ववृत्तिबाधावधिभूते प्रत्यक्चैतन्ये स्थित एव निर्विकल्पकं सुखं वेद ॥ ५२ ॥ इममेवार्थं भङ्ग्यन्तरेणाह—नेति । वेदानां वेद्यानामहंकारादीनामचेतनानां मध्ये कश्चिद्वेदिता नास्ति अतो हेतोः वेद्येन चेतसा वेदं वेदबोध्यमात्मानं न विदुः । नापि वेद्यमनात्मानमपि न विदुः आत्माऽनात्मा च न जडस्य विषयावित्यर्थः । ननु जडया धीवृत्त्या आत्मा ज्ञायत एव, दृश्यते त्वग्र्यया बुद्ध्येति श्रुतेरित्याशङ्क्याह—वेदमात्मानं यो वेद स एव वेद्यमनात्मानं सर्वं वेद आत्मप्रभवत्वात्सर्वस्य । यस्तु बहिर्मुखः वेद्यमनात्मानं वेद स सत्यं ब्रह्म न वेद । तथा च श्रुती भवतः—'आत्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' 'पराञ्चि खानि व्यतृणत्स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन्' इति व्यतृणत् हिंसितवान् ॥ ५३ ॥

५३ ख. ज. नास्ति । शां. वेदेन वेदं; छ. वेदेन वेद्यं ।

**योो वेद वेदान्स च वेद वेद्यं**
**न तं विदुर्वेदविदो न वेदाः ।**
**तथापि वेदेन विदन्ति वेदं**
**ये ब्राह्मणा वेदविदो भवन्ति ॥ ५४ ॥**

[ अर्जु० ] ब्रह्मत्वे वेदानामन्वयव्यतिरेकव्यभिचारः कश्चित् पुनर्वेदान्वेत्ति तथापि सत्ये ब्रह्मणि न व्यवस्थितः । इत्यन्वय( व्यभिचारः ) अयं सत्यस्थितिमान् वेदज्ञानादित्यनुमाने व्यभिचारः । अन्वयव्यभिचारं विवृणोति—यो वेद वेदान् न स वेद वेद्यं सत्ये स्थितो यस्तु स वेद वेद्यम् । वेदे विज्ञाने । सत्यस्यापि वेदस्यात्मनो ज्ञानाभाव इत्यन्वयव्यभिचारः । उपलक्षणमिदं ( व्यतिरेक ) व्यभिचारस्य, सत्यवेदाज्ञाने सत्यज्ञानमस्तीत्येवंरूपस्य । सत्ये ब्रह्मणि स्थितो यः स एव सत्यं वेत्ति स ब्राह्मण इति भावः ॥ ५३—५५ ॥

[ सर्व० ] तर्किं वेदा अप्रयोजका एवेति शङ्कां निरस्यति—न वेदानामिति । वेदानामुपनिषदां वेदिता विदितार्थो न कश्चिदस्ति यदि न कश्चिदस्ति त्वं कथं तदा जानासीत्याह—कश्चिच्चैतान् बुद्धयते इति । प्रायिकत्वेन तथोक्तमित्यर्थः । ननु यदि वेदार्थं न जानन्ति कथं यज्ञादीन् कुर्वन्तीत्यत आह—यो वेदान् कर्मभागान् । सत्ये ब्रह्मणि ज्ञेये स्थित उद्यतः । यद्वेदपाठाद्ब्रह्मज्ञानोद्यमो भवति स एव वेदश्रवणलक्षणप्रवृत्तिजनक उपनिषद्भागो वेद्यवेदनहेतुरित्यर्थः ॥ ५२ ॥

[ लक्षा० ] वेदेन वेद्यं न विदुर्न वेद्यमित्यत्र ये वेदेन वेद्यं न विदुः ते वेदमपि न विदुः । यः वेदं केवलवेदं वेद ॥ ५३ ॥

[ शंक० ] नन्वेवं तर्हि ‘ वेदेन वेदं न विदुर्न वेद्यम् ’ इति वदता अनात्मविदः प्रपञ्चासिद्धिरेवेत्युक्तं भवति इत्याशङ्क्याह—यो वेद इति । यो वेद जानाति वेदान् ऋगादीन्, स च वेद वेद्यं सोऽपि अनात्मविदेव भिन्नेन संवेदनेन वेद्यं प्रपञ्चं वेद । नन्वेवं तर्हि वेद्यवत् परमात्मानमपि जानीयादित्याशङ्क्याह—न तं परमात्मानं वाचामगोचरं विदुः वेदविदो न वेदाः वेदा अपि न तं विदुः न तं विषयीकुर्वन्तीत्यर्थः । नन्वेवं तर्हि कथमौपनिषदं ब्रह्म स्यादित्याशङ्क्याह—तथापि वेदेन विदन्ति वेदं परमात्मानं यद्यपि वागाद्यविषयं ब्रह्म, तथापि वेदेन ऋगादिना विदन्ति विजानन्ति वेदं संविद्रूपं परमात्मानम् । के ते ? ये ब्राह्मणा वेदविदो भवन्ति वेदानां वेदप्रतिपादनप्रकारं जानन्तीत्यर्थः ॥ ४३ ॥ कथं तर्ह्यविषयमेव ब्रह्म वेदाः प्रतिपादयन्तीत्याशङ्क्याह—यामांशेति । यामांशभागस्य ‘ त्रियामश्चन्द्रः ’ इति श्रुतेः चन्द्रांशभागस्य प्रतिपच्चन्द्रकलादर्शने यथा महीरुहस्य वृक्षस्य शाखा हेतुर्भवति, तथा हि वेदाः तथैव परमात्मनः स्वरूपभूते संवेदने नित्ये अविनाशिनि अर्थे परमपुरुषार्थस्वरूपे पूर्णानन्दरूपे हेतवो भवन्ति, न पुनः साक्षाद्वाचामगोचरं परमात्मानं प्रतिपादयन्तीत्येवम् आमनन्ति ॥ ४४ ॥

**धामांशभागस्य तथा हि वेदा**
**यथा च शाखा हि महीरुहस्य ।**
**संवेदने चैव यथाऽऽमनन्ति**
**तस्मिन्हि सत्ये परमात्मनोऽर्थे ॥ ५५ ॥**

[ नील० ] किंच यश्चिदात्मा सर्वेषां प्रत्यक्त्वेन प्रसिद्धः, वेदान् वेदयन्ति ते वेदाः तान् प्रमाणानि वेद, स एव वेद्यं प्रमेयमपि वेद न तु तानि वेद्यं विदुः जडत्वात् । तं च प्राणस्य प्राणमुत चक्षुषश्चक्षुः श्रोत्रस्य श्रोत्रं मनसो ये मनो विदुरिति प्राणादीनां प्रवर्तकत्वेन प्रसिद्धं वेदाः प्रमाणानि वेदविदः प्रमातारश्च न विदुः । यतो वाचो निवर्तन्ते अप्राप्य मनसा सहेति तस्य वाङ्मनसातीतत्वश्रुतेः । यद्यप्येवं तथापि वेदं वेदितारमात्मानं वेदेनैव प्रमाणेन अहं ब्रह्मास्मीत्यादिना विदन्ति जानन्ति । के ते ये ब्राह्मणाः वेदविदो वेदं पाठतोऽर्थतोऽनुष्ठानतश्च विदन्ति ते वेदविदः । अध्ययनयज्ञादिना संस्कृतचित्ता एव वाक्यादात्मानं लक्षणया जानन्ति न त्वन्ये इत्यर्थः ॥ ५४ ॥ इदमेव दृष्टान्तेन प्रतिपादयति—धामांशेति । धाम तेजः तन्मयाः अंशा यस्य स तेजोमयोऽर्थाच्चन्द्रः तस्य भागः कला प्रतिपद्गता तस्य संवेदने ज्ञापने यथा च यथैव हि प्रसिद्धं महीरुहस्य शाखा उपादीयते तथा हि तथैव वेदाः परमात्मनः संवेदनेऽर्थे परमपुरुषार्थरूपे सत्ये सर्वथाऽप्यबाध्ये वेदाः उपादीयन्त इति आमनन्ति । तं त्वौपनिषदं पुरुषं पृच्छामीत्यौपनिषदत्वविशेषणात् वाचामगोचरत्वश्रुतेश्च सोऽयं देवदत्त इत्यादिवाक्यवत् तत्त्वमस्यादिवाक्यमपि लक्षणया स्वार्थं प्रमापयत्येवेत्यर्थः ॥ ५५ ॥

[ लक्षा० ] यो वेद वेदानित्यत्र वेदान् केवलवेदान् वेद स च वेदवेद्यं तं नारायणं न वेद वेदविदोऽपि न विदुः । वेदाः शुष्कवेदा अपि न विदुः न वेदयन्ति । ये ब्राह्मणाः ब्रह्म मीमांसोदितं परं ब्रह्म भणन्ति पठन्ति ते वेदविदोऽपि भवन्ति ॥ ५४ ॥ वेदेन वेद्यं च विदन्ति धर्मांशभाजोऽस्येत्यत्र महीरुहस्य च शाखा यथा

---

५४ ख. नास्ति । ५५ ख. नास्ति । शां. यामांशभागस्य । शां. संवेदने प्येवमथा । शां. नित्ये परमा । ज. शममात्मनोऽर्थः ।

**अभिजानामि ब्राह्मणं व्याख्यातारं विचक्षणम् ।**
**यश्छिन्नविचिकित्सः स व्यांचष्टे सर्वसंशयान् ॥५६॥**
**नास्य पर्येषणं गच्छेत्प्राचीनं नोत दक्षिणम् ।**
**नार्वाचीनं कुतस्तिर्यङ्नादिशं न कथंचन ॥५७॥**
**तस्य पर्येषणं गच्छेत्प्रत्यर्थिषु कथंचन ।**
**अविचिन्वन्निमं वेदे तपः पश्यति तं प्रभुम् ॥५८॥**

तथा वेदाः परमात्मनः अर्थे परमात्मप्रीत्यर्थमिति यावत् । अस्य परमात्मनः धर्मांशभाजोऽपि भवन्ति । एवं धर्मप्रतिपादनवत् तस्मिन्नेव नित्ये वेदभागे अस्य परमात्मनः संवेदने च सं सम्यक् पदसमन्वयेन वाक्यसमन्वयेन ज्ञापने च आमनन्ति तात्पर्यमामनन्ति । अन्यथा प्रलये कर्मणामभावेन नैरर्थक्यप्रसङ्ग इति सूचनाय नित्ययुक्तम्(?) । अत एव क्वचिदजयात्मनानुचरतोऽनुचरेन्निगम इति श्रुतिगीता । अजया महालक्ष्म्या । आत्मना स्वेन च । क्वचित्सृष्टिकाले कृष्णरामादिरूपेणावतीर्य अनुचरतः स्वानुकूल्येन यज्ञादिकमाचरतस्तव प्रीत्यर्थं निगमोऽपि अनुचरेत् । अनु त्वच्चेष्टामनुसृत्य चरेत् विधिनिषेधरूपेणापि संचरेत्, अन्यदा त्वामेव वदेदिति हि तस्यार्थः ॥ ५५ ॥

[ शंक० ] य एवं वेदानां वेदनरूपात्मप्रतिपादनप्रकारमवगम्य व्याचष्टे, सोऽपि ब्राह्मण इत्याह—अभिजानामीति । यो वेदप्रतिपादनप्रकारं व्याचष्टे, तम् आख्यातारं विचक्षणं ब्राह्मणं अभिजानामि । ननु बाल्यं पाण्डित्यादिकं निर्विद्यावस्थितमेव ब्रूते ब्राह्मणम् 'अथ ब्राह्मणः' इति, कथमुच्यते अभिजानामि ब्राह्मणमाख्यातारं विचक्षणम् इति ? तत्राह—एवं वेदानां वेदनरूपात्मप्रतिपादनप्रकारं मयोक्तं योऽभिविजानाति, स जानाति परं हि तत् परं ब्रह्म जानाति इत्येव । यो हि पाण्डित्यं निर्विद्य व्यवस्थितः, सः क्षिप्रं बाल्यादिकं निर्विद्य ब्राह्मणो भवतीत्यर्थः ॥ ४५ ॥ यस्मात्सत्यनिष्ठस्यैव ब्राह्मणत्वप्रसिद्धिः, तस्मात् विषयपरो न भवेदित्याह—नास्येति । 'विषयाश्चेन्द्रियाण्येव देहोऽहंकार एव च । बाह्या आभ्यन्तरा घोराः शत्रवो योगिनः स्मृताः' इति दर्शनात् नास्य आत्मनः प्रत्यर्थिषु प्रतिपक्षभूतेषु देहेन्द्रियशब्दादिविषयेषु पर्येषणं परित एषणं गच्छेत् विषयान्वेषणपरो न भवेदित्यर्थः । अविचिन्वन् विषयसंचयमकुर्वन् इमं प्रत्यगात्मानं वेदे उपनिषत्सु तत्त्वमस्यादिवाक्येषु ततः पश्चात् पश्यति तं प्रभुं परमात्मानम् आत्मत्वेन जानातीत्यर्थः । अथवा, नास्यात्मनः पर्येषणम् अन्वेषणं गच्छेत् प्रत्यर्थिषु प्रतिपक्षभूतदेहेन्द्रियादिषु, देहेन्द्रियतद्धर्मानात्मत्वेन न गृह्णीयादित्यर्थः । अविचिन्वन् देहेन्द्रियतद्धर्मानात्मत्वेनासंचिन्वन् तत्साक्षिणमात्मानमेव प्रतिपद्यमानः तत्त्वंपदार्थशोधनानन्तरम् इमं प्रमात्रादिसाक्षिणं परमात्मानं पश्यति, देहेन्द्रियतद्धर्मानात्मत्वेनाप्रतिपद्यमानस्तत्त्वमस्यादिवाक्यैः परमात्मानमात्मत्वेन पश्यतीत्यर्थः ॥ ४६ ॥

[ नील० ] एवं गुरूपसदनपूर्वकं वाक्यार्थप्रतिपत्त्युपायमुक्त्वा गुरुलक्षणान्याह–अभीति । ब्राह्मणं ब्रह्मविदं लक्षणतोऽभिजानामि । लक्षणमेवाह–व्याख्यातारमुपक्रमोपसंहारैकरूप्यादिषड्विधतात्पर्यलिङ्गानुसारेण वाक्यार्थवर्णनकुशलम् । विचक्षणं श्रुतार्थस्य युक्तिभिरनुचिन्तने समर्थं निदिध्यासनपरिपाकेनापरोक्षसाक्षात्कारबलात् यश्छिन्नविचिकित्सो निःसंशयः सन् परस्यापि सर्वसंशयान् व्याचष्टे विवृणोति । अत्र स्वरूपव्याक्रियैव पराक्रियेति न्यायेन संशयान् दूरीकरोतीत्यर्थः ॥ ५६ ॥ परीष्यतेऽस्मिन्निति पर्येषणमन्वेषणस्थानं प्राचीनं प्राग्दिक्स्थं नापि दक्षिणादिदिक्स्थं नापि अदिशं दिग्विहीनं अन्तर्हृदय इत्यर्थः ॥ ५७ ॥ एतदेवाह–तस्येति । प्रत्यर्थिषु आत्मत्वेन प्रथमानेष्वनात्मसु पञ्चसु कोशेषु पर्येषणमन्वेषणं गच्छेत्कुर्यादित्यर्थः । कथंचनेत्यव्यक्तमालम्बनं क्लेशसाध्यमिति सूचयति । 'अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते' इति स्मृतेः । वेदे इममात्मानमविचिन्वन् वेदान्तन्यायानप्यचिन्तयन्नित्यर्थः । तपः तपस्वी आलोचनवान् ध्यायी तं प्रभुं पश्यति । तं पश्यति निष्कलं ध्यायमान इति श्रुतेः ॥ ५८ ॥

[ अर्जु० ] उक्तमर्थमुपसंहरति—अभिजानामि ब्राह्मणं व्याख्यातारं विचक्षणम् । यश्छिन्नविचिकित्सः सन् व्याचष्टे सर्वसंशयान् । सुगमोऽर्थः ॥ ५६ ॥ तस्य पर्यैषणं गच्छेत् प्राचीनं नोत दक्षिणम् । नाऽप्राचीनं कुतस्तिर्यङ्नादिशं तु कदाचन । तस्य व्याख्यातृप्रतिपाद्यस्य पर्येषणं ध्यानं गच्छेत् प्रयत्नलक्षणया क्रियया व्याप्नुयात् । प्राचीनं संमुखं ब्रह्मणोऽभिमुखं ध्यानं कुर्यादित्यन्वयः । नोत दक्षिणमित्यादिना सत्यादन्याभिमुखप्रकारं निषेधति । नाप्राचीनं नोत्तरं कुतस्तिर्यक् कुतो विदिक् नादिशमिति निर्देशतां निषेधति । दिक्शब्देन देशोपलक्षणात् ॥ ५७ ॥

[ सर्व० ] अभिजानामीति । अहमेव तत्त्वज्ञानितया तादृशं ब्राह्मणं जानामि न त्वमित्यर्थः । यदाह श्रुतिः 'अत्रा सखायः सख्यानि जानते' इति । ब्राह्मणं ब्रह्मविदमुपनिषदर्थस्य व्याख्यातारं विचक्षणं युक्तवाचं विचि-

५६ ख. सन्नाचष्टे सर्वसंशयम् । शां. उत्तरार्धे—एवं योऽभिविजानाति स जानाति परं हि तत् । ५७ ख. तस्य पर्यैषणं । ख. नापाचीनं । ख. तु कथंचन । शां. नास्ति । ५८ ख. नास्ति । शां. नास्थ । शां. कदाचन । शां. ततः पठति तं प्रभुम् ।

**तूष्णींभूत उपासीत न चेष्टेन्मनसाऽपि च ।**
**उपावर्तस्व तद्ब्रह्म अन्तरात्मनि विश्रुतम् ॥ ५९ ॥**
**मौनान्न स मुनिर्भवति नारण्यवसनान्मुनिः ।**
**स्वलक्षणं तु यो वेद स मुनिः श्रेष्ठ उच्यते ॥६०॥**
**सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते ।**
**तन्मूलतो व्याकरणं व्याकरोतीति तत्तथा ॥ ६१॥**

किंरूपा संशयः, व्याचष्टे विशेषेणाचष्टे सर्वसंशयान् शिष्याणां संशयविषयान् । ···प्रत्ययः कर्मणि ॥ ५६ ॥ एवं मनोयज्ञप्रयोजनमुक्त्वा तदनुष्ठानक्रममाह—तस्येति । तस्य सत्यस्य पर्येषणं साक्षात्करणार्थमनुसंधानं गच्छेत् । तत्प्राप्त्यर्थं यतेत । पर्येषणं तु तस्य पुत्रादिवन्न बहिरित्याह—प्राचीनमिति । नेत्युभयसंगतं न प्राचीनं न प्राच्याम् । अत्यन्तसंयोगे द्वितीया । नाप्राचीनमिति पश्चिमायाम् अप्राचीनशब्देन छन्दसि दक्षिणापश्चिमयोरभिधानात् । छुत इत्याक्षेपे । तिर्यग्दक्षिणापेक्षया तेनोत्तरोक्ता। नादिशं उक्तदिगन्यदिक्षु कोणोर्ध्वाधःस्वित्यर्थः ॥ ५७ ॥

[ लक्षा० ] तस्य पर्येषणमित्यत्र प्रत्यर्थिषु प्रतिवाक्यमेवमर्थो येषु तेषु ज्ञानिषु कथंचन गुरुशुश्रूषया विद्यया वा धनेन वा तस्य परमात्मनः पर्येषणं श्रवणमननध्यानरूपविचारं गच्छेत् ॥ ५८ ॥

[ शंक० ] तूष्णींभूत इति । यस्मात् सर्वविषयपरित्यागेनैव आत्मदर्शनसिद्धिः, तस्मात् तूष्णींभूतः सर्वकर्मसंन्यासं कृत्वा स्वात्मव्यतिरिक्तं सर्वं परित्यज्य केवलो भूत्वा स्वात्मानमेव लोकम् उपासीत, न चेच्छेन्मनसा अपि विषयेच्छां न कुर्यात् । यस्तूष्णींभूतः विषयोपसंहारं कृत्वा स्वात्मानमेव लोकम् उपास्ते, अस्मै तूष्णींभूताय ब्राह्मणाय ब्रह्म अपूर्वादिलक्षणम् अभ्यावर्तेत अभिमुखीभवेदित्यर्थः । श्रूयते च—'यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनूं स्वाम्' इति । अनन्तरमाविर्भूतस्वरूपः सन् बहु भूमानं तमसः पारं परम् आत्मानं आप्नुयात् इत्यर्थः ॥ ४७ ॥ मुनिरप्येष एवेत्याह—मौनादिति । मौनात् पूर्वोक्तात् तूष्णींभावादेव मुनिर्भवति, न पुनः अरण्यवसनमात्रात् मुनिः भवति । तेषामपि तूष्णींभूतानां मध्ये यस्तु पुनः अक्षरं अविनाशिनं तं परमात्मानं वेद 'अयमहमस्मि' इति साक्षाज्जानाति, स मुनिश्रेष्ठ उच्यते । श्रूयते च—'एतमेव विदित्वा मुनिर्भवति' इति ॥४८॥ वैयाकरणोऽप्येष एवेत्याह—सर्वार्थानामिति । सर्वार्थानां व्याकरणात् वैयाकरण उच्यते । न पुनः शब्दैकदेशव्याकरणात् वैयाकरणो भवति । भवतु सर्वार्थानां व्याकरणात् वैयाकरणत्वम्, ततः किमिति चेत्, तन्मूलतो व्याकरणं पूर्वोक्तादक्षराद्धि सर्वस्य नामरूपप्रपञ्चस्य व्याकरणम् । श्रूयते च—'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' इति । तस्माद्ब्रह्मण एव साक्षाद्वैयाकरणत्वम् । व्याकरोतीति तत्तथा असावपि विद्वान् तत् ब्रह्म तथैव व्याकरोतीति वैयाकरणः ॥ ४९ ॥

[ नील० ] तूष्णींभूत इत्यनेन वागादिबाह्येन्द्रियव्यापारोपरम उक्तः । मनसाऽपि न चेष्टेत । न चेष्टेतेत्यनेन मानसव्यापारोपरम उक्तः । अन्तरात्मनि हार्दाकाशे विश्रुतं वेदे प्रख्यातं तद्वाचामगोचरं ब्रह्म उपावर्तस्व उपागच्छ ॥ ५९ ॥ मौनात् ध्यानमात्रान्न मुनिर्भवति नापि अरण्यवासात् संन्यासमात्रात् । किं तर्हि यः स्वलक्षणं स्वस्य प्रत्यगात्मनो लक्षणं जगज्जन्मादिहेतुत्वं सच्चिदानन्दात्मकत्वं च यो वेद जानाति स श्रेष्ठः । संन्यासिभ्यो योगिभ्यश्च ज्ञानी श्रेष्ठ इत्यर्थः ॥ ६० ॥ सर्वार्थानां व्याकरणात् प्रकटीकरणात् सर्वज्ञत्वादयं ज्ञानी वैयाकरण इत्युच्यते । तच्च व्याकरणं केचिद्योगजधर्मप्रत्यासत्त्या वदन्ति तन्निराचष्टे—मूलत इति । आत्मज्ञानाद्धि सर्वविज्ञानं श्रूयते न प्रधानज्ञानात् अन्यतो वा । मूलत इति ल्यब्लोपे पञ्चमी । मूलं कारणं ब्रह्म प्राप्येत्यर्थः । तत्र व्याकर्ता परमात्मैव । तन्नामरूपाभ्यामेव व्याक्रियत नामरूपे व्याकरवाणीति श्रुतिभ्यामित्याह—व्याकरोतीति । श्रौतव्युत्पत्तिप्रदर्शनमेतत् ॥ ६१ ॥

[ अर्जु० ] तूष्णीमित्यादि । तूष्णींभावेन सर्वेन्द्रियव्यापारविराममुपनयति—मनसापीति । सर्वान्तःकरणविराममभिप्रैति । अभ्यावर्त्तस्व नित्यहेतुम् (?) ॥ ५९ ॥ रहस्यप्रकारमाह—स्वराक्षरं त्विति । स्वराक्षरं स्वरूपमक्षरमोंकारः तस्य वेदनं रूपतोऽर्थश्च अकारोकारमकारार्धमात्रास्वरूपं जाग्रत्-स्वप्न-सुषुप्तितुरीयाश्च यथासंख्यमेषामर्थः । तुशब्दोऽवधारणे । स्वराक्षरमेव यो वेद स मुनिः श्रेष्ठ इति ॥ ६० ॥ सर्वार्थानां व्याकरणाद्वैयाकरण उच्यते । सर्वेषामोंकारावयवानामर्थो अध्यात्मनि जाग्रदादयोऽधिदैवे विश्वरूपादयः; तेषां व्याकरणं विविच्य कथनं ततो मुनिरेव वैयाकरणनामा भवति ॥ ६१ ॥

[ सर्व० ] तूष्णींभूतो न जपादिना उप समीपे आसीत ज्ञानेन समीपे चिन्तयेदित्यर्थः । मनश्चेष्टा विषयान्तरग्रहणम् । अपिना बाह्येन्द्रियाणामप्येतन्निषेधति । कुत्र कुतस्तुष्येयमित्यत आह—अभ्यावर्तस्व प्राप्नुहि । तद्ब्रह्म अन्तरात्मा आत्मनः शरीरस्यान्तः विनिश्रुतं विशे-

५९ ख. अभ्यावर्तेत ब्राह्मणमन्त्र। शां. उत्तरार्धम्—अभ्यावर्तेत ब्रह्मास्मै बहुमन्तरमाप्नुयात् । ६० ख. मौनाद्धि । ख. स्वराक्षरं तु । शां. मौनाद्धि मुनिर्भ। शां. अक्षरं तं तु । ६१ ख. उत्तरार्धं न ।

प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः ।
सत्ये वै ब्राह्मणस्तिष्ठंस्तद्विद्वान्सर्वविद्भवेत् ॥ ६२ ॥

धर्मादिषु स्थितोऽप्येवं क्षत्रिय ब्रह्म पश्यति ।
वेदानां चानुपूर्व्येण एतद्बुद्ध्या ब्रवीमि ते ॥६३ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

षेण निश्चित्य श्रुतम् ॥ ५९ ॥ तदनन्तरमेव ध्यानाधिकारान्मौनादनुध्यानात् । मुनेर्भावो मौनम् । नारण्यवासादेकान्तवासात् । नवाक्षरः पादः । यथाह ब्राह्मणे “ते वा एकेनाक्षरेण छन्दांसि वियन्ति न वा द्वाभ्याम्” इति । अथ प्रणवोपासनामाह । स्वराक्षरं तु यो वेद अकारादयः स्वराः स्वररूपमक्षरमोंकारं स्वरूपतोऽकारोकारमकारार्धमात्रात्मकमर्थतो विष्णुशिवब्रह्मपरब्रह्मवाचकम् ॥ ६० ॥ सर्वार्थानामिति । एतेषां यद्वर्णानां (?) सर्वार्थानां व्याकरणाद्व्याकारज्ञानात् न तु पदसाधनमात्रेण । उक्तमेव हि, न शब्दशास्त्राभिरतस्य मोक्ष इति । अत्यन्तशब्दपरतायां हि अर्थस्य शीघ्रमप्रकाशनान्मोक्षविरोध इति तात्पर्यम् ॥६१॥

[ लक्षा० ] तूष्णींभूत उपासीतेत्यत्र अन्तरात्मनि अन्तः आत्मा परमात्मा यस्य सः अपरोक्षज्ञानी योगीश्वरः तस्मिन्नभ्यागते सति अस्य हरेः श्रुतं वेदप्रदिपादितमहिमानं बुद्ध्वा तन्मुखाच्छ्रवणेन ज्ञात्वा अन्यदा तूष्णींभूत उपासीत । अस्मै अपरोक्षज्ञानाय ब्रह्म वेदं बहु यथा भवति यथा अभ्यावर्तेत ‘आवृत्तिरसकृदुपदेशात्’ इति हि सूत्रम् । अनन्तरं केवलमन्तर एव न भवतीत्यनन्तरो व्याप्तः परमात्मा तमाप्नुयात् अपरोक्षतो जानीयात् । वैकुण्ठादिलोकगतं तमेव प्राप्नुयाच्च ॥ ५९ ॥ तन्मूलतो व्याकरणमित्यत्र तत् परं ब्रह्म तथा यथास्ति तथा व्याकरोतीति हेतोः तत् वेदात्मकं ब्रह्म मूलतः मूलमारभ्य व्याकरणं वदन्ति ॥६१॥

[ शांक० ] सर्वज्ञोऽप्येष एवेत्याह—प्रत्यक्षेति । प्रत्यक्षदर्शी लोकानां यः प्रत्यक्षेण भूरादीन् लोकान् पश्यति, स सर्वदर्शी नरो भवेत् सर्वरूपं परमात्मानं पश्यति । असौ पुनः सत्ये सत्यादिलक्षणे ब्रह्मणि तिष्ठन् मनः समादधाति । तद्विद्वान् सत्यादिलक्षणं ब्रह्म विद्वान् आत्मत्वेन जानन् सर्वविद्भवेत् सर्वं जानातीत्यर्थः । तस्मादेष एव साक्षात् सर्वज्ञः, न अनात्ममात्रदर्शी ॥ ५० ॥ ‘यस्त्वेतेभ्यः’ इत्यादिना उक्तमेवार्थं पुनरपि दर्शयति अवश्यकर्तव्यत्वप्रदर्शनार्थम्—ज्ञानादिष्विति । ज्ञानादिषु ‘ज्ञानं च’ इत्यादिना पूर्वोक्तेषु स्थितोऽप्येवं यथा सत्ये तिष्ठन् ब्रह्म पश्यति एवमेव ब्रह्म पश्यति वेदानां चारपूर्व्येण वेदान्तश्रवणपूर्वकमित्यर्थः । अथवा गुणान्तरविधानमेतत्—ज्ञानादिषु स्थितोऽपि न केवलं तावन्मात्रेण पश्यति; अपि

६२ ख. सत्ये वै ब्राह्मणस्तिष्ठन् ब्रह्म पश्यति क्षत्रिय इत्यर्धं द्वयस्थाने । शां. ब्रह्मणि तिष्ठंस्त । ६३ ख. वेदेषु चानुपूर्व्येण । शां. ज्ञानादिषु । शां.

तु एवमेव वक्ष्यमाणप्रकारेण वेदान्तविचारपूर्वेण वेदान्तश्रवणादिपूर्वकमेव पश्यति ब्रह्म एतत् वेदान्तानां विचारप्रकारं हे विद्वन्, ब्रवीमि ते वक्ष्यामीत्यभिप्रायः ॥ ५१ ॥

इति श्रीशंकरभगवत्पादकृते सनत्सुजातीयभाष्ये द्वितीयोध्यायः ॥ २ ॥

[ नील० ] सार्वज्ञ्यमपि ब्रह्मविदामनौपचारिकमित्याह—प्रत्यक्षेति । सत्ये तिष्ठन् न तु वृत्त्यन्तरे देहाद्याकारे । ब्राह्मणः ब्रह्मवित् तद्विद्वान् ब्रह्मविद्वानिति ब्राह्मणपदव्युत्पत्तिप्रदर्शनम् ॥ ६२ ॥ अध्यायार्थमुपसंहरति—धर्मादिष्विति । धर्मश्च सत्यं च दमस्तपश्चेत्यादिषु द्वादशसु स्थितः । तथा सत्यादिरूपे अष्टविधे अप्रमादे च स्थितः । एवं साधनवान् वेदेषु पूर्वोक्तेषु आरोपदृष्टिन्यामिश्रदृष्टयपवादृदृष्टिरूपेषु आनुपूर्व्येण सोपानारोहणन्यायेन परमे पदे स्थितोऽहमेतत्स्वानुभवसिद्धं बुद्ध्या स्वतःस्नेहवत्या ते तुभ्यं ब्रवीमि । सोपानक्रमस्तु नृसिंहतापनीये श्रूयते—ओतानुज्ञात्रनुज्ञाऽविकल्पैरिति । अस्यार्थः ओतत्वं कारणव्याप्तिः कार्ये यद्वन्मृदो घटे ॥ सर्वं ब्रह्मेति तन्निष्ठा जानते परिणामतः ॥ १ ॥ कार्यस्यासमसत्त्वं यत्कारणे समुदीरितम् । तदनुज्ञातृशब्दार्थो मरौ वारिविवर्तनम् ॥ २ ॥ एतन्निष्ठास्ततो भूत्वा जगन्मिथ्येति जानते । अनुज्ञायां जगत्तुच्छं शशशृङ्गादिवन्मतम् ॥ ३ ॥ एवं सोपानरीत्यैव भूमिमित्रितयलङ्घनात् । अविकल्पं परं यत्तदहं ब्रह्मास्मि निर्भयमिति ॥ ६३ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[ अर्जु० ] स्वराक्षरस्य ज्ञानस्य विभूतिमाह—प्रत्यक्षदर्शी लोकानां सर्वदर्शी भवेन्नरः । सत्ये वै ब्राह्मणस्तिष्ठन् ब्रह्म पश्यति भारत । अर्थः सुगमः ॥ ६२ ॥ न केवलमहं ब्रवीमि वेदेष्वप्येतदुच्यत इत्याह—वेदेषु चानुपूर्वेण एतद्बुद्ध्या ब्रवीमि ते । आनुपूर्वेण स्थूलसूक्ष्मादिरूपक्रमेण ६३

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[ सर्व० ] ध्यानफलमाह—प्रत्यक्षदर्शी लोकानां स्वर्गादीनां यत्प्रत्यक्षं वस्तु तद्दर्शी । तत्र गमनेन सकलदर्शनसिद्धेः । अतस्तमतिशयिताभ्यासात्सर्वदर्शी सर्वेषामतीन्द्रियाणामप्यर्थानां स्वस्थानस्य एव प्रत्यक्षेण तत्त्वज्ञः ।

चारपूर्व्येण चैतद्विद्वन् । त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

## चतुश्चत्वारिंशोऽध्यायः ४४

ब्रह्मविद्यासाधनस्य ब्रह्मचर्यस्य विस्तरतो निरूपणं ब्रह्मस्वरूपनिरूपणं च ॥ १ ॥

**धृतराष्ट्र उवाच—**

**सनत्सुजात यामिमां परां त्वं**
**ब्राह्मीं वाचं वदसे विश्वरूपाम् ।**
**परां हि कामेन सुदुर्लभां कथां**
**प्रब्रूहि मे वाक्यमिदं कुमार ॥ १ ॥**

**सनत्सुजात उवाच—**

**नैतद्ब्रह्म त्वरमाणेन लभ्यं**
**यन्मां पृच्छन्नपि हृष्यस्यतीव ।**
**बुद्धौ विलीने मनसि प्रचिन्त्या**
**विद्या हि सा ब्रह्मचर्येण लभ्या ॥ २ ॥**

एवं निदिध्यासनस्यानात्म साक्षात्कारः प्रथमं फलमिति दर्शितम् । न चैतदतिशयेन वदत(?)स्तादृग्दृष्टिष्वप्यभग्नयोगाभ्यासस्य तदन्तरभाविब्रह्मसाक्षात्कारं फलमाह—सत्ये वै ब्राह्मणस्तिष्ठन् ब्रह्मानुचिन्तयन् न तु योगविघ्नेषु युक्तस्तद्ब्रह्म पश्यतीति साक्षात्करोति । तदेतत्सर्वं वेदादेवावगम्यत इति नासौ निष्फल इत्युपसंहरति—वेदेष्विति । आनुपूर्व्येण यथोक्तक्रमेण तत्सर्वमुपनिषत्सु बुद्धया तुभ्यं करुणया ब्रवीमीत्यर्थः ॥ ६२ ॥ ६३ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां त्रिचत्वारिंशोऽध्यायः ॥ ४३ ॥

[ लक्षा० ] सत्ये परमात्मनि ॥ ६२ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे त्रिचत्वारिंशोध्यायः ॥ ४३ ॥

[ शंक० ] इदानीं ब्रह्मचर्यादिसाधनप्रतिपादनानन्तरं तत्प्राप्यं च ब्रह्म प्रतिपादयितुं तृतीयचतुर्थावध्यायावारभ्येते । तत्र तावद्ब्रह्मचर्यादि साधनं श्रुत्वा तद्ब्रह्मवेदनाकाङ्क्षी प्राह धृतराष्ट्रः—सनत्सुजातेति । हे सनत्सुजात, यत् यस्मात् इमां परार्थाम् उत्कृष्टार्थां ब्राह्मीं ब्रह्मसंबन्धिनीं वाचं वदसि हि विश्वरूपां नानारूपां पराम् उत्तमां कार्येषु कार्यवर्गेषु प्रपञ्चेषु सुदुर्लभां श्रवणायाप्यशक्यां कथां प्रब्रूहि मे वाक्यमेवंभूतं कुमार, यस्मात्त्वं ब्राह्मीं वाचं परमपुरुषार्थसाधनभूतां सुदुर्लभां वदसि, तस्मात्त्वमेव वक्तुमर्हसीत्यभिप्रायः ॥ १ ॥ एवं पृष्टः प्राह भगवान्—नैतद्ब्रह्मेति । नैतद्ब्रह्म त्वरमाणेन पुरुषेण लभ्यं यत् ब्रह्म मां पृच्छस्यभिषङ्गेण राजन् । कथं तर्हि लभ्यमित्याह—बुद्धौ अध्यवसायात्मिकायां प्रलीने मनसि प्रचिन्त्या विद्या हि सा; यदा पुनः संकल्पविकल्पात्मकं मनो विषयेभ्यः परावृत्य स्वात्मन्येव निश्चलं भवतीत्यर्थः । येयं बुद्धौ प्रलीने मनसि प्रचिन्त्या, सा विद्या ब्रह्मचर्येण वक्ष्यमाणेन लभ्या ॥ २ ॥

[ नील० ] एवमात्मज्ञानमार्गं श्रुत्वा तस्यान्तरङ्गसाधनं योगं श्रोतुं पृच्छति सनत्सुजातेति । परामुक्तादपि अत्युत्कृष्टां ब्राह्मीं ब्रह्मप्रापिकां वाचं उपनिषदं वदसे जानीषे भासनोपसंभाषाज्ञानेति तङ् । विश्वं रूप्यते प्रकाशतेऽस्यां यां ज्ञातवतो ऽन्यत् ज्ञातव्यं नावशिष्यत इत्यर्थः । कामेन काम्यमानेन विषयेण परां दूरीभूतां विषयवार्ताहीनामित्यर्थः । अत एव सुदुर्लभां कथां कथनीयां प्रब्रूहि । हेकुमार इदं मे मम वाक्यं त्वां प्रति प्रार्थनारूपं वचनम् । अवधेहीति शेषः ॥ १ ॥ ब्रह्मविद्यायाः दुर्लभत्वं दर्शयन्सनत्सुजात उवाच—नैतदिति । हृष्यसि अहं ब्रह्मविद्याधिकार्यस्मीति दृप्यसि । पाठान्तरे अभिषङ्गेण निर्बन्धेन । विद्यालक्षणमाह बुद्धाविति । सर्वेषामिन्द्रियाणां निरोधेन मनोमात्रमनुपरतं संकल्पाद्यात्मकं तिष्ठति तस्मिन्नपि अहं ब्रह्मास्मीति निश्चयस्वभावायां बुद्धौ विलीने सति । प्रचिन्त्या प्रगतं चिन्त्यं यस्यां सा निरुद्धसर्ववृत्तिका काचिदवस्था विद्येत्युच्यते । सा च ब्रह्मचर्येण गुरुकुलवासेन लभ्या ॥ २ ॥

[ अर्जु० ] अतिसारत्वात् धृतराष्ट्रः तमेवार्थं पुनः पृच्छति सनत्सुजातेति । कामेषु वाञ्छितेषु मध्ये सुदुर्लभां विश्वरूपां विचित्रामथवा कथेयं किं कथयसि तत्त्वं ब्रूहि मे इति भावः ॥ १ ॥ उत्तरमाह—नेदं ब्रह्मेति । इदं ब्राह्मण्यमुक्तं वक्ष्यमाणं च त्वरमाणेन कतिपयैरेव दिवसैः साधयामीति अभिनिवेशवता न लभ्यं तद् ब्राह्मण्यं मां त्वं पृच्छसि अव्यक्तविद्यामात्मनो ज्ञानं आत्मज्ञानमेव हि ब्राह्मण्यम् । विद्यां फलद्वारेण दर्शयति—नातिहृष्येत रागं न कुर्यादित्यर्थः । इत्युक्तप्रकारा । पूर्वं पूर्वकालमेषा रीतिरिति शेषः । अव्यक्तविद्यायाः फलमुक्त्वा साधनमाह । बुध्ये जाने । एषां गुरूणां सिद्धां निष्पन्नाम् ॥ २ ॥

[ सर्व० ] सनत्सुजातेति । यामिमां ब्राह्मीं ब्रह्मसंबन्धिनीं वाचं विश्वरूपां अनेकविधां वदसे । कामेषु इच्छासु

१ ख. कामेषु । ख. त्वं शक्यमेतत्कुमार । शां. यदिमां परार्थां…वदसि हि । शां. कार्येषु सुदु…मेवं । २ ख. हृष्येन्न कुप्येत् । ख. उत्तरार्धस्थाने अव्यक्तविद्यामिति पूर्वमेषा बुद्धया तेषां ब्रह्मचर्येण कुर्यात् । शां. यन्मां पृच्छस्यभिषङ्गेण राजन् । शां. प्रक्षीन ।

**धृतराष्ट्र उवाच—**

अत्यन्तविद्यामिति यत्सनातनीं
　ब्रवीषि त्वं ब्रह्मचर्येण सिद्धाम् ।
अनारभ्यां वसतीह कार्यकाले
　कथं ब्राह्मण्यममृतत्वं लभेत ॥ ३ ॥

**सनत्सुजात उवाच—**

अव्यक्तविद्यामभिधास्ये पुराणीं
　बुद्ध्या च तेषां ब्रह्मचर्येण सिद्धाम् ।
यां प्राप्यैनं मर्त्यलोकं त्यजन्ति
　या वै विद्या गुरुवृद्धेषु नित्या ॥ ४ ॥

**धृतराष्ट्र उवाच—**

ब्रह्मचर्येण या विद्या शक्या वेदितुमञ्जसा ।
तत्कथं ब्रह्मचर्यं स्यादेतद्विद्वन् ब्रवीहि मे ॥ ५ ॥

**सनत्सुजात उवाच—**

*आचार्ययोनिमिह ये प्रविश्य
　भूत्वा गर्भं ब्रह्मचर्यं चरन्ति ।
इहैव ते शास्त्रकारा भवन्ति
　प्रहाय देहं परमं यान्ति योगम् ॥ ६ ॥

---

श्रोतुं जातासु सुदुर्लभां कथां त्वादृशानां सर्वथाऽलाभात् । कथ्यते इति कथा वाक्यार्थस्तां कथाम् । अथैतद्वाक्यं तदर्थ-प्रतिपादकं मे ब्रूहि ॥ १ ॥ इदं यत्त्वं मां पृच्छेः पृच्छसि तत्त्वरमाणेन अधुनैव सर्वं जानीयामित्यभिनिवेशवता न लभ्यम् । त्वयैतत्कथं ज्ञातमित्याह—नातिहृष्येन्न कुप्येत् अव्यक्तविद्यामिति पूर्वमेवं बुध्ये तेषां ब्रह्मचर्येण सिद्धाम् । अहं त्वेतां यद्बुध्ये जानामि अव्यक्तस्यात्मनो विद्यां प्रतिपादकं शास्त्रमितिः प्रकारार्थः एवंप्रकारा, स्थितिरिति शेषः । तत्रायं हेतुः नातिहृष्येन्न कुप्येत् अतिहर्षो रागः कोपो द्वेषस्तौ मे न स्त इत्यर्थः । पुरुषव्यत्ययश्छान्दसः । किंच तामात्मविद्यां तेषां गुरूणां ब्रह्मचर्येण, तेषु ब्रह्मचर्य-वासादित्यर्थः । ब्रह्मचर्यवासेन वक्ष्यमाणलक्षणेन पूर्वं सिद्धामहं बुध्ये । ततो ब्रह्मचर्यमत्र हेतुः । न च त्वयि रागद्वेषाभावो ब्रह्मचर्यं चास्तीत्यर्थः ॥ २ ॥

[ लक्षा० ] परामन्यां कुमारः कुत्सितः मारो यस्मात्स कुमारः । ब्राह्मणः कुमारो वा ॥ १ ॥

[ शांक० ] किंच—आद्यामिति । आद्यां सर्वादिभूतब्रह्म-विषयां विद्यां वदसि हि सत्यरूपां परमार्थरूपां मे ब्रूहीति । यद्वा, आद्याम् अकार्यभूतां असत्यप्रपञ्चाविषयां विद्यां वदसि । तस्मादत्वरमाणेन ब्रह्मचर्यादिसाधनोपेतेन उपसंहृतान्तःकरणेनैव लभ्येत्यर्थः । या प्राप्यते ब्रह्मचर्येण सद्भिः यां प्राप्यैनं मर्त्यभावं त्यजन्ति या वै विद्या गुरुवृद्धेषु गुरुणा विद्याप्रदानादिना वर्धितेषु शिष्येषु नित्या नियता ॥ ३ ॥ एवमुक्ते ब्रह्मचर्यविज्ञानायाह धृतराष्ट्रः—ब्रह्मचर्येणेति । या विद्या ब्रह्मचर्येण वेदितुं शक्या, तत्साधनभूतं ब्रह्मचर्यं कथं स्यात् । एतत् ब्रह्मचर्यं विद्वन्, ब्रवीहि मे ॥ ४ ॥ एवं पृष्टः प्राह भगवान्—आचार्येति । आचार्ययोनिमिह ये प्रविश्य आचार्यसमीपं गत्वेत्यर्थः । भूत्वा गर्भम् उपसदनादिना शिष्या भूत्वा ब्रह्मचर्यं गुरुशुश्रूषादिकं चरन्ति कुर्वन्ति, इहैव अस्मिन् लोके ते शास्त्रकारा भवन्ति; शास्त्रकर्तारः पण्डिताः; ततो बाल्यादिकं निर्विद्य ब्राह्मणा भूत्वा आरब्धकर्मक्षये विहाय देहं परमं यान्ति सत्यं सत्यादिलक्षणं परमात्मानं प्राप्नुवन्ति ॥ ५ ॥

[ नील० ] अत्यन्ते अन्तस्त्रिविधपरिच्छेदः तमतिक्रान्त-मत्यन्तं ब्रह्म तद्विषयां विद्याम् । सनातनीं नित्यसिद्धां प्रत्यगात्मनो नित्यापरोक्षत्वात्, यत्साक्षादपरोक्षाद्ब्रह्मेति श्रुतेः । सिद्धामभिव्यज्यमानां तत्र हेतुः अनारभ्यां कर्मवदारम्भायोग्यां या च कार्यकाले इह आत्मन्येव वसति नित्यसिद्धत्वात् । एवं सति ब्राह्मण्यं ब्राह्मणस्य योग्यममृतत्वं कथं लभेत । नहि लब्धार्थे यत्नोऽपेक्ष्यत इति ब्रह्मचर्याद्यनुष्ठानाक्षेपः ॥ ३ ॥ अत्रोत्तरमाह—अव्यक्तेति । बुद्ध्याख्योपाधिसंबन्धजनितकालुष्यादविविक्ततया न व्यक्तमव्यक्तं ब्रह्म तस्य विद्याम् । अयं भावः—यद्यपि ब्रह्म नित्यापरोक्षमात्मत्वात् तथापि अशनायाद्यतीतस्य तस्य विविक्तस्य परोक्षत्वात्तदापरोक्ष्याय यत्नो युक्त इति ॥ ४ ॥ अञ्जसा आर्जवेन ॥ ५ ॥ आचार्येति योनिः स्थानम् । योनिष्ट इन्द्र निषदे अकारि, स्वे योनौ निषदतं सरूपा इत्यादौ दर्शनात् । गर्भे भूत्वा तस्य निष्कपटसेवया अन्तरङ्गत्वं प्राप्येत्यर्थः । शास्त्रकाराः शास्त्रकर्तृत्वं ब्रह्मण्येव श्रुतं महतो भूतस्य निःश्वसितमेतदृग्वेद इत्यादिना । गुरोरनुग्रहादिहैव ब्रह्मभावं प्राप्नुवन्तीत्यर्थः । परममपुनरावृत्ति योगं ब्रह्मणा सह ऐक्यं यान्ति ॥ ६ ॥

[ अर्जु० ] अव्यक्तविद्याया ब्रह्मचर्यसाध्यत्वं श्रुत्वा आत्मनो ब्रह्मचर्यासंभवं मन्यमानः पृच्छति—अव्यक्तविद्यामित्यादि । हे आर्य पण्डित! इह काले गार्हस्थ्यावसरे वसती गुरौ ब्रह्मचर्येण स्थितिः अनारभ्या अकरणीया

---

३ ख. अव्यक्तविद्यामिह यत्सनातन । ख. अनारभ्या । शां. आद्यां विद्यां वदसि हि सत्यरूपां या प्राप्यते ब्रह्मचर्येण सद्भिः । उत्तरार्धं नास्ति । ख. यां प्राप्य मर्त्या मर्त्यलोकं त्यजन्ति । ४ ख. नास्ति । शां. पूर्वार्धं नास्ति । शां. मर्त्यभावं । ५ ख. नास्ति । शां. एतद्विद्वन् । ६ ख. नास्ति । शां. भूत्वा गर्भं ब्रह्मचर्यं वदन्ति । शां. विहाय देहं···सत्यम् । *अर्जु० सर्वंब्रह्म-अस्मिंल्लोके, शरीरमेतौ, इत्यतः परम् आचार्येत्यादिश्लोकं पठतः ।

**अस्मिँल्लोके वै जयन्तीह कामान्**
**ब्राह्मीं स्थितिं ह्यनुतितिक्षमाणाः ।**
**त आत्मानं निर्हरन्तीह देहात्**

तस्माद् ब्रह्मचर्यसाधनशून्योऽस्मदादिः कथं ब्राह्मण्यममृतत्वरूपं लभेतेति प्रश्नः ॥ ३ ॥

[ सर्व० ] अव्यक्तविद्यामितीति । ब्रह्मचर्यसिद्धां यस्माद्ब्रवीषि अतः कथं ब्राह्मण्यम् ब्रह्मसंबन्ध्यमृतत्वमस्मदादिर्लभेत ब्रह्मचर्यं हि तत्साधनं तच्चास्मदादेर्न संभवति । यतः अनारभ्योऽयमतीहार्यकाले इह अस्मद्गृहे अर्यः स्वामी भावपरो निर्देशः, स्वामित्वसमये राज्यकाले यद्गुरुकुलवासो ब्रह्मचर्यरूपोऽनारभ्यः कर्तुमशक्यः ॥ ३ ॥

[ शंक० ] किंच—अस्मिँल्लोके इति । अस्मिन् लोके विजयन्तीह कामान् ब्राह्मीमेव स्थितिं ब्रह्मण्येव स्थितिम् अनुतितिक्षमाणाः अनुदिनं क्षममाणाः ते आत्मानं देहेन्द्रियादिभ्यो निष्कृष्य तत्साक्षिणं चिन्मात्रं निर्हरन्ति पृथक्कुर्वन्ति । किमिव ? मुञ्जादिषीकामिव यथा मुञ्जादिषीकामन्तःस्थां निर्हरन्ति, एवं कोशपञ्चकेभ्यो निष्कृष्य सर्वात्मानं प्रतिपद्यन्त इत्यर्थः । केन—धीरभावात् धैर्येण । श्रूयते च कठवल्लीषु—'अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनानां हृदये संनिविष्टः । तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीकां धैर्येण तं विद्याच्छुक्रममृतम्' इति ॥ ६ ॥ 'आचार्ययोनिमिह' इत्यत्र आचार्यस्य योनित्वं दर्शितम् । तत्कथं मातापितृव्यतिरेकेणाचार्यस्य योनित्वमित्याशङ्क्य स एव साक्षाज्जनयितेत्याह—शरीरमिति । शरीरम् इह अस्य एतौ मातापितरौ कुरुतः, नात्मानं स्वरूपेण जनयतः । यदिदं देहद्वयात्मना जन्म तदसत्यम् । आचार्यतः तु यत् इदं चित्सदानन्दाद्वितीयब्रह्मात्मना जन्म, तत्सत्यं परमार्थभूतं तथा एव अमृतं विनाशवर्जितम् । तस्मात्स एव जनयितेत्यर्थः । श्रूयते च प्रश्नोपनिषदि—'त्वं हि नः पिता योऽस्माकमविद्यायाः परं पारं तारयसि' इति । तथा चाहापस्तम्बः—'स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयतः' इति ॥ ७ ॥

[ नील० ] अस्मिन्निति । ये जितकामाः ब्राह्मीं स्थितिं प्राप्तुं ये च द्वन्द्वसहाः ते देहादात्मानं निर्हरन्ति पृथक्कुर्वन्ति सत्वसंस्थाः सत्वगुणभाजः । श्रुतिश्च—तं स्वाच्छरीरात्प्रवृहेन्मुञ्जादिव इषीकां धैर्येणेति । प्रवृहेत् पृथक्कुर्यात् ॥ ७ ॥ आचार्यः शास्ता उपदेष्टा यस्यां सा जातिर्जन्म । यथा ब्राह्मणस्य सावित्रीप्राप्त्या सावित्रं

७ ख. येऽस्मिँल्लोके विज° । शां विजयन्तीह । शां. मिव धीरभावात् ।
८ ख. आचार्यजाता । ख. सा सत्त्वा । अतउत्तरमधिकं ख. आचार्ययोना-

**मुञ्जादिषीकामिव सत्त्वसंस्थाः ॥ ७ ॥**
**शरीरमेतौ कुरुतः पिता माता च भारत ।**
**आचार्यशास्ता या जातिः सा पुण्या साऽजराऽमरा ॥८॥**

द्वितीयं जन्म एवमाचार्यात् परब्रह्मविद्याप्राप्त्याऽपि तस्य जन्मान्तरं भवति तच्च मोक्षहेतुत्वात्पुण्यत्वादिगुणसंयुक्तम् ॥ ८ ॥

[ अर्जु० ] उत्तरम्—येऽस्मिन् लोके वै जयन्तीह कामान् ब्राह्मीं स्थितिं ह्यनु तितिक्षमाणाः । तमात्मानं निर्हरन्तीह देहान्मुञ्जादिषीकामिव सत्त्वसंस्थाः । ब्रह्मण इमां ब्राह्मीं स्थितिमारम्भकालादनु पश्चात् तितिक्षमाणाः यावज्जीवमनुतिष्ठन्त इति यावत् ? ते योगिन आत्मानं चिन्मयं निर्हरन्ति विवेचयन्ति देहात् पुर्यष्टकात् मुञ्जातः शरद्रुतः इषीकां शरं सत्वसंस्थाः सत्वकाये संस्थिताः । एतदुक्तं भवति—ब्रह्मसाक्षात्कारो हि ब्राह्मण्यं तद् ब्रह्मचारिणां गृहस्थानां स्वधर्मनिष्ठानां ध्यानधारणासमाधयस्तदुपायो येषां तेषां ब्रह्मवेदन इति भावः ॥ ७ ॥ ब्राह्मण्यधारणं निरूपयितुमाह—शरण्यमेतौ कुरुतः पिता माता च भारत। आचार्यजाता या जातिः सा पुण्या साऽजरामरा ॥ एतौ प्रसिद्धौ शरण्यं शरणशीलं सहजभङ्गुरजातिम् । आचार्यजातेव जाता तदुपदर्शिता या दीक्षारूपा जातिः वेदनासु विविक्ता अजरामरा जरामरणहीना ॥ ८ ॥ आचार्ययोनावित्यादि । आचार्य एव योनिस्तत्र प्रविश्य शिष्यभावेन मिलित्वा गर्भे तदुपदेशे निरस्तसमस्तस्थानात्मकारसमारोपमात्मभावं भूत्वा प्राप्य ब्रह्मचर्यं व्रतरूपमानन्दरूपम् ॥६॥

[ सर्व० ] अत्र संप्रति प्रत्युत्तरम्—अस्मिन् लोके विजयन्ति कामान् रागान् । ब्राह्मीं ब्रह्मसंबन्धिनीं स्थितिं व्यवस्थां ब्रह्मचर्यादिरूपाम् अनुतितिक्षमाणाः कामविजयादनु सहमानाः । ततः प्रयासाराधे?न निवृत्तास्ते सत्वसंस्थाः उत्कटसत्वाः देहादात्मानं निर्हरन्ति विवेकादृहन्ति । मुञ्जात् शरवल्कात् इषीकां शरकाण्डमिव ॥ ७ ॥ इदानीं गुरुकुलवासप्रकारमभिधास्यन् गुरोस्तत्र सर्वोत्तमत्वमाह—शरीरमिति । यदुक्तमापस्तम्बेन, स हि विद्यातस्तं जनयति तच्छ्रेष्ठं जन्म शरीरमेव मातापितरौ जनयत इति । एताविति मातापित्रोः प्रसिद्धत्वमाह । शरीरं शीर्यमाणम् । आचार्यजाता आचार्यजनिता या जातिर्जन्म विद्यायां मातरि ज्ञानरूपेण देहेन सा नित्या । कुतः यतः साऽजरामरा जरामरणविरहिणी । अजरामरा नित्यपदप्राप्तिहेतुत्वादेवमुपचारः शरीरवैधर्म्योपदेशदर्शनार्थः ॥ ८ ॥ आचार्ययोनौ आचार्यसंबन्धिन्यां स्वस्यां योनौ तत्वज्ञान-

विह संप्रविश्य भूत्वा गर्भे ब्रह्मचर्यं चरन्ति । इहैव ते शास्त्रकारा भवन्ति प्रहाय देहं परमं यान्ति योगम् ॥ शां. आचार्यतस्तु यज्जन्म तत्सत्यं वै तथामृतम् ।

यः प्रावृणोत्यवितथेन वर्णा-
नृतं कुर्वन्नमृतं संप्रयच्छन् ।
तं मन्येत पितरं मातरं च
तस्मै न द्रुह्येत्कृतमस्य जानन् ॥ ९ ॥
गुरुं शिष्यो नित्यमभिवादयीत
स्वाध्यायमिच्छेच्छुचिरप्रमत्तः ।
मानं न कुर्यान्नादधीत रोष-
मेष प्रथमो ब्रह्मचर्यस्य पादः ॥ १० ॥
शिष्यवृत्तिक्रमेणैव विद्यामाप्नोति यः शुचिः ।
ब्रह्मचर्यव्रतस्यास्य प्रथमः पाद उच्यते ॥ ११ ॥
आचार्यस्य प्रियं कुर्यात्प्राणैरपि धनैरपि ।
कर्मणा मनसा वाचा द्वितीयः पाद उच्यते ॥ १२ ॥
समा गुरौ यथा वृत्तिर्गुरुपत्न्यां तथाऽऽचरेत् ।
तत्पुत्रे च तथा कुर्वन् द्वितीयः पाद उच्यते ॥१३॥
आचार्येणात्मकृतं विजानन्
ज्ञात्वा चार्थं भावितोऽस्मीत्यनेन ।
यन्मन्यते तं प्रति हृष्टबुद्धिः
स वै तृतीयो ब्रह्मचर्यस्य पादः ॥ १४ ॥

---

रूपदेहोत्पादनस्थाने विद्यायामिह प्रविश्यावगाह्य तस्या गर्भे मध्ये भूत्वा ब्रह्मचर्यं चरन्ति । इहैव तेन देहेन शास्त्रमनुशासनं तत्कारा: शास्त्रकाराः । प्रहाय देहं परमयोगं योगविषयं ब्रह्म यान्ति ॥ ६ ॥

[ शंक ] यस्मादाचार्याधीना परमपुरुषार्थसिद्धिः, तस्मात्—स इति । स आवृणोति आपूरयति अमृतं पूर्णानन्दं ब्रह्म आत्मत्वेन संप्रयच्छन् तस्मै आचार्याय न द्रुह्येत् द्रोहं नाचरेत् । तथा च श्रुतिः—'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रकाशन्ते महात्मनः' । तथा चापस्तम्बः—'तस्मै न द्रुह्येत्कदाचन । स हि विद्यातस्तं जनयति' इति । कृतमस्य जानन्—अस्येति तृतीयार्थे षष्ठी—अनेनात्मनः कृतमुपकारं विजानन् । किं तर्हि कर्तव्यमित्याह—गुरुं शिष्यो नित्यमभिवादयीत देवमिवाचार्यमुपासीत । तथा च श्रुतिः—'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ' इति । तथा—स्वाध्यायमिच्छेच्च श्रवणादिपरो भवेत् सदा अप्रमत्तः अप्रमादी सन् ॥ ८ ॥ इदानीं चतुष्पाद्ब्रह्मचर्यमाह श्लोकचतुष्टयेन—शिष्येति । शिष्यवृत्तिक्रमेणैव 'आचार्ययोनिमिह' इत्यादिनोक्तक्रमेण शुचिः विद्यामाप्नोति यत्, तत् ब्रह्मचर्यं तस्यास्य प्रथमःपाद उच्यते ॥९॥ आचार्ययेति । स्पष्टोऽर्थः ॥१२॥ यथेति । स्पष्टार्थः श्लोकः । तथा चोक्तम्—'आचार्यवदाचार्यदारेषु वृत्तिः' 'आचार्यवदाचार्यपुत्रे वृत्तिश्च' इति ॥ १० ॥ आचार्येणात्मकृतम् आत्मनः कृतम् उपकारं विजानन् ज्ञात्वा अर्थं वेदार्थं परमपुरुषार्थं ज्ञात्वा च अवगम्य भावितोऽस्मीत्यनेन भावितोऽस्मीति स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मना यथावदुत्पादितोऽस्मीति चिन्तयन् तम् आचार्यं प्रति हृष्टबुद्धिः सन् यत् आत्मनः कृतार्थत्वं मन्यते, स वै तृतीयो ब्रह्मचर्यस्य पादः ॥ ११ ॥

[ नील० ] आचार्यमाहात्म्यप्रख्यापकं मन्त्रं पठति—यः प्रावृणोतीति । यः आचार्यः वर्णान् ब्राह्मणादीन् अवितथेन वितथमनृतमनात्मा जडं तदन्येन सत्येन चिदात्मना प्रकर्षेण आवृणोति सबाह्याभ्यन्तरं वासयति । द्वैतोत्थभयनिवारणेन पालयतीत्यर्थः । ऋतं ब्रह्म कुर्वन् वाचा आविष्कुर्वन् । तस्य फलमाह अमृतं संप्रयच्छन्निति अमृतं मोक्षं, कृतं तत्कृतमुपकारम् ॥ ९ ॥ शुचिः स्नानादिना भावशुद्ध्या च अप्रमत्तः गुरुशुश्रूषायां सावधानः मानं न कुर्यात् तुच्छमपि कार्यं शिशूनां शौचादिकं तदपि कर्त्तव्यमेवेत्यर्थः अत्यंतं श्रमेऽपि रोषं नादधीत न विदध्यात् ॥ १० ॥ शिष्यवृत्तिः सायंप्रातर्भिक्षणेन जीवनं तेनैव क्रमेण न तु गुर्वन्नोपजीवनेनेत्यर्थः ॥ ११ ॥ द्वाभ्यां श्लोकाभ्यां ब्रह्मचर्यस्य प्रथमं पादमुक्त्वा द्वाभ्यां द्वितीयं पादमाह—आचार्यस्येति ॥ १२ ॥ प्राप्तविद्यो विद्यासुखेन हृष्यन् आचार्यं यत् अत्यन्तं मानयति स ब्रह्मचर्यस्य तृतीयः पाद इत्याह—आचार्येणेति । आत्मकृतं स्वस्मै उपकृतं विद्यादानेन तस्य च अर्थं प्रयोजनं दुःखनिवृत्तिमानन्दावाप्तिं च ज्ञात्वाऽनुभूय अनेनाचार्येण भावितो वर्धितोऽस्मीति जानन् यन्मन्यते ॥ १४ ॥

[ अर्जु० ] संप्रयच्छन् ददत् स पिता तस्य द्रोहं दुःखहेतुं न कुर्यात् कृतमुपकारम् ॥ ९ ॥ अभिमन्यमानः पूजयन् गुरोः सकाशात् स्वाध्यायमिच्छेदित्यन्वयः । मानमहंकारं न कुर्यात् न दधीत रोषं मनसि रोषं न रोपयेत् ॥ १० ॥

[ सर्व० ] इदानीं ब्रह्मचर्यधर्मानाह—य आवृणोतीति । आवरणमापूरणम् । अवितथेन सत्येन वचसा वेदे

---

९ ख. य आवृ° । ख. कार्ष्णे ऋतं कुर्वन् । शां. स आवृणोत्यमृतं संप्रयच्छंस्तस्मै म द्रुह्येत्कृतमस्य जानन् । इति सर्वश्लोकस्थाने । १० ख. नित्यमभिमन्यमानः । ख. °निदधीत । शा. मिच्छेच्च सदाऽप्रमत्तः । शां. उत्तरार्धं नास्ति । ११ ख. नास्ति । १२ शां. अयं पञ्चदशस्य स्थाने । तत्र पाठभेदः—आचार्याय प्रियं । चतुर्थः । १३ ख. तथा भवेत् । यथोक्तकारी प्रियकृत्तृतीयः पाद उच्यते । शां. यथा नित्यं गुरौ वृत्तिर्गु° । १४ ख. नास्ति ।

नाचार्यस्यानपाकृत्य प्रवासं
प्राज्ञः कुर्वीत नैतदहं करोमि ।
इतीव मन्येत न भाषयेत
स वै चतुर्थो ब्रह्मचर्यस्य पादः ॥ १५ ॥
कालेन पादं लभते तथार्थं
ततश्च पादं गुरुयोगतश्च ।
उत्साहयोगेन च पादमृच्छे-
च्छास्त्रेण पादं च ततोऽभियाति ॥ १६ ॥

धर्मादयो द्वादश यस्य रूप-
मन्यानि चाङ्गानि तथा बलं च ।
आचार्ययोगे फलतीति चाहु-
र्ब्रह्मार्थयोगेन च ब्रह्मचर्यम् ॥ १७ ॥
एवं प्रवृत्तो यदुपालभेत वै
धनमाचार्याय तदनुप्रयच्छेत् ।
सतां वृत्तिं बहुगुणामेवमेति
गुरोः पुत्रे भवति च वृत्तिरेषा ॥ १८ ॥

दर्शनात् । ऋतं ब्रह्म तदेव कुर्वन् अमृतं मोक्षम् । न द्रुह्येत् न दुःखं जनयेत् । अस्य कृतमुपकारं प्रजानन् स्मरन् । तथाच श्रुतिः—य आवृणोत्यवितथेन कर्णावदुःखं कुर्वन्नमृतं संप्रयच्छन् । तं मन्येत पितरं मातरं च तस्मै न द्रुह्येत् कृतमस्य जानन् । तथा चावितृतेनेति नापाद्यम्(?) ॥ ९ ॥ अभिमन्यमानः संमानयन् स्वाध्यायमन् अप्रमत्तोऽवहितः मानमभिमानं न कुर्यात् । नादधीत रोषं गुरुंप्रति । प्रथमः पादो भागः प्रथमस्तमारभ्य कर्तव्यत्वात् । एवं द्वितीयादयस्तत्तदनन्तरकार्यतया तथोक्ताः द्वयोरपि यथोक्तकारी प्रियकृच्च ॥ १०–१४ ॥

[ लक्षा० ] अभिषङ्गेन स्नेहेन । अहिंसा च ब्रह्मचर्या च अहिंसाब्रह्मचर्यं तेन त्वमध्यात्मविद्यां वदसीत्यत्र वदसि वदेति वदसि । य आस्तृणातीत्यत्र आस्तृणाति ज्ञानं विस्तारयति अमृतं नित्यं वेदम् ॥ ९ ॥

[ शंक० ] इदानीं चतुष्पदीं विद्यां दर्शयति—कालेनेति। अत्र क्रमो न विवक्षितः । प्रथमं गुरुयोगतः ततः उत्साहयोगेन बुद्धिविशेषप्रादुर्भावेन ततः कालेन बुद्धिपरिपाकेण ततः शास्त्रेण सहाध्यायिभिस्तत्त्वविचारेण । तथा चोक्तम्—'आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया । कालेन पादमादत्ते पादं सब्रह्मचारिभिः' इति ॥ १३ ॥ ज्ञानादीनामाचार्यसंनिधाने फलसिद्धिरित्याह—ज्ञानादयइति । ज्ञानादयः 'ज्ञानं च' इत्यादिना पूर्वोक्ता द्वादश गुणा यस्य पुरुषस्य, सः ज्ञानादयः रूपं अन्यानि चाङ्गानि 'श्रेयांस्तु षड्विधस्त्यागः' 'सत्यं ध्यानम्' इति श्लोकद्वयोक्तानि, तथा बलं च तद्धर्मपरिपालनसामर्थ्यं च सर्वम् आचार्ययोगे एव फलति, नाचार्ययोगं विना फलति । श्रूयते च—'आचार्याद्धैव विद्या विदिता' इति, 'आचार्यवान्पुरुषो वेद' इति च । ब्रह्मापि तद्ब्रह्मचर्यं ब्रह्मार्थयोगेन फलति स्वात्मनः चित्सदानन्दाद्वितीयब्रह्मैक्यसंपादनद्वारेण फलतीत्यर्थः ॥ १४ ॥

[ नील० ] अनपाकृत्य विद्याया निष्क्रयार्थमृणमर्थदानेन अपरिहृत्य प्रवासं गुरुगृहादन्यत्राश्रमान्तरे स्थितिं न कुर्वीत । एतत् गुरवे अर्थप्रदानमहं करोमीति नैव मन्येत मनसा । न च भाषयेत स्वार्थे णिच् वदेत वाचा ॥ १५ ॥ चतुष्पाद्ब्रह्मचर्येण लभ्यां चतुष्पदीं विद्यामाह—कालेनेति कालेन बुद्धिपरिपाकेन । उत्साहयोगेन बुद्धिवैभवेन । शास्त्रेण सहाध्यायिभिर्विचारेण । क्रमस्तु न विवक्षितः । उक्तं च—आचार्यात्पादमादत्ते पादं शिष्यः स्वमेधया । कालेन पादमादत्ते पादं सब्रह्मचारिभिरिति ॥ १६ ॥ धर्मादय इति । यस्य ब्रह्मचर्यस्य रूपं स्वरूपभूता इत्यर्थः अन्यानि चाङ्गानि आसनप्राणजयादीनि । बलं योगे नित्योद्युक्तता । ब्रह्मार्थो वेदार्थः कर्मब्रह्मणी तयोर्योगेन अधिगमेन ब्रह्मचर्यं फलतीत्यर्थः ॥ १७ ॥ एवमिति । अहं करोमीत्यभिमानं विना तत्प्रकाशकं वचनं च विना गुर्वर्थार्थं प्रवृत्तः सः आचार्यः वृत्तिं जीविकामेति प्राप्नोति वृत्तिर्वर्तनं शिष्यस्येति शेषः ॥ १८ ॥

[ अर्जु० ] प्रवादं वचसा विवदनम् । इङ्गितेनाकारेण वाञ्छितं मन्येत उन्नयेत् । भाषणक्लेशेनापि गुरुं न योजयेत् । पादश्चतुर्थो भागः ॥ १५ ॥ एवमुक्तप्रकारेण सन्तं जनं वर्तमानं यद् धनमुपप्लवते ॥ १८ ॥

[ सर्व० ] आचार्यस्यानपाकृत्य दक्षिणामदत्त्वा प्रवादं शिष्यः विद्याया वचनम् । आचार्यत्वं कुर्वीतेति विधिः । अतो नैतदहं करोमीति मन्येत एवं निश्चिनुयात् यथा नान्यथास्य मनः स्यात् । तं च दक्षिणया तोषयेत् । गुरुणा वादयेत् । न तं पृच्छेत् कियत्ते ददानीति । प्रश्ने सत्युपरोधेन भूरिणस्तस्यानभिधानात् निर्बन्धादिना कोपसंभवात् ॥ १५ ॥ नन्वेवं कियत्तस्मै देयमिति कथं ज्ञेयमत आह—तमेव सन्तमिति । एवं वर्तमानं यद्धनमुपाहरेदुपागच्छेत् यथाशक्ति प्रयतमानम् । असह्यस्य च तद्वचनान्तरमशक्यत्वात् । तदाचार्याय संप्रयच्छेत् । सतां

१५ ख. नाचार्याद् यो प्राप्य चैतत्प्रसादं—येह्योपकृत्य प्रवादं । ख. भाषयीत । शां. नास्ति । १६ ख. न । शां. तथार्थं तथैव पादं । १७ ख. न ।

शां. ज्ञानादयो । १८ ख. एवं वसन्तं यदुपप्लवेद्धनमाचार्यायैव । शां. नास्तिः ।

एवं वसन् सर्वतो वर्धतीह
बहून् पुत्रान् लभते च प्रतिष्ठाम् ।
वर्षन्ति चास्मै प्रदिशो दिशश्च
वसन्त्यस्मिन्ब्रह्मचर्ये जनाश्च ॥ १९ ॥
एतेन ब्रह्मचर्येण देवा देवत्वमाप्नुवन् ।
ऋषयश्च महाभागा ब्रह्मलोकं मनीषिणः ॥ २० ॥
गन्धर्वाणामनेनैव रूपमप्सरसामभूत् ।
एतेन ब्रह्मचर्येण सूर्योऽप्यह्नाय जायते ॥ २१ ॥
आकाङ्क्ष्यार्थस्य संयोगाद्रसभेदार्थिनामिव ।
एवं ह्येते समाज्ञाय तादृग्भावं गता इमे ॥ २२ ॥
य आश्रयेत्पावयेच्चापि राज-
न्सर्वं शरीरं तपसा तप्यमानः ।
एतेन वै बाल्यमभ्येति विद्वान्
मृत्युं तथा स जयत्यन्तकाले ॥ २३ ॥
अन्तवतः क्षत्रिय ते जयन्ति
लोकान् जनाः कर्मणा निर्मलेन ।
ब्रह्मैव विद्वांस्तेन चाभ्येति सर्वं
नान्यः पन्था अयनाय विद्यते ॥ २४ ॥

---

वृत्तिमाचारमेति प्राप्नोति । गुरोः पुत्र इति पादेन नैष्ठिकब्रह्मचारिणो वृत्तिमाह ॥ १८ ॥

[ लक्षा० ] यन्माद्यतमित्यत्र तं गुरुं प्रति मदी हर्षे इति धातोः संतापं करोति । एवं च संगतमित्यत्र यद्धनमुपप्लवेत् उपपन्नतया प्राप्नोति आचर्यया आ सम्यक् चर्यया गुरुपरिचर्यया प्राज्ञः एतत् अहं करोमीति न मन्येतेत्यन्वयः ॥ १५ ॥ गुरुयोगतः गुरुप्रसादाख्योपायतः । शास्त्रेण पादं चेत्यत्र शास्त्रेण स्वशिष्यं प्रति व्याख्यानरूपशासनेन ॥ १६ ॥ ज्ञानादयो द्वादशेत्यत्र बलं देवताबलं स्वयुक्तिबलं वा । ब्रह्मार्थयोगेनेत्यत्र ब्रह्मार्थयोगेन परब्रह्मार्थाख्यज्ञानेन ॥ १७ ॥

[ शंक० ] ब्रह्मचर्यस्तुतिं करोति द्वाभ्याम्—एतेनेति । देवा देवत्वमेतेन प्राप्नुवन् । ऋषयोऽपीह ऋषित्वमेतेन प्राप्ताः । सगन्धर्वाः गन्धर्वैः सह वर्तमानाः रूपमप्सरसोऽजयन् रूपाणि रमणीयानि एतेन ब्रह्मचर्येण अजयन् । अह्नो दीप्तिसमूहः, अह्नाय जगतां द्योतनाय सूर्यश्च जायते । उक्तं च—'अह्नो दीप्तिश्च कथ्यते' इति ॥ १५ ॥ १६ ॥ कथमेकस्य ब्रह्मचर्यस्यानेकविधफलसाधकत्वमित्यत आह—यथा चिन्तामण्यादयो रसभेदार्थिनामिव आकाङ्क्षार्थस्य संयोगात् तत्तदाकाङ्क्षितमर्थं प्रयच्छन्ति, एवम् एतत् ब्रह्मचर्यमाकाङ्क्षार्थस्य संयोगात्तत्तदाकाङ्क्षितं प्रयच्छतीति ज्ञात्वा तत्तत्फलार्थं ब्रह्मचर्यं चरित्वा तादृग्भावं तादृशं भावं गतास्तु इमे देवादयः । यस्मादाचार्यसंनिध्यनुष्ठितात् ब्रह्मचर्यात् परमपुरुषार्थप्राप्तिः, तस्मादाचार्ययोनिं प्रविश्य गर्भो भूत्वा ब्रह्मचर्यं चरेदित्यर्थः ॥ १७ ॥ नन्वेवं ज्ञाननिष्ठता यदि ज्ञानस्यैव पुरुषार्थत्वं भवेत्; अपि तु कर्मण एवेत्याशङ्क्याह—अन्तेति । हे क्षत्रिय, अन्तवन्तः अन्तवतो लोकान् पितृलोकदेवलोकादीन् ते जयन्ति, नानन्तं स्वात्मभूतं परमात्मानं लोकं जयन्ति । केन तर्ह्यनन्तलोकप्राप्तिरित्याशङ्क्याह—ज्ञानेन विद्वान् तेज अभ्येति नित्यं नित्यमविनाश्यात्मभूतमेव अभ्येति तेजः ज्योतिः, न कर्मणा । कस्मात्पुनर्ज्ञानेनैवाभ्येति ? तत्राह—न विद्यते ह्यन्यथा तस्य पन्थाः । तस्य पूर्णानन्दज्योतिषो ज्ञानमेकं मुक्त्वा अन्यः पन्था मार्गो नास्त्येव । श्रूयते च—'तमेवं विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' इति ॥ १८ ॥

[ नील० ] वसन्, ब्रह्मचर्ये इति शेषः । सर्वतः सर्वैः प्रकारैः वर्धति वर्धते । वर्षति, धनैरिति शेषः ॥ १९ ॥ आकाङ्क्ष्येति । रसभेदः पारदगुटिकाविशेषश्चिन्तामणिसंज्ञस्तंचिन्तितवस्तुप्रदमर्थयन्ते तेषां रसभेदार्थिनां यथा आकाङ्क्ष्यस्य लिप्सितस्यार्थस्य संयोगः प्राप्तिस्ततो यादृक् भावो भवति एवमेव एते देवादयः समाज्ञाय ब्रह्मचर्यमुपेत्य तादृग्भावं सत्यसंकल्पत्वाच्चिन्तितवस्तुप्रदत्वं गताः ॥ २२ ॥ य इति सर्वं चतुष्पाद्ब्रह्मचर्यं य आश्रयेत् शरीरं च पावयेत् । बाल्यं रागद्वेषादिराहित्यं वेदान्तार्थानां युक्तिपूर्वकमनुचिन्तनेन तत्त्वनिश्चयं वा । अन्तकाले इत्यनेन यावज्जीवमुक्तप्रकारे बाल्ये तिष्ठेदिति दर्शितम् । यथोक्तम्, शक्नोतीहैव यः सोढुं प्राक् शरीरविमोक्षणात् । कामक्रोधोद्भवं वेगं स युक्तः स सुखी नर इति ॥ २३ ॥ अन्तेति । ते अविद्वांसः अन्तवतः अनित्यांल्लोकान्कर्मणा जयन्ति । विद्वांस्तु ब्रह्मैव सार्वात्म्यात् सर्वं तेन ज्ञातेन ब्रह्मणा अभ्येति अतस्तस्य कर्मप्राप्यं किंचित्फलं नावतिष्ठते इत्यर्थः । अतः ज्ञानादन्यः पन्थाः अयनाय मोक्षाय न विद्यते । ज्ञानादेव तु कैवल्यमित्यवधारणात् ॥ २४ ॥

[ सर्व० ] एवमुक्तक्रमेण वसन् गुरौ सर्वतः सर्वेण धनादिना वर्धते । महत् महत्त्वं विद्यादिना । पुत्रान् प्रतिष्ठां

---

१९ शां. नास्ति । ख. इहामुत्रकर्म° । ख. वसन्त्यस्मिन्ब्रह्मचर्यं जनाश्च । २० शां. भागा ब्रह्मचर्येण चाभवन् । २१ शां. एतेनैव सगन्धर्वा रूपमप्सरसोऽजयन् । २२ ख. न । २३ ख. तपो नाशयेत् पाटयेच्चापि° । शां. नास्ति । ज. य आश्रयेत् पाटयेच्चापि । ज. एतेन वैवर्णमभ्येति विद्वान् मृत्युं तथा स्म्यत्यन्तकाले । २४ ख. एष पन्थाः । शां. निर्मितेन । ज्ञानेन विद्वांस्तेज अभ्येति नित्यं न विद्यते ह्यन्यथा तस्य पन्थाः ।

**धृतराष्ट्र उवाच—**

आभाति शुक्लमिव लोहितमिवाथो
कृष्णमथाञ्जनं काद्रवं वा ।
सद्ब्रह्मणः पश्यति योऽत्र विद्वा-
न्कथं रूपं तदमृतमक्षरं पदम् ॥ २५ ॥

**सनत्सुजात उवाच—**

आभाति शुक्लमिव लोहितमिवाथो
कृष्णमायसमर्कवर्णम् ।
न पृथिव्यां तिष्ठति नान्तरिक्षे
नैतत्समुद्रे सलिलं बिभर्ति ॥ २६ ॥

कीर्तिं वर्षन्ति धनानि प्रदिशो विदिशः । जना अन्ये अस्मिन् ब्रह्मचर्याय वसन्त्याचार्यतां लभत इत्यर्थः ॥ १९ ॥ अह्राय जायते प्रजायते । तदेति ॥ २१ ॥ आशयेत् स्वशरीरेण । पाटयेत् द्विधा कुर्यात् सर्वमा बालाग्रात् । तपसानिमित्तेन तपोभ्यासोपेतेन ब्रह्मचर्येण बाल्यं मोहमात्माज्ञानमत्येति अतिक्रामति न तपोमात्रेण मृत्युं यमं रुणद्धि । सह तस्यासंबन्धात् । अन्तकाले मुक्तिकाले । बन्धयन्तीति पाठे बन्धिः संसाधनार्थः । तच्च वशीकरणमिति द्रष्टव्यम् ॥ २३ ॥ अन्तवन्तः नुम् छान्दसः असर्वनामस्थानेऽपि । अन्तो मरणं कर्मणा निर्मलेन निध्यानेनापि मरणवतो लोकानेव कर्मकृतो जयन्ति साधयन्ति । ब्रह्मैव विद्वान् तेन ब्रह्मवेदनेनात्येति मृत्युं, नान्यः पन्था ब्रह्मज्ञानादन्योऽयनाय तत्र गमनाय विद्यते ॥ २४ ॥

[ लक्षा० ] गन्धर्वाः अप्सरसश्च एतेन ब्रह्मचर्येण रूपं जि प्राप्ताविति धातोः अजयन् प्राप्नुवन् ॥ २१ ॥ अन्तवन्तः क्षत्रियाःते जयन्तीत्यत्र अन्तवन्तः निश्चयवन्तः ॥ २४ ॥

[ शंक० ] ज्ञानेन विद्वान् यद्ब्रह्म पश्यति, तत्किमिवाभातीति प्राह धृतराष्ट्रः—आभातीति । ज्ञानेन यद्विद्वान् पश्यति ब्रह्म, तत् किं शुक्लमिव आभाति, लोहितमिव आभाति, कृष्णमिव अर्जुनं काद्रवमिव आभाति; यत्र देशे भाति कथंरूपं तदमृतमक्षरं परं ब्रह्म ॥ १९ ॥ एवं पृष्टः प्राह भगवान्—नाभातीति । न एतत् ब्रह्म शुक्लादिरूपत्वेन अवभासते, अरूपत्वाद्ब्रह्मणः । श्रूयते च—'ततो यदुत्तरतरं तदरूपमनामयम्' इति, 'अशब्दमस्पर्शमरूपम्' इति च । तथा न पृथिव्यां तिष्ठति नान्तरिक्षे । तथा च श्रुतिरन्यत्रानवस्थानं दर्शयति—'स भगवः कस्मिन्प्रतिष्ठित इति स्वे महिम्नि' इति । कस्मात्पुनः कारणात्पृथिव्यादिषु न तिष्ठतीति ? तत्राह—नैतत्समुद्रे सलिलं बिभर्ति पञ्चभूतात्मकं देहं बिभर्ति । सलिलशब्दो भूतपञ्चकोपलक्षणार्थः, यथा—'अप एव ससर्जादौ तासु वीर्यमपासृजत्' इत्यत्र अप्शब्दो भूतपञ्चकोपलक्षणार्थः । श्रूयते च—'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' इति अपामेव पुरुषशब्दवाच्यत्वम् । एतदुक्तं भवति—यदि ब्रह्मणः संसारान्तर्वर्तित्वं भवेत्, तदा संसारानुप्रविष्टत्वात् घटादिवदीदृग्रूपादिमत्त्वमन्यस्मिंश्चावस्थानं भवेत् । इदं पुनरपूर्वादिलक्षणत्वात्संसाराननुप्रविष्टमेव ब्रह्म तस्माद्रूपादिरहितमेव तदिति ॥ २० ॥

[ नील० ] नान्यः पन्था अयनाय विद्यत इति श्रुत्वा तूष्णीं भूत उपासीत न चेष्टेन्मनसाऽपि च । उपावर्तस्व तद्ब्रह्म अन्तरात्मनि विश्रुतमिति प्रागुक्तप्रकारेण आत्मानमनुसंदधानस्तमनवाप्य नानावर्णान्नाडीमार्गान् अन्तर्हृदये पश्यन् पृच्छति—आभातीति । सद्ब्रह्मणो रूपं यो विद्वानत्र हृदये पश्यति स शुक्लादिरूपमिव अनवस्थितरूपं ब्रह्म पश्यति । अतः कथंरूपं कीदृग्रूपं तदक्षरं व्यापकममृतमविनाशि पदं पदनीयं तद् ब्रूहीति शेषः । काद्रवं कुत्सितः परपीडकः द्रवो गतिर्यस्य स काद्रवो धूमः तद्वर्णं काद्रवं कद्रु पिङ्गलं तद्वर्णम् । श्रूयन्ते च ब्रह्ममार्गे रूपाणि—तस्मिन् शुक्लमुत नीलमाहुः पिङ्गलं हरितं लोहितं च ॥ एष पन्था ब्रह्मणा ह्यानुवित्तस्तेनैति ब्रह्मवित्पुण्यकृत्तैजसश्चेति ॥ २५ ॥ उत्तरमाह—आभातीति । ब्रह्ममार्गे यद्यपि शुक्लादिरूपाणि भान्ति तथाऽपि यत् ब्रह्मणो रूपं तत् पृथिव्यादिषु नास्ति । अशब्दमस्पर्शमरूपमव्ययं तथाऽरसं नित्यमगन्धवच्च यदिति तत्र शब्दादीनां निषेधात् । तेषां च शब्दादिमत्त्वात् । रूपान्तराणि तु ब्रह्मप्राप्तिचिह्नानि न तु ब्रह्मरूपाणि । तथा च श्रुतिः । नीहारधूमार्कानिलाऽनलानां खद्योतविद्युत्स्फटिकशशिनाम् ॥ एतानि रूपाणि पुरःसराणि ब्रह्मण्यभिव्यक्तिकराणि योगे इति । समुद्रे संसारसागरे एनं परमात्मानं सलिलं सलिलोपलक्षितः पञ्चभूतात्मको देहः न बिभर्ति । जीवानामिव ब्रह्मण उपाधिजं दुःखं नास्तीत्यर्थः । यद्वा सामुद्रे जले एतद्रूपं नास्तीत्यर्थः ॥ २६ ॥

[ अर्जु० ] आभाति शुक्लमिव लोहितमिवाथो कृष्णमिवाञ्जनं काद्रवं वा । तद् ब्रह्मणः पश्यति योत्र विद्वान् कथं रूपं तदमृतमक्षरं परम् ॥ इवशब्दो वाक्यालङ्कारे । अञ्जनमत्यन्तकृष्णं काद्रवं कनकवर्णं यो ब्राह्मणो

२५ ख. अथाञ्जनं काद्रवं धूसरं किम् । तद्ब्रा॰ । शां. मथार्जुनं । शां. यद्ब्राह्मणः पश्यति यत्र वि॰ । २६ शां. नाभाति । शां. कृष्णमथार्जुनं वा काद्रवं वा ।

न तारकासु न च विद्युदाश्रितं
न चाभ्रेषु दृश्यते रूपमस्य ।
न चापि वायौ न च देवतासु
नैतच्चन्द्रे दृश्यते नोत सूर्ये ॥ २७ ॥

नैवर्क्षु तन्न यजुष्षु नाप्यथर्वसु
न दृश्यते वै विमलेषु सामसु ।
रथन्तरे बार्हद्रथे वाऽपि राज-
न्महाव्रतेनैव दृश्येद्ध्रुवं तत् ॥ २८ ॥

विद्वान् आत्मदर्शनोद्युक्तः सोऽत्र ध्यानकाले रूपं शुक्लादि पश्यति । तत् कथम् अमृतं नित्यमक्षरमपरिणामि परमुत्कृष्टं स्यादिति प्रश्नार्थः । अथवा भाव्यमाने परमात्मनि यत् क्रमेण शुक्लादि रूपं दृश्यते तत् किं परमात्मानः उत प्रकृतेरिति पृष्टो ब्रूहि । अक्षरं पदमिति च पठन्ति ॥२५॥ उत्तरमाह—आभाति तत् शुक्लमिवेत्यादि । सत्यमाभाति शुक्लमिव निर्मलत्वात् न तु शुक्लम् । उत्तरे इवशब्द उपमायाम् । एवं लोहितमिव शुक्लादिकत्वात् कृष्णादावपीवशब्दोऽनुवर्त्तनीयः । कृष्णमिव, ध्यायतोऽपि कदाचित् निद्रया तमःसमुद्रेके तन्मयतया प्रतीतेः । आयसमिति निद्रायामेव सात्विकराजस्यां कर्ममिव (?) ध्यानविषयस्य चैतन्यस्य सर्वप्रकाशकत्वात् । न पृथिव्यां तिष्ठतीति । न पृथिव्याधारं विभुत्वात् नान्तरिक्षे नभसि ततोऽपि महत्त्वात् । एवं समुद्रसलिलादिष्वपि तुल्यो न्यायः । अन्ये व्याचक्षते—तत्र पृथिव्यादीनां रूपं न च परमात्मनः किं तु प्राकृतानि रूपाणि रजोमयानि तमोमयानि सात्विकानि च ॥ २६ ॥

[ सर्व० ] अञ्जनमिवातिकृष्णम् । इव सादृश्ये । काद्रवं कद्रुपिङ्गलम् तद्वर्णवत् । असौ ब्राह्मणस्तत्पश्यति स ध्यानसमये तद्रूपैर्ध्यायन् कथं रूपं पश्यन्ति । अमृतमविनाशि । अक्षरमपरिणामि । अत एव परमुत्तममुत्तरमाभातीति । वस्तु इत्यादौ सादृश्यपरिहारेण तद्वर्णतैवाभिप्रेता ॥ २५ ॥ आयसमयःसवर्णमर्कतुल्यवर्णम् । अयमर्थः—न तस्य किंचिद्रूपमस्ति येन तत्प्रकाशते । अपि तु यथा यथा भाव्यते तथा तथा प्रकाशते तद्भावनापरिपाकात् । स्वमात्रवेद्यं तत्स्वरूपमवभासते । तच्च क्षीरगुडमाधुर्यभेदवत् परं च न शब्देन प्रतिपादयितुं शक्यमिति । एवं रूपाभावः । मुक्तेर्व्यक्त्यवबोधे वेदोऽपि विभुत्वेन तस्यादेशाभावान्नास्तीत्याह—न पृथिव्यामिति । अन्तरिक्षं पृथिवी (?) ॥ २६ ॥

[ दुर्घ० ] संप्रत्यध्यात्म सनत्सुजातं धृतराष्ट्रः पृच्छति—आभाति यच्छुक्लमिव लोहितमिवाऽथो कृष्णमथाञ्जनं काद्रवं वा । तद्ब्राह्मणः पश्यति योऽत्र विद्वान् कथं रूपं तदमृतमक्षरं पदम् ॥ अस्याऽर्थः—भाव्यमाने परमात्मनि यत्क्रमेण शुक्लादिरूपं दृश्यते तत्किं परमात्मनः प्राकृतं वेति पृष्टो ब्रूहि ॥ २५ ॥ सनत्सुजात उत्तरमाह—आभाति शुक्लमिव लोहितमिवेत्यादि । तत्र पृथिव्यादीनां रूपं न च परमात्मनः किंतु प्राकृतानि रूपाणि रजोमयानि तमोमयानि सात्विकानि च [ किं तर्ह्यात्मरूपमत आह—'अनामरूपः क्षेत्रज्ञः परमात्मा निरुच्यते ।' सुगममेतत् ] ॥ २६ ॥

[ लक्षा० ] यद्वा ब्रह्मणः पश्यति तद्धि विद्वानित्यत्र विद्वान् ब्रह्मणः शास्त्रेण यद्यद्रूपं पश्यति तद्रूपं कथमिति संबन्धः ॥ २५ ॥ अप्राकृतत्वेन अनन्तसूर्यप्रतिमत्वेन च पृथिव्यादिरूपतो विलक्षणत्वात् स्वतन्त्रतया अन्याधारानपेक्षत्वाच्च न तत्पृथिव्यां तिष्ठतीत्याद्युक्तम् ॥ २६ ॥

[ शंक० ] तर्हि न कस्य कुत्राप्युपलभ्यते इत्याह—नैवेति । 'ज्ञानं च सत्यं च' इत्युपक्रम्य 'महाव्रता द्वादश ब्राह्मणस्य' इति ये गुणा उक्ताः, तत्संयुक्तस्यात्मनि दृश्यते तत् परं ब्रह्म । न घटादिवदिदंतया सिध्यति, अपि त्वात्मन्येवात्मतया सिध्यतीत्यर्थः ॥ २१ ॥

[ नील० ] न तारकास्विति । रूपादिराहित्यस्यैव प्रपञ्चः ॥ २७ ॥ नामरूपात्मके प्रपञ्चे सति तद्रहितत्वं ब्रह्मणो वक्तुं रूपप्रपञ्चादन्यत्वमुक्त्वा नामप्रपञ्चादप्यन्यत्वमाह—नैवर्क्षु तदित्यादिना । तदित्यनेन अर्थात् ब्रह्मणो नाम निर्दिश्यते । विमलेषु वैश्वानरसामादिषु । रथन्तरबार्हद्रथे च पृष्ठ्यसामनी । महाव्रते यज्ञविशेषेऽपि नैव तद्दृश्येत् पश्येत् । कर्मभिरपि तद्दर्शनं न प्राप्यते इत्यर्थः । नास्त्यकृतः कृतेनेति श्रुतेः । अकृतः मोक्षः कृतेन कर्मणा नास्तीति श्रुत्यर्थः । यतः तत् ध्रुवं नित्यम् ॥ २८ ॥

[ अर्जु० ] रूपमस्येति । रूपं स्वरूपम् ॥ २७ ॥ बार्हते बृहत्साम्नि ध्रुवमविनाशि ॥ २८ ॥

[ सर्व० ] तत्र लोकैः नैवेक्ष्यते न दृश्यते । अपि तु ताभ्यः एव श्रूयते । रथन्तरे बार्हते चापि राजन् । महाव्रत इत्युक्तसामान्यस्य विशेषतयोपदर्शनम् । बृहत्पृष्ठमेव बार्हतं स्वार्थिकस्तद्धितः ॥ २८ ॥

२७ शां. नास्ति । ज. विद्युदाभयं । २८ ख. नचैव दृश्यत्यखिलेषु सामसु । शां. बार्हते वा । शां. व्रतस्यात्मनि दृश्यते तत् । ज. महात्मनश्चा° ।

अपारणीयं तमसः परस्ता-
चदन्तकोऽप्येति विनाशकाले ।
अणीयो रूपं क्षुरधारया समं
महच्च रूपं तद्वै पर्वतेभ्यः ॥ २९ ॥
सा प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः ।
भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र हि ॥ ३० ॥
अनामयं तन्महदुद्यतं यशो
वाचो विकारं कवयो वदन्ति ।
यस्मिन् जगत्सर्वमिदं प्रतिष्ठितं
ये तद्विदुरमृतास्ते भवन्ति ॥ ३१ ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ शंक० ] इदानीं तत्स्वरूपं तद्दर्शनं तत्फलं च निर्दिशति श्लोकद्वयेन—अवारणीयमिति। यदिदं महाव्रतस्यात्मनि दृश्यते, तत् अवारणीयं ब्रह्म, सर्वगतत्वात्। तमसः अज्ञानात् परस्तात् । तत् ब्रह्म अन्ततः अभ्येति जगत् विनाशकाले प्रलयकाले—अणीयरूपं च तथाप्यणीयसां महत्स्वरूपं त्वपि पर्वतेभ्यः । श्रूयते च—'अणोरणीयान् महतो महीयान्' इति । दृश्यन्ते च येऽणुत्वमहत्त्वादयो लोके तदेतत् सर्वं जगत् अह्ना अह्नो रूपेण प्रकाशरूपेण ब्रह्मणि संस्थितं तदात्मनैव भाति । श्रूयते च—'तस्य भासा सर्वमिदं विभाति' इति, 'येन सूर्यस्तपति तेजसेद्धः' इति च । तत् ब्रह्म आत्मवित्पश्यति ज्ञानयोगात् न कर्मयोगेन । तस्मिन् एव परमात्मनि जगत्सर्वमिदं प्रतिष्ठितम् । य एतद्विदुः, अमृतास्ते भवन्ति ॥ २२ ॥ २३ ॥

इति श्रीशंकरभगवत्पादकृते सनत्सुजातीयभाष्ये
तृतीयोऽध्यायः ॥ ३ ॥

[ नील० ] अपारणीयमनतिक्रमणीयमहेयत्वात्। तमसः अज्ञानरूपादुपाधेः परस्तात् पराचीनम् । अन्तकः कालः तत् ब्रह्म अप्येति गच्छति । प्रलयान्ते कालोऽपि तत्र लीयत इत्यर्थः । अणीय इति दुर्लक्ष्यम् । क्षुरधारया सममिति अत्यन्तावहितेन ग्राह्यम् । महच्च पर्वतेभ्य इति उपलक्षणं सर्वस्य, सर्वस्मादपि महदित्यर्थः ॥ २९ ॥ प्रतिष्ठा अधिष्ठानम् । अमृतं निर्विकारम् । विकारो हि विकारान्तरमापद्यमानो मृत उच्यते । लोक्यन्त इति लोका दृश्यमात्रम् ! ब्रह्म बृहत् यशो रमणीयमपि तदेव, तस्य नाम महद्यश इति हि श्रुतेः । तस्मादुपादानात् कनकात् कुण्डलादीनीव भूतानि जातानि । यतः तत्रैव प्रलयं मृदि घट इव यान्ति । एतेन ब्रह्मणो जगत्कारणत्वमुक्तं, तथा च श्रुतिः—यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्तीति तद्विजिज्ञासस्व तद्ब्रह्मेति ॥ ३० ॥ अनामयं निर्द्वैतमुद्यतं जगदाकारेण उद्गतं महद्यशः परं व्यापकमाकाशादिभ्योऽपि महदित्यर्थः । वाच इति षष्ठी तृतीयार्थे कवयः विकारं वाचैवास्तीति वदन्ति न स्वरूपेणास्तीत्यर्थः । तथा च श्रुतिः—वाचारम्भणं विकारो नामधेयमिति वागालम्बनत्वं विकारस्याह । यस्मिन्निदं जगत् प्रतिष्ठितं रज्वामुरगवल्लीनं तद्ये विदुस्ते अमृताः मुक्ता भवन्ति ॥ ३१ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ अर्जु० ] [ किं तदात्मस्वरूपमत आह—अनामरूपः क्षेत्रज्ञः परमात्मा निरुच्यते । सुगममिदम् । ] अपारणीयं तमसः परस्तात्तदन्तकोऽप्येति विनाशकाले । अणीयरूपं क्षुरधारया समं महच्च रूपं तद्वै पर्वतेभ्यः । अपारणीयमपरिच्छेदं शरीरेन्द्रियेभ्यो भिन्नात्मदर्शिनाम् ॥ २९ ॥ सा प्रतिष्ठा तदमृतं लोकस्तद्ब्रह्म तद् यशः । भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र च । सा प्रतिष्ठा आधारः स्थावरजङ्गमानाम् । अमृतं मुक्तिः । लोकयते प्रत्यक्षयति विश्वमिति लोकः । ब्रह्म बृहत्त्वात् । तद् यशो यशोवन्निर्मलत्वात् यशोहेतुत्वाद्वा । भूतानि पृथिव्यादीनि ॥३०॥ अनामयं तन्महदुद्यतं यशो वाचो विकारं कवयो वदन्ति । तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं ये तद्विदुरमृतास्ते भवन्ति । अनामयमशनायापिपासाशोकमोहजरामृत्युलक्षणात्मकषडामयरहितं प्राकृतधर्मरहितत्वात् । प्राकृतधर्मा एव हि क्लेशहेतुत्वात् ते रोगा उच्यन्ते । महद् विभुः व्यापकमित्यर्थः । उद्यतं ध्यायिनामुदीयमानं यशो निर्मलम् । तदुक्तं निघण्टे—निर्मलं च यशः स्मृतमिति । उद्यतानुगमितिपाठे स्वार्थे ताप्रत्ययस्तद्धितः (?) । वाचो विकारं विगतः कारो विकारो यस्मात् वाक्पथातीतमित्यर्थः । अवचोऽविकारमिति पाठे—अवचो यतो वाचो निवर्तन्तेऽनिर्वाच्यम्, वक्ष्यति च—तत्तु वक्तुं न शक्नुम इति; अविकारं निराकारम् । अमृता मुक्ताः ॥ ३१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृताया-
मुद्योगपर्वणि चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ सर्व० ] अपारणीयमपारं विभुत्वात् । तमसो मोहपरत्वात्ततो दूरे अन्तको मृत्युरपि तदेति तत्र

२९ ख. क्षुरधारया तत्। ख. रूपं त्वपि । इति शां. अवारणीयं। शां. अणीयरूपं च तथाप्यणीयसां महत्स्वरूपं तद्धि पर्वतेभ्यः। ३०–३१ स्थाने शां. तदेतदह्ना संस्थितं भाति सर्वं तदात्मवित्पश्यति ज्ञानयोगात् । तस्मिञ्जगत्सर्वमिदं प्रतिष्ठितं य एतद्विदुरमृतास्ते भवन्ति ॥ चतुश्चत्वारिंशोऽध्यायः ॥४४॥

## पञ्चचत्वारिंशोऽध्यायः ४५

योगप्रधानज्ञानोपसर्जनब्रह्मविद्याप्रतिपादनम् ॥ १ ॥

**शोकः क्रोधश्च लोभश्च कामो मानः परासुता ।**
**ईर्ष्या मोहो विधित्सा च कृपाऽसूया जुगुप्सुता ॥१॥**
**द्वादशैते महादोषा मनुष्यप्राणनाशनाः ।**
**एकैकमेते राजेन्द्र मनुष्यान्पर्युपासते ।**
**यैराविष्टो नरः पापं मूढसंज्ञो व्यवस्यति ॥ २ ॥**

विलीयते । विनाशकाले मरणसमये । अनेन नित्यमुक्तम्, अन्तकाभावे नाशकान्तराभावात् । अणीयरूपमिति छान्दसः सकारलोपः । क्षुरधारया पञ्चम्यर्थे तृतीया ॥ २९॥ तद्ब्रह्म प्रतिष्ठा स्थानं सर्वेषां नत्वनित्या महदादयः । तद्ब्रह्म यशः कीर्तिः सुखहेतुत्वात् । मुख्यतो भूतैः सहाभेदाशङ्कां परिहरति–भूतानीति । तत्र तस्मिन् हेतौ सति । एतेन भूतैर्द्रव्यान्तरस्य तन्नाशकतया उत्पादकत्वेन उपभाविकमित्युक्तम् (?)॥ ३० ॥ अनामयम् अशनायापिपासाशोकमोहजरामृत्युरूपषड्रोगरहितं वाचो वचनस्य विकारः विक्रियते संशोधनेनान्यरूपा भवत्यस्मिन् विषये वागिति । तथा च श्रुतिः—सक्तुमिव तितउना पुनन्तो यत्र धीरा मनसा वाचमक्रत । अमृतमकृषतेति । यत्र ब्रह्मणि तितउना चालन्या सक्तुं पुनन्तो निस्तुषमिव कुर्वन्तः सम्यगर्थप्रकाशनेन धीरास्तत्वज्ञा असत्यनिरासे मननेन वाचमभिदधुः येनामृतं मुक्तिः ॥ ३१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृत-
टीकायां चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ दुर्घ० ] अणीयो रूपं क्षुरधारासमानं महच्च रूपं तद्वै पर्वतेभ्यः । अस्यार्थः अणीयोऽतीव सूक्ष्ममदृश्यमनात्मन्यात्मदर्शिनां, महच्च तत्पर्वतेभ्यः शरीरेन्द्रियादिभ्योऽभिन्नात्मदर्शिनाम् ॥ २९ ॥ अनामयं तन्महदुद्यतं यशोऽवचोऽविकारं कवयो वदन्ति । अनामयं प्राकृतधर्मरूपरोगरहितं, प्राकृतधर्म एव हि क्लेशहेतुत्वाद्रोग उच्यते । महच्च तद्व्यापकम् । उद्यतं ध्यायिनामुदीयमानं यशो निर्मलम् । उक्तं च निघण्टौ—'निर्मलं तु यशः स्मृतम्' इति । अवचो यत्र वाचो न विद्यन्ते । अनिर्वाच्यम् । उक्तं च 'तत्त्वां वक्तुं न शक्नुमः' इति । अविकारं विकारशून्यमित्यर्थः ॥ ३१ ॥

इति श्रीमहाभारतटीकायां दुर्घटार्थप्रकाशिन्यामुद्योगपर्वणि
चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ लक्षा० ] तदन्तकोन्वेति विनाशकाल इत्यत्र अन्तकः अन्ते पृथिव्यादितत्त्वानामवसाने विद्यमानः कः महत्तत्वाभिमानी ब्रह्मा ॥ २९ ॥ विकारः विविधाकारः । शास्त्रं 'तदेतदह्ना संस्थितं भाति सर्वं तदात्मवित्पश्यति ज्ञानयोगात् । तस्मिञ्जगत्सर्वमिदं प्रतिष्ठं ये तद्विदुरमृतास्ते भवन्ति' इत्यत्र अह्ना दिवसेन निमित्तेन ॥ ३१ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-
लक्षालंकारे चतुश्चत्वारिंशोऽध्यायः ॥ ४४ ॥

[ नील० ] समाप्ता ज्ञानप्रधाना योगोपसर्जना ब्रह्मविद्या । इदानीं योगप्रधानां ज्ञानोपसर्जनां तां वक्तुमध्यायद्वयमारभ्यते । यत्र पूर्वं चित्तवृत्तिनिरोधेन त्वंपदार्थं ज्ञात्वा पश्चाद्वेदान्तश्रवणादिना तस्य ब्रह्मत्वं निश्चीयते सा आद्या । यत्र तु श्रवणादिना पूर्वं पारोक्ष्येण प्रतीचो ब्रह्मभावं निश्चित्य पश्चान्निदिध्यासनेन सः अपरोक्षी क्रियते सा द्वितीया । क्रमद्वयेऽपि फलैक्यात्साधनजातमप्येकरूपमेवेति दर्शयितुं प्रागुक्तानेव हेयान्दोषान् उपादेयान् गुणांश्च दर्शयति—शोकः क्रोधश्चेत्यादिना । तत्र क्रोधादयः प्राग्व्याख्याता एव तथाऽपि कचित् विशेषो दृश्यते स एव व्याख्यायते । लोभः स्पृहा मोहः प्रज्ञाया अभावः । अत्रापि लोभ इति पाठेऽपि स एवार्थः । लुभविमोहन इति धात्वर्थानुगमात् । परासुता निद्रापरत्वम् । कृपाऽत्र स्नेहः ॥ १ ॥ पापं पापफलं कर्म व्यवस्यति आरभते मूढसंज्ञः मूढबुद्धिः ॥ २ ॥

[ अर्जु० ] शोकादींस्तत्त्वावरणरूपानुक्तानपि पुनर्ब्रूते तत्स्वरूपावधारणनिरोधयोरादरातिशयविधानाय—शोक इत्यादि । शोक इष्टनाशानुचिन्तनं, परासुता मृत्युत्रासः कृपा च स्नेहो न दया, महादोषप्रस्तावे पठितत्वात् । जुगुप्सुता जुगुप्सैव ॥ १ ॥ मूढसंज्ञः मूढा मुग्धा संज्ञा बुद्धिर्यस्य ॥ २ ॥

[ सर्व० ] इदानीं प्रसङ्गात्फलाभिसंधया प्रवृत्तस्यापि तपसः कारणविरोधिभेदं दर्शयितुं समृद्धत्वासमृद्धत्वे दर्शयति–शोक इत्यादिना । यत्तत्समृद्धमित्युपसंहरान्ते न तत्र शोक इत्यादिनोक्तदोषानुवादेन मनुष्यप्राणनाशना इति वदन्न केवलं तत्वज्ञानविरोधित्वमेषां दृष्टविरोधित्वमपीति दर्शयति । शोकक्रोधाभ्यां ह्यग्निप्रवेशादिना स्वस्यैव प्राणहानिः

१ ज. कामो मोहः । ज. ईर्ष्या मानो ।

२ ख. एकैकशस्तु । ज. एकैकमित्यर्धं नास्ति ।

स्पृहयालुरुग्रः परुषो वा वदान्यः
क्रोधं बिभ्रन्मनसा वै विकत्थी ।
नृशंसधर्माः षडिमे जना वै
प्राप्याप्यर्थं नोत सभाजयन्ते ॥ ३ ॥
संभोगसंविद्विषमोऽतिमानी
दत्त्वा विकत्थी कृपणो दुर्बलश्च ।
बहुप्रशंसी वनिताद्विट् सदैव
सप्तैवोक्ताः पापशीला नृशंसाः ॥ ४ ॥
धर्मश्च सत्यं च तपो दमश्च
अमात्सर्यं ह्रीस्तितिक्षाऽनसूया ।
दानं श्रुतं चैव धृतिः क्षमा च
महाव्रता द्वादश ब्राह्मणस्य ॥ ५ ॥
यो नैतेभ्यः प्रच्यवेद्द्वादशभ्यः
सर्वामपीमां पृथिवीं स शिष्यात् ।
त्रिभिर्द्वाभ्यामेकतो वाऽर्थितो यो
नास्य स्वमस्तीति च वेदितव्यम् ॥ ६ ॥
दमस्त्यागोऽथाप्रमाद इत्येतेष्वमृतं स्थितम् ।
एतानि ब्रह्ममुख्यानां ब्राह्मणानां मनीषिणाम् ॥७॥

---

क्रियते, लोभेन दुर्गदेशगमनादिनेत्येवं सर्वत्र द्रष्टव्यम् । मोहो यथार्थप्रज्ञाभावः । परासुता निद्रापरत्व(म)स्य च मोहरूपदोषगणनसमये मोहपदेन संग्रहः कृतः । ईर्ष्यासूययोर्भेदः प्रागुक्तः । स्पृहा च लोभविशेषत्वेन लोभपदेनैवात्र संगृहीता ॥ १ ॥ पापं पापहेतुकर्म व्यवस्यते आरभते । मूढा मोहसमानाधिकरणा बुद्धिर्यस्य ॥ २ ॥

[ नील० ] उग्रः निर्दयः परुषः रूक्षवाक् वदान्यो बहुभाषी न सभाजयन्ते परं न मानयन्ति ॥ ३ ॥ बहुप्रशंसी आत्मस्तुतिपरः ॥ ४ ॥ महाव्रता महाव्रतानि । सुपां सुलुगिति सुपो डादेशश्छान्दसः ॥ ५ ॥ नास्य स्वं स्वीयं किमपि नास्ति धर्मादिष्वेकैकस्मिन्नपि पक्षपाते सति तदर्थं सर्वं त्यजतीत्यर्थः ॥ ६ ॥ ब्रह्मैव मुख्यं प्राप्यं येषां तेषाम् ॥ ७ ॥

[ अर्जु० ] लब्धमविनियुज्य उत्तरोत्तराभिलाषो लोभः । लब्धं विनियुज्योत्तरोत्तराभिलाषी स्पृहयालुरित्यपौनरुक्त्यम् । उग्रः परुषः । अवदान्योऽदाता । विकत्थी स्वगुणश्लाघी । नृशंसधर्मा हिंसाशीलः । नोत सदोपभुञ्जते नोपभोगशीला भवन्ति ॥ ३ ॥ ब्रह्माणि बन्धकानभिधाय ब्रह्मव्यञ्जकानाह—धर्मश्च सत्यं च तपो दमश्च अमात्सर्यं ह्रीस्तितिक्षाऽनसूया । दानं धृतिश्चैव श्रुतं क्षमा च महाव्रता द्वादश ब्राह्मणस्य । अर्थः सुगमः ॥ ५ ॥ य इत्यादि । एतेभ्यो धर्मादिभ्यो हेतुभ्यः प्रभवेत्, यद्वा यो नैतेभ्यः प्रभवेत् शोकादिमहादोषेभ्यो विमुच्येत स सर्वां पृथिवीं प्रशासदपि मुच्येतेत्यन्वयः । प्रकारान्तरमाह—द्वादशभिस्तावन्मुच्यते । एषां मध्ये त्रिभिर्द्वाभ्यामेकेनापि मुच्यते नास्य स्वमस्ति स महद्व्रतो वा ॥ ६ ॥ तानेव त्रीनाह—दम इत्यादि । त्यागो दानमप्रमादः श्रुतममृतं कैवल्यं ब्रह्ममुख्यानां ब्रह्मपराणां, ब्रह्मजात्यानीति पाठे ब्रह्मपरिज्ञानप्रयोजनानि ॥ ७ ॥

[ सर्व० ] एवं दृष्टविरोधित्वेन नृशंसानप्यनुवदति-स्पृहयालुरिति । अत्र स्पृहयालुरिति पूर्वं स्वपदोक्तम् । उग्र इति प्रागुक्तमनस्विशब्दस्यार्थानुवादः । परुष इति रूक्षणशब्दस्य । वदान्यो बहुभाषी विकत्थनशब्दस्य । क्रोधविक्रीडितम् प्रागुक्तमेव । मनसा वै विकत्थीत्यनुषङ्गः । एतेन प्रागुक्तस्तपनशब्दार्थः संगृहीतः । विकत्थनं हि वचनस्य बहुविषयत्वमित्यत्रापि बहुविषयमात्रापरोपकारिकविकत्थीपदेन मनःकरणत्वार्थकपदसाहित्यात् श्रूयमाणेन च फलं नार्थाभिधानसंभवात्(?) । मनसा विप्रकर्षीति क्वचित् पाठः नृशंस एव धर्मो येषां ते नृशंसधर्मा जनाः प्राप्याप्यर्थं नोत सदोपभुञ्जते न सदा तद्भोगं कुर्वन्ति । अन्तरात्मनोऽर्थेस्यानशनादित्यर्थः ॥ ३ ॥ संभोगसंविदादयश्च यथापूर्वमेवार्थापिताः । विषम इति विषमेध्रमान इत्यस्यार्थ उक्तः । अभिमानी दत्त्वा विकत्थीति दत्तानुतापः सकारक उक्तः । अभिमानो ह्यनात्मन्यात्माभिमानः तद्वांश्च दत्तानुतापः विकत्थनं वा तत्किं मया कृतमिति वचसा पुनरावर्तनम् । ॥ ४ ॥ धर्मादीनदृष्टकारणत्वेनाह—धर्मश्चेति । अत्र धर्मो धर्ममात्रं इह चरं(?) । तितिक्षा उत्पन्नक्रोधनिवर्तनम क्षमा तु क्रोधानुत्पादनमिति विवक्षया भेदेनाभिधानम् पूर्वं तितिक्षाशब्देनाभयसङ्ग्रहः कृतः । तत्र पृथगुक्तस्य यज्ञस्य तपोदानशब्दाभ्यां सङ्ग्रहस्तस्य तदुभयात्मकत्वात् । महाव्रतानि सुपां सुलुगित्यादिना डादेशः । ब्राह्मणस्य ब्राह्मणजातीयस्य ॥ ५ ॥ एतेभ्यो द्वादशभ्यः प्रच्यवेत् । एतेभ्यो द्वादशभ्यः एतदर्थं एतान्कर्तुं यः प्रच्यवते गर्भाज्जायत इत्यर्थः । परलोकादिमं लोकं प्रच्यवते येन यस्यैतद्द्वादशविधगुणाववधान्वयो वा(?) त्रिभिर्द्वाभ्यामेकतोवान्वितो वा । अत्रापि तादर्थ्ये चतुर्थ्यर्थे तृतीये । यदि वा सर्वां पृथिवीं शिष्यात्तथापि नास्य स्वमस्ति पृथिवीपरिग्रहदोषो नास्तीति वेदितव्यमित्यर्थः ॥ ६ ॥

---

३ ख. नृशंसधर्मां च जना ध्रुवं सदा. ख. नोत सदोपभुञ्जते । ४ ख. वर्गप्रशंसी वनितावमानी । ६ ख. पृथिवीं प्रशासन् । ख. मेकतमेन वापि ।

सद्वाऽसद्वा परीवादो ब्राह्मणस्य न शस्यते ।
नरकप्रतिष्ठास्तेवै स्युर्य एवं कुर्वते जनाः ॥ ८ ॥
मदोऽष्टादशदोषः स स्यात्पुरा योऽप्रकीर्तितः ।
लोकद्वेष्यं प्रातिकूल्यमभ्यसूया मृषा वचः ॥ ९ ॥
कामक्रोधौ पारतन्त्र्यं परिवादोऽथ पैशुनम् ।
अर्थहानिर्विवादश्च मात्सर्यं प्राणिपीडनम् ॥ १० ॥
ईर्ष्या मोदोऽतिवादश्च संज्ञानाशोऽभ्यसूयिता ।
तस्मात्प्राज्ञो न माद्येत सदा ह्येतद्विगर्हितम् ॥११॥
सौहृदे वै षड्गुणा वेदितव्याः
प्रिये हृष्यन्त्यप्रिये च व्यथन्ते ।
स्यादात्मनः सुचिरं याचते यो
ददात्ययाच्यमपि देयं खलु स्यात् ।
इष्टान्पुत्रान्विभवान्स्वांश्च दारा-
नभ्यर्थितश्चार्हति शुद्धभावः ॥ १२ ॥

अत्र प्रधान वयद······इति अप्रमादो धर्माचरणे श्रुतम् । स्वर्गे एतानि भवन्तीति शेषः । ब्राह्मणानां जातितः ब्रह्ममुख्यानाम् । ब्रह्म वेदः तन्मुख्यानां वेदोक्तकर्मपराणामित्यर्थः । ब्रह्मजात्यानीति पाठः ब्रह्मणा वेदेन जात्यानि शुद्धानि । दृष्टार्थे चाभिधीयमानस्य सत्यस्य मुख्यत्वानभिधानं कर्मप्रवृत्तानामत्यंतसत्यस्याशक्यत्वेन अनृतमिश्रस्यापि तस्य नाशक्यत्वमिति दर्शयितुम् । यदाह श्रुतिः—सत्यवचनरिक्तता भवत्यनृतवचने च पापिकाऽकीर्तिबहुना ग्रन्थेनोपक्रम्य तत्सत्यानृते मिथुनीकरोति । अथो मिथुनात् प्रजायते भूयान्भवति। कर्मपरा हि प्रयोजनेन भूयोऽभिलाषिणः । अतोऽत्र कर्मपरान् विहृत्यैतदुक्तं श्रुत्येति निःश्रेयसम् ॥ ७ ॥

[ नील० ] परीवादः परदोषकीर्तनं सत् यथार्थभूतं असत् आरोपितम् ॥८॥ अप्रकीर्तित इति । दमविरोधिन एव प्रातिकूल्यादयो मददोषत्वेन सूचिता अपि शृङ्गग्राहिकया प्रकर्षेण विधिमुखेन न प्रोक्ता इत्यर्थः । लोकद्वेष्यं पारदार्यादि । प्रातिकूल्यं धर्मादौ विघ्नाचरणम् । अभ्यसूया गुणिषु दोषारोपः ॥ ९ ॥ कामः स्त्र्यभिलाषः । पारतन्त्र्यं मद्यादिवशत्वम् । पैशुनं राजद्वारादौ परदोषसूचनम् । अर्थहानिः नटनर्तकवेश्यादिषु दण्डेन वा वित्तनाशः । विवादो वैरम् ॥ १० ॥ मोदो हर्षः दर्पहेतुः । हृष्टो दृप्यतीत्यापस्तम्बोक्तेः । अतिवादो निर्मर्यादं वचनम् । संज्ञानाशः कार्याकार्यविवेकराहित्यम् । अभ्यसूयिता नैरन्तर्येण परद्रोहशीलता । एतत् मदवत्त्वं विगर्हितं निन्दितं सद्भिः । सदा हीत्यापत्कालेऽपि नाश्रयणीयमिति सूचितम् ॥११॥ सुहृदां प्रिये सति हर्षः अप्रिये सति व्यथेति द्वौ सौहृदगुणौ । तृतीयमाह स्यादिति । सुहितमिति पाठे सुतरां हितमिष्टं पुष्टिकरम् । देयं दातारम् । भव्यगेयेतिवत्कर्तरि कृत्यः । यो दातारमयाच्यमपि पुत्रादिकं मुख्यं कर्मभूतं याचते स अभ्यर्थितः प्रार्थितो दाता तस्मै इष्टादीन् अर्हति दातुमिति शेषः । सार्धश्लोको वाक्यम् ॥ १२ ॥

[ अर्जु० ] सद्वाऽसद्वा कर्म कुर्वत इति शेषः ॥८॥ प्रातिकूल्यं लोकविपरीतम् ॥९॥ विवादो विरुद्धवादः ॥१०॥ संज्ञानाशो मोहः ॥ ११ ॥ सौहृदे त्यागे शोभनहृदयो हि त्यागं करोति । प्रिये कृते अर्थे नो हृष्यन्ति । अप्रिये तु व्यथन्ते । अयमर्थो यद् याचते तद्दातुरात्मनो हितम् । अयाच्यमपि यद्ददाति तदपि सुहितं तत्र हेतुर्देयं यदि स्यात् पुत्रदारादीन् प्रार्थितः सन् शुद्धभावो भ्रत इत्यपरो गुणः १२

[ सर्व० ] सद्वाऽसद्वा परीवाद इति सदसच्छब्दयोर्लिङ्गव्यत्ययः संबन्धार्थः ॥ ८ ॥ मदोऽष्टादशदोषः पुरा योऽत्र प्रकीर्तितः स तावत् तथा बोद्धव्यः । विरोधिनस्तु तस्य तदा दोषाभावरूपा एवोक्ताः। इदानीमन्येऽप्यष्टादश तत्सहकारिणः कथ्यन्त इत्याशयेनाह । लोकद्विष्टं पापाहेतुरपि लोकद्वेषविषयो यथा बहुभोजीत्यादि तस्य ह्यपुण्यत्वं तत एव। प्रातिकूल्यं परप्रतिकूलाचरणम् ॥९॥ पराधीन्यं यतोऽविचार्य परोक्तमात्रे प्रवृत्तिः । पैशुनं परगुणनाशेच्छा अर्थहानिः प्रयोजनहानिः प्रयोजनानभिसंधायित्वम् । ईर्ष्या गुणविद्वेषः । विवादः कलहः ॥ १० ॥ संज्ञा संस्कारस्तेन संज्ञानाशः श्रुतशास्त्रार्थविस्मृतिः । अभ्यसूयिता गुणेषु दोषारोपः । सर्वमष्टादशप्रकारमुक्तं गर्हितम् तस्मात्प्राज्ञो न माद्येत मदस्यैतदतिचारित्वादित्यर्थः ॥११॥ सौहृदं सुहृदो मित्रस्य हेतुस्त्यागः । यदाह श्रुतिः 'दानेन द्विषन्तो मित्रा भवन्ति'··वा तानपानुदत इति । तत्र षड्गुणास्त्यागादयः । परित्यागेन सौहृदपरिग्रहेण । अदृष्टस्वर्गादिसुखफलस्य त्यागस्यैते षड्गुणा इति नतु पूर्वोक्ता एवेति दर्शयति । अत एव तद्विरुद्ध एवात्र कश्चिद्गुणः। तथा हि प्रिये हृष्यत्यप्रिये व्यथेत इति गुणौ। प्रियं सुखसाधनम् धर्मस्तत्र विषये हृष्यन्ति तदिच्छन्ति । अन्यथा साक्षाद्भोगसाधनत्यागानुपपत्तेः । अप्रिये दुःखहेतावधर्मविषये व्यथन्ते द्वेषं कुर्वन्ति पापहानार्थमपि दानस्य कर्तव्यत्वात् । तृतीयस्तु गुणः साधारण इत्याह । स्यादात्मने सुहितं याचते । यो ददात्ययाच्यमपि देयं खलु स्यात् । इष्टान् विभवान् अर्थांश्च दारानभ्यर्थितश्चार्हते शुद्धभावः । आत्मने सुष्ठु···हितम् । अयाच्यमयाचनयोग्यं याचितुर्वसु तच्चदेयं दातुं शक्यं खलु निश्चितं

८ ख. कुर्वते सदा । ९ ख. दमोष्टादशदोषः स्यात्पुरायोनु प्रकीर्तितः । १० ख. कामक्रोधपराधेन्यं । ख. विवित्सा च । भ. प्राणपी° । ११ ख. न मन्येत ।

त्यक्तद्रव्यः संवसेन्नेह कामा-
न्भुङ्क्ते कर्म स्वाशिषं बाधते च ॥ १३ ॥
द्रव्यवान् गुणवानेवं त्यागी भवति सात्विकः ।
पञ्च भूतानि पञ्चभ्यो निवर्तयति तादृशः ॥ १४ ॥

स्यात् । तत्र तस्य स्वामित्वात् । किन्तदित्युक्तं इष्टानभीष्टान्, पुत्रान्धनानि स्वान्दारान् । एतानर्हता पूज्यब्राह्मणेन अभ्यर्थितो याचितः सन् शुद्धभावो मनःसंतोषपूर्वकं यो याचते याचमानाय ददाति । तृतीयो गुण इति शेषः ॥१२॥

[लक्षा०] अभ्यर्थितस्यार्हते शुद्धभाव इत्यत्र सौहार्दादर्शेपि? सा न नाशभियेति सूचयितुं शुद्धभाव इत्युक्तम् १२

[ नील० ] चतुर्थमाह—त्यक्तेति । यस्मै सर्वस्वं दत्तं तस्य गृहे कामान् मयाऽयमुपकृत इति बुद्धितः न संवसेत् । तेन कदाचिदनादृतः सन् सौहार्दभङ्गं कुर्यादिति भावः । पञ्चममाह—भुङ्क्ते कर्मेति । स्वकर्मार्जितमेव धनं भुङ्क्ते न तु मित्राद्यर्जितमन्यथा कालेन हेलनां प्राप्य सौहृदभङ्गो माभूदिति । षष्ठमाह—स्वाशिषं बाधते च । स्वस्य श्रेयोऽपि मित्रहितार्थं नाशयतीत्यर्थः । पाठान्तरे स्वासितं स्वस्थानं राज्यादिकमास्तेऽस्मिन्निति व्युत्पत्त्या ज्ञेयम् । स्वाशिवमिति पाठे स्वस्य आसमन्तात् शिवं श्रेयस्करमित्यर्थः ॥ १३ ॥ द्रव्यवान् गृहस्थः एवमुक्तरीत्या गुणवान् त्यागी दाता सात्विकः सत्वप्रधानश्च यो भवति तादृशः पुरुषः पञ्चभ्यः शब्दादिभ्यः पञ्चभूतानि श्रोत्राद्याकारेण परिणतानि इन्द्रियाणि निवर्तयति ॥ १४ ॥ एतत् स्वविषयेभ्य इन्द्रियाणां निवर्तनं समृद्धं पुष्कलमपि केवलं तप एव ऊर्ध्वं ऊर्ध्वगतिप्रदं भववि न ज्ञानवदिहैव कृतकृत्यतामापादयतीत्यर्थः । केषामित्यत आह—सत्वादिति । ये सत्वात् धैर्यात् च्यवन्ते तीव्रवैराग्याभावात् तेषां च संकल्पेन ब्राह्मलौकिकान् दिव्यान् भोगान् भोक्ष्ये इत्येवंरूपेण समाहितं संभृतं तपो भवति तेषामेवोर्ध्वगतिर्भवतीत्यर्थः ॥ १५ ॥ यतः संकल्पात् यज्ञाः प्रवर्धन्ते तस्यैव सत्यस्य संकल्पस्यावधारणात् । संकल्पादेवास्य पितरः समुत्तिष्ठन्तीति श्रुतेर्योगी सत्यसंकल्पो भवति । अन्यस्य एकस्य यज्ञः मनसैव भवति सत्यसंकल्पत्वात् । तथा ह्युपाख्यायते—त्रितो नाम मुनिर्भ्रात्रा कूपे पातितः सन् तत्रैव मनसा कृत्स्नं यज्ञं चकारेति । त्रितः कूपेऽवहितो देवान् हवत ऊतये इति मन्त्रवर्णाच्चैतद्गम्यते । अवहितो ध्यायन् हवते आह्वयति ऊतये यज्ञसंतत्यै । अन्यस्य मध्यमस्य वाचैव ब्रह्मयज्ञजपादिना यज्ञो भवति । अन्यस्य प्राकृतस्य कर्मणा आज्यपशुपुरोडाशीयादिप्रधानया क्रियया ॥१६॥

१४ ज. गुणवान्ह्येवम् ।

एतत्समृद्धमप्यूर्ध्वं तपो भवति केवलम् ।
सत्वात्प्रच्यवमानानां संकल्पेन समाहितम् ॥ १५ ॥
यतो यज्ञाः प्रवर्धन्ते सत्यस्यैवावरोधनात् ।
मनसाऽन्यस्य भवति वाचाऽन्यस्याथ कर्मणा ॥१६॥

[ अर्जु० ] इह लोके सम्यक् सुखितया न वसेत् न तिष्ठेत् कामात् रागात् त्यक्तद्रव्यो भवेदिति भावः । इति पञ्चमो गुणः भुङ्क्ते कर्म प्राक्तनं तत्फलं सुखदुःखमनुभवतीत्यर्थः । स्वाशिषं सकामान् स्वशिरमिति च पाठः । बाधते वन्ध्यां करोतीत्यर्थः ॥ १३ ॥ द्रव्येत्यादि । एवमुक्तप्रकारेण गुणवान् त्यागगुणवान् भवति स सात्विकः पंचभूतानि श्रोत्रत्वक्जिह्वाचक्षुर्घ्राणानि भूतकार्यत्वात् पञ्चभ्यः शब्दस्पर्शरूपरसगन्धेभ्यो निवर्त्तयति यः स तादृशो ब्रह्मयोग्यः ॥ १४ ॥ सत्त्वेस्थितानां कर्माभिधाय ततः प्रच्यवमानानां कर्म प्रतिपादयति—सत्त्वादिति । संकल्पेन समाहितमेकाग्रीभूतम् ॥ १५ ॥ सत्वस्यैवावरोधनात् प्रयोजनात् ॥ १६ ॥

[ सर्व० ] अन्यश्च गुणस्त्यक्तद्रव्य इति । अयाचितोऽपि ब्राह्मणेभ्यो द्रव्यत्यागं कुर्वन्नित्यर्थः । पञ्चममाह संवसेदुपभोगमाश्रयेत् । नेह लोके कर्मभूमौ इमान् कामान् काम्यमानानैहिकसुखसाधनानि । व्रतमध्ये ह्यैहिकसुखसाधनोपादाने इष्टार्थस्यापि तपसो भङ्गो भवति । षष्ठमाह भुङ्क्ते कर्म प्राचीनं स्वकृतं यदयत्नतः कर्मोपनीतं तदेव भुङ्क्ते । आशिषं स्वार्थमाशासनं मनो बाह्ये भयं बाधते नाशयति त्यजतीति यावत् ॥ १३ ॥ गुणवानित्येतावद्गुणवानेव यस्त्यागी स सात्विको भवति । सत्वं सुखं सुखी भवतीत्यर्थः । तथा स तादृशस्त्यागी पञ्चभूतानीन्द्रियाणि भूतजत्वात्, पञ्चभ्यो रूपरसगन्धस्पर्शशब्देभ्यो निवर्तयति निवर्तयितुं शक्नोति । तथाच तयोपास्य स व·····र्थः ॥ १४ ॥ उपसंहरति—एतदिति । यद्यप्येतयोः समृद्धं वृद्धं तत्वज्ञानार्थिनः प्रति । तथा सत्यादात्मनः प्रत्यवसन्नानां भ्रष्टानां तज्ज्ञानानर्थिनाम् ॥ १५ ॥ यतः संकल्पाद्यज्ञाः प्रवर्तन्ते सत्यस्यात्मनोऽवबोधनादथमबोधादज्ञानान्मोहात् । मनः संकल्पेन फलसंकल्पेन समाहितं कृतम् । यतः समृद्धमप्यृद्धमिव भवतीत्यन्वयः । नतु सत्यादप्रच्युतस्य प्रागुक्ते मानसेऽपि तपसि कृते न संकल्पसमाहितत्वमित्यत आह—मनसाऽन्यस्येति । अन्यस्य तत्वज्ञानेच्छोर्मनसा तपो भवति । अन्यस्य कर्ममार्गपतितस्य वाचा कर्मणा च । कर्मसाध्ये हि कर्मणि संकल्पानुरूपफलदायिनि संकल्पापेक्षा नतु मानसे । तत्र फलप्रति-

१५ ख. ज. मप्यृद्धं । १६ ज. प्रवर्तन्ते सत्यस्यैवावबोधनाम् ।

संकल्पसिद्धं पुरुषमसंकल्पोऽधितिष्ठति ।
ब्राह्मणस्य विशेषेण किंचान्यदपि मे शृणु ॥१७॥
अध्यापयेन्महदेतद्यशस्यं
वाचो विकाराः कवयो वदन्ति ।
अस्मिन्योगे सर्वमिदं प्रतिष्ठितं
ये तद्विदुरमृतास्ते भवन्ति ॥ १८ ॥
न कर्मणा सुकृतेनैव राज-
न्सत्यं जयेज्जुहुयाद्वा यजेद्वा ।
नैतेन बालोऽमृत्युमभ्येति राजन्
रतिं चासौ न लभत्यन्तकाले ॥ १९ ॥
तूष्णीमेक उपासीत चेष्टेत मनसाऽपि न ।
तथा संस्तुतिनिन्दाभ्यां प्रीतिरोषौ विवर्जयेत् ॥२०॥
अत्रैव तिष्ठन् क्षत्रिय ब्रह्माविशाति पश्यति ।
वेदेषु चानुपूर्व्येण एतद्विद्वन्ब्रवीमि ते ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

सन्धानाभावेनापि प्रवृत्तस्यावश्यं निःश्रेयसरूपफलसंभवादित्यर्थः ॥ १६ ॥

[ लक्षा० ] एतत्समर्थमित्यत्र समृद्धमप्येतद्द्रव्यं ततः त्यागादेव ऋद्धम् ॥ १५ ॥ मनसान्यस्य भवतीत्यत्र खलः मनसा अन्यस्य [ व्यापकस्य ] भवति । वाचा पुनरन्यस्य भवति । कर्मणा च ततोऽन्यस्य भवति ॥ १६ ॥

[ नील० ] संकल्पेति । सगुणब्रह्मवेदनात्सत्यसंकल्पं पुरुषमसंकल्पश्चिदात्माऽधितिष्ठति भृत्यमिव राजा । ननु अत एव चानन्याधिपतिरिति विदुषः सत्यसंकल्पत्वादेव अनन्याधिपतित्वं कथं सूत्रितम् ? ईश्वरान्तराभिप्रायेणेति गृहाण । तथा च श्रुतिः—तस्य ह देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवतीति । देवाश्च देवा अपि ह प्रसिद्धं तस्य ब्रह्मविदः अभूत्यै अनैश्वर्याय न ईशते न समर्था भवन्ति तत्र हेतुः आत्मा हीति इति श्रुत्यर्थः । किंच अन्यदपि मे मत्तः शृणु । तदेवाह ब्राह्मणस्य निर्गुणब्रह्मविदः संकल्पविशेषेण असंकल्पोऽधितिष्ठति । सगुणोपासकापेक्षया निर्गुणविदि सत्यसंकल्पत्वादिकमतिशयेनाविर्भवतीत्यर्थः ॥ १७ ॥ एतद्योगशास्त्रमध्यापयेत् शिष्यान् ग्राहयेत् यतः यशस्यं यशसे ब्रह्मणे तत्प्राप्त्यै हितम् । इतोऽन्यत् शास्त्रं वाचोविकारा एव, एतच्च कवयो वदन्ति । योगे योगिनि तदधीनं सर्वमित्यर्थः । ये तत् तं योगं विदुः शेषं स्पष्टम् ॥ १८ ॥ कर्मणा सत्यं ब्रह्म न जयेत् न प्राप्नुयात् यत् जुहुयात् यत् यजेद्वा एतेन होमयागात्मकेन कर्मणा बालः अविद्वान् अमृत्युं मोक्षं न जयति न प्राप्नोति रतिमानन्दं लभति लभते ॥ १९ ॥ तूष्णीमित्यर्थो व्याख्यातः । स्तुत्या प्रीतिं निन्दया रोषं च वर्जयेत् ॥ २० ॥ अत्रेति । हेक्षत्रिय वेदेषु पूर्वोक्तदृष्टिभेदेषु आनुपूर्व्येण आरोपव्यामिश्रापवादक्रमेण तिष्ठन् अत्रैव ब्रह्म पश्यति आविशति तादात्म्यं च महाकाशघटाकाशन्यायेन उपाधिविलयात्प्राप्नोति । तस्माद्दृष्टार्थोऽनन्तफला च ब्रह्मविद्याऽदृष्टार्थात् विनाशिफलात्कर्मणः श्रेयसीति ज्ञात्वा ज्ञानार्थमेव यतेतेति ते तुभ्यं ब्रवीमि ॥ २१ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

[ अर्जु० ] संकल्पसिद्धं संकल्पजन्मना कर्मणा सिद्धं शुद्धं विशुद्धान्तःकरणमसंकल्पस्तत्वज्ञानं तत्वं वा अधितिष्ठति ॥ १७ ॥ अध्यापयेदित्यादि । एतदध्यात्मप्रतिपादकं वचोऽध्यापयेत् शिष्यान्, महत् यशस्यं च । अविकारं न विकरोतीति । सर्वमिदं चराचरं तत् सत्यं ये विदुः तेऽमृता मुक्ता भवन्ति ॥ १८ ॥ वेदनेनैव मुक्तिर्न कर्मणेत्याह—न कर्मणेति । सुकृतं दर्शयति—सत्यमिति । न च तेन सुकृतेन बाल आत्माप्रतिपत्तिमान् मृत्युमत्येति अतिक्रामति, रतिं रतिविषयं सुखं लभते अन्तकाले देहोत्सर्गकाले ॥ १९ ॥ येन सत्यं लभते तदाह—तूष्णीमिति । तूष्णीमविकल्पं एकमद्वितीयम् उपासीत ध्यायेत् न चेष्टेत् न चलेत् ॥ २० ॥ अत्रेति । तिष्ठन् मनोवृत्तीनां गतिनिवृत्तिं कुर्वन् ब्रह्म पश्यति साक्षात्करोति । आवसति प्राप्नोति । आनुपूर्व्येण क्रमेण तत्त्वं प्रतिपादयति ॥ २१ ॥

इति श्रीमन्म० मर्जुनमि० उद्यो० पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

[ सर्व० ] ननु तेनाप्यरय नित्यकर्मतया यज्ञादयः करणीयास्ततस्तत्र संकल्पोऽवश्यं स्यादेवेत्यत आह—संकल्पसिद्धमिति । संकल्पानंतरमेव सिद्धं सिद्धप्रयोजनं कल्प्यं कर्मस्वारब्धव्येषु संकल्पाभावोऽधितिष्ठति आश्रयतीति देवर्षिप्रभृतिषु दृष्टमेव । संकल्पसिद्धत्वं च ब्राह्मणस्य ब्रह्मोपासकस्य विशेषेणास्तीति नित्यतया कर्मारभमाणो न सङ्कल्पं करोति । तत्सङ्कल्पस्य कर्मानपेक्षितसमानत्वादित्यर्थः ॥१७॥ अथैतदुपदेशफलमाह—अस्मिन्निति । योगे योगाभ्यासे सर्वमिदमभीष्टजातं प्रतिष्ठितमायत्तं, ये तद्योगं विदुः 'तदिति लिङ्गव्यत्ययः' अमृता मुक्ताः ॥१८॥ अतत्वज्ञानार्थं कर्म निन्दति—न कर्मणेति । सुकृतेनैव कर्मणा

१९ ख. जुहुयाद्वे जपेद्वा । २१ ख. ब्रह्मा वसति । इति पञ्चचत्वारिंशोऽध्यायः ॥ ४५ ॥

## षट्चत्वारिंशोऽध्यायः ४६

आत्मनः स्वरूपस्य तस्य च योगिप्रक्षत्वस्य प्रतिपादनम् ॥ १ ॥

**सनत्सुजात उवाच—**

**यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः ।**
**तद्वै देवा उपासते तस्मात्सूर्यो विराजते ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १ ॥**

सुकृतरूपिणा कर्मणा धर्मेणैवोद्देश्यतया निमित्तेन, एवकारः तत्वज्ञानस्य उद्देश्यतां व्यवच्छिनत्ति, न सत्यवचनादि कुर्यात् । होमजपसत्यवचनानां कर्मवाचनिकरूपाणामेव फलान्वितत्वसंभवान्मानसस्य कर्मणोऽनभिधानम् । बालोऽनात्मज्ञः मृत्युं दुःखमत्येति अतिक्रामति अन्तकाले तस्य सुकृतस्य नाशे रतिं सुखं न विन्दतीति सुखस्य सुसुखत्वेनानुपादेयता दर्शिता ॥ १९ ॥ एक एवान्ते स्थितस्तत्रैव योगे ब्रह्मावसतीति ॥ २० ॥ २१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतौ व्याख्यायां पञ्चचत्वारिंशोऽध्यायः ॥ ४९ ॥

[ लक्षा० ] असंकल्पः मनोवाक्कर्मभिः समीचीनैकपक्षरहितः दुरात्मा संकल्पसिद्धं पुरुषमधितिष्ठति ततोप्यहमेव कुशल इति मन्यत इति भावः ॥ १७ ॥ वाचो विकारं कवयो वदन्तीत्यत्र 'एकमेकं सुशस्तिभिः, मातरिश्वा जगाम, त्रिपादूर्ध्वं उदैत्पुरुषः, चतुर्भिःसाकं नवतिं च, विश्वतश्चक्षुः' इत्यादिवेदवाचो विकारं प्रतिपादनयोग्यविविधाकारं कवयः वदन्ति ॥ १८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चचत्वारिंशोऽध्यायः ॥ ४९ ॥

---

[ शंक० ] 'अवारणीयं तमसः परस्तात्' इत्यादिना ब्रह्मणो रूपं निर्धार्य 'तदात्मवित्पश्यति ज्ञानयोगात्' इति ज्ञानयोगेनात्मदर्शनमुक्तम् । पुनरपि तस्य स्वरूपं दर्शयित्वा योगिनस्तद्रूपं पश्यन्तीत्याह—यदिति । यत् ब्रह्मवित्पश्यति ज्ञानयोगात्, यत् ज्ञात्वा अमृता भवन्ति, तत् शुक्रं शुद्धम् अविद्यादिदोषरहितं महज्ज्योतिः सर्वावभासकत्वात्; श्रूयते च—'तस्य भासा सर्वमिदं विभाति' इति । दीप्यमानं भ्राजमानं महद्यशः । श्रूयते च—'तस्य नाम महद्यशः' इति । यद्वै[1] ब्रह्म देवाः इन्द्रादयः उपासते । श्रूयते च—'तं देवा ज्योतिषां ज्योतिरायुर्होपासतेऽमृतम्' इति । यस्मात् परज्योतिषो ब्रह्मणः अर्कः आदित्यो विराजते, 'येन सूर्यस्तपति तेजसेद्धः' इति श्रुतेः । एवंभूतं परमात्मानं भगवन्तं सनातनं योगिन एव पश्यन्ति, न पुनर्ज्ञानयोगरहिताः ॥ १ ॥

[नील०] पूर्वाध्यायान्ते मनसाऽपि न चेष्टेतेत्युक्तं तत्र मनसश्चेष्टाराहित्ये सति महता ब्रह्मचर्यादियत्नेन शून्यशेषतैव साधिता भवतीत्याशङ्क्य शून्यवदेव निर्धर्मकं शून्यभावस्यापि प्रकाशकं सद्रूपं ब्रह्म प्रत्यगभिन्नत्वेन ज्ञेयमस्तीत्यस्मिन्नर्थे मन्त्रानुदाहरति योगिप्रत्यक्षं च पुनः पुनः प्रमाणत्वेनोपन्यस्यति–यत्तच्छुक्रमित्यादिनाऽध्यायेन । यत्तच्छुक्रं बीजमिव बीजं विश्वोत्पत्त्यादिमूलकारणं सर्वचेष्टाप्रवर्तकमानन्दरूपं महत् वृत्तिरूपोपाधिशून्यं ज्योतिर्ज्ञप्तिमात्रं दीप्यमानं सूर्यादिरूपेण महद्यशोनामकं तदेव देवा इन्द्रियाणि उपासते अनुसरन्ति । तस्मादेव मूलकारणात्सूर्यो जगत्प्रसवधर्मा मायोपाधिरीश्वरो विराजते । तथा च श्रुतयः—आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यभिसंविशन्तीति । को ह्येवान्यात्कः प्राण्यात् यदेष आकाश आनन्दो न स्यात् । येन सूर्यस्तपति तेजसेद्धः । न तस्येशे कश्चन तस्य नाम महद्यशः । न प्राणेन नापानेन मर्त्यो जीवति कश्चन । इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ । प्राणस्य प्राणमुत चक्षुषश्चक्षुरित्यादयः । तं परमात्मानं योगिनः चित्तवृत्तिनिरोधेन भगवन्तं सर्वैश्वर्यवन्तं संप्रज्ञाते, असंप्रज्ञाते तु सनातनं अखण्डैकरसं पश्यन्तीति सर्वत्र ज्ञेयम् । योगेनैव तं परमात्मानं पश्येन्नान्यथा । यथाऽऽह दक्षः—स्वसंवेद्यं हि तद्ब्रह्म कुमारी स्त्रीसुखं यथा ॥ अयोगी नैव जानाति जात्यन्धो हि यथा घटमिति ॥ १ ॥

[ अर्जु० ] यत्तच्छुक्रं महज्ज्योतिर्दीप्यमानं महद् यशः । तद्वै देवा उपासते तस्मादर्को विराजते । योगिनस्तं प्रपश्यन्ति भगवन्तं महेश्वरम् । शुक्लं शुद्धं सारं वा दीप्यमानमिति स्वयमिति शेषः । महद् यशो महाभास्वरं देवा ब्रह्मादयः विराजते स्वयं भासते । योगिनः सनकादयः । भगवन्तं भगभाजिनम् । ऐश्वर्यस्य समग्रस्य धर्मस्य यशसः श्रियः । ज्ञानवैराग्ययोश्चैव षण्णां भग इतीरणा । अथवा यद् योगिनः पश्यन्ति शरीरादिभ्यो भेदेन परमात्मानं शुक्लत्वान्निर्मलं महत् ज्योतिः भास्वरं दीप्यमानं स्वप्रकाशरूपं महतो यशसो निदानं तदुपास्य यशस्विनो भवतीति श्रुतेः तद्वै देवा उपासते दीव्यन्तीति देवा इन्द्रियाणि उपासते बहिर्विषयत्यागात् । तस्मादर्क इति । तदनुग्रहेण पश्चात् वा अर्कः सूर्यो विराजते शोभते । अन्यथा तद्रा-

---

[1] शां. यद्वै देवा उपासते यस्मादर्को ।

**शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्द्धते ।**
**तच्छुक्रं ज्योतिषां मध्येऽतप्तं तपति तापनम् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २ ॥**

सनासंभवात् । उक्तं च—सूर्यस्तपति तत्तेजसेति । एवंभूतमात्मानं योगिनो ध्यानपरा एव पश्यन्तीति भावः ॥१॥

[ सर्व० ] तदेवं जीवात्मोपासनामुक्त्वा परमात्मोपासनामाह—यत्तदिति । शुक्रं सारः । महज्ज्योतिः प्रकाशरूपम् , अत एव दीप्यमानं साक्षात्प्रतिभासमानं महद्यशोरूपं सुखसाधनं यदस्य महद्गुणसंबन्धेन प्रवृत्तेः । तथा च श्रुतिः—तद्यशः स इन्द्रः स भूतानामपि पतिरिति । देवा ब्रह्मादयः तदुपासनाद्देवाश्चोपासते । अद्यापि तं न पश्यन्ति । योगिनस्तु सनत्कुमारादयः तं प्रकर्षेण पश्यन्ति भगवन्तमीश्वरं सनातनं नित्यम् ॥ १ ॥

[ दुर्घ० ] यत्तु शुक्रं महज्ज्योतिर्दीप्यमानं महद्यशः । तद्वै देवा उपासन्ते तस्मादर्कोपि भासते ॥ यद्योगिनो ध्यानिनः पश्यन्ति शरीरादिभ्यो भेदेन तच्छुक्रं परमात्मा । अथवा शुक्रं निर्मलं महज्ज्योतिर्भास्वरं दीप्यमानं स्वप्रकाशरूपं महद्यशो महतो यशसो निदानम् । तथा च श्रुतिः । "तमुपास्य यशस्विनो भवन्ति तद्वै देवा उपासते" दीव्यन्त्यमीभिरिति देवाः इन्द्रियाणि उपासते बहिर्विषयपरित्यागादिन्द्रियाण्येव तदुपासत इत्यर्थः । तस्मादर्क इति तदनुग्रहादर्कः सूर्यः शोभते अन्यथा तद्भासनासंभवात् । उक्तं च—सूर्यस्तपति तत्तेजसेति । एवंभूतमात्मानं योगिनो ध्यानपरा एव पश्यन्तीति भावः ॥ १ ॥

[ लक्ष्मी० ] एतच्छुक्रं महज्योतिरित्यत्र शुक्रं शुद्धं सूर्यमण्डलं महज्ज्योतिः ज्योतिःश्रेष्ठं महद्यशः महाकीर्तिसंपन्नम् ॥ १ ॥

[ शंक० ] इदानीं परस्मादेव ब्रह्मणो हिरण्यगर्भोत्पत्तिं दर्शयति—शुक्रेति । शुक्रात् शुद्धात् पूर्वोक्तात् ब्रह्मणो हिरण्यगर्भाख्यं ब्रह्म प्रभवति उत्पद्यते । अथोत्पन्नं ब्रह्म शुक्रेण वर्धते विराडात्मना । तच्छुक्रं शुद्धं ब्रह्म ज्योतिषाम् आदित्यादीनां मध्ये तैः अतप्तम् अप्रकाशितं सत् तपति स्वयमेव प्रकाशते, तेषामपि तापनं प्रकाशकम् । योऽन्यानवभास्यः सर्वावभासकः स्वयमेवावभासते, तं भगवन्तं योगिन एव पश्यति ॥ २ ॥

[ नील० ] अस्यैव मन्त्रस्य विवरणार्था उत्तरे मन्त्राः शुक्रात् आनन्दात् तं प्राप्येत्यर्थः ब्रह्म जगतो बृहकं परमव्योमाख्यमव्याकृतं वाऽवस्तु सदपि चैतन्यप्रतिबिंबं प्राप्य प्रभवति जगज्जन्मादिकार्ये समर्थं भवति तेनैव च वर्द्धते । अतस्तच्छुक्रं ज्योतिषां सूर्यादीनां मध्येऽन्तः स्थित्वा तपति प्रकाशते । तथा च गीता—यदादित्यगतं तेजो जगद्भासयतेऽखिलम् । यच्चन्द्रमसि यच्चाग्नौ तत्तेजो विद्धि मामकमिति । अतप्तमन्येनाप्रकाशितं स्वयंज्योतिरित्यर्थः । तापनं सूर्यादीनामपि भयप्रदं—भीषाऽस्माद्वातः पवते भीषोदेति सूर्यः । भीषाऽस्मादग्निश्चेन्द्रश्च मृत्युर्धावति पञ्चमः ॥ इति श्रुतेः ॥ २ ॥

[ अर्जु० ] शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्धते । एतच्छुक्रं ज्योतिषां मध्ये तप्तं तपति तापनम् ॥ शुक्राद्ब्रह्मणः ब्रह्मतत्वं प्रभवन्ति उत्पद्यते वर्धते क्रियाभिः गुणैश्चोपचीयते ज्योतिषां वह्निप्रभृतीनां मध्ये तत्तप्तं तपति दहति तापनं रागादिकं ज्योतिर्भिरतप्तत्वेन रागादितापनत्वेन च पुनरुपन्यासः । योगिन इत्यादि पूर्ववत् । अथवा तस्मात् परमार्थरूपात् शुक्रात् ब्रह्म श्रेष्ठं आद्यप्रकृतिभूतं प्रभवति सृष्टेः । उक्तं च—' मयाध्यक्षेण प्रकृतिः सूयते सचराचरमिति । मिति । ब्रह्म शुक्रेण वर्तत इति । तत् प्रकृतिरूपं ब्रह्म शुक्रेण परमात्मनाऽनुगृहीतं सद्वर्तते । अनुग्रहः प्रकृत्यात्मनोर्भेदाग्रहः । भेदग्रहे सति प्रकृतेरौदासीन्यात् । अस्मिन् व्याख्याने वर्तेत इति पाठः । तच्छुक्रं ज्योतिषामर्कादीनां मध्ये तप्तं सत् प्रवणं सत् तपति अनुगृह्णाति तापनमनुग्राहकं ' तस्य भासा सर्वमिदं विभाति ' इति श्रुतेः ॥ २ ॥

[ सर्व० ] शुक्राद्ब्रह्म जीवः प्रभवति । शरीरोपाधिभेदतयोत्पद्यते । तथा तद्ब्रह्म शुक्रेण तेन वर्धते । सुखज्ञानादिगुणैरुपचितं भवति । तच्छुक्रं ज्योतिषां मध्ये ज्योतिः सूर्यादिकमतप्तं केनाप्येतत्तापयति तापेनाभिभवति । तापनं तापस्वभावं, तापो हि दुःखमेव तच्च सर्वेषु जनयति । तदुपासनया तु न तप्यत इत्यर्थः । योगिन इति पाठो योगिन एव पश्यन्ति नान्य इति दृढीकर्तुम् ॥ २ ॥

[ दुर्घ० ] शुक्राद्ब्रह्म प्रभवति ब्रह्म शुक्रेण वर्तते । तच्छुक्रं ज्योतिषां मध्ये तपस्तपति तापनः । तस्मात्परमात्मभूताच्छुक्राद्ब्रह्माद्यप्रकृतिभूतं प्रभवति प्रभूतं लभते सृष्टेः । उक्तञ्च ' मयाध्यक्षेण प्रकृतिः सूयते सचराचरम् ' इति । ब्रह्म शुक्रेण वर्तत इति तत्प्रकृतिरूपं ब्रह्म शुक्रेण परमात्मनानुगृहीतं सत्कार्ये प्रवर्तते । अनुग्रहश्च प्रकृत्याऽऽत्मनोर्भेदाग्रहः । भेदग्रहे सति प्रकृतेरौदासीन्यात् । शुक्रं च ज्योतिषामर्कादीनामन्येषां च भूताना मध्ये तप्तं सत्प्रवणं *सत्प्रत्यनुगृह्णाति तापनमनुग्राहकम् । तस्य ' भासा सर्वमिदं विभाति ' इति श्रुतेः ॥ २ ॥

२ ख. उपासन्ते यस्मादेको म. सन्ते यस्मादर्को विजायते ।

* ' प्रकृतिमनुगृह्णाति तापनमनुग्राहयति ' इति पाठः ।

अपोऽथ अद्भ्यः सलिलस्य मध्ये
उभौ देवौ शिश्रियातेऽन्तरिक्षे ।
अतन्द्रितः सवितुर्विवस्वा-
नुभौ बिभर्ति पृथिवीं दिवं च ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ३ ॥

[ शांक० ] इदानीं द्वा सुपर्णेति मन्त्रार्थं कथयति— आपइति । अस्मात्परमात्मनः आपः प्रथमं सृष्टाः । तथा चाह मनुः—'अप एव ससर्जादौ' इति । भूतपञ्चकोपलक्षणार्थः अप्छब्दः । अनेन सूक्ष्मसृष्टिरभिहिता । अथ अनन्तरम् अद्भ्यः पूर्वसृष्टाभ्यः सलिलं भूतपञ्चकात्मकं स्थूलदेहादिकं सृष्टम् । तस्य सलिलस्य देहात्मनावस्थितस्य मध्ये अन्तरिक्षे हृदयाकाशे उभौ जीवपरमात्मानौ देवौ द्योतनस्वभावौ शिश्रियाते वर्तेते । न केवलमन्तरिक्ष एव शिश्रियाते आदध्रीचीः सविषूचीः वसानौ आभिमुख्येन ध्रियमाणा वा स्थिता वा अञ्चन्तीति आदध्रीच्यो दिशः, विषूच्य उपदिशः, विष्वग्गमनात्; ताभिः सह वर्तन्त इति सविषूच्यः प्राच्याद्याः सर्वा दिशः वसानौ आच्छादयन्तौ उभौ बिभर्ति पृथिवीं दिवं च । एको जीवः आत्मनः स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मतत्त्वमनवगम्यानात्मनि देहादावात्मभावमापन्नः पृथिवीं भूतभौतिकलक्षणं कर्मफलानुरूपं सुखदुःखात्मकदेहादिकं बिभर्ति । अपरो दिवं द्योतनात्मकं स्वात्मरूपं बिभर्ति । श्रूयते च—'द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते । तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति' इति । यः स्वात्ममायया स्वमात्मानं प्राणाद्यनन्तमेदं कृत्वान्तरानुप्रविश्य अभिपश्यन् आस्ते, तं भगवन्तं योगिन एव पश्यन्ति ॥ ४ ॥

[ नील० ] अप इति । सलिलस्य सलिलमिव सलिलमेकरसं ब्रह्म, सलिल एको द्रष्टाऽद्वैतो भवतीति श्रुतिप्रसिद्धं तस्य मध्ये स्थिताभ्योऽद्भ्यः अबुपलक्षितेभ्यः पञ्चमहाभूतेभ्यः सकाशादुत्पन्नाः अपः पाञ्चभौतिकं देहमन्तरिक्षे हृदयाकाशे शिश्रियाते श्रयतः । कौ उभौ देवौ चिद्रूपत्वेन द्योतमानौ जीवेश्वरौ सुप्तिप्रलययोः क्रमेण तन्द्रावन्तौ ताभ्यामन्यः अतन्द्रितः निर्मायः सवितुः जगत्कारणस्य विवस्वान् वस आच्छादने वस्वान् आच्छादनवान् तद्विपरीतो विवस्वान् अपरिच्छिन्नसंविद्रूपः संततमनुदितानस्तमितप्रकाशः सर्वाधिष्ठानभूतः उभौ जीवेश्वरौ पृथिवीं दिवं च बिभर्ति । स सध्रीचीः सविषूचीर्वसानाविति पाठे सः शुक्रसंज्ञः शुद्ध आत्मा । कीदृशौ उभौ देवौ सध्रीचीः विषूचीश्च आवसानौ दिशः उपदिशश्च पटवद्वसानौ । दिगन्तपर्यन्तं विस्तीर्णावित्यर्थः । व्यवहिताश्चेति छान्दसं क्रियोपसर्गयोर्व्यवधानं, शेषं प्राग्वदेव ॥ ३ ॥

[ अर्जु० ] आपोऽनु अद्भ्यः सलिलस्य मध्ये उभौ देवौ शिश्रियातेऽन्तरिक्षे । अतन्द्रितः सविसूचिर्वसान उभे बिभर्ति पृथिवीं दिवं च । योगिन इति च । अनु महत्तत्वात् पश्चात् अपः अद्भ्यो रसतन्मात्राभ्यो न महत्तत्वात् । तादर्थ्येस्थितां (?) उभौ महान्तौ देवौ द्योतमानौ शुक्रं स्वयं तत्संपर्कान्महान्, सलिलस्य मध्ये स्थितौ शिश्रियाते श्रियेते स्म, अर्थात्सलिलेन निराश्रयस्य कार्यानुत्पत्तेः । अन्तरिक्षे शून्ये आश्रयस्यान्यस्य भावे अतन्द्रितोऽपरिम्लानज्ञानः विसूचिर्विगतः सूचिः खलो यस्मात् खलेनाप्यत्र दोषः उत्प्रेक्षितुं न शक्य इति भावः । वसान आच्छादयन् । बिभर्ति धारयति । अन्नादनयोरुत्पत्तिरुक्ता । अनेनैव विशेषेण पुनरुपन्यासो योगिन इति । अथवाऽयमर्थः—प्रागुक्तं शुक्रानुग्रहेण प्रकृतिर्वर्तते सृष्ट्यर्थं तत्र प्रथममापः प्रवृत्ताः, ततोऽद्भ्यो वह्निः वह्नेर्वायुर्वायोरन्तरिक्षमिति । उभाविति पाठः । उभौ देवो कारणावस्थपरमात्मभोक्तात्मानौ शिश्रियाते आश्रितौ; कार्यकरणार्थं कारणात्मा, भोक्तात्मा भोगार्थं सलिलमाशिश्रियाते । स सध्रीचीः सविषूचीरिति पाठश्च । स परमात्मा कारणावस्थः विसूचीर्विश्वव्यापिनीः प्रकृतीर्वसानः स्वीकुर्वन् भोक्तनुमहार्थं, किंभूताः सध्रीचीः सहाञ्चतीति सहस्य सध्र्यादेशः । भोक्तृ–पातृ–कर्म–शक्ति–सहकारिसहिताः उभे भुवने द्यावापृथिव्यौ बिभर्ति अनुगृह्णातीत्यर्थः ॥ ३ ॥

[ सर्व० ] इदानीं शुक्राद्ब्रह्म प्रभवतीत्युक्तमुपपादयितुं जीवस्य महाप्रलयस्थायित्वेऽपि शुक्रादेव विश्वस्योत्पत्तिरिति दर्शयति—आप इति । अद्भ्यो दशोत्तरजलरूपाभ्योऽनु सर्गसमयस्य पश्चान्महाप्रलयादौ आपो ब्रह्माण्डप्लावनहेतव इत्यर्थात् । पञ्चम्या हेतुत्वस्याभिधानात् । ततः समस्तमूर्तानां जलप्लावने नाशेऽतीतस्य सलिलस्य मध्ये उभौ देवौ शुक्रब्रह्मणी अन्तरिक्षे अन्तरिक्षं शिश्रियाते आश्रयतोऽशरीरावेव तिष्ठतः । तदा सलिलव्यतिरिक्तमूर्त्यन्तराभावात् । यदाह श्रुतिः—तम आसीत्तमसा गूढमग्रेऽप्रकेतं सलिलं सर्वमाप इति । अप्रकेतमचेतनमित्यर्थः । तमस्तमसा गूढमिति तमसोऽतिशय उक्तः । प्रलयस्वरूपपूर्णात्पूर्णं च पूर्णेनैवावशिष्यते ।

३ ख. म. आपोनु अद्भ्यः । ख. म. सविसूचिर्वसान उभे । शां. अस्मात्प्रागुदशमः श्लोकोऽस्ति तत्र विशेषः—पूर्णमुद्धरन्ति⋯त्पूर्णं प्रचक्षते । हरन्ति पूर्णात्पूर्णं च पूर्णेनैवावशिष्यते । शां. आपोथाद्भ्यः सलिलं तस्य मध्ये । उत्तरार्धे—आदध्रीचीः सविषूचीर्वसानावुभौ ।

उभौ च देवौ पृथिवीं दिवं च
दिशः शुक्रो भुवनं बिभर्ति ।
तस्माद्दिशः सरितश्च स्रवन्ति
तस्मात्समुद्रा विहिता महान्ताः ।

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ४ ॥
चक्रे रथस्य तिष्ठन्तोऽध्रुवस्याव्ययकर्मणः ।
केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि ।
योगिनस्तं प्रपश्यति भगवन्तं सनातनम् ॥ ५ ॥

मुक्त्वा सृष्टिस्वरूपमाह—अभितो ज्ञानतिरोभावरहितः स परमेश्वरो न जीवस्तस्य तदा ज्ञानाभावेन तन्द्रिततया व्यापाराभावात् । विषूची विष्वक्सर्वतोऽञ्चनाद्दिशो वसान आच्छादयन् व्यापित्वात् उभे पृथिवीं दिवं च बिभर्ति पुष्णाति परमाणुसाद्भूते पुनर्जनयतीति यावत् । तदुक्तं श्रुतौ—अपश्यं गोपामनिपद्यमानमाच पराच पथिभिश्चरन्तम् । ससध्रीचीः सविषूचीर्वसान आवरीवर्त्ति भुवनेष्वन्तः ॥ अपश्यमिति । वामदेवमहर्षिणा योगप्रभावेन तत्काले तथा व्यापृतं परमेश्वरं पश्यतैतदुक्तं, गोपां रक्षितारं निपद्यमानमिति शयानस्य नाम तदपि तेनानिपद्यमानमशयानमतन्द्रितमित्यर्थः । कार्यसृष्ट्यर्थं गृहीतेन देहेनात्माभिमुखं परावरे पथिभिरन्तरिक्षेण वर्त्मभूतेन चरन्तं व्याप्रियमाणं तदेवं दिग्भिः सह अञ्चतीति सध्रीचीर्विदिशः विष्वक् अञ्चतीति पूर्वदिशः वसान आच्छादयन् । तथा चोपनिषदि—'ससध्रीचीश्च ह्येष विषूचीश्च वस्त इमा दिश इति' ता एव दिशो वरीवर्त्यावृणोति जङ्गमस्थावरैरुत्पादितैर्भुवनेषु अन्तर्भुवनेषु जनितेष्वन्तर्मध्यम् ॥ ३ ॥

[ दुर्घ० ] "आपोऽथ अद्भ्यः सलिलस्य मध्ये उभौ देवौ शिश्रियातेऽन्तरिक्षे । स सध्रीचीः स विषूचीर्वसान उभे बिभर्ति पृथिवीं दिवं च । अस्यार्थः । प्रागुक्तं शुक्रानुग्रहेण प्रकृतिः प्रवर्तते सृष्ट्यर्थम्, तत्र सृष्टौ प्रथममापः प्रवृत्ताः ततोऽद्भ्यो वह्निः वह्नेर्वायुः वायोरन्तरिक्षम् । इति । तत्र सलिलस्य मध्ये उभौ देवौ कारणावस्थपरमात्मभोक्तारौ शिश्रियाते आश्रितौ । कार्यकरणार्थं कारणात्मा भोक्तात्मा भोगार्थमिति कार्यरूपं सलिलमाश्रियेते । स इति परमात्मा कारणाऽवस्थः विषूचीः विश्वव्यापिकाः प्रकृतीर्वसानः स्वीकुर्वन्भोक्तुरनुग्रहार्थं, किंभूताः सध्रीचीः सहाञ्चतीति सहस्य सध्रिः भोक्तृपातृकर्मशक्तिसहकारिसहिताः उभे भुवने द्यावापृथिव्यौ बिभर्ति अनुगृह्णातीत्यर्थः ॥ ३ ॥

[ लक्षा० ] आपोऽथाद्भ्यः सलिलस्य मध्य इत्यत्र अथ अद्भ्यः बाह्यावरणोदकेभ्यः आपः ब्रह्माण्डान्तःस्थितगर्भोदकानि तस्य सलिलस्य मध्ये अन्तरिक्षे जलान्तःस्थिताकाशे उभे देव्यौ शिश्रियाते सध्रीचीः समीचीनाः विषूचीः विष्वग्वर्तमाना आपः वसानः वसनवत्परितो बिभ्राणः स परमात्मा ॥ ३ ॥

[ शंक० ] सर्वमिदं ब्रह्मणः सकाशादुद्भूतं तत्रैव लीयत इति *श्लोकद्वयेनोक्तम्; तदेव विवृणोति—उभाविति। स्पष्टः श्लोकार्थः ॥ २१ ॥ इदानीं ज्ञानिनः स्वात्मन्यवस्थानं दर्शयति—चक्रे इति । ध्रुवस्याव्ययकर्मणः परमेश्वरस्य चेश्वरात्मनावस्थितस्य रथस्य शरीरस्य त्रैलोक्यात्मनावस्थितस्य चक्रे चङ्क्रमणात्मके देहे तिष्ठन्तं केतुमन्तं प्रज्ञावन्तम् अत एव च दिव्यम् अप्राकृतं जरामरणादिविवर्जितं दिवि द्योतनात्मके अनुदितानस्तमितज्ञानात्मनावस्थिते पूर्णानन्दे ब्रह्मणि वहन्त्यश्वाः इन्द्रियाणि । एतदुक्तं भवति—यद्यपीन्द्रियाणि स्वभावतो विषयेष्वेव वर्तन्ते, तथापि विज्ञानसारथिना समाकृष्यमाणानि केतुमन्तं पुरुषं दिव्येव वहन्ति, न पराग्विषय इति । तदुक्तं कठवल्लीषु—'आत्मानं रथिनं विद्धि शरीरं रथमेव तु । बुद्धिं तु सारथिं विद्धि मनः प्रग्रहमेव च ॥ इन्द्रियाणि हयानाहुर्विषयांस्तेषु गोचरान् । आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' इत्यादिना । यत्र परमात्मनि वहन्ति तपसा, तं भगवन्तं योगिन एव पश्यन्ति ॥ ५ ॥

[ नील० ] एतदेवाह—उभाविति। देवौ जीवेश्वरौ पृथिव्यादिकं भुवनं ब्रह्माण्डं शुक्रो बिभर्ति । तस्मात्सर्वोत्पत्तिमाह—तस्मादिति । महान् दुरधिगमोऽन्तो येषां ते माहान्ताः समुद्राः कामाः कामं समुद्रमाविशेति मन्त्रलिङ्गात् ॥ ४ ॥ चक्रे इति रथस्य शरीरस्य । रथः स्यन्दनदेहयोरिति विश्वः । अध्रुवस्य विनाशिनोऽपि अव्ययमविनाशि कर्म यस्य तस्य अव्ययकर्मणः । चक्रे चक्रवालके प्राक्कर्मणि निमित्ते सति तिष्ठन्तः कर्माधीना इत्यर्थः । अश्वाः इन्द्रियाणि शरीररथं विषयदेशं प्रति नयन्तः केतुमन्तं प्रज्ञावन्तं जीवम् । कि ज्ञानेऽस्मात्तुन् । तं परमात्मानं प्रति वहन्ति वहतिर्द्विकर्मा । वश्यैरिन्द्रियाश्वैर्देहरथे योजितैः जीवः परमात्मतां नीयते । अन्यथा शरीरे नष्टेऽपि तत्कृतं कर्म न क्षीयतेऽतः शरीरान्तरेण सद्य एव बद्ध्यते । दिव्यमलौकिकमहंप्रत्ययविषयादन्यमशनायाद्यतीतमित्यर्थः अजरमिति सर्वविकारप्रतिषेधः । दिवि हार्दाकाशे ॥ ५ ॥

[ अर्जु० ] उभे देव्यौ पृथिवीं दिवं च शश्वच्छुक्रे भुवनं बिभर्त्ति । तस्माद्दिशः सरितश्च भवन्ति तस्मात्समुद्राद्विहिता महान्तः । योगिन इति च । देव्योर्विशे-

४ ख. म. उभे च देव्यौ । ख. म. शश्वच्छुक्रो । ख. म. बिभर्ति च । ख. म. महान्तः । शां. दिशश्चशुक्रं । अयमेकादशादूर्ध्वं पठितात्परः पठितः ।

५ म. 'स्याव्ययक' । ख. म. तं देवमजरं विदुः । शां. तिष्ठन्तं । एकादशस्तत्र टिप्पण्यां दर्शितश्च श्लोकः श्लोकद्वयपदेन बोध्यः ।

**न सादृश्ये तिष्ठति रूपमस्य**
**न चक्षुषा पश्यति कश्चिदेनम् ।**
**मनीषयाऽथो मनसा हृदा च**
**य एनं विदुरमृतास्ते भवन्ति ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ६ ॥**

षणं शश्वच्छुक्रे नित्यशुद्धे द्वे दिशः प्रभवन्तीत्यन्वयः । अनयैव व्याख्या पुनरुपन्यासो योगिन इति । अथवा उभौ देवौ पूर्वोक्तावात्मानौ पृथिवीं दिवं चानुगृह्णीतः इति योज्यम् । कर्मशक्त्याश्रयत्वेन भोक्तानुगृह्णाति । विश्वकर्तृत्वेन च परमात्मा । को विशेषस्तयोस्तत्राह—शश्वच्छुक्रो भुवनं बिभर्त्तीति । शुक्रः परमात्मा लोकं धारयति । भोक्त्रात्मा तु सर्वदा भुवनानुग्राहकः तस्य मुक्तिदशायामप्रवृत्तेः । तस्मात् शुक्रादित्यर्थः । यथाव्याख्यानं पाठः ॥ ४ ॥ चक्रे रथस्य तिष्ठन्तो ध्रुवस्याव्ययकर्मणः । केतुमन्तं वहन्त्यश्वास्तद्दिव्यमजरं दिवि । योगिन इति च । ध्रुवस्योत्तानपादेः तस्य किंभूतस्य अव्ययकर्मणः चिरस्थायिपुण्यकर्मणः रथस्य चक्रे तिष्ठन्तोऽश्वा वायवो व्यापकत्वात् । अशुप्ताविति धात्वर्थानुसारात् । केतुमन्तं ध्रुवलक्षणेन चिह्नेन लक्षितं तद्दिव्यमजरं वहन्तीत्यन्वयः । अनेन विशेषेण पुनराह—योगिन इति । अथवायमर्थः—उभौ देवावित्युक्तं तत्र भोक्त्रात्मनि प्रमाणमाह—रथस्य शरीरस्य स्वर्गनरकभोगोपनेतृत्वात् चक्रे समूहे तिष्ठन्तो निवसन्तः ध्रुवस्य निश्चितस्य इन्द्रियाधारत्वेन निर्ज्ञातस्य । अव्ययकर्मणः अविश्रान्तं कर्म कुर्वतः वहन्ति ज्ञापयन्ति भोक्त्रात्मानं केतुमन्तं केतुश्चिह्नं ज्ञानपूर्विका तृष्णा लिङ्गमिति यावत् । तेन युक्तम् । अश्वा इन्द्रियाणि वेगवत्त्वात् विषयसंबन्धेनाकर्षकत्वाच्च दिव्यं भोगसंभृतमजरं सदा तुल्यरूपं दिवि शरीरे । दीव्यन्ति प्राणिनोऽस्मिन्निति व्युत्पत्त्या ॥ ५ ॥

[ सर्व० ] उभौ देवौ पृथिवीं दिवं द्यावापृथिव्यौ देव्यौ गतिसाधनतया दिशो भुवनं जलं बिभर्ति पूरयति जङ्गमस्थावरैर्दिशो दिग्भ्यः सरितो याः स्रवन्ति ता अपि तस्मादेव विहितास्तथा महान्तः समुद्राः ॥४॥ अधुना तस्य सूर्यात्मतां दर्शयति—चक्रे रथस्येति । चक्रे रथस्येति संवत्सररूपं । एवं ध्रुवस्य नित्यस्य कदाचिदपि सह कृपा...भावासंभवात् कालरूपस्य अव्ययमविनाशि कर्म यस्य । सततगामित्वेन गमनसंतानाविच्छेदात् । तस्य रथस्य चक्रे संवत्सरमये तिष्ठन्ति तत्समीपेन गमनात् । सदा धावतो यस्य अश्वाः सप्त तं केतुमन्तं कित् ज्ञान इत्यस्मादुप्रत्ययेन ज्ञानवन्तं दिविस्थिता वदन्ति दिव्यं दिवि स्थितम् । अजरमविनाशि । तदुक्तमृषिणा—सूर्य आत्मा जगतस्तस्थुषश्चेति ॥५॥

[ दुर्घ० ] उभौ च देवौ पृथिवीं दिवं च शश्वच्च शुक्रो भुवनं बिभर्ति । तस्माद्दिशश्च सरितः स्रवन्ति तस्मात्समुद्रा विहिता महान्तः ॥ उभौ पूर्वोक्तौ चात्मानौ पृथिवीं दिवं चानुगृह्णीत इति योज्यम् । कर्मशक्त्याश्रयत्वेन भोक्तात्मानुगृह्णाति विश्वकर्तृत्वेन च परमात्मा । कस्तर्हि विशेषस्त्वनयोस्तत्राह शुक्रः परमात्मा शश्वन्नित्यः भुवं बिभर्ति तस्माच्छुक्रादित्यर्थः । भोक्तात्मा सर्वदा भुवनानुग्राहकस्तस्य मुक्तिदशायामप्रवृत्तेः । तस्माच्छुक्रादन्यत्सुगमम् ॥४॥ चक्रे रथस्य तिष्ठन्तो ध्रुवस्याव्ययकर्मणः । केतुमन्तं वहन्त्यश्वास्तं दिव्यमजरं दिवि । उभौ देवावित्युक्तं तत्र भोक्त्रात्मनि प्रमाणमाह—रथस्य शरीरस्य स्वर्गनरकादिभोगोपनेतृत्वात् चक्रे समूहे तिष्ठतो निवसतः ध्रुवस्य निश्चितस्य इन्द्रियाधारत्वेन निर्ज्ञातस्य अव्ययकर्मणोऽविश्रान्तं कर्म कुर्वतः अश्वा इन्द्रियाणि विषयसंबन्धेनाकर्षकत्वात् वहन्ति ज्ञापयन्ति तं भोक्तात्मानं केतुमन्तं केतुचिह्नितं ज्ञानपूर्विका चेष्टा लिङ्गमिति यावत् तेन युक्तं दिव्यं भोगसंभृतमजरं सदा तुल्यरूपं दिवि शरीरे । दीव्यन्ति प्राणिनो यस्मिन्निति व्युत्पत्त्या ॥ ५ ॥

[ लक्षा० ] चक्रेणावर्त्य तिष्ठन्तमित्यत्र अव्ययकर्मणः ध्रुवस्य ध्रुवमण्डलस्याद्यसंबन्धिना चक्रेण ज्योतिश्चक्रेण आवर्त्य ग्रहनक्षत्रादीन् परितो भ्रामयित्वा तिष्ठन्तं केतुमन्तं ध्वजसहितं तं शूर्परथनियामकं परमात्मानं अश्वाः सप्ताश्वाः वहन्ति ॥ ५ ॥

[ शंक० ] नानेन सदृशं किंचिद्विद्यत इत्याह— न सादृश्य इति । अस्य परमात्मनो रूपं न सादृश्ये तिष्ठति नान्येन सादृश्ये वर्तते, नानेन सदृशं किंचिद्वर्तत इत्यर्थः । श्रूयते च—'न तस्य प्रतिमा अस्ति यस्य नाम महद्यशः' इति । अत एव उपमानाद्यविषयत्वम् । तथा न चक्षुषा पश्यति कश्चित् अपि एनं सर्वान्तरं परमात्मानम् । कथं तर्हि पश्यन्ति ? मनीषया अध्यवसायात्मिकया मनसा संकल्पविकल्पात्मकेन हृदा च हृदयेन च साधनभूतेन । हृदयं विना नान्यत्र परमात्मन उपलब्धिः संभवतीति मत्वा हृदा चेत्युक्तम् । अथवा, न केवलं मनोबुद्धिमात्रेण, अपि तु हृदा च हृदयस्थेन च परमेश्वरेणानुगृहीताः सन्तः । य एनं परमात्मानं विदुः अयमहमस्मीति, ते अमृताः अमरणधर्माणो भवन्ति । अथवा, हृदा हृदयेन परमात्मना । तथा च हृत्स्थे परमात्मनि हृदयशब्दं निर्वक्ति—'स एष आत्मा हृदि तस्यैतदेव निरुक्तं हृद्ययमिति, तस्माद्धृदयमिति अहरहर्वा एवंवित्स्वर्गं लोकमेति' इति । तथा च श्रुतिः तदधीनात्मसिद्धिं दर्शयति—'यस्य देवे परा भक्तिर्यथा देवे तथा गुरौ । तस्यैते कथिता ह्यर्थाः प्रका-

**द्वादशपूगां सरितं पिबन्तो देवरक्षिताम् ।**
**मध्वीक्षन्तश्च ते तस्याः संचरन्तीह घोराम् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ७ ॥**

शन्ते महात्मनः ' इति । एवं यं विदित्वा अमृता भवन्ति, तं योगिन एव पश्यन्ति ॥ ६ ॥

[ नील० ] अस्य रूपमाकृतिः सादृश्ये न तिष्ठति अनुपमस्वरूपमित्यर्थः । न चक्षुषेति सर्वेन्द्रियगोचरत्वं निषिध्यते । अशब्दमस्पर्शमरूपमव्ययमिति रूपादिहीनत्वश्रुतेः । मनीषया मनसो निग्रहेण, मनसा सूक्ष्मेण, मनसैवानुद्रष्टव्यमिति तस्य करणत्वश्रुतेः । हृदा हृदुपलक्षिते देशे निगृहीतेन मनसा, ये एनं विदुः ते अमृताः मुक्ता भवन्ति ॥ ६ ॥

[ अर्जु० ] न सादृश्ये तिष्ठति कश्चिदस्य न चक्षुषा पश्यति कश्चिदेनम् । मनीषयाथो मनसा हृदा च य एवं विदुरमृतास्ते भवन्ति । चक्षुषेत्युपलक्षणमिन्द्रियाणाम् । मनसा संकल्पेन हृदाऽहंकारेण एवं वर्णोपसंहारे(?)स्वेन रूपेण ॥ अथवा पूर्वमुक्तं किंरूप आत्मेति तत्रोत्तरम्—अस्यात्मनः कश्चिन्न सादृश्ये तिष्ठति येनात्मसदृशोऽयमित्युच्येत, कश्चिदेनं न पश्यति येनायमिति दर्शयेत् । ये पुनर्योगिनो मनीषयाऽध्यात्मरूपेण स्वहृदा साक्षात्प्रज्ञानेन विदुस्तेऽमृता भवन्ति ॥ ६ ॥

[ सर्व० ] न सादृश्य इति । तस्य रूपं स्वरूपं केनचित्सदृशं न, सूर्यस्यापि तदभिन्नस्य सूर्यत्वेनातात्विकत्वादिति । मनीषया बुद्ध्या, मनसा मननेनानुमानेन श्रुत्यायत्तेन ॥ ६ ॥

[ दुर्घ० ] न सादृश्ये तिष्ठति कश्चिदस्य न चक्षुषा पश्यति कश्चिदेनम् । मनीषयाथो मनसा हृदा च य एनं विदुरमृतास्ते भवन्ति । पूर्वोक्तं किंरूपमात्मेति तत्रोत्तरं—तस्यात्मनः सादृश्यै न कश्चित्तिष्ठति येन अमुकसदृशोऽयमुच्येत । न चक्षुषा पश्यति कश्चिदेनं येनासावात्मेति शृङ्गग्राहिकया निर्दिश्यते ये पुनर्योगिनो मनीषयाऽध्यात्मतर्केण मननरूपेण मनसा निदिध्यासनरूपेण हृदा साक्षाद्बलेन प्रज्ञानेन विदुर्जानन्ति ते अमृता अपुनर्जन्मानः सुखिनो भवन्ति । मनीषया चाऽपि सम्यगिति पाठे सुगमोऽर्थः॥६॥

[ लक्षा० ] न संदृशे तिष्ठति रूपमस्येत्यत्र अस्य परमात्मनः मदिष्टाः अतिशयेन संतोषकराः ॥ ६ ॥

[ शंक० ] इदानीमिन्द्रियाणां विषयेषु प्रवृत्तिरनर्थाय भवतीत्याह—द्वादशेति । ये द्वादश पूगाः कर्मज्ञानेन्द्रियाणि, एकादशं मनः, द्वादशी बुद्धिः, तेषामनेकपुरुषापेक्षया एकैकस्य पूगत्वमुच्यते । सरितः सरणशीलाः देवरक्षिता देवेन परमात्मना रक्षिताः मधुवत् विषयं मधु ईशते नियमयन्ति असांकर्येण स्वं स्वं विषयमनुभवन्तीत्यर्थः । यदैवमनुभवन्ति, तदा तदनुविधायिनो विषयपराः संचरन्ति घोरं संसारम् । तस्मादिन्द्रियाणि विषयेभ्यः उपसंहृत्य स्वात्मन्येव वशं नयेदित्यर्थः । येन रक्षिता मध्वीशते, तं देवं योगिन एव पश्यन्ति ॥ ७ ॥

[ नील० ] तदवेदने संसारानुच्छेदमाह—द्वादशेति । द्वादशसंख्याः पूगाः समुदाया यस्यां तां द्वादशपूगां, ते च- चित्तादिपूगः स्मरणादिपूगः श्रोत्रादिपूगः श्रवणादिपूगः । वागादिपूगो वचनादिपूगः शब्दादिपूगो वियदादिपूगः १ प्राणादिपूगः श्वसनादिपूगः संस्कारपूगः सुकृतादिपूगः । एतैर्महापूगवरैरविद्यानद्यामधश्चोपरि चैति जीवः २ तादृशीं नित्यप्रवाहवतीं सरितमविद्याख्यां पिबन्तस्तत्कृतैरिष्टैः पुत्रपश्वादिभिर्लब्धैस्तृप्यन्तः देवैश्चक्षुरादीनामनुग्राहकैः सूर्यादिभिस्तत्तद्विषयदर्शनद्वाराऽनेकसंस्कारसंततिं संतन्वानैः रक्षितां देवरक्षिताम् । ते जीवाः तस्या अविद्यानद्याः मधु पुत्रपश्वादिकं मधुरं फलमीक्षन्तः पश्यन्तस्तल्लिप्सया इह शुक्राख्येऽधिष्ठाने भासमानां घोरां महाभयंकरां संचरन्ति ऊर्ध्वाधोमार्गेषु पुनःपुनरावर्त्तन्त इत्यर्थः । इह यत्राधिष्ठाने संचरन्ति तं परमेश्वरं योगिनः पश्यन्ति ॥ ७ ॥

[ अर्जु० ] द्वादश पूगांसरितं पिबन्तो देवरक्षितां मध्विच्छन्तः संचरन्तीह घोराम् । योगिनस्तमित्यादि च । बुद्धीन्द्रियकर्मेन्द्रियाणि मनः प्राणाश्चेति द्वादशसमूहामुत्तरोत्तरशरीरकरणात् सैव सरित् तां स्वैरधिष्ठातृभिर्देवैः पालितां मधु इच्छन्तः इन्द्रियसुखमिच्छन्तः इह संसारे संचरन्ति एकं शरीरं विहायान्यदाविशन्ति घोरां दुःखोत्तरां, तं विश्रय(?)सुखमाविशन्तं योगिनो भगवन्तं पश्यन्तीत्यन्वयः॥ अथवा द्वादशपूगां सरितं कालगतिं संसारनदीं वा संतरन्ति तत्पारं गच्छन्ति । द्वादशपूगां पायूपस्थहस्तद्वयपादद्वयवाक्चक्षुःश्रोत्रत्वग्घ्राणरसनात्मकद्वादशेन्द्रियपूगरूपां सरितं सरणशीलां देवरक्षितां योऽविद्वान्(?) ॥ ७ ॥

[ सर्व० ] द्वादशपूगामिति । तदक्षरपदा गायत्रीछन्दः । प्रथमार्धे एकाक्षरमधिकम् । द्वादशानां पञ्चानां भूतानां षण्णामिन्द्रियाणां जीवात्मनश्च समुदायो यत्र तां सरितम् । सदा सरणात् शरीररूपां देवेन ते भवावताररक्षिताम् घोरां दुःखहेतुम् । मधु तत्वज्ञानपर्यायः । श्रुतौ रुचौ मधु प्रारोहयन्नित्यत्र तदीषंत इच्छन्तः । आर्षे

७ म. विशन्तो दे । ख. मध्विच्छन्तो ये मनुष्याः संचरन्तीह; म. ध्विच्छन्तः परं तस्य संच° । शां. द्वादशपूगाः सरितो देवरक्षिता मध्वीशते । तदनु विधायिनस्तदा संचरन्ति घोरम् ।

**तदर्धमासं पिबति संचित्य भ्रमरो मधु ।**
**ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ८ ॥**

तदा योगिदशायां संचरति । शरीरग्रहोऽपि योगिनां तत्प्रतिपत्त्यर्थं इत्याशयः । तदनन्तरश्च योगिनो भूत्वा तं पश्यन्तीत्यर्थः ॥ ७ ॥

[ दुर्घ० ] द्वादशपूगां सरितं पिबन्तो देवरक्षिताम् । मध्वीशन्तश्च ते तस्याः सन्तरन्तीति घोराम् । न केवलममृतास्ते भवन्ति संसारनदीं च सन्तरन्ति । तत्पारं गच्छन्ति । द्वादशपूगां पायूपस्थहस्तद्वयपादद्वयवाक्चक्षुःश्रोत्रत्वग्घ्राणरसनात्मकद्वादशेन्द्रियगणरूपां सरितं संसरणशीलामनवस्थितां धर्माधर्मोत्पत्तिद्वारेण भोगार्थं परिपालितां देवेन भोक्त्रात्मना रक्षितां मध्वीशन्त इति । मधूनि विषयरसे ईशन्त ईश्वराः न विषयपरतन्त्रा भवन्ति । घोरामनात्मवेदिभिर्दुस्तरामित्यर्थः ॥ ७ ॥

[ लक्षा० ] सरितः गङ्गायमुनाद्याः नद्यः ईशते पापनिर्हरणाय समर्था भवन्ति । या नद्यः इहलोके अरं सम्यक् संचरन्ति ॥ ७ ॥

[ शंक० ] किंच, दृष्टान्तदार्ष्टान्तिकयोस्तत्राभिधानम्—तदर्धमासमिति । यथा मधुकरो भ्रमरः अर्धमासोपार्जितम् अर्धमासं संचितं मधु अर्धमासं पिबति, एवमसावपि भ्रमरः भ्रमणशीलत्वात्संसारी तद्विषयं मधु अर्धमाससंचितमर्धमासं पिबति; पूर्वजन्मसंचितं कर्म अन्यस्मिन् जन्मनि भुङ्क्ते इति यावत् । भवेदप्यैहिकफलात्कर्मणः फलसिद्धिः, कर्मानन्तरभावित्वात्; कथं पुनरामुष्मिकफलात्कर्मणः फलसिद्धिः स्यात्, कर्मणो विनाशित्वादित्याशङ्क्याह—ईशान इति । भवेदयं दोषः यदि केवलात्कर्मणः फलसिद्धिः स्यात्; ईशानः परमेश्वरः कृतप्रयत्नापेक्षः सन् सर्वेषु प्राणिषु प्राणाग्निहोत्रस्येतरस्य च तत्कर्मानुसारेण हविर्भूतम् अन्नादिकम् अकल्पयत् । य ईशानः सर्वभूतेषु हविर्भूतकल्पयत्, तं भगवन्तं योगिन एव पश्यन्ति ॥८॥

[ नील० ] ननु इह कृतस्य कर्मणः कृत्स्नस्य अमुत्रैव भोगात् कर्मशेषाभावे कुतः पुनरावृत्तिः किंतु मुक्तिरेव भवतीत्याशङ्क्याह—तदर्धेति । तत् मधु कर्मफलं अर्धमासमर्धमासश्चन्द्रो यस्मिन् भोग्यत्वेन तत् अर्धमासं भवति तथा हि—तेषां सोमो राजाऽन्नं तं देवा भक्षयन्तीति श्रुत्याऽमुत्र गत्वा देवभावं प्राप्ता इष्टादिकारिणः सोमस्थममृतं पिबन्तीति दर्शितम् । तथा च भ्रमरो जीवः इतस्ततो भ्रमणशीलः अमुत्र सोमरूपमर्धं कर्मफलं भुङ्क्ते शेषेणात्रावर्त्तत इत्यर्थः । संचित्येत्यनेन आमुष्मिकफलभोगानन्तरमैहिकफलभोगवासनाऽप्यस्तीति सूचितम् । द्विविधं हि कर्म किंचिदामुष्मिकफलं किंचिदैहिकफलं तत्रैकं भुक्त्वा इतरार्थमत्रावतरतीति श्लिष्टम् । श्रुतिश्च—' यावत्संपातमुषित्वाऽथैतमेवाध्वानं पुनर्निवर्त्तन्ते तद्य इह रमणीयचरणा अभ्याशोह ते रमणीयां योनिमापद्यन्ते कपूयचरणाः कपूयां योनिमापद्यन्ते ' इत्याह । संपातः कर्म, चरणं कर्मशेषः, अभ्याशोह शीघ्रमेवेति श्रुतिपदानामर्थः । य एवंविधो जीवः स एव ईशानः अन्तर्यामी सर्वभूतेषु तिष्ठति । स एव च हविर्भूतं हविर्भिः सिद्धं यज्ञं च कल्पितवान् । वेदस्य वैदिकमार्गस्य च प्रवर्त्तक इत्यर्थः । एतेन त्वंपदार्थस्य तत्पदार्थाभेद उक्तः । यो यज्ञमकल्पयत् तं योगिनः पश्यन्ति ॥ ८ ॥

[ अर्जु० ] तदर्धमासं पिबति संचित्य भ्रमरो मधु । ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् । तन्मधु मध्विव विषयरसजातं, तस्य संख्यामाह—अर्धमासं पञ्चदशसंख्यम् । तथाहि—पञ्च गन्धाद्या पृथिव्या गुणाः, अपां रसाद्याश्चत्वारः, तेजसो रूपाद्यास्त्रयः, वायोः स्पर्शशब्दौ द्वौ, आकाशस्य शब्द एक एवं पञ्चदश । तत्पिबत्यनुभवति संचित्य संचयं कृत्वा । कर्मणा प्राक्तनेनोत्पाद्येति यावत् । भ्रमरः क्षेत्रज्ञः भ्रामं भ्रामं रमत इति ईशानः प्रभुः सर्वभूतेषु पृथिव्यादिषु इदं शब्दादि हविरग्नौ हूयत इत्यकल्पयत् अचिन्तयत् । तथाभूतं क्षेत्रज्ञं योगिनो भगवन्तं पश्यन्तीत्यन्वयः । अथवा पूर्वश्लोकार्थमेव द्रढयति—तन्मधु विषयरसं भ्रमर आत्मा पिबति भ्रमन् राति आदत्त इति भ्रमरः पिबति आस्वादयति विषयस्य मधुत्वात् । किंभूतो भ्रमरः ईशानः ईष्टे प्रभवति सर्वभूतेषु चेतनेषु शरीर इति यावत् । योऽनिशं जगदेव हविर्भूतमकल्पयत् इन्द्रियाणि हव्यतया कल्पितवान् ॥ ८ ॥

[ सर्व० ] पुनः सूर्यात्मतया स्तौति—तदर्धमासमिति । यत ईशान ईश्वरः सर्वभूतेषु मध्ये हविर्भूतं हविर्द्रव्यं तद्रूपमकल्पयत् अकरोत् । तच्चन्द्ररूपं मध्ये अमृतं तस्य प्रकृतित्वेन प्रतीकारः सोमस्तन्मधु भ्रमणशीलत्वात् । सूर्योऽर्द्धमासं कृष्णपक्षम् । अत्यन्तसंयोगे द्वितीया । पिबति तदीयाः कला आदत्ते । संचरति अर्धमिति अत्रापि संबध्यते । शुक्लपक्षे तस्य स्वरश्मिभिः पूरणात् । स्वयमेव संचयं कृत्वेत्यर्थः । तमीदृशं सूर्यं योगिनः पश्यन्तीत्यन्वयः ॥८॥

[ दुर्घ० ] ' तदर्धमासं संचित्य पिबति भ्रमरो मधु । ईशानः सर्वभूतेषु हविर्भूतमकल्पयत् । पूर्वश्लोकार्थमेव

८ अ. संचिन्त्य । शां. संचितं ।

**हिरण्यपर्णमश्वत्थमभिपद्य ह्यपक्षकाः ।**
**ते तत्र पक्षिणो भूत्वा प्रपतन्ति यथादिशम् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ ९ ॥**

द्रढयति । तन्मधु विषयरसं भ्रमतीति भ्रमरः आत्माऽर्धमासं पञ्चदशगुणसंख्यातं पिबति आस्वादयति । तद्यथा रूपरसगन्धस्पर्शशब्दाः पञ्चविषयाः पार्थिवाः । रूपरसस्पर्शशब्दाः चत्वार आप्याः । रूपशब्दस्पर्शा आग्नेयाः । स्पर्शशब्दौ वायव्यौ । शब्द एवैक आकाशस्य । एतत्पञ्चदशविषयसंज्ञकं मधु । किंभूतो भ्रमरः ? ईशान इष्टे सर्वभूतेषु चेतनेषु शरीर इति यावत् । यो जगदेव हविर्भूतमकल्पयत् इन्द्रियाणां हव्यतया कल्पितवान् ॥ ८ ॥

[ लक्षा० ] तदर्प्यमाणमपिबन्नित्यत्र तेन परमात्मना अर्प्यमाणं संचितं स्वस्वकर्मणा चार्जितं मधु मदी हर्षइतिधातोः तृतीयोतिशय इति वचनाच्च आनन्दकरत्वान्मधुस्थानीयं सूर्यमण्डलं, भ्रमराः आदित्या वसवो रुद्रा मरुतश्चेति चतुर्दिक्षु विद्यमानाः भ्रमरोपमाः देवाः, अपिबन् ईशानः सर्वभूतेष्वित्यत्र हविर्भूतं प्राणाग्निहोत्रे आविर्भूतमन्नमकल्पयत् ॥ ८ ॥

[ शंक० ] किंच, किमेते मध्वाशिनो बम्भ्रम्यमाणाः परिवर्तन्त एव सर्वदा, किं वा ज्ञानं लब्ध्वा मुक्ता भवन्ति, इत्याशङ्क्याह—हिरण्येति । ये अपक्षकाः ज्ञानपक्षरहिताः मध्वाशिनः परिवर्तन्ते, ते हिरण्यपर्णमश्वत्थं हितं च रमणीयं चेति हिरण्यं हितं रमणीयं च पर्णं यस्याश्वत्थस्य । तथा च भगवान्वासुदेवः—'छन्दांसि यस्य पर्णानि' इति । ते हिरण्यपर्णमश्वत्थम् अभिपत्य आरुह्य वेदसंयोगिब्राह्मणादिदेहं प्राप्येत्यर्थः । तत्रैव ब्राह्मणादिदेहे पक्षिणो ज्ञानिनो भूत्वा । तथा च ब्राह्मणम्—' ये वै विद्वांसस्ते पक्षिणो ये अविद्वांसस्ते अपक्षाः ' इति । प्रपतन्ति यथासुखं मुक्ता भवन्तीत्यर्थः । यं ज्ञात्वा प्रपतन्ति, तं योगिन एव पश्यन्ति ॥ ९ ॥

[ नील० ] ननु ईश्वरस्य जीवभावे किं कारणमत आह—हिरण्येति । हिरण्यानि हरणशीलानि आपातरमणीयत्वात् पर्णानीव पर्णानि अवयवाः स्त्रीपुत्रादयो यस्य तं हिरण्यपर्णमश्वत्थं न श्वोऽपि तिष्ठतीत्यश्वत्थो नश्वरः अविद्यावृक्षः तमभिपद्य प्राप्य अपक्षकाः न सन्ति पक्षाः उत्क्रमणहेतव उपाधयः प्राणरूपा येषां ते चिदात्मानः तत्र अविद्यायां पक्षिणो भूत्वा प्राणाद्युपाधिप्राप्त्या उत्क्रमणयोग्या भूत्वा यथादिशं यथावासनं प्रपतन्ति तासु तासु योनिष्वित्यर्थात् । बहुवचनमौपाधिकरूपभेदापेक्षया । श्रूयते च प्राणोपाधिकमुत्क्रमणं चिदात्मनः प्रश्नोपनिषदि षोडशकलं पुरुषं प्रस्तुत्य—स ईक्षां चक्रे कस्मिन्नहमुत्क्रान्ते उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामीति स प्राणमसृजतेति ॥ ९ ॥

[ अर्जु० ] हिरण्यवर्णमश्वत्थमभिपत्य ह्यपक्षकाः । ते तत्र पक्षिणो भूत्वा प्रपतन्ति यथादिशम् । योगिन इत्यादि च । हिरण्यस्येवाहितत्वेन च वर्णः श्लाघा यस्य तद्धिरण्यवर्णं न श्वोऽपि स्थास्यन्तीति अश्वा देहादयः तेषु तिष्ठन्तीत्यश्वत्थः कूटस्थो नित्य आत्मा तमभिपत्य तत्वज्ञानेन सहैकतां गत्वा न विद्येते स्वापजागरलक्षणौ पक्षौ येषां तेऽपक्षकाः अक्षेत्रज्ञाः । अतएव तत्वज्ञानशून्याः तथाश्वत्थसंजातस्वप्नजागरलक्षणपक्षाः प्रपतन्ति जीवभावेन गच्छन्ति यथादिशं कर्मनिर्दिष्टां दिशं तमपक्षावस्थं च भगवन्तं योगिनः प्रपश्यन्तीत्यन्वयः । अथवा संप्रति ये भोक्त्रात्मानस्तेषां परमात्मनि प्रवेशोऽस्तीति कथ्यते—हिरण्यवर्णमतिशयशोभनं जगदनुग्राहकत्वात् अश्वत्थमश्वत्थवृक्षवदचलमविकारं नित्यमुक्तत्वात् तं परमात्मानमभिपत्य तदर्थं कर्म कृत्वा । उक्तं च—' मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसि ' इति । अपक्षकाः प्रकृतिपुरुषविवेकिनो भूत्वा तत्रैव परमात्मवृक्षे निपतन्ति प्रविशन्ति यथादिशं यस्य या दिग्वासुदेवः शिवो वा ब्रह्मा वा उपास्यत्वेन देशितः स तमेव परमात्मानं विशतीति । उक्तं च—येऽन्यत्र भक्ताः पुरुषाः कुहकादिविमोहिताः । तेऽपि मामिह राजेन्द्र यजन्त्यविधिना पुनरिति । कः पुनः परमात्मनि प्रवेशो नाम ? न तावत् तादात्म्यं भिन्नयोस्तदभावात् । उक्तं च—उभौ देवौ शिश्रियाते इति । नापि संयोगः, तस्य नित्यत्वेन *संसारादपवर्गो न स्यात् । नापि परमात्मसाक्षात्कारः विवेकदर्शनेन प्रधानस्य महदादिविकारसर्गनिवृत्तेः । तस्मात्पुरुषस्य भोगभ्रान्तिनिवृत्तौ परमात्मसमतयावस्थानं परमात्मनि प्रवेशशब्दार्थः ॥ ९ ॥

[ सर्व० ] हिरण्यवर्णमश्वत्थमभिपद्य त्वपक्षकाः । ते तत्र पक्षिणो भूत्वा प्रपतन्ति यथासुखमिति । तं च हिरण्यवर्णं हिरण्यसदृशवर्णमश्वत्थमश्वस्थितं तदधीनगमनत्वात् । अपक्षाः पक्षरहिता अपि तेऽश्वाः अश्वत्थमित्यत्र तेषां प्रक्रान्तत्वात् । पक्षिणः पक्षवन्त एव भूत्वा प्रपतन्ति यथादिशं यथाक्रमं दिशः, हिरण्ययेन सविता रथेन देवो याति भुवनानि पश्यन्निति श्रुतेः । तमेवंभूतं रथवन्तं योगिनः पश्यन्तीति ॥ ९ ॥

९ शां. यथासुखम् । ख. म. हिरण्यवर्णं । ख. परया अपक्षकाः म. पत्य त्वपं । * संसारो नापवर्गो वा स्यात् । इ. पा. ।

पूर्णात्पूर्णान्युद्धरन्ति पूर्णात्पूर्णानि चक्रिरे ।
हरन्ति पूर्णात्पूर्णानि पूर्णमेवावशिष्यते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १० ॥

[ दुर्घ० ] इदानीं ये भोक्तात्मानस्तेषां परमात्मनि प्रवेशोऽस्तीति कथ्यते । हिरण्यवर्णमतिशोभनं जगदनुग्राहकत्वात् । अश्वत्थमश्वत्थवृक्षवदचलमविकारं नित्यमुक्तत्वात् । तं परमात्मानमभिपद्य तदर्थं कर्म कृत्वा । उक्तं च 'मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि' इति । अपक्षकाः प्रवृत्तिधर्मपक्षरहिताः काम्यकर्मपक्षमनाश्रिताः ते तदर्थकर्माचरणक्षपितदुरिताः काम्यकर्मपरित्यागात् पक्षिणो भूत्वा प्रकृतिपुरुषविवेकिनो भूत्वा तत्रैव परमात्मवृक्षे निपतन्ति प्रविशन्ति । यथादिशं यस्य या दिक् वासुदेवः शिवो वा हिरण्यगर्भो वा यज्ञपुरुषो वा पुरुषोत्तमो वा उपास्यत्वेन चोदितः स तमेव परमात्मानं विशतीति । उक्तं च—येन्यत्र भक्ताः पुरुषाः कुहकादिविमोहिताः । तेपि मामेव राजेन्द्र यजन्त्यविधिना पुनरिति । कः पुनः परमात्मनि प्रवेशो नाम? न तावत्तादात्म्यम्, भिन्नयोस्तदभावात् । उक्तश्च 'उभौ देवौ शिश्रियाते' इति । नाऽपि संयोगस्तस्य नित्यत्वेनासंसारमपवर्गो न स्यात् । नाऽपि परमात्मसाक्षात्कारः । विवेकदर्शनेन प्रकृतिनिवृत्तौ बुद्धीच्छाद्यपगमे ज्ञानोपधानाभावात् । उच्यते । विवेकदर्शने प्रधानस्य महदादिविकारसर्गनिवृत्तेः पुरुषस्य भोगभ्रान्तिनिवृत्तौ परमात्मसमवेततया अवस्थानं परमात्मनि प्रवेशशब्दार्थः । बहु वक्तव्यमेतत् ग्रन्थविस्तरभयान्नेह प्रतन्यते ९॥

[ लक्षा० ] हिरण्यवर्णमश्वत्थमित्यत्र सपक्षकाः पक्षसहिताः ते मुक्ताः पक्षिणः अश्वत्थं श्वेतद्वीपगतममृतस्रवणमश्वत्थमभिपत्य अभितो गत्वा यथासुखं प्रभवन्ति प्रहृष्टा भवन्ति ॥ ९ ॥

[ शंक० ] इदानीं पूर्णवाक्यार्थं कथयति—पूर्णेति । पूर्णात् देशतः कालतो वस्तुतश्चापरिच्छिन्नात् परमात्मनः पूर्णमेव उद्धरन्ति जीवरूपेण । यत् पूर्णात् पूर्णमुद्धृतं जीवात्मना अतः पूर्णात् उद्धृतत्वादेव इदमपि जीवस्वरूपं पूर्णमेव प्रचक्षते विद्वांसः । तथा हरन्ति पूर्णात् जीवात्मनावस्थितात् पूर्णम् आत्मस्वरूपमात्रं देहेन्द्रियाद्यनुप्रविष्टं देहेन्द्रियादिभ्यो निष्कृष्य तत्साक्षिणं सर्वान्तरं देहद्वयादुद्धरन्तीत्यर्थः । ततः उद्धृतेनैव मूलभूतेन पूर्णानन्देन अवशिष्यते तेनैव पूर्णानन्देन ब्रह्मणा संयुज्यते चित्सदानन्दाद्वितीयब्रह्मात्मना अवतिष्ठत इत्यर्थः । 'पूर्णमेवावशिष्यते' इति वा पाठः; यदा देहेन्द्रियादिभ्यो निष्कृष्य तत्साक्षिणं सर्वान्तरं देहद्वयादुद्धरन्ति, तदा पूर्णमेवावशिष्यत इत्यर्थः । तथा च श्रुतिः—'पूर्णमदः पूर्णमिदं पूर्णात्पूर्णमुदच्यते । पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते' इति । अस्या अयमर्थः—पूर्णम् अदः तच्छब्दवाच्यं जगत्कारणं ब्रह्म । पूर्णमिदं त्वंशब्दनिर्दिष्टं प्रत्यागात्मस्वरूपम् । अनयोस्तत्त्वंपदार्थयोः कथं पूर्णत्वमिति चेत्, तत्राह—पूर्णात् अनवच्छिन्नात् पूर्णमेवोदच्यते उद्रिच्यते जीवेश्वररूपेण यस्मात्, तस्मादनयोः पूर्णत्वमित्यर्थः । पूर्णस्य तत्त्वमात्मनावस्थितस्य पूर्णं रूपमादाय तत्त्वंपदार्थशोधनं कृत्वा शोधितपदार्थः सन्नित्यर्थः । पूर्णमेव ब्रह्म अवशिष्यते पूर्णमेव ब्रह्म भवतीत्यर्थः । यः पूर्णस्वरूपः, तं परमात्मानं योगिन एव पश्यन्ति ॥३॥

[ नील० ] एवमीश्वरस्यापि जीवत्वे उपाधिसंबन्ध एव कारणमित्युक्तं तत्र किमुपाधिभिः कृत्स्नं ब्रह्म उपाधीयते उत ब्रह्मणोंऽशा एवोपधीयन्ते । आद्ये जीवबहुत्वानुपपत्तिः । अन्त्ये ब्रह्मणो निष्कलत्वानुपपत्तिः, अंशस्यांशित्वायोगाज्जीवेशयोरभेदानुपपत्तिश्चेत्याशङ्क्याह—पूर्णादिति । पूर्णात् व्यापकात् चिदाकाशात् पूर्णानि चित्प्रतिबिम्बभूतानि जीवरूपाणि उद्धरन्ति पृथक्कुर्वन्ति प्राणादय उपाधिदर्पणाः । ननु उपाधीनां पृथक् सत्त्वे पूर्णस्य पूर्णत्वमेव व्याहन्येतेत्याशङ्क्याह—पूर्णादिति । पूर्णानि प्राणादीनि पूर्णादेव चक्रिरे कृतानि । अयं भावः—घटाकाशन्यायेनोपाध्युपधेययोः परस्परपरिच्छेदकत्वेऽन्यतरस्यापि पूर्णत्वं न युज्यतेऽत उपाधिरप्यध्यस्त एव । तथा चाधिष्ठानाध्यस्तयोर्विषमसत्ताकत्वान्न परस्परपरिच्छेदकत्वं किंत्वितरेतरतिरोधायकत्वमेवास्तीति स्वस्वप्रतीतिकाले द्वयोरपि पूर्णत्वं प्रतियोगिनस्तदानीमदर्शनात् । कल्पित उपाधिर्जीवेश्वरभेदे हेतुरित्यर्थः । यदा तु पूर्णानि प्राणादीनि ब्रह्मण्यध्यस्तानि ततः सकाशात् हरन्ति सम्यगवेक्षणेन दूरीकुर्वन्ति रज्जुत इव सर्पं तदा जीवेशभेदनिमित्तस्योपाधेरभावात् पूर्णं ब्रह्मैवावशिष्यते । यथोक्तं विष्णुपुराणे—विभेदजनकेऽज्ञाने नाशमात्यन्तिकं गते । आत्मनो ब्रह्मणाभेदमसन्तं कः करिष्यतीति । एवं च अंशांशित्वरूपेण जीवेशयोर्भेदानुपगमादनुपचरितस्तयोरभेदप्रतिपादकस्तत्त्वमस्यहं ब्रह्मास्म्ययमात्मा ब्रह्मेत्यादिरागम इति सिद्धम् । यत्पूर्णं शिष्यते तं भगवन्तं योगिनः पश्यन्ति ॥ १० ॥

[ अर्जु० ] पूर्णात्पूर्णमुद्धरति पूर्णात् पूर्णानि चक्रिरे । हरन्ति पूर्णात् पूर्णानि पूर्णमेवावशिष्यते । पूर्णात् परमानन्दस्वभावात् निराकाङ्क्षया परमात्मनः पूर्णं जीवरूपं, जीवस्य पूर्णत्वं तत्वज्ञाने सति भाविनीं निवृत्तिमाश्रित्य । उद्धरति उद्भवति । अथवा पूर्णात् वासुदेवात् पूर्णरूपं संकर्षणाख्यं

१० झां. अयं तृतीयत्वेन पठितः । ख. म. पूर्णात्पूर्णञ्च (श्र.) द्वि(?)।

**तस्माद्वै वायुरायातस्तस्मिंश्च प्रयतः सदा । तस्मादग्निश्च सोमश्च तस्मिँश्च प्राण आततः ॥११॥**

पूर्णमेव ऐश्वर्यादिगुणयोगात् । अथवा सर्वज्ञता नित्यतृप्तिरनादिबोधः स्वतन्त्रता अनुपहतशक्तिरनन्तशक्तिश्चेति षड्गुणात् पूर्णात्परमानन्दरूपात्पूर्णानि विषयसुखानि चक्रिरे शरीरेन्द्रियविषयैरिति शेषः । सृष्टिमभिधाय संहारमाह—हरन्तीति । अविरक्षितकर्मत्वाल्लीयन्त इति यावत् । पूर्णादिति विभक्तिव्यत्ययात्सप्तम्यर्थे पञ्चमी । पूर्णा निर्जीवा विषयसुखानि च । पूर्णमेवावशिष्यते प्रलयमुक्त्यवस्थयोरिति शेषः । तं सृष्टिप्रलयमुक्त्यवस्थासु योगिनः प्रपश्यन्तीत्यन्वयः । अथवायमर्थः—इदानीं परमात्मनः सृष्टौ प्रलये च तादवस्थ्यमुच्यते । पूर्णादित्यादि । पूर्णात् ज्ञानेच्छाक्रियाशक्तिसहितात् परमात्मनः सकाशात् पूर्णान्यष्टप्रकृतिषोडशविकाररूपाणि यैरिदं जगत्पूर्यते तानि भोक्तात्मा विवेकाभावादुद्धरति आत्मसंबन्धितया स्वीकरोति । एवंभूतात् विकारसमूहात् पूर्णात् सहकारिसचिवात् पूर्णान्यपराण्युच्चावचानि सगुणक्रियाणि चक्रिरे प्रकृतयः । एवं तावत् सृष्टिमूलत्वमुक्तम् । संप्रति प्रलयमूलत्वमाह—हरन्ति उपसंहरन्ति आत्मनः प्रकृतिविवेकदर्शिनः । तापत्रयाभिभूताः पूर्णाज्ज्ञानादिशक्तिनियतपूर्णादेव परमात्मनोऽनुग्राहकभूतात् तानि सगुणक्रियाणि प्रकृतात्मनि । उक्तं च—ईश्वरप्रेरितो गच्छेदित्यादि । एवं सृष्टौ प्रलये च पूर्णमेव परमात्मस्वरूपमेवावशिष्यते । यथाव्याख्यानं पाठः ॥१०॥

[ सर्व० ] पूरणात्पूरकात् व्यापकादीश्वरात् पूर्णं पूरकं विश्वस्योपादानवर्गः उद्धरति उद्गच्छति कार्यजननाय व्याप्रियते, ततस्तस्मादीश्वरात् कारणीभूतात् संयुक्तान्यन्यूनानि च चक्रिरे कृतानि तदुपादानैस्तानि च पूर्णानि उत्पन्नानि कार्याणि पूर्णादीश्वरात् कारणीभूतादीश्वरेण कार्येषु कृतेषु पूर्णमीश्वर एवावशिष्यते एवकारः कार्यं व्यवच्छिनत्ति न तु जीवाद्यम् । कार्यमप्येतेन य उपादानव्यापारेण जगज्जन्मजगत्संहारकारित्वं तदन्ते च केवलस्यावस्थानं यस्येश्वरस्य तं योगिन एव पश्यन्ति ॥ १० ॥

[ दुर्घ० ] इदानीं परमात्मनः सृष्टौ प्रलये च तादवस्थ्यमुच्यते । "पूर्णात्पूर्णान्युद्धरति पूर्णात्पूर्णानि चक्रिरे । हरन्ति पूर्णात्पूर्णानि पूर्णमेवावशिष्यते ।" अस्यार्थः—पूर्णात् ज्ञानेच्छाक्रियाशक्तिसहितात्परमात्मनः सकाशात् पूर्णानि अष्टप्रकृतिषोडशविकाररूपाणि यैरिदं जगत्पूर्यते तानि भोक्तात्मा विवेकाभावादुद्धरति आत्मसंबन्धितया स्वीकरोति । एवंभूताद्विकारसमूहात्पूर्णात्सहकारिसचिवात्पूर्णानि अपराणि उच्चावचानि सगुणक्रियाणि चक्रिरे प्रकृतयः । एवं तावत्सृष्टिमूलत्वमुक्तम् । सम्प्रतिप्रलयमूलत्वमाह—हरन्ति आत्मनः प्रकृतिविवेकदर्शिनः तापत्रयाभिभूताः पूर्णाच्छक्तित्रयपूर्णादेव परमात्मनोऽनुग्राहकभूतात् । उक्तं हि—ईश्वरात्प्रेरितो गच्छेदित्यादि । एवं सृष्टौ प्रलये च पूर्णमेव परमात्मस्वरूपमेवावशिष्यते ॥ १० ॥

[ नील० ] तस्मात्पूर्णात् वायुरिति पञ्चानामपि भूतानामुपलक्षणम् । तस्माद्वा एतस्मादात्मन आकाशः संभूतः आकाशाद्वायुः वायोरग्निः अग्नेरापः अद्भ्यः पृथिवीति तत एव सर्वभूतोद्भवश्रुतेः । प्रयतः निगृहीतः । एतेन तत्रैव लयं दर्शयता तदुपादानकत्वं भूतानामुक्तम् । अग्निर्भोक्ता सोमो भोज्यं प्राण इति देहेन्द्रियादिसंघातग्रहणम् ॥११॥

[ अर्जु० ] तस्माद्वै वायुराततस्तस्मिंश्च प्रलयं गतः । तस्मादग्निश्च सोमश्च तस्मिंश्च प्राण आततः । सर्वमेव ततो विदुस्तं तु वक्तुं न शक्नुमः । योगिनस्तमित्यादि च । तस्मात् पूर्णात् वै प्रसिद्धो वायुराततो विस्तृतः तस्मिंश्च प्रलयं गतः । स च वायुस्त्रिधा अधिदैवाध्यात्मादिरूपः अध्यात्मं प्राणादिरूपः तयोरधिष्ठाता ध्वजहस्तो देवः तत्र वायुशब्दो देववाची । अग्निरपि वायुवत् त्रिधा विभजनीयः । अधिदैवं तत्राहुतिरूपं तयोरधिष्ठाता शक्तिहस्तो देवः । तं यथोक्तव्यक्तिमन्तं भगवन्तं पश्यन्तीत्यन्वयः ॥ तस्मादित्यादि । तस्मात् पूर्णात् वायुः सूत्ररूपी स एव च हिरण्यगर्भः समुदितरूपः प्राण आतत इति प्रतिवचनं पुनः प्राप्त्यतिशयप्रतिपादनाय । ततः पूर्णात् । अथवा ततो हिरण्यगर्भात् सर्वविदुस्तं तु वक्तुं न शक्नुमः । तमेवंभूतं भगवन्तं पश्यन्तीत्यन्वयः । अथवा एकदेशप्रक्रियामात्रमिदं श्रुतितः सर्वं ज्ञेयं तस्मात् सिसृक्षोः परमात्मनः प्रथममाकाशमभवत् । ततो व्योम्नो वायुराविर्बभूव । स च तस्मिन्नेव व्योम्नि प्रलयं गतः स्तिमितीभूय स्थितः । तस्मात् वायोरग्निराविर्बभूव न केवलमग्निः सोमश्च संबभूव । तस्मिन्नग्नीषोमयोर्मध्ये प्राण आततः प्रादुरासीत् ॥ ११ ॥

[ सर्व० ] तस्मादीश्वरादाततो विस्तारितः । तस्मिंश्च प्रलयः सदा प्रलीयते शिष्यते संहारो भवतीति प्रलयः पृथिवीशये(?)यस्मिन् कारणेन भवति । अग्निस्तेजसो धातुः सोम आप्यो धातुस्तस्माज्जायते । तथा प्राण आकाशो यस्मिन्नाततो विस्तृतः स्थितः । प्राणिति प्रकर्षेणानित्यनेनेति

---

११ शां. तस्माच्च वायु…प्रलय स्तथा । तस्माच्च प्राण आगतः । अयं शां. एकोनविंशत्वेन पठितः । ततः परं च—तत्प्रतिष्ठा तदमृतं लोकास्तद्ब्रह्म तद्यशः । भूतानि जज्ञिरे तस्मात्प्रलयं यान्ति तत्र च । इत्ययं पठितः ख. म यस्माद्वै वायुराततो यस्मिंश्च प्रलयं गतः । यस्मादग्निश्च सोमश्च यस्मिंश्च प्राण आततः ॥ तस्माद्वै वायुराततस्तस्मिंश्च प्राण आततः ।

सर्वमेव ततो विद्याचत्तद्वक्तुं न शक्नुमः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १२ ॥
अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः ।
आदित्यो गिरते चन्द्रमादित्यं गिरते परः ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १३ ॥

प्राण आकाशः आकाशभावे निरुच्छ्वासस्य जीवाभावात् एवं भूतानां पञ्चानाम् आश्रयस्तं योगिनः ॥ ११ ॥

[ दुर्घ० ] 'तस्माद्वै वायुरभवत्तस्मिंश्च प्रलयं गतः । तस्मादग्निश्च सोमश्च तस्मिंश्च प्राण आततः ॥ सर्वमेव ततोन्यस्तं तं च वक्तुं न शक्नुमः' । एकदेशप्रक्रियामात्रमिदं श्रुतितः सर्वं बोद्धव्यम् । तस्मात्परमात्मनः सिसृक्षोः प्रथममाकाशमभवत्ततो व्योम व्योम्नो वायुराविर्बभूव । स च तस्मिन्नेव व्योम्नि प्रलयं गतस्तिमितीभूय स्थितः । तस्माद्वायोरग्निराविर्बभूव न केवलमग्निः सोमश्च संबभूव । तस्मिन्नग्नीषोमयोर्मध्ये प्राण आततः प्रादुरासीत् ॥ ११ ॥

[ शंक० ] इदानीं योगं दर्शयति—अपानमिति । अपानं गिरति उपसंहरति प्राणः । प्राणं गिरति चन्द्रमाः मनः उपसंहरति । मनसश्चन्द्रमा अधिदैवतम्; तस्माच्चन्द्रमःशब्देन मन उच्यते । तं चन्द्रं मन आदित्यो बुद्धिः गिरते । बुद्धेश्चादित्योऽधिदैवतम् । तम् आदित्यं बुद्धिं गिरते परः परं ब्रह्म । एतदुक्तं भवति—समाधिवेलायामपानं प्राणे उपसंहृत्य प्राणं मनसि मनश्च बुद्धौ बुद्धिं परमात्मन्युपसंहृत्य स्वाभाविकचित्सदानन्दाद्वितीयब्रह्मात्मनैवावतिष्ठत इत्यर्थः ॥ १० ॥

[ नील० ] इदं सर्वं तत एव आततं तस्माज्जातं तत् आत्मत्वेन प्रसिद्धं तत् तच्छब्दवाच्यम् । तदिति वा एतस्य महतो भूतस्य नाम भवतीति श्रुतिप्रसिद्धेः । वक्तुं न शक्नुमः वाचामगोचरं तं योगिनः पश्यन्ति ॥ १२ ॥ इदानीं तद्दर्शनाभ्युपायं योगं संक्षेपेणाह—अपानमिति । गिरति उपसंहरति स्वात्मनि योगशास्त्रोक्तरीत्या । पार्ष्णिना गुदमापीड्य दन्तैर्दन्तानसंस्पृशन् । दृढासनोऽपानवायुमुन्नयेच्च शनैः शनैः । तं प्राणेनैकतां नीत्वा स्थिरं कृत्वा हृदम्बरे । चेतोमात्रेण तिष्ठेत तच्च बुद्धौ विलापयेत् । चन्द्रमा अत्र मनः, आदित्यो बुद्धिः, परः परमात्मा । एवं य आदित्यं गिरति तं योगिनः पश्यन्ति ॥ १३ ॥

[ अर्जु० ] एवं परंपरया अमूलमिदं विश्वं दर्शितमित्याह—सर्वमेव ततो विश्व इति । ननु कः परमात्मा किंलक्षणश्चेत्यभिधीयतामित्याह—तं वक्तुं न शक्नुम इति । नित्यं कार्यानुमेयोऽसावस्माकं नेदन्तया निर्देष्टुं शक्यते योगिनस्तं प्रपश्यन्तीति । योगिनामपि स्वसंवेद्यो न तेऽपि वाचा निर्देष्टुं शक्ताः । श्रुतिश्च भवति—' तस्मात् संभूत आकाश आकाशाद् वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी पृथिव्या ओषधयः ओषधिभ्यो विश्वमित्यादि । एकदेशप्रक्रिया त्वियमित्यनुसन्धेयम् ॥ यथाव्याख्यानं पाठः ॥ १२ ॥ अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः । आदित्यो गिरते चन्द्रं सूर्यं गिरति तत्परम् ॥ योगिनस्तमिति च । ग्रसति अपानः प्राणे लीयते इत्यर्थः । चन्द्रमा मनः आदित्यो बुद्धिः सत्त्वाधिक्यात् प्रभास्वरत्वात् , गिरति चन्द्रं मनः तत् ब्रह्म आच्छाद(क)रूपत्वात् तं चन्द्रमसं, भगवन्तं पश्यतीत्यन्वयः । अथवा अतिनिर्वेदवतां सद्योमुक्तिमिच्छतां ध्यानोपायः कथ्यते—अपानमधःस्थितं वायुं भूतात्मसंज्ञितमुत्क्रान्तियोगेन प्राणस्थानगं जीवात्मा प्राणसंज्ञः गिरति गिलति वशीकरोतीत्यर्थः । तं च प्राणमन्तरात्मविषयमागतं मनश्चन्द्र इति पर्यायः । तस्य मूर्धा ततस्तु वात्वा वातेन देहधातून् पूरयन् पुष्टिं ददातीत्यागमाद् बोधनीयम् । कृत्स्नरूपश्चासाविति सोमसिद्धान्तः ॥ उक्तं च योगसारे—कपालपद्मस्थितचन्द्रबिम्बमाचिन्तयन्तं जनकान्तिचौरम् । प्रस्यन्दिपीयूषवसाप्ति कर्मा(?)प्राप्नोति चैकादश लक्षणानीति । तमेवंभूतं चन्द्रमादित्यो ग्रसति उत्क्रान्तिध्यानयोगेन तं च रन्ध्रेणादित्यविषयं नीतमादित्यो बुद्धिरुच्यते विषयप्रकाशकत्वात् । तं चन्द्रमसं ग्रसति । ततश्च विषयप्रकाशो जायते सूर्यं गिरति । ततः परमिति तत् पूर्वोद्दिष्टं परमात्मा ततो बुद्ध्यादिसकलगुणसंदेहनिवृत्तिलक्षणो मोक्ष इति भावः । उत्क्रान्तियोगश्च गुरुमुखाद् बोद्धव्यः ॥ १३ ॥

[ सर्व० ] बहिर्भूताश्रयत्वं व्याख्याय समस्तदेहधारणहेतुभूतयोः प्राणात्मनोरपि तदाश्रयत्वमित्याह—यस्माद्वै प्राण आततो विस्तृत उत्पन्नो यस्मिन्नाश्रये प्राण आत्मायातो विस्तृतस्तिष्ठति । श्रुतौ हि प्राणशब्द आकाशे आत्मनि प्रसिद्धः । तस्यै तस्यात्मन इत्युपसंहारे सर्वमेव कार्यं तथा विद्यो जानीमः ज्ञातं तथापि तत्स्वरूपमात्रेण वक्तुं न शक्यत इति तमेवंभूतं योगिनः पश्यन्ति ॥ १२ ॥ पुनरादित्यरूपेण तमाह—अपानमिति । गिरति आत्मन्यन्तर्भावयति पूरकेण प्राणेन मिश्रीकृतस्यापानस्य रेचकावस्थायां प्राणेन सह निर्गमात् । प्राणं निःसृतमाकाशरूपेण चन्द्रमा गिरति । आकाशमूर्तिर्हि चन्द्रः । तथाच श्रुतिः—श्रोत्रे सृष्टा दिशश्चन्द्रमाश्चेति । तथा च स एव चन्द्रमाः प्राणसहितः आपो गिरति वायुना क्षिप्तानां

१२ शां. नास्ति । ख. सर्वमेव ततो विश्वस्तं तु वक्तुं न शक्नुमः ॥ १३ ख. म. सूर्यं गिरति तत्परम् ।

**एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् ।**
**तं चेत्संततमूर्ध्वाय न मृत्युर्नामृतं भवेत् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १४ ॥**

जलानामाकाश एव विलयात् । तं चन्द्रमादित्यो गिरति दर्श[न]समये प्राप्ते । तदेवं सर्वेषामेषां यत्रादित्ये विलयस्तं योगिनः पश्यन्तीति ॥ १३ ॥

[ दुर्घ० ] एवं परमात्ममूलं दर्शितं विश्वमित्याह–सर्वमेव ततो विद्म इति । ननु कः परमात्मा किंलक्षण इत्यत आह–तं तु न शक्नुम इति । नित्यं कार्योन्नेयोऽसावस्माकं नेदन्तया निर्देष्टुं शक्यते । 'योगिनस्तं प्रशंसन्ति भगवन्तं सनातनम् । योगिनामपि न संवेद्योऽसौ न तेऽपि तं वाचा निर्देष्टुं शक्ताः । श्रुतिश्च भवति । तस्मात्संभूतादाकाशाद्वायुर्वायोरग्निरग्नेरापः अद्भ्यः पृथिवी पृथिव्या ओषधयः । ओषधीभ्यो विश्वमित्यादि । एकदेशप्रक्रिया त्वियमित्यनुसंधातव्या ॥ १२ ॥ संप्रत्यनिर्वेदवतां सद्यो विमुक्तिमिच्छतां ध्यानोपायः कथ्यते—' अपानं गिरति प्राणः प्राणं गिरति चन्द्रमाः । आदित्यो गिरते चन्द्रं सूर्यं गिरति तत्परम् । अपानमध्यस्थितं वायुं भूतात्मसंज्ञितमुत्क्रान्तियोगेन प्राणस्थानमुपागतं स जीवात्मा प्राणसंज्ञकः गिरति गिलति वशीकरोतीत्यर्थः ॥ तं प्राणमन्तरात्मविषयमागतम् अन्तरात्मा मनश्चन्द्र इति पर्यायः तस्य विषयो मूर्धा तत्रस्थ एवासावमृतेन देहधातून्पूरयन्पुष्टिं विदधातीत्यागमाद्बोद्धव्यम् । कृत्स्नरूपश्चासाविति सोमसिद्धान्तः । उक्तं च योगसारे–'कपालपद्मस्थितसोमविश्वमचिन्तयन्तं जनकान्तिचौरम् । प्रस्यन्दिपीयूषलवास्थिचर्मा प्राप्नोति चैकादशलक्षणानि । तमेवंभूतं चन्द्रमादित्यो गिरते च ग्रसति । उत्क्रान्तिध्यानयोगेन ब्रह्मरन्ध्रेणादित्यविषयं नीतं तदादित्यो ग्रसति । आदित्यो बुद्धिरुच्यते विषयप्रकाशरूपत्वात्तं चन्द्रमसं ग्रसति । ततश्च विश्वप्रकाशो जायते । सूर्यं गिरति तत्परमिति तत्पूर्वोद्दिष्टः परमात्मा सूर्यं गिरति ततो बुद्ध्यादिसकलगुणसन्देहनिवृत्तिलक्षणो मोक्ष इति भावः । उत्क्रान्तियोगश्च गुरुमुखाद्बोद्धव्यः ॥ १३ ॥

[ लक्षा० ] अपानं गिरति प्राण इत्यत्र संहारक्रमः कथ्यते । अत्र प्राणः अवान्तरो वायुः परः परमात्मा ॥१३॥

[ शंक० ] इदानीं परस्य जीवात्मनावस्थानं दर्शयति—एकेति । हन्त्यविद्यां तत्कार्यं चेति हंसः परमात्मा भूतभौतिकलक्षणात्संसारात् सलिलात् उच्चरन् ऊर्ध्वं चरन् संसाराद्बहिरेव वर्तमानः एकं जीवाख्यं पादं नोत्क्षिपति नोद्धरति नोपसंहरति रूपं रूपं प्रतिरूपोऽवतिष्ठत इत्यर्थः । श्रूयते च कठवल्लीषु–' एकस्तथा सर्वभूतान्तरात्मा ' इति । कस्मात्पुनरेकं पादं नोत्क्षिपतीत्यत आह—तं जीवाख्यं पादं सततं संततयायिनं यदि उत्क्षिपेत् स्वमायया स्वमात्मानं प्राणाद्यनन्तभेदं कृत्वा तेष्वनुप्रविश्य जीवात्मना यदि नावतिष्ठेत्, तदा न मृत्युः न जननमरणादिलक्षणोऽनर्थः संसारो भवेत् संसारिणो जीवस्याभावात् । तथा अमृतम् अमृतत्वं मोक्षो न भवेत् अननुप्रविष्टस्य दर्शनासंभवात् । तथा च तदर्थमेव अनुप्रवेशं दर्शयति—' रूपं रूपम् ' इति तथा चाथर्वणी श्रुतिः—' एकं पादं नोत्क्षिपति सलिलाद्धंस उच्चरन् । स चेदुत्क्षिपेत्पादं न मृत्युर्नामृतं भवेत् ' इति, एकं रूपं बहुधा यः करोति ' इति च । यः पादरूपेण जीवात्मना त्रिपादरूपेण चित्सदानन्दाद्वितीयेन ब्रह्मात्मनावस्थितः, तं परमात्मानं योगिन एव पश्यन्ति ॥ ११ ॥

[ नील० ] ननु नित्यापरोक्षं ब्रह्म यत्साक्षादपरोक्षादिति श्रुतेः अतः किं योगेनेत्याशंक्याह—एकमिति । हंस इव हंसः परमात्मा शरीरवृक्षमारूढोऽपि तेन असंबद्धः स चतुष्पात् । सोऽयमात्मा चतुष्पादिति श्रुतेः । चतुर्णां पादानां जाग्रत्स्वप्नसुषुप्ततुरीयाख्यानां मध्ये एकं पादं तुरीयं नोत्क्षिपति न प्रकाशयति । कीदृशः सलिलात् निर्विशेषात् अतिगम्भीरात् उच्चरन् उपर्येव पादत्रयेण चरन् तं तुरीयं पादं शिवमद्वैतं चतुर्थं मन्यन्ते स आत्मा स विज्ञेय इति श्रुतिप्रसिद्धम् । ऊर्ध्वाय उपरितनाय पादत्रयाय विश्वतैजसप्राज्ञाख्याय तेषां चालनायेत्यर्थः । सन्ततं व्याप्तम् । तुरीयं त्रिषु संततमित्युक्तेः । नहि चैतन्यानुबन्धं विना विश्वादयः स्वकार्ये प्रभवन्ति तं चेत् पश्यति तदा मृत्युरमृतं च अज्ञानकृतं द्वयं सति ज्ञाने कालत्रयेऽपि नास्तीत्यर्थः । यद्यपि नित्यापरोक्षं ब्रह्म तथाऽपि उपाधिविशिष्टेनैव रूपेण परोक्षं न तु ततो निष्कृष्टरूपेणातस्तदापरोक्ष्याय योगोऽपेक्षित इत्यर्थः । सततमृत्विजमिति पाठे ऋत्विग्वत् पादत्रयक्रियानिमित्तमित्यर्थः ॥ १४ ॥

[ अर्जु० ] एकं पादं नोत्क्षिपति सलिलाद्धंसमुच्चरन् । तं चेत् सततमृत्विजं न मृत्युर्नामृतं भजेत् । योगिनस्तमिति च । एकं पादं प्रवृत्तिधर्मलक्षणं नोत्क्षिपति नो प्रसारयति निवृत्तिधर्ममेव प्रसारयतीत्यर्थः । किमित्यत आह—सलिलाद् भवसलिलात् हंसं विदितात्मानमुच्चरन् उद्धर्त्तुमिच्छन् इति हेतुमाह । तं क्षेत्रज्ञं चेद् यस्मात् सततमृत्विजं ब्रह्माग्नौ विश्वहोतारममृतममृतरूपं मृत्युर्न भजेत्(?)

१४ ख. म. तं चेत्सततमृत्विजं न मृत्युर्नामृतं चरेत् । शां. तं चेत्सततमुत्क्षिपेन्न मृ° ।

**अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा**
**लिङ्गस्य योगेन स याति नित्यम् ।**
**तमीशमीड्यमनुकल्पमाद्यं**
**पश्यन्ति मूढा न विराजमानम् ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १५ ॥**

**असाधना वाऽपि ससाधना वा**
**समानमेतद्दृश्यते मानुषेषु ।**
**समानमेतदमृतस्येतरस्य**
**मुक्तास्तत्र मध्व उत्सं समापुः ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥१६॥**

भजेदेवेत्यर्थः मृत्युर्हि शरीरादिपरिभोग आत्मनः स यदा शरीरान्तरग्रहणाय भवति तदा मृत्युरेवासावुच्यते ॥ न मृत्युरमृतं भजेदिति पाठे तमेवंभूतं क्षेत्रज्ञममृतमदुःखं न मृत्युर्बहिर्विषयास्वादलक्षणो भजेदित्यर्थः । यथाव्याख्यानं पाठः ॥ १४ ॥

[ सर्व० ] स हंसः अहं स त्वमिति(?)आत्मा तदुभयप्रयोजकत्वात् हंसः, हिनस्ति अज्ञानतमो जगत्तमो वा सूर्यः स सलिलादुच्चरन् पूर्वसमुद्रादुदयसमयमुद्गच्छन् एकं पादं नोत्क्षिपति । पादो रश्मिः । 'न' एतस्य एकपदेनान्वयः । तेन अनेकान् पादान्रश्मीनुत्क्षिपतीत्यर्थः । ऋतौ यजतीति ऋत्विक् तं सूर्यं सततं सर्वदार्त्विजमृतौ यजन्तं तदर्पणेन यज्ञं कुर्वतमित्यर्थः । तं–चेदितिशब्दः पादपूरणे- तमृत्विजं न मृत्युः संसारलक्षणः । नानृतं मोहः कारणे कार्योपचारात् । चरेत् गच्छेत्, प्राप्नुयादित्यर्थः । तादृशं योगिनः पश्यन्ति ॥ १४ ॥

[ दुर्घ० ] परमात्मनः शक्तिमाह—' एकं पादं नोत्क्षिपति सलिलाद्धंसमुद्धरन् । तं चेत्सततमृत्विजं न मृत्युर्नाऽमृतं भजेत् । अस्याऽर्थः पूर्वनिबन्धकृद्भिरुक्तः स एवोच्यते । स हि परमात्मा त्रिपादिति श्रुतिः । ' त्रिपादूर्ध्व उदैत्पुरुष ' इति 'त्रयोऽस्य पादा' इति वा । तस्य च प्रवृत्तिलक्षणो धर्मः प्रथमः पादः सहकारी । तेन हि पादेनोदासीनानपि क्षेत्रज्ञानविवेकात्प्रकृत्यभिभूतबुद्धिस्तिरश्चीनान्संसारजले बहुधूत्तमाधमयोनिषु अधिचारयन् हंसप्रख्यान्स्वभावनिर्मलानवतिष्ठते । अपरश्च पादो निवृत्तिधर्मलक्षणः । अथ तेन पादेन सहकारिणा प्रकृतिविवेकज्ञानसाचिव्येन तस्मात्संसारसलिलादूर्ध्वं हंसं विदितात्मानमुद्धरति। उदासीन(धर्म)पादेन च कर्मिणः पच्यमानान्दृष्ट्वा कल्पपर्यन्तं कालं कामभोगविमुखं स्थापयति । एवं स्थिते श्लोकार्थः कथ्यते–एकं पादं प्रकृतिलक्षणं नोत्क्षिपति न प्रसारयति निवृत्तिधर्ममेव प्रसारयतीत्यर्थः । किमित्यत आह । सलिलात्संसारसलिलात् हंसं क्षेत्रज्ञं विदित्वात्मानमुच्चरन् उद्धर्तुमिच्छन् इति हेतुमाह । तं क्षेत्रज्ञं चेद्यस्मात्सततमृत्विजं ब्रह्माग्नौ विश्वहोतारममृतरूपं मृत्युरहितमित्यर्थः । मृत्युरिति शरीरादिपरित्याग आत्मनः स यदा पुनः शरीरान्तरग्रहणाय भवति तदा मृत्युरेवासावुच्यते । यदा पुनर्जन्म न स्यात्तदा स एवामृतमित्युच्यते । तथा वेदान्तश्च भवति मृत्युरेवामृतत्वमिति । मृत्युरेव तदमृतमेव तदिति भावः । न तु मृत्युस्थलं तदिति पाठे भवति । मृत्युरमृतं भजेदिति पाठे तमेवंभूतं क्षेत्रज्ञममृतमदुःखं न मृत्युर्बहिर्विषयास्वादलक्षणो भजेदित्यर्थः ॥ १४ ॥

[ लक्षा० ] एकं पादं समुत्क्षिपतीत्यत्र सलिलार्धं सलिलं गर्भोदकमर्धं यथा भवति तथा कृत्वा उच्चरन् ऊर्ध्वं चरन् सः नारायणः एकं पादं 'पादोऽस्य विश्वा भूतानि' इतिश्रुतेः विश्वव्यापकं विश्वरूपाख्यं रूपं समुत्क्षिपति । ऊर्ध्वांपरियेपर्यन्तं(?)सम्यगूर्ध्वं क्षिपति ॥ १४ ॥

[ शंक० ] केन तर्ह्युपाधिना परः पादात्मना अवतिष्ठत इत्याशङ्क्य परस्यैव लिङ्गोपाधिकं जीवात्मानं दर्शयति—अङ्गुष्ठमात्र इति । स एव सच्चिदानन्दाद्वितीयः अन्तरात्मा सर्वभूतान्तरात्मा पुरुषः पूर्णः परमात्मा लिङ्गस्य योगेन अङ्गुष्ठमात्रः अङ्गुष्ठमात्रपरिमाणपरिच्छिन्नः सन् याति संसरति नित्यम् । कस्मात्पुनः कारणात् लिङ्गयोगेन अङ्गुष्ठमात्रः संसरति ? तत्राह—यो लिङ्गस्य योगेनाङ्गुष्ठमात्रः संसरति, तम् ईशं सर्वस्येशितारम् ईड्यं स्तुत्यम् अनुकल्पं सर्वमनुप्रविश्य आत्मना कल्पयतीत्यनुकल्पम् आद्यम् आदौ भवं विराजमानं दीप्यमानं यस्मात् मूढाः अविवेकिनो देहद्वयात्माभिमानिनो न पश्यन्ति, तस्मादेवात्मनो ब्रह्मभावानवगमात्संसरन्तीति । यमात्मानमपश्यन्तः संसरन्ति, तं योगिन एव पश्यन्ति ॥ १२ ॥ ज्ञानिनां मोक्षस्वरूपमाह—असाधना इति । ये असाधनाः शमदमादिसाधनरहिताः ये च समाधिसाधनयुक्ताः ससाधनाः, तेषु समानं साधारणम् आत्मस्वरूपं दृश्यते मानुषेषु । तथा समानम् अमृतस्य मोक्षस्य इतरस्य संसारस्य सति चासति च तेषां मध्ये ये युक्ताः शमदमादिसाधनयुक्ताः, ते तस्मिन् विष्णोः परमे पदे मध्वः मधुनः उत्सं समापुः पूर्णानन्दं ब्रह्म समाप्नुवन्तीत्यर्थः । यमुत्सं संपूर्णानन्दं युक्ताः प्राप्नुवन्ति, तं योगिन एव पश्यन्ति ॥ १४ ॥

[ नील० ] अङ्गुष्ठेति अङ्गुष्ठमात्रे हृदये प्रतिष्ठितत्वादङ्गुष्ठमात्रः एतेन हृदयपुण्डरीकं ध्यानस्थलमुपदिष्टं भवति । पुरुषः पूर्णः अन्तरात्मा बाह्यात्मभ्योऽन्नमयादिभ्यः पञ्चभ्य

उभौ लोकौ विद्यया व्याप्य याति
तदाहुतं चाहुतमग्निहोत्रम् ।
मा ते ब्राह्मी लघुतामादधीत
प्रज्ञानं स्यान्नाम धीरा लभन्ते ।

आन्तरः । लिङ्गस्य पञ्चप्राणमनोबुद्धिदशेन्द्रियात्मकस्य लिङ्गशरीरस्य संबन्धेन नित्यं स याति इहलोकपरलोकौ जाग्रत्स्वप्नौ वा गच्छति । तमीशं यमयितारम् । ईड्यं स्तुत्यम् । अनुकल्पमुपाधिमनु सर्वकार्येषु समर्थम् । आद्यं मूलकारणम् । विराजमानं प्रत्यक्चैतन्यरूपेण प्रकाशमानमपि मूढाः न पश्यन्ति । तं योगिनः पश्यन्ति ॥ १५ ॥ नन्वङ्गुष्ठमात्रस्य हृदये स्थितस्य हृदयतापेन तापप्राप्तिरपि स्यात्तथा च तापस्वभावस्य कुतो मुक्तिरित्याशङ्क्य तस्य कदाचिदपि तापो नास्तीत्याह—असाधना इति । मानुषेषु संघाताभिमानिषु जीवेषु केचिदसाधनाः शमादिहीनाः केचित्ससाधनास्तद्युक्ता वा भवन्तु तत्स्थमेतद्ब्रह्म समानं निर्विकारम् । असङ्गो ह्ययं पुरुष इत्यसङ्गत्वश्रुतेः । एवं मुक्तबद्धयोरपीत्याह—समानमिति । कस्तर्हि मुक्तेषु विशेष इत्यत आह—मुक्ता इति । तत्र तेषु मध्ये मुक्ताः मध्वः मधुनः ब्रह्मरसस्य उत्समुत्कर्षं परां काष्ठां समापुः संप्राप्ताः । अयं भावः—अवस्थान्तरगतस्य दुःखस्यावस्थान्तरेऽदर्शनादुपाधिधर्म एव दुःखं भ्रान्त्या उपहितेऽपि भाति स्फटिके इव जपाकुसुमलौहित्यम् । सर्वात्मना उपाधित्यागात्तु मुक्तानां न दुःखस्पर्शोऽस्तीति ते निरतिशयानन्दभाज इति । य एवं समानस्तं योगिनः पश्यन्ति ॥ १६ ॥

[ शंक० ] किंच—उभाविति । उभौ लोकौ इहलोकपरलोकौ विद्यया ब्रह्मात्मत्वविषयया व्याप्य याति तत् पूर्णानन्दं ब्रह्म । यस्मादुभौ लोकौ विद्यया व्याप्य याति, तस्मात् अहुतं चाग्निहोत्रम् अनेन आत्मज्ञानेन आहुतम् आभिमुख्येन हुतं भवति, सर्वमग्निहोत्रादिकर्मफलमनेनैव संपादितं भवतीत्यर्थः । यस्मादुभौ लोकौ विद्यया व्याप्य याति, यस्मादहुतं चाग्निहोत्रं हुतं भवति तस्मात् मा ते तव ब्राह्मी ब्रह्मविषया विद्या लघुतां लघुत्वं मर्त्यभावं कर्मवत् आदधीत न करोति, अपि तु प्रज्ञानं तमसः पारं परमात्मानमात्मत्वेन संपादयति । यदा ब्रह्मविद्याव्यापृतस्य परमात्मानमात्मत्वेनावगच्छतः प्रज्ञानम् इति नाम स्यात् ब्रह्मेति नाम भवतीत्यर्थः । तथा च श्रुतिः—'प्रज्ञानं ब्रह्म' इति । तत्प्रज्ञानं ब्रह्म धीरा धीमन्तो लभन्ते । यत्प्रज्ञानं ब्रह्म धीरा लभन्ते, तं योगिन एव पश्यन्ति ॥ १५ ॥

योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १७ ॥
एवंरूपो महात्मा स पावकं पुरुषो गिरन् ।
यो वै तं पुरुषं वेद तस्येहार्थो न रिष्यते ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १८ ॥

किंच—एवंरूप इति । य एवंरूपः प्रज्ञानैकरसब्रह्मस्वरूपः सन्नास्ते, स आत्मा महान् संपद्यते ब्रह्मैव संपद्यत इत्यर्थः । पावकम् अग्निं सर्वोपसंहर्तृरूपं सकारणं कार्यं गिरन् स्वात्मन्युपसंहरन् यो वै तं पुरुषं ज्ञानैकरसं पुरुषं पूर्णं पुरिशयं वेद 'अयमहमस्मि' इति साक्षाज्जानाति, तस्य प्रज्ञानरूपं परमात्मानम् आत्मत्वेनावगच्छतः इह अस्मिन्नेव देहे आत्मा न रिष्यते न विनश्यति, विदुष उत्क्रान्तेरभावात्, उत्क्रान्तिनिमित्तत्वाद्विनाशस्य । तथा च श्रुतिः प्रश्नपूर्वकमुत्क्रान्त्यभावं दर्शयति—'उदस्मात्प्राणाः क्रामन्ति आहो नेति नेति होवाच याज्ञवल्क्योऽत्रैव समवनीयन्ते' 'न तस्य प्राणा उत्क्रामन्ति ब्रह्मैव सन्ब्रह्माप्येति य एवं वेद' इति च यं विदित्वा न रिष्यते, तं योगिन एव पश्यन्ति ॥ १६ ॥

[ नील० ] एवं ब्रह्मप्राप्तौ सर्वफलावाप्तिं कृतकृत्यतां चाह—उभाविति । उभौ लोकौ आत्मलोकमनात्मलोकं च विद्यया ब्रह्माकारया अन्तःकरणवृत्त्या अहमेवेदं सर्वोऽस्मीति सार्वात्म्याकारया च वृत्त्या व्याप्य प्रकाश्य ज्ञात्वा याति प्रारब्धकर्मावष्टब्धदेहः सन् संचरति विद्वान् यदैवं तदा अहुतमप्यग्निहोत्रमस्य हुतमेव भवति । ज्ञाने सर्वाणि कर्मफलान्यन्तर्भवन्तीत्यर्थः । अतः ब्राह्मी वाक् ते तव अहं महानस्मीति वदतः लघुतां नीचत्वं मादधीत मा करोतु । अहं दासोऽस्मीति मा ब्रूहीत्यर्थः । 'तं चेद् ब्रूयुरतिवाद्यसीत्यतिवाद्यस्मीति ब्रूयान्नापह्नुवीत' इति श्रुत्यैव ब्रह्मविदामतिवादित्वदोषो नास्तीति प्रदर्शितम् । प्रज्ञानमिति अस्य नामैव स्यात् प्रज्ञानं ब्रह्मेति ब्रह्मविद्ब्रह्मैवेति च श्रुतिभ्याम् । ब्रह्मणा विद्वद्रूपेण स्वमाहात्म्यं न गोपनीयमधिकारिष्वेव । प्राकृतेषु तु गोपनीयमेव । तथा चरेत वै योगी सतां धर्ममदूषयन् । जना यथाऽवमन्येरन् गच्छेयुर्नैव संगतिमिति । एतच्च प्रज्ञानमिति नाम धीराः ध्यानवन्त एव लभन्ते । यस्य नाम प्रज्ञानं तं योगिनः पश्यन्ति ॥ १७ ॥ एवंरूपो वाङ्मनसातीतो जगज्जन्मादियोनिर्निर्विकारो योगैकगम्यो यज्ज्ञानान्महापूज्यत्वं लभ्यते कर्मलोपदोषश्च नास्ति स एवंरूपः परमात्मा पावकं भोक्तारं जीवं गिरन् आत्मनि संहरन् पुरुषं पूर्णं तं यो वेद तस्य अर्थः पुरुषार्थो मोक्षो न रिष्यते न हिंस्यते । कर्मफलवत् ज्ञानफलं ना-

१७ शां. यान्ति । ख. म. न सन्ति । १८ शां. महानात्मा । शां. तस्येहात्मा । ख. म. एवं देवो । ख. तस्येहात्मा न ।

**यः सहस्रं सहस्राणां पक्षान्संतत्य संपतेत् ।**
**मध्यमे मध्य आगच्छेदपि चेत्स्यान्मनोजवः ।**
**योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ १९ ॥**

नित्यमित्यर्थः । यस्य ज्ञानादर्थनाशो नास्ति तं योगिनः पश्यन्ति ॥ १८ ॥

[ अर्जु० ] एवं देवो महात्मा स पावकं पुरुषो गिरन् । यो वै तं पुरुषं वेद तस्य आत्मा न रिष्यते । योगिन इति च ॥ देवः द्योतकत्वात् क्रीडनाच्च । महात्मा व्यापकः । पुरुषश्च पुरि शयनात् । एवं पावकमग्निं गिरन् ग्रसमानः एवमिति यो वेद तस्यात्मा न रिष्यते न हिंस्यते । तमेव प्रपश्यन्ति ॥ १८ ॥

[ सर्व० ] एवं देवो द्योतनात् स महात्मा जीवात्मनः परत्वात् । पुरुषः देहित्वेन पुर्यस्य प्रवेशनात् । पावकं वह्निं गिरन् सूर्येणाभितेजसो दिवसे ग्रसनात् तं सूर्यं पुरुषः शरीरी परमात्मत्वेन तस्यात्मा जीव इह लोके न रिष्यते । रिष हिंसार्थः । न मोहादिभिर्दुःखाक्रियत इत्यर्थः । तमीदृशं योगिनः ॥ १८ ॥

[ शंक० ] इदानीं ब्रह्मणोऽनन्तत्वं कथयति—यः इति । यः पुरुषः सहस्राणां सहस्रं पक्षानाहृत्य आत्मनः पक्षान् कृत्वा संपतेत् अनेकशः कोटिकल्पमपि पुरुषो नान्तं गच्छेत्, कारणस्य सर्वकारणस्य परमात्मनः, यद्यपि असौ मनोजवः स्यात्, तथापि तस्यान्तं न गच्छेत् । यस्मादन्तं न गच्छेत्, तस्मादनन्तः परमात्मेत्यर्थः । योऽनन्तः परमात्मा, तं योगिन एव पश्यन्ति ॥ २२ ॥

[ नील० ] न केवलं मोक्ष एव ज्ञानतः स्यात् अपि तु सर्वं दूरस्थमपि आत्मन्यन्तर्भूतमेवास्तीत्याह—य इति । दशलक्षाणि अनन्तान् वा पक्षान् कृत्वा यो दूरे गच्छेत्सोऽपि मध्ये शरीरान्तः मध्यमे मध्यस्थे हृदयस्थे परमेश्वरे आगच्छेदेव । विप्रकृष्टमप्यर्थं हार्दाकाशे योगिनः पश्यन्तीत्यर्थः । एतच्चातीतानागतादेरप्युपलक्षणम् । तथा च हार्दाकाशं प्रकृत्य श्रूयते—यच्चास्येहास्ति यच्च नास्ति सर्वं तदत्र गत्वा विन्दत इति । यत्र दूरस्थोऽप्यस्ति तं योगिनः पश्यन्ति ॥ १९ ॥

[ अर्जु० ] यः सहस्रं सहस्राणां पक्षान् संतत्य संपतेत् । मध्ये मध्ये स आगच्छेदपि चेत्स्यान्मनोजवः । योगिनस्तमिति । सहस्रं सहस्राणां दशलक्षं संतत्य विस्तृत्य संपतेत् गच्छेत् गरुडप्रकृतिर्यः स चेन्मनोजवोऽपि स्यात् तथापि मध्ये मध्ये आगच्छेत् न ब्रह्मणोऽन्तं गच्छेदित्यर्थः । तमनन्तं भगवन्तं पश्यन्तीत्यन्वयः । अथवाऽनेन श्लोकेन कर्मसमुच्चयपक्षं निराकरोति । मुमुक्षूणां त्रयः पक्षा ( कर्मभक्तिज्ञानानि ) निर्दिष्टाः । केचिदाहुः 'कर्मणैव हि संसिद्धिमास्थिता जनकादयः । न्यायागतधनस्तत्त्वज्ञाननिष्ठोऽतिथिप्रियः । श्राद्धकृत् सत्यवादी च गृहस्थोऽपि हि मुच्यते' इति ॥ मदर्थमपि कर्माणि कुर्वन् सिद्धिमवाप्स्यसीति च । अपरे ज्ञानसमुच्चयपक्षमाहुः । तथा च श्रुतिः—'तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' । 'ज्ञानान्मुक्तिरवाप्यते' इति च । स्मृतिरपि—'उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः । तथैव ज्ञानकर्मभ्यां प्राप्यते ब्रह्म शाश्वतम्' इत्युभयपक्षमेव मुक्तिहेतुमाह । तत्र प्रथमं पक्षं निराचक्षाण आह—यः सहस्रमित्यादि । अस्यार्थः—यः पक्षी क्षेत्रज्ञः पूर्वमुक्तः सहस्रं सहस्राणां दशलक्षमपि कर्मणां पक्षरूपाणामपि पुरुषस्य योनिषु संचारकत्वात् पक्षरूपत्वं, संहृत्य समुच्चित्य निष्पतेत् भवसागरमुक्त्यर्थमिति संबन्धः । अपिग्रहणात् स कारणस्य संसार(?)हृदयपुण्डरीके निहितमुपलब्धिविषयतया निवेशितं विदुर्जानन्ति ज्ञानिन इत्यर्थः ॥ १९ ॥

सनत्सुजातीयगिरो गभीरा
गभीरवस्तुप्रतिपादनीयाः ।
मदीयटीका विनिरुच्यमाना
हरन्तु तापान् विदुषां हृदिस्थान् ॥
सनत्कुमारवचनं दृष्टार्थप्रतिपादकम् ।
वेदितं रचिता टीका धार्यतामर्थदीपिका ॥
यथोपदेशं विवृतं कुमारवचनं तथा ।
यदत्र स्खलितं किंचित् संस्कार्यं तद्विमत्सरैः ॥
मदीयं चापलं धीरैः क्षन्तव्यमनसूयिभिः ।
कः समर्थो हि विज्ञातुमशेषं व्यासभाषितम् ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[ सर्व० ] यः सहस्राणां सहस्रं लक्षं पक्षान्संतत्य संपतेद्गच्छेत् स चेत यदि स्यान्मनोजवः मनस्तुल्यवेगः सोऽपि मध्यमे मध्य आगच्छेत् । तं परमेश्वरमप्राप्य मध्यादपि यन्मध्यं तत एवागच्छेन्नतु शक्तः (?) तस्य ज्ञानमात्रदृश्यत्वेन गतेरप्रयोजकत्वात् । तदेवं योगिनः ॥ १९ ॥

[ दुर्घ० ] 'यः सहस्रं सहस्राणां पक्षान्संहृत्य संपतेत् । न गच्छेत्कारणस्यान्तमपि चेत्स्यान्मनोजवः' । अनेन श्लोकेन कर्मसमुच्चयपक्षं निराचष्टे । मुमुक्षाणां हि त्रयः पक्षाः निर्दिष्टाः । केचिदाहुः कर्मणैव मुक्तिः सिध्यति । उक्तं च 'कर्मणैव हि संसिद्धिमास्थिताजनकादयः' इति ।

१९ शां. पक्षानाहृत्य संपतेत् । नान्तं गच्छेत्कारणस्य यद्यपि स्यान्मनोजवः । अयं चतुर्थोत्तरः पठितः । ख . म. तथापि मध्य आग° ।

न दर्शने तिष्ठति रूपमस्य
पश्यन्ति चैनं सुविशुद्धसत्त्वाः ।
हितो मनीषी मनसा न तप्यते
ये प्रव्रजेयुरमृतास्ते भवन्ति ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २० ॥

गूहन्ति सर्पा इव गह्वराणि
स्वशिक्षया स्वेन वृत्तेन मर्त्याः ।
तेषु प्रमुह्यन्ति जना विमूढा
यथाऽध्वानं मोहयन्ते भयाय ।
योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम् ॥ २१ ॥

'मदर्थमपि कर्माणि कुर्वन्सिद्धिमवाप्स्यसि' । इति । अपरे ज्ञानेनैव मोक्षमाहुः । तथा च श्रुतिः—"तमेव विदित्वाऽतिमृत्युमेति । नान्यः पन्था विद्यतेऽयनायेति" ज्ञानान्मुक्तिरवाप्यते इति । केचिच्चोभयपक्षमेव मुक्तिहेतुमाहुः । तत्र प्रथमपक्षं निराचक्षाण आह—यः सहस्रमित्यादि । अस्यार्थः—यः पक्षी क्षेत्रज्ञः पूर्वमुक्तः सहस्रं सहस्राणां दशलक्षाणामपि कर्मणां पक्षरूपाणां पुरुषस्य योनिषु संचारकत्वात् पक्षरूपत्वम् । संहृत्य समुच्चित्य निष्पतेत् । जवेन संसारसागरात्पततीति संबन्धः । अपिग्रहणात् सकारणस्य संसारयातनारूपदुःखस्यान्तं न गच्छेन्न प्राप्नुयात् । तस्मान्मनोजवोऽसौ नानायोनिषु शीघ्रचारी । देवस्वामिमतेन व्याख्यायते—दशलक्षपक्षसंभूतो मनस्तुल्यगामी च निष्पतनशीलोऽपि यः पक्षी (पूर्वपक्षवादी) सोऽपि कारणात्मनोऽन्तमवसानं न प्राप्नोति अनन्तत्वाद्विभुत्वाच्चेति वाक्यार्थः ॥ १९ ॥

[लक्षा०] यः सहस्रं सहस्राणामित्यत्र सहस्राणां मासानां प्रजान् सहस्रपक्षांश्च यः सम्यक् प्रपतत दाता उपरि विंश विंशतिपर्यन्तं जीवेत्यर्थः ।कारणस्य सर्वोत्पत्तिमभिमित्तकारणस्य कालस्य । योगिनस्तं प्रपश्यन्तीत्यत्र तं तादृशकालनियामकं योगिनः प्रपश्यन्तीति योजना ॥१९॥

[शंक०] किंच—अदर्शनेति । अदर्शने दर्शनायोग्ये विषये तिष्ठति रूपमस्य परमात्मनः । तथा च श्रुतिः—'न संदृशे तिष्ठति रूपमस्य' इति । पश्यन्ति चैनं सुसमिद्धसत्त्वाः । यद्यपि दर्शनायोग्ये तिष्ठति, तथापि परमात्मनं पश्यन्ति ते । के ? सुसमिद्धसत्त्वाः सुष्ठु समिद्धं सम्यग्दीप्तं यदन्तःकरणं यज्ञादिभिः विमलीकरणद्वारेण येषाम्, ते सुसमिद्धसत्त्वाः । यस्मादेवं तस्मात् हीनो रागद्वेषादिमलरहितो विशुद्धसत्त्वो मनीषी मनसाभिपश्येत् । ये एनं परमात्मानं विदुः अहमस्मीति, अमृता अमरणधर्माणो भवन्ति ते ॥२३॥ इदानीम् इन्द्रियाणां च विषयाणां च अनर्थहेतुत्वं दर्शयति—गूहन्तीति । यथा सर्पा गह्वरेभ्यो निष्क्रम्य स्वेन वृत्तेन विषप्रदानेन मर्त्यान् क्षयं नीत्वा गह्वरेषु गूहन्ति स्वमात्मानं प्रच्छादयन्ति, एवमिन्द्रियसर्पाः श्रोत्रादिषु शयानाः श्रोत्रादिभ्यो निर्गत्य स्वेन वृत्तेन विषयविषप्रदानेन मर्त्यान् क्षयं नीत्वा गह्वरेषु गूहन्ति स्वमात्मानं प्रच्छादयन्ति; ते विप्रमुह्यन्ति विषयविषाभिभूताः विशेषेण मुह्यन्ति, व्यतिरिक्तं किंचिन्न जानन्तीत्यर्थः । तथा च श्रुतिः—'यथा प्रियया स्त्रिया संपरिष्वक्तः' इति । तैः इन्द्रियसर्पैः दत्ताः भोगाः विषकल्पाः विषयाः मर्त्यान् मोहयन्ते पुनः पुनर्मोहहेतवो भवन्ति । यदिदं विषयैर्मोहनम्, तत् भवाय गर्भजन्मजरामरणसंसाराय भवति । यमनवद्यम्, अनुकल्पमाद्यम् अदृष्ट्वा विषयविषान्धाः मुह्यन्ति, तं योगिन एव पश्यन्ति ॥ १३ ॥

[नील०] एवंविधस्यात्मनो दर्शनार्थं योगानुगुणानि साधनान्तराण्याह—नेति । चक्षुराद्यग्राह्यमेनं शुद्धचित्ता एव चित्तेन गृह्णन्तीति पूर्वार्धार्थः । किंच यदाऽयं हितः जगन्मित्रं मनीषी मनोनिग्रहशीलश्च भवति तथा मनसा च पुत्रादीनां नाशे सत्यपि न तप्यते तदैव चित्तशुद्धिर्जातेति ज्ञेयम् । एवं ज्ञात्वा ये प्रव्रजेयुः विक्षेपहेतून् गृहादींस्त्यजेयुस्ते संन्यासिनः अमृता भवन्तीति । तममृतं योगिनः पश्यन्ति ॥ २० ॥ संन्यासं कृत्वाऽपि वञ्चकानां सङ्गतिर्न कर्तव्येत्याह—गूहन्तीति । मर्त्याः लौकिकाः स्वशिक्षया स्वेषां गुरूणां शिक्षया स्वेन वृत्तेन वा बहिर्दृष्टीनां रमणीयेन च दम्भरूपेण गह्वराणि पापानि मद्यमांसपरस्त्रीसेवनादीनि गूहन्ति छादयन्ति । यथा सर्पाः खलाः परमुद्वेजयन्तोऽपि बिलादौ निलीय आत्मानं गूहन्ति तद्वत् । तेषु बाह्यतो रमणीयेषु तेषां समीपे विमूढाः जनाः मुह्यन्ति । एतदेवाह यथाऽध्वानं मार्गमनतिक्रम्य शिष्टानां लोकदृष्टमाचारमत्यजतः भयाय नरकाय प्रापयितुं तान्मोहयन्ते मद्यमांसाद्यशुचिव्रतोपदेशेन प्रतारयन्ति । अतः सम्यक्परीक्षितैः सहैव सङ्गतिर्यल्लाभाय कर्तव्या तं योगिनः पश्यन्ति ॥ २१ ॥

[सर्व०] सादृश्ये सदृशे वस्त्वन्तरे, तद्धितस्य स्वार्थिकत्वाच्चास्य स्वरूपं तिष्ठति । हितः प्रेरितो मनसा विषयेषु

---

२० शां. अदर्शने…सुसमिद्धसत्वाः । हीनो…मनसाभिपश्येच्च एनं विदुरमृतास्ते भवन्ति । म. ख. न सादृश्येति । ख. म. मनसा तप्यते वा ये तं भवेयुर । २१ शां. गह्वरेषु क्षयं नीत्वा स्वेन वृत्तेन मर्त्यान् । ते विप्रमुह्यन्ति जना विमूढास्तैर्दत्ता भोगा मोहयन्ते भवाय । अयं पञ्चदशस्योर्ध्वं पठितः । ख. म. शिशिक्षया । ख. म. यथाध्वानो ।

**नाहं सदाऽसत्कृतः स्यां न मृत्यु-**
**र्न चामृत्युरमृतं मे कुतः स्यात् ।**
**सत्यानृते सत्यसमानबन्धे**
**सतश्च योनिरसतश्चैक एव ।**
**योगिनस्तं० ॥ २२ ॥**

स मनीषी विद्वान् तप्यति तप्यते दुःखी भवति । ये त्वेनं श्रयेयुः ज्ञानेन विषयीकृत्याश्रयेयुरमृतास्ते भवन्ति । तमेवं योगिनः पश्यन्ति गृह्णन्ति ॥ २० ॥ यथा सर्पा गह्वराणि छिद्राणि गूहन्ति छादयन्ति कुड्यादिष्वेव तैर्बिलकरणात्, तथा ये मर्त्याः केचित् स्वशिक्षया गुरुकृतपाठेन वृत्तेन चेष्टया क्रमुकमहाशया(?)गूहन्ति न प्रकटयन्ति । तेषु च मर्त्येषून्मत्तवच्चरत्सु विमूढा जनाः प्रमुष्णन्नुन्मत्ता एत इति । यथा कश्चिदभयायारूपार्थमध्वानं वर्त्म मोहयते मोहयति । अध्वनो गोपनादि तथायं गूहतीत्युपमा । यं योगिनः पश्यन्ति ॥ २१ ॥

[ दुर्घ० ] 'न दर्शने तिष्ठति रूपमस्य न चक्षुषा पश्यति कश्चनैनम् । स्थिरो मनीषी मनसाभितप्य बहिर्व्रजेयुरमृतास्ते भवन्ति'। तस्य परमात्मनो रूपं दर्शने चक्षुर्विषये न तिष्ठति । अरूपत्वात्परमात्मन इति भावः । तत्किमदृश्य एवासावित्याह, पश्यन्ति चैनं सुविशुद्धसत्वाः । शमदमनियमनिदिध्यासनादिभिः सुष्ठु अतिशयेन शुद्धानि रजस्तमोमलरहितानि सत्वानि प्रकृतिभूतानि येषां ते तथा । किं भूतोऽसौ परमात्मा अत आह—स्थिरो नित्याचलस्वरूपो विभुत्वात् । मनीषी नित्यज्ञानमयः । मनसा योगधर्मसहितेन अभितप्य वैराग्यं प्रतिपद्य बहिर्विषयेषु । उक्तं च 'अभ्यासेन तु कौन्तेय वैराग्येण च गृह्यते' एतेन गुरूपदेशादध्यात्मपरैर्योगप्रत्यक्षेणाऽसौ दृश्यत इति भावः । तस्मिन्दृष्टे किं स्यादत आह—ये योगिनः तं परमात्मानं व्रजेयुरभिगच्छेयुः ते अमृता अपुनर्जन्मानो भवन्तीत्यर्थः । अर्थमात्रपरत्वादेकवचनबहुवचने नादरणीये॥२०॥ गूहन्ति सर्पा इव गह्वराणि शिशिक्षया स्वेन वृत्तेन मर्त्याः । तेषु प्रमुह्यन्ति जना विमूढा यथाध्वानं मोहयतेऽभवाय । अस्याऽर्थः । ये हि तत्वज्ञा मर्त्यास्ते गूहन्ति रक्षन्ति गह्वराणि एकादशेन्द्रियाणि शिशिक्षया शिक्षितुमिच्छया योगाभ्यासेन यथा सर्पा गह्वराणि छिद्राणि रक्षन्ति । तेषु छिद्रेषु विमूढा अतत्वज्ञा विमुह्यन्ति प्रमाद्यन्ति तांश्च यथाध्वानं यथाभिमतं प्रवृत्तान्कारणात्मा मोहयतेऽभवाय नरकाय कथमिदममाध्यस्थ्यं भगवत उच्यते दुःखाद्धि निर्वेदो भवति निर्वेदादात्मनो बोधः ततो मुच्यत इत्युपकारफलत्वाददोषः ॥ २१ ॥

[ शंक० ] यस्मात्तद्विज्ञानादेव नात्मनो विनाशः—तस्मादिति । सदा सर्वदा अहर्निशं सत्कृतः स्यात् सच्चिदानन्दाद्वितीयब्रह्मात्मत्वेनाभिमन्येत यः, स सदा सत्कृतो भवति; तस्य न मृत्युः जननमरणलक्षणः संसारो न भवेत् । अमृतं कुतः मृत्युसापेक्षत्वादमृतत्वस्य तदभावे कुतः प्रसक्तिः । तथा च श्रुतिः—'मृत्युर्नास्त्यमृतं कुतः' इति । सत्यानृते च वर्तेते सत्यसमानुबन्धिनी परमार्थसत्यमेकमधिष्ठानमनुबध्य वर्तेते रज्ज्वामिव सर्पः । कथमेतदवगम्यते—सत्यानृते सत्यसमानुबन्धिनी इति ? तत्राह—सतश्च लौकिकस्य योनिः कारणम् असतश्च व्यावहारिकस्य रजतादेः एकमेव अद्वितीयं ब्रह्म यस्मात्प्रवदन्ति, तस्मात् सत्यानृते स्वकारणभूतसत्यसमानुबन्धिनी इति । यदात्मतत्त्वज्ञानात्मकारणान्मृत्योर्विनाशः, यमनुबध्य सत्यानृते प्रवर्तेते, तं योगिन एव पश्यन्ति ॥ १७ ॥

[ नील० ] एवं सर्वकर्मास्पर्शिनां योगिनामपि दुःसङ्गत्यागमावश्यकतयोक्त्वा जीवन्मुक्तानां तेषामनुभवमनुवदति—नाहमिति । अहं सदा कालत्रयेऽपि असत्कृतः असता देहेन्द्रियादिना तादात्म्याध्यासेन तद्वत्कृतः सुखदुःखजरामरणादिधर्मवान् कृतः असत्कृतः न स्यां न भवेयं देहादीनामसत्त्वादेवेत्यर्थः । अत एव देहवियोगरूपो मृत्युरपि नास्ति नापि अमृत्युस्तद्विरोधी जन्मलाभः जन्ममरणप्रवाहरूपस्य मृत्युसंज्ञितस्य बन्धस्याभावात् । अमृतं मोक्षोऽपि मम कुतः न कुतश्चिदित्यर्थः तत्रहेतुः । सत्यं घटादि अनृतं रज्जूरगादि ते उभे अपि सत्यसमानबन्धे सत्यमबाधितं समानं सर्वदा सर्वदेशेषु चैकरूपं ब्रह्म तदेव बन्धो निग्रहस्थानं ययोस्ते तथा । सर्वं जगद्ब्रह्माधीनमित्यर्थः । सतः कार्यस्य असतः कारणस्य च योनिः उत्पत्तिप्रलयस्थानमहमेक एव तं मां योगिनः पश्यन्ति । तथा च श्रुतिः—न निरोधो न चोत्पत्तिर्न बद्धो न च साधकः । न मुमुक्षुर्न वै मुक्त इत्येषा परमार्थता । इति सृष्ट्यादिकं सर्वं मय्येव कल्पितमित्याह ॥ २२ ॥

[ सर्व० ] नाहं सदेति । सत्कारे सत्यपि नाहं सदा सत्कृतः स्याम् किं तु शरीरमेव । ब्राह्मणत्वादिविशेषस्य पूजाहेतोस्तन्निष्ठत्वात् । न च मे मृत्युरस्ति स हि शरीरस्य तत एव नामृतममरणं कुतः स्यात् । नहि मरणं ममास्ति

२२ शां. तस्मात्सदा सत्कृतः स्यान्न मृत्युरमृतं कुतः । शां. समानुबन्धिनी । अयमष्टादशादूर्ध्वं पठितः । ख. म. नाहं सदाचिन्तये सत्कृतः स्यां न वा मृत्युरमृतं कुतः स्यात् ।

न साधुना नोत असाधुना वा
ऽसमानमेतद्दृश्यते मानुषेषु ।
समानमेतदमृतस्य विद्या-
देवंयुक्तो मधु तद्वै परीप्सेत् ।
योगिनस्तं० ॥ २३ ॥

नास्यातिवादा हृदयं तापयन्ति
नानधीतं नाहुतमग्निहोत्रम् ।
मनो ब्राह्मी लघुतामादधीत
प्रज्ञां चास्मै नाम धीरा लभन्ते ।
योगिनस्तं० ॥ २४ ॥

किञ्चित् प्रमादादित्युक्तवान् । सत्यं तात्विकं वस्तु अनृतं मिथ्याप्रतीतं तद्वै सत्यसमानबन्धने, सत्यं ब्रह्मैव समानं बन्धनं ययोः मूलं कुतो नित्यस्याकाशादेरसतोऽनित्यस्य घटादेर्योनिः स्थानमेक एवेति । एतावदेवोक्तविशेषणवत्त योगिनस्तम् ॥ २२ ॥

[ दुर्घ० ] नाहं सदा सत्कृतः स्या न मृत्युरस्यास्त्यमृतं कुतश्च । सत्यानृते सत्यसमानबन्धने सतश्च योनिरसतश्चैक एव । अहमात्मा क्षेत्रज्ञरूपो न सदा सर्वदैव सत्कृतः स्यां बाह्यभोगादिभिः, सदोदासीनरूपत्वात् । उक्तं च— पुष्करपलाशवन्निर्लेप इति । न च मृत्युः संसारोऽस्यास्त्यत एवामृतं मोक्षोऽप्यस्य कुतः । हेतुमाह—सत्यानृते बन्धमोक्षौ सत्यसमानबन्धने सत्यैकाश्रये दृष्टे लोके य एव बद्धः स एव हि मुच्यते । कथं तर्हि मोक्षार्थं निदिध्यासनादिभिर्यतन्ते जन्तव इत्यत आह—सतो मोक्षस्यासतश्च संसारस्य योनिरादिकारणं स एव कारणात्मैव तस्य क्रीडेयं यमनुगृह्णाति स मुक्तमिवात्मानं मन्यते यश्च निगृह्णाति स बद्धमिव। सूत्रप्रोता दारुमयीव योषेति श्लोकार्थः॥२२॥

[ लक्ष्मा० ] न मृत्युर्नामृतमित्यत्र आसमंतात् मृतं मरणं यस्मात्तदामृतं(?)तदेवामृतप्रायं कुर्वतः अल्पाहारेति चिन्तामकुर्वत इति यावत् । सत्यसमानुबन्धिनी सत्यस्यैव समाने सत्यानृते सत्यासत्यमामिति सत्यमोमिति यत्रोक्तं ‘ यन्नेत्याहानृतं हिं तत् ’ इति वचनात् सत्यं स्मर्यते द्रव्यदानादौ ॐ इत्यङ्गीकारवचनम् अनृतं धनाभावे नेति वचनं च कृतः कुर्वतः अस्य ज्ञानिनः मृत्युर्न इति योजना ॥ २२ ॥

[ नील० ] स न साधुना कर्मणा भूयान्नो एवासाधुना कनीयानिति श्रुतिसिद्धं कर्मास्पर्शि ब्रह्मविद्याफलमाह—न साधुनेति । असाधना वाऽपि ससाधना वेत्यत्र ब्रह्मणः असङ्गत्वमुक्तमिह तु ब्रह्मविदः पापास्पर्श उच्यते । एतद्ब्रह्म चिद्रूपं ब्रह्म साधुना कर्मणा समानमुत्कृष्टं न भवति । उत अपि असाधुना कर्मणाऽसमानमपकृष्टं च न भवति । मानुषेषु देहाभिमानिषु तु एतत् दृश्यत एव उच्चावचं कर्मफलं न तथा ब्रह्मविदीत्यर्थः । अत्र हेतुः समानमिति एतद्ब्रह्म चिद्रूपं ब्रह्म अमृतस्य कैवल्यस्य समानं यथा कैवल्ये सर्ववादिसंमतपुण्यपापयोरस्पर्श एवं ब्रह्मविद्यपीत्यर्थः । अत एवं पूर्वोक्तप्रकारेण युक्तो योगवान् तन्मधु ब्रह्म । बह्विति पाठेऽपि स एवार्थः, निरवधिकस्य बहुत्वस्य तत्रैव पर्यवसानात् । परीप्सेत्सर्वप्रकारेण प्राप्तुमिच्छेत् । तमेव च योगिनः पश्यन्ति ॥ २३ ॥ नास्येति । अस्य आत्मविदः अतिवादा निन्दावचनानि हृदयं न तापयन्ति । अथवा मया नाधीतं मया न हुतमित्यादिकमपि अस्य मन इति पूर्वान्वयि । श्रूयते च, नैनं कृताकृते तपत इति । एतꣳह वाव न तपति किमहꣳ साधु नाकरवं किमहं पापमकरवमिति च । ब्राह्मी ब्रह्मसंबन्धिनीयं विद्या अस्मै पुरुषाय लघु शीघ्रं तां प्रज्ञां यामधिकृत्य स्मरति—प्रज्ञाप्रासादमारुह्य ह्यशोच्यः शोचतो जनान् । भूमिष्ठानिव शैलस्थः सर्वान् प्राज्ञोऽनुपश्यतीति । तां प्रज्ञामृतम्भराख्यामादधीत समर्पयेत् । आत्मवित्सर्वविद्भवतीत्यर्थः । तां कां यां प्रज्ञां धीराः ध्यानवन्तो नाम निश्चितं लभन्ते नान्ये । एतेन शोकमोहनिवृत्तिः सर्वज्ञत्वं च ब्रह्मविद्याफलमुक्तं भवति । यं न तापयन्ति तं विद्वदभिन्नं परमेश्वरं योगिनः पश्यन्ति ॥ २४ ॥

[ सर्व० ] न साधुना कर्मणा यज्ञादिना असाधुना वा सामान्यमन्येन साधारणमेतन्न दृश्यते मानुषेषु मनुष्यमात्रैः । विभक्तिव्यत्ययात् । एतत्साध्वसाधुकर्मदर्शनात् प्रायस्तयाऽमृतस्य ब्रह्मणः समानं तुल्यं विद्यावत एव प्रागुक्तप्रकारेण मुक्तो योगी मधु तदात्मज्ञानं परीप्सेत् प्राप्तुमिच्छेत् । यतो योगिन एतत्पश्यन्तीति ॥ २३ ॥ अस्य योगिनो हृदयं मनोऽतिवादा आक्रोशा न तापयन्ति तेषामभावात् । नानाहितमकृताधानमग्निहोत्रं तापयति । नाप्यनृतं कर्म तेनाभीष्टसाधनतयाऽनिश्चयात् । लघुतां ब्रह्मसंबन्धेन लघुतां शुद्धतां मनो मनसि आदधीत । तेनास्य ब्रह्मणः प्रज्ञानं प्रकृष्टज्ञानं, नाम वाक्यालंकारे, धीरा धैर्यवन्तो लभन्ते । यतो योगिनस्तं प्रपश्यन्ति ॥ २४ ॥

[ दुर्घ० ] न साधुना नोत असाधुना वा समानमेतद्दृश्यते मानवेषु । समानमेतदमृतस्य विद्यादेवं युक्तो बहु तत्वं परीप्सेत् ॥ नास्याभिवादा हृदयं तापयन्ति नानधीतं नाहुतमग्निहोत्रम् । मनीषा ब्राह्मीं लघुतामादधीत

२३ म. नो असाधुना । २४ म. ख. मनो माह्मीं लघुतामादधीत प्रज्ञानमस्य नाम धीरा लभन्ते ।

एवं यः सर्वभूतेषु आत्मानमनु पश्यति ।
अन्यत्रान्यत्र युक्तेषु किं स शोचेत्ततः परम् ॥ २५ ॥
यथोदपाने महति सर्वतः संप्लुतोदके ।
एवं सर्वेषु वेदेषु आत्मनमनुजानतः ॥ २६ ॥

अङ्गुष्ठमात्रः पुरुषो महात्मा
न दृश्यतेऽसौ हृदि संनिविष्टः ।
अजश्चरो दिवारात्रमतन्द्रितश्च
स तं मत्वा कविरास्ते प्रसन्नः ॥ २७ ॥

प्रज्ञां चास्मै नाम धीरा लभन्ते ॥ न साधुनेत्यादि । साधुना अग्निहोत्रादिकर्मणा असाधुना वा वृथाहिंसादिकर्मणा वा न समानं न संयुक्तमेतत् ब्रह्म । नैनं कर्माणि लिम्पन्तीत्यर्थः । कुत्र तर्हि कर्मपरिसमाप्तिरत आह—दृश्यते मानवेषु । मानवशब्देन बुद्धिरुपलक्ष्यते । बुद्ध्याश्रयत्वात्कर्मणाम् । मानुषेष्विति पाठे मानुषेषु क्षेत्रज्ञपुरुषेषु मध्ये नैकमपि साध्वसाधुकर्माश्रयमित्यर्थः । कथं तर्हि मोक्षाश्रयोऽत आह—समानमेतद्ब्रह्म अमृतस्य मोक्षस्य विद्यात् जानीयात् । नन्वेवं नित्योदासीनतया बन्धाभावान्मोक्षार्थिनां प्रवृत्तिरेव नेत्यत आह—एवं युक्त इति । एवं ज्ञात्वाऽध्यात्मयुक्ताः तद्ब्रह्मात्मानं परि सर्वतो भावेन ईप्सेत् प्रकृतेर्विवेक्तुमिच्छेत् । अविवेको हि छलबन्धः स च विवेकान्नश्यति यथा रज्ज्वां सर्पभ्रमो रज्जुदर्शनादेव विनिवर्तत इति भावः ॥ २३ ॥ सर्वमुक्तमर्थं स्फुटयति—नास्याभिवादा इति । अस्य ब्रह्मणो हृदयं तापयन्ति अभिवादा गुरुवधादयः । नानाहितं नित्याग्निहोत्रमाहितं वा दुःखसुखे करोतीत्यर्थः । मनीषा बुद्धिरेव ब्राह्मीं लघुतां ब्रह्मणोऽप्रवृत्तिधर्मधर्मणोऽपि प्रवृत्तिधर्मतां दर्शयन्ती लघुतामादधीत । अस्मै एतदर्थमेव ये नाम धीराः पण्डिता भवन्ति ते गुरूपदेशादिना प्रज्ञां प्रकृष्टज्ञानं लभन्त इति । अतस्त्वमप्येवं कुर्विति ॥ २४ ॥

इति श्रीमहाभारतटीकायां दुर्घटार्थप्रकाशिन्यामुद्योगपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[ शंक० ] इममिति । इमं सर्वान्तरं सर्वभूतेषु सर्वप्राणिषु आत्मानं यः अनुपश्यति । कथंभूतेष्वनुपश्यति—अन्यत्रान्यत्र देहेन्द्रियादियुक्तेषु शरीराद्यभिमानिषु । सः किं शोचेन् ततः परं सर्वभूतेषु स्वात्मानं पश्यन् ततः परं किमर्थमनुशोचति सर्वभूतस्थमात्मानमनुपश्यन् कृतार्थत्वान्नानुशोचतीत्यर्थः । तथा च श्रुतिः—'तत्र को मोहः कः शोक एकत्वमनुपश्यतः' इति ॥ २४ ॥ तदेवाह—यथेति । यथा सर्वतःसंप्लुतोदके महत्युदपाने कृतकृत्यस्य अर्थो नास्ति, एवं सर्वेषु भूतेषु आत्मानं पश्यतः ब्राह्मणस्य विशेषतः न किंचिदपि प्रयोजनं विद्यत इत्यर्थः । तथा चाह भगवान् वासुदेवः—'न चास्य सर्वभूतेषु कश्चिदर्थव्यपाश्रयः' इति ॥२५॥ अङ्गुष्ठमात्र इति । आकाशादिदेहान्तं जगत्सृष्ट्वा हृदये निविष्टः अजः चरः चराचरात्मा सन् न दृश्यते स्वेनात्मना चित्सदानन्दाद्वितीयेन । तम् अहोरात्रम् अतन्द्रितो भूत्वा कोशपञ्चकेभ्यो निष्कृष्य सर्वान्तरात्मानं मत्वा कविरास्ते प्रसन्नः कृतार्थः सन्नित्यर्थः ॥ १८ ॥

[ नील० ] एवमनेन प्रकारेण यः सर्वभूतेषु सद्रूपेण अनुस्यूतमात्मानं गुरूक्तिमनु पश्यति ध्यानेन साक्षात्करोति सः अन्यत्र दारादौ अन्यत्र कर्मादौ युक्तेषु पुरुषान्तरेषु सत्सु किं शोचति नैव शोचति किंतु त एव शोचन्तीत्यर्थः ॥ २५ ॥ उदकं पीयतेऽस्मिन्नित्युदपाने कासारादौ तृषार्तस्य यावता जलेन स्नानपानादिसिद्धिस्तावतैव सर्वेषु वेदेषु आत्मज्ञस्य ध्यायिन इष्टसिद्धिः । अतो ग्रन्थभारवहनं वृथैव किंतु तदन्तर्गतं स्वोपयुक्तं सारमात्रं गुरुवाक्याद्गृहीत्वा योगेन कृतकृत्यो भवेदित्यर्थः ॥ २६ ॥ अङ्गुष्ठेति । उपाधितोऽल्पपरिमाणोऽपि स्वतो महात्मा व्यापकः न दृश्यते रूपादिहीनत्वात् । अजो जन्मादिशून्यः । दिवारात्रं चरतीति चरः जगन्नियमने नित्योद्युक्त इत्यर्थः । सः अधिकारी तं आत्मानं मत्वा ज्ञात्वा कविः क्रान्तदर्शी आस्ते कर्मभ्य उपरतो भवति कृतकृत्यत्वात् । अत एव प्रसन्नः उपाधिकृतकालुष्यत्यागान्निर्मलः ॥ २७ ॥

[सर्व०] उपसंहरति—एवमिति । अन्यत्राऽन्यत्र यज्ञाय युक्तेषु प्राणिषु मध्ये य एवमुक्तक्रमेणात्मानं गुरूपदेशात् पश्यति ततः परं किमर्थं स शोचेत् ॥ २५ ॥ यथोदपान इति । यथा कूपे यत्र कुत्रचित् पिपासाशान्तिहेतोर्जलस्य लाभस्तथा यज्ञादिप्रतिपादकवेदभागेष्वपि ब्राह्मणस्य विजानतो विशेषेण तत्वज्ञानसाधननिवर्तकधर्मलाभस्तेषामेव यज्ञादीनामसङ्कल्पितफलानां तत्वज्ञानहेतुत्वादित्यर्थः ॥२६॥ जीवात्मनो ध्यानप्रकारमाह—अङ्गुष्ठमात्र इति । अतोऽधिकपरिमाणत्वे सविषयीकर्तुं मनसा प्रथममशक्यत्वात् । अत एवाह महात्मा महापरिमाणवानात्मा न दृश्यते । अतस्ततो हृदि संनिविष्टोऽङ्गुष्ठमात्रः पुरुषः अतो नित्यचरः शरीरावच्छिन्नत्वात् शरीरी गतिमान् । एवंभूतं तं दिवारात्रमतन्द्रितो भूत्वा रुचिपिण्डतो मत्वा ध्यात्वा प्रसन्नः शुद्धचित्त आस्ते आसीत । लिङर्थे लट् ॥ २७ ॥

[ लक्षा० ] यथोदपाने महतीत्यत्र सर्वतः संप्लुतो-

२५ शां॰ इमं बः स॰ । अस्य विंशादूर्ध्वं पाठः । २६ शां॰ एवं भूतेषु सर्वेषु ब्राह्मणस्य विशेषतः । ख॰ म॰ ब्राह्मणस्य विजानतः । २७ शां॰ पुरुषोन्तरात्मा···हृदये निविष्टः । अयं द्वाविंशादूर्ध्वं पठितः । ख॰ म॰ हृदये निविष्टः । म॰ अजेश्वरो । ख॰ म॰ जस्रमतन्द्रितश्च च एनं मत्वा कविरास्ते प्रपन्नः ।

अहमेव स्मृतो माता पिता पुत्रोऽस्म्यहं पुनः ।
आत्माऽहमपि सर्वस्य यच्च नास्ति यदस्ति च ॥ २८ ॥
पितामहोऽस्मि स्थविरः पिता पुत्रश्च भारत ।
ममैव यूयमात्मस्था न मे यूयं न वो वयम् ॥ २९ ॥
आत्मैव स्थानं मम जन्म चात्मा
ओतप्रोतोऽहमजरप्रतिष्ठः ।
अजश्चरो दिवारात्रमतन्द्रितोऽहं
मां विज्ञाय कविरास्ते प्रसन्नः ॥ ३० ॥
अणोरणीयान्सुमनाः सर्वभूतेषु जाग्रति ।
पितरं सर्वभूतेषु पुष्करे निहितं विदुः ॥ ३१ ॥

इति श्रीमहाभारते उद्योगपर्वणि षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

दके महति समुद्रे यथा तृषितस्य उदपाने उदकपानमात्रे कृत्यम् ॥ २६ ॥

[ शंक० ] इदानीमुक्तस्यार्थस्य द्रढिम्ने वामदेवादिवत्स्वानुभवं दर्शयति—अहमिति । हे धृतराष्ट्र, अहमेवास्मि वो युष्माकं माता जनयित्री पिता अपि अहमेव । युष्माकं पुत्रोऽस्मि दुर्योधनादिरहमस्मि । किं बहुना ? आत्माहमस्मि सर्वस्य प्राणिजातस्य यच्च नास्ति यदस्ति च, तस्याहमेवात्मा ॥ २६ ॥ एवं तावदाधिभौतिकपित्रादिकं दर्शितम् । अथेदानीमाधिदैविकपित्रादिभावं दर्शयति—पितामहेति । पितामहोऽस्मि स्थविरः वृद्ध इन्द्रादेः पितामहः अनादिसिद्धः परमात्मा सोऽप्यहमेव । यः पिता इन्द्रादेः हिरण्यगर्भः, सोऽप्यहमेव । तथा ममैव यूयमात्मस्थाः । एवं यूयं सर्वे परमार्थतो न मे आत्मनि व्यवस्थिताः; न चाप्यहं युष्मासु व्यवस्थितः । तथा चाह भगवान्—' मत्स्थानि सर्वभूतानि ' इति ॥ २७ ॥ यद्यपि न ममात्मनि यूयं व्यवस्थिताः, न चाप्यहं युष्मासु व्यवस्थितः, तथापि—आत्मैवेति । आत्मैव स्थानम् आत्मैवाश्रयः जन्म चात्मा अस्मादेवात्मनः सर्वं समुत्पन्नम् । तथा च श्रुतिः—' आत्मैवेदं सर्वम् ' इति । ओतप्रोतोऽहमेव ओतप्रोतरूपेण व्यवस्थितः जगदात्मा युष्माकं जनयिता अजरप्रतिष्ठः अजरे जरामरणवर्जिते स्वे महिम्नि तिष्ठतीत्यजरप्रतिष्ठः । तथा च श्रुतिः—' स भगवः कस्मिन्प्रतिष्ठितः स्वे महिम्नि ' इति ॥ २८ ॥ अणोरणीयानिति । अणोः सूक्ष्मात् अणीयान् सूक्ष्मतरः सुमनाः शोभनं रागद्वेषमदमात्सर्यशोकमोहादिधर्मवर्जितं केवलं चित्सदानन्दाद्वितीयब्रह्मात्माकारं मनो यस्येति सुमनाः, सर्वभूतेषु सर्वेषु प्राणिषु हृदयकमलमध्ये अहमेव अवस्थित आत्मतया ॥ २९ ॥ एवं तावत्स्वानुभवो दर्शितः । इदानीं न केवलमस्माकमनुभव एवात्र प्रमाणम्; अन्येऽप्येवमेवावगच्छन्तीत्याह—पितरं सर्वभूतानां पुष्करे निहितं विदुः इति । येऽन्ये सनकसनन्दनवामदेवादयो ब्रह्मविदः, तेऽपि पितरं सर्वभूतानां सर्वप्राणिनां पिता जनयिता य परमेश्वरः, तं पुष्करे हृत्पुण्डरीकमध्ये निहितं विदुः; परमात्मानमात्मत्वेनावगच्छन्तीत्यर्थः । तथा च श्रुतिस्तेषामनुभवं दर्शयति—' तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च ' इति बृहदारण्यके । ' एतत्साम गायन्नास्ते' इति तैत्तिरीयके सामगानेन स्वानुभवो दर्शित आत्मनः कृतार्थत्वद्योतनार्थम् । तथा छान्दोग्येऽपि—'तद्धास्य विजज्ञाविति' इति । तलवकारे च 'अहमन्नम्' इत्यादिना विदुषः स्वानुभवो दर्शितः । तत्रैते श्लोका भवन्ति—

नित्यशुद्धबुद्धमुक्तभावमीशमात्मना ।
भावयन्षडिन्द्रियाणि संनियम्य निश्चलः ॥ १ ॥
अस्ति वस्तु चिद्घनं जगत्प्रसूतिकारणम् ।
न नश्वरं तदुद्भवं जगत्तमोनुदं च यत् ॥ २ ॥
तत्पदैकवाचकं सदामृतं निरञ्जनम् ।
चित्तवृत्तिदृक्सुखं तदस्म्यहं तदस्म्यहम् ॥ ३ ॥

इति ॥ २९ ॥

इति श्रीशंकरभगवत्पादकृते सनत्सुजातीयभाष्ये चतुर्थोऽध्यायः ॥ ४ ॥

इति श्रीमत्सनत्सुजातीयभाष्यं संपूर्णम् ॥

[ नील० ] अथेदानीं ब्रह्मविदात्मनो ब्रह्मभावं वामदेववदपरोक्षीकुर्वन् स्वस्य सार्वात्म्यं स्तौति—अहमेवेति । नास्ति अतीतानागतम् । अस्ति वर्तमानम् । सर्वेषामन्तरात्मा चाहमेवास्मि ॥ २८ ॥ पितामह इति । एवमात्मनि सर्वमारोप्य अपवदति न मे यूयं न वो वयमिति । यद्यपि रज्ज्वामुरग आरोपितस्तथाऽपि तयोर्न कश्चित्संबन्धोऽस्ति अधिष्ठानव्यतिरेकेणाध्यस्तस्यासत्त्वात् । एवं प्रत्यगात्मजगतोरप्यसंबन्धो द्रष्टव्यः ॥ २९ ॥ अहमेव मुमुक्षूणां ज्ञेय इत्याह—आत्मैवेति । मम स्थानमधिष्ठानमात्मैव । स्वे महिम्नि प्रतिष्ठित इति श्रुतेः । अत एव मम जन्म जननहेतुरपि आत्मैव । अजत्वादेव अहं कार्ये ओतः प्रोतश्च तिर्यगूर्ध्वं च पटे तन्तव इवानुस्यूतोऽस्मि । अजरा अप्रच्युतस्वभावा प्रतिष्ठा अधिष्ठानत्वं यस्य स तथा । अजश्चर इति पादो व्याख्यातः ।

२८ शां. अहमेवास्मि वो माता । अस्य षड्विंशादनन्तरं पाठः । ख. म. अहमेवास्मि वो माता । २९ शां. यूयं न चाप्यहम् । ख. म. न वोऽप्यहम् । ख. म. आत्मावस्थानम् । ख. देवः प्रो° म. वेद प्रो° । ३० ख. म. प्रपन्न ।

३१ शां. सर्वभूतेष्ववस्थितः । शां. सर्वभूतानां पु° । ख. म. सुमहान् । ख. म. सर्वभूतानां । इति षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

## ( अथ यानसंधिपर्व ५ )

### सप्तचत्वारिंशोऽध्यायः ४७

राजसभायां पार्थवचःशुश्रूषया सूतं द्रष्टुं सर्वेषां राज्ञामागमनं सूतागमनं च ॥ १ ॥

**वैशम्पायन उवाच—**

एवं सनत्सुजातेन विदुरेण च धीमता ।
सार्धं कथयतो राज्ञः सा व्यतीयाय शर्वरी ॥ १ ॥
तस्यां रजन्यां व्युष्टायां राजानः सर्व एव ते ।
सभामाविविशुर्हृष्टाः सूतस्योपदिदृक्षया ॥ २ ॥
शुश्रूषमाणाः पार्थानां वाचो धर्मार्थसंहिताः ।
धृतराष्ट्रमुखाः सर्वे ययू राजसभां शुभाम् ॥ ३ ॥
सुधावदातां वीस्तीर्णां कनकाजिरभूषिताम् ।
चन्द्रप्रभां सुरुचिरां सिक्तां चन्दनवारिणा ॥ ४ ॥
रुचिरैरासनैः स्तीर्णां काञ्चनैर्दारवैरपि ।
अश्मसारमयैर्दान्तैः स्वास्तीर्णैः सोत्तरच्छदैः ॥ ५ ॥

---

मां सर्वेषां भूतानामन्तरात्मानं सर्वेश्वरं सर्वकर्तारं विज्ञाय कविः प्रसन्न आस्ते ॥ ३० ॥ प्रकरणार्थमुपसंहरति—अणोरिति । अणोरप्यणुतरो दुर्लक्ष्यः न त्वणुतरपरिमाणवान् । अस्थूलमनण्वह्रस्वमदीर्घमिति ब्रह्मणि चतुर्विधपरिमाणनिषेधात् । एतेन निर्गुणं रूपमुक्तम् । सुमनाः शोभनं मनो दिव्यं चक्षुर्मायाख्यमतीतादिसर्वप्रकाशकं यस्य, मनोऽस्य दैवं चक्षुरिति श्रुतेः, स सुमनाः । एतेन सगुणं रूपमुक्तम् । सर्वभूतेषु जाग्रति अन्तर्यामिरूपेण जागर्त्ति शपोऽलुगार्षः गुणाभावश्च । पितरमर्थाद्वियदादीनां जरायुजादीनां च सर्वभूतेषु सर्वदेहेषु पुष्करे हृदयपुण्डरीके निहितं स्थितं विदुर्ब्राह्मणा जानन्ति । एवंगुणविशिष्टं प्रत्यगात्मानं हृदये विचिन्तनेन साक्षात्कृत्य कृतकृत्यो भवतीत्यर्थः ॥ ३१ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[ सर्व० ] एतादृक्स्थिरीकरणोपायभूतां भावनामाह—अहमेवेति । आत्मा त्वधिष्ठाता । अहं यत्रतास्ति अनित्यं यदस्ति सर्वदा नित्यं स्थविरः पिता पितामहस्य प्रपितामहः । तथा पुत्रः पितामहस्यैव पितृव्य इति यावत् पितृत्वपुत्रत्वयोरुदात्तत्वात् । यतो मामेवात्मस्थान साधारणः । स सर्वेषां जन्मसाधनं देवो द्युतिमान् । अजरा अविनाशिनी प्रतिष्ठाऽवस्थानं यस्य ॥ २९ ॥ ३० ॥ अणोः शरीरादेरणीयांसं गु···त्रः सुमनाः शोभनं मनो ज्ञानं यस्य अत एव सर्वभूतेषु जाग्रति वचनव्यत्ययात् । सर्वेषां भूतानामधिष्ठातेत्यन्वयः । तं पितरं पालयितारं सर्वभूतेषु सर्वभूतानां पुष्करे हृत्पुण्डरीके निहितं विदुर्जानीयुरिति व्यत्ययात् । ध्यात्वा ध्यातव्य इति तात्पर्यशेष इति सुन्दरं सर्वं त्वस्य चैकात्मभावनस्य रागद्वेषनिवृत्तिः फलं, तदनन्तरं च योगधर्मादिसहकृताद्भावनाविशेषात् । सर्वविभक्तस्यात्मना साक्षात्करणमिति मन्तव्यम् । तथा तदनन्तरैकात्म्यभावनायाः फलमुपसंहरन्नाह—एवं यः सर्वभूतेषु पश्यत्यात्मानमव्ययम् । स सर्वसमतामेत्य ब्रह्माऽभ्येति सनातनमिति ॥ ३१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

[ लक्षा० ] अहमेव स्मृतो मातेत्यादिकं यज्जीवं परमात्मना वचनं सनत्सुजातस्तत्तदनुवादकः । अन्तर्यामी 'असंगो ह्ययं पुरुषः' इति श्रुत्यर्थसूचनाय मे यूयं न वः अहं च नास्मीत्युक्तम् ॥ २८ ॥ २९ ॥ आत्मैवस्थानमित्यत्र मम आत्मा देह एव, स्थीयते अत्रेति व्युत्पत्त्या स्थानं मम आत्मैव जायते आत्मादिति । जन्म ॥ ३० ॥ पुष्करे हृदयकमले निहितं संनिहितं विदुः ॥ ३१ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे षट्चत्वारिंशोऽध्यायः ॥ ४६ ॥

---

[ नील० ] प्रासङ्गिकमध्यात्मं समाप्य प्रस्तुतां कथामेवानुसंधत्ते—एवं सनत्सुजातेनेत्यादिना । कथयतः कथामिति शेषः ॥ १ ॥ सूतस्य संजयस्य ॥ ३ ॥ कनकमयेन अजिरेण अङ्गनेन भूषिताम् ॥ ४ ॥ अश्मसारमयैः रत्नखचितैः ॥ ५ ॥

[ अर्जु० ] एवं 'सनत्सुजातेनेत्यादेरिन्द्रानुजं तं शरणं प्रपद्ये' इत्यन्तस्य द्यूतजितयुधिष्ठिरस्य समर्पणहेतुतया वचनसंदर्भो धर्मसहकृतः पाण्डवानां प्रभावातिशयेनानुगृहीतस्तात्पर्यार्थः ॥ १ ॥ सूतस्य संजयस्य ॥ २ ॥ अश्मसारं लौहम् । दान्तैः करिदन्तभवैः । सोत्तरच्छदैः सपिधानवस्त्रैः ॥ ५ ॥

---

१ म. सनत्कुमारेण । ख. व्यतीताथ । ३ ख. म. विविशुस्तां सभां शुभाम् । ४ ख. म. चन्द्रप्रभाभां···परमवा° । ५ ख. म. काञ्चनैस्तारकै° ।

भीष्मो द्रोणः कृपः शल्यः कृतवर्मा जयद्रथः ।
अश्वत्थामा विकर्णश्च सोमदत्तश्च बाह्लिकः ॥ ६ ॥
विदुरश्च महाप्राज्ञो युयुत्सुश्च महारथः ।
सर्वे च सहिताः शूराः पार्थिवा भरतर्षभ ॥ ७ ॥
धृतराष्ट्रं पुरस्कृत्य विविशुस्तां सभां शुभाम् ।
दुःशासनश्चित्रसेनः शकुनिश्चापि सौबलः ॥ ८ ॥
दुर्मुखो दुःसहः कर्ण उलूकोऽथ विविंशतिः ।
कुरुराजं पुरस्कृत्य दुर्योधनममर्षणम् ॥ ९ ॥
विविशुस्तां सभां राजन् सुराः शक्रसदो यथा ।
आविशद्भिस्तदा राजन् शूरैः परिघबाहुभिः ॥१०॥
शुशुभे सा सभा राजन् सिंहैरिव गिरेर्गुहा ।
ते प्रविश्य महेष्वसाः सभां सर्वे महौजसः ॥ ११ ॥
आसनानि विचित्राणि भेजिरे सूर्यवर्चसः ।
आसनस्थेषु सर्वेषु तेषु राजसु भारत ॥ १२ ॥
द्वाःस्थो निवेदयामास सूतपुत्रमुपस्थितम् ।
अयं स रथ आयाति योऽयासीत्पाण्डवान्प्रति ॥१३॥
दूतो नस्तूर्णमायातः सैन्धवैः साधुवाहिभिः ।
उपेयाय स तु क्षिप्रं रथात्प्रस्कन्द्य कुण्डली ।
प्रविवेश सभां पूर्णां महीपालैर्महात्मभिः ॥ १४ ॥

**सञ्जय उवाच—**

प्राप्तोऽस्मि पाण्डवान् गत्वा तं विजानीत कौरवाः ।
यथावयः कुरून्सर्वान् प्रतिनन्दन्ति पाण्डवाः ॥१५॥
अभिवादयन्ति वृद्धांश्च वयस्यांश्च वयस्यवत् ।
यूनश्चाभ्यवदन्पार्थाः प्रतिपूज्य यथावयः ॥ १६ ॥
यथाऽहं धृतराष्ट्रेण शिष्टः पूर्वमितो गतः ।
अब्रवं पाण्डवान् गत्वा तन्निबोधत पार्थिवाः ॥ १७ ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

## अष्टचत्वारिंशोऽध्यायः ४८

सूतेन दुर्योधनं संबोध्य सभायामर्जुनवचसो निवेदनम् ॥ १ ॥

**धृतराष्ट्र उवाच—**

पृच्छामि त्वां सञ्जय राजमध्ये
किमब्रवीद्वाक्यमदीनसत्वः ।
धनञ्जयस्तात युधां प्रणेता
दुरात्मनां जीवितच्छिन्महात्मा ॥ १ ॥

**सञ्जय उवाच—**

दुर्योधनो वाचमिमां शृणोतु
यदब्रवीदर्जुनो योत्स्यमानः ।
युधिष्ठिरस्यानुमते महात्मा
धनञ्जयः शृण्वतः केशवस्य ॥ २ ॥
अन्वत्रस्तो बाहुवीर्यं विदान
उपह्वरे वासुदेवस्य धीरः ।
अवोचन्मां योत्स्यमानः किरीटी
मध्ये ब्रूया धार्तराष्ट्रं कुरूणाम् ॥ ३ ॥

---

[ लक्षा० ] राजानः सर्वपार्थिवा इत्यत्र सर्वपार्थिवाः सर्वपृथिवीसंबन्धिनः ॥ २ ॥

[ नील० ] उपेयाय उपाजगाम प्रस्कन्द्य उत्तीर्य ॥१४॥ यथावयः वयसोऽनुरूपम् ॥ १५ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[ अर्जु० ] समितिशोभनाः भटाः ॥ ११ ॥ सूतपुत्रं संजयम् ॥ १३ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[ लक्षा० ] प्राप्तोऽस्मि मां विजानीतेत्यत्र प्राप्तोस्मीति विजानीतेति संबन्धः ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्तचत्वारिंशोऽध्यायः ॥ ४७ ॥

[ नील० ] पृच्छामीति ॥ १ ॥ अन्वत्रस्त इत्यनुशब्दस्य अवोचदित्यनेन संबन्धः । व्यवहिताश्चेति धातूपसर्गयोश्छान्दसं व्यवहितत्वम् । विदानः जानन् उपह्वरे समीपे कुरूणां मध्ये धार्तराष्ट्रं ब्रूया इत्यन्ववोचदिति संबन्धः ॥३॥

[ अर्जु० ] दुरात्मनां दुर्योधनादीनाम् ॥ १ ॥ अनुत्रस्तो भीतः । विदानः जानन् । उपह्वरे समीपे ॥ ३ ॥

---

१० म. राजन् सिंहा इव गिरेर्गुहाम् । ११ म. ख. सभां समितिशोभनाः । १२ म. महार्हाणि; ख. महार्ध्याणि । १४ म. स्तूर्णमभ्येति । ख. मभ्येत्य ।

१५ म. प्राप्तोऽस्मिन् । म. ख. तद्विजा° । इति सप्तचत्वारिंशोऽध्यायः ॥४७॥ ३ म. ख. अनुत्रस्तो ।

संशृण्वतस्तस्य दुर्भाषिणो वै
दुरात्मनः सूतपुत्रस्य सूत ।
यो योद्धुमाशंसति मां सदैव
मन्दप्रज्ञः कालपक्वोऽतिमूढः ॥ ४ ॥
ये वै राजानः पाण्डवायोधनाय
समानीताः शृण्वतां चापि तेषाम् ।
यथा समग्रं वचनं मयोक्तं
सहामात्यं श्रावयेथा नृपं तत् ॥ ५ ॥
यथा नूनं देवराजस्य देवाः
शुश्रूषन्ते वज्रहस्तस्य सर्वे ।
तथाऽशृण्वन्पाण्डवाः सृञ्जयाश्च
किरीटिना वाचमुक्तां समर्थाम् ॥ ६ ॥
इत्यब्रवीदर्जुनो योत्स्यमानो
गाण्डीवधन्वा लोहितपद्मनेत्रः ।
न चेद्राज्यं मुञ्चति धार्तराष्ट्रो
युधिष्ठिरस्याजमीढस्य राज्ञः ॥ ७ ॥
अस्ति नूनं कर्मकृतं पुरस्ता-
दनिर्विष्टं पापकं धार्तराष्ट्रैः ।
येषां युद्धं भीमसेनार्जुनाभ्यां
तथाऽश्विभ्यां वासुदेवेन चैव ॥ ८ ॥
शैनेयेन ध्रुवमात्तायुधेन
धृष्टद्युम्नेनाथ शिखण्डिना च ।
युधिष्ठिरेणेन्द्रकल्पेन चैव
योऽपध्यानान्निर्दहेद्गां दिवं च ॥ ९ ॥
तैश्चेद्योद्धुं मन्यते धार्तराष्ट्रो
निर्वृत्तोऽर्थः सकलः पाण्डवानाम् ।
मा तत्कार्षीः पाण्डवस्यार्थहेतो-
रुपैहि युद्धं यदि मन्यसे त्वम् ॥ १० ॥
यां तां वने दुःखशय्यामवात्सी-
त्प्रव्राजितः पाण्डवो धर्मचारी ।
आप्नोतु तां दुःखतरामनाथ-
मन्त्यां शय्यां धार्तराष्ट्रः परासुः ॥ ११ ॥
ह्रिया ज्ञानेन तपसा दमेन
शौर्येणाथो धर्मगुप्त्या धनेन ।
अन्यायवृत्तिः कुरुपाण्डवेया-
नध्यातिष्ठद्धार्तराष्ट्रो दुरात्मा ॥ १२ ॥

---

[ लक्षा० ] उपह्वरे वासुदेवस्येत्यत्र उपह्वरे समीपे ॥३॥

[ नील० ] पाण्डवायोधनाय पाण्डवैः सह युद्धाय ॥ ५ ॥ कर्म पापम् अनिर्विष्टम् अनुपभुक्तम् अश्विभ्याम् अश्विपुत्राभ्याम् ॥ ८ ॥ अपध्यानात् अपकारचिन्तनमात्रात् गां पृथ्वीम् ॥ ९ ॥ निर्वृत्तः सिद्धः सकल इत्ययुद्धपक्षेऽर्धस्यैवार्थस्य लाभो भवेत्स चानभिमत इति सूचितम् । तत् राज्यार्धदानं माकार्षीः पाण्डवस्य अर्थहेतोः हितार्थम् ॥१०॥ दुःखशय्यां दुःखवासम् अन्त्यां शय्यां युद्धे मरणं प्राप्तः सन् ॥ ११ ॥ त्वमेतावत्कुर्वित्याह—ह्रियेति। यान् लोकान् अन्यायवृत्तिर्धार्तराष्ट्रोऽध्यतिष्ठत् तान् ह्रीप्रभृतिभिर्गुणैरुपलक्षिते पाण्डवे अनुरक्तान् कुरु । दुर्योधने नष्टे प्रजानामस्मदभिमुखीकरणं त्वत्कार्यं न तु तेन सह अस्माकं संधानमिति भावः ॥ १२ ॥

[ अर्जु० ] पाण्डवायोधनाय पाण्डवैः सहायोधनाय युद्धाय ॥ ५ ॥ नूनं शङ्के अनिर्विष्टमनुपभुक्तं अश्विभ्यां नकुलसहदेवाभ्यां पुत्रे पित्रुपचारात् ॥ ८ ॥ अपध्यानात् विरुद्धसंकल्पात् गां पृथिवीम् ॥९॥ हेतोर्दैवात् ॥ १० ॥ दुःखशय्यां निरन्तरदुःखम् । परासुर्गतजीवः ॥ ११ ॥ ह्रीप्रभृतिना बलान्तेन पाण्डवानामिति शेषः । अध्यतिष्ठत् प्रभुत्वेनाध्यतिष्ठत् ॥ १२ ॥

[ सर्व० ] बाहुवीर्यमात्मनो विदानो जानन् । उपह्वरे सन्निधौ कर्म पापं अनिर्दिष्टमनुक्तम् ॥ ७ ॥ अश्विभ्यामश्विनोः सुताभ्याम् ॥ ९ ॥ पाण्डवस्य हेतोः पाण्डवप्रयोजनेन हेतुना मा तद्राज्यार्धदानं कार्यम् ॥१०॥ दुःखशय्यां दुःप्रवासं आप्नोतु तां धार्तराष्ट्रः अन्त्यशय्याम् ॥ ११ ॥ ह्रीप्रभृतिभिर्बलान्तैः पाण्डवाना धर्मैर्वशीकृतान् कुरुपाण्डवेयान् कौरवपाण्डवराज्यान्यध्यतिष्ठत् । तेषां प्रभुत्वेन स्थितः । न तु ह्रीप्रभृतयो धर्माः अतः सन्तीत्यर्थः ॥१२॥

[ लक्षा० ] अनिर्बिष्टं पापकं धार्तराष्ट्रैरित्यत्र निर्वेद उपभोगः स्यादित्यमरः । अनिर्विष्टमभुक्तफलम् ॥ ८ ॥ योऽवध्यानान्निर्दहेद्गां दिवमित्यत्र अवध्यानात् कोपेनावज्ञानात् ॥ ९ ॥ मा तत्कार्षीः पाण्डवस्यार्थहेतोरपैहीत्यत्र तत्तस्मात्कारणात् यदि त्वं मन्यसे तर्हि पाण्डवस्यार्थहेतोः द्रव्यार्थं युद्धं मा कार्षीः अपैहि युद्धादपगतो भव ॥१०॥

---

५ म. चैव. । म. ख. नृपं तम् । ६ म. ख. किरीटिनो वाचमुक्तां समस्ताः । १० ख. म. तैश्चेद्युद्धं । ख. म. मानं न कार्षीः पाण्डवस्यार्थं हेतोर्ऋतेहियुं । ११ ख. म. शय्यामुपास्त । ख. म. आशो(शे)ष्यते दुःखतरामनर्थामनन्तश° । १२ ख. म. क्रोधेनार्यो धर्मगुप्त्या । ख. अन्यायवृत्तः । ख. म. पाण्डवेयानध्य° ।

मायोपधः प्रणिपातार्जवाभ्यां
तपोदमाभ्यां धर्मगुप्त्या बलेन ।
सत्यं ब्रुवन् प्रतिपन्नो नृपो नः
तितिक्षमाणः क्लिश्यमानोऽतिवेलम् ॥ १३ ॥

यदा ज्येष्ठः पाण्डवः संशितात्मा
क्रोधं यत्तं वर्षपूगान्सुघोरम् ।
अवस्रष्टा कुरुषूद्वृत्तचेता-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ १४ ॥

कृष्णवर्त्मेव ज्वलितः समिद्धो
यथा दहेत्कक्षमग्निर्निदाघे ।
एवं दग्धा धार्तराष्ट्रस्य सेनां
युधिष्ठिरः क्रोधदीप्तोऽन्ववेक्ष्य ॥ १५ ॥

यदा द्रष्टा भीमसेनं रथस्थं
गदाहस्तं क्रोधविषं वमन्तम् ।
अमर्षणं पाण्डवं भीमवेगं
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ १६ ॥

सेनाग्रगं दंशितं भीमसेनं
स्वालक्षणं वीरहणं परेषाम् ।
घ्नन्तं चमूमन्तकसन्निकाशं
तदा स्मर्ता वचनस्यातिमानी ॥ १७ ॥

यदा द्रष्टा भीमसेनेन नागान्
निपातितान् गिरिकूटप्रकाशान् ।
कुम्भैरिवासृग्वमतो भिन्नकुम्भां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ १८ ॥

[ नील० ] मायया कपटेन उपधीयन्ते उपस्थाप्यन्ते ते मायोपधाश्छलवादाः तान् मायोपधः । आतो धातोरिति द्वितीयाबहुवचने परे आलोपः । प्रतिपन्नः प्राप्तः प्रणिपातादिभिरुपेतः सत्यं ब्रुवंश्च अतिवेलं क्लिश्यमानोऽपि तितिक्षमाण एवास्ते इति शेषः ॥ १३ ॥ क्रोधम् अवस्रष्टा उत्स्रक्ष्यति । उद्वृत्तं क्रोधाक्रान्तं चेतो यस्य सः उद्वृत्तचेताः जन्मना सुवृत्तचेता अपि सन् । अन्वतप्स्यत् शोचिष्यति । आर्षो लकारव्यत्ययः ॥ १४ ॥ कृष्णवर्त्मा दाहेन कृष्णीकृतभूभाग इति प्राञ्चः । वस्तुतस्तु अग्निहोत्रे वस्वादिसप्तरूपोऽग्निः श्रूयते यदग्निमुद्धरतीत्यनुवाके । तत्र कृष्णवर्त्मेत्यन्वर्थसंज्ञाऽतो धूमायन् रौद्रोऽग्निरुच्यते । ज्वलित इति किंचित्प्रदीप्तः । समिद्ध इति सर्वशो दीप्तः दग्धा धक्ष्यति ॥ १५ ॥ दंशितं सन्नद्धं स्वालक्षणं स्वीयानामपि अलक्षणं नास्ति लक्षणं सम्यगवलोकनं यस्य तं स्वालक्षणम् । रणे आवेशवशात् स्वैरपि दुर्दर्शमित्यर्थः । यतः अन्तकसन्निकाशम् । वचनस्य वचनम् ॥ १७ ॥

[ अर्जु० ] मायोपधाप्रणिधानार्जवाभ्यां तपोदमाभ्यां धर्मगुप्त्या बलेन । सत्यं ब्रुवन् प्रतिपन्नो नृणां यस्तितिक्षमाणः क्लिश्यमानोऽतिवेलम् । माया उपधा परीक्षा यस्य । माया छद्मयुक्तं द्यूतादि तस्य उपधा परीक्षा तत्र प्रणिधानमेकचित्तता, आर्जवं विहितेन पथा गमनं, तपः कार्यतापन्नो धर्मः, दमो मनस इष्टे विनियोगयोग्यता गुप्त्या रक्षणेन बलेन चतुरङ्गेण प्रतिपन्नः प्रातिकूल्येन विषयीकृतः, तितिक्षमाणः क्षममाणः, क्लिश्यमानो दुःखैर्विषयीक्रियमाणः अतिवेलमत्यर्थम् ॥ १३ ॥ यदेत्यादि । संशितात्मा सम्यक् शितः शुद्ध आत्मा यस्य । यत्तमनुत्कृष्टमवस्रष्टा कर्ता । उद्वृत्तमुत्क्षिप्तम् । अन्वतप्स्यत् युद्धं निमित्तीकृत्य तापं करिष्यति पश्चात् तप्स्यति वा ॥१४॥ कृष्णवर्त्मा अग्निः तृणमपि निर्दहेदित्यर्थः । ज्वलितः ज्वालाभिरुच्छ्रितः समिद्धः घृताभिषिक्तः दग्धा धक्ष्यति ॥ १५ ॥ अमर्षणं दीर्घद्वेषम् ॥ १६ ॥ स्वालक्षण्यमसाधारणलक्षणम् । अतिमानी दुर्योधनः ॥ १७ ॥ नागान् भिन्नकुम्भान् वमतः शोणितमिति शेषः । तत्रोपमा यथा कुम्भात्कलशात्, अथवा भिन्नकुम्भात् गलन्मदात् ॥१८॥

[ सर्व० ] उपधीयत इत्युपधा धर्मः स माययैव यस्य । माया इन्द्रजालमुपधा छद्मतया प्रणिधानेन चिन्तनेन दुर्योधनस्य प्रतियुक्तः प्रतिपक्षेण तत्तद्विषयप्रतिपक्षाचरणात् । आर्जवतपोदमधर्मगुप्तयस्तु युधिष्ठिरगता एव प्रतियोगहेतवः । तस्य नियतेन्द्रियत्वेन हिंसाद्यकारित्वात् तत्र प्रतिपक्षाचरणस्यासुकरत्वात् । बलेन बलात्कारेण हन्यात् । तितिक्षमाण उत्पन्नमपि क्रोधं निवर्तयन् युधिष्ठिरः क्लिश्यमानो दुःखेन युज्यमानः ॥ १३ ॥ क्रोधं यत्तं नियतमवस्रष्टा अभिव्यञ्जयिष्यति । उद्धतचेताश्चलन्मनाः अन्वतप्स्यत् शोचिष्यति ॥ १४ ॥ कृष्णवर्त्मा दाहेन कृष्णीकृतभूभागः ॥१६॥ स्वलक्षणं स्वकीयलक्षणं केतुस्तशुक्तम् ॥ १७ ॥ भिन्नकुम्भान् भिन्नगण्डस्थलान् । वमतो रुधिर एव कुंभानिवोत्तमाङ्गे चित्रवत्त्वसाम्यात् ॥ १८॥

[ लक्षा० ] मायापदं प्रणिधानार्जवाभ्यामित्यत्र माया-

१३ ख. म. प्रणिधानार्जवाभ्यां । म. ख. प्रीतियुक्तोऽनृशंसः । १४ ख. वर्षगणं । ख. चेतनस्त° । म. द्रुतचेतने । १५ ख. म. समृद्धो । ख. म. दग्धा । ख. म. °नुवीक्ष्य । १६ ख. म. रणस्थं । ख. म. दुर्मर्षणं । १७ ख. म. भीमवेगं । ज. ख. स्वालक्षण्यं । ख. म. दिव्यास्त्रयुक्तमन्तक° । १८ ख. म. कुम्भान्यथा भिन्नकुम्भान्वमन्तः ।

महासिंहो गा व इव प्रविश्य
गदापाणिर्धार्तराष्ट्रानुपेत्य ।
यदा भीमो भीमरूपो निहन्ता
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ १९ ॥
महाभये वीतभयः कृतास्त्रः
समागमे शत्रुबलावमर्दी ।
सकृद्रथेनाप्रतिमान् रथौघान्
पदातिसंघान् गदयाऽभिनिघ्नन् ॥ २० ॥
शैक्येन नागाँस्तरसा विगृह्णन्
यदा छेत्ता धार्तराष्ट्रस्य सैन्यम् ।
छिन्दन्वनं परशुनेव शूर-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २१ ॥
तृणप्रायं ज्वलनेनेव दग्धं
ग्रामं यथा धार्तराष्ट्रान् समीक्ष्य ।
पक्वं सस्यं वैद्युतेनेव दग्धं
परासिक्तं विपुलं स्वं बलौघम् ॥ २२ ॥
हतप्रवीरं विमुखं भयार्तं
पराङ्मुखं प्रायशोऽधृष्टयोधम् ।
शस्त्रार्चिषा भीमसेनेन दग्धं
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २३ ॥
उपासङ्गानाचरेद्दक्षिणेन
वराङ्गानां नकुलश्चित्रयोधी ।
यदा रथाग्र्यो रथिनः प्रचेता
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २४ ॥
सुखोचितो दुःखशय्यां वनेषु
दीर्घं कालं नकुलो यामशेत ।
आशीविषः क्रुद्ध इवोद्वमन्विषं
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २५ ॥
त्यक्तात्मानः पार्थिवायोधनाय
समादिष्टा धर्मराजेन सूत ।
रथैः शुभ्रैः सैन्यमभिद्रवन्तो
दृष्ट्वा पश्चात्तप्स्यते धार्तराष्ट्रः ॥ २६ ॥

---

पदं दुर्योधनमायया कृतमापदं तितिक्षमाण इति संबन्धः । प्रणिधानं चित्तसमाधानम् ॥ १३ ॥ एवं दग्धा धार्तराष्ट्रस्य सेनामित्यत्र दग्धा दाहकर्ता दह भस्मीकरण इति धातोः लुडन्तस्येदं रूपम् ॥ १५ ॥

[ नील० ] गाः वः इवेतिच्छेदः । वः युष्मान् गा इव ॥ १९ ॥ शैक्येन शिक्यसदृशेन पाशेन नागान् विगृह्णन् वैपरीत्येन गृह्णन् । गले पादे वा पाशं दत्त्वा मृतवत्समुत्कर्षन्नित्यर्थः । अन्ये तु विमृद्नन्निति पाठान्तरं कल्पयित्वा शैक्येन खड्गेनेति व्याचख्युः ॥ २१ ॥ तृणप्रायं तृणगृहमयं ग्रामं परासिक्तं दूरे निरस्तम् ॥ २२ ॥ अधृष्टयोधम् अप्रगल्भयोधम् ॥ २३ ॥ उपेति । वराङ्गानां शिरसाम् उपासङ्गान् उच्चयान् दक्षिणेन कुशलेन अनायासेनेति यावत् आचरेत्कुर्यात् रथिनः योधान् प्रचेता कूटीकरिष्यति । पाठान्तरे उपासङ्गेन निषङ्गेण दक्षिणभागस्थेन शतात्परम् आचरन् तत्रत्यैः शताधिकैः शरैर्युध्यन् वामहस्तेनापि शरप्रक्षेपस्य अभ्यस्तत्वात् । दुःखशय्यामशेतेत्युत्तरस्मादपकृष्यते अत एव दुःखाद्रथिनः प्रचेतेति पूर्ववत् ॥ २४ ॥ दुःखशय्याम् अशेतेत्युत्तरं तां यदा स्मरिष्यतीति शेषः । अत एव दुःखात् रथिनः प्रचेतेति पूर्वस्मादनुकृष्यते॥२५॥ हे पार्थिव ! आयोधनाय युद्धाय समादिष्टाः सैन्यं तावकं दृष्ट्वा तानिति शेषः ॥ २६ ॥

[ अर्जु० ] गावो गाः ॥ १९ ॥ सकृदेकवारं समागमे युद्धे ॥ २० ॥ शैक्येन खड्गेन । भ्रान्तादिशिक्षायोगात् ॥ २१ ॥ तृणप्रायं तृणबहुलम् । इवशब्दो वाक्यालंकारे । वैद्युतेन अग्निना परासिक्तं हुतम् ॥ २२ ॥ धृष्टयोधं प्रगल्भयोधम् ॥ २३ ॥ उपासंगान् तृणबन्धनपाशान् । दक्षिणेन दक्षिणपार्श्वस्थान् । चिञ् चयने लुट् । प्रवेता एकत्र निक्षेप्स्यति ॥ २४ ॥ दुःखशय्यां निरन्तरदुःखमशेत आरूढवान् । या वा दुःखशय्या सा वा दुःखं चेति यदा युद्धं तावत्कृत्वेत्यर्थः ॥ २५ ॥

[ सर्व० ] गावो गाः ॥ १९ ॥ सकृदेकवारं रथेन रथौघान् रथाननेकान् अभिघातयन् भञ्जयन् ॥ २० ॥ शैक्येन खड्गेन ॥ २१ ॥ तृणप्रायं तृणबहुलं ज्वलनेनेव ग्रामं यथेति द्वयोः परस्परनैरपेक्ष्येण सत्स्वापत्सु येषूपमानविवक्षया । परासक्तं दूरे क्षिप्तं ॥ २२ ॥ प्रायशो बाहुल्येन अधृष्टयोधमप्रगल्भयोधम् ॥ २३ ॥ उपासंगान् तूणीरान् दक्षिणेन पार्श्वेनाचरन्नावारयन् अव्यापारयन् । सव्येन शराणां मोक्षणशिक्षणात् । प्रचेता कूटीकर्ता ॥ २४ ॥ दुःखशय्यामशेत सुखाभावेनाशयनेऽपि शयनोपचारात् । तां शय्यामाशीविष इव यदा स्मरिष्यतीति शेषः ॥ २५ ॥

[ लक्षा० ] यथा रथाग्र्यान् रथिनः प्रवेप्ता इत्यत्र प्रवे-

---

२० ख. म. प्रतियाता रथौ° । २१ म. ख. सैक्ये(न्ये)नानेकांस्तरसा विमृद्नन् यदा क्षेप्ता । म. परशुनेवातिसृष्टः; ख. वावसृष्टः । २२ म. ख. धार्तराष्ट्रः । २४ ख. म. उपासङ्गानन्तरं दक्षिणेन पारं गन्ता । २५ ख. म. श्वसन् भृशं । २६ ख. म. समानीता धर्मराजेन वीराः ।

शिशून्कृतास्त्राननशिशुप्रकाशान्
यदा द्रष्टा कौरवः पञ्च शूरान् ।
त्यक्त्वा प्राणान् कौरवानाद्रवन्त-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २७ ॥
यदा गतोद्वाहमकूजनाक्षं
सुवर्णतारं रथमाततायी ।
दान्तैर्युक्तं सहदेवोऽधिरूढः
शिरांसि राज्ञां क्षेप्स्यते मार्गणौघैः ॥ २८ ॥
महाभये संप्रवृत्ते रथस्थं
विवर्तमानं समरे कृतास्त्रम् ।
सर्वा दिशः संपतन्तं समीक्ष्य
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ २९ ॥
ह्रीनिषेवो निपुणः सत्यवादी
महाबलः सर्वधर्मोपपन्नः ।
गान्धारिमार्छंस्तुमुले क्षिप्रकारी
क्षेप्ता जनान् सहदेवस्तरस्वी ॥ ३० ॥
यदा द्रष्टा द्रौपदेयान्महेषून्
शूरान् कृतास्त्रान् रथयुद्धकोविदान् ।
आशीविषान् घोरविषानिवायत-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३१ ॥
यदाऽभिमन्युः परवीरघाती
शरैः परान्मेघ इवाभिवर्षन् ।
विगाहिता कृष्णसमः कृतास्त्र-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३२ ॥
यदा द्रष्टा बालमबालवीर्यं
द्विषच्चमूं मृत्युमिवोत्पतन्तम् ।
सौभद्रमिन्द्रप्रतिमं कृतास्त्रं
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३३ ॥
प्रभद्रकाः शीघ्रतमा युवानो
विशारदाः सिंहसमानवीर्याः ।
यदा क्षेप्तारो धार्तराष्ट्रान्ससैन्यां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३४ ॥
वृद्धौ विराटद्रुपदौ महारथौ
पृथक्चमूभ्यामभिवर्तमानौ ।
यदा द्रष्टारौ धार्तराष्ट्रान्ससैन्यां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३५ ॥
यदा कृतास्त्रो द्रुपदः प्रचिन्वन्
शिरांसि यूनां समरे रथस्थः ।
क्रुद्धः शरैश्छेत्स्यति चापमुक्तै-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३६ ॥
यदा विराटः परवीरघाती
ममत्तरे शत्रुचमूं प्रवेष्टा ।
मत्स्यैः सार्धमनृशंसरूपै-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३७ ॥

---

प्ता प्रवेपयिता ॥ २४ ॥ आशीविषः क्रुद्ध इवाचरेद्यदेत्यत्र आचरेत् आसमन्ताद्रणरङ्गे चरेत् ॥ २५ ॥

[ नील० ] शिशून् द्रौपदीपुत्रान् प्रतिविन्ध्यादीन् आद्रवन्तः आद्रवतः ॥ २७ ॥ गतोद्वाहम् अपगतोद्धृत्तगतिम् अनुकूलगतिमित्यर्थः । अकूजनो निःशब्दोऽक्षो यस्य तं सुवर्णस्य तारो दीर्घतन्तुः तम् । अतिवेगादलातचक्रवत्सुवर्णरेखातुल्यमित्यर्थः । दान्तैः विनीतैः अश्वैरित्यर्थात् ॥ २८ ॥ विवर्तमानं विविधैर्मण्डलैर्वर्तमानं चरन्तम् ॥ २९ ॥ गान्धारिं शकुनिम् आर्च्छन् गच्छन् ॥ ३० ॥ आयतः आगच्छतः ॥ ३१ ॥ विगाहिता अभिभविष्यति ॥ ३२ ॥ क्षेप्तारः क्षेप्स्यन्ति ॥ ३४ ॥ ममत्तरे मृशं मभ्रातीति ममत् । यङ्लुगन्तात् क्विप् ततस्तरप् । बलवत्तरे ममदिति निपातो बलवद्वाचको वा संग्रामे इत्यर्थः । सहोत्तर इत्याधुनिकाः पठन्ति ॥ ३७ ॥

[ अर्जु० ] गतोद्वाहमकूजनाक्षमिति । गताः प्राप्ता उर्ध्वगामिनो वाहा येन । उद्वहत्वादेवाकूजनमशब्दमसमक्षं यत्र रथे तं सुवर्णतारं शोभनवर्णाः तारा नक्षत्राणि यत्र अथवा सुवर्णेन तारमुत्तमम् । आततायी वधोद्यतः क्षान्तैर्भोरसाहैः दान्तैरिति वा पाठः । अश्वैरिति शेषः ॥२८॥ विवर्तमानं विविधैर्वामदक्षिणप्रकारैः वर्तमानं पूर्वां संमुखम् ॥ २९ ॥ ह्रीनिषेधो न ज्ञानिनिवर्तनीयः । ह्रीनिषेव इति च पठन्ति । निपुणः शास्त्रकुशलः । आर्च्छन् मुञ्चन् । जनान् क्षेप्ता क्षेप्स्यति ॥ ३० ॥ आयतः आगच्छतः ॥ ३१ ॥ विगाहिता हिंसिष्यति ॥ ३२ ॥ प्रभद्रका यादवभेदाः ॥ ३४ ॥

[ सर्व० ] द्रष्टा तानिति शेषः आद्रवन्तः आद्रवतः ॥२७॥ गताः प्राप्ता उत् उत्तमा वाहाः अश्वा येन स गतोद्वाहः । अकूजनः अशब्दकृदक्षो यस्य सुवर्णमय्यस्तारा

---

२७ ख. म. केकयानाद्र° । २८ म. गतौघाह° । २९ ख. म. पूर्वादिशं । ख. म. गान्धारमच्छैस्तुमले° । ख. म. जनः । ३५ ख. म. यदा द्रष्टारो धार्तराष्ट्राः ससैन्याः । ३७ ख. म. वीरहन्ता । ख. म. ममन्तिरे ।

ज्येष्ठं मात्स्यमनृशंसार्यरूपं
विराटपुत्रं रथिनं पुरस्तात् ।
यदा द्रष्टा दंशितं पाण्डवार्थे
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ३८ ॥
रणे हते कौरवाणां प्रवीरे
शिखण्डिना सत्तमे शान्तनूजे ।
न जातु नः शत्रवो धारयेयु-
रसंशयं सत्यमेतद्ब्रवीमि ॥ ३९ ॥
यदा शिखण्डी रथिनः प्रचिन्वन्
भीष्मं रथेनाभियाता वरूथी ।
दिव्यैर्हयैरवमृन्दन् रथौघां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ४० ॥
यदा द्रष्टा सृञ्जयानामनीके
धृष्टद्युम्नं प्रमुखे रोचमानम् ।
अस्त्रं यस्मै गुह्यमुवाच धीमान्
द्रोणस्तदा तप्स्यति धार्तराष्ट्रः ॥ ४१ ॥
यदा स सेनापतिरप्रमेयः
परामृद्नन्निषुभिर्धार्तराष्ट्रान् ।
द्रोणं रणे शत्रुसहोऽभियाता
तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ४२ ॥
ह्रीमान्मनीषी बलवान्मनस्वी
स लक्ष्मीवान्सोमकानां प्रबर्हः ।
न जातु तं शत्रवोऽन्ये सहेरन्
येषां स स्यादग्रणीर्वृष्णिसिंहः ॥ ४३ ॥
इदं च ब्रूया मा वृणीष्वेति लोके
युद्धेऽद्वितीयं सचिवं रथस्थम् ।
शिनेर्नप्तारं प्रवृणीम सात्यकिं
महाबलं वीतभयं कृतास्त्रम् ॥ ४४ ॥
महोरस्को दीर्घबाहुः प्रमाथी
युद्धेऽद्वितीयः परमास्त्रवेदी ।
शिनेर्नप्ता तालमात्रायुधोऽयं
महारथो वीतभयः कृतास्त्रः ॥ ४५ ॥
यदा शिनीनामधिपो मयोक्तः
शरैः परान्मेघ इव प्रवर्षन् ।
प्रच्छादयिष्यत्यरिहा योधमुख्यां-
स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ४६ ॥
यदा धृतिं कुरुते योत्स्यमानः
स दीर्घबाहुर्दृढधन्वा महात्मा ।
सिंहस्येव गन्धमाघ्राय गावः
संचेष्टन्ते शत्रवोऽस्माद्रणाग्रे ॥ ४७ ॥
स दीर्घबाहुर्दृढधन्वा महात्मा
भिन्द्याद्गिरीन्संहरेत्सर्वलोकान् ।
अस्त्रे कृती निपुणः क्षिप्रहस्तो
दिवि स्थितः सूर्य इवाभिभाति ॥ ४८ ॥

यत्र । दान्तैः शक्तैश्चक्रवर्त्यादिभिर्युक्तम् ॥ २८ ॥ विवर्तमानं विविधैः प्रकारैः प्रवर्तमानं पूर्वां दिशं प्रथमां दिशं सर्वेषामग्रेस्थितत्वात् ॥ २९ ॥ गान्धारं शकुनिमार्च्छन् गमयन् । अन्तर्भावितणिच् ॥ ३० ॥ आयतः आगच्छतः ॥ ३१ ॥

[ नील० ] शान्तनूजे दैर्घ्यमार्षं धारयेयुः जीवेयुः ॥ ३९ ॥ वरूथी रथगुप्तिमान् ॥ ४० ॥ इदं चेति सन्निहितं युद्धमूलमुच्यते । राज्यं च मा वृणीष्व मा प्रार्थयस्व इति ब्रूयाः दुर्योधनं प्रतीत्यर्थात् । यतः वयं युद्धेऽद्वितीयं सहायं सात्यकिं प्रवृणीम्न वृतवन्तः । तस्मिन्नवृते तु कदाचित्तव जयोऽपि संभाव्येतेति भावः ॥ ४४ ॥ अस्मात् ल्यब्लोपे पञ्चमी एनं प्राप्य संचेष्टन्ते इतस्ततो भ्रमन्ति ॥ ४७ ॥

[ अर्जु० ] वरूथी रथगुप्तिमान् ॥ ४० ॥ सेनापतिर्धृष्टद्युम्नः ॥ ४२ ॥ वृष्णिसिंहः सात्यकिः ॥ ४३ ॥ इदं च ब्रूयाः तस्येयं संगतिः—अर्जुनः संजयमुखेन धार्त्तराष्ट्रं शिक्षयति । शिनेर्नप्तारं सात्यकिं मा वृणीष्वेत्यद्वितीयमस्माद्यदि द्वितीयचित्तम् । प्रवृणीमो वयमेवैनं न त्वं वारितुमर्हसि ॥ ४४ ॥

[ सर्व० ] विगाहिता अभिभविष्यति ॥ ४० ॥ अस्त्रं यस्मै गुह्यमिति ॥ ४१ ॥ सोमकानामस्मत्संबन्धिनां मध्ये श्रेष्ठ इत्यर्थः ॥ ४३ ॥ इदं च ब्रूयाः सञ्जय दुर्योधनं, सात्यकिं युद्धे द्वितीयं प्रतिपक्षं मावृणीष्वेनं यत इमं सचिवं लोके वयं प्रवृणीम वृतवन्तः । तेनाऽस्मत्पक्षेण त्वां हन्तीत्यर्थः ॥ ४६ ॥ संचेष्टन्ते इतस्ततो भ्रमन्ति ॥ ४८ ॥

[ लक्षा० ] ब्रूयाश्च मामित्यत्र मां प्रवृणीष्वेति यो ब्रूयात् तमित्युत्तरेण संबन्धः ॥ ४४ ॥

३८ म. ज्येष्ठं मत्स्यस्यानृ° । ख. म. द्रष्टारो । ४० ख. म. दिव्यैरश्वैर° । ४२ ख. म. पराभवन् । ४३ ख. म. सहेयुर° । ४४ ख. म. ब्रूयाश्च मां प्रवृणी° । ख. म. रणस्थम् । ४५ ख. म. नास्ति । ४६ ख. म. °यिष्यन्शरजालेन योधांस्त° । ४७ ख. म. शत्रवोस्माद्रणा° ।

चित्रः सूक्ष्मः सुकृतो यादवस्य
　अस्त्रे योगो वृष्णिसिंहस्य भूयान् ।
यथाविधं योगमाहुः प्रशस्तं
　सर्वैर्गुणैः सात्यकिस्तैरुपेतः ॥ ४९ ॥
हिरण्मयं श्वेतहयैश्चतुर्भि-
　र्यदा युक्तं स्यन्दनं माधवस्य ।
द्रष्टा युद्धे सात्यकेर्धार्तराष्ट्र-
　स्तदा तप्स्यत्यकृतात्मा स मन्दः ॥ ५० ॥
यदा रथं हेममणिप्रकाशं
　श्वेताश्वयुक्तं वानरकेतुमुग्रम् ।
दृष्ट्वा ममाप्यास्थितं केशवेन
　तदा तप्स्यत्यकृतात्मा स मन्दः ॥ ५१ ॥
यदा मौर्व्यास्तलनिष्पेषमुग्रं
　महाशब्दं वज्रनिष्पेषतुल्यम् ।
विधूयमानस्य महारणे मया
　स गाण्डिवस्य श्रोष्यति मन्दबुद्धिः ॥ ५२ ॥
तदा मूढो धृतराष्ट्रस्य पुत्र-
　स्तप्ता युद्धे दुर्मतिर्दुःसहायः ।
दृष्ट्वा सैन्यं बाणवर्षान्धकारे
　प्रभज्यन्तं गोकुलवद्रणाग्रे ॥ ५३ ॥
बलाहकादुच्चरतः सुभीमा-
　न्विद्युत्स्फुलिङ्गानिव घोररूपान् ।
सहस्रघ्नान् द्विषतां संगरेषु
　अस्थिच्छिदो मर्मभिदः सुपुङ्खान् ॥ ५४ ॥
यदा द्रष्टा ज्यामुखाद्बाणसंघान्
　गाण्डीवमुक्तानापततः शिताग्रान् ।
हयान् गजान्वर्मिणश्चाददानाँ-
　स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५५ ॥
यदा मन्दः परबाणान् विमुक्ता-
　न्ममेषुभिर्ह्रियमाणान्प्रतीपम् ।
तिर्यग्विध्यच्छिद्यमानान्पृषत्कै-
　स्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५६ ॥
यदा विपाठा मद्भुजविप्रमुक्ता
　द्विजाः फलानीव महीरुहाग्रात् ।
प्रचेतार उत्तमाङ्गानि यूनां
　तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५७ ॥
यदा द्रष्टा पततः स्यन्दनेभ्यो
　महागजेभ्योऽश्वगतान्सुयोधनान् ।
शरैर्हतान्पातितांश्चैव रङ्गे
　तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५८ ॥
असंप्राप्तानस्त्रपथं परस्य
　यदा द्रष्टा नश्यतो धार्तराष्ट्रान् ।
अकुर्वतः कर्म युद्धे समन्ता-
　त्तदा युद्धं धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ५९ ॥
पदातिसंघान् रथसंघान्समन्ता-
　द्व्यात्ताननः काल इवाततेषुः ।
प्रणोत्स्यामि ज्वलितैर्बाणवर्षैः
　शत्रूँस्तदा तप्स्यति मन्दबुद्धिः ॥ ६० ॥

[ नील० ] चित्रः विस्मयकृत् सूक्ष्मः दुर्लक्ष्यः श्लक्ष्ण इतिपाठे रमणीयः । शूराणामुत्साहकरत्वात् सुकृतः सुशिक्षितः । अस्त्रयोगोऽस्त्रलाभः । वृष्णिसिंहस्य कृष्णस्य यथाविधं यादृक्प्रकारं योगमाहुः तैः सर्वैर्गुणैः सात्यकिरुपेतः ॥ ४९ ॥ सुपुङ्खान्यदा द्रष्टेति द्वयोः संबन्धः ॥ ५४ ॥ आददानान् ग्रसमानान् ॥ ५५ ॥ तिर्यक् विद्धय विद्ध्वा पृषत्कैश्छिद्यमानान्यदा द्रष्टेति पूर्वेणान्वयः ॥५६॥ विपाठाः विस्तृतबाणाः प्रचेतारः राशीकरिष्यन्ति ॥ ५७ ॥ अस्त्रपथमसंप्राप्तान् अस्त्रं दृष्ट्वैव नश्यत इत्यर्थः । युद्धे कर्म अकुर्वतः भयेन वैक्लव्यात् ॥ ५९ ॥ आतताः संतता अविच्छिन्नधाराः इषवो यस्य प्रणोत्स्यामि दूरीकरिष्यामि ॥ ६० ॥

[ अर्जु० ] चित्रो नामाश्चर्यो वा सूक्ष्मो दुरधिगमः । सुकृतः सुविहितः योगः संहननः । वृष्णिसिंहस्य सात्यकेः भूयान् अतिशयितः ॥ ४९ ॥ माधवस्य सात्यकेः ॥५०॥ तप्ता तप्स्यति ॥ ५३ ॥ विपाठाः शरविशेषाः । द्विजाः पक्षिणः । प्रचेतारः प्रचेष्यन्ति ॥ ५७ ॥ द्रष्टा द्रक्ष्यति ॥ ५८ ॥ आततेषुः विस्तृतबाणः ॥ ६० ॥

[ सर्व० ] चित्रो विस्मयहेतुः सूक्ष्मः अनन्यवेद्यः । अस्त्रे योगोऽस्त्रशिक्षा वृष्णिसिंहस्य कृष्णस्य भूयानतिशयितः । यथाविधं यादृशं तस्यास्त्रयोगमाहुः तैः सात्यकिः सर्वैर्योगगुणैरुपेतः ॥ ४९ ॥

[ लक्षा० ] [ स च स्रष्टेत्यत्र सोऽहमर्जुनः ] यदा स्रष्टा···नागान्हयान्रथिनश्चाददानः आय······नश्च यदा

५० °केवैंसुयोधनर०° । ५१ ख. म. द्रष्टारणे संयतं । ५२ ख. वज्रनिर्घोष । ५३ ख. म. °न्धकारं । ५४ म. ख. उच्चरतीव विद्युत्सुशीघ्रगान्द्विषतां मामकेषून् । अस्थिच्छिदो मर्मभिदो वहन्परांस्त° । ५६ म. क्षुराग्रैस्त° । ५७ ख. म. प्रच्छेत्तारः ।

सर्वा दिशः संपतता रथेन
रजोध्वस्तं गाण्डिवेन प्रकृत्तम् ।
यदा द्रष्टा स्वबलं संप्रमूढं
तदा पश्चात्तप्स्यति मन्दबुद्धिः ॥ ६१ ॥
कान्दिग्भूतं छिन्नगात्रं विसंज्ञं
दुर्योधनो द्रक्ष्यति सर्वसैन्यम् ।
हताश्ववीराग्र्यनरेन्द्रनागं
पिपासितं श्रान्तपत्रं भयार्तम् ॥ ६२ ॥
आर्तस्वरं हन्यमानं हतं च
विकीर्णकेशास्थिकपालसंघम् ।
प्रजापतेः कर्म यथार्थनिष्ठितं
तदा दृष्ट्वा तप्स्यति मन्दबुद्धिः ॥ ६३ ॥
यदा रथे गाण्डिवं वासुदेवं
दिव्यं शङ्खं पाञ्चजन्यं हयांश्च ।
तूणावक्षय्यौ देवदत्तं च मां च
दृष्ट्वा युद्धे धार्तराष्ट्रोऽन्वतप्स्यत् ॥ ६४ ॥
उद्वर्तयन् दस्युसंघान् समेतान्
प्रवर्तयन् युगमन्यद्युगान्ते ।
यदा धक्ष्याम्यग्निवत्कौरवेयाँ-
स्तदा तप्ता धृतराष्ट्रः सपुत्रः ॥ ६५ ॥
सभ्राता वै सहसैन्यः सभृत्यो
भ्रष्टैश्वर्यः क्रोधवशोऽल्पचेताः ।
दर्पस्यान्ते निहतो वेपमानः
पश्चान्मन्दस्तप्स्यति धार्तराष्ट्रः ॥ ६६ ॥
पूर्वाह्णे मां कृतजप्यं कदाचि-
द्विप्रः प्रोवाचोदकान्ते मनोज्ञम् ।
कर्तव्यं ते दुष्करं कर्म पार्थ
योद्धव्यं ते शत्रुभिः सव्यसाचिन् ॥ ६७ ॥
इन्द्रो वा ते हरिवान्वज्रहस्तः
पुरस्ताद्यातु समरेऽरीन् विनिघ्नन् ।
सुग्रीवयुक्तेन रथेन वा ते
पश्चात्कृष्णो रक्षतु वासुदेवः ॥ ६८ ॥
वव्रे चाहं वज्रहस्तान्महेन्द्रा-
दस्मिन्युद्धे वासुदेवं सहायम् ।
स मे लब्धो दस्युवधाय कृष्णो
मन्ये चैतद्विहितं दैवतैर्मे ॥ ६९ ॥
अयुद्ध्यमानो मनसाऽपि यस्य
जयं कृष्णः पुरुषस्याभिनन्देत् ।
ध्रुवं सर्वान् स व्यतीयादमित्रान्
सेन्द्रान्देवान्मानुषे नास्ति चिन्ता ॥ ७० ॥

---

द्रष्टेति संबन्धः ॥ ५५ ॥ यदा मन्द इत्यत्र महेषुभिः स्वसेनास्थरथिभिर्विमुक्तान् प्रतीपमर्जुनस्य प्रतिकूलं यथा भवति तथा क्रियमाणांस्तिर्यग्विधांस्तिर्यक्पतमानपक्षिसदृशान् परबाणान् अर्जुनवैरिभूतस्वसैनिकानां बाणान् क्षुरैश्छिद्यमानान् अर्जुनमुक्तक्षुराग्रशरैश्छिद्यमानांश्च यदा द्रष्टेति संबन्धः ॥ ५६ ॥ काल इवागते भू इत्यत्र आगते मरणसमये प्राप्ते सति कालो मृत्युरिव ॥ ६० ॥

[ नील० ] रजोध्वस्तं रजसा व्याकुलीभूय रथादिभ्यः पतितं प्रकृत्तं छिन्नम् ॥ ६१ ॥ कांदिग्भूतं भयेन पलायितं श्रान्तपत्रं श्रान्तवाहनम् ॥ ६२ ॥ प्रजापतेः कर्म यथेति । यथा वाजपेये प्रजापतिदैवत्याः सप्तदश पशवो विशस्यन्ते तद्वद्बहूनामिहापि विशसनं कृतं तेन बीभत्सत्वं लक्ष्यते । अर्थः स्वर्गो राज्यं च तदर्थं निष्ठितं संजातनिश्चयम् ॥ ६३ ॥ देवदत्तम् अर्जुनस्य शङ्खम् ॥ ६४ ॥ दस्युसंघान् । न्यायतः प्रदेयस्य राज्यस्याप्रदानाद्दस्यवो धार्तराष्ट्राः 'यथाकथाच परप्रतिग्रहमभिमन्यते स्तेनो भवति' इतिस्मृतेः । युगान्ते शत्रूणां संहारे जाते सति अन्यद्युगं धर्मप्रधानं कालं प्रवर्तयन् 'राजा कालस्य कारणम्' इति स्मृतेः ॥ ६५ ॥ दर्पस्य अन्ते नाशे ॥ ६६ ॥ उदकान्ते सन्ध्यावन्दनाचमनान्ते ॥ ६७ ॥ पुरस्तात् इन्द्रो रक्षतु इत्यपकृष्यते ॥ ६८ ॥

[ अर्जु० ] गाण्डिवेनापकृत्तं छिन्नं । स्वबलं स्वसैन्यम् ॥ ६१ ॥ तुमुले कान्दिग्भूते युद्धे । पत्रं वाहनम् ॥६२॥ प्रजापतेः स्रष्टुः कर्म क्रियमाणं । करचरणमुखनासिकाद्यवयवजातमवयविनिर्माणतः प्राग् विकीर्णमिव ॥ ६३ ॥ उद्वर्तयन् पराङ्मुखमकुर्वन् । दस्युसंघान् दायादान् परेषां शत्रूणाम् । युगमन्यत् स्वीयां सृष्टिम् । युगान्ते प्रलये । तप्ता तप्स्यति ॥ ६५ ॥ विहतो हतसन्धिः ॥ ६६ ॥ हरिमान् विशिष्टहययुक्तरथस्थः ॥६८॥ दस्युवधाय शत्रुवधाय ॥६९॥

[ सर्व० ] रथेन रजोध्वस्तं स्वजन्यरजसा ध्वस्तम् । अपकृत्तं छिन्नम् ॥ ६४ ॥ दस्युसंघान् शत्रुसंघान् । युगान्तं अन्तयुगमिवाल्पप्राणिकं कालं प्रवर्तयन् ॥ ७० ॥

[ लक्षा० ] द्रष्टा युद्धे धार्तराष्ट्रः समेतानित्यत्र यदा द्रष्टा तदा तप्येदित्युत्तरवाक्यमावर्त्य योजनीयम् ॥ ६५ ॥

---

६१ ख. म. संपततो रथेन रथव्रजान् । ६८ ख. समरे विनिघ्नन् । ६९ ख. म. मन्ये चाहं संहितं दैवतैश्च ।

स बाहुभ्यां सागरमुत्तितीर्षे-
न्महोदधिं सलिलस्याप्रमेयम् ।
तेजस्विनं कृष्णमत्यन्तशूरं
युद्धेन यो वासुदेवं जिगीषेत् ॥ ७१ ॥
गिरिं य इच्छेत्तु तलेन भेत्तुं
शिलोच्चयं श्वेतमतिप्रमाणम् ।
तस्यैव पाणिः सनखो विशीर्ये-
न्न चापि किंचित्स गिरेस्तु कुर्यात् ॥ ७२ ॥
अग्निं समिद्धं शमयेद्भुजाभ्यां
चन्द्रं च सूर्यं च निवारयेत ।
हरेद्देवानाममृतं प्रसह्य
युद्धेन यो वासुदेवं जिगीषेत् ॥ ७३ ॥
यो रुक्मिणीमेकरथेन भोजा-
नुत्साद्य राज्ञः समरे प्रसह्य ।
उवाह भार्यां यशसा ज्वलन्तीं
यस्यां जज्ञे रौक्मिणेयो महात्मा ॥ ७४ ॥
अयं गान्धारांस्तरसा संप्रमथ्य
जित्वा पुत्रान्नग्नजितः समग्रान् ।
बद्धं मुमोच विनदन्तं प्रसह्य
सुदर्शनं वै देवतानां ललामम् ॥ ७५ ॥
अयं कपाटेन जघान पाण्ड्यं
तथा कलिङ्गान् दन्तकूरे ममर्द ।
अनेन दग्धा वर्षपूगान्विनाथा
वाराणसी नगरी संबभूव ॥ ७६ ॥
अयं स्म युद्धे मन्यतेऽन्यैरजेयं
तमेकलव्यं नाम निषादराजम् ।
वेगेनैव शैलमभिहत्य जम्भः
शेते सकृष्णेन हतः परासुः ॥ ७७ ॥
ततोग्रसेनस्य सुतं सुदुष्टं
वृष्ण्यन्धकानां मध्यगतं सभास्थम् ।
अपातयद्बलदेवद्वितीयो
हत्वा ददौ चोग्रसेनाय राज्यम् ॥ ७८ ॥
अयं सौभं योधयामास खस्थं
विभीषणं मायया शाल्वराजम् ।
सौभद्वारि प्रत्यगृह्णाच्छतघ्नीं
दोर्भ्यां क एनं विषहेत मर्त्यः ॥ ७९ ॥
प्राग्ज्योतिषं नाम बभूव दुर्गं
पुरं घोरमसुराणामसह्यम् ।
महाबलो नरकस्तत्र भौमो
जहारादित्या मणिकुण्डले शुभे ॥ ८० ॥

---

रुद्रो वा हरिवान् वज्रहस्त इत्यत्र रुद्रो वा हरिवान् पाकशासन इत्यभिधानात् वज्रहस्तः इन्द्रो वा ते पुरस्ताद्यातु सुग्रीवयुक्तेन रथेन वा अदृश्य एव वा रक्षतु ॥ ६८ ॥

[ नील० ] सागरं सगरैर्वर्द्धितं सलिलस्य महोदधिं जलसमुद्रम् अप्रमेयम् अनन्तत्वात् ॥ ७१ ॥ तलेन चपेटिकया शिलोच्चयमिति काठिन्यप्रदर्शनार्थं विशेषणम् । श्वेतं कैलासं, बलवदाश्रितत्वमनेन सूचितम् ॥ ७२ ॥ सुदर्शनं नाम राजानं नग्नजितः पुत्रैर्बद्धं मुमोच । देवतानां ललामं रत्नभूतं देवैरपि शिरसा धार्यमित्यर्थः ॥ ७५ ॥ कपाटेन वक्षस्तटाघातेन दन्तकूरे संग्रामे । अन्ये तु 'कपाटे निजघान' इति पाठं प्रकल्प्य कपाटे नगरे । एवं दन्तकूरे चेति व्याचख्युः । अनाथा—संबभूवेति योज्यम् ॥ ७६ ॥ अयं कृष्णः तं युद्धे मन्यते युद्धार्थं प्रार्थयते सर्वदैव सः इदानीं तेनैव कृष्णेन हतः शेते । यथा जम्भो दैत्यः शैलं वेगेन अभिहत्य शैलाघातात्स्वयंकृतात् हतः शेते तद्वत् ॥ ७७ ॥ ततोग्रसेनस्येति संधिरार्षः तथेति वा पाठः ॥ ७८ ॥ खस्थं खेचरं विभीषणं निर्भयं शतघ्नीं शक्तिं शाल्वेन क्षिप्तां दोर्भ्यां पाणिभ्यां कन्दुकवत् प्रत्यगृह्णात् ॥ ७९ ॥ भौमो भूमिपुत्रः ॥ ८० ॥

[ अर्जु० ] सागरं सगरखातं । ( पुत्राद्वा ) महोदधिं समुद्रान्तरं सलिलस्याप्रमेयं अप्रमेयजलं समुद्रम् ॥ ७१ ॥ श्वेतं कैलासम् ॥ ७२ ॥ सुदर्शनं चक्रं नग्नजितः सुतैर्मायया बद्धं मुमुचेत्यर्थः । ललामं तिलकम् ॥ ७५ ॥ कपाटे नगरे । दन्तकूरे नगर एव । अनाथा राजशून्या ॥ ७६ ॥ जम्भं शैलमभिहत्य कृष्णेन हतः ॥ ७७ ॥ सौभं नगरम् । खस्थं गगनचरम् ॥ ७९ ॥

[ सर्व० ] महोदधिं महोदकनिधानमतएव सलिलस्य सलिलेनाप्रमेयमपरिमेयम् ॥ ७१ ॥ शिलोच्चयं शिलागिरिम् श्वेतं कैलासम् ॥ ७२ ॥ सुदर्शनं नाम कंचिद्राजानम् नग्नजितः सुतैर्बद्धं देवतानामपि मध्ये ललामं प्रशस्तम् ॥ ७५ ॥ स्वमेव कपाटे नगरभेदे । एवं दंतकूरेऽपि ॥ ७६ ॥ मन्यते सुयोधनः । कश्चिज्जम्भः शैलभेदमभिहत्य यथा तदभिघाताद्धतः शेते ॥ ७८ ॥ शाल्वो राजा यस्य पुरस्य सौभस्य तं शाल्वराजम् खस्थं खसञ्चारि ॥ ७९ ॥

---

७२ ख. शीर्येत न चा° । ७७ ख. म. °रजेयमेक° । ७८ ख. म. मध्यगतं तपन्तम् ।

न तं देवाः सह शक्रेण शेकुः
समागता युधि मृत्योरभीताः ।
दृष्ट्वा च तं विक्रमं केशवस्य
बलं तथैवास्त्रमवारणीयम् ॥ ८१ ॥
जानन्तोऽस्य प्रकृतिं केशवस्य
न्ययोजयन्दस्युवधाय कृष्णम् ।
स तत्कर्म प्रतिशुश्राव दुष्कर-
मैश्वर्यवान्सिद्धिषु वासुदेवः ॥ ८२ ॥
निर्मोचने षट् सहस्राणि हत्वा
संच्छिद्य पाशान्सहसा क्षुरान्तान् ।
मुरं हत्वा विनिहत्यौघरक्षो
निर्मोचनं चापि जगाम वीरः ॥ ८३ ॥
तत्रैव तेनास्य बभूव युद्धं
महाबलेनातिबलस्य विष्णोः ।
शेते स कृष्णेन हतः परासु-
र्वातेनेव मथितः कर्णिकारः ॥ ८४ ॥
आहृत्य कृष्णो मणिकुण्डले ते
हत्वा च भौमं नरकं मुरं च ।
श्रिया वृतो यशसा चैव विद्वान्
प्रत्याजगामाप्रतिमप्रभावः ॥ ८५ ॥

अस्मै वराण्यददंस्तत्र देवा
दृष्ट्वा भीमं कर्म कृतं रणे तत् ।
श्रमश्च ते युद्ध्यमानस्य न स्या-
दाकाशे चाप्सु च ते क्रमः स्यात् ॥ ८६ ॥
शस्त्राणि गात्रे न च ते क्रमेर-
न्नित्येव कृष्णश्च ततः कृतार्थः ।
एवं रूपे वासुदेवेऽप्रमेये
महाबले गुणसंपत्सदैव ॥ ८७ ॥
तमसह्यं विष्णुमनन्तवीर्य-
माशंसते धार्तराष्ट्रो विजेतुम् ।
सदा ह्येनं तर्कयते दुरात्मा
तच्चाप्ययं सहतेऽस्मान् समीक्ष्य ॥ ८८ ॥
पर्यागतं मम कृष्णस्य चैव
यो मन्यते कलहं संप्रसह्य ।
शक्यं हर्तुं पाण्डवानां ममत्वं
तद्वेदिता संयुगं तत्र गत्वा ॥ ८९ ॥
नमस्कृत्वा शान्तनवाय राज्ञे
द्रोणायाथो सहपुत्राय चैव ।
शारद्वतायाप्रतिद्वन्द्विने च
योत्स्याम्यहं राज्यमभीप्समानः ॥ ९० ॥

---

[लक्षा०] निनदन्तं प्रगृह्येत्यत्र निनदन्तं वृषभम्॥७५॥

[ नील० ] शेकुर्जेतुमिति शेषः ॥ ८१ ॥ प्रकृतिं स्वभावं दस्युहननशीलतां प्रतिशुश्राव अङ्गीचकार सिद्धिषु कार्यसिद्धिषूपस्थितासु ऐश्वर्यवान् सामर्थ्यवान् ॥ ८२ ॥ निर्मोचने नगरे क्षुरान्तान् तीक्ष्णधारान् लोहमयानित्यर्थः। ओघसंज्ञं रक्षः ॥ ८३ ॥ वराणि वरान् अददन् दत्तवन्तः क्रमः गतिः ॥ ८६ ॥ तर्कयते बद्धुं यतते ॥ ८८ ॥ प्रसह्य पर्यागतं हठात्प्राप्तं मन्यते वाञ्छति अस्मासु मित्रभेदं प्रार्थयते इत्यर्थः । तेन च पाण्डवानां कृष्णे ममत्वम् अस्मदीयत्वं हर्तुं शक्यमिति मन्यते तत् तत्र कुरुक्षेत्रे संयुगं गत्वा प्राप्य वेदिता ज्ञास्यति ॥ ८९ ॥

[ अर्जु० ] ऐश्वर्यवान् अप्रतिहतेच्छावान् । सिद्धिषु कार्यसिद्धिषु ॥ ८२ ॥ निम्लोचने नगरे निर्मोचन इति च पाठः ॥ पाशान् मुरेण प्रसारितान् ॥ ८३ ॥ क्रमो गतिः ॥ ८६ ॥ अस्मान् समीक्ष्य अस्मत्स्नेहात् अथवा अस्माभिस्तद्वधस्य प्रतिज्ञातत्वात् ॥ ८८ ॥ पर्यागतं क्रमप्राप्तं मम कृष्णस्य च कलहं यन्मन्यते दुर्योधनः यच्च पाण्डवानामुपरीति शेषः, ममत्वं स्नेहं शक्यं हर्तुमिति मन्यते तद् वेदिता वेदिष्यति संयुगं युद्धं गत्वा ॥ ८९ ॥

[ सर्व० ] प्रकृतिं स्वभावम् । दस्युवधाय असुरमारणाय ऐश्वर्यं शक्तिस्तद्वान् । सिद्धिषु कार्यसिद्धिषु निमित्तभूतासु ॥ ८२ ॥ निम्लोचने नगरे ॥ ८३ ॥ [ तेन नरकेन ] इत्येव एतावतैव ॥ ८७ ॥ तर्कयत्याकलयति । अस्मान्समीक्ष्यास्मदपेक्षया ॥ ८८ ॥ पर्यागतं क्रमागतम् । मम कृष्णस्य पाण्डवानां च ममत्वमन्योन्यस्नेहं हर्तुं यन्मन्यते तत्कलहं युद्धं प्रसज्यासज्य तत्र स कलहं संयुगं गत्वा युद्धं कृत्वा वेदिता ज्ञास्यति ॥ ९० ॥

[ लक्षा० ] निर्मोचने षट् सहस्राणि हत्वेत्यत्र निर्मोचने पाशानां ग्रन्थिनिर्मोचने सति । निर्मोचनं चापि जगामेत्यत्र निर्मोचनं पाशानां निर्मोचनं जगाम ॥८३॥ क्रमः पादविक्षेपः स्यात् ॥८६॥ नित्यं च कृष्णश्चेत्यत्र नित्यं च कृतार्थः कृष्णः ततः देववराच्च कृतार्थोऽभूदिति योजना ॥ ८७ ॥

---

८१ ख. म. शक्रेण सेहिरे समागता आहरणाय भीताः । ख. म. मपारणीयम् । ८३ ख. म. त्यौघराक्षसं निम्लोचनं । ८८ ख. म. °राष्ट्रो बलेन ।

धर्मेणास्तं निधनं तस्य मन्ये
  यो योत्स्यते पाण्डवैः पापबुद्धिः ।
मिथ्या ग्लहे निर्जितास्तैर्नृशंसैः
  संवत्सरान्वै द्वादश राजपुत्राः ॥ ९१ ॥
वासः कृच्छ्रो विहितश्चाप्यरण्ये
  दीर्घं कालं चैकमज्ञातवर्षम् ।
ते हि कस्माज्जीवतां पाण्डवाना
  नन्दिष्यन्ते धार्तराष्ट्राः पदस्थाः ॥ ९२ ॥
ते चेदस्मान्युद्ध्यमानान् जयेयु-
  र्देवैर्महेन्द्रप्रमुखैः सहायैः ।
धर्मादधर्मश्चरितो गरीया-
  निति ध्रुवं नास्ति कृतं च साधु ॥ ९३ ॥
न चेदिमं पुरुषं कर्मबद्धं
  न चेदस्मान्मन्यतेऽसौ विशिष्टान् ।
आशंसेऽहं वासुदेवद्वितीयो
  दुर्योधनं सानुबन्धं निहन्तुम् ॥ ९४ ॥
न चेदिदं कर्म नरेन्द्र वन्ध्यं
  न चेद्भवेत्सुकृतं निष्फलं वा ।
इदं च तच्चाभिसमीक्ष्य नूनं
  पराजयो धार्तराष्ट्रस्य साधुः ॥ ९५ ॥
प्रत्यक्षं वः कुरवो यद्ब्रवीमि
  युध्यमाना धार्तराष्ट्रा न सन्ति ।
अन्यत्र युद्धात्कुरवो यदि स्यु-
  र्न युद्धे वै शेष इहास्ति कश्चित् ॥ ९६ ॥
हत्वा त्वहं धार्तराष्ट्रान्सकर्णा-
  न्राज्यं कुरूणामवजेता समग्रम् ।
यद्वः कार्यं तत्कुरुध्वं यथास्व-
  मिष्टान्दारानात्मभोगान् भजध्वम् ॥ ९७ ॥

[ नील० ] साधु कृतं सत्कर्म नास्ति निष्फलत्वात् वृथैव धर्म इत्यर्थः ॥ ९२ ॥ न चेदिति यदि कर्मबद्धः पुरुषो न स्यात् यदि वा वयं तेभ्यः श्रेष्ठाः न स्याम तर्हि तस्यैव जयो भविष्यतीत्यर्थः ॥ ९४ ॥ इदं राज्यस्याप्रदानमिदानींतनम् । तच्च राज्यात् निःसारणं तदानींतनम् अभिसमीक्ष्य आलोच्य पापवशात्पराजय एव तस्येत्यर्थः ॥९५॥

[ अर्जु० ] धर्मेण क्षात्रेण । नियतमशक्यं तवास्मीत्येवं वादिभ्यो वृत्तम् । ग्लहे पणे ॥ ९१ ॥ अद्य वनवासाज्ञातवासनिवृत्तिसमये जीवतां पाण्डवानां जीवतः पाण्डवाननादृत्य कस्मान्नन्दिष्यन्ति ॥९२॥ ते चेद्यदि जयेयुस्तदा धर्मादधर्मो गरीयान् । सुकृतं पुण्यं साधु समुच्चरितं च नास्ति ॥ ९३ ॥ इमं पुरुषं क्षेत्रज्ञं कर्मबद्धं चेद् यदि मन्यते यदि चास्मान् पुण्यकृतोऽपि विशिष्टान् मन्यते तदास्मै नास्तिकः नास्तिकं च धर्मपराङ्मुखं वासुदेवद्वितीयो जेतुमाशंसे प्रभवामि ॥ ९४ ॥ इदं शुभाशुभं कर्म न चेद् वन्ध्यं विधिना नियतं नियतत्वे सति यदि पुरुषस्य स्वकर्म क्षत्रादिजातिप्रतिबद्धं युद्धादि नास्ति तत्रापि तयोः पक्षयोः समीक्ष्य विचार्य धार्त्तराष्ट्रस्य धृष्टबलवादिनः पराजयः साधुः धृष्टबलस्याप्यस्मास्वधिकत्वात् ॥ ९५ ॥ हे कुरवो यद् ब्रवीमि वो युष्मान् भावित्वेऽपि तत् प्रत्यक्षं स्फुटत्वाद्दर्शनस्य । तदेवाह युध्यमाना अन्यत्र युद्धात् कुरवः सन्तीति शेषः । युध्यतां तु परीप्सन् राज्यं प्राप्तुमिच्छन् शेषः कश्चिन्नास्ति ॥ ९६ ॥

[ सर्व० ] ग्लहे पणे मिथ्या निर्जिताः ॥ ९१ ॥ अद्य वनवासाद्व्यावृत्तेष्वस्मासु जीवतां पाण्डवानाम् अनादरे षष्ठी अनादृत्य बलस्था बलिनो भूत्वा कस्मान्नन्दिष्यन्ते अपि तु न नन्दिष्यन्त इत्यर्थः ॥९२॥ ते यद्यस्मान् जयेयुस्तदा धर्मादधर्मो गरीयान् । साधुकृतं सुकृतं नास्ति ॥ ९३ ॥ न चेदिमं पुरुषमात्मानं कर्मबद्धं कर्मपराधीनं मन्यते दैवमनवधार्य पुरुषकारमात्रेण यदि राज्यमाप्तुमिच्छतीत्यर्थः । तथाऽस्मांश्च यदि विशिष्टान् न मन्यते । अस्मांश्च पुरुषकारहीनांश्च मन्यते । एतेनास्मान् दुर्योधनोऽवधारयतीति दर्शितं तदाशंसे इच्छामि । अनुबन्धोऽनुचरः ॥ ९४ ॥ न चेदिदं कर्म शुभाशुभं नरेषु बद्धं नियतफलं तदा न विद्यते पुरुषस्य स्वकर्म अदृष्टरूपं तस्य फलैकोन्नेयत्वात् । एवं च सत्कर्मकारित्वेन वयं जयेम नाम तथापि पुरुषकारेणापि जेतुं शक्ता एव तदाह—इदं च प्रागुक्तं पौरुषमस्माकं तथापि धर्माभावपक्षे समीक्ष्य दृष्ट्वा नूनं निश्चितं पराजयो धार्तराष्ट्रस्य साधुः युक्तिसिद्धः ॥ ९५ ॥ प्रत्यक्षं संमुखे ब्रवीमि संयुद्ध्यमाना धार्तराष्ट्रा न सन्ति न भविष्यन्ति । अन्यत्र युद्धं कुरवः परीप्सन् पर्याप्तुमिच्छन्ति । इतश्च लोपः परस्मैपदेष्वितीकारलोपः । यतो न युध्यतां शेष इहास्ति ॥ ९६ ॥

[ लक्षा० ] नचेदिममपजयं कर्मबन्धमित्यत्र इममस्माकमपजयं कर्मबन्धं दुर्द्यूताख्ये कर्मणो यस्य तं न मन्यते

९१ म. ख. धर्मेणास्तं नियतं तस्य मेने यो योत्स्यते पाण्डवैर्धर्मचारिभिः । ९५ ख. म. नरेषु बद्धं न विद्यते पुरुषस्य स्वकर्म । ९६ ख. म. कुरवः परीप्सन् न युध्यतां शे । ९७ ख. यथावदिष्टान्दारानात्मजांश्चोपभुङ्क्त ।

अप्येवं नो ब्राह्मणाः सन्ति वृद्धा
बहुश्रुताः शीलवन्तः कुलीनाः ।
सांवत्सरा ज्योतिषि चाभियुक्ता
नक्षत्रयोगेषु च निश्चयज्ञाः ॥ ९८ ॥
उच्चावचं दैवयुक्तं रहस्यं
दिव्याः प्रश्ना मृगचक्रा मुहूर्ताः ।
क्षयं महान्तं कुरुसृञ्जयानां
निवेदयन्ते पाण्डवानां जयं च ॥ ९९ ॥
यथा हि नो मन्यतेऽजातशत्रुः
संसिद्धार्थो द्विषतां निग्रहाय ।
जनार्दनश्चाप्यपरोक्षविद्यो
न संशयं पश्यति वृष्णिसिंहः ॥ १०० ॥
अहं तथैवं खलु भाविरूपं
पश्यामि बुद्ध्या स्वयमप्रमत्तः ।
दृष्टिश्च मे न व्यथते पुराणी
संयुध्यमाना धार्तराष्ट्रा न सन्ति ॥ १०१ ॥
अनालब्धं जृम्भति गाण्डिवं धनु-
रनाहता कम्पति मे धनुर्ज्या ।
बाणाश्च मे तूणमुखाद्विसृत्य
मुहुर्मुहुर्गन्तुमुशन्ति चैव ॥ १०२ ॥
खड्गः कोशान्निःसरति प्रसन्नो
हित्वेव जीर्णामुरगस्त्वचं स्वाम् ।
ध्वजे वाचो रौद्ररूपा भवन्ति
कदा रथो योक्ष्यते ते किरीटिन् ॥ १०३ ॥
गोमायुसंघाश्च नदन्ति रात्रौ
रक्षांस्यथो निपतन्त्यन्तरिक्षात् ।
मृगाः शृगालाः शितिकण्ठाश्च काका
गृध्रा बकाश्चैव तरक्षवश्च ॥ १०४ ॥
सुवर्णपत्राश्च पतन्ति पश्चा-
दृष्ट्वा रथं श्वेतहयप्रयुक्तम् ।
अहं ह्येकः पार्थिवान्सर्वयोधान्
शरान्वर्षन्मृत्युलोकं नयेयम् ॥ १०५ ॥
समाददानः पृथगस्त्रमार्गा-
न्यथाग्निरिद्धो गहनं निदाघे ।
स्थूणाकर्णं पाशुपतं महास्त्रं
ब्राह्मं चास्त्रं यच्च शक्रोऽप्यदान्मे ॥ १०६ ॥

---

चेत् ॥ ९४ ॥ अन्यत्र युद्धादित्यत्र युद्धादन्यत्र कुरवो यदि स्युः तर्हि स्युरेव ॥ ९६ ॥

[ नील० ] दिव्या अनागतार्थज्ञापकाः मृगचक्राः चक्राणि सर्वतोभद्रादीनि शैवागमप्रसिद्धानि मृगयन्ते किं नक्षत्रं केन ग्रहेण विद्धमिति विचारयन्ति सदसत्फलकथनार्थं ते चक्रमृगाः । पूर्वनिपात आर्षः, मृगाणि मार्गितानि चक्राणि यैस्ते इति वा ॥ ९९ ॥ संशयं युद्धे जयपराजयविषये न पश्यति यतः अपरोक्षविद्यः दिव्यदृष्ट्याऽतीतानागतादिकं पश्यन् ॥ १०० ॥ पुराणी योगप्रभाववती न व्यथते न तिरस्कृता ॥ १०१ ॥

[ अर्जु० ] सांवत्सराः संवत्सरवेदिनः ज्योतिषि ग्रहणे अभियुक्ता अभिज्ञाः ॥ ९८ ॥ उच्चावचमागन्तुकलाभालाभं दैवयुक्तं शुभं पुरुषकारोद्यतस्य शुभं रहस्यं दशाफलं दिव्याः प्रश्नाः अस्मिन्नारम्भे इदं फलं भविष्यति दैवान् प्रश्नान् मृगचक्रान् मुहूर्त्तान् इति च मृगचक्राः शुभाशुभफलप्रदा मुहूर्त्ताः ॥ ९९ ॥ संसिद्धार्थमवश्यंभाविनम् । अपरोक्षविद्यः सर्वप्रत्यक्षदर्शी ॥ १०० ॥ अप्रमत्तोऽवहितः । दृष्टिर्न व्यथते न चलति । न हीयत इति यावत् ॥ १०१ ॥ अनालब्धमनास्पृष्टं जृम्भति उल्लसति उशन्ति इच्छन्ति ॥ १०२ ॥ शैक्ष्यः खड्गः ॥ १०३ ॥ तरक्षवः चित्रव्याघ्राः ॥ १०४ ॥ सुवर्णपत्रा गरुडाः ॥ १०५ ॥

[ सर्व० ] ब्राह्मणा अप्येवं नो निवेदयन्तः सांवत्सराः सन्तीत्यन्वयः ॥ ९८ ॥ तथा उच्चावचं नैकविधं रहस्यं गोप्यं दैवयुक्तमाधिदैविकं सूर्यमण्डलच्छिद्रादि । दिव्यानुत्तमान् प्रश्नानुपश्रुतीः मृगचक्रान् मृगसमूहान् शुभाशुभसूचकान् मुहूर्तान् ग्रहसंचारादिकृतकालविशेषान् पाण्डवजयकुरुसृंजयक्षयकान् निवेदयन्ति ॥ ९९ ॥ यथा हीति । शकुनानन्तरमजातशत्रुरहिंसापरोऽपि नोऽस्मान् मन्यते द्विषतां निग्रहाय, तथा जनार्दनोऽपि नसंशयमिति क्रियाविशेषणं तेन नासौ संशयेन पश्यति अपि तु निश्चित्यैवेत्यर्थः ॥ १०० ॥ जृंभति नमनोन्नमनं कुरुते । उशन्तीच्छन्ति ॥ १०२ ॥ शैक्यः खड्गः ॥ १०३ ॥ शितिकण्ठाः धवलकण्ठाः काकाः बलाका द्रोणकाकाः ॥ १०४ ॥ सुवर्णपत्राः स्वर्णपक्षाः द्वीपान्तरजाताः ॥ १०५ ॥

[ लक्षा० ] उच्चावचं दैवयुक्तं रहस्यमित्यत्र दैवप्रज्ञाः दैवात् दैवबलात् प्रकर्षेण जानन्तीति दैवप्रज्ञाः । ग्रहचर्या च मुहूर्तश्च येषु ते तथोक्ताः ॥ ९९ ॥ [ पूर्वरूपाणि

---

९९ ख. गृहचर्या । १०१ ख. अहं च जानन्नभिविश्वरूपान् । १०४ ख. रुवन्ति । १०६ ख. पाशुपतं च घोरं । ख. शक्रो विवेद ।

वधे धृतो वेगवतः प्रमुञ्च-
न्नाहं प्रजाः किंचिदिहावशिष्ये ।
शान्तिं लप्स्ये परमो ह्येष भावः
स्थिरो मम ब्रूहि गावल्गणे तान् ॥ १०७ ॥
ये वैजय्याः समरे सूत लब्ध्वा
देवानपीन्द्रप्रमुखान्समेतान् ।
तैर्मन्यते कलहं संप्रसह्य
स धार्तराष्ट्रः पश्यत मोहमस्य ॥ १०८ ॥
वृद्धो भीष्मः शान्तनवः कृपश्च
द्रोणः सपुत्रो विदुरश्च धीमान् ।
एते सर्वे यद्वदन्ते तदस्तु
आयुष्मन्तः कुरवः सन्तु सर्वे ॥ १०९ ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

## एकोनपञ्चाशोऽध्यायः ४९

भीष्मेण सभायां वासुदेवार्जुनयोर्नरनारायणावतारत्वमुक्त्वा कर्णगर्हणम् ॥ १ ॥

**वैशम्पायन उवाच—**

समवेतेषु सर्वेषु तेषु राजसु भारत ।
दुर्योधनमिदं वाक्यं भीष्मः शान्तनवोऽब्रवीत् ॥१॥
बृहस्पतिश्चोशना च ब्रह्माणं पर्युपस्थितौ ।
मरुतश्च सहेन्द्रेण वसवश्चाग्निना सह ॥ २ ॥
आदित्याश्चैव साध्याश्च ये च सप्तर्षयो दिवि ।
विश्वावसुश्च गन्धर्वः शुभाश्चाप्सरसां गणाः ॥ ३ ॥
नमस्कृत्योपजग्मुस्ते लोकवृद्धं पितामहम् ।
परिवार्य च विश्वेशं पर्यासत दिवौकसः ॥ ४ ॥
तेषां मनश्च तेजश्चाप्याददानाविवौजसा ।
पूर्वदेवौ व्यतिक्रान्तौ नरनारायणावृषी ॥ ५ ॥
बृहस्पतिस्तु पप्रच्छ ब्रह्माणं काविमाविति ।
भवन्तं नोपतिष्ठेते तौ नः शंस पितामह ॥ ६ ॥

**ब्रह्मोवाच—**

यावेतौ पृथिवीं द्यां च भासयन्तौ तपस्विनौ ।
ज्वलन्तौ रोचमानौ च व्याप्यातीतौ महाबलौ ॥७॥
नरनारायणावेतौ लोकाल्लोकं समास्थितौ ।
ऊर्जितौ स्वेन तपसा महासत्त्वपराक्रमौ ॥ ८ ॥
एतौ हि कर्मणा लोकं नन्दयामासतुर्ध्रुवम् ।
द्विधाभूतौ महाप्राज्ञौ विद्धि ब्रह्मन् परन्तपौ ।
असुराणां विनाशाय देवगन्धर्वपूजितौ ॥ ९ ॥

**वैशम्पायन उवाच—**

जगाम शक्रस्तच्छ्रुत्वा यत्र तौ तेपतुस्तपः ।
सार्धं देवगणैः सर्वैर्बृहस्पतिपुरोगमैः ॥ १० ॥
तदा देवासुरे युद्धे भये जाते दिवौकसाम् ।
अयाचत महात्मानौ नरनारायणौ वरम् ॥ ११ ॥

---

युक्तयेत्यत्र पूर्वरूपाणि पूर्ववद्राज्यार्हरूपाणि भविष्यन्ति ] मृगाश्चैव तरक्षवश्चेत्यत्र मार्गयन्तीति मृगाः ॥ १०४ ॥

[ नील० ] वधे धृतः वधार्थं सज्जः वेगवतः बाणान् ॥ १०७ ॥ विजयः कर्म येषां ते वैजय्याः देवानपि लब्ध्वा विजयवत एवेत्यर्थः ॥ १०८ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[ अर्जु० ] ये पाण्डवाः समरे इन्द्रादीनपि सहायान्प्रा- रोचयत् तैरेव पाण्डवैः संप्रसज्य कलहं मन्यत इति मोहमस्य पश्यतेत्यन्वयः ॥ १०८ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[ सर्व० ] यैः पक्षभूतैः पाण्डवैः देवानपि सहायान्प्रा- रोचयत् पुरा धार्तराष्ट्रो देवेभ्योऽपि न भीतिं चक्रे इति यावत् । तैरेव पाण्डवैः सह कलहं संमन्यते अनुमन्यते इति मोहमस्य पश्यतेत्यन्वयः ॥ १०७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[ लक्षा० ] पश्यतु मोहमस्येत्यत्र अस्य मोहं भवान् पश्यतु इति संबन्धः ॥ १०७ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अष्टचत्वारिंशोऽध्यायः ॥ ४८ ॥

[ नील० ] समवेतेष्विति ॥ १ ॥ पर्यासत परिवार्य तस्थुः ॥ ४ ॥ लोकात् मानुषात् लोकं ब्राह्मम् ॥ ८ ॥ अयाचत इन्द्रः ॥ ११ ॥

[ अर्जु० ] व्यतिक्रान्तौ उल्लङ्घ्य व्यवस्थितौ ॥ ५ ॥

---

१०७ ख. वधेवृतान् । १०८ ख. म. नित्यं पुनः सचिवैर्यैरवोचद्देवानपीन्द्रप्रमुखान्सहायान् । ख. म. संप्रयुज्य । इति अष्टचत्वारिंशोऽध्यायः ॥४८॥
२ ख. म. समुपस्थितौ । ९ ख. म. लोकान् । ख. म. असुराणामभावाय । ११ ख. म. घोरे भये ।

तावब्रूतां वृणीष्वेति तदा भरतसत्तम ।
अथैतावब्रवीच्छक्रः सह्यं नः क्रियतामिति ॥ १२ ॥
ततस्तौ शक्रमब्रूतां करिष्यावो यदिच्छसि ।
ताभ्यां च सहितः शक्रो विजिग्ये दैत्यदानवान् १३
नर इन्द्रस्य संग्रामे हत्वा शत्रून्परन्तपः ।
पौलोमान्कालखञ्जांश्च सहस्राणि शतानि च ॥१४॥
एष भ्रान्ते रथे तिष्ठन् भल्लेनापाहरच्छिरः ।
जम्भस्य ग्रसमानस्य तदा ह्यर्जुन आहवे ॥ १५ ॥
एष पारे समुद्रस्य हिरण्यपुरमारुजत् ।
जित्वा षष्टिं सहस्राणि निवातकवचान्रणे ॥ १६ ॥
एष देवान्सहेन्द्रेण जित्वा परपुरञ्जयः ।
अतर्पयन्महाबाहुरर्जुनो जातवेदसम् ॥ १७ ॥
नारायणस्तथैवात्र भूयसोऽन्यान् जघान ह ।
एवमेतौ महावीर्यौ तौ पश्यत समागतौ ॥ १८ ॥
वासुदेवार्जुनौ वीरौ समवेतौ महारथौ ।
नरनारायणौ देवौ पूर्वदेवाविति श्रुतिः ॥ १९ ॥
अजेयौ मानुषे लोके सेन्द्रैरपि सुरासुरैः ।
एष नारायणः कृष्णः फाल्गुनश्च नरः स्मृतः ।
नारायणो नरश्चैव सत्त्वमेकं द्विधाकृतम् ॥ २० ॥
एतौ हि कर्मणा लोकानश्नुवातेऽक्षयान् ध्रुवान् ।
तत्र तत्रैव जायेते युद्धकाले पुनःपुनः ॥ २१ ॥
तस्मात्कर्मैव कर्तव्यमिति होवाच नारदः ।
एतद्धि सर्वमाचष्ट वृष्णिचक्रस्य वेदवित् ॥ २२ ॥
शङ्खचक्रगदाहस्तं यदा द्रक्ष्यसि केशवम् ।
पर्याददानं चास्त्राणि भीमधन्वानमर्जुनम् ॥ २३ ॥
सनातनौ महात्मानौ कृष्णावेकरथे स्थितौ ।
दुर्योधन तदा तात स्मर्ताऽसि वचनं मम ॥ २४ ॥
नोचेदयमभावः स्यात् कुरूणां प्रत्युपस्थितः ।
अर्थाच्च तात धर्माच्च तव बुद्धिरुपप्लुता ॥ २५ ॥
न चेद्ग्रहीष्यसे वाक्यं श्रोताऽसि सुबहून्हतान् ।
तवैव हि मतं सर्वे कुरवः पर्युपासते ॥ २६ ॥
त्रयाणामेव च मतं तत्त्वमेकोऽनुमन्यसे ।
रामेण चैव शप्तस्य कर्णस्य भरतर्षभ ॥ २७ ॥
दुर्जातेः सूतपुत्रस्य शकुनेः सौबलस्य च ।
तथा क्षुद्रस्य पापस्य भ्रातुर्दुःशासनस्य च ॥ २८ ॥

कर्ण उवाच—

नैवमायुष्मता वाच्यं यन्मामात्थ पितामह ।
क्षत्रधर्मे स्थितो ह्यस्मि स्वधर्मादनपेयिवान् ॥२९॥
किं चान्यन्मयि दुर्वृत्तं येन मां परिगर्हसे ।
नहि मे वृजिनं किंचिद्धार्तराष्ट्रा विदुः क्वचित् ॥३०॥
नाचरं वृजिनं किंचिद्धार्तराष्ट्रस्य नित्यशः ।
अहं हि पाण्डवान्सर्वान्हनिष्यामि रणे स्थितान् ३१
प्राग्विरुद्धैः शमं सद्भिः कथं वा क्रियते पुनः ।
राज्ञो हि धृतराष्ट्रस्य सर्वं कार्यं प्रियं मया ।
तथा दुर्योधनस्यापि स हि राज्ये समाहितः ॥३२॥

वैशम्पायन उवाच—

कर्णस्य तु वचः श्रुत्वा भीष्मः शान्तनवः पुनः ।
धृतराष्ट्रं महाराज संभाष्येदं वचोऽब्रवीत् ॥ ३३ ॥
यदयं कत्थते नित्यं हन्ताऽहं पाण्डवानिति ।
नायं कलाऽपि संपूर्णा पाण्डवानां महात्मनाम् ॥३४॥

---

नोपतिष्ठेते नाभिवन्देते ॥ ६ ॥ अतीतौ अतिशयेन इतौ प्राप्तौ ॥ ७ ॥

[लक्षा०] विद्धि ब्रह्म परंतपावित्यत्र ब्रह्म परब्रह्म ॥९॥

[ नील० ] सह्यं साहाय्यम् ॥ १२ ॥ भ्रान्ते अस्थिरेऽपि रथे लक्ष्यात् न व्यपैतीत्याश्चर्यम् ॥ १५ ॥ आरुजत् पीडितवान् ॥ १६ ॥ भूयसो बहून् ॥ १८ ॥ सत्त्वं बुद्धिसत्त्वम् एक एव देवो योगप्रभावाद्रूपद्वयेन वर्तते इत्यर्थः ॥ २० ॥ अश्नुवाते व्याप्नुतः ॥ २१ ॥ कर्म युद्धं कर्तव्यं तयोरिति शेषः । आचष्ट आख्यातवान् नारद एव ॥ २२ ॥ स हि राज्ये इति । अस्य वचनं मया न कर्तव्यं किंतु राज्ञ एवेति भावः ॥ ३२ ॥ कलाऽपि षोडशांशोऽपि ॥ ३४ ॥

[ अर्जु० ] आरुजत् भग्नवान् ॥ १६ ॥ अश्नुवाते व्याप्नुतः ॥ २१ ॥ दुर्जातेः हीनजातेः ॥ २८ ॥ आयुष्मतेत्युपालम्भे । अनपेयिवान् अनपगतः ॥ २९ ॥ कत्थते आत्मानं श्लाघते । कला षोडशभागः ॥ ३४ ॥

[ लक्षा० ] तथार्जुन आहव इत्यत्र तथा जम्भशिरश्छेदनवत् एष नरः अर्जुनः अर्जुनो भूत्वा ॥ १५ ॥ तस्मात्कर्मैव कर्तव्यमित्यत्र कर्मैव संधिकर्मैव ॥ २२ ॥

इति श्रीम० भा० उ० वा० कृ० ल० एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

---

१२ म. साह्यं । १८ ख. म. °यणस्तथो वीरो । २४ ख. म. सनातनौ महेष्वासौ । २६ ख. म. वचः श्रोता । ३० ख म. किंचान्यदपि । ३१ ख. म. नास्ति । ३२ ख. म. पूर्वार्धे नास्ति । इति एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

अनयो योऽयमागन्ता पुत्राणां ते दुरात्मनाम् ।
तदस्य कर्म जानिहि सूतपुत्रस्य दुर्मतेः ॥ ३५ ॥
एतमाश्रित्य पुत्रस्ते मन्दबुद्धिः सुयोधनः ।
अवामन्यत तान्वीरान्देवपुत्रानरिन्दमान् ॥ ३६ ॥
किं चाप्येतेन तत्कर्म कृतपूर्वं सुदुष्करम् ।
तैर्यथा पाण्डवैः सर्वैरेकैकेन कृतं पुरा ॥ ३७ ॥
दृष्ट्वा विराटनगरे भ्रातरं निहतं प्रियम् ।
धनञ्जयेन विक्रम्य किमनेन तदा कृतम् ॥ ३८ ॥
सहितान्हि कुरून्सर्वानभियातो धनञ्जयः ।
प्रमथ्य चाच्छिनद्वासः किमयं प्रोषितस्तदा ॥३९॥
गन्धर्वैर्घोषयात्रायां ह्रियते यत्सुतस्तव ।
क्व तदा सूतपुत्रोऽभूद्य इदानीं वृषायते ॥ ४० ॥
ननु तत्रापि भीमेन पार्थेन च महात्मना ।
यमाभ्यामेव संगम्य गन्धर्वास्ते पराजिताः ॥४१॥
एतान्यस्य मृषोक्तानि बहूनि भरतर्षभ ।
विकत्थनस्य भद्रं ते सदा धर्मार्थलोपिनः ॥४२॥
भीष्मस्य तु वचः श्रुत्वा भारद्वाजो महामनाः ।
धृतराष्ट्रमुवाचेदं राजमध्येऽभिपूजयन् ॥ ४३ ॥
यदाह भरतश्रेष्ठो भीष्मस्तत्क्रियतां नृप ।
न काममर्थलिप्सूनां वचनं कर्तुमर्हसि ॥ ४४ ॥
पुरा युद्धात्साधु मन्ये पाण्डवैः सह संगतम् ।
यद्वाक्यमर्जुनेनोक्तं सञ्जयेन निवेदितम् ॥ ४५ ॥
सर्वं तदपि जानामि करिष्यति च पाण्डवः ।
नह्यस्य त्रिषु लोकेषु सदृशोऽस्ति धनुर्धरः ॥ ४६ ॥
अनादृत्य तु तद्वाक्यमर्थवद्द्रोणभीष्मयोः ।
ततः स सञ्जयं राजा पर्यपृच्छत पाण्डवान् ॥४७॥
तदैव कुरवः सर्वे निराशा जीवितेऽभवन् ।
भीष्मद्रोणौ यदा राजा न सम्यगनुभाषते ॥४८॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

## पञ्चाशोऽध्यायः ५०

धृतराष्ट्रेण पाण्डवसहायान्पृष्टस्य संजयस्य कश्मलप्राप्तिः ॥ १ ॥ प्रत्याश्वस्तेन च तत्र दृष्टस्य सर्वस्य सभायामुपवर्णनम् ॥ २ ॥

**धृतराष्ट्र उवाच—**

किमसौ पाण्डवो राजा धर्मपुत्रोऽभ्यभाषत ।
श्रुत्वेह बहुलाः सेनाः प्रीत्यर्थं नः समागताः ॥१॥
किमसौ चेष्टते सूत योत्स्यमानो युधिष्ठिरः ।
के वाऽस्य भ्रातृपुत्राणां पश्यन्त्याज्ञेप्सवो मुखम् ॥२॥
केस्विदेनं वारयन्ति युद्धाच्छाम्येति वा पुनः ।
निकृत्या कोपितं मन्दैर्धर्मज्ञं धर्मचारिणम् ॥ ३ ॥

**सञ्जय उवाच—**

राज्ञो मुखमुदीक्षन्ते पाञ्चालाः पाण्डवैः सह ।
युधिष्ठिरस्य भद्रं ते स सर्वाननुशास्ति च ॥ ४ ॥
पृथग्भूताः पाण्डवानां पाञ्चालानां रथव्रजाः ।
आयान्तमभिनन्दन्ति कुन्तीपुत्रं युधिष्ठिरम् ॥ ५ ॥
नभः सूर्यमिवोद्यन्तं कौन्तेयं दीप्ततेजसम् ।
पञ्चालाः प्रतिनन्दन्ति तेजोराशिमिवोदितम् ॥६॥
आगोपालाविपालाश्च नन्दमाना युधिष्ठिरम् ।
पाञ्चालाः केकया मत्स्याः प्रतिनन्दन्ति पाण्डवम् ॥७॥
ब्राह्मण्यो राजपुत्र्यश्च विशां दुहितरश्च याः ।
क्रीडन्त्योऽभिसमायान्ति पार्थं सन्नद्धमीक्षितुम् ॥८॥

**धृतराष्ट्र उवाच—**

सञ्जयाचक्ष्व येनास्मान्पाण्डवा अभ्ययुञ्जत ।
धृष्टद्युम्नस्य सैन्येन सोमकानां बलेन च ॥ ९ ॥

---

[ नील० ] ह्रियते यद्यदा । वृषायते वृषवन्नर्दति ॥४०॥

इति श्रीनैल० उद्योग० भा०भा० एकोनपञ्चाशत्तमोऽध्यायः ॥ ४९ ॥

[ अर्जु० ] प्रोषितो देशान्तरं गतः ॥ ३९ ॥ यत् यदा । वृषायते बलीवर्दवन्नर्दति ॥४०॥ भद्रं ते त्वत्संबन्धि भद्रमित्युपालम्भः ॥ ४२ ॥

इति श्रीम०भा०मर्जुनमिश्र०उद्यो० एकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

[ सर्व० ] वृषायते वृषवन्नर्दति ॥ ४८ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृत-
टीकायामेकोनपञ्चाशोऽध्यायः ॥ ४९ ॥

[ नील० ] किमसाविति ॥ १ ॥ येन सहायेन अस्मानालक्ष्य अभ्ययुञ्जत संनद्धा अभूवन् ॥ ९ ॥

---

२ ख. म कश्च स्य । ख. म. चिन्ताद्य मुखमीक्षते । ३ ख. म. शाम्य युद्धेति वा । ५ ख. म. पृथक्पृथक् । ६ ख. मिवोषतम् । ७ ख. म. °विपालेभ्यो । ९ ख. केनास्मान् । ख. सैन्यानां सोमकाः किंबला इव ।

**वैशम्पायन उवाच—**

गावल्गणिस्तु तत् पृष्टः सभायां कुरु संसदि ।
निःश्वस्य सुभृशं दीर्घं मुहुः संचिन्तयन्निव ॥ १० ॥
तत्रानिमित्ततो दैवात्सूतं कश्मलमाविशत् ।
तदाचचक्षे विदुरः सभायां राजसंसदि ॥ ११ ॥
सञ्जयोऽयं महाराज मूर्च्छितः पतितो भुवि ।
वाचं न सृजते कांचिद्धीनप्रज्ञोऽल्पचेतनः ॥ १२ ॥

**धृतराष्ट्र उवाच—**

अपश्यत्सञ्जयो नूनं कुन्तीपुत्रान्महारथान् ।
तैरस्य पुरुषव्याघ्रैर्भृशमुद्वेजितं मनः ॥ १३ ॥

**वैशम्पायन उवाच—**

संञ्जयश्चेतनां लब्ध्वा प्रत्याश्वस्येदमब्रवीत् ।
धृतराष्ट्रं महाराज सभायां कुरुसंसदि ॥ १४ ॥

**सञ्जय उवाच—**

दृष्टवानस्मि राजेन्द्र कुन्तीपुत्रान्महारथान् ।
मत्स्यराजगृहावासनिरोधेनावकर्शितान् ॥ १५ ॥
शृणु यैर्हि महाराज पाण्डवा अभ्ययुञ्जत ।
धृष्टद्युम्नेन वीरेण युद्धे वस्तेऽभ्ययुञ्जत ॥ १६ ॥
यो नैव रोषान्न भयान्न लोभान्नार्थकारणात् ।
न हेतुवादाद्धर्मात्मा सत्यं जह्यात्कदाचन ॥ १७ ॥
यः प्रमाणं महाराज धर्मे धर्मभृतां वरः ।
अजातशत्रुणा तेन पाण्डवा अभ्ययुञ्जत ॥ १८ ॥
यस्य बाहुबले तुल्यः पृथिव्यां नास्ति कश्चन ।
यो वै सर्वान्महीपालान्वशे चक्रे धनुर्धरः ।
यः काशीनङ्गमगधान्कलिङ्गांश्च युधाऽजयत् ॥ १९ ॥
तेन वो भीमसेनेन पाडवा अभ्ययुञ्जत ।
यस्य वीर्येण सहसा चत्वारो भुवि पाण्डवाः ॥ २० ॥
निःसृत्य जतुगेहाद्वै हिडिम्बात्पुरुषादकात् ।
यश्चैषामभवद्द्वीपः कुन्तीपुत्रो वृकोदरः ॥ २१ ॥
याज्ञसेनीमथो यत्र सिन्धुराजोऽपकृष्टवान् ।
तत्रैषामभवद्द्वीपः कुन्तीपुत्रो वृकोदरः ॥ २२ ॥
यश्च तान्संगतान्सर्वान्पाण्डवान्वारणावते ।
दह्यतो मोचयामास तेन वस्तेऽभ्ययुञ्जत ॥ २३ ॥
कृष्णायाश्चरता प्रीतिं येन क्रोधवशा हताः ।
प्रविश्य विषमं घोरं पर्वतं गन्धमादनम् ॥ २४ ॥
यस्य नागायुतैर्वीर्यं भुजयोः सारमर्पितम् ।
तेन वो भीमसेनेन पाण्डवा अभ्ययुञ्जत ॥ २५ ॥
कृष्णद्वितीयो विक्रम्य तुष्ट्यर्थं जातवेदसः ।
अजयद्यः पुरा वीरो युध्यमानं पुरन्दरम् ॥ २६ ॥
यः स साक्षान्महादेवं गिरिशं शूलपाणिनम् ।
तोषयामास युद्धेन देवदेवमुमापतिम् ॥ २७ ॥
यश्च सर्वान्वशे चक्रे लोकपालान् धनुर्धरः ।
तेन वो विजयेनाजा पाण्डवा अभ्ययुञ्जत ॥ २८ ॥
यः प्रतीचीं दिशं चक्रे वशे म्लेच्छगणायुताम् ।
स तत्र नकुलो योद्धा चित्रयोधी व्यवस्थितः ॥२९॥
तेन वो दर्शनीयेन वीरेणातिधनुर्भृता ।
माद्रीपुत्रेण कौरव्य पाण्डवा अभ्ययुञ्जत ॥ ३० ॥
यः काशीनङ्गमगधान्कलिङ्गांश्च युधाऽजयत् ।
तेन वः सहदेवेन पाण्डवा अभ्ययुञ्जत ॥ ३१ ॥
यस्य वीर्येण सदृशाश्चत्वारो भुवि मानवाः ।
अश्वत्थामा धृष्टकेतू रुक्मी प्रद्युम्न एव च ॥ ३२ ॥

---

[ अर्जु० ] प्रत्यर्थेन प्रतिकूलार्थेन ॥ १ ॥ राजपुत्र्यः क्षत्रियकन्याः ॥ ८ ॥

[ लक्षा० ] [ यज्ञमाश्विनशंसिन इति पाठे । यज्ञं पञ्चमहायज्ञं कुर्विति आश्विनमश्विनोः पुत्रं सहदेवं प्रतिशंसिनम् ॥ ] केनास्मान् पाण्डवा अभ्ययुञ्जतेत्यत्र केन बलेन अस्मान् प्रति पाण्डवा अभ्ययुञ्जत युद्धाभियोगमकुर्वन् ॥ ९ ॥

[ नील० ] कुरवः संसीदन्त्यस्यां सभायाम् ॥ १० ॥ वस्ते वः युष्मान् ते पाण्डवाः ॥ १६ ॥ सिन्धुराजो जयद्रथः ॥ २२ ॥ विजयेन अर्जुनेन ॥ २८ ॥

[ अर्जु० ] अनिमित्ततो राज्यनिमित्तशून्यात् ॥११॥ यैः निमित्तभूतैः अभ्ययुञ्जत अभि विरुद्धं योगं कृतवन्तः वो युष्मान् ॥ १६ ॥ द्वीप आश्रयः ॥ २१ ॥ विजयेन अर्जुनेन ॥ २८ ॥

[ लक्षा० ] यो वै रोषादित्यत्र यच्छब्दस्य तेन पाण्डवा अभ्ययुञ्जतेति संबन्धः ॥ १७ ॥ पृथिव्यां नास्ति कश्चनेत्यत्र सम इति योग्यपदाध्याहारः ॥ १९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चाशोऽध्यायः ॥ ५० ॥

---

११ख. म. सूतः कश्मलमा°। १५ख. गृहावासादवरोधेन। १७ख. कथंचन। १९ ख. धनुर्धरान्। ख. तृतीयार्धं नास्ति । २१ ख. निःसृतानां जतुगृहाद।

तेन वः सहदेवेन युद्धं राजन्महात्ययम् ।
यवीयसा नृवीरेण माद्रीनन्दिकरेण च ॥ ३३ ॥
तपश्चचार या घोरं काशिकन्या पुरा सती ।
भीष्मस्य वधमिच्छन्ती प्रेत्यापि भरतर्षभ ॥ ३४ ॥
पाञ्चालस्य सुता जज्ञे दैवाच्च स पुनः पुमान् ।
स्त्रीपुंसोः पुरुषव्याघ्र यः स वेद गुणागुणान् ॥ ३५ ॥
यः कलिङ्गान्समापेदे पाञ्चाल्यो युद्धदुर्मदः ।
शिखण्डिना वः कुरवः कृतास्त्रेणाभ्ययुञ्जत ॥ ३६ ॥
यं यक्षः पुरुषं चक्रे भीष्मस्य निधनेच्छया ।
महेष्वासेन रौद्रेण पाण्डवा अभ्ययुञ्जत ॥ ३७ ॥
महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः ।
आमुक्तकवचाः शूरास्तैश्च वस्तेऽभ्ययुञ्जत ॥ ३८ ॥
यो दीर्घबाहुः क्षिप्रास्त्रो धृतिमान्सत्यविक्रमः ।
तेन वो वृष्णिवीरेण युयुधानेन संगरः ॥ ३९ ॥
य आसीच्छरणं काले पाण्डवानां महात्मनाम् ।
रणे तेन विराटेन भविता वः समागमः ॥ ४० ॥
यः स काशिपती राजा वाराणस्यां महारथः ।
स तेषामभवद्योद्धा तेन वस्तेऽभ्ययुञ्जत ॥ ४१ ॥
शिशुभिर्दुर्जयैः संख्ये द्रौपदेयैर्महात्मभिः ।
आशीविषसमस्पर्शैः पाण्डवा अभ्ययुञ्जत ॥ ४२ ॥
यः कृष्णसदृशो वीर्ये युधिष्ठिरसमो दमे ।
तेनाभिमन्युना संख्ये पाण्डवा अभ्ययुञ्जत ॥ ४३ ॥
यश्चैवाप्रतिमो वीर्ये धृष्टकेतुर्महायशाः ।
दुःसहः समरे क्रुद्धः शैशुपालिर्महारथः ॥ ४४ ॥
तेन वश्चेदिराजेन पाण्डवा अभ्ययुञ्जत ।
अक्षौहिण्या परिवृतः पाण्डवान्योऽभिसंश्रितः ॥ ४५ ॥
यः संश्रयः पाण्डवानां देवानामिव वासवः ।
तेन वो वासुदेवेन पाण्डवा अभ्ययुञ्जत ॥ ४६ ॥
तथा चेदिपतेर्भ्राता शरभो भरतर्षभ ।
करकर्षेण सहितस्ताभ्यां वस्तेऽभ्ययुञ्जत ॥ ४७ ॥
जारासन्धिः सहदेवो जयत्सेनश्च तावुभौ ।
युद्धे प्रतिरथे वीरौ पाण्डवार्थे व्यवस्थितौ ॥ ४८ ॥
द्रुपदश्च महातेजा बलेन महता वृतः ।
त्यक्तात्मा पाण्डवार्थाय योत्स्यमानो व्यवस्थितः ४९
एते चान्ये च बहवः प्राच्योदीच्या महीक्षितः ।
शतशो यानुपाश्रित्य धर्मराजो व्यवस्थितः ॥ ५० ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

## एकपञ्चाशोऽध्यायः ५१

भीमस्य वीर्यं चिन्तयन् धृतराष्ट्रः शोचति ॥ १ ॥

**धृतराष्ट्र उवाच—**

सर्व एते महोत्साहा ये त्वया परिकीर्तिताः ।
एकतस्त्वेव ते सर्वे समेता भीम एकतः ॥ १ ॥
भीमसेनाद्धि मे भूयो भयं संजायते महत् ।
क्रुद्धादमर्षणात्तात व्याघ्रादिव महारुरोः ॥ २ ॥
जागर्मि रात्रयः सर्वा दीर्घमुष्णं च निःश्वसन् ।
भीतो वृकोदरात्तात सिंहात्पशुरिवापरः ॥ ३ ॥
नहि तस्य महाबाहोः शक्रप्रतिमतेजसः ।
सैन्येऽस्मिन्प्रतिपश्यामि य एनं विषहेद्युधि ॥ ४ ॥
अमर्षणश्च कौन्तेयो दृढवैरश्च पाण्डवः ।
अनर्महासी सोन्मादस्तिर्यक्प्रेक्षी महास्वनः ॥ ५ ॥

---

[ नील० ] करकर्षेण करकर्षसंज्ञेन भ्रात्रा ॥ ४७ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

[ अर्जु० ] [ पुनर्वचनमाधिक्योक्तौ ] कालेऽज्ञातवासकाले वो युष्माकम् ॥ ४० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि पञ्चाशोऽध्यायः ॥ ५० ॥

[ सर्व० ] केन कियत्संख्येन धृष्टद्युम्नस्तस्य सैन्येन अभ्ययुञ्जत । अभियोगो विवादः तद्विषयानकुर्वत ॥ ३३ ॥ प्रेत्य जन्मान्तरे ॥ ४६ ॥ करकर्षेण करकर्षनाम्ना ॥ ५० ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां पञ्चाशोऽध्यायः ॥ ५० ॥

[ नील० ] सर्वे इति ॥ १ ॥ महारुरोः महामृगस्य ॥ २ ॥ अनर्महासी नर्म वृथोपहासः तदन्यो हासः सत्यमेव कृत्वा शत्रूनुपहसतीत्यर्थः ॥ ५ ॥

---

४१ ख. म. स एवातिवृषो योद्धा । पञ्चाशोऽध्यायः ॥ ५० ॥

महावेगो महोत्साहो महाबाहुर्महाबलः ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ ६ ॥
उरुग्राहगृहीतानां गदां बिभ्रद्वृकोदरः ।
कुरूणामृषभो युद्धे दण्डपाणिरिवान्तकः ॥ ७ ॥
अष्टास्रिमायसीं घोरां गदां काञ्चनभूषणाम् ।
मनसाऽहं प्रपश्यामि ब्रह्मदण्डमिवोद्यतम् ॥ ८ ॥
यथा मृगाणां यूथेषु सिंहो जातबलश्चरेत् ।
मामकेषु तथा भीमो बलेषु विचरिष्यति ॥ ९ ॥
सर्वेषां मम पुत्राणां स एकः क्रूरविक्रमः ।
बह्वाशी विप्रतीपश्च बाल्येऽपि रभसः सदा ॥१०॥
उद्वेपते मे हृदयं ये मे दुर्योधनादयः ।
बाल्येऽपि तेन युद्ध्यन्तो वारणेनेव मर्दिताः॥११॥
तस्य वीर्येण संक्लिष्टा नित्यमेव सुता मम ।
स एव हेतुर्भेदस्य भीमो भीमपराक्रमः ॥ १२ ॥
ग्रसमानमनीकानि नरवारणवाजिनाम् ।
पश्यामीवाग्रतो भीमं क्रोधमूर्छितमाहवे ॥ १३ ॥
अस्त्रे द्रोणार्जुनसमं वायुवेगसमं जवे ।
महेश्वरसमं क्रोधे को हन्याद्भीममाहवे ॥ १४ ॥
सञ्जयाचक्ष्व मे शूरं भीमसेनममर्षणम् ।
अतिलाभं तु मन्येहं यत्तेन रिपुघातिना ॥ १५ ॥
तदैव न हताः सर्वे पुत्रा मम मनस्विना ।
येन भीमबला यक्षा राक्षसाश्च पुरा हताः ॥ १६ ॥
कथं तस्य रणे वेगं मानुषः प्रसहिष्यति ।
न स जातु वशे तस्थौ मम बाल्येऽपि सञ्जय॥१७॥
किं पुनर्मम दुष्पुत्रैः क्लिष्टः संप्रति पाण्डवः ।
निष्टुरो रोषणोऽत्यर्थं भज्येतापि न संनमेत् ॥
तिर्यक्प्रेक्षी संहतभ्रूः कथं शाम्येद्वृकोदरः ॥ १८ ॥
शूरस्तथाऽप्रतिबलो गौरस्ताल इवोन्नतः ।
प्रमाणतो भीमसेनः प्रादेशेनाधिकोऽर्जुनात् ॥१९॥
जवेन वाजिनोऽत्येति बलेनात्येति कुञ्जरान् ।
अव्यक्तजल्पी मध्वक्षो मध्यमः पाण्डवो बली॥२०॥
इति बाल्ये श्रुतः पूर्वं मया व्यासमुखात्पुरा ।
रूपतो वीर्यतश्चैव याथातथ्येन पाण्डवः ॥ २१ ॥
आयसेन स दण्डेन रथान्नागान्नरान्हयान् ।
हनिष्यति रणे क्रुद्धो रौद्रः क्रूरपराक्रमः ॥ २२ ॥
अमर्षी नित्यसंरब्धो भीमः प्रहरतां वरः ।
मया तात प्रतीपानि कुर्वन् पूर्वं विमानितः॥ २३ ॥
निष्कर्णामायसीं स्थूलां सुपार्श्वां काञ्चनीं गदाम् ।
शतघ्नीं शतनिर्ह्रादां कथं शक्ष्यन्ति मे सुताः ॥२४॥
अपारमप्लवागाधं समुद्रं शरवेधनम् ।
भीमसेनमयं दुर्गं तात मन्दास्तितीर्षवः ॥ २५ ॥
क्रोशतो मे न शृण्वन्ति बालाः पण्डितमानिनः ।
विषमं नहि मन्यन्ते प्रपातं मधुदर्शिनः ॥ २६ ॥
संयुगं ये गमिष्यन्ति नररूपेण मृत्युना ।
नियतं चोदिता धात्रा सिंहेनेव महामृगाः ॥ २७ ॥
शैक्यां तात चतुष्किष्कुं षडस्रिममितौजसम् ।
प्रहितां दुःखसंस्पर्शां कथं शक्ष्यन्ति मे सुताः॥२८॥

---

[ अर्जु० ] रात्रयो रात्रीः ॥ ३ ॥

[ नील० ] उरुग्राहः महानिर्बन्धस्तेन गृहीतानां वशीकृतानाम् ॥ ७ ॥ रभसः वेगवान् ॥ १० ॥ संहते क्रोधेन ग्रथिते भ्रुवौ यस्य संहतभ्रूः ॥ १८ ॥ इतीति पुरा पुराणं निकटेऽतिदृढमिति वाऽर्थः । 'पुरा पुराणेऽतिदृढे' इति मेदिनी । 'पुरा भाविपुराणयोः । प्रबन्धे निकटेऽतीते' इति विश्वलोचनः ॥ २१ ॥ निष्कर्णाम् अवक्रां तिर्यग्भावहीनां शतनिर्ह्रादां महाशब्दवतीम् ॥ २४ ॥ शैक्यां शिक्यस्थाम् अधःपतनेन भूमिविदारणशङ्कया शिक्ये स्थापिताम् ॥ २८ ॥

[ अर्जु० ] शैक्यां अयःकृतशिक्यस्थाम् ॥ ८ ॥

रभसः अपरीक्षितकर्मा ॥ १० ॥ निष्ठुरः क्रूरः ॥ १८ ॥ प्रादेशेन विततर्जन्यङ्गुष्ठप्रमाणेन ॥ १९ ॥ जवेन वेगेन अत्येति अतिक्रामति ॥ २० ॥ निष्कीर्णं कृतकुटिलकीर्णं शतसंह्रादामनेकवाराम् ॥ २४ ॥

[ सर्व० ] मम पुत्राणां विप्रतीपो विरुद्धः । रभस इच्छामात्रेणायतिमनपेक्ष्य प्रवर्तमानः ॥ १० ॥ शैक्यामायसीम् । शैक्यं विशुद्धमयस्तद्भूताम् । निष्कीर्णा कुन्देन विनिकीर्णमलां काञ्चनीं काञ्चनपदनद्धाम् । शतसंह्रादाम् बहुशब्दाम् ॥ २४ ॥

[ लक्षा० ] झषग्रहगृहीतां तामित्यत्र झषग्रहा मत्स्यग्राहिणो भारसहाः कैवर्ताः तैर्गृहीताम् ॥ ७ ॥

---

८ म. सैक्यायसमहाघोरां । म. भूषिताम् । ९ म. गजानां यू° । १० म. स एव । २२ म. क्रुद्धो भीमः प्रहरतांवरः । २३ म. °रब्धो रौद्रः क्रूरपराक्रमः । २४ ज. शैनयां सुपार्श्वां । २८ म. ममितौजसा । एकपञ्चाशोऽध्यायः ॥ ५१ ॥

गदां भ्रामयतस्तस्य भिन्दतो हस्तिमस्तकान् ।
सृक्किणी लेलिहानस्य बाष्पमुत्सृजतो मुहुः ॥ २९ ॥
उद्दिश्य नागान्पततः कुर्वतो भैरवान्रवान् ।
प्रतीपं पततो मत्तान् कुञ्जरान्प्रतिगर्जतः ॥ ३० ॥
विगाह्य रथमार्गेषु वरानुद्दिश्य निघ्नतः ।
अग्नेः प्रज्वलितस्येव अपि मुच्येत मे प्रजा ॥ ३१ ॥
वीथीं कुर्वन्महाबाहुर्द्रावयन्मम वाहिनीम् ।
नृत्यन्निव गदापाणिर्युगान्तं दर्शयिष्यति ॥ ३२ ॥
प्रभिन्न इव मातङ्गः प्रभञ्जन्पुष्पितान्द्रुमान् ।
प्रवेक्ष्यति रणे सेनां पुत्राणां मे वृकोदरः ॥ ३३ ॥
कुर्वन् रथान्विपुरुषान्विसारथिहयध्वजान् ।
आरुजन्पुरुषव्याघ्रो रथिनः सादिनस्तथा ॥ ३४ ॥
गङ्गावेग इवानूपांस्तीरजान्विविधान्द्रुमान् ।
प्रभङ्क्ष्यति रणे सेनां पुत्राणां मम सञ्जय ॥ ३५ ॥
दिशो नूनं गमिष्यन्ति भीमसेनभयार्दिताः ।
मम पुत्राश्च भृत्याश्च राजानश्चैव सञ्जय ॥ ३६ ॥
येन राजा महावीर्यः प्रविश्यान्तःपुरं पुरा ।
वासुदेवसहायेन जरासंधो निपातितः ॥ ३७ ॥
कृत्स्नेयं पृथिवी देवी जरासंधेन धीमता ।
मागधेन्द्रेण बलिना वशे कृत्वा प्रतापिता ॥ ३८ ॥
भीष्मप्रतापात्कुरवो नयेनान्धकवृष्णयः ।
यत्र तस्य वशे जग्मुः केवलं दैवमेव तत् ॥ ३९ ॥
स गत्वा पाण्डुपुत्रेण तरसा बाहुशालिना ।
अनायुधेन वीरेण निहतः किं ततोऽधिकम् ॥ ४० ॥
दीर्घकालसमासक्तं विषमाशीविषो यथा ।
स मोक्ष्यति रणे तेजः पुत्रेषु मम सञ्जय ॥ ४१ ॥
महेन्द्र इव वज्रेण दानवान्देवसत्तमः ।
भीमसेनो गदापाणिः सूदयिष्यति मे सुतान् ॥ ४२ ॥
अविषह्यमनावार्यं तीव्रवेगपराक्रमम् ।
पश्यामीवातिताम्राक्षमापतन्तं वृकोदरम् ॥ ४३ ॥
अगदस्याप्यधनुषो विरथस्य विवर्मणः ।
बाहुभ्यां युद्ध्यमानस्य कस्तिष्ठेदग्रतः पुमान् ॥ ४४ ॥
भीष्मो द्रोणश्च विप्रोऽयं कृपः शारद्वतस्तथा ।
जानन्त्येते यथैवाहं वीर्यज्ञस्तस्य धीमतः ॥ ४५ ॥
आर्यव्रतं तु जानन्तः सङ्गरान्तं विधित्सवः ।
सेनामुखेषु स्थास्यन्ति मामकानां नरर्षभाः ॥ ४६ ॥
बलीयः सर्वतो दिष्टं पुरुषस्य विशेषतः ।
पश्यन्नपि जयं तेषां न नियच्छामि यत्सुतान् ॥ ४७ ॥
ते पुराणं महेष्वासा मार्गमैन्द्रं समास्थिताः ।
त्यक्ष्यन्ति तुमुले प्राणान् रक्षन्तः पार्थिवं यशः ॥ ४८ ॥
यथैषां मामकास्तात तथैषां पाण्डवा अपि ।
पौत्रा भीष्मस्य शिष्याश्च द्रोणस्य च कृपस्य च ॥ ४९ ॥
ये त्वस्मदाश्रयं किंचिद्दत्तमिष्टं च सञ्जय ।
तस्यापचितिमार्यत्वात्कर्तारः स्थविरास्त्रयः ॥ ५० ॥
आददानस्य शस्त्रं हि क्षत्रधर्मं परीप्सतः ।
निधनं क्षत्रियस्याजौ वरमेवाहुरुत्तमम् ॥ ५१ ॥
स वै शोचामि सर्वान्वै ये युयुत्सन्ति पाण्डवैः ।
विक्रुष्टं विदुरेणादौ तदेतद्भयमागतम् ॥ ५२ ॥
न तु मन्ये विघाताय ज्ञानं दुःखस्य सञ्जय ।
भवत्यतिबलं ह्येतज्ज्ञानस्याप्युपघातकम् ॥ ५३ ॥
ऋषयो ह्यपि निर्मुक्ताः पश्यन्तो लोकसंग्रहान् ।
सुखैर्भवन्ति सुखिनस्तथा दुःखेन दुःखिताः ॥ ५४ ॥
किं पुनर्मोहमासक्तस्तत्र तत्र सहस्रधा ।
पुत्रेषु राज्यदारेषु पौत्रेष्वपि च बन्धुषु ॥ ५५ ॥
संशये तु महत्यस्मिन्किं तु मे क्षममुत्तरम् ।
विनाशं ह्येव पश्यामि कुरूणामनुचिन्तयन् ॥ ५६ ॥

[ नील० ] वीथीं रथमार्गम् ॥ ३२ ॥ अनूपान् सजलदेशे स्थितान् ॥ ३५ ॥ अगदस्य गदाहीनस्य ॥ ४४ ॥ संगरे अन्तं त्वस्य नाशं स्थास्यन्ति भीष्मादयः ॥ ४६ ॥ ऐन्द्रं मार्गं स्वर्गमार्गम् ॥४८॥ अपचितिं निष्कृतिम्॥५०॥ विक्रुष्टम् उच्चैरुक्तम् ॥ ५२ ॥ एतत् भावि दुःखं अतिबलं ज्ञानेन अनिवार्यम् ॥ ५३ ॥ निर्मुक्ताः जीवन्मुक्ताः॥५४॥ क्षमं शक्यम् । उत्तरम् उत्तरकार्यं प्रतीकारः ॥ ५६ ॥

[ अर्जु० ] भग्नपुष्करान् भग्नकराग्रान् ॥ ३० ॥ तेजः क्रोधम् ॥४१॥ दिष्टं दैवम् ॥४७॥ अपचितिं शोभनम् ५०

[ सर्व० ] वीथीं युद्धमार्गम् ॥ ३२ ॥ आनूपान् जलसन्निधौ स्थितान् ॥ ३५ ॥ वयमाश्रया यत्र दत्ते दाने इष्टे यागे च तदस्मदाश्रयम् । अपचितिं निष्कृतिम् ॥५०॥ निर्मुक्ताः जीवन्मुक्ताः । लोकसङ्ग्रहान् लोकव्यवहारान् पश्यन्तो लोकमध्ये स्थिताः सन्त इत्यर्थः ॥ ५४ ॥ क्षमं शक्यमुत्तरमुत्तरकार्यं प्रतीकारः ॥ ५६ ॥

[ लक्षा० ] बाष्पमुत्सृजतोमुहुरित्यत्र बाष्पमूष्माणम् २९

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृत-लक्षालंकारे एकपञ्चाशोऽध्यायः ॥ ५१ ॥

द्यूतप्रमुखमाभाति कुरूणां व्यसनं महत् ।
मन्देनैश्वर्यकामेन लोभात्पापमिदं कृतम् ॥ ५७ ॥
मन्ये पर्यायधर्मोऽयं कालस्यात्यन्तगामिनः ।
चक्रे प्रधिरिवासक्तो नास्य शक्यं पलायितुम् ॥५८॥
किन्नु कुर्यां कथं कुर्यां क नु गच्छामि सञ्जय ।
एते नश्यन्ति कुरवो मन्दाः कालवशं गताः ॥ ५९ ॥
अवशोऽहं तदा तात पुत्राणां निहते शते ।
श्रोष्यामि निनदं स्त्रीणां कथं मां मरणं स्पृशेत् ॥६०॥
यथा निदाघे ज्वलनः समिद्धो
दहेत्कक्षं वायुना चोद्यमानः ।
गदाहस्तः पाण्डवो वै तथैव
हन्ता मदीयान्सहितोऽर्जुनेन ॥ ६१ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

## द्विपञ्चाशोऽध्यायः ५२

अर्जुनस्य वीर्यं चिन्तयानो धृतराष्ट्रः शोचति ॥ १ ॥

**धृतराष्ट्र उवाच**

यस्य वै नानृता वाचः कदाचिदनुशुश्रुम ।
त्रैलोक्यमपि तस्य स्याद्योद्धा यस्य धनञ्जयः ॥ १ ॥
तस्यैव च न पश्यामि युधि गाण्डीवधन्वनः ।
अनिशं चिन्तयानोऽपि यः प्रतीयाद्रथेन तम् ॥ २ ॥
अस्यतः कर्णिनालीकान्मार्गणान् हृदयच्छिदः ।
प्रत्येता न समः कश्चिद्युधि गाण्डीवधन्वनः ॥ ३ ॥
द्रोणकर्णौ प्रतीयातां यदि वीरौ नरर्षभौ ।
कृतास्त्रौ बलिनां श्रेष्ठौ समरेष्वपराजितौ ॥ ४ ॥
महान्स्यात्संशयो लोके न त्वस्ति विजयो मम ।
घृणी कर्णः प्रमादी च आचार्यः स्थविरो गुरुः ॥ ५ ॥
समर्थो बलवान्पार्थो दृढधन्वा जितक्लमः ।
भवेत्सुतुमुलं युद्धं सर्वशोऽप्यपराजयः ॥ ६ ॥
सर्वे ह्यस्त्रविदः शूराः सर्वे प्राप्ता महद्यशः ।
अपि सर्वामरैश्वर्यं त्यजेयुर्न पुनर्जयम् ॥ ७ ॥
वधे नूनं भवेच्छान्तिस्तयोर्वा फाल्गुनस्य च ।
न तु हन्तार्जुनस्यास्ति जेता चास्य न विद्यते ॥८॥
मन्युस्तस्य कथं शाम्येन्मन्दान्प्रति य उत्थितः ।
अन्येऽप्यस्त्राणि जानन्ति जीयन्ते च जयन्ति च ॥९॥

---

[ नील० ] पर्यायधर्मः विपरीतधर्मः । प्रधिर्नेमिः । अस्य कालवशस्य, तृतीयार्थे षष्ठी ॥ ५८ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

[ अर्जु० ] पर्यायधर्मः··· । प्रधिर्नेमिः ॥ ५८ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकपञ्चाशोऽध्यायः ॥ ५१ ॥

[ सर्व० ] पर्यायेण सुखदुःखभोगः पर्यायः स एव धर्मः स कालस्यावयवश्चक्रस्येव प्रधिर्नेमिः । कालसंबन्धिभिरस्माभिरस्माद्धर्मान्न शक्यं पलायितुम् ॥ ५८ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायामेकपञ्चाशोऽध्यायः ॥ ५१ ॥

[ नील० ] यस्येति धनञ्जयः यस्य योद्धेति तच्छब्दाध्याहारेण पूरणीयम् ॥ १ ॥ तस्य तं प्रतियोद्धारं न पश्यामि य एनं प्रतीयादित्यध्याहृत्य योज्यम् ॥ २ ॥ घृणी कृपावान् भीमादिषु, प्रमादी अन्ते विद्यां न स्मरिष्यतीति भावः ॥ ५ ॥ अपराजयस्तेषामिति शेषः ॥ ६ ॥ तयोः कर्णद्रोणयोर्वधे अस्मदीयानां शान्तिः फाल्गुनस्य वधे तु परेषामित्यर्थः ॥ ८ ॥

[ अर्जु० ] प्रतीयात् प्रतिगच्छेत् ॥ २ ॥ प्रत्येता निवारयिता ॥ ३ ॥ प्रतीयातां प्रतिगच्छेताम् ॥ ४ ॥ माहात्म्यात् महत्वात् । तत्रापि संशयः प्रतिगन्तुं शक्नुतो न वेति, न पुनर्विजेतुं शङ्कापि । घृणी कृपालुः प्रमादी अनवधानवान् । स्थविरत्वादक्षमः गुरुत्वात् पक्षपाती ॥ ५ ॥ समर्थः शक्तिमान् बलवान् बलवद्दशायां प्रवर्तमानः तुमुले कान्दिग्भूते युद्धे अपराजितः अपराजित एव स्याद् भवेत् । [ ओ ? अपि ] शब्दोऽवधारणे ॥ ६ ॥ सर्वे पाण्डवाः ॥ ७ ॥ तयोर्द्रोणभीष्मयोः । संशय्य निर्णयति नत्विति ॥ ८ ॥ मन्दान् मम पुत्रान् ॥ ९ ॥

[ सर्व० ] संशयोऽयं जेताऽयं वेति । एतेन साम्यमभिप्रैति ॥ ५ ॥ सोऽर्जुनो भवेत् तुमुले युद्धे सर्वशोऽप्यपराजित इति ॥ ६ ॥ तुशब्दो भिन्नक्रमः ॥ ८ ॥

[ लक्षा० ] उभाभ्यां संशयो लोक इत्यत्र उभाभ्यां गताभ्यामपि संशयः जये संशयः स्यात् लोके विजयार्दनस्तु नास्ति ॥ ५ ॥

---

१ म. प्रवृत्ता अनुशुश्रुमः । ६ °के युद्धे सर्वशोऽप्यपराजितः ।

एकान्तविजयस्त्वेव श्रूयते फाल्गुनस्य ह ।
त्रयस्त्रिंशत्समाऽऽहूय खाण्डवेऽग्निमतर्पयत् ॥ १० ॥
जिगाय च सुरान्सर्वान्नास्य विद्मः पराजयम् ।
यस्य यन्ता हृषीकेशः शीलवृत्तसमो युधि ॥ ११ ॥
ध्रुवस्तस्य जयस्तात यथेन्द्रस्य जयस्तथा ।
कृष्णावेकरथे यत्तावधिज्यं गाण्डिवं धनुः ॥ १२ ॥
युगपत्त्रीणि तेजांसि समेतान्यनुशुश्रुम ।
नैवास्ति नो धनुस्तादृक् न योद्धा न च सारथिः॥१३॥
तच्च मन्दा न जानन्ति दुर्योधनवशानुगाः ।
शेषयेदशनिर्दीप्तो विपतन्मूर्ध्नि सञ्जय ॥ १४ ॥
न तु शेषं शरास्तात कुर्युरस्ताः किरीटिना ।
अपि चास्याग्निवाभाति निघ्नन्निव धनञ्जयः ॥ १५ ॥
उद्धरन्निव कायेभ्यः शिरांसि शरवृष्टिभिः ।
अपि बाणमयं तेजः प्रदीप्तमिव सर्वतः ॥ १६ ॥
गाण्डिवोत्थं दहेताजौ पुत्राणां मम वाहिनीम् ।
अपि सा रथघोषेण भयार्ता सव्यसाचिनः ॥ १७ ॥
वित्रस्ता बहुधा सेना भारती प्रतिभाति मे ।
यथा कक्षं महानग्निः प्रदहेत्सर्वतश्चरन् ।
महार्चिरनिलोद्धूतस्तद्वद्धक्ष्यति मामकान् ॥ १८ ॥
यदोद्वमन्निशितान्बाणसंघां-
स्तानाततायी समरे किरीटी ।
सृष्टोऽन्तकः सर्वहरो विधात्रा
यथा भवेत्तद्वदवारणीयः ॥ १९ ॥
यदा ह्यभीक्ष्णं सुबहून्प्रकारान्
श्रोताऽस्मि तानावसथे कुरूणाम् ।
तेषां समन्ताच्च तथा रणाग्रे
क्षयः किलायं भरतानुपैति ॥ २० ॥

इति श्रीमहाभारते उद्योगपर्वणि द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

## त्रिपञ्चाशोऽध्यायः ५३

युधिष्ठिरस्य तत्सहायानां च वीर्याण्यथमानो धृतराष्ट्रः शोचति ॥ १ ॥

धृतराष्ट्र उवाच
यथैव पाण्डवाः सर्वे पराक्रान्ता जिगीषवः ।
तथैवाभिसरास्तेषां त्यक्तात्मानो जये धृताः ॥ १ ॥

[ नील० ] त्रयस्त्रिंशत्समाः वर्षाणि अतीता इत्यर्थः संधिरार्षः ॥ १० ॥ अस्ताः क्षिप्ताः ॥ १५ ॥ कुरूणां प्रकारान् छेदभेदपलायनादीनावसथे गृहे श्रोताऽस्मि श्रोष्यामि ॥ २० ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

[ अर्जु० ] एकान्तविजय आवश्यकविजयः । न कदापि पराजय इत्यर्थः । त्रयस्त्रिंशत् समा वर्षाणि यस्य स तथा । त्रयस्त्रिंशत् समा इति पाठेऽसमस्ते त्रयस्त्रिंशत् समा यस्येति शेषः ॥ १० ॥ विद्मो जानीमः । यन्ता सारथिः ॥ ११ ॥ कृष्णौ कृष्णार्जुनौ अधिज्यमारोपितगुणम् ॥ १२ ॥ मन्दाः कर्णादयः ॥ १४ ॥ अस्ताः क्षिप्ताः ॥ १५ ॥ [ तस्यार्जुनस्य बाणाग्रे । ] सुबहून् जयप्रतिबद्धान्प्रकारान् कुरूणामावसथे श्रोतास्मि । तेषां कुरूणां भङ्गप्रतिबद्धानिति शेषः । सर्वमन्यदेवं तत्र हेतुः क्षयः किलायमिति ॥ २० ॥

इति श्रीमन्महा० मर्जुनमि० उद्यो० द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

[ सर्व० ] सर्वे त्रयोऽपि त्रयस्त्रिंशत्समाः इतो वत्सरात् त्रयस्त्रिंशत्तमेऽब्दे इत्यर्थः ॥ १० ॥ गाण्डीवोत्थं दहेदाजाविति प्रतिभाति मे इत्यग्रिमश्लोकेनान्वयः ॥ १७–१८ ॥ तेषां पाण्डवानां रणाग्रे समंततः प्रकारानावसथे कुरूणां श्रोतास्मीत्यन्वयः ॥ २० ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

[ लक्षा० ] यतोऽब्रवीन्निशितान् बाणसंघानित्यत्र समरे सव्यसाची यदा आसीत्तदा लोकः सृष्टोऽन्तक इत्यादि यतोऽब्रवीत् ततः कारणात् मामकान् धक्ष्यतीति पूर्वेणान्वयः ॥ १९ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे द्विपञ्चाशोऽध्यायः ॥ ५२ ॥

[ नील० ] यथैवेति । अभिसराः पुरोगाः ॥ १ ॥
[ अर्जु० ] अभिसरा अग्रेसराः ॥ १ ॥
[ सर्व० ] अभिसराः पुरोगाः ॥ १ ॥

१० म. त्रयस्त्रिंशत्समः सुत । ११ म. शीलवृत्तसमाहुतः । १८ यथाकक्षं दहत्यग्निः प्रवृत्तः सर्वतश्चरन् । सव्यसाची बलोद्धूतस्तं । द्विपञ्चाशो०॥५२॥

त्वमेव हि पराक्रान्तानाचक्षीथाः परान्मम ।
पञ्चालान्केकयान्मत्स्यान्मागधान्वत्सभूमिपान् ॥२॥
यश्च सेन्द्रानिमाँल्लोकानिच्छन्कुर्याद्वशे बली ।
स स्रष्टा जगतः कृष्णः पाण्डवानां जये धृतः ॥ ३ ॥
समस्तामर्जुनाद्विद्यां सात्यकिः क्षिप्रमाप्तवान् ।
शैनेयः समरे स्थाता बीजवत्प्रवपन् शरान् ॥ ४ ॥
धृष्टद्युम्नश्च पाञ्चाल्यः क्रूरकर्मा महारथः ।
मामकेषु रणं कर्ता बलेषु परमास्त्रवित् ॥ ५ ॥
युधिष्ठिरस्य च क्रोधादर्जुनस्य च विक्रमात् ।
यमाभ्यां भीमसेनाच्च भयं मे तात जायते ॥ ६ ॥
अमानुषं मनुष्येन्द्रैर्जालं विततमन्तरा ।
न मे सैन्यास्तरिष्यन्ति ततः क्रोशामि सञ्जय ॥ ७ ॥
दर्शनीयो मनस्वी च लक्ष्मीवान्ब्रह्मवर्चसी ।
मेधावी सुकृतप्रज्ञो धर्मात्मा पाण्डुनन्दनः ॥ ८ ॥
मित्रामात्यैः सुसंपन्नः संपन्नो युद्धयोजकैः ।
भ्रातृभिः श्वशुरैर्वीरैरुपपन्नो महारथैः ॥ ९ ॥
धृत्या च पुरुषव्याघ्रो नैभृत्येन च पाण्डवः ।
अनृशंसो वदान्यश्च ह्रीमान्सत्यपराक्रमः ॥ १० ॥
बहुश्रुतः कृतात्मा च वृद्धसेवी जितेन्द्रियः ।
तं सर्वगुणसंपन्नं समिद्धमिव पावकम् ॥ ११ ॥
तपन्तमभि को मन्दः पतिष्यति पतङ्गवत् ।
पाण्डवाग्निमनावार्यं मुमूर्षुर्नष्टचेतनः ॥ १२ ॥
तनुरुद्धः शिखी राजा मिथ्योपचरितो मया ।
मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ॥ १३ ॥
तैरयुद्धं साधु मन्ये कुरवस्तन्निबोधत ।
युद्धे विनाशः कृत्स्नस्य कुलस्य भविता ध्रुवम् ॥१४॥
एषा मे परमा बुद्धिर्यया शाम्यति मे मनः ।
यदि त्वयुद्धमिष्टं वो वयं शान्त्यै यतामहे ॥ १५ ॥
न तु नः क्लिश्यमानानामुपेक्षेत युधिष्ठिरः ।
जुगुप्सति ह्यधर्मेण मामेवोद्दिश्य कारणम् ॥ १६ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

[ लक्षा० ] तथैवाभिसरा इत्यत्र अभितः सरन्तीत्यभिसरा भटाः ॥ १ ॥

[ नील० ] जगतः स्रष्टा कृष्णः ॥ ३ ॥ जालम् अस्त्रम् अन्तरा सैन्यमध्ये ॥ ७ ॥ युद्धयोजकैः युद्धोद्योगिभिः ॥ ९ ॥ नैभृत्येन मन्त्रगुप्त्या ॥ १० ॥ तमभिमुखः पतिष्यति ॥ १२ ॥ तनुरुग्र इति पाठेऽपि तनुः राज्यापहारादल्पः स्वतस्तु उग्र एव शिखी वह्निरिव वह्निः ॥ १३ ॥ क्लिश्यमानानां कर्मणि षष्ठी अस्मान् न उपेक्षेत मामेव अधर्मेण कलहस्य कारणमुद्दिश्य जुगुप्सति निन्दति स कथं प्रार्थितः सन् कलहं करिष्यतीति भावः ॥ १६ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

[ अर्जु० ] प्रवपन् क्षिपन् ॥ ४ ॥ अमानुषं दिव्यं जालमानायं कृष्टलक्षणम् । अन्तरा लोकद्वयमध्ये विततं विस्तृतम् ॥ ( हनिष्यन्ति दुर्जनाद्या इति शेषः ) ॥ ७ ॥ योज्ययोजकैः योज्यैः प्रेष्यैः योजकैः तदधिकृतैः ॥ ९ ॥ नैभृत्येन स्थिरतया । पाण्डवो ज्येष्ठः वदान्यो मृष्टमुक्त्वा दाता ॥ १० ॥ पतिष्यति गमिष्यति ॥ १२ ॥ 'तनुरुग्रः शिखी राजा मिथ्योपचरितो मया ॥ मन्दानां मम पुत्राणां युद्धेनान्तं करिष्यति ' तनुः क्षीणदोषत्वात् शिखी अग्निरिव तेजस्वित्वात् । मिथ्योपचरितः द्यूतेन । मन्दानां मूर्खाणां नान्तं न शेषम् । युद्धेन कारणेन अन्तं नाशमिति केचित् ॥ १३ ॥ तैः पाण्डवैः शान्तिर्मतेति शेषः ॥ १४ ॥ भिक्षमाणानां याचतां याचतोऽस्माननादृत्य उपेक्षां न कुर्यादित्यर्थः । तत्र हेतुर्जुगुप्सति मामेव पितृभूतं कारणमुद्दिश्य निन्दति युद्धमिति शेषः ॥ १६ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

[ सर्व० ] अमानुषं दिव्यम् । अस्त्रबलेनान्तरा सैन्यमध्ये मनुष्येन्द्रैः पाण्डवैर्जालं विततं न मे सैन्यास्तरिष्यन्ति ॥ ७ ॥ योज्य उद्योगविषयस्तं प्रतियोजकैरुपयोगिभिः ॥ ९ ॥ नैभृत्येन मन्त्रगुप्त्या ॥ १० ॥ शिक्षमाणानां धर्मं ब्रुवतां वचनमुपेक्षेत । मामेवोद्दिश्य ममैवाधर्मेण कारणेन जुगुप्सते अयं स कथं करिष्यतीत्यर्थः ॥ १७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां त्रिपञ्चाशत्तमोऽध्यायः ॥ ५३ ॥

[ लक्षा० ] वहिष्यति पतङ्गवदित्यत्र पतङ्गवत् ··· १२

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

---

४ म. संप्राप्तः समरे स्थाता । ७ म. मम सेनां हनिष्यन्ति ततः । ९ म. श्वशुरैः पुत्रैरुप० । १२ म. पूर्यन्तामिव को मन्दः । १५ म. परमा शान्तिर्यथा । म. यदित्थं युद्ध° । म. शान्त्या । १६ म. शिष्यमाणानामुपे° । इति त्रिपञ्चाशोऽध्यायः ॥ ५३ ॥

## चतुःपञ्चाशोऽध्यायः ५४

युद्धे त्वदीयानां क्षयो नियतोऽनीशस्य ते विलपनं च व्यर्थमिति संजयस्य धृतराष्ट्रं प्रत्युक्तिः ॥ १ ॥

**सञ्जय उवाच**

एवमेतन्महाराज यथा वदसि भारत ।
युद्धे विनाशः क्षत्रस्य गाण्डीवेन प्रदृश्यते ॥ १ ॥
इदं तु नाभिजानामि तव धीरस्य नित्यशः ।
यत्पुत्रवशमागच्छेस्तत्त्वज्ञः सव्यसाचिनः ॥ २ ॥
नैष कालो महाराज तव शश्वत् कृतागसः ।
त्वया ह्येवादितः पार्था निकृता भरतर्षभ ॥ ३ ॥
पिता श्रेष्ठः सुहृद्यश्च सम्यक्प्रणिहितात्मवान् ।
आस्थेयं हि हितं तेन न द्रोग्धा गुरुरुच्यते ॥ ४ ॥
इदं जितमिदं लब्धमिति श्रुत्वा पराजितान् ।
द्यूतकाले महाराज स्मयसे स्म कुमारवत् ॥ ५ ॥
परुषाण्युच्यमानांश्च पुरा पार्थानुपेक्षसे ।
कृत्स्नं राज्यं जयन्तीति प्रपातं नानुपश्यसि ॥ ६ ॥
पित्र्यं राज्यं महाराज कुरवस्ते सजाङ्गलाः ।
अथ वीरैर्जितामुर्वीमखिलां प्रत्यपद्यथाः ॥ ७ ॥
बाहुवीर्यार्जिता भूमिस्तव पार्थैर्निवेदिता ।
मयेदं कृतमित्येव मन्यसे राजसत्तम ॥ ८ ॥
ग्रस्तान् गन्धर्वराजेन मज्जतो ह्यप्लवेऽम्भसि ।
आनिनाय पुनः पार्थः पुत्रांस्ते राजसत्तम ॥ ९ ॥
कुमारवच्च स्मयसे द्यूते विनिकृतेषु यत् ।
पाण्डवेषु वने राजन्प्रव्रजत्सु पुनः पुनः ॥ १० ॥
प्रवर्षतः शरव्रातानर्जुनस्य शितान्बहून् ।
अप्यर्णवा विशुष्येयुः किं पुनर्मांसयोनयः ॥ ११ ॥
अस्यतां फाल्गुनः श्रेष्ठो गाण्डीवं धनुषां वरम् ।
केशवः सर्वभूतानामायुधानां सुदर्शनम् ॥ १२ ॥
वानरो रोचमानश्च केतुः केतुमतो वरः ।
एवमेतानि स रथो वहन् श्वेतहयो रणे ॥ १३ ॥
क्षपयिष्यति नो राजन्कालचक्रमिवोद्यतम् ।
तस्याद्य वसुधा राजन्निखिला भरतर्षभ ॥ १४ ॥
यस्य भीमार्जुनौ योधौ स राजा राजसत्तम ।
तथा भीमहतप्रायां मज्जन्तीं तव वाहिनीम् ॥ १५ ॥
दुर्योधनमुखा दृष्ट्वा क्षयं यास्यन्ति कौरवाः ।
न भीमार्जुनयोर्भीता लप्स्यन्ते विजयं विभो ॥ १६ ॥
तव पुत्रा महाराज राजानश्चानुसारिणः ।
मत्स्यास्त्वामद्य नार्चन्ति पञ्चालाश्च सकेकयाः ॥ १७ ॥
शाल्वेयाः शूरसेनाश्च सर्वे त्वामवजानते ।
पार्थं ह्येते गताः सर्वे वीर्यज्ञास्तस्य धीमतः ॥ १८ ॥
भक्त्या ह्यस्य विरुध्यन्ते तव पुत्रैः सदैव ते ।
अनर्हानेव तु वधे धर्मयुक्तान्विकर्मणा ॥ १९ ॥
योऽक्लेशयत्पाण्डुपुत्रान्यो विद्वेष्टयधुनाऽपि वै ।
सर्वोपायैर्नियन्तव्यः सानुगः पापपूरुषः ॥ २० ॥
तव पुत्रो महाराज नानुशोचितुमर्हसि ।
द्यूतकाले मया चोक्तं विदुरेण च धीमता ॥ २१ ॥
यदिदं ते विलपितं पाण्डवान्प्रति भारत ।
अनीशेनेव राजेन्द्र सर्वमेतन्निरर्थकम् ॥ २२ ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

[नील०] एवमिति ॥ १ ॥ एष कालः एषा कलना बुद्धिस्तव नैव स्थास्यति ॥ ३ ॥ प्रणिहितात्मवान् सावधानचित्तः ॥ ४ ॥ स्मयसे तुष्यसे ॥ ५ ॥ अस्यतां बाणान् क्षिपतां मध्ये ॥ १२ ॥ भीमेन भीमसेनेन हतप्रायाम् ॥ १५ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

[अर्जु०] उपेक्षसे उपेक्षितवानसि ॥ ६ ॥ अस्यतां क्षिपतां शरानिति शेषः ॥ १२ ॥ अनीशेन असमर्थेन राज्यं दातुं तान् वा हन्तुम् ॥ २२ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

[सर्व०] नैष कालः शश्वचिरं कर्तुमिति शेषः ॥ ३ ॥ अस्यतां पाण्डवः श्रेष्ठो वरः, गाण्डीवं धनुषां वरं, केशवः सर्वभूतानां वरः ॥ २ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां चतुःपञ्चाशत्तमोऽध्यायः ॥ ५४ ॥

---

४ म. ज्येष्ठः । म. आस्थेयं स्वमतं तेन । १२ म. चक्राणां च सुदर्शनम् । १४ म. नो राज्ञः । १६ म. नहि भीममवाज्ञीता । १९ म. पुत्रैर्दुरात्मभिः ।

इति चतुःपञ्चाशोऽध्यायः ॥ ५४ ॥

## पञ्चपञ्चाशोऽध्यायः ५५

दुर्योधनेन परेभ्य आत्मनोऽधिकबलवत्त्वकथनेन धृतराष्ट्रस्य शोकापनोदः ॥ १ ॥

**दुर्योधन उवाच**

न भेतव्यं महाराज न शोच्या भवता वयम् ।
समर्थाः स्म पराञ्जेतुं बलिनः समरे विभो ॥ १ ॥
वने प्रव्राजितान्पार्थान् यदाऽऽयान्मधुसूदन ।
महता बलचक्रेण परराष्ट्रावमर्दिना ॥ २ ॥
केकया धृष्टकेतुश्च धृष्टद्युम्नश्च पार्षतः ।
राजानश्चान्वयुः पार्थान् बहवोऽन्येऽनुयायिनः ॥३॥
इन्द्रप्रस्थस्य चादूरात्समाजग्मुर्महारथाः ।
व्यगर्हयंश्च संगम्य भवन्तं कुरुभिः सह ॥ ४ ॥
ते युधिष्ठिरमासीनमजिनैः प्रतिवासितम् ।
कृष्णप्रधानाः संहत्य पर्युपासन्त भारत ॥ ५ ॥
प्रत्यादानं च राज्यस्य कार्यमूचुर्नराधिपाः ।
भवतः सानुबन्धस्य समुच्छेदं चिकीर्षवः ॥ ६ ॥
श्रुत्वा चैवं मयोक्तास्तु भीष्मद्रोणकृपास्तदा ।
ज्ञातिक्षयभयाद्राजन् भीतेन भरतर्षभ ॥ ७ ॥
ततः स्थास्यन्ति समये पाण्डवा इति मे मतिः ।
समुच्छेदं हि नः कृत्स्नं वासुदेवश्चिकीर्षति ॥ ८ ॥
ऋते च विदुरात्सर्वे यूयं वध्या मता मम ।
धृतराष्ट्रस्तु धर्मज्ञो न वध्यः कुरुसत्तमः ॥ ९ ॥
समुच्छेदं च कृत्स्नं नः कृत्वा तात जनार्दनः ।
एकराज्यं कुरूणां स्म चिकीर्षति युधिष्ठिरे ॥ १० ॥
तत्र किं प्राप्तकालं नः प्रणिपातः पलायनम् ।
प्राणान्वा संपरित्यज्य प्रतियुध्यामहे परान् ॥ ११ ॥
प्रतियुद्धे तु नियतः स्यादस्माकं पराजयः ।
युधिष्ठिरस्य सर्वे हि पार्थिवा वशवर्तिनः ॥ १२ ॥
विरक्तराष्ट्राश्च वयं मित्राणि कुपितानि नः ।
धिक्कृताः पार्थिवैः सर्वैः स्वजनेन च सर्वशः ॥ १३ ॥
प्रणिपाते न दोषोऽस्ति संधिर्नः शाश्वतीः समाः ।
पितरं त्वेव शोचामि प्रज्ञानेत्रं जनाधिपम् ॥ १४ ॥
मत्कृते दुःखमापन्नं क्लेशं प्राप्तमनन्तकम् ।
कृतं हि तव पुत्रैश्च परेषामपराधनम्
मत्प्रियार्थं पुरैवैतद्विदितं ते नरोत्तम ॥ १५ ॥
ते राज्ञो धृतराष्ट्रस्य सामात्यस्य महारथाः ।
वैरं प्रतिकरिष्यन्ति कुलोच्छेदेन पाण्डवाः ॥ १६ ॥
ततो द्रोणोऽब्रवीद्भीष्मः कृपो द्रौणिश्च भारत ।
मत्वा मां महतीं चिन्तामास्थितं व्यथितेन्द्रियम् ॥१७॥
अभिद्रुग्धाः परे चेन्नो न भेतव्यं परन्तप ।
असमर्थाः परे जेतुमस्मान् युधि समास्थितान् ॥१८॥
एकैकशः समर्थाः स्मो विजेतुं सर्वपार्थिवान् ।
आगच्छन्तु विनेष्यामो दर्पमेषां शितैः शरैः॥ १९ ॥
पुरैकेन हि भीष्मेण विजिताः सर्वपार्थिवाः ।
मृते पितर्यतिक्रुद्धो रथेनैकेन भारत ॥ २० ॥
जघान सुबहूंस्तेषां संरब्धः कुरुसत्तमः ।
ततस्ते शरणं जग्मुर्देवव्रतमिमं भयात् ॥ २१ ॥
स भीष्मः सुसमर्थोऽयमस्माभिः सहितो रणे ।
परान्विजेतुं तस्मात्ते व्येतु भीर्भरतर्षभ ॥ २२ ॥
इत्येषां निश्चयो ह्यासीत्तत्कालेऽमिततेजसाम् ।
पुरा परेषां पृथिवी कृत्स्नाऽऽसीद्वशवर्तिनी ॥ २३ ॥
अस्मान्पुनरमी नाद्य समर्था जेतुमाहवे ।
छिन्नपक्षाः परे ह्यद्य वीर्यहीनाश्च पाण्डवाः॥ २४ ॥

---

[ नील० ] न भेतव्यमिति ॥ १ ॥ यदाऽऽयात् आगतस्तदा भीष्मद्रोणकृपाः मया उक्ता इति षष्ठेनान्वयः ॥ २ ॥ मम मत्संबन्धिनः ॥ ९ ॥ प्रणिपातो वा संध्यर्थः, पलायनं वा लज्जया ॥ ११ ॥ प्रणिपाते दोषो वंशक्षयकृतो नास्ति किंतु संधिरेव भवति तथापि मम युद्धमेव रोचते इत्याशयेनाह—पितरमिति ॥ १४ ॥ हे नरोत्तम धृतराष्ट्र ! तव पुत्रैः अस्माभिः ॥ १५ ॥ प्रतिकरिष्यन्ति प्रतियातयिष्यन्ति ॥ १६ ॥ तत इति पूर्ववृत्तान्तकथनम् ॥ १७ ॥ नः अस्माभिः परे चेत् यद्यपि अभिद्रुग्धाः द्रोहविषयं नीताः तथापि न भेतव्यम् ॥ १८ ॥

[ अर्जु० ] संहत्य मिलित्वा ॥ ५ ॥ सानुबन्धस्य सपुत्रादेः ॥ ६ ॥ प्रणिपातो वा पलायनं वेति वाशब्दाध्याहारात् ॥ ११ ॥ अभिद्रुग्धा अभिद्रुह्यन्ति स्म परे पाण्डवाः चेद्यदि नोऽस्मान् ॥ १८ ॥ छिन्नपक्षाः छिन्नसहायाः भीष्मादिवैमुख्यात् ॥ २४ ॥

[ सर्व० ] प्रणिपाते न दोषोऽस्ति भवति सन्धिरेव भवति हे भीष्म तव पुत्रैरस्मद्भ्रातृभिः परेषां पाण्डवानामवरोधनं विरोधः कृतस्ते धृतराष्ट्रस्य पुत्रान् सर्वानस्मान्

---

२३ म. तत्कालममितौजसाम् ।

अस्मत्संस्था च पृथिवी वर्तते भरतर्षभ ।
एकार्थाः सुखदुःखेषु समानीताश्च पार्थिवाः ॥ २५ ॥
अप्यग्निं प्रविशेयुस्ते समुद्रं वा परन्तप ।
मदर्थे पार्थिवाः सर्वे तद्विद्धि कुरुसत्तम ॥ २६ ॥
उन्मत्तमिव चापि त्वां प्रहसन्तीह दुःखितम् ।
विलपन्तं बहुविधं भीतं परविकत्थने ॥ २७ ॥
एषां ह्येकैकशो राज्ञां समर्थः पाण्डवान्प्रति ।
आत्मानं मन्यते सर्वो व्येतु ते भयमागतम् ॥ २८ ॥
जेतुं समग्रां सेनां मे वासवोऽपि न शक्नुयात् ।
हन्तुमक्षय्यरूपेयं ब्रह्मणोऽपि स्वयंभुवः ॥ २९ ॥
युधिष्ठिरः पुरं हित्वा पञ्च ग्रामान्स याचति ।
भीतो हि मामकात्सैन्यात्प्रभावाच्चैव मे विभो ॥ ३० ॥
समर्थं मन्यसे यच्च कुन्तीपुत्रं वृकोदरम् ।
तन्मिथ्या नहि मे कृत्स्नं प्रभावं वेत्सि भारत ॥ ३१ ॥
मत्समो हि गदायुद्धे पृथिव्यां नास्ति कश्चन ।
नासीत्कश्चिदतिक्रान्तो भविता न च कश्चन ॥ ३२ ॥
युक्तो दुःखोषितश्चाहं विद्यापारगतस्तथा ।
तस्मान्न भीमान्नान्येभ्यो भयं मे विद्यते क्वचित् ॥ ३३ ॥
दुर्योधनसमो नास्ति गदायामिति निश्चयः ।
संकर्षणस्य भद्रं ते यत्तदैनमुपावसम् ॥ ३४ ॥
युद्धे संकर्षणसमो बलेनाभ्यधिको भुवि ।
गदाप्रहारं भीमो मे न जातु विषहेद्युधि ॥ ३५ ॥
एकं प्रहारं यं दद्यां भीमाय रुषितो नृप ।
स एवैनं नयेद्घोरः क्षिप्रं वैवस्वतक्षयम् ॥ ३६ ॥
इच्छेयं च गदाहस्तं राजन्द्रष्टुं वृकोदरम् ।
सुचिरं प्रार्थितो ह्येष मम नित्यं मनोरथः ॥ ३७ ॥
गदया निहतो ह्याजौ मया पार्थो वृकोदरः ।
विशीर्णगात्रः पृथिवीं परासुः प्रपतिष्यति ॥ ३८ ॥
गदाप्रहाराभिहतो हिमवानपि पर्वतः ।
सकृन्मया विदीर्येत गिरिः शतसहस्रधा ॥ ३९ ॥
स चाप्येतद्विजानाति वासुदेवार्जुनौ तथा ।
दुर्योधनसमो नास्ति गदायामिति निश्चयः ॥ ४० ॥
तच्चे वृकोदरमयं भयं व्येतु महाहवे ।
व्यपनेष्याम्यहं ह्येनं मा राजन्विमना भव ॥ ४१ ॥
तस्मिन्मया हते क्षिप्रमर्जुनं बहवो रथाः ।
तुल्यरूपा विशिष्टाश्च क्षेप्स्यन्ति भरतर्षभ ॥ ४२ ॥
भीष्मो द्रोणः कृपो द्रौणिः कर्णो भूरिश्रवास्तथा ।
प्राग्ज्योतिषाधिपः शल्यः सिन्धुराजो जयद्रथः ॥ ४३ ॥
एकैक एषां शक्तस्तु हन्तुं भारत पाण्डवान् ।
समेतास्तु क्षणेनैतान्नेष्यन्ति यमसादनम् ॥
समग्रा पार्थिवी सेना पार्थमेकं धनञ्जयम् ॥ ४४ ॥
कस्मादशक्ता निर्जेतुमिति हेतुर्न विद्यते ।
शरव्रातैस्तु भीष्मेण शतशो निचितोऽवशः ॥ ४५ ॥

---

हनिष्यन्तीत्यतः पितरं शोचामि ॥ १४ ॥ अभिद्रुग्धा अभिद्रोहकारिणः ॥ १८ ॥

[ लक्षा० ] [ तेऽपि निकृतेषु इत्यत्र ऋते सत्यमृते ] श्रुत्वा चैतन्मयोक्ता इत्यत्र एतत् पाण्डवसैनिकैरुक्तं वाक्यम् ॥ ७ ॥ विरक्तराष्ट्राश्च वयमित्यत्र विरक्तं स्नेहरहितं राष्ट्रं येषां ते तथोक्ताः ॥ १३ ॥ विनेष्यामो दर्पमेषां सितैः शरैरिति भीष्मद्रोणादयः आहुः इत्थं दुर्योधनोऽब्रवीदिति श्लोकत्रयस्य योजना ॥ १७ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

[ नील० ] समानीताः मयेति शेषः ॥ २५ ॥ परविकत्थने परेषां गुणाख्याने ॥ २७ ॥ ब्रह्मणोऽपि अक्षय्यरूपा हन्तुमशक्या ॥ २९ ॥ युक्तोऽभियोगवान् दुःखोषितः गुरुकुले ॥ ३३ ॥ उपावसं शिष्यत्वेन पर्यचरम् ॥ ३४ ॥ पार्थिवी पृथ्वीसंबन्धिनी पार्थिवानां राज्ञां वा ॥ ४४ ॥

[ अर्जु० ] एकार्थाः एकप्रयोजनाः ॥ २५ ॥ परेषां विकत्थने मिथ्यागुणश्लाघने ॥ २७ ॥ अक्षय्यरूपा क्षयितुमशक्या ॥ २९ ॥ युक्तः समाहितः दुःखोचितो दुःखसहः ॥ ३३ ॥ दुर्योधनसमो मत्सहायो नास्तीति संकर्षणस्य निश्चयः । यत् यतः प्रभृत्येनं शिष्यत्वेनाहं उपावसं तदा प्रभृति ॥ ३४ ॥ परासुर्गतप्राणः ॥ ३८ ॥ तुल्यरूपा विशिष्टाश्चार्जुनापेक्षया ॥४२॥ भीष्मद्रोणकर्णादयः समेता मिलिताः ॥ ४४ ॥ अङ्गशः अङ्गे अङ्गे, निचितो व्याप्तः ॥ ४५ ॥

[ सर्व० ] ये मया आनीतास्ते एकार्था अस्माभिः सहैकधनाः सुखदुःखेषु ॥ २५ ॥ परविकत्थने परगुणाख्याने क्रियमाणे ॥ २७ ॥ अक्षय्यरूपा अशक्यरूपा ॥ २९ ॥ युक्तः अभियोगवान् । दुःखोचितः प्रहारदुःखसहः ॥ ३३ ॥ यत् यत आरभ्य एनमुपाविशम् शिष्यत्वेन एतत्समीपे स्थितवानस्मि तत्तत आरभ्यास्य निश्चय इत्यन्वयः ॥ ३४ ॥ अङ्गशोऽङ्गेऽङ्गे ॥ ४५ ॥

---

३३ म. दुःखोचितः । ३९ म. विशीर्येत ।

द्रोणद्रौणिकृपैश्चैव गन्ता पार्थो यमक्षयम् ।
पितामहोऽपि गाङ्गेयः शान्तनोरधि भारत ॥ ४६ ॥
ब्रह्मर्षिसदृशो जज्ञे देवैरपि सुदुःसहः ।
न हन्ता विद्यते चापि राजन्भीष्मस्य कश्चन ॥ ४७ ॥
पित्रा ह्युक्तः प्रसन्नेन नाकामस्त्वं मरिष्यसि ।
ब्रह्मर्षेश्च भरद्वाजाद्द्रोणो द्रोण्यामजायत ॥ ४८ ॥
द्रोणाज्जज्ञे महाराज द्रौणिश्च परमास्त्रवित् ।
कृपश्चाचार्यमुख्योऽयं महर्षेर्गौतमादपि ॥ ४९ ॥
शरस्तम्बोद्भवः श्रीमानवध्य इति मे मतिः ।
अयोनिजास्त्रयो ह्येते पिता माता च मातुलः॥ ५० ॥
अश्वत्थाम्नो महाराज स च शूरः स्थितो मम ।
सर्वे एते महाराज देवकल्पा महारथाः ॥ ५१ ॥
शक्रस्यापि व्यथां कुर्युः संयुगे भरतर्षभ ।
नैतेषामर्जुनः शक्त एकैकं प्रतिवीक्षितुम् ॥ ५२ ॥
सहितास्तु नरव्याघ्रा हनिष्यन्ति धनञ्जयम् ।
भीष्मद्रोणकृपाणां च तुल्यः कर्णो मतो मम ॥ ५३ ॥
अनुज्ञातश्च रामेण मत्समोऽसीति भारत ।
कुण्डले रुचिरे चास्तां कर्णस्य सहजे शुभे ॥ ५४ ॥
ते शच्यर्थे महेन्द्रेण याचितः स परन्तपः ।
अमोघया महाराज शक्त्या परमभीमया ॥ ५५ ॥
तस्य शक्त्योपगूढस्य कस्माज्जीवेद्धनञ्जयः ।
विजयो मे ध्रुवं राजन् फलं पाणाविवाहितम्॥ ५६ ॥
अभिव्यक्तः परेषां च कृत्स्नो भुवि पराजयः ।
अह्ना ह्येकेन भीष्मोऽयं प्रयुतं हन्ति भारत ॥ ५७ ॥
तत्समाश्च महेष्वासा द्रोणद्रौणिकृपा अपि ।
संशप्तकानां वृन्दानि क्षत्रियाणां परन्तप ॥ ५८ ॥
अर्जुनं वयमस्मान्वा निहन्यात्कपिकेतनः ।
तं चालमिति मन्यन्ते सव्यसाचिवधे धृताः ॥ ५९ ॥
पार्थिवाः स भवाँस्तेभ्यो ह्यकस्माद्व्यथते कथम् ।
भीमसेने च निहते कोऽन्यो युध्येत भारत ॥ ६० ॥
परेषां तन्ममाचक्ष्व यदि वेत्थ परन्तप ।
पञ्च ते भ्रातरः सर्वे धृष्टद्युम्नोऽथ सात्यकिः ॥६१॥
परेषां सप्त ये राजन्योधाः सारं बलं मतम् ।
अस्माकं तु विशिष्टा ये भीष्मद्रोणकृपादयः ॥ ६२ ॥
द्रौणिर्विकर्तनः कर्णः सोमदत्तोऽथ बाह्लिकः ।
प्राग्ज्योतिषाधिपः शल्य आवन्त्यौ च जयद्रथः॥६३॥
दुःशासनो दुर्मुखश्च दुःसहश्च विशांपते ।
श्रुतायुश्चित्रसेनश्च पुरुमित्रो विविंशतिः ॥ ६४ ॥
शलो भूरिश्रवाश्चैव विकर्णश्च तवात्मजः ।
अक्षौहिण्यो हि मे राजन्दशैका च समाहृताः ॥ ६५ ॥
न्यूनाः परेषां सप्तैव कस्मान्मे स्यात्पराजयः ।
बलं त्रिगुणतो हीनं योध्यं प्राह बृहस्पतिः ॥
परेभ्यस्त्रिगुणा चेयं मम राजन्ननीकिनी ॥ ६६ ॥
गुणहीनं परेषां च बहु पश्यामि भारत ।
गुणोदयं बहुगुणमात्मनश्च विशांपते ॥ ६७ ॥
एतत्सर्वं समाज्ञाय बलाग्र्यं मम भारत ।
न्यूनतां पाण्डवानां च न मोहं गन्तुमर्हसि ॥ ६८ ॥
इत्युक्त्वा सञ्जयं भूयः पर्यपृच्छत भारत ।
विवित्सुः प्राप्तकालानि ज्ञात्वा परपुरञ्जयः ॥ ६९ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

---

[ नील० ] शक्त्या मूल्यभूतया ते कुण्डले याचितः ॥ ५५ ॥ तस्य पुरत इति शेषः ॥ ५६ ॥ तम् अर्जुनम् ॥ ५९ ॥ तेभ्यः पाण्डवेभ्यः ॥ ६० ॥ त्रिगुणतस्त्र्यंशेन हीनं त्रिगुणा त्र्यंशेनाधिका ॥ ६६ ॥ विवित्सुः विज्ञातुमिच्छुः प्राप्तकालानि कर्माणि ॥ ६९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

[ अर्जु० ] शान्तनोरधि शान्तनुसदृशः ॥ ४६ ॥ सुदुःसहो दुर्धर्षः ॥ ४७ ॥ स्थितो मम ममार्थे स्थितः ॥५१॥ [ केतुः केतुमतां वर इति स्वार्थे मतुप् । यद्वा केतुसंज्ञावताम् । प्रयुतं लक्षम् ] संशप्तकानां कृतशपथानाम् ॥ ५८ ॥ तान् भीष्मादीन् सव्यसाचिवधेऽलं समर्था इति पार्थिवा मन्यन्ते ॥ ५९ ॥ व्यथते बिभेति ॥ ६० ॥ त्रिगुणतस्तृतीयांशेन । त्रिगुणा त्रिगुणेन भागेनाधिका ॥ ६६ ॥ विधित्सुः कर्तुमिच्छुः ॥ ६९ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

[ सर्व० ] शान्तनोरधि शान्तनोः सकाशात् इत्यर्थे वैदिकः प्रयोगः, यथा विराजो अधि पूरुष इति ॥ ४६ ॥ तस्य शक्त्योपगूढस्य संमुखमिति शेषः ॥ ५६ ॥ संस-

---

४८ म. भरद्वाजाद्द्रोण्यां द्रोणोऽभ्यजायत । ६० म. स भवान्नाजनूकस्माद्व्यथते कथम् । पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

## षट्पञ्चाशत्तमोऽध्यायः ५६

पाण्डवानां रथाश्वध्वजानां वर्णनम् ॥ १ ॥

दुर्योधन उवाच—
अक्षौहिणीः सप्त लब्ध्वा राजभिः सह सञ्जय ।
किंस्विदिच्छति कौन्तेयो युद्धप्रेप्सुर्युधिष्ठिरः ॥ १ ॥
सञ्जय उवाच—
अतीव मुदितो राजन् युद्धप्रेप्सुर्युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ यमावपि न बिभ्यतः ॥ २ ॥
रथं तु दिव्यं कौन्तेयः सर्वा विभ्राजयन् दिशः ।
मन्त्रं जिज्ञासमानः सन् बीभत्सुः समयोजयत् ॥ ३ ॥
तमपश्याम सन्नद्धं मेघं विद्युद्युतं यथा ।
समन्तात्समभिध्याय हृष्यमाणोऽभ्यभाषत ॥ ४ ॥
पूर्वरूपमिदं पश्य वयं जेष्याम सञ्जय ।
बीभत्सुर्मां यथोवाच तथाऽवैम्यहमच्युत ॥ ५ ॥
दुर्योधन उवाच—
प्रशंसस्यभिनन्दंस्तान्पार्थानक्षपराजितान् ।
अर्जुनस्य रथे ब्रूहि कथमश्वाः कथं ध्वजाः ॥ ६ ॥
सञ्जय उवाच—
भौमनः सह शक्रेण बहुचित्रं विशांपते ।
रूपाणि कल्पयामास त्वष्टा धाता सदा विभो ॥ ७ ॥
ध्वजे हि तस्मिन्रूपाणि चक्रुस्ते देवमायया ।
महाधनानि दिव्यानि महान्ति च लघूनि च ॥ ८ ॥
भीमसेनानुरोधाय हनूमान्मारुतात्मजः ।
आत्मप्रतिकृतिं तस्मिन् ध्वज आरोपयिष्यति ॥ ९ ॥
सर्वा दिशो योजनमात्रमन्तरं
स तिर्यगूर्ध्वं च रुरोध वै ध्वजः ।
न संसज्जत्यसौ तरुभिः संवृतोऽपि
तथा हि माया विहिता भौमनेन ॥ १० ॥
यथाऽऽकाशे शक्रधनुः प्रकाशते
न चैकवर्णं न च वेद्मि किंनु तत् ।
तथा ध्वजो विहितो भौमनेन
बह्वाकारं दृश्यते रूपमस्य ॥ ११ ॥
यथाग्निधूमो दिवमेति रुद्ध्वा
वर्णान्बिभ्रत्तैजसांश्चित्ररूपान् ।
तथा ध्वजो विहितो भौमनेन
न चेद्भारो भविता नोत रोधः ॥ १२ ॥
श्वेतास्तस्मिन्वातवेगाः सदश्वा
दिव्या युक्ताश्चित्ररथेन दत्ताः ।
भुव्यन्तरिक्षे दिवि वा नरेन्द्र
येषां गतिर्हीयते नात्र सर्वा ॥
शतं यत्तत्पूर्यते नित्यकालं
हतं हतं दत्तवरं पुरस्तात् ॥ १३ ॥
तथा राज्ञो दन्तवर्णा बृहन्तो
रथे युक्ता भान्ति तद्वीर्यतुल्याः ।
ऋक्षप्रख्या भीमसेनस्य वाहा
रथे वायोस्तुल्यवेगा बभूवुः ॥ १४ ॥

प्तकानि रणे कृतानिवर्तनशपथानि क्षत्रियाणां केषांचित् ॥ ५८ ॥ तत्स्वरूपमाह अर्जुनं वयमस्मान्वा धनञ्जयो हन्तेति शेषः । तान् क्षत्रियान् संशप्तकानलं सव्यसाचिवधे धृता इति अभिमन्यन्ते भीष्मादयः ॥ ५९ ॥ त्रिगुणतस्तृतीयेन गुणेन भागेन, साध्या चेयं । त्रिगुणा तृतीयभागेनाधिकेन युक्ता ॥ ६६ ॥ गुणहीनं शौर्यादिगुणहीनं बहु सैन्यं, गुणानां शौर्यादीनामुदयो यत्, बहुगुणं बह्वधिकम् ॥ ६७ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां पञ्चपञ्चाशत्तमोऽध्यायः ॥ ५५ ॥

[ नील० ] अक्षौहिणीरिति ॥ २ ॥ मन्त्रम् अस्त्रप्रयोजकं जिज्ञासमानः परीक्षितुमिच्छन् ॥ ३ ॥ तथा अवैमीति छेदः ॥ ५ ॥ भौमनो विश्वकर्मा धाता प्रजापतिः ॥ ७ ॥ ते त्वष्टृशक्रधातारः रूपाणि चक्रुः ॥ ८ ॥ रुरोध स्वतेजसेति शेषः ॥ १० ॥ भारो रथे रोधः द्वारादौ द्वयमपि न भवेत् ॥ १२ ॥ यत्तत् अश्वानां शतं हतं पुनः पुनः कतिपयाश्वहननेऽपि दिव्यप्रभावात् शतं पूर्यते यतः पुरस्ताद्दत्तवरम् ॥ १३ ॥ तथा अमराः राज्ञो दन्तवर्णाः श्वेताः रथे युक्ता अश्वाः भान्ति ऋक्षप्रख्याः सप्तर्षितुल्यतेजसः । “ऋक्षा इति ह स्म वै पुरा सप्त ऋषीनाचक्षते” इति शतपथश्रुतेः । पाठान्तरे ऋश्यो मृगभेदः ॥ १४ ॥

[सर्व०] विद्युद इव प्रभा यस्य तद्विद्युत्प्रभम् ॥ ४ ॥ पूर्वरूपं लक्षणम् ॥ ५ ॥ भौमनस्त्वष्टा विश्वकर्मा । धाता

२ ख. यमस्यापि न बिभ्यति । ६. ख. सर्वानक्ष प° । ९ ख. नास्ति । १२ ख. तेभवं तच्छरीरम् । १३ ख. द्वितीयार्धं नास्ति । १४ ख. दधिवर्णा ।

कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा
भ्रात्रा दत्ताः प्रीयता फाल्गुनेन ।
भ्रातुर्वीरस्य स्वैस्तुरङ्गैर्विशिष्टा
मुदा युक्ताः सहदेवं वहन्ति ॥ १५ ॥
माद्रीपुत्रं नकुलं त्वाजमीढ
महेन्द्रदत्ता हरयो वाजिमुख्याः ।
समा वायोर्बलवन्तस्तरस्विनो
वहन्ति वीरं वृत्रशत्रुं यथेन्द्रम् ॥ १६ ॥
तुल्यांश्चैभिर्वयसा विक्रमेण
महाजवाश्चित्ररूपाः सदश्वाः ।
सौभद्रादीन् द्रौपदेयान्कुमारान्
वहन्त्यश्वा देवदत्ता बृहन्तः ॥ १७ ॥

इति श्रीमहाभारते उद्योगपर्वणि षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

## सप्तपञ्चाशोऽध्यायः ५७

शिखण्डिधृष्टद्युम्नभीमार्जुनादिभिर्भीष्मद्रोणधार्तराष्ट्रकर्णादीन्युद्धे स्वभागत्वेन कल्पिताञ्छ्रुत्वा धृतराष्ट्रस्याक्रोशः ॥ १ ॥ दुर्योधनेन स्वीयानामधिकबलवत्तया न पाण्डवेभ्यः पराजयाशङ्केति कथनम् ॥ २ ॥ पाण्डवान्संदीपयतो धृष्टद्युम्नस्य वचनम् ॥ ३ ॥

धृतराष्ट्र उवाच—
कांस्तत्र सञ्जयापश्यः प्रीत्यर्थेन समागतान् ।
ये योत्स्यन्ते पाण्डवार्थे पुत्रस्य मम वाहिनीम् ॥ १ ॥
सञ्जय उवाच—
मुख्यमन्धकवृष्णीनामपश्यं कृष्णमागतम् ।
चेकितानं च तत्रैव युयुधानं च सात्यकिम् ॥ २ ॥
पृथगक्षौहिणीभ्यां तु पाण्डवानभिसंश्रितौ ।
महारथौ समाख्यातावुभौ पुरुषमानिनौ ॥ ३ ॥
अक्षौहिण्याऽथ पाञ्चाल्यो दशभिस्तनयैर्वृतः ।
सत्यजित्प्रमुखैर्वीरैर्धृष्टद्युम्नपुरोगमैः ॥ ४ ॥
द्रुपदो वर्धयन्मानं शिखण्डिपरिपालितः ।
उपायात्सर्वसैन्यानां प्रतिच्छाद्य तदा वपुः ॥ ५ ॥
विराटः सह पुत्राभ्यां शङ्खेनैवोत्तरेण च ।
सूर्यदत्तादिभिर्वीरैर्मदिराक्षपुरोगमैः ॥ ६ ॥
सहितः पृथिवीपालो भ्रातृभिस्तनयैस्तथा ।
अक्षौहिण्यैव सैन्यानां वृतः पार्थं समाश्रितः ॥ ७ ॥
जारासंधिर्मागधश्च धृष्टकेतुश्च चेदिराट् ।
पृथक्पृथगनुप्राप्तौ पृथगक्षौहिणीवृतौ ॥ ८ ॥
केकया भ्रातरः पञ्च सर्वे लोहितकध्वजाः ।
अक्षौहिणीपरिवृताः पाण्डवानभिसंश्रिताः ॥ ९ ॥
एतानतोमतस्तत्र तानपश्यं समागतान् ।
ये पाण्डवार्थे योत्स्यन्ति धार्तराष्ट्रस्य वाहिनीम् ॥ १० ॥
यो वेद मानुषं व्यूहं दैवं गान्धर्वमासुरम् ।
स तत्र सेनाप्रमुखे धृष्टद्युम्नो महारथः ॥ ११ ॥
भीष्मः शान्तनवो राजन् भागः कॢप्तः शिखण्डिनः ।
तं विराटोऽनुसंयाता सार्धं मत्स्यैः प्रहारिभिः ॥ १२ ॥
ज्येष्ठस्य पाण्डुपुत्रस्य भागो मद्राधिपो बली ।
तौ तु तत्राब्रुवन् केचिद्विषमौ नो माताविति ॥ १३ ॥

---

प्रजापतिः ॥ ७ ॥ चक्रुस्ते त्वष्टृशक्रधातारः ॥ ८ ॥ योजनमात्रं रुरोध तेजसा ॥ १० ॥ अग्निसहितो धूमोऽग्निधूमः नचेद्भारो भविता नोत रोधः । नचेद्रोधो निरोधो वृक्षादिस्तस्यास्ति अतो नेति भारो न गुरुत्वं भविता भारोपि न तत्र भवितेत्यर्थः ॥ १२ ॥ ऋश्यप्रख्याः ऋश्यमृगवर्णाः ॥ १४ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

[ लक्षा० ] ऋश्यप्रख्या इत्यत्र सारङ्ग ऋश्यः पृषतो रुरुश्चेत्यभिधानात् ऋश्यः सारङ्गः ॥ १४ ॥

[ नील० ] देवदत्ताः चित्ररथेन दत्ताः ॥ १७ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षट्पञ्चाशत्तमोऽध्यायः ॥ ५६ ॥

[ लक्षा० ] कल्माषाङ्गास्तित्तिरिचित्रपृष्ठा इत्यत्र कल्माषः कृष्णपाण्ड्य इत्यभिधानात् कृष्णपाण्डराङ्गाः । ‘ तित्तिरिः कुक्कुभो लावो जीवंजीवश्चकोरकः ’ इत्यभिधानात् चित्रनानावर्णः पक्षी तित्तिरिः । लाविकेहक्रि इत्यपभ्रंशभाषा । तद्वद्वर्णाः ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

[ नील० ] कांस्तत्रेति ॥ १ ॥

[ अर्जु० ] प्रार्थेन परभागेन ॥ १ ॥ चेकितानं यादवविशेषम् ॥ २ ॥ विषमौ न तुल्यौ ॥ १३ ॥

[ सर्व० ] प्रत्यर्थिनः प्रत्यर्थिभावेनास्माकं समागतान् पाण्डवैः ॥ १ ॥ विषमावतुल्यौ युधिष्ठिरस्याल्पसत्त्वात् ॥ १३ ॥

---

१७ ख. जवेन चैवाप्रतिरूपाः सदश्वाः ॥ षट्पञ्चाशोऽध्यायः ॥ ५६ ॥

७ ख. सैन्यस्य । १३ ख. विषमाविति भारत ।

दुर्योधनः सहसुतः सार्धं भ्रातृशतेन च ।
प्राच्याश्च दाक्षिणात्याश्च भीमसेनस्य भागतः ॥ १४ ॥
अर्जुनस्य तु भागेन कर्णो वैकर्तनो मतः ।
अश्वत्थामा विकर्णश्च सैन्धवश्च जयद्रथः ॥ १५ ॥
अशक्याश्चैव ये केचित्पृथिव्यां शूरमानिनः ।
सर्वांस्तानर्जुनः पार्थः कल्पयामास भागतः ॥ १६ ॥
महेष्वासा राजपुत्रा भ्रातरः पञ्च केकयाः ।
केकयानेव भागेन कृत्वा योत्स्यन्ति संयुगे ॥ १७ ॥
तेषामेव कृतो भागो मालवाः शाल्वकास्तथा ।
त्रिगर्तानां च वै मुख्यौ यौ तौ संशप्तकाविति ॥ १८ ॥
दुर्योधनसुताः सर्वे तथा दुःशासनस्य च ।
सौभद्रेण कृतो भागो राजा चैव बृहद्बलः ॥ १९ ॥
द्रौपदेया महेष्वासाः सुवर्णविकृतध्वजाः ।
धृष्टद्युम्नमुखा द्रोणमभियास्यन्ति भारत ॥ २० ॥
चेकितानः सोमदत्तं द्वैरथे योद्धुमिच्छति ।
भोजं तु कृतवर्माणं युयुधानो युयुत्सति ॥ २१ ॥
सहदेवस्तु माद्रेयः शूरः संक्रन्दनो युधि ।
स्वमंशं कल्पयामास श्यालं ते सुबलात्मजम् ॥ २२ ॥
उलूकं चैव कैतव्यं ये च सारस्वता गणाः ।
नकुलः कल्पयामास भागं माद्रवतीसुतः ॥ २३ ॥
ये चान्ये पार्थिवा राजन् प्रत्युद्यास्यन्ति संगरे ।
समाह्वानेन तांश्चापि पाण्डुपुत्रा अकल्पयन् ॥ २४ ॥
एवमेषामनीकानि प्रविभक्तानि भागशः ।
यत्तेकार्यं सपुत्रस्य क्रियतां तदकालिकम् ॥ २५ ॥

धृतराष्ट्र उवाच—

न सन्ति सर्वे पुत्रा मे मूढा दुर्द्यूतदेविनः ।
येषां युद्धं बलवता भीमेन रणमूर्धनि ॥ २६ ॥
राजानः पार्थिवाः सर्वे प्रोक्षिताः कालधर्मणा ।
गाण्डीवाग्निं प्रवेक्ष्यन्ति पतङ्गा इव पावकम् ॥ २७ ॥
विद्रुतां वाहिनीं मन्ये कृतवैरैर्महात्मभिः ।
तां रणे केऽनुयास्यन्ति प्रभग्नां पाण्डवैर्युधि ॥ २८ ॥
सर्वे ह्यतिरथाः शूराः कीर्तिमन्तः प्रतापिनः ।
सूर्यपावकयोस्तुल्यास्तेजसा समितिंजयाः ॥ २९ ॥
येषां युधिष्ठिरो नेता गोप्ता च मधुसूदनः ।
योधौ च पाण्डवौ वीरौ सव्यसाचिवृकोदरौ ॥ ३० ॥
नकुलः सहदेवश्च धृष्टद्युम्नश्च पार्षतः ।
सात्यकिर्द्रुपदश्चैव धृष्टकेतुश्च सानुजः ॥ ३१ ॥
उत्तमौजाश्च पाञ्चाल्यो युधामन्युश्च दुर्जयः ।
शिखण्डी क्षत्रदेवश्च तथा वैराटिरुत्तरः ॥ ३२ ॥
काशयश्चेदयश्चैव मत्स्याः सर्वे च सृञ्जयाः ।
विराटपुत्रो बभ्रुश्च पाञ्चालाश्च प्रभद्रकाः ॥ ३३ ॥
येषामिन्द्रोऽप्यकामानां न हरेत्पृथिवीमिमाम् ।
वीराणां रणधीराणां ये भिन्द्युः पर्वतानपि ॥ ३४ ॥
तान्सर्वगुणसंपन्नानमनुष्यप्रतापिनः ।
क्रोशतो मम दुष्पुत्रो योद्धुमिच्छति सञ्जय ॥ ३५ ॥

दुर्योधन उवाच ।

उभौ स्व एकजातीयौ तथोभौ भूमिगोचरौ ।
अथ कस्मात्पाण्डवानामेकतो मन्यसे जयम् ॥ ३६ ॥
पितामहं च द्रोणं च कृपं कर्णं च दुर्जयम् ।
जयद्रथं सोमदत्तमश्वत्थामानमेव च ॥ ३७ ॥
सुतेजसो महेष्वासानिन्द्रोऽपि सहितोऽमरैः ।
अशक्तः समरे जेतुं किं पुनस्तात पाण्डवाः ॥ ३८ ॥
सर्वे च पृथिवीपाला मदर्थे तात पाण्डवान् ।
आर्याः शस्त्रभृतः शूराः समर्थाः प्रतिबाधितुम् ॥ ३९ ॥

[ लक्षा० ] मुखमन्धकवृष्णीनामित्यत्र मुखं प्रधाने प्रारम्भे वक्त्रे निःसरणेऽपिचेत्यमरः, प्रधानम् ॥ २ ॥

[ नील० ] समाह्वानेन तत्तन्नामाख्यानेन ॥ २४ ॥ अकालिकं कालविलम्बं विना ॥ २५ ॥ प्रोक्षिताः पशुवत् वधार्थं संस्कृताः कालधर्मणा यजमानेन वा ॥ २७ ॥

[ अर्जु० ] सुबलात्मजं शकुनिम् ॥ २२ ॥ कैतव्यं कितवस्य शकुनेः पुत्रम् ॥ २३ ॥ प्रोक्षिताः अभिषिक्ताः कालधर्मणा मृत्युना ॥ २७ ॥ स्वो भवावः ॥ ३६ ॥ पृथिवीं पांडवांश्च भोक्तुं हन्तुं च मदर्थे सृष्टा धात्रेति शेषः ॥ ३९ ॥

[ सर्व० ] सारस्वताः सरस्वतीतीरस्थाः ॥ २३ ॥ सर्वां च पृथिवीं सृष्ट्वा मदर्थं पाण्डवान् प्रबाधितुं जेतुं सर्वां च पृथिवीं, पृथिवीस्थिता राजानो मदर्थं बाधितुं सृष्टा इत्यन्वयः ॥ ३९ ॥

[ लक्षा० ] सम्यक्क्रन्दयति आक्रोशयति शत्रूनिति संक्रन्दनः ॥ २२ ॥

१४ ख. ससैन्यश्च सार्धं । १५ ख. अश्वत्थामा भगदत्तः । २३ ख. चापि कैतव्यं । ३५ ख. सर्वान्गुणसं° । ख. °मिच्छत्यसंशयम् । ३९ ख. आर्यान्धृतिमतः शूरानग्निकल्पान्प्रबाधितुम् ।

न मामकान्पाण्डवास्ते समर्थाः प्रतिवीक्षितुम् ।
पराक्रान्तो ह्यहं पाण्डून्सपुत्रान्योद्धुमाहवे ॥ ४० ॥
मत्प्रियं पार्थिवाः सर्वे ये चिकीर्षन्ति भारत ।
ते तानावारयिष्यन्ति ऐणेयानिव तन्तुना ॥ ४१ ॥
महता रथवंशेन शरजालैश्च मामकैः ।
अभिद्रुता भविष्यन्ति पाञ्चालाः पाण्डवैः सह॥४२॥

धृतराष्ट्र उवाच—

उन्मत्त इव मे पुत्रो विलपत्येष सञ्जय ।
नहि शक्तो रणे जेतुं धर्मराजं युधिष्ठिरम् ॥ ४३ ॥
जानाति हि यथा भीष्मः पाण्डवानां यशस्विनाम् ।
बलवत्तां सपुत्राणां धर्मज्ञानां महात्मनाम् ॥ ४४ ॥
यतो नारोचयदयं विग्रहं तैर्महात्मभिः ।
किं तु सञ्जय मे ब्रूहि पुनस्तेषां विचेष्टितम् ॥४५॥
कस्तांस्तरस्विनो भूयः संदीपयति पाण्डवान् ।
अर्चिष्मतो महेष्वासान्हविषा पावकानिव ॥ ४६ ॥

सञ्जय उवाच—

धृष्टद्युम्नः सदैवैतान्संदीपयति भारत ।
युद्धयध्वमिति मा भैष्ट युद्धाद्भरतसत्तमाः ॥ ४७ ॥
ये केचित्पार्थिवास्तत्र धार्तराष्ट्रेण संवृताः ।
युद्धे समागमिष्यन्ति तुमुले शस्त्रसंकुले ॥ ४८ ॥
तान्सर्वानाहवे क्रुद्धान्सानुबन्धान्समागतान् ।
अहमेकः समादास्ये तिमिर्मत्स्यानिवोदकात् ॥४९॥
भीष्मं द्रोणं कृपं कर्णं द्रौणिं शल्यं सुयोधनम् ।
एतांश्चापि निरोत्स्यामि वेलेव मकरालयम् ॥५०॥
तथाब्रुवन्तं धर्मात्मा प्राह राजा युधिष्ठिरः ।
तव धैर्यं च वीर्यं च पाञ्चालाः पाण्डवैः सह ॥५१॥
सर्वे समधिरूढाः स्म संग्रामात्रः समुद्धर ।
जानामि त्वां महाबाहो क्षत्रधर्मे व्यवस्थितम् ॥५२॥
समर्थमेकं पर्याप्तं कौरवाणां विनिग्रहे ।
पुरस्तादुपयातानां कौरवाणां युयुत्सताम् ॥ ५३ ॥
भवता यद्विधातव्यं तन्नः श्रेयः परंतप ।
संग्रामादपयातानां भग्नानां शरणैषिणाम् ॥ ५४ ॥
पौरुषं दर्शयन् शूरो यस्तिष्ठेदग्रतः पुमान् ।
क्रीणीयात्तं सहस्रेण इति नीतिमतां मतम् ॥ ५५ ॥
स त्वं शूरश्च वीरश्च विक्रान्तश्च नरर्षभ ।
भयार्तानां परित्राता संयुगेषु न संशयः ॥ ५६ ॥
एवं ब्रुवति कौन्तेये धर्मात्मनि युधिष्ठिरे ।
धृष्टद्युम्न उवाचेदं मां वचो गतसाध्वसम् ।
सर्वान् जनपदान्सूत योधा दुर्योधनस्य ये ॥५७॥
सबाह्लिकान् कुरून्ब्रूयाः प्रातिपेयान् शरद्वतः ।
सूतपुत्रं तथा द्रोणं सहपुत्रं जयद्रथम् ॥ ५८ ॥
दुःशासनं विकर्णं च तथा दुर्योधनं नृपम् ।
भीष्मं च ब्रूहि गत्वा त्वमाशु गच्छ च माचिरम्५९
युधिष्ठिरः साधुनैवाभ्युपेयो
मा वोऽवधीदर्जुनो देवगुप्तः ॥
राज्यं दद्धं धर्मराजस्य तूर्णं
याचध्वं वै पाण्डवं लोकवीरम् ॥ ६० ॥

[ नील० ] ऐणेयान् हरिणशावान् तन्तुना पाशेन ॥ ४१ ॥ शरद्वतः आयुष्मतः विरुद्धलक्षणया गतायुष इत्यर्थः ॥ ५८ ॥ दद्धं ददत ॥ ६० ॥

[ अर्जु० ] निवारयन्ति ऐणेयान् बालमृगान् । तन्तुना रज्ज्वा ॥ ४१ ॥ संवृता रुद्धाः कवचह्रदेकरग ॥ ४८ ॥ निरोत्स्यामि निरोधविषयीकरिष्यामि । वेला तीरम् ॥ ५० ॥ एकमद्वितीयं समर्थं पर्याप्तमिति पर्यायाभ्यां सामर्थ्यातिशयमाह । समर्थं हितं वा ॥ ५३ ॥ संनिधातव्यम् अनुरूपं करणीयम् ॥ ५४ ॥ कुरून् प्रातिपेयानिति यावत् ॥ ५८ ॥ गुणवत्कुलपुरुषोद्भावनेन गुणवत्तामाह देवगुप्तः कृष्णरक्षितः ॥ ६० ॥

इति उद्योगपर्वणि अर्जुनमि० टीकायां सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

[ सर्व० ] निवारयिष्यन्ति । ऐणेयानि एणीशावकानि च । तन्तुना पाशेन ॥ ४१ ॥ कवचह्रदे कवचानां स्थाने युद्ध इति यावत् ॥४८॥ समर्थं शक्तं पर्याप्तं यथेष्टम् ॥५३॥ संविधातव्यं व्यूहादिकं विधानं कर्तव्यम् ॥ ५४ ॥ शूरो भीतानां त्राता ॥ ५५ ॥ वीरो बलवान् ॥ ५६ ॥ शरद्वतं कृपं तद्धितलोपात् ॥ ५८ ॥ आर्जवेन साधुभावेनाभ्युपैति प्रत्युपगच्छति । क्षिप्रं शीघ्रम् ॥ ६० ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

[ लक्षा० ] ऐणेयानिव तन्तुनेत्यत्र ऐणेयान् एणशिशून् तन्तुना जालेन ॥ ४१ ॥ पर्याप्तं संपूर्णम् ॥ ५३ ॥ प्रतिवीरान् शरद्वत इत्यत्र शरा एषां वर्तन्त इति शरद्वन्तः । शरपाणयः तान् ॥ ५८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

४५ ख. नारोचयमहं । ख. प्रब्रूहि पाण्डवानां । ४८ ब. कवचह्रदे ।

नैतादृशो हि योधोऽस्ति पृथिव्यामिह कश्चन ।
यथाविधः सव्यसाची पाण्डवः सत्यविक्रमः ॥६१॥
देवैर्हि संभृतो दिव्यो रथो गाण्डीवधन्वनः ।
न स जेयो मनुष्येण मा स्म कृध्वं मनो युधि ॥६२॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

## अष्टपञ्चाशत्तमोऽध्यायः ५८

अर्जुनवीर्योद्भीतेन धृतराष्ट्रेण–भीष्मादयो युद्धं नेच्छन्ति नापि त्वं स्वेच्छया किंतु कर्णशकुनिदुःशासनैः पापैः प्रयुक्त एवेत्युक्तो दुर्योधनः कर्णादयश्चत्वार एव वयं शत्रून्हनिष्यामो नाहं भीष्मादिषु भारं कृत्वा पाण्डवान्समाह्वय इत्युक्तवान् ॥१॥ ततो धृतराष्ट्रस्य पिलपनम् ॥२॥

**धृतराष्ट्र उवाच—**

क्षत्रतेजा ब्रह्मचारी कौमारादपि पाण्डवः ।
तेन संयुगमेष्यन्ति मन्दा विलपतो मम ॥ १ ॥
दुर्योधन निवर्तस्व युद्धाद्भरतसत्तम ।
नहि युद्धं प्रशंसन्ति सर्वावस्थमरिन्दम ॥ २ ॥
अलमर्धं पृथिव्यास्ते सहामात्यस्य जीवितुम् ।
प्रयच्छ पाण्डुपुत्राणां यथोचितमरिन्दम ॥ ३ ॥
एतद्धि कुरवः सर्वे मन्यन्ते धर्मसंहितम् ।
यस्त्वं प्रशान्तिं मन्येथाः पाण्डुपुत्रैर्महात्मभिः ॥ ४ ॥
अङ्गेमां समवेक्षस्व पुत्र स्वामेव वाहिनीम् ।
जात एष तवाभावस्त्वं तु मोहान्न बुध्यसे ॥ ५ ॥
न त्वहं युद्धमिच्छामि नैतदिच्छति बाह्लिकः ।
न च भीष्मो न च द्रोणो नाश्वत्थामा न सञ्जयः ६
न सोमदत्तो न शलो न कृपो युद्धमिच्छति ।
सत्यव्रतः पुरुमित्रो जयो भूरिश्रवास्तथा ॥ ७ ॥
येषु संप्रतितिष्ठेयुः कुरवः पीडिताः परैः ।
ते युद्धं नाभिनन्दन्ति तत्तुभ्यं तात रोचताम् ॥८॥
न त्वं करोषि कामेन कर्णः कारयिता तव ।
दुःशासनश्च पापात्मा शकुनिश्चापि सौबलः ॥ ९ ॥

**दुर्योधन उवाच—**

नाहं भवति न द्रोणे नाश्वत्थाम्नि न सञ्जये ।
न भीष्मे न च काम्बोजे न कृपे न च बाह्लिके १०
सत्यव्रते पुरुमित्रे भूरिश्रवसि वा पुनः ।
अन्येषु वा तावकेषु भारं कृत्वा समाह्वयम् ॥११॥
अहं च तात कर्णश्च रणयज्ञं वितत्य वै ।
युधिष्ठिरं पशुं कृत्वा दीक्षितौ भरतर्षभ ॥ १२ ॥
रथो वेदी स्रुवः खड्गो गदा स्रुक् कवचं सदः ।
चातुर्होत्रं च धुर्या मे शरा दर्भा हविर्यशः ॥ १३ ॥
आत्मयज्ञेन नृपते इष्ट्वा वैवस्वतं रणे ।
विजित्य च समेष्यावो हतामित्रौ श्रिया वृतौ ॥१४॥
अहं च तात कर्णश्च भ्राता दुःशासनश्च मे ।
एते वयं हनिष्यामः पाण्डवान्समरे त्रयः ॥ १५ ॥
अहं हि पाण्डवान् हत्वा प्रशास्ता पृथिवीमिमाम् ।
मां वा हत्वा पाण्डुपुत्रा भोक्तारः पृथिवीमिमाम् १६
त्यक्तं मे जीवितं राज्यं धनं सर्वं च पार्थिव ।
न जातु पाण्डवैः सार्धं वसेयमहमच्युत ॥ १७ ॥
यावद्धि सूच्यास्तीक्ष्णाया विध्येदग्रेण मारिष ।
तावदप्यपरित्याज्यं भूमेर्नः पाण्डवान्प्रति ॥ १८ ॥

**धृतराष्ट्र उवाच—**

सर्वान्वस्तात शोचामि त्यक्तो दुर्योधनो मया ।
ये मन्दमनुयास्यध्वं यान्तं वैवस्वतक्षयम् ॥ १९ ॥
रुरूणामिव यूथेषु व्याघ्राः प्रहरतां वराः ।
वरान्वरान्हनिष्यन्ति समेता युधि पाण्डवाः ॥ २० ॥

---

[ नील० ] कृध्वं कुरुध्वम् ॥ ६२ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे सप्तपञ्चाशत्तमोऽध्यायः ॥ ५७ ॥

[ नील० ] क्षत्रेति ॥ १ ॥ जात एष तवाभाव इत्यत्र शम एव महच्छ्रेय इत्याधुनिकः पाठः । तराभ्याव इति पाठे तराणामश्वादीनां वेगवतां वाहनानामभ्यावः सर्वतः स्वादनं कण्डूरोगाद्युपद्रव इति यावत् । अव रक्षणगतिकान्तीत्यादेः स्वादनार्थात् घञ् । आस्राव इति पाठे आस्रावः क्षतं, यानेषूपद्रवः पराजयलक्षणमिति भावः ॥ ५ ॥ चातुर्होत्रं चतुर्णां होतॄणाम् ऋत्विजां कर्म ॥ १३ ॥ रुरूणामिवेत्यत्र कुरूणां लाटभाषया । अजानामिति पाठो युक्तः । पक्षे कुरूणां मध्ये वरान् वरान् व्याघ्रा इवेति योजना॥२०॥

[ अर्जु० ] हे अङ्ग इमां पाण्डवसेनां स्वामेव आत्मीयामेव अवेक्षस्व जानीहि । आस्रावः क्षतिर्नाश इत्यर्थः ॥५॥

[ सर्व० ] निवर्तस्वागच्छ ॥ २ ॥ अङ्ग संबोधने । इमां स्वामेव वाहिनीं समपेक्षस्व रक्ष अन्यथा तु तवा-

---

६२ ख. मास्म युद्धे मनःकृथाः ॥ सप्तपञ्चाशोऽध्यायः ॥ ५७ ॥

४ ख. धर्मसंहिताः । ख. यस्त्वं प्रशान्तिमिच्छेथाः ॥ अष्टपञ्चाशो० ॥ ५८ ॥

प्रतीपमिव मे भाति युयुधानेन भारती ।
व्यस्ता सीमन्तिनी ग्रस्ता प्रमृष्टा दीर्घबाहुना॥२१॥
संपूर्णं पूरयन् भूयो धनं पार्थस्य माधवः ।
शैनेयः समरे स्थाता बीजवत्प्रवपन् शरान् ॥२२॥
सेनामुखे प्रयुद्धानां भीमसेनो भविष्यति ।
तं सर्वे संश्रयिष्यन्ति प्राकारमकुतोभयम् ॥ २३ ॥
यदा द्रक्ष्यसि भीमेन कुञ्जरान्विनिपातितान् ।
विशीर्णदन्तान् गिर्याभान् भिन्नकुम्भान्सशोणितान्
तानभिप्रेक्ष्य संग्रामे विशीर्णानिव पर्वतान् ।
भीतो भीमस्य संस्पर्शात्स्मर्तोऽसि वचनस्य मे॥२५॥
निर्दग्धं भीमसेनेन सैन्यं रथहयद्विपम् ।
गतिमग्नेरिव प्रेक्ष्य स्मर्तोऽसि वचनस्य मे ॥ २६ ॥
महद्वो भयमागामि न चेच्छाम्यथ पाण्डवैः ।
गदया भीमसेनेन हताः शममुपैष्यथ ॥ २७ ॥
महावनमिवच्छिन्नं यदा द्रक्ष्यसि पातितम् ।
बलं कुरूणां भीमेन तदा स्मर्तोऽसि मे वचः ॥२८॥
वैशम्पायन उवाच—
एतावदुक्त्वा राजा तु सर्वांस्तान् पृथिवीपतीन् ।
अनुभाष्य महाराज पुनः पप्रच्छ सञ्जयम् ॥ २९ ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

## एकोनषष्टितमोऽध्यायः ५९.

संजयेन कृष्णवचनकथनम् ॥ १ ॥

धृतराष्ट्र उवाच—
यदब्रूतां महात्मानौ वासुदेवधनञ्जयौ ।
तन्मे ब्रूहि महाप्राज्ञ शुश्रूषे वचनं तव ॥ १ ॥
सञ्जय उवाच—
शृणु राजन्यथा दृष्टौ मया कृष्णधनञ्जयौ ।
ऊचतुश्चापि यद्वीरौ तच्चे वक्ष्यामि भारत ॥ २ ॥
पादाङ्गुलीरभिप्रेक्षन् प्रयतोऽहं कृताञ्जलिः ।
शुद्धान्तं प्राविशं राजन्नाख्यातुं नरदेवयोः ॥ ३ ॥
नैवाभिमन्युर्न यमौ तं देशमभियान्ति वै ।
यत्र कृष्णौ च कृष्णा च सत्यभामा च भामिनी ४
उभौ मध्वासवक्षीबावुभौ चन्दनरूषितौ ।
स्रग्विणौ वरवस्त्रौ तौ दिव्याभरणभूषितौ ॥ ५ ॥
नैकरत्नविचित्रं तु काञ्चनं महदासनम् ।
विविधास्तरणाकीर्णं यत्रासातामरिन्दमौ ॥ ६ ॥

---

स्रावः स्तुतिपरिचयो जात एव ॥ ५ ॥ चातुर्होत्रं होमसाधनमृत्विक्चतुष्टयं होताध्वर्युर्ब्रह्माग्नीध्रश्चेति । धुर्या रथाश्वाः ॥१३॥ आत्मा शरीरं यज्ञेन···इ हविषा कृतेन यज्ञेन ॥ १४ ॥

[ लक्षा० ] ये तु संप्रतिविष्टेयुरित्यत्र परैः पाण्डवैः पीडिताः पीडिता अपि ॥ ८ ॥

[ नील० ] भारती सेना स्त्रीरूपकेण निर्दिष्टा ॥२१॥ धनं बलम् ॥२२॥ प्राकारमिव भीमं संश्रयिष्यन्ति ॥२३॥

इति उद्योगप० नैलकंठीये० भारतभावदीपे अष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

[ अर्जु० ] प्रतीपं विपरीतम् । इवशब्दोऽवधारणे । युयुधानेन सात्यकिना भारती कुरुसेना सीमन्तिनी सीमन्तिनीवद् भिन्ना ॥ २१ ॥ माधवः सात्यकिः ॥ २२ ॥ प्राकारं दुर्गमिव ॥ २३ ॥

इति उद्योग पर्वणि अर्जुनमि० टीकायामष्टपञ्चाशोऽध्यायः ॥५८॥

[ सर्व० ] प्रतीपमिवेति इवशब्दो भिन्नक्रमः । प्रतीपं प्रातिकूल्येन व्यस्ता सीमन्तिनी स्त्रीव सेना भविष्यतीति मे भाति ॥ २१ ॥ प्रयुद्धानां युध्यमानानां सेनामभिभविष्यति भीमः ॥ २३ ॥ अग्निवर्त्मेव शून्यम् ॥ २६ ॥

इति श्रीमहाभारते उद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामष्टपञ्चाशत्तमोऽध्यायः ॥ ५८ ॥

[ लक्षा० ] प्रतीपमेति मे सेनेत्यत्र व्यस्ता विशेषेण अस्ता नाशिता मे सेनेति संबन्धः । दीर्घबाहुना पुरुषेण प्रमृष्टा बलाद्गृहीता सिमन्तिनी नारीव प्रतीपं विपरीतमेति ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अष्टपञ्चाशोऽध्यायः ॥ ५८ ॥

[ नील० ] यदब्रूतामिति ॥१॥ आसातामुपविष्टौ॥६॥

[ अर्जु० ] पादाङ्गुलीरभिप्रेक्षन्निति दृष्टिचापल्यपरिहारमाह । प्रयतो बाह्याभ्यन्तरपूतः । शुद्धान्तमन्तःपुरम् नररूपयोर्देवयोः कृष्णार्जुनरूपयोः ॥ ३ ॥ मध्वासवः माध्वी सुरा तेन क्षीबौ मत्तौ ॥ ५ ॥

[ लक्षा० ] आगुल्फेभ्योऽभिसंवीतः यतोहमित्यत्र सं-

अर्जुनोत्सङ्गगौ पादौ केशवस्योपलक्षये ।
अर्जुनस्य च कृष्णायां सत्यायां च महात्मनः ॥७॥
काञ्चनं पादपीठं तु पार्थो मे प्रादिशत्तदा ।
तदहं पाणिना स्पृष्ट्वा ततो भूमावुपाविशम् ॥ ८ ॥
ऊर्ध्वरेखातलौ पादौ पार्थस्य शुभलक्षणौ ।
पादपीठादपहृतौ तत्रापश्यमहं शुभौ ॥ ९ ॥
श्यामौ बृहन्तौ तरुणौ शालस्कन्धाविवोद्गतौ ।
एकासनगतौ दृष्ट्वा भयं मां महदाविशत् ॥ १० ॥
इन्द्रविष्णुसमावेतौ मन्दात्मा नावबुद्ध्यते ।
संश्रयाद्द्रोणभीष्माभ्यां कर्णस्य च विकत्थनात् ११
निदेशस्थाविमौ यस्य मानसस्तस्य सेत्स्यते ।
संकल्पो धर्मराजस्य निश्चयो मे तदाऽभवत् ॥१२॥
सत्कृतश्चान्नपानाभ्यामासीनो लब्धसत्क्रियः ।
अञ्जलिं मूर्ध्नि संधाय तौ संदेशमचोदयम् ॥ १३ ॥
धनुर्गुणकिणाङ्केन पाणिना शुभलक्षणम् ।
पादमानमयन्पार्थः केशवं समचोदयत् ॥ १४ ॥
इन्द्रकेतुरिवोत्थाय सर्वाभरणभूषितः ।
इन्द्रवीर्योपमः कृष्णः संविष्टो माभ्यभाषत ॥१५॥
वाचं स वदतां श्रेष्ठो ह्लादिनीं वचनक्षमाम् ।
त्रासिनीं धार्तराष्ट्राणां मृदुपूर्वां सुदारुणाम् ॥१६॥
वाचं तां वचनार्हस्य शिक्षाक्षरसमन्विताम् ।
अश्रौषमहमिष्टार्थां पश्चाद्धृदयदारणीम् ॥ १७ ॥

**वासुदेव उवाच—**

सञ्जयेदं वचो ब्रूया धृतराष्ट्रं मनीषिणम् ।
कुरुमुख्यस्य भीष्मस्य द्रोणस्यापि च शृण्वतः १८
आवयोर्वचनात्सूत ज्येष्ठानप्यभिवादयन् ।
यवीयसश्च कुशलं पश्चात्पृष्ट्वैवमुत्तरम् ॥ १९ ॥
यजध्वं विविधैर्यज्ञैर्विप्रेभ्यो दत्त दक्षिणाः ।
पुत्रैर्दारैश्च मोदध्वं महद्वो भयमागतम् ॥ २० ॥
अर्थांस्त्यजत पात्रेभ्यः सुतान्प्राप्नुत कामजान् ।
प्रियं प्रियेभ्यश्चरत राजा हि त्वरते जये ॥ २१ ॥
ऋणमेतत्प्रवृद्धं मे हृदयान्नापसर्पति ।
यद्गोविन्देति चुक्रोश कृष्णा मां दूरवासिनम्॥२२॥
तेजोमयं दुराधर्षं गाण्डीवं यस्य कार्मुकम् ।
मद्द्वितीयेन तेनेह वैरं वः सव्यसाचिना ॥ २३ ॥
मद्द्वितीयं पुनः पार्थं कः प्रार्थयितुमिच्छति ।
यो न कालपरीतो वाऽप्यपि साक्षात्पुरन्दरः॥२४॥

वीतः वस्त्रेणच्छन्नः । शुद्धान्तः 'शुद्धांतश्चावरोधश्च' इत्यभिधानादन्तःपुरम् ॥ ३ ॥

[ नील० ] द्रोणभीष्माभ्यां द्रोणभीष्मयोः ॥ ११ ॥ मानसः संकल्पः सेत्स्यते ॥ १२ ॥ ऋणमिति वस्त्रापहरणकाले गोविन्देति चुक्रोश तद्वस्त्रप्रदानमात्रेण तस्याक्रोशस्य ऋणं न परिहृतं किंतु कौरवाणामुच्छेदं विना तत् हृदयान्नापसर्पतीत्यर्थः ॥ २२ ॥

[ अर्जु० ] निदेशस्थौ आज्ञावशवर्तिनौ ॥१२॥ सत्कृतः पूजितः । आच्छन्नः वस्त्रभूषणैर्लब्धसत्क्रियः वागुपचारेण। संदेशं वचनम् ॥ १३ ॥ मा माम् ॥ १५ ॥ ह्लादिनीं नन्दिनीम् ॥ १६ ॥ इष्टार्थी माधुर्यात् हृदयदारणीं कार्कश्यात् ॥१७॥ संजयेत्यादि धृतराष्ट्रमभिवादयन् सुखं वचो यवीयसः कनिष्ठान् कुशलं सुखं च वचो ब्रूहि इत्यर्थः ॥ १८ ॥ उत्तरमुत्कृष्टं दत्त त्यजत कामजान् औरसान्। प्रियेभ्यः प्रियार्थम्। राजार्हीति निर्विशेषेण राजपदेन युधिष्ठिरं वदन् राज्यानर्हत्वं कौरवानभिप्रैति ॥२१॥ प्रार्थयितुं युद्धायेति शेषः । विपरीतः शत्रुः परीतो मित्रम् ॥ २४ ॥

[ सर्व० ] मध्वासवो मधु मद्यम् ॥ ५ ॥ लब्धसत्क्रियो लब्धादरः ॥ १३ ॥ ह्लादिनी ह्लादहेतुः । वचनक्षमां वक्तुं योग्याम् ॥ १६ ॥ सुखं यथा भवति तथाभिवादयन्नपि धृतराष्ट्रमुत्तरं वचो ब्रूयाः । यवीयसश्च कुशलं ब्रूयाः ॥ १८ ॥ कामजान् स्वस्य कामाद्रेतसो जातान् ॥ २१ ॥ प्रार्थयितुं महीतुं कार्ये कारणोपचारात् । विपरीतः शत्रुः । परीतो मित्रम् ॥ २४ ॥

इति श्रीमहा० उद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामूनषष्टितमोऽध्यायः ॥ ५९ ॥

[ लक्षा० ] अर्जुनस्य च कृष्णाया इत्यत्र मञ्चसमीपे अधस्तात्कनकमयपीठे स्थितायाः कृष्णाया इत्यर्थः ॥ ७ ॥ काञ्चनं पादपीठं तु इत्यत्र पादपीठं संजयं दृष्ट्वा द्रौपद्युत्थानानन्तरं मञ्चाधस्ताल्लम्बमानयोः आधारभूतं पादपीठम् ॥ ८ ॥ निर्देशगाविमावित्यत्र निर्देशः शासनम् ॥ १२ ॥ धनुर्धरोचितेनेत्यत्र धनुषः धरो धारणं तस्य उचितेन ॥ १४ ॥ बहिश्चरस्य प्राणस्य प्रियस्य प्रियकाङ्क्षिणः । मतिमान्मतिमास्थाय केशवः संदधे वचः

१३ ख. आच्छन्नो लब्धसत्क्रियः । १५ ख. इन्द्रकेतुरिवोत्तिष्ठन् । १६ ख. संवदतां । १७ ख. हृदयशोषणीम् ; अ. हृदयहारिणीं । १९ ख. सूत पूर्वमुक्त्वाभिवादनम् । ख. कौशल्यम् । २४ ख. विपरीतः परीतो वा ॥

एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

बाहुभ्यामुद्वहेद्भूमिं दहेत् क्रुद्ध इमाः प्रजाः ।
पातयेत्रिदिवाद्देवान्योऽर्जुनं समरे जयेत् ॥ २५ ॥
देवासुरमनुष्येषु यक्षगन्धर्वभोगिषु ।
न तं पश्याम्यहं युद्धे पाण्डवं योऽभ्ययाद्रणे ॥२६॥
यत्तद्विराटनगरे श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ २७॥
एकेन पाण्डुपुत्रेण विराटनगरे यदा ।
भग्नाः पलायत दिशः पर्याप्तं तन्निदर्शनम् ॥ २८ ॥
बलं वीर्यं च तेजश्च शीघ्रता लघुहस्तता ।
अविषादश्च धैर्यं च पार्थान्नान्यत्र विद्यते ॥ २९ ॥
इत्यब्रवीद्धृषीकेशः पार्थमुद्धर्षयन् गिरा ।
गर्जन्समयवर्षीव गगने पाकशासनः ॥ ३० ॥
केशवस्य वचः श्रुत्वा किरीटी श्वेतवाहनः ।
अर्जुनस्तन्महद्वाक्यमब्रवीद्रोमहर्षणम् ॥ ३१ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

## षष्टितमोऽध्यायः ६०

देवाः पुत्रप्रीत्याऽग्निश्च प्रत्युपकारेच्छया युद्धे पाण्डवानां सहायकं चरिष्यन्तीति धृतराष्ट्रस्य दुर्योधनं प्रत्युक्तिः ॥ १ ॥

**वैशम्पायन उवाच—**

सञ्जयस्य वचः श्रुत्वा प्रज्ञाचक्षुर्जनेश्वरः ।
ततः संख्यातुमारेभे तद्वचो गुणदोषतः ॥ १ ॥
प्रसंख्याय च सौक्ष्म्येण गुणदोषान्विचक्षणः ।
यथावन्मतितत्त्वेन जयकामः सुतान्प्रति ॥ २ ॥
बलाबलं विनिश्चित्य याथातथ्येन बुद्धिमान् ।
शक्तिं संख्यातुमारेभे तदा वै मनुजाधिपः ॥ ३ ॥
देवमानुषयोः शक्त्या तेजसा चैव पाण्डवान् ।
कुरून् शक्त्याऽल्पतरया दुर्योधनमथाब्रवीत् ॥ ४ ॥
दुर्योधनेयं चिन्ता मे शश्वन्न व्युपशाम्यति ।
सत्यं ह्येतदहं मन्ये प्रत्यक्षं नानुमानतः ॥ ५ ॥
आत्मजेषु परं स्नेहं सर्वभूतानि कुर्वते ।
प्रियाणि चैषां कुर्वन्ति यथाशक्ति हितानि च ॥६॥
एवमेवोपकर्तॄणां प्रायशो लक्षयामहे ।
इच्छन्ति बहुलं सन्तः प्रतिकर्तुं महत्प्रियम् ॥ ७ ॥

---

इत्यत्र बहिश्चरस्य प्राणस्य बहिश्चरप्राणसमार्जुनस्य ॥ १६ ॥ छन्दतः कुरुवृद्धस्येत्यत्र छन्दतः इच्छानुसारेण कुरुवृद्धस्य भीष्मस्य ॥१८॥ राजा हि त्वरत इत्यत्र राजा धर्मराजः ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

[ नील० ] बलं शारीरम् । वीर्यं मानसोत्साहः । तेजः शौर्यम् । शीघ्रता शीघ्रं कार्यावबोधः । लघुहस्तता वेगेन बाणप्रक्षेप्तृता ॥ २९ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

[ अर्जु० ] समरे युद्धे जेतुमशक्यत्वात् ॥ २५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकोनषष्टितमोऽध्यायः ॥ ५९ ॥

---

[ नील० ] सञ्जयस्येति ॥ १ ॥ वचस एव गुणान् दोषांश्च निश्चित्य स्वेषां परेषां च बलाबलं निश्चित्याह— देवेति । पाण्डवेषु दैवं मानुषं च बलमस्ति अस्माकं तु केवलं मानुषमेवास्तीत्यर्थः । शक्त्या परिच्छिद्येति शेषः ॥ ४ ॥

[ अर्जु० ] संख्यातुं विचारयितुम् ॥ १ ॥ सौक्ष्म्येण निपुणतया ॥ २ ॥ शक्त्या त्रिविधया तेजसा प्रतापेन पाण्डवान्, कुरूनल्पतरया शक्त्या प्रसंख्यायेत्यन्वयः ॥ ४ ॥ एवमेव स्वभाव इति शेषः । तमेव स्वभावमाह इच्छन्तीति प्रतिकर्तुम् ॥ ७ ॥

[ सर्व० ] संख्यातुं विचारयितुं गुणदोषतः अस्य वाक्यस्य तात्पर्यार्थो गुणोऽस्माकं दोषो वेति ॥ १ ॥ पाण्डवान् शक्त्या बलेन दैवमानुषतेजोरूपेण, कुरून् शक्त्याल्पतरया मात्रया शक्त्या विनिश्चित्य बलाबलं शक्तिं प्रभावोत्साहमन्त्रजां संख्यातुं गणयितुं स्वपरयोर्वा उभयथा दुर्योधनमब्रवीदित्यन्वयः ॥ ३ ॥ प्रियाणि चैषां कुर्वन्ति पितरस्ततः पुत्रप्रीत्या देवाः साहाय्यं करिष्यन्तीत्यग्रे वक्ष्यति ॥ ६ ॥ अत्रान्तरे अग्निरपि साचिव्यकर्ता भविष्यतीत्यत्रोपपत्तिमाह । एवमेवोपकर्तॄणां प्रत्युपकाराप्रतिसन्धानेनोपकर्तॄणां महत्प्रियं प्रतिकर्तुमिच्छन्ति सन्त इति प्रायशो लक्ष्यामहे । तथा च खाण्डवे एवमेव तर्पितोऽग्निः साचिव्यकर्ता अर्जुनस्यासमत्समागम इत्यन्वयः ॥ ७ ॥

[ लक्षा० ] तद्वचो गुणदोषत इत्यत्र तस्य सञ्जयस्य

अग्निः साचिव्यकर्ता स्यात्खाण्डवे तत्कृतं स्मरन् ।
अर्जुनस्यापि भीमेऽस्मिन् कुरुपाण्डुसमागमे ॥ ८ ॥
जातिगृद्ध्याभिपन्नाश्च पाण्डवानामनेकशः ।
धर्मादयः समेष्यन्ति समाहूता दिवौकसः ॥ ९ ॥
भीष्मद्रोणकृपादीनां भयादशनिसंनिभम् ।
रिरक्षिषन्तः संरम्भं गमिष्यन्तीति मे मतिः ॥ १० ॥
ते देवैः सहिताः पार्था न शक्याः प्रतिवीक्षितुम् ।
मानुषेण नरव्याघ्रा वीर्यवन्तोऽस्त्रपारगाः ॥ ११ ॥
दुरासदं यस्य दिव्यं गाण्डीवं धनुरुत्तमम् ।
दारुणौ चाक्षयौ दिव्यौ शरपूर्णौ महेषुधी ॥ १२ ॥
वानरश्च ध्वजे दिव्यो निःसङ्गो धूमवद्गतिः ।
रथश्च चतुरन्तायां यस्य नास्ति समः क्षितौ ॥ १३ ॥
महामेघनिभश्चापि निर्घोषः श्रूयते जनैः ।
महाशनिसमः शब्दः शात्रवाणां भयंकरः ॥ १४ ॥
यं चातिमानुषं वीर्ये कृत्स्नो लोको व्यवस्यति ।
देवानामपि जेतारं यं विदुः पार्थिवा रणे ॥ १५ ॥
शतानि पञ्च चैवेषून्यो गृह्णन्नैव दृश्यते ।
निमेषान्तरमात्रेण मुञ्चन् दूरं च पातयन् ॥ १६ ॥
यमाह भीष्मो द्रोणश्च कृपो द्रौणिस्तथैव च ।
मद्रराजस्तथा शल्यो मध्यस्था ये च मानवाः ॥ १७ ॥
युद्धायावस्थितं पार्थं पार्थिवैरतिमानुषैः ।
अशक्यं रथशार्दूलं पराजेतुमरिन्दमम् ॥ १८ ॥
क्षिपत्येकेन वेगेन पञ्चबाणशतानि यः ।
सदृशं बाहुवीर्येण कार्तवीर्यस्य पाण्डवम् ॥ १९ ॥
तमर्जुनं महेष्वासं महेन्द्रोपेन्द्रविक्रमम् ।
निघ्नन्तमिव पश्यामि विमर्देऽस्मिन्महाहवे ॥ २० ॥
इत्येवं चिन्तयन् कृत्स्नमहोरात्राणि भारत ।
अनिद्रो निःसुखश्चास्मि कुरूणां शमचिन्तया ॥ २१ ॥
क्षयोदयोऽयं सुमहान् कुरूणां प्रत्युपस्थितः ।
अस्य चेत्कलहस्यान्तः शमादन्यो न विद्यते ॥ २२ ॥
शमो मे रोचते नित्यं पार्थैस्तात न विग्रहः ।
कुरुभ्यो हि सदा मन्ये पाण्डवान् शक्तिमत्तरान् ॥ २३ ॥

इति श्रीमहाभारते उद्योगपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

---

वचसि स्थितान् गुणदोषतः पाण्डवेषु गुणान् स्वकीये तु दोषांश्च संख्यातुमारेमे इत्यर्थः ॥ १ ॥

[ नील० ] दैवं बलाधिक्यं पाण्डवेषु दर्शयति—अग्निरिति । भीमे भयंकरे ॥ ८ ॥ जातिगृद्ध्या जन्मग्रहणाद्धेतोः युधिष्ठिरादीनां पितरो धर्मादयोऽपि तेषां सहायाः सन्ति ॥ ९ ॥ रिरक्षिषन्तः रक्षितुमिच्छन्तः संरम्भं क्रोधम् ॥ १० ॥

इति उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षष्टितमोऽध्यायः ॥ ६० ॥

[ अर्जु० ] साचिव्यं साहाय्यं तत्कृतं तस्यार्जुनस्योपकारं स्मरन् भीमे भयानके ॥ ८ ॥ जातगृद्ध्या जातानां पुत्राणां गर्द्धनेन पुत्रप्रीत्यर्थम् ॥ ९ ॥ धूमवद्गतिः धूमवतो वह्नेर्गतिरिव गतिर्यस्मिन् । तत्सादृश्यात् चतुरन्तायाम् ॥ १३ ॥ महामेघमहाशनिशब्दाभ्यां तयोः शब्दौ लक्ष्येते । समः साम्यम् ॥ १४ ॥ यमर्जुनं व्यवस्यति निश्चिनोति ॥ १५ ॥ एकेन वेगेन प्रयोगेण शैघ्र्याद् युगपदिवेत्यर्थः ॥ १९ ॥ क्षयोदयः क्षयस्य नाशस्य उदय उद्भवः ॥ २२ ॥ शमो मे रोचते नित्यं पार्थैस्तात न विग्रहः । कुरुभ्यो हि सदा मन्ये पाण्डवान् शक्तिमत्तरान् ॥ इति धृतराष्ट्रस्य चिन्तां वर्णयति ॥ २३ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षष्टितमोऽध्यायः ॥ ६० ॥

[ सर्व० ] जातः पुत्रस्तस्य गृद्ध्या स्नेहेन ॥ ९ ॥ भीष्मादीनां भीष्मादिभिर्जन्याद्भयात् रिरक्षिषन्तः पाण्डवान् ॥ १० ॥ धूमवानग्निस्तस्येव दाहिका गतिर्यस्य स धूमवद्गतिः ॥ १३ ॥

इति महा० उद्योगप० सर्वज्ञ० टीकायां षष्टितमोऽध्यायः ॥ ६० ॥

[ लक्षा० ] जातिगृद्ध्याभिपन्नाश्चेत्यत्र जातिगृद्ध्या जातेः स्वस्माज्जन्मनः देवजातेर्वा गृद्ध्या आकाङ्क्षया अभिपन्नाः प्राप्ता भविष्यन्ति ॥ ९ ॥ भीष्मद्रोणकृपादीनां भयादित्यत्र भयात् गुरुत्वभयात् रिरक्षिषन्तः तान् रक्षितुमिच्छन्तः अन्यत्र संरम्भं गमिष्यन्ति ॥ १० ॥ यस्य ध्वजस्य त्विषा कान्त्या ॥ १३ ॥ शतानि पञ्च चैवेषूनित्यत्र पञ्चशतानीति संबन्धः ॥ १६ ॥ यमाह भीष्मो द्रोणश्चेत्यत्र यमर्जुनं पराजेतुमशक्यमाहेति प्रत्येकं संबन्धः ॥ १७ ॥

इति श्रीम० भा० उ० वा० कृ० ल० षष्टितमोऽध्यायः ॥ ६० ॥

---

१६ ख. शतं पञ्च तथैवेषून्नुद्गपन्नैव दृश्यते । १७ ख. मद्रराजश्च पाञ्चाल्यो । २० ख. महेन्द्रोपेन्द्ररक्षितम् ॥ षष्टितमोऽध्यायः ॥ ६० ॥

## एकषष्टितमोऽध्यायः ६१

देवत्वभ्रंशभयान्न देवाः पाण्डवानां साहाय्यं करिष्यन्ति दैवं बलं मय्यप्यस्तीति दुर्योधनोक्तिः ॥ १ ॥

**वैशम्पायन उवाच—**

पितुरेतद्वचः श्रुत्वा धार्तराष्ट्रोऽत्यमर्षणः ।
आधाय विपुलं क्रोधं पुनरेवेदमब्रवीत् ॥ १ ॥
अशक्या देवसचिवाः पार्थाः स्युरिति यद्भवान् ।
मन्यते तद्भयं व्येतु भवतो राजसत्तम ॥ २ ॥
अकामद्वेषसंयोगाल्लोभाद्द्रोहाच्च भारत ।
उपेक्षया च भावानां देवा देवत्वमाप्नुवन् ॥ ३ ॥
इति द्वैपायनो व्यासो नारदश्च महातपाः ।
जामदग्न्यश्च रामो नः कथामकथयत्पुरा ॥ ४ ॥
नैव मानुषवद्देवाः प्रवर्तन्ते कदाचन ।
कामात्क्रोधात्तथा लोभाद्द्वेषाच्च भरतर्षभ ॥ ५ ॥
यदा ह्यग्निश्च वायुश्च धर्म इन्द्रोऽश्विनावपि ।
कामयोगात्प्रवर्तेरन्न पार्था दुःखमाप्नुयुः ॥ ६ ॥
तस्मान्न भवता चिन्ता कार्यैषा स्यात्कथंचन ।
दैवेष्वपेक्षका ह्येते शश्वद्भावेषु भारत ॥ ७ ॥
अथ चेत्कामसंयोगाद्द्वेषो लोभश्च लक्ष्यते ।
देवेषु दैवप्रामाण्यान्नैषां तद्विक्रमिष्यति ॥ ८ ॥
मयाऽभिमन्त्रितः शश्वज्जातवेदाः प्रशाम्यति ।
दिधक्षुः सकलाँल्लोकान्परिक्षिप्य समन्ततः ॥ ९ ॥
यद्वा परमकं तेजो येन युक्ता दिवौकसः ।
ममाप्यनुपमं भूयो देवेभ्यो विद्धि भारत ॥ १० ॥
विदीर्यमाणां वसुधां गिरीणां शिखराणि च ।
लोकस्य पश्यतो राजन् स्थापयाम्यभिमन्त्रणात् ११
चेतनाचेतनस्यास्य जङ्गमस्थावरस्य च ।
विनाशाय समुत्पन्नमहं घोरं महास्वनम् ॥ १२ ॥
अश्मवर्षं च वायुं च शमयामीह नित्यशः ।
जगतः पश्यतोऽभीक्ष्णं भूतानामनुकम्पया ॥ १३ ॥
स्तम्भितास्वप्सु गच्छन्ति मया रथपदातयः ।
देवासुराणां भावानामहमेकः प्रवर्तिता ॥ १४ ॥
अक्षौहिणीभिर्यान् देशान्यामि कार्येण केनचित् ।
तत्राश्वा मे प्रवर्तन्ते यत्र यत्राभिकामये ॥ १५ ॥
भयानकानि विषये व्यालादीनि न सन्ति मे ।
मन्त्रगुप्तानि भूतानि न हिंसन्ति भयङ्कराः ॥१६॥

---

[ नील० ] पितुरिति ॥ २ ॥ अकामेति । कामद्वेषयोरसंयोगात् ॥ ३ ॥ दैवेष्विति । एते देवादयः दैवेषु भावेषु शमदमादिषु शश्वदपेक्षका अपेक्षमाणाः न तु आसुरेषु भावेषु कामक्रोधादिषु तस्माद्देवाः पाण्डवानां साहाय्यं न करिष्यन्तीति भावः ॥ ७ ॥ अथेति । दैवप्रामाण्यात् वेदप्रामाण्यात् कामादिमता कृतमपि निष्फलं भविष्यतीत्यर्थः ॥ ८ ॥ दैवं बलं मय्यस्तीत्याह मयाऽभीति ॥ ९ ॥

[ अर्जु० ] देवसचिवा देवसहायाः । व्येतु विगतं भवतु ॥ २ ॥ अरागद्वेषसंयोगात् लोभात् द्रोहाच्च भारत। उपेक्षया च भावानां देवा देवत्वमाप्नुवन् । रागद्वेषसंबन्धाभावात् भावानां सत्वानामुपेक्षया अलंबुद्ध्या । तत्र हेतुमाह लोभात् द्रोहादिति लोभद्रोहौ दोषौ सत्त्वानामुपेक्षाहेतुरित्यर्थः ॥ ३ ॥ देवेषु यदि लोभो द्वेषो वा लक्ष्यते तयोर्देवेषु प्रामाण्यात् ताभ्यामेवंभूताभ्यामित्यर्थः । तेषां देवानां न तत् देवत्वं विक्रमिष्यति ॥ ८ ॥ अभिमन्त्रितः पाण्डवान् भोक्तुमिति शेषः ॥ ९ ॥ [तेन मदनुकूलं त्वं न वर्त्तयसि वहे ]देवेभ्यो भूयो बहुतरम् ॥१०॥ हेतुं स्वस्य मन्त्रशक्तिं दर्शयति विदीर्यमाणामिति ॥ ११ ॥ देवानुभावप्रवर्तकोऽहमेकः ॥ १४ ॥ प्रवर्तन्ते प्रादुर्भवन्ति ॥ १५ ॥

[ सर्व० ] अकामद्वेषसंयोगात् कामद्वेषसंयोगाभावात् । तथा लोभद्रोहकरणात् भावानां प्राणिनामुपेक्षया अपेक्षाभिन्नत्वेन ॥ ३ ॥ देवप्रामाण्यात् देवत्वग्राहकप्रमाणस्य लोभमोहाद्यभावस्य प्रामाण्यान्न देवत्वं तेषां विक्रमिष्यति प्रवर्तिष्यते ॥ ८ ॥ दिधक्षुरपि जातवेदा मयाऽभिमन्त्रितो नमस्त इति मंत्रेण प्रशंसति प्रणयितुमिच्छति(?)॥ ९ ॥ स्थापयाम्यविदीर्णत्वेन ॥ ११ ॥

[ लक्षा० ] अकामद्वेषसंयोगादित्यत्र भयात् गुरुत्वभयात् । स्वेषां कामद्वेषसंयोगाभावात् भावानां मनुष्यादिलोकानां मोहाल्लोभान्निमित्तात् मानुषकृतमोहादीनामुपेक्षया चेत्यर्थः ॥ ३ ॥ अपार्था मानुषकृतदुःखमाप्नुयुरित्यर्थः । अपगतः अर्थो येषां ते देवाः दुःखमाप्नुयुः स्व-

---

४ म. रामोऽपि कथास्वकं॰ । ५ म. कामाल्लोभादनुक्रोशाद्वे॰ । ७ म. कदाचन । म. दैवैरुपेक्षिता । ८ म. देवेषु चेतरप्रामाण्यात्तेषां । ९ म. दिधक्षुस्सकं॰ ।
ज. प्रशंसति । १० म. मय्यप्य ।

निकामवर्षी पर्जन्यो राजन्विषयवासिनाम् ।
धर्मिष्ठाश्च प्रजाः सर्वा ईतयश्च न सन्ति मे ॥ १७॥
अश्विनावथ वाय्वग्नी मरुद्भिः सह वृत्रहा ।
धर्मश्चैव मया द्विष्टान्नमेत्सहन्तेऽभिरक्षितुम् ॥ १८॥
यदि ह्येते समर्थाः स्युर्मद्द्विषस्त्रातुमञ्जसा ।
न स्म त्रयोदश समाः पार्था दुःखमवाप्नुयुः ॥१९॥
नैव देवा न गन्धर्वा नासुरा न च राक्षसाः ।
शक्तास्त्रातुं मया द्विष्टं सत्यमेतद्ब्रवीमि ते ॥ २० ॥
यदभिध्याम्यहं शश्वच्छुभं वा यदि वाऽशुभम् ।
नैतद्विपन्नपूर्वं मे मित्रेष्वरिषु चोभयोः ॥ २१ ॥
भविष्यतीदमिति वा यद्ब्रवीमि परन्तप ।
नान्यथा भूतपूर्वं च सत्यवागिति मां विदुः ॥२२॥
लोकसाक्षिकमेतन्मे माहात्म्यं दिक्षु विश्रुतम् ।
आश्वासनार्थं भवतः प्रोक्तं न श्लाघया नृप ॥२३॥
न ह्यहं श्लाघनो राजन् भूतपूर्वः कदाचन ।
असदाचरितं ह्येतद्यदात्मानं प्रशंसति ॥ २४ ॥
पाण्डवांश्चैव मत्स्यांश्च पाञ्चालान्केकयैः सह ।
सात्यकिं वासुदेवं च श्रोताऽसि विजितान्मया ॥२५॥
सरितः सागरं प्राप्य यथा नश्यन्ति सर्वशः ।
तथैव ते विनङ्क्ष्यन्ति मामासाद्य सहान्वयाः ॥२६॥
परा बुद्धिः परं तेजो वीर्यं च परमं मम ।
परा विद्या परो योगो मम तेभ्यो विशिष्यते ॥२७॥
पितामहश्च द्रोणश्च कृपः शल्यः शलस्तथा ।
अस्त्रेषु यत्प्रजानन्ति सर्वं तन्मयि विद्यते ॥ २८ ॥
इत्युक्त्वा सञ्जयं भूयः पर्यपृच्छत भारत ।
ज्ञात्वा युयुत्सोः कार्याणि प्राप्तकालमरिन्दमः ॥२९॥

इति श्रीमहाभारते उद्योगपर्वणि एकषष्टितमोऽध्यायः ॥ ६१ ॥

## द्विषष्टितमोऽध्यायः ६२

अहमेव पाण्डवान् हन्तुं समर्थो भीष्मादयस्तिष्ठन्तु ते समीपे इति धृतराष्ट्रस्य पुरत आत्मानं श्लाघमानः कर्णो भीष्मेण गर्हितो भीष्मेऽप्रशान्ते नाहं योत्स्य इति प्रतिज्ञाय सभां हित्वा स्वं भवनं जगाम ॥ १ ॥ पुनर्भीष्मेण कर्णस्योपहसनम् ॥ २ ॥

**वैशम्पायन उवाच—**

तथा तु पृच्छन्तमतीव पार्थं
वैचित्रवीर्यं तमचिन्तयित्वा ॥
उवाच कर्णो धृतराष्ट्रपुत्रं
प्रहर्षयन्संसदि कौरवाणाम् ॥ १ ॥
मिथ्या प्रतिज्ञाय मया यदस्त्रं
रामात्कृतं ब्रह्ममयं पुरस्तात् ॥
विज्ञाय तेनास्मि तदैवमुक्तः
स्तेनान्तकाले प्रतिभाऽस्यतीति ॥ २ ॥

---

धर्मत्यागाद्दुःखमाप्नुयुरिति भावः ॥ ६ ॥ तद्देवप्रामाण्यं नैव विक्रममिष्यति शौर्यं न करोत्येव ॥ ८ ॥ ममाप्यनुपमं भूय इत्यत्र देवेभ्योपि भूयः मत्तेजः मंत्रसामर्थ्यम् ॥१०॥ भयानि विषये राजन्नित्यत्र भयानि भयंकराणि ॥ १६ ॥

[ नील० ] मद्द्विषः मच्छत्रून् ॥ १९ ॥ अभिध्यामि चिन्तयामि ॥ २१ ॥ इतीति । इति एवं दुर्योधनोक्तं धृतराष्ट्रः संजयं प्रति उक्त्वा प्राप्तकालं पूर्वप्रस्तुतम् अर्जुनमाहात्म्यमेव अपृच्छत् । इदं मत्पुत्रस्य बलं ज्ञात्वा पाण्डवबलं च त्वं ब्रूहीत्यर्थः । युयुत्सोः वैश्यापुत्रस्य पाण्डवेष्वनुरक्तस्य कार्याणि ज्ञात्वा । एतेषां सर्वेषां विनाशेन तस्यैव राज्यलाभरूपाणि कार्याणि भविष्यन्तीति ज्ञात्वेत्यर्थः ॥ २९ ॥

इति श्रीनैल० उद्योग० भारत० एकषष्टितमोऽध्यायः ॥ ६१ ॥

[ अर्जु० ] निकामवर्षी अनवरतवर्षणशीलः । ईतयोऽतिवृष्ट्यादयः षट् ॥ १७ ॥

इति श्रीमन्म० मर्जुनमि० मुद्यो० एकषष्टितमोऽध्यायः ॥ ६१ ॥

[ सर्व० ] इत्युक्त्वा इतिवचनानन्तरं दुर्योधनस्यापृच्छद्धृतराष्ट्रः । भिन्नकर्तृकत्वेऽपि क्त्वाप्रत्ययः ॥ इतिदुर्योधनवाक्यम् ॥ २९ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामेकषष्टितमोऽध्यायः ॥ ६१ ॥

[ लक्षा० ] मयारिष्टा इत्यत्र अरिष्टाः मन्त्रसामर्थ्येन नाशिताः स्तम्भिता इत्यर्थः ॥ १८ ॥ यदभिध्याम्यहं शश्वदित्यत्र अभिध्यामि अभिध्यायामि ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे एकषष्टितमोऽध्यायः ॥ ६१ ॥

[ नील० ] तथेति पार्थं पृच्छन्तं वैचित्रवीर्यम् अचिन्तयित्वेति संबन्धः ॥ १ ॥ हे स्तेन अन्तकाले प्रतिभा अस्त्रस्मृतिः अस्यति क्षिपति त्वां त्यक्ष्यतीत्यर्थः ॥ २ ॥

[ अर्जु० ] तमर्जुनम् ॥ १ ॥ मिथ्या प्रतिज्ञाय ब्राह्मणोऽहं भार्गवगोत्र इत्युक्त्वा रामात् जामदग्न्यात् हृतं प्राप्तं ब्रह्मास्त्रं परं श्रेष्ठं विज्ञाय शिक्षित्वेतिशेषः । प्रतिभास्यति स्फोरिष्यति ॥ २ ॥

---

१७ म. कामवर्षीव पं । १९ म. त्रातुमोजसा ॥ एकषष्टितमोऽध्यायः ६१

महापराधे ह्यपि यन्न तेन
महर्षिणाऽहं गुरुणा च शप्तः ॥
शक्तः प्रदग्धुं ह्यपि तिग्मतेजाः
ससागरामप्यवनिं महर्षिः ॥ ३ ॥
प्रसादितं ह्यस्य मया मनोऽभू-
च्छुश्रूषया स्वेन च पौरुषेण ॥
तदस्ति चास्त्रं मम सावशेषं
तस्मात्समर्थोऽस्मि ममैष भारः ॥ ४ ॥
निमेषमात्रात्तमृषेः प्रसाद-
मवाप्य पाञ्चालकरूषमत्स्यान् ॥
निहत्य पार्थान्सह पुत्रपौत्रै-
र्लोकानहं शस्त्रजितान्प्रपत्स्ये ॥ ५ ॥
पितामहस्तिष्ठतु ते समीपे
द्रोणश्च सर्वे च नरेन्द्रमुख्याः ॥
यथा प्रधानेन बलेन गत्वा
पार्थान्हनिष्यामि ममैष भारः ॥ ६ ॥
एवं ब्रुवन्तं तमुवाच भीष्मः
किं कत्थसे कालपरीतबुद्धे ॥
न कर्ण जानासि यथा प्रधाने
हते हताः स्युर्धृतराष्ट्रपुत्राः ॥ ७ ॥
यत्खाण्डवं दाहयता कृतं हि
कृष्णद्वितीयेन धनञ्जयेन ॥
श्रुत्वैव तत्कर्म नियन्तुमात्मा
युक्तस्त्वया वै सह बान्धवेन ॥ ८ ॥
यां चापि शक्तिं त्रिदशाधिपस्ते
ददौ महात्मा भगवान्महेन्द्रः ॥
भस्मीकृतां तां समरे विशीर्णां
चक्राहतां द्रक्ष्यसि केशवेन ॥ ९ ॥
यस्ते शरः सर्पमुखो विभाति
सदाऽग्र्यमाल्यैर्महितः प्रयत्नात् ॥
स पाण्डुपुत्राभिहतः शरौघैः
सह त्वया यास्यति कर्ण नाशम् ॥ १० ॥
बाणस्य भौमस्य च कर्ण हन्ता
किरीटिनं रक्षति वासुदेवः ॥
यस्त्वादृशानां च वरीयसां च
हन्ता रिपूणां तुमुले प्रगाढे ॥ ११ ॥

कर्ण उवाच—

असंशयं वृष्णिपतिर्यथोक्त-
स्तथा च भूयांश्च ततो महात्मा ॥
अहं यदुक्तः परुषं तु किंचि
त्पितामहस्तस्य फलं शृणोतु ॥ १२ ॥
न्यस्यामि शस्त्राणि न जातु संख्ये
पितामहो द्रक्ष्यति मां सभायाम् ॥
त्वयि प्रशान्ते तु मम प्रभावं
द्रक्ष्यन्ति सर्वे भुवि भूमिपालाः ॥ १३ ॥

वैशम्पायन उवाच—

इत्येवमुक्त्वा स महाधनुष्मान्
हित्वा सभां स्वं भवनं जगाम ।
भीष्मस्तु दुर्योधनमेव राजन्
मध्ये कुरूणां प्रहसन्नुवाच ॥ १४ ॥
सत्यप्रतिज्ञः किल सूतपुत्र-
स्तथा स भारं विषहेत कस्मात् ।
व्यूहं प्रतिव्यूह्य शिरांसि भित्त्वा
लोकक्षयं पश्यत भीमसेनात् ॥ १५ ॥

---

[ नील० ] सावशेषं मम आयुरस्ति अतोऽन्तकालस्यानुपस्थितत्वात्तदस्त्रं ममास्तीति अहं समर्थोऽस्मि अर्जुनं जेतुमित्यर्थः ॥ ४ ॥ प्रपत्स्ये प्रापयिष्ये ॥ ५ ॥ प्रधाने त्वयि हते सति सर्वे हताः स्युरत आत्मानं गोपायेत्युपहासः॥७॥ आत्मा मनो नियन्तुं युक्तः अर्जुनद्वेषादुपरमः कर्तव्यस्तस्य दुर्जयत्वं ज्ञात्वेति भावः ॥ ८ ॥ मां कृतविजयं सभायां द्रक्ष्यति । अयं भावः यद्यहं योत्स्ये तर्हि एतस्य जीवनं भविष्यति तन्माभूदतोऽयं निःसारो म्रियतामिति ॥१३॥ सत्यप्रतिज्ञः पूर्वं आदावेव योत्स्य इत्युक्त्वा इदानीं मयि सति न योत्स्य इति वदति मज्जीवनपर्यन्तं त्वत्क्षयमुपेक्षते स कथं मित्रमिति भावः ॥ १५ ॥

[ अर्जु० ] महापराधे स्वजातिगोपनरूपे ॥ ३ ॥ महितः पूजितः ॥ १० ॥ सत्यप्रतिज्ञः किल सूतपुत्र इति । किलेत्युपालम्भे । भीमसेनभुजभारं सोढुमशक्नुवन् आवन्त्यादिषु सत्सु अहं हनिष्यामि परेषां योधानित्यपि भारं सोढुमशक्नुवन् प्रतिज्ञाव्याजेनापसृतवान् ॥ १५ ॥ १६ ॥

[ सर्व० ] प्रधाने सेनापतौ त्वयि हते ॥ ७ ॥ योधान् हनिष्यामीति याऽस्य प्रतिज्ञा तयायं सत्यप्रतिज्ञ

---

४ म, ततस्तदस्त्रं । म. ममैष यत्नः । ५ म. पार्थांश्च सपुत्रपौत्रान् ।

१० म. सर्पमुखोऽभियाति । म. महितः कुलेन ॥ द्विषष्टितमोऽध्यायः ॥६२॥

आवन्त्यकालिङ्गजयद्रथेषु
चेदिध्वजे तिष्ठति बाह्लिके च ।
अहं हनिष्यामि सदा परेषां
सहस्रशश्चायुतशश्च योधान् ॥ १६ ॥
यदैव रामे भगवत्यनिन्द्ये
ब्रह्म ब्रुवाणः कृतवांस्तदस्त्रम् ।
तदैव धर्मश्च तपश्च नष्टं
वैकर्तनस्याधमपूरुषस्य ॥ १७ ॥

वैशम्पायन उवाच—
तथोक्तवाक्ये नृपतीन्द्र भीष्मे
निक्षिप्य शस्त्राणि गते च कर्णे ।
वैचित्रवीर्यस्य सुतोऽल्पबुद्धि-
र्दुर्योधनः शान्तनवं बभाषे ॥ १८ ॥

इति श्रीमहाभारते उद्योगपर्वणि द्विषष्टितमोऽध्यायः ॥ ६२ ॥

## त्रिषष्टितमोऽध्यायः ६३

ममाऽयं युद्धसमारम्भो न भवत्तु भारं कृत्वा प्रवृत्तः, अहं कर्णदुःशासनाभ्यां सहितः शत्रून्हनिष्यामीति भीष्मं प्रति ब्रुवाणं दुर्योधनमुद्दिश्य विदुरो दमं प्रशंसति ॥ १ ॥

दुर्योधन उवाच—
सदृशानां मनुष्येषु सर्वेषां तुल्यजन्मनाम् ।
कथमेकान्ततस्तेषां पार्थानां मन्यसे जयम् ॥ १ ॥
वयं च तेऽपि तुल्या वै वीर्येण च पराक्रमैः ।
समेन वयसा चैव प्रातिभेन श्रुतेन च ॥ २ ॥
अस्त्रेण योधयुग्या च शीघ्रत्वे कौशले तथा ।
सर्वे स्म समजातीयाः सर्वे मानुषयोनयः ॥ ३ ॥
पितामह विजानीषे पार्थेषु विजयं कथम् ।
नाहं भवति न द्रोणे न कृपे न च बाह्लिके ॥ ४ ॥
अन्येषु च नरेन्द्रेषु पराक्रम्य समारभे ।
अहं वैकर्तनः कर्णो भ्राता दुःशासनश्च मे ॥ ५ ॥
पाण्डवान्समरे पञ्च हनिष्यामः शितैः शरैः ।
ततो राजन्महायज्ञैर्विविधैर्भूरिदक्षिणैः ॥ ६ ॥
ब्राह्मणांस्तर्पयिष्यामि गोभिरश्वैर्धनेन च ।
यदा परिकरिष्यन्ति ऐणेयानिव तन्तुना ।
अतरित्रानिव जले बाहुभिर्मामका रणे ॥ ७ ॥

---

एव । किलेत्युपालम्भे । लोकक्षयं हि भीमसेनादयं पश्यति तथाचायं तं भारं परयोधमारणरूपं कथं सहेत कथं शक्नुयात् । भीमस्य प्रतिरोधकत्वात् । तदेवं न चैषा प्रतिज्ञा मिथ्या भवत्विति यदयमयुक्तप्रतिज्ञां कृतवान्, तेन प्रतिज्ञाद्वयमेव सत्यमस्य जातमिति सत्यप्रतिज्ञ एवेत्यर्थः ॥ १५ ॥

[ लक्षा० ] शुश्रूषया स्वेन च पौरुषेयेणेत्यत्र पौरुषेण भृत्यपुरुषस्वभावेन ॥ ४ ॥ शत्रुजनान् शत्रूणां हननाज्जनं जननमेषां तान् लोकान् प्रपत्स्य इतिसंबन्धः ॥ ५ ॥ न कर्ण जानासीत्यत्र यथा यथावत् प्रधाने प्रधानपुरुषे त्वयि ॥ ७ ॥ असंशयं वृष्णिपतिर्यथोक्त इत्यत्र वृष्णिपतिः कृष्णः यथा त्वयोक्तं तथा भवति । ततः कृष्णादपि भूयश्च अयं महात्मा ॥ १२ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे द्विषष्टितमोऽध्यायः ॥ ६२ ॥

[ नील० ] ब्रह्मब्रुवाणः ब्राह्मणोऽहमिति वदन् ॥ १७ ॥

इति श्रीनैल० उद्योग० भारत० द्विषष्टितमोऽध्यायः ॥ ६२ ॥

[ अर्जु० ] ब्रह्मबुवाणो ब्राह्मणोस्मीति वदन् ॥ १७ ॥

इति श्रीमन्म० मर्जुनमि० मुद्यो० द्विषष्टितमोऽध्यायः ॥ ६२ ॥

[ सर्व० ] ब्रह्म ब्राह्मणमात्मानं ब्रुवाणः । कृतवान् स्वीकृतवान् ॥ १७ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतौ व्याख्यायां द्विषष्टितमोऽध्यायः ॥ ६२ ॥

[ नील० ] सदृशानामिति ॥ १ ॥ प्रातिभेन समयस्फूर्त्या ॥२॥ योधयुग्या शूरसमृद्ध्या युजेरौणादिकः क्विः कुत्वमार्षम् ॥३॥ तरित्रा नौरक्षकाः कर्णधारादयः तद्रहितान् जलं यथा परिहरति आवर्तेषु पातयति । अनरित्रानिति पाठे अरित्रं के निपातनं नौचालनदंडस्तद्रहितानित्यर्थः तद्वत् मामकास्तान् रणे बाहुभ्यां परिहरिष्यन्ति ॥ ७ ॥

[ अर्जु० ] शमेन उपशमेन वर्चसा तेजसा प्रातिभेन ज्ञानेन ॥ २ ॥ योग्या अभ्यासः ॥ ३ ॥ परिकरिष्यन्ति वेष्टयिष्यन्ति । ऐणेयान् मृगान् तथा तन्तुना रज्ज्वा अतरित्रानिव नौकया शून्यानिव बहुभिः सैन्यैः मामकाः सेनापतयः ॥ ७ ॥

[ सर्व० ] लाघवयोग्यासु लाघवं संधानस्वाधीनत्वं योग्या अभ्यासः ॥ ३ ॥ परिभरिष्यन्ति परिहरिष्यन्ति वेष्टयिष्यन्ति । 'हृग्रहोर्भश्छन्दसि' इति हकारस्य भकारः । अतरित्रान् नौकारहितान् । जले यथा

---

३ म. कौशलेन च । ७ अ. परिभरिष्यन्ति ।

पश्यन्तस्ते पराँस्तत्र रथनागसमाकुलान् ।
तदा दर्पं विमोक्ष्यन्ति पाण्डवाः स च केशवः ॥८॥

विदुर उवाच—

इह निःश्रेयसं प्राहुर्वृद्धा निश्चितदर्शिनः ।
ब्राह्मणस्य विशेषेण दमो धर्मः सनातनः ॥ ९ ॥
तस्य दानं क्षमा सिद्धिर्यथावदुपपद्यते ।
दमो दानं तपो ज्ञानमधीतं चानुवर्तते ॥ १० ॥
दमस्तेजो वर्धयति पवित्रं दम उत्तमम् ।
विपाप्मा वृद्धतेजास्तु पुरुषो विन्दते महत् ॥ ११ ॥
क्रव्याद्भ्य इव भूतानामदान्तेभ्यः सदा भयम् ।
येषां च प्रतिषेधार्थं क्षत्रं सृष्टं स्वयंभुवा ॥ १२ ॥
आश्रमेषु चतुर्ष्वाहुर्दममेवोत्तमं व्रतम् ।
तस्य लिङ्गं प्रवक्ष्यामि येषां समुदयो दमः ॥ १३ ॥
क्षमा धृतिरहिंसा च समता सत्यमार्जवम् ।
इन्द्रियाभिजयो धैर्यं मार्दवं ह्रीरचापलम् ॥ १४ ॥
अकार्पण्यमसंरम्भः संतोषः श्रद्दधानता ।
एतानि यस्य राजेन्द्र स दान्तः पुरुषः स्मृतः १५॥
कामो लोभश्च दर्पश्च मन्युर्निद्रा विकत्थनम् ।
मान ईर्ष्या च शोकश्च नैतद्दान्तो निषेवते ॥
अजिह्ममशठं शुद्धमेतद्दान्तस्य लक्षणम् ॥ १६ ॥

नौरहितान् वेष्टयन्ति (तथा) बहुभिः योधैः सहिताः मामकाः प्रधानपुरुषाः ॥ ७ ॥

[ नील० ] अदान्तोऽयं कुलक्षयं करिष्यतीति वक्ष्यन् दममेव प्रशंसन्विदुर उवाच इहेति। किं तन्निःश्रेयसं कल्याणं ब्राह्मणस्य ब्रह्मजिज्ञासोः दम एव सनातनोऽनादिर्मुख्यो धर्मः ॥ ९ ॥ तस्य पुंसः दानं क्षमा सिद्धिर्मोक्षश्च उपपद्यते कस्य यस्य दमः दानादीन् अनुवर्तते । दान्तः सन् यो दानादिकं करोति स दानफलं क्षमां सिद्धिं च प्राप्नोतीत्यर्थः ॥ १० ॥ विन्दते लभते दमेन महद्ब्रह्म ॥११॥ समुदयः उदयहेतुः ॥ १३ ॥ तान्येवाह क्षमा परेभ्यस्ताडनादिप्राप्तावपि संतापानुदयः । धृतिः कामादिभिरननुतप्तता । अहिंसा वाङ्मनःशरीरैः परस्य पीडाया अकरणम् । समता शत्रुमित्रादौ तुल्यत्वम् । सत्यं यथार्थभाषणम् । आर्जवमकौटिल्यम् । इन्द्रियाणां जयः । धैर्यमत्यन्तापद्यपि मनसोऽवैक्लव्यम् । मार्दवं प्रियवादिता । ह्रीरकार्यान्निवृत्तिः । अचापलं स्थैर्यं वाङ्मनःकायानाम् । एते दान्तानां गुणाः ॥१४॥ काम इति कामादिमत्त्वादयमदान्त इत्यर्थः । अजिह्ममकुटिलम् अशठं सुशीलं शुद्धं मनसा ॥ १६ ॥

[ अर्जु० ] दममेव निःश्रेयसमाहुः । दमो मनसो दमनम् ॥ ९ ॥ तस्य दमस्य दानादीन्यनुवर्तन्ते ॥ १० ॥ तेजस्तपोरूपं महत् परं रूपम् ॥ ११ ॥ अदान्तेभ्यः भूतेभ्यः सदा भयं प्राणिनामिति शेषः । [ भयहेतुमाह अदान्तेभ्य इति । मदादिति दृप्तानि हि भूतानि राक्षसा इव भयहेतुः ] प्रतिषेधो निषेधः ॥ १२ ॥ लिङ्गानि कारणभूतानि समुदयः परिणामः ॥ १३ ॥ क्षमा धृतिरहिंसा च समता सत्यमार्जवम् । इन्द्रियाभिजयो धैर्यं मार्दवं ह्रीरचापलम् । अकार्पण्यमसंरम्भः सन्तोषः श्रद्धानता । क्षमा अपकारेप्यप्रतिक्रिया । धृतिरवसादेऽप्यवष्टम्भहेतुः मनोधर्मः । आपद्यदैन्यं वा । अहिंसा अनभिद्रोहः । समता रागद्वेषमध्यस्थता । सत्यं सर्वभूतानवघातकवाङ्मनसे । आर्जवं विहितेन पथा गमनम् । इन्द्रियाभिजयः इन्द्रियस्य रागाद्यवशता जयः । ऐश्वर्यं विकारहेतावप्यविकारः । मार्दवं निष्ठुरक्रियावर्जनम् । ह्रीरकार्यनिवर्तको मनोधर्मः । अचापलमकौतुकिता । अकार्पण्यं धनव्ययसामर्थ्यम् असंरम्भः क्रोधादिना स्वास्थ्यानिवृत्तिः । सन्तोषो लब्धादन्यत्रालंबुद्धिः । श्रद्दधानता श्रद्धा सा चागमोक्तेऽस्तीति धीः । [ अभिभवतिर्वा ] ॥ १५ ॥ काम इत्यादि । कामः स्त्रीविषयरागः । लोभो लब्धधना ( दि ? द्य )विनियोगेऽपि लब्धुमिच्छा । मोहोऽविद्या । साचाऽनित्याशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिः । मन्युः क्रोधः । निद्रा इन्द्रियमनसोरसंयोगः । विकत्थनं स्वगुणख्यापनम् । मानं स्वस्मिन् गुणारोपणम् । ईर्षा परगुणासहिष्णुता । शोक इष्टस्य नष्टस्य पुनः पुनर्मनसि निवेशनम् । अजिह्मं कौटिल्याभावः । अशठं वञ्चकत्वाभावः । शुद्धं मनःशुद्धिः ॥ १६ ॥

[ सर्व० ] निःश्रेयसं प्राहुः वक्ष्यमाणं दमं रागद्वेषाद्यपनयनम् ॥९॥ तस्य दमस्य दानं क्षमा सिद्धिर्यथावत् सम्यगुपपद्यते उपपन्नमुपगतं भवति। दमोऽपि दानं तपो ज्ञानमधीतं चानुवर्तते । यत्रैते त्रयः संभवन्ति ॥ १० ॥ दमामर्षादेतास्तेभ्योऽदान्तेभ्यः सदा भयं भूतानाम् ॥१२॥ समुदयः समूहः ॥ १३ ॥ धृतिर्दुःखहेतुपरिपातेऽपि संतोषवत्त्वम् आर्जवमुचितक्रिया । धैर्यं सुखसाधनेष्वलंप्रत्ययः । मार्दवं परुषाभाषणम् । अचापलं स्थिरता ॥ १४ ॥ असंरंभोऽदीर्घक्रोधत्वम् । सन्तोषः सुखसाधनाभावेऽपि परितोषः । श्रद्धानाता धर्मोऽस्तीति धीः ॥ १५ ॥ कामो योषिदिच्छा । समता वैरिमित्रयोः। लोभः कार्पण्यम्। मोहो विपरीतज्ञानम् । मन्युः क्रोधः। मान आत्मनि । ईर्ष्याऽऽरोपः। अजिह्मं परस्यावञ्चनम् । अशठं परहिंसाप्रतिसंधानाभावः । शुद्धं शुद्धिर्मनसः ॥ १६ ॥

११ म. दममुत्तमम् ।

अलोलुपस्तथाऽल्पेप्सुः कामानामविचिन्तिता ।
समुद्रकल्पः पुरुषः स दान्तः परिकीर्तितः ॥ १७॥
सुवृत्तः शीलसंपन्नः प्रसन्नात्माऽऽत्मविद्बुधः ।
प्राप्येह लोके संमानं सुगतिं प्रेत्य गच्छति ॥ १८॥
अभयं यस्य भूतेभ्यः सर्वेषामभयं यतः ।
स वै परिणतप्रज्ञः प्रख्यातो मनुजोत्तमः ॥ १९ ॥
सर्वभूतहितो मैत्रस्तस्मान्नोद्विजते जनः ।
समुद्र इव गम्भीरः प्रज्ञातृप्तः प्रशाम्यति ॥ २० ॥
कर्मणाऽऽचरितं पूर्वं सद्भिराचरितं च यत् ।
तदेवास्थाय मोदन्ते दान्ताः शमपरायणाः ॥ २१ ॥
नैष्कर्म्यं वा समास्थाय ज्ञानतृप्तो जितेन्द्रियः ।
कालाकाङ्क्षी चरँल्लोके ब्रह्मभूयाय कल्पते ॥ २२ ॥
शकुनीनामिवाकाशे पदं नैवोपलभ्यते ।
एवं प्रज्ञानतृप्तस्य मुनेर्वर्त्म न दृश्यते ॥ २३ ॥
उत्सृज्यैव गृहान्यस्तु मोक्षमेवाभिमन्यते ।
लोकास्तेजोमयास्तस्य कल्पन्ते शाश्वता दिवि ॥२४॥

इति श्रीमहाभारते उद्योगपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

[ नील० ] अलोलुपः आशाहीनः । कामानां स्त्र्यादीनाम् अविचिन्तिता ध्यानमकुर्वन् । समुद्रकल्पः गम्भीराशयः ॥ १७ ॥ प्रसन्नात्मा शुद्धचित्तः अत एवात्मवित् बुधः ज्ञातज्ञेयः प्रेत्य मृत्वा ॥ १८ ॥ कर्मणेति दैवदत्तैर्भोगैः सदाचारेण च ये युक्तास्ते दान्तास्त एव च मोदन्ते ॥ २१ ॥ नैष्कर्म्यं वाङ्मनःशरीराणां सर्वात्मना अप्रवृत्तिः निर्विकल्पकावस्था । तत्र हेतुः ज्ञानतृप्तः श्रवणमननजेनापरोक्षज्ञानेन तृप्तः रागद्वेषशून्यः । तत्रापि हेतुः जितेन्द्रियः कालाकाङ्क्षी सर्वत्र ममताशून्यः ब्रह्मभूयाय ब्रह्मभावाय कल्पते योग्यो भवति ॥ २२ ॥ ब्रह्मभूयफलमाह–शकुनीनामिति । "न तस्य प्राणा उत्क्रामन्त्यत्रैव समवनीयन्ते ब्रह्मैव सन् ब्रह्माप्येति" इति श्रुतेर्ब्रह्मविदोऽनुपाख्यं रूपं गतस्य गगनवद्विश्वव्यापिनो गत्यभावात् स्वर्गिणामिव तस्य मार्गो न दृश्यते ॥ २३ ॥ केवलसंन्यासात्क्रममुक्तिस्थानमाह–उत्सृज्येति । मोक्षं मोक्षाश्रमं शाश्वताः पुनरावृत्तिशून्याः ॥ २४ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

[ अर्जु० ] अलोलुपः अलम्पटः । अल्पेच्छः प्राणयात्रामात्रसाधने तुष्टः । कामानामविचिन्तिता विषयानामनभिध्याता । समुद्रकल्पः गाम्भीर्ययुक्तः ॥१७॥ सुवृत्तः शोभनचरित्रः । शीलसंपन्नः प्रयोजननिरपेक्षा स्वभावतः प्रवृत्तिः साचोत्सर्गतः स्वभावप्रवृत्तिः शीलमुच्यते । तद्युक्तः । प्रसन्नात्मा अरागादिभिरमलचित्तः । आत्मवित् क्षेत्रज्ञदर्शी । बुधस्तत्प्रतिपादकशास्त्रवित् ॥ १८॥ सर्वभूतेभ्योऽभयं यतो यस्येति षष्ठ्यां सर्वेषां यतो यस्मादिति पञ्चम्यां तसिल्प्रत्ययः ॥ १९ ॥ प्रज्ञा आत्मसाक्षात्कारः तया तृप्तः निराकाङ्क्षः प्रशाम्यति निर्वाणं गच्छति ॥ २० ॥ पूर्वं प्रथममेव शिष्टाचरितं सद्भिराचरितं तत्कालकृतं तयोरेकमादाय गृहीत्वा मोदन्ते नापूर्वकर्मारम्भश्रमेणात्मानं खेदयन्ति ॥ २१ ॥ नैष्कर्म्यं कर्मत्यागं संन्यासं वा कालाकाङ्क्षी आयुःशेषदर्शी चरन् पर्यटन् ब्रह्मभूयाय ब्रह्मभावाय ॥ २२ ॥ उत्सृज्य वा गृहान् गृहारम्भमकृत्वैव ब्रह्मचर्यादेव प्रव्रजेदिति पक्षान्तरम् । तेजोमयाः ज्ञानमयाः ॥ २४ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृताया-
मुद्योगपर्वणि त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

[ सर्व० ] अलोलुपो लब्धेष्वत्यंतमनासक्तः अल्पेच्छोऽलब्धे बहुतरेऽ(न)वहितः । कामानां स्त्रीसुखानाम् ॥ १७ ॥ सुवृत्त आचारवान् । प्रसन्नात्मा अक्रुद्धः । बुधः शास्त्रवित् ॥ १८ ॥ यत इति सर्वभूतेभ्यो भूतानामित्युभयोरेकं पदं करणे षष्ठीपञ्चम्योस्तसिल्प्रत्ययान्तं संबन्ध्यते ॥१९॥ प्रशाम्यति मुच्यते ॥२०॥ सद्भिः पूर्वैः कर्मणाचरितं पश्चादपि सद्भिस्तथैवाचरितं पूर्वं सद्भिराचरितस्वेऽपि गोयज्ञादीनां फलाकरणात् (?)॥ २१ ॥ नैष्कर्म्यं फलाभिसन्धिपूर्वककर्मत्यागः ॥ २२ ॥ मुनेर्वर्त्म प्रवृत्तिः ॥ २३ ॥ एतद्गृहस्थाश्रमिणः कर्मोक्तम् । परिव्राजकस्याह–उत्सृज्य चेति । गृहान् गार्हस्थ्यमुत्सृज्य तदाश्रमोचितकर्मणां पराभिसन्धानेनात्मकरणं निषेधति मोक्षमेव नत्वग्निष्टोमादिक्रियासुखमभिमन्यते इच्छति ॥ २४ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां
त्रिषष्टितमोऽध्यायः ॥ ६३ ॥

१९ म. अभयं सर्वभूतेभ्यः । म. परिणतः प्राज्ञः। २०म. प्रज्ञातृप्तः प्रशस्यते। २१ म. कर्म यच्चरि° । २३ म. शकुनीनां यथाकाशे ॥ त्रिषष्टितमो० ॥ ६३॥

## चतुःषष्टितमोऽध्यायः ६४

विदुरेण शकुनिद्वयदृष्टान्तेन विवादस्योभयविनाशहेतुत्वमुक्त्वाऽविवादोपदेशः ॥ १ ॥

**विदुर उवाच—**

शकुनीनामिहार्थाय पाशं भूमावयोजयत् ।
कश्चिच्छाकुनिकस्तात पूर्वेषामिति शुश्रुम ॥ १ ॥
तस्मिंस्तौ शकुनौ बद्धौ युगपत्सहचारिणौ ।
तावुपादाय तं पाशं जग्मतुः खचरावुभौ ॥ २ ॥
तौ विहायसमाक्रान्तौ दृष्ट्वा शाकुनिकस्तदा ।
अन्वधावदनिर्विण्णो येन येन स्म गच्छतः ॥ ३ ॥
तथा तमनुधावन्तं मृगयुं शकुनार्थिनम् ।
आश्रमस्थो मुनिः कश्चिद्ददर्शाथ कृताह्निकः ॥ ४ ॥
तावन्तरिक्षगौ शीघ्रमनुयान्तं महीचरम् ।
श्लोकेनानेन कौरव्य पप्रच्छ स मुनिस्तदा ॥ ५ ॥
विचित्रमिदमाश्चर्यं मृगहन्प्रतिभाति मे ।
प्लवमानौ हि खचरौ पदातिरनुधावसि ॥ ६ ॥

**शाकुनिक उवाच—**

पाशमेकमुभावेतौ सहितौ हरतो मम ।
यत्र वै विवदिष्येते तत्र मे वशमेष्यतः ॥ ७ ॥

**विदुर उवाच—**

तौ विवादमनुप्राप्तौ शकुनौ मृत्युसंधितौ ।
विगृह्य च सुदुर्बुद्धी पृथिव्यां संनिपेततुः ॥ ८ ॥
तौ युध्यमानौ संरब्धौ मृत्युपाशवशानुगौ ।
उपसृत्यापरिज्ञातो जग्राह मृगहा तदा ॥ ९ ॥
एवं ये ज्ञातयोऽर्थेषु मिथो गच्छन्ति विग्रहम् ।
तेऽमित्रवशमायान्ति शकुनाविव विग्रहात् ॥ १० ॥
संभोजनं संकथनं संप्रश्नोऽथ समागमः ।
एतानि ज्ञातिकार्याणि न विरोधः कदाचन ॥११॥
ये स्म काले सुमनसः सर्वे वृद्धानुपासते ।
सिंहगुप्तमिवारण्यमप्रधृष्या भवन्ति ते ॥ १२ ॥
येऽर्थं संततमासाद्य दीना इव समासते ।
श्रियं ते संप्रयच्छन्ति द्विषद्भ्यो भरतर्षभ ॥ १३ ॥
धूमायन्ते व्यपेतानि ज्वलन्ति सहितानि च ।
धृतराष्ट्रोल्मुकानीव ज्ञातयो भरतर्षभ ॥ १४ ॥
इदमन्यत्प्रवक्ष्यामि यथा दृष्टं गिरौ मया ।
श्रुत्वा तदपि कौरव्य यथा श्रेयस्तथा कुरु ॥ १५ ॥
वयं किरातैः सहिता गच्छामो गिरिमुत्तरम् ।
ब्राह्मणैर्देवकल्पैश्च विद्याजम्भकवार्तिकैः ॥ १६ ॥
कुञ्जभूतं गिरिं सर्वमभितो गन्धमादनम् ।
दीप्यमानौषधिगणं सिद्धगन्धर्वसेवितम् ॥ १७ ॥
तत्रापश्याम वै सर्वे मधु पीतकमाक्षिकम् ।
मरुप्रपाते विषमे निविष्टं कुम्भसंमितम् ॥ १८ ॥

---

[ नील० ] दमस्य श्रैष्ठ्यं प्रतिपाद्यादान्तयोः कलहं कुर्वतोर्द्वयोरपि नाश इति प्रतिपादयन्नाख्यायिकामुखेनाह— शकुनीनामिति । पूर्वेषां मुखात् ॥ १ ॥ विहायसं व्योम ॥ ३ ॥ अमित्रेतिच्छेदः ॥ १० ॥ विद्याजम्भकवार्तिकाः विद्या मन्त्रयन्त्रादिरूपा जम्भक औषधिसाधनानि तद्वार्ताप्रियाः विद्याजम्भकवार्तिकाः ॥ १६ ॥ कुञ्जभूतं सर्वतो लताभिः परिवृतम् ॥ १७ ॥ पीतकमाक्षिकं सुवर्णमाक्षिकं धातुविशेषः ॥ १८ ॥

[ अर्जु० ] पूर्वेषां सकाशादिति शेषः ॥ १ ॥ विहायो नभः विहायसमिति पाठे त्वार्षं पुंस्त्वम् ॥ ३ ॥ मृत्युसंदितौ मृत्युना खण्डितौ विगृह्य युद्धं कृत्वा ॥ ८ ॥ अपरिज्ञातोऽलक्षितः शकुनिभ्याम् ॥ ९ ॥ संभोजनं सहभोजनं, संकथनं कृतानुवादः, संप्रश्नः कर्तव्यविषयः, समागमः एकस्मिन् कार्ये मेलकः ॥११॥ [ सनाशस्य निमित्ताद् ] धूमायन्ते मन्दतेजसो भवन्ति ॥ व्यपेतानि असंभूतानि ज्वलन्ति तेजोभूतानि भवन्ति ॥ १४ ॥ विद्यया मन्त्रौषधिप्रयुक्तलक्षणया जम्भकाः कुहकेन वातिव्यधातुवादिनः ॥ १६ ॥ कुञ्जीभूतं कुञ्जतां गतं लतादिपिहितोदरतां गतमित्यर्थः ॥ १७ ॥ तत्रापश्याम अमाक्षिकं मधु अमृतं पीतं पीतवर्णं पीतकमाक्षिकमित्यपपाठः । अमृतं हि तत् वक्ष्यमाणगुणयोगात् । मरुत्प्रपाते मरुतां देवानां प्रपाते भृगौ कुम्भसंमितं कुम्भप्रमाणम् ॥ १८ ॥

[ सर्व० ] पूर्वेषां पूर्वेभ्यो वृद्धेभ्यः शुश्रुम ॥ १ ॥ विहायसमाकाशम् ॥ ३ ॥ सङ्कथनं स्वमुखेन दुःखनिवेदनम् । संप्रश्नः परस्परमुभयप्रश्नः ॥ ११ ॥ वृद्धान् समाश्वस्य हिलित्वात् (?) ॥ १२ ॥ धूमायन्ते निस्तेजसो

---

१ म. नःश्रुतम् । ९ म. मृत्युवेगवशानुगौ । १० म. ज्ञातिभिः सार्धं । १२ म. यस्मिन्काले । १६ म. गिरिमुत्तमम् । १८ म. पश्यामहे ॥

चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

आशीविषै रक्ष्यमाणं कुबेरदयितं भृशम् ।
यत्प्राप्य पुरुषो मर्त्योऽप्यमरत्वं नियच्छति ॥१९॥
अचक्षुर्लभते चक्षुर्वृद्धो भवति वै युवा ।
इति ते कथयन्ति स्म ब्राह्मणा जम्भसाधकाः॥२०॥
ततः किरातास्तद्दृष्ट्वा प्रार्थयन्तो महीपते ।
विनेशुर्विषमे तस्मिन्ससर्पे गिरिगह्वरे ॥ २१ ॥
तथैव तव पुत्रोऽयं पृथिवीमेक इच्छति ।
मधु पश्यति संमोहात्प्रपातं नानुपश्यति ॥ २२ ॥
दुर्योधनो योद्धुमनाः समरे सव्यसाचिना ।
न च पश्यामि तेजोऽस्य विक्रमं वा तथाविधम्॥२३॥
एकेन रथमास्थाय पृथिवी येन निर्जिता ।
भीष्मद्रोणप्रभृतयः संत्रस्ताः साधुयायिनः ॥ २४ ॥
विराटनगरे भग्नाः किं तत्र तव दृश्यताम् ।
प्रतीक्षमाणो यो वीरः क्षमते वीक्षितं तव ॥ २५ ॥
द्रुपदो मत्स्यराजश्च संक्रुद्धश्च धनञ्जयः ।
न शेषयेयुः समरे वायुयुक्ता इवाग्नयः ॥ २६ ॥
अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम् ।
युध्यतोर्हि द्वयोर्युद्धे नैकान्तेन भवेज्जयः ॥ २७ ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

## पञ्चषष्टितमोऽध्यायः ६५

पाण्डवास्त्वया जेतुं न शक्या इति दुर्योधनंप्रति धृतराष्ट्रोक्तिः ॥ १ ॥

धृतराष्ट्र उवाच—

दुर्योधन विजानीहि यत्त्वां वक्ष्यामि पुत्रक ।
उत्पथं मन्यसे मार्गमनभिज्ञ इवाध्वगः ॥ १ ॥
पञ्चानां पाण्डुपुत्राणां यत्तेजः प्रजिहीर्षसि ।
पञ्चानामिव भूतानां महतां लोकधारिणाम् ॥ २ ॥
युधिष्ठिरं हि कौन्तेयं परं धर्ममिहास्थितम् ।
परां गतिमसंप्रेत्य न त्वं जेतुमिहार्हसि ॥ ३ ॥
भीमसेनं तु कौन्तेयं यस्य नास्ति समो बले ।
रणान्तकं तर्जयसे महावातमिव द्रुमः ॥ ४ ॥
सर्वशस्त्रभृतां श्रेष्ठं मेरुं शिखरिणामिव ।
युधि गाण्डीवधन्वानं को नु युध्येत बुद्धिमान् ॥५॥
धृष्टद्युम्नश्च पाञ्चाल्यः कमिवाद्य न शातयेत् ।
शत्रुमध्ये शरान्मुञ्चन् देवराडशनीमिव ॥ ६ ॥
सात्यकिश्चापि दुर्धर्षः संमतोऽन्धकवृष्णिषु ।
ध्वंसयिष्यति ते सेनां पाण्डवेयहिते रतः ॥ ७ ॥
यः पुनः प्रतिमानेन त्रीन् लोकानतिरिच्यते ।
तं कृष्णं पुण्डरीकाक्षं को नु युध्येत बुद्धिमान् ॥८॥

---

भवन्ति । ज्वलन्ति तेजस्विनो भवन्ति ॥ १४ ॥ विद्या मंत्रादिविद्याः । जम्भकमौषधिविशेषः । तदर्थं वातिका वातवद्देशान्तरभ्रान्ताः ॥ १६ ॥ अभितः सर्वतः । कुञ्जभूतं निकुञ्जबहुलं गन्धमादनम् ॥ १७ ॥ पीतं पीतवर्णसमाक्षिकाचिरसंवृतं मधु । मेरोः पर्वतस्य प्रपातोऽतटः ॥ १८ ॥

[ लक्षा० ] ये तु सं(बन्धि?विधि) मासाद्येत्यत्र समीचीनो विधिः ॥ १३ ॥ महाप्रपाते विषम इत्यत्र प्रपातस्त्वतटं भृगुरिति वचनात् प्रपाते पर्वतशृङ्गे ॥ १८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

[ नील० ] तव दृश्यतां त्वया द्रष्टव्यं बलमिति शेषः । यो वीरः कर्णादिः ॥ २५ ॥ युद्ध्यतोरन्यतरस्य नाशोऽपि त्वन्नाश एवेति भावः ॥ २७ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

[ अर्जु० ] अङ्के उत्सङ्गे ॥ अङ्के कुरुष्व राजानं धृतराष्ट्र युधिष्ठिरम् । इति विदुरः शान्तिख्यापनाय धृतराष्ट्रमुवाच ॥ २७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

[ सर्व० ] वीक्षितं प्रसाददृष्टिं प्रतीक्षमाणः ॥ २५ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां चतुःषष्टितमोऽध्यायः ॥ ६४ ॥

[ नील० ] दुर्योधनेति । उत्पथममार्गमेव मार्गं मन्यसे ॥ १ ॥ परां गतिं मरणम् असंप्रेत्य अप्राप्य मरिष्यस्येवेत्यर्थः ॥३॥ न शातयेत् नच्छिन्द्यात् ॥ ६ ॥ प्रतिमानेन तुल्यत्वेन ॥ ८ ॥

[ अर्जु० ] तर्कयसे संभावयसि जेतुमिति शेषः ॥४॥ प्रतिमानेन निश्चितेन मानेन उत्कर्षेण वा ॥ ८ ॥

---

४ म. रणाय किं तर्कयसे ।

एकतो ह्यस्य दाराश्च ज्ञातयश्च सबान्धवाः ।
आत्मा च पृथिवी चेयमेकतश्च धनञ्जयः ॥ ९ ॥
वासुदेवोऽपि दुर्धर्षो यतात्मा यत्र पाण्डवः ।
अविषह्यं पृथिव्याऽपि तद्बलं यत्र केशवः ॥ १० ॥
तिष्ठ तात सतां वाक्ये सुहृदामर्थवादिनाम् ।
वृद्धं शान्तनवं भीष्मं तितिक्षस्व पितामहम् ॥ ११ ॥
मां च ब्रुवाणं शुश्रूष कुरूणामर्थदर्शिनम् ।
द्रोणं कृपं विकर्णं च महाराजं च बाह्लिकम् ॥१२॥
एते ह्यपि यथैवाहं मन्तुमर्हसि तांस्तथा ।
सर्वे धर्मविदो ह्येते तुल्यस्नेहाश्च भारत ॥ १३ ॥
यत्तद्विराटनगरे सह भ्रातृभिरग्रतः ।
उत्सृज्य गाः सुसंत्रस्तं बलं ते समशीर्यत ॥ १४ ॥
यच्चैव नगरे तस्मिन् श्रूयते महदद्भुतम् ।
एकस्य च बहूनां च पर्याप्तं तन्निदर्शनम् ॥ १५ ॥
अर्जुनस्तत्तथाऽकार्षीत् किं पुनः सर्व एव ते ।
सभ्रातॄनभिजानीहि वृत्त्या तं प्रतिपादय ॥ १६ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

## षट्षष्टितमोऽध्यायः ६६

पृच्छते धृतराष्ट्राय संजयेन यथा रणयज्ञे सर्वे राजानो न हुताः स्युस्तथा प्रयतध्वमिति तत्र समागताः पार्थिवास्त्वया वाच्या इत्यर्जुनवचनकथनम् ॥ १ ॥

**वैशम्पायन उवाच—**

एवमुक्त्वा महाप्राज्ञो धृतराष्ट्रः सुयोधनम् ।
पुनरेव महाभागः सञ्जयं पर्यपृच्छत ॥ १ ॥
ब्रूहि सञ्जय यच्छेषं वासुदेवादनन्तरम् ।
यदर्जुन उवाच त्वां परं कौतूहलं हि मे ॥ २ ॥

**सञ्जय उवाच**

वासुदेववचः श्रुत्वा कुन्तीपुत्रो धनञ्जयः ।
उवाच काले दुर्धर्षो वासुदेवस्य शृण्वतः ॥ ३ ॥
पितामहं शान्तनवं धृतराष्ट्रं च सञ्जय ।
द्रोणं कृपं च कर्णं च महाराजं च बाह्लिकम् ॥४॥
द्रौणिं च सोमदत्तं च शकुनिं चापि सौबलम् ।
दुःशासनं शलं चैव पुरुमित्रं विविंशतिम् ॥ ५ ॥
विकर्णं चित्रसेनं च जयत्सेनं च पार्थिवम् ।
विन्दानुविन्दावावन्त्यौ दुर्मुखं चापि कौरवम् ॥६॥
सैन्धवं दुःसहं चैव भूरिश्रवसमेव च ।
भगदत्तं च राजानं जलसंधं च पार्थिवम् ॥ ७ ॥
ये चाप्यन्ये पार्थिवास्तत्र योद्धुं
समागताः कौरवाणां प्रियार्थम् ।
मुमूर्षवः पाण्डवाग्नौ प्रदीप्ते
समानीता धार्तराष्ट्रेण होतुम् ॥ ८ ॥
यथान्यायं कौशलं वन्दनं च
समागता मद्वचनेन वाच्याः ।
इदं ब्रूयाः सञ्जय राजमध्ये
सुयोधनं पापकृतां निधानम् ॥ ९ ॥
अमर्षणं दुर्मतिं राजपुत्रं
पापात्मानं धार्तराष्ट्रं सुलुब्धम् ।
सर्वं ममैतद्वचनं समग्रं
सहामात्यं सञ्जय श्रावयेथाः ॥ १० ॥

---

[ सर्व० ] मार्गमेवोत्पथम् मन्यसे तर्कयसे । अल्पत्वेनाकलयसि ॥ १ ॥ प्रतिमानेन विचार्यमाणः ॥ ८ ॥

[ नील० ] भीष्मं तितिक्षस्व तद्वाक्यं गृहाणेत्यर्थः ॥११॥ वृत्त्या राज्यार्धदानेन प्रतिपादय संभावय ॥ १६ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

[ अर्जु० ] हे तात सतां वाक्ये तिष्ठ तितिक्षस्व क्षमस्व भीष्मं, मां च शुश्रूषेत्यन्वयः ॥ ११ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

[ सर्व० ] भीष्मं तितिक्षस्व । तद्वचनं क्षमस्व ॥११॥ मां शुश्रूष मद्वचनं श्रोतुमिच्छ ॥ १२ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

[ लक्षा० ] एकतो ह्यस्य दाराश्चेत्यत्र अस्य कृष्णस्य ॥ ९ ॥ सभ्रातॄनभिजानीहीत्यत्र तव समानः भ्राता पाण्डुर्येषां पिता ते सभ्रातरः तान् सभ्रातॄन् ॥ १६ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

[ नील० ] एवमिति ॥ १ ॥

---

१२ म. शुश्रुषुः । पञ्चषष्टितमोऽध्यायः ॥ ६५ ॥

एवं प्रतिष्ठाप्य धनञ्जयो मां
ततोऽर्थवद्धर्मवच्चापि वाक्यम् ।
प्रोवाचेदं वासुदेवं समीक्ष्य
पार्थो धीमाँल्लोहितान्तायताक्षः ॥ ११ ॥
यथा श्रुतं ते वदतो महात्मनो
मधुप्रवीरस्य वचः समाहितम् ।
तथैव वाच्यं भवता हि मद्वचः
समागतेषु क्षितिपेषु सर्वशः ॥ १२ ॥
शराग्निधूमे रथनेमिनादिते
धनुःस्रुवेणास्त्रबलप्रसारिणा ।
यथा न होमः क्रियते महामृधे
समेत्य सर्वे प्रयतध्वमादृताः ॥ १३ ॥
न चेत्प्रयच्छध्वममित्रघातिनो
युधिष्ठिरस्यांशमभीप्सितं स्वकम् ।
नयामि वः साश्वपदातिकुञ्जरान्
दिशं पितॄणामशिवां शितैः शरैः ॥ १४ ॥
ततोऽहमामन्त्र्य तदा धनञ्जयं
चतुर्भुजं चैव नमस्य सत्वरः ।
जवेन संप्राप्त इहामरद्युते
तवान्तिकं प्रापयितुं वचो महत् ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि षट्षष्टितमोऽध्यायः ॥ ६६ ॥

## सप्तषष्टितमोऽध्यायः ६७

गतेषु सर्वेषु राजसु धृतराष्ट्रेण स्वपरसेनासु सारफल्गु पृष्टस्य संजयस्य वचनेन व्यासगान्धार्योस्तत्रानयनम् ॥ १ ॥

**वैशम्पायन उवाच—**

दुर्योधने धार्तराष्ट्रे तद्वचो नाभिनन्दति ।
तूष्णींभूतेषु सर्वेषु समुत्तस्थुर्नरर्षभाः ॥ १ ॥
उत्थितेषु महाराज पृथिव्यां सर्वराजसु ।
रहिते संजयं राजा परिप्रष्टुं प्रचक्रमे ॥ २ ॥
आशंसमानो विजयं तेषां पुत्रवशानुगः ।
आत्मनश्च परेषां च पाण्डवानां च निश्चयम् ॥३॥

**धृतराष्ट्र उवाच—**

गावल्गणे ब्रूहि नः सारफल्गु
स्वसेनायां यावदिहास्ति किंचित् ।
त्वं पाण्डवानां निपुणं वेत्थ सर्वं
किमेषां ज्यायः किमु तेषां कनीयः ॥ ४ ॥
त्वमेतयोः सारवित्सर्वदर्शी
धर्मार्थयोर्निपुणो निश्चयज्ञः ।
स मे पृष्टः सञ्जय ब्रूहि सर्वं
युध्यमानाः कतरेऽस्मिन्न सन्ति ॥ ५ ॥

**सञ्जय उवाच—**

न त्वां ब्रूयां रहिते जातु किंचि-
दसूया हि त्वां प्रविशेत राजन् ।
आनयस्व पितरं महाव्रतं
गान्धारीं च महिषीमाजमीढ ॥ ६ ॥
तौ तेऽसूयां विनयेतां नरेन्द्र
धर्मज्ञौ तौ निपुणौ निश्चयज्ञौ ।
तयोस्तु त्वां सन्निधौ तद्वदेयं
कृत्स्नं मतं केशवपार्थयोर्यत् ॥ ७ ॥

**वैशम्पायन उवाच—**

इत्युक्तेन च गान्धारी व्यासश्चात्राजगाम ह ।
आनीतौ विदुरेणेह सभां शीघ्रं प्रवेशितौ ॥ ८ ॥

---

[ नील० ] लोहितान्ते आयते च अक्षिणी यस्य स लोहितान्तायताक्षः ॥ ११ ॥ शराणां मिथः सन्निपातजोऽग्निस्तस्य धूमो यस्मिन् यज्ञे इति शेषः । रथध्वनिरेव मन्त्रस्थाने धनुःस्रुवेण अस्त्रबलेन प्रसरति शास्त्रबलेनेव यज्ञः ॥ १३ ॥ चतुर्भुजमिति । संजयस्यापि योगिदृश्यं भगवतश्चतुर्भुजं रूपं सदा दृष्टिगोचरमासीदित्यनुमीयते ॥१५॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षट्षष्टितमोऽध्यायः ॥ ६६ ॥

[ नील० ] दुर्योधने इति ॥ १ ॥ परेषां तटस्थानाम् ॥ ३ ॥ युद्ध्यमाना न सन्ति उदासीना इत्यर्थः ॥ ५ ॥ असूया मयि दोषदृष्टिः । पितरं व्यासम् ॥ ६ ॥

[ अर्जु० ] रहिते एकान्ते ॥ २ ॥ फल्गु असारम्॥४॥

[ सर्व० ] आत्मनो निश्चयं सारासारविवेकम् । तथा पाण्डवानाम् ॥ ३ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

---

१४ म. युधिष्ठिरस्यान्तमभी । षट्षष्टितमोऽध्यायः ॥६६॥ ६ ख. प्रसहेतो ।

७ ख. धर्मामिश्रौ । खं. मतं वासुदेवार्जुनाभ्याम् । ८ ख. नास्ति ।

ततस्तन्मतमाज्ञाय सञ्जयस्यात्मजस्य च ।
अभ्युपेत्य महाप्राज्ञः कृष्णद्वैपायनोऽब्रवीत् ॥ ९ ॥

**व्यास उवाच—**

संपृच्छते धृतराष्ट्राय सञ्जय
आचक्ष्व सर्वं यावदेषोऽनुयुङ्क्ते ।
सर्वं यावद्वेत्थ तस्मिन्यथाव—
द्याथातथ्यं वासुदेवेऽर्जुने च ॥ १० ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

## अष्टषष्टितमोऽध्यायः ६८

व्यासवचनात्संजयेन धृतराष्ट्राय कृष्णार्जुनयोर्याथातथ्यकथनम् ॥ १ ॥

**सञ्जय उवाच—**

अर्जुनो वासुदेवश्च धन्विनौ परमार्चितौ ।
कामादन्यत्र संभूतौ सर्वभावाय संमितौ ॥ १ ॥
व्यामान्तरं समास्थाय यथामुक्तं मनस्विनः ।
चक्रं तद्वासुदेवस्य मायया वर्तते विभो ॥ २ ॥
सापह्नवं कौरवेषु पाण्डवानां सुसंमतम् ।
सारासारबलं ज्ञातुं तेजःपुञ्जावभासितम् ॥ ३ ॥
नरकं शम्बरं चैव कंसं चैद्यं च माधवः ।
जितवान् घोरसंकाशान् क्रीडन्निव महाबलः ॥ ४ ॥
पृथिवीं चान्तरिक्षं च द्यां चैव पुरुषोत्तमः ।
मनसैव विशिष्टात्मा नयत्यात्मवशं वशी ॥ ५ ॥
भूयो भूयो हि यद्राजन् पृच्छसे पाण्डवान्प्रति ।
सारासारबलं ज्ञातुं तत्समासेन मे शृणु ॥ ६ ॥

---

[ लक्षा० ] आनयस्व पितरमित्यत्र पिता कृष्णद्वैपायनः ॥ ६ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

[ नील० ] अनुयुङ्क्ते पृच्छति ॥ १० ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

[ अर्जु० ] अनुयुङ्क्ते पृच्छति ॥ १० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

[ नील० ] अर्जुन इति । कामादिति कामपूर्वकं कर्मोच्यते । अकर्मजं तयोर्जन्म लोकानुग्रहार्थं सूर्यवदाविर्भावमात्रमित्यर्थः । सर्वभावाय ब्रह्मभावाय संमितौ तुल्यौ उभावपि साक्षाद्ब्रह्मरूपावित्यर्थः ॥ १ ॥ व्यामान्तरं प्रसारितयोर्हस्तयोर्यावान्विस्तारः पञ्चहस्तमितः तावत् अन्तरं मध्यप्रमाणं यस्य तद्व्यामान्तरं यथामुक्तं यथा यथारूपं यावत्प्रमाणं चिन्तितं तावत्प्रमाणं भूत्वा यत मुक्तं भवति मायया दुर्लक्ष्यरूपेणेत्यर्थः ॥ २ ॥ सापह्नवं ससंहारम् अत एव पाण्डवानां सुसंमतम् ॥ ३ ॥ मनसैव संकल्पमात्रेण विशिष्टात्मा श्रेष्ठरूपः वशी ऐश्वर्यवान् ॥ ५ ॥

[ अर्जु० ] कामात् इच्छातः । अन्यत्र बदरिकाश्रमात् । अन्यत्र भारतवर्षे संभूतौ जातौ । सर्वाभावाय सर्वविनाशाय । संमतौ पुराणेषु विदितौ ॥ १ ॥ द्यां दिवम् । अन्तरम् अन्तरिक्षलोकम् चक्रं कालचक्रम् ॥ २ ॥ सापह्नवं सस्नेहं पाण्डवानां तु संमतमिति परस्परस्निग्धम् ॥ ३ ॥ विशिष्टात्मा ईश्वररूपः ॥ ५ ॥

[ सर्व० ] कामात् इच्छातः अन्यत्र वसुदेवभार्यायां तत्वतस्तयोरनित्यत्वात् । सर्वेषां राज्ञामभावाय सर्वाभावाय संमितौ पर्याप्तौ ॥ १ ॥ द्यां द्युलोकमन्तरमन्यलोकम् । भूयाम मनस्विनो वासुदेवस्य तच्चक्रं सुदर्शनं मायया वर्तते अनेकदेशव्यापित्वात् । मायाऽभिध्यानम् । तेन चक्रं स्वस्य तदल्पलोकस्य च रक्षणीये···देहभेदेन तिष्ठतीत्युक्तम् ॥२॥ सापह्नवं सस्नेहम् पाण्डवेषु तेषां च यत्संमतम् ॥३॥ तथात्वेन तद्बलं सैन्यं ज्ञात्वा मयोच्यमानं शृणु ॥ ६ ॥

[ लक्षा० ] कामादन्यत्र संभूतावित्यत्र कामादन्यत्र कामं विनेत्यर्थः । पूर्वेषां भावः स्वभावः ॥ १ ॥ जन्मान्तरं समास्थायेत्यत्र मनस्विनः वासुदेवस्य मायया इच्छया तच्चक्रं जगच्चक्रं जन्मान्तरं समास्थाय पुनः पुनरावर्तते ॥ २ ॥ मनसैव विसृष्टात्मेत्यत्र विशेषेण सृष्टा आत्मानो जीवा येन स तथोक्तः ॥ ५ ॥ स यद्ध्रुवं पाण्डवेष्वित्यत्र पाण्डवेषु प्रतिराजसु च सारासारबलं ज्ञात्वा सः कृष्णः

---

९ ख. उत्तरार्धात्प्राक्—त्रिकालदर्शी भगवान् धृतराष्ट्रं महामुनिः । १० ख. वृच्चतुर्वासुदेवार्जुनौ च ॥ सप्तषष्टितमोऽध्यायः ॥ ६७ ॥

१ ख. सर्वाभावाय सन्मते । २ ख. व्यामन्तरेण । ३ ख. ज्ञात्वा तत्समासे मे शृणु । ६ ख. ज्ञात्वा तन्मे निगदतः शृणु ।

एकतो वा जगत्कृत्स्नमेकतो वा जनार्दनः ।
सारतो जगतः कृत्स्नादतिरिक्तो जनार्दनः ॥ ७ ॥
भस्म कुर्याज्जगदिदं मनसैव जनार्दनः ।
न तु कृत्स्नं जगच्छक्तं भस्म कर्तुं जनार्दनम् ॥८॥
यतः सत्यं यतो धर्मो यतो ह्रीरार्जवं यतः ।
ततो भवति गोविन्दो यतः कृष्णस्ततो जयः ॥९॥
पृथिवीं चान्तरिक्षं च दिवं च पुरुषोत्तमः ।
विचेष्टयति भूतात्मा क्रीडन्निव जनार्दनः ॥ १० ॥
स कृत्वा पाण्डवान्सत्रं लोकं संमोहयन्निव ।
अधर्मनिरतान्मूढान्दग्धुमिच्छति ते सुतान् ॥ ११ ॥
कालचक्रं जगच्चक्रं युगचक्रं च केशवः ।
आत्मयोगेन भगवान् परिवर्तयतेऽनिशम् ॥ १२ ॥
कालस्य च हि मृत्योश्च जङ्गमस्थावरस्य च ।
ईशते भगवानेकः सत्यमेतद्ब्रवीमि ते ॥ १३ ॥
ईशन्नपि महायोगी सर्वस्य जगतो हरिः ।
कर्माण्यारभते कर्तुं कीनाश इव वर्धनः ॥ १४ ॥
तेन वञ्चयते लोकान्मायायोगेन केशवः ।
ये तमेव प्रपद्यन्ते न ते मुह्यन्ति मानवाः ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

## एकोनसप्ततितमोऽध्यायः ६९

कृष्णार्जुनयोर्माहात्म्यं श्रुतवता धृतराष्ट्रेण श्रीकृष्णं शरणं गच्छेति दुर्योधनोपदेशः ॥ १ ॥ तत्प्रत्याचक्षाणस्य दुर्योधनस्य गान्धार्या गर्हणम् ॥ २ ॥ संजयेन धृतराष्ट्राय पृच्छते भगवत्प्राप्त्युपायकथनम् ॥ ३ ॥

धृतराष्ट्र उवाच—
कथं त्वं माधवं वेत्थ सर्वलोकमहेश्वरम् ।
कथमेनं न वेदाहं तन्ममाचक्ष्व सञ्जय ॥ १ ॥

---

यत् यस्मात्कारणात् ध्रुवं पाण्डवेष्वेवास्ति तत्समासेन शृण्विति योजना ॥ ६ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[ नील० ] विचेष्टयति चालयति यतो भूतात्मा सर्वेषां भूतानामन्तरात्मा ॥ १० ॥ सत्रं मिषम् । 'सत्रमाच्छादने यज्ञे सदादाने च कैतवे' इति विश्वः । संमोहयन् आत्मनो जगत्कर्तृत्वेऽपि अकर्तृत्वं दर्शयन् ॥ ११ ॥ कालचक्रं संवत्सरात्मकं जगच्चक्रं जगतो जन्मस्थितिलयप्रवाहं युगचक्रं कर्मचक्रं कृतं यत्र धर्मश्चतुष्पात् । त्रेतायां त्रिपाद्धर्म एकपादधर्मः । द्वापरेऽर्धे धर्मोऽर्धमधर्मः । कलौ त्रिपात्पापं एकपाद्धर्म इति । तदिदं कर्मचक्रं पुनः पुनर्जन्ममरणयोर्हेतुभूतं पुनः कर्म पुनः संसारः पुनः कर्मेत्येवंरूपम् आत्मयोगेन चैतन्यसंबन्धेन । नहि संवत्सरादिकं केवलजडाश्रयं भवितुमर्हति सर्वस्य चिदेकप्रकाश्यत्वात् ॥ १२ ॥ कालः आयुःपरिच्छेदकर्त्री देवता मृत्युर्देहप्राणयोर्वियोगकर्त्री ईशते ईष्टे ॥ १३ ॥ ईशन्नपि ईशानोऽपि शपोऽलुक्परस्मैपदं चार्षम् । कीनाशः कर्षकः वर्धनः धान्यादिवृद्धिकृत् । यद्वा कीनाशो यमः वर्धनः देहादेश्छेत्ता ॥ १४ ॥ ते नरा न मुह्यन्ति ॥ १५ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[ अर्जु० ] यतो यत्र ततस्तत्र ॥ ९ ॥ विचेष्टयति विवृणोति । अत्र हेतुर्भूतात्मेति आत्मा व्यापकः ॥ १० ॥ सत्रं व्याजम् । अभिचारयागं वा । संमोहयन् पाण्डवाः कुर्वन्ति नाहमिति ॥ ११ ॥ कालचक्रमृत्वादि जगच्चक्रं भूर्भुवःस्वरादि, युगचक्रं कृतादि, चक्रत्वं पुनरावृत्तत्वात् । आत्मयोगेन आत्मैव योगस्तेन उपायभूतेनात्मना ॥ १२ ॥ कालस्य कालव्यवहारहेतोः आदित्यस्य मृत्योर्यमस्य, जङ्गमस्थावरस्य ईशान इच्छामात्रेण कर्तुमकर्तुमन्यथाकर्तुमपि शक्नुवन् ॥ १३ ॥ कीनाशो दरिद्रः । दुर्बलो विद्यादिबलहीनः ॥ १४ ॥ तेन इच्छया शक्तस्यापि कर्मयोगलक्षणेन मायाबलेन ॥ १५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

[ सर्व० ] विवेष्टयत्यावृणोति ॥ १० ॥ सत्रं लक्षं बलपर्यायत्वात् । संमोहयत्यात्मनोऽकर्तृत्वप्रतिघातान् ॥ ११ ॥ कालचक्रं संवत्सरादि । जगच्चक्रं जङ्गमादि । युगचक्रं कृतादि । आत्मयोगेनात्मबलमात्रेण कर्म विना परिवर्तयति पुनः पुनः सृष्टिसंहाराभ्याम् ॥ १२ ॥ कीनाशः कर्कशः । दुर्बलो दरिद्रः ॥ १४ ॥ मायायोगेन मोहोत्पादनेन ॥ ५१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायामष्टषष्टितमोऽध्यायः ॥ ६८ ॥

---

[ नील० ] कथं केन प्रकारेण कानि ज्ञानसाधनानि कानि वा ज्ञानप्रतिबन्धकानीति प्रश्नार्थः ॥ १ ॥

---

१३ ख. कालस्यैव हि । १४ ख. इव दुर्बलः ॥ अष्टषष्टितमोऽध्यायः ॥ ६८ ॥

**सञ्जय उवाच—**

शृणु राजन्न ते विद्या मम विद्या न हीयते ।
विद्याहीनस्तमोध्वस्तो नाभिजानाति केशवम् ॥२॥
विद्यया तात जानामि त्रियुगं मधुसूदनम् ।
कर्तारमकृतं देवं भूतानां प्रभवाप्ययम् ॥ ३ ॥

**धृतराष्ट्र उवाच—**

गावल्गणेऽत्र का भक्तिर्या ते नित्या जनार्दने ।
यया त्वमभिजानासि त्रियुगं मधुसूदनम् ॥ ४ ॥

**सञ्जय उवाच—**

मायां न सेवे भद्रं ते न वृथा धर्ममाचरे ।
शुद्धभावं गतो भक्त्या शास्त्राद्वेद्मि जनार्दनम् ॥५॥

**धृतराष्ट्र उवाच—**

दुर्योधन हृषीकेशं प्रपद्यस्व जनार्दनम् ।
आप्तो नः सञ्जयस्तात शरणं गच्छ केशवम् ॥ ६ ॥

**दुर्योधन उवाच—**

भगवान्देवकीपुत्रो लोकांश्चेन्निहनिष्यति ।
प्रवदन्नर्जुने सख्यं नाहं गच्छेऽद्य केशवम् ॥ ७ ॥

**धृतराष्ट्र उवाच—**

अवाग्गान्धारि पुत्रस्ते गच्छत्येष सुदुर्मतिः ।
ईर्षुर्दुरात्मा मानी च श्रेयसां वचनातिगः ॥ ८ ॥

**गान्धार्युवाच—**

ऐश्वर्यकाम दुष्टात्मन् वृद्धानां शासनातिग ।
ऐश्वर्यजीविते हित्वा पितरं मां च बालिश ॥ ९ ॥
वर्धयन्दुर्हृदां प्रीतिं मां च शोकेन वर्धयन् ।
निहतो भीमसेनेन स्मर्तासि वचनं पितुः ॥ १० ॥

**व्यास उवाच—**

प्रियोऽसि राजन् कृष्णस्य धृतराष्ट्र निबोध मे ।
यस्य ते सञ्जयो दूतो यस्त्वां श्रेयसि योक्ष्यते॥११॥
जानात्येष हृषीकेशं पुराणं यच्च वै परम् ।
शुश्रूषमाणमैकाग्र्यं मोक्ष्यते महतो भयात् ॥ १२ ॥
वैचित्रवीर्य पुरुषाः क्रोधहर्षसमावृताः ।
सिता बहुविधैः पाशैर्ये न तुष्टाः स्वकैर्धनैः ॥१३॥

---

[ नील० ] विद्या तत्त्वमस्यादिवाक्यजं ज्ञानं तेन हीनो यः स तमोध्वस्तस्तमसा स्वस्वरूपात् निर्विषयानन्दमात्रात् च्युतः ॥ २ ॥ विद्यया तमोविरोधिन्या त्रियुगं त्रीणि स्थूलसूक्ष्मकारणशरीराणि युज्यन्ते रज्जूरगवत् संबध्यन्ते यस्मिन् अधिष्ठानभूते तं त्रियुगम् अज्ञानकल्पितस्यावस्थात्रयस्य विद्यया बाधे सति निरुपाधिप्रत्यगात्मरूपं ज्ञायत इत्यर्थः । कर्तारं विश्वस्य निमित्तकारणम् । अकृतं कर्मभिरसाध्यं नित्यसिद्धत्वात् । भूतानां वियदादीनां प्रभवम् उत्पत्तिस्थानम् । अप्ययो लयस्थानम् ॥३॥ भक्तिः आराध्यत्वेन ज्ञानं तच्च कीदृशं किं भेदेन राजवत्तटस्थतया भगवान् ध्येय उत प्रत्यगात्मत्वेनेति भावः ॥ ४ ॥ मायां पुत्रकलत्राद्याकारेण परिणतामविद्यां न सेवे । वृथा धर्मं भगवदर्पणं विना न चरामि। शुद्धभावं मनसः कामक्रोधादिराहित्येन नैर्मल्यं गतः प्राप्तः भक्त्या ध्यानेन । शास्त्रात् तत्त्वमसीत्यागमात् । जनार्दनं जगल्लयाधिष्ठानं ज्ञानमात्रव्यवहितं ब्रह्म । नास्मि संसारी ब्रह्मैवास्मीति तत्त्वालोचनात्मकेन ज्ञानेनैव प्राप्यते नायं सर्पो रज्जुरेवेयमितिवत् । न तु कीटभृङ्गन्यायेन भावनादित्यर्थः ॥५॥ अर्जुने विशुद्धे कामक्रोधादिमलशून्ये सख्यं वदन् भगवानस्ति अद्य कामाद्याक्रान्तदशायां नाहं गच्छे न प्राप्नुयाम् आसुरो भावो न मया त्यक्तुं शक्योऽतो न मे तत्प्राप्तिसंभावनाऽपीत्यर्थः ॥ ७ ॥ अवाक् अधो नरकमित्यर्थः । श्रेयसां साधूनां वचनातिगः उपदेशावमानी ॥ ८ ॥ ऐकाग्र्यं शुश्रूषमाणं सेवमानं त्वां मोक्ष्यते मोचयिष्यति ॥१२॥ सिताः बद्धाः पाशाः कामादिभिः॥१३॥

[ अर्जु० ] विद्यां जानीयाम् ॥ २ ॥ त्रियुगं त्रीणि युगानि युग्मानि यत्र । तेजोबले, वीर्यपराक्रमौ, धर्मज्ञाने । अथवा संधिविग्रहौ, यानासने, संश्रयद्वैधीभावौ चेति । अकृतं नित्यं प्रभवाप्ययं प्रभव उत्पत्तिः अप्ययो विनाशः तन्मूलत्वात् तथा । प्रभवाव्ययमिति पाठे आसमन्ताद् व्ययो नाश आव्ययः एवमन्यत्रापि स्थितेर्गतिश्चिन्तनीयेति न्यायात् ॥ ३ ॥ मायां वञ्चनं, वृथा परप्रीत्यर्थं, शुद्धभावंगतः शुद्धो भावो रागद्वेषमध्यस्थता तं गतः प्राप्तः । भक्त्या तत्परतया लक्ष्यते तत्वेन न हेतुवादात् ॥ ५ ॥ चेदवधारणे ॥ ७ ॥ अर्वाक् अधोगच्छतीत्यर्थः श्रेयसां भीष्मादीनाम् ॥ ८ ॥ वर्धयन् छिन्दन् पितरं मां चेत्यन्वयः । दुर्हृदां द्विषतां प्रीतिं संवर्धयन् इति कुर्वन्नित्यर्थः ॥ १० ॥ पुराणमीश्वरं नरं पुराणं कारणं नरं कर्यामित्याप्ताः देवकीपुत्रं यच्चपरमुत्कृष्टं ब्रह्मेत्यर्थः ॥ १२ ॥ सिता बद्धाः॥१३॥

[ सर्व० ] विद्या तत्त्वज्ञानम् ॥ २ ॥ त्रियुगं युगत्रयमाविर्भवन्तं दृश्यत्वेन । यथा विष्णुधर्मोत्तरे 'प्रकृते रूपधृग्देवो दृश्यते न कलौ हरिः । कृतादिष्वेव तेनैष त्रियुगः परिपठ्यते

---

२ ख. विद्यां राजन्न वेत्थ त्वं । ९ ख. ऐश्वर्यं जीवितं । ११ ख. कृष्णस्य दयितो राजन् ।

यमस्य वशमायान्ति काममूढाः पुनः पुनः ।
अन्धनेत्रा यथैवान्धा नीयमानाः स्वकर्मभिः ॥१४॥
एष एकायनः पन्था येन यान्ति मनीषिणः ।
तं दृष्ट्वा मृत्युमत्येति महांस्तत्र न सज्जति ॥ १५ ॥

धृतराष्ट्र उवाच—

अङ्ग सञ्जय मे शंस पन्थानमकुतोभयम् ।
येन गत्वा हृषीकेशं प्राप्नुयां सिद्धिमुत्तमाम् ॥१६॥

सञ्जय उवाच—

नाकृतात्मा कृतात्मानं जातु विद्याज्जनार्दनम् ।
आत्मनस्तु क्रियोपायो नान्यत्रेन्द्रियनिग्रहात् ॥१७॥
इन्द्रियाणामुदीर्णानां कामत्यागोऽप्रमादतः ।
अप्रमादोऽविहिंसा च ज्ञानयोनिरसंशयम् ॥ १८ ॥
इन्द्रियाणां यमे यत्तो भव राजन्नतन्द्रितः ।
बुद्धिश्च ते मा च्यवतु नियच्छैनां यतस्ततः ॥१९॥
एतज्ज्ञानं विदुर्विप्रा ध्रुवमिन्द्रियधारणम् ।
एतज्ज्ञानं च पन्थाश्च येन यान्ति मनीषिणः ॥२०॥
अप्राप्यः केशवो राजन्निन्द्रियैरजितैर्नृभिः ।
आगमाधिगमाद्योगाद्वशी तत्त्वे प्रसीदति ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

---

॥ ३ ॥ वृथाधर्ममात्राचरणम् ॥ ५ ॥ चेदवश्यं हनिष्यति तदा तदनुगमनं वेद्य नाऽहं गच्छे न तत्समीपं यास्यामि ॥ ७ ॥ अर्वाक् अधोगामी । व ई यं ना छन्दसः ॥ ८ ॥ हृषीकेशं जानाति यत्पुराणं नित्यं यच्च नवं कार्यं तत्स्वयं जानाति ॥ १२ ॥ तमो मोहः उद्धताः सिता बद्धाः पाशैरिव पाशैः ॥ १३ ॥

[ नील० ] अन्धो नेत्रो येषां ते अन्धनेत्राः ॥ १४ ॥ एषः ज्ञानमार्गः एकायनः एकस्य ब्रह्मणः प्रापकः तं दृष्ट्वा तं मार्गं ज्ञात्वा मृत्युं संसारम् अत्येति अतिक्रम्य गच्छति । अभ्येतीति पाठे आत्मत्वेन मृत्युरप्येनं प्रविशतीत्यर्थः । तथा च श्रुतिः “ तस्य ह न देवाश्च नाभूत्या ईशत आत्मा ह्येषां स भवतीति ” देवाश्च न देवा अपि तत्र संसारे महान् न सज्जति सक्तो न भवति ॥१५॥ सिद्धिं मोक्षम् ॥ १६ ॥ अकृतात्मा अजितमनाः कृतात्मानं नित्यसिद्धं प्रत्यगात्मानम् आत्मनः स्वस्य इन्द्रियनिग्रहादन्यत्र इन्द्रियनिग्रहं विना क्रिया यागादिरूप उपायः प्राप्त्युपायो नास्ति ॥ १७ ॥ इन्द्रियाणामप्रमादतः अवहिततया कामत्यागः अप्रमादः अविहिंसेति छेदः ज्ञानस्य योनिः कारणम् ॥ १८ ॥ मा च्यवतु तत्त्वात् प्रच्युता माभूत् यतस्ततः सर्वेभ्य आन्तरेभ्यो बाह्येभ्यश्च विषयेभ्यो नियच्छ निगृह्णीष्व ॥ १९ ॥ इन्द्रियाणां समनस्कानां धारणं निग्रहणम् ॥ २० ॥ आगमाधिगमात् शास्त्रयुक्त्योर्लाभात् योगात् चित्तवृत्तिनिरोधात् वशी ईश्वरः तत्त्वे स्वयाथात्म्ये विषये प्रसीदति ज्ञानदानेन अनुगृह्णाति ॥ २१ ॥

इति श्रीमहा० उ० नै० भा० भा० एकोनसप्ततितमोऽध्यायः ॥६९॥

[ अर्जु० ] अन्धेति । अन्धं नेत्रं नायको येषां ते इति साधुः । नेता हस्तधारको येषां ते । अन्धो नेता येषामित्यत्र पक्षे अकारान्तता छान्दसी ॥ १४ ॥ एष एकायनः एक एव सहायहीनो अयते गच्छत्यनेनेति तथा तं पन्थानं मृत्युं यमं महान् [ महद्रूपं त्वदर्शनम् ॥ १५ ॥ अकृतात्मा अजितेन्द्रियः ॥ १७ ॥ उदीर्णानां प्रबलानां कामत्यागः येन कामेन प्रेर्यते तत्त्यागः अप्रमादोऽवधानं तत्र विषयदोषदर्शनम् ॥ १८ ॥ शमे उपशमे आत्मवतामात्मतत्वादिति शेषः । नियच्छ निगृहाण दोषदर्शनेन एतान् विषयान् ॥ १९ ॥ इन्द्रियनिग्रहं स्तौति आगमाधिगतात् श्रुतात् । योगात्, एकाग्रलक्षणात् । वशी अस्वतन्त्रतामुपगतः । तत्वे ध्येये चित्तादनपायिनीति शेषः । प्रसीदति साक्षात्कारविषयतां प्रतिपद्यते ॥ २१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

[ सर्व० ] अन्धो नेत्रो वर्त्मज्ञापको येषां तेऽन्धनेत्राः । कर्तरि णीञः ष्ट्रन् । यथा “ इन्द्र'''वा इ''ति श्रुतिः । यथा अन्धनेत्रा अन्धा यमस्य वशं यान्ति गर्तादौ पातात् तथा कामेन वर्त्मप्रापकत्वेवैनानु'''मात्मानो यमस्य वशं यान्ति ॥ १४ ॥ एकायनं एकमेवायनं वर्त्म यत्र पथि निःश्रेयसगमिति । नहि स्वर्गवत्कर्मभेदेन तत्रापि कर्मभेदः तं पन्थानमात्मानं तत्वज्ञानदृष्टान्तेनैव हेतुना महान् मूर्त्या ॥ १५–१६ ॥ नाकृतात्मा चेति । एतेन तत्वज्ञानरूपस्य वासुदेवज्ञानस्य यथा न अकृतात्मत्वमिति दर्शितम् । अकृतात्मत्वं च कृतात्मताऽभावः । तत्र कृतात्मत्वं व्याचष्टे । आत्मनस्त्विति । आत्मनः क्रिया संस्कारो ज्ञानयोग्यतापादनं तस्योपाय इन्द्रियनिग्रहः विषयेष्वप्रेरणम् ॥ १७ ॥ तस्य हेतुमाह इन्द्रियाणामिति । उदीर्णानां विषयाभिमुखानां कामो विषयस्तेन सह त्यागो वियोगः । अप्रमादः आत्मभावनात् । अविहिंसा ज्ञानयोनिर्हि संशयोत्पादे तदसंभवात् ॥ १८ ॥ शमे विषयं नोपशमे नियच्छ आत्मपरतया विषयेभ्यो निवर्तय । एनां बुद्धिम् ॥ १९ ॥ ज्ञानं ज्ञानसाधनम् ॥ २० ॥

---

१९ ख. च्यवतात् । ख. ततस्ततः ॥ ऊनसप्ततितमोऽध्यायः ॥ ६९ ॥

## सप्ततितमोऽध्यायः ७०

श्रीकृष्णस्य कतिपयनाम्नां निरुक्तिः ॥ १ ॥

**धृतराष्ट्र उवाच—**

भूयो मे पुण्डरीकाक्षं सञ्जयाचक्ष्व पृच्छतः ।
नामकर्मार्थवित्तात प्राप्नुयां पुरुषोत्तमम् ॥ १ ॥

**सञ्जय उवाच—**

श्रुतं मे वासुदेवस्य नामनिर्वचनं शुभम् ।
यावत्तत्राभिजानेऽहमप्रमेयो हि केशवः ॥ २ ॥
वसनात्सर्वभूतानां वसुत्वाद्देवयोनितः ।
वासुदेवस्ततो वेद्यो बृहत्वाद्विष्णुरुच्यते ॥ ३ ॥
मौनाद्ध्यानाच्च योगाच्च विद्धि भारत माधवम् ।
सर्वतत्त्वमयत्वाच्च मधुहा मधुसूदनः ॥ ४ ॥

आगमाधिगतादुपनिषदाधिगतात् । योगात् ज्ञानप्रकारात् क्रियमाणात् । वशे वशीकृते स्थिरीकृते तत्वे आत्मतत्वे तत्तत्वं प्रसीदति ॥ २१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

[ लक्षा० ] [ रन्ध्रयन् तद्वन् ] महांस्तत्र न सज्जत इत्यत्र महान्मृत्युः तत्र भगवद्भक्ते ॥ १५ ॥ नियच्छैतां यतस्तत इत्यत्र यतो व्यथते ततः विषयात् नियच्छ ॥१९॥

इति श्रीमहा० उद्यो०वा०ती० ल० एकोनसप्ततितमोऽध्यायः ॥ ६९ ॥

[ नील० ] भूय इति नाम्नां कर्मणां च अर्थवित् भूत्वा ॥ १ ॥ यावदभिजाने तावत् वदामीति शेषः । वस्तुतस्तु सः अप्रमेयो वाचामगोचरः ॥ २ ॥ वस्ते आच्छादयति मायया आवृणोतीति वा वस्यति स्तभ्नाति भुवनमिति वा वसत्यस्मिन् भुवनमिति वा वासुः स चासौ देवो द्योतमानश्च वासुदेवः वसन्ति देवा अस्मिन्निति वा करणग्रामस्योद्भवप्रलयस्थानमित्यर्थः । बृहत्वाद्व्यापकत्वात् वेवेष्टि व्याप्नोति सर्वमिति विष्णुः ॥ ३ ॥ मौनात् ध्यानाच्च योगाच्चेति मा धीवृत्तिः तां स्वस्य उपाधिभूतां मौनादिभिः धवयति दूरीकरोतीति माधवः, मौनं मुनेः कर्म मननं शास्त्रतो युक्तितश्च तत्त्वालोचनं, ध्यानं निश्चिते तत्त्वे चेतसः प्रणिधानं योगस्तस्यैव चेतसो निरोधः । मधुसूदनो मधोर्दैत्यस्य नाशकः श्रीकृष्णः सर्वाणि चतुर्विंशतिसंख्यानि तत्त्वानि तन्मयत्वात् तत्प्रधानत्वात् मधुहा मधूनि पृथिव्यादीनि हन्ति संहरति गच्छन्ति वा एनमिति मधुहा । "इयं पृथिवी सर्वेषां भूतानां मध्वस्यै पृथिव्यै सर्वाणि भूतानि मधु" इति श्रुत्या पृथिव्यादितत्त्वजातस्य मधुशब्देनैव निर्देशात् ॥ ४ ॥

[ अर्जु० ] मे मह्यं नामकर्मार्थवित् नाम्नां विष्णुप्रभृतीनां कर्माणि व्याप्त्यादीनि अर्थान् मूर्तिविशेषान् वेत्तीति तथा ॥ १ ॥ नामनिर्वचनं नाम्नां निरुक्तिः यावत् परिमितं जाने स्मरामि नतु सर्वमित्यर्थः । तत्र हेतुरप्रमेय इति ॥ २ ॥ वसनात्सर्वभूतानां वसुत्वात् देवयोनितः । वासुदेवस्ततो वेद्यो वृषत्वाद्वृष्णिरुच्यते । वसनात् स्थितेः, वसुत्वात् तेजोमयत्वात्, देवयोनितः देवादीनां दीप्तिरूपाणां कारणत्वात्, वृषत्वकुर्मत्वात् (?) ॥ ३ ॥ मौनात् ध्यानाच्च योगाच्च विद्धि भारत माधवम् । सर्वतत्वलयत्वाच्च मधुहा मधुसूदनः । मौनात् ध्यानाच्च निगमः । न च सत् साधर्म्यभावादर्थान्तरप्रतिपत्तिः । अस्ति च माधवे मौनध्यानयोर्मकारधकारसाधर्म्यं योगात् ध्यानरूपात् सर्वे गत्यर्थाः ज्ञानार्था इति यावत् । तत्वानि महदादीनि तेषामस्मिन् लयात् मधुहा मधुसुदनः ॥ ४ ॥

[ सर्व० ] तस्य नाम्ना तत्कर्मणा सहितार्थो नामकर्मार्थः । तद्वित् तद्वेदनात् । प्राप्नुयां जानीयां पुरुषोत्तममित्यर्थः ॥ १ ॥ यावत्तत्राभिजाने स्मरामि तावद्वक्ष्यामीति शेषः । एकदेशज्ञाने हेतुरप्रमेयो हीति अनवच्छेद्यः कर्मादिभिर्गुणैरित्यर्थः ॥२॥ वसनाच्छादनात् तदुक्तमीशावास्यमिदं सर्वमिति श्रुतौ । तेन वसुत्वाद्वसुशब्दवाच्यत्वात् । दीर्घश्छन्दसः । देवयोनितो देवानां योनिः कारणं तस्माद्देवत्वादिति शेषः । वृषत्वाद्वृषः सेक्ता चेतनः । यदुक्तं 'अप एव ससर्जादौ तासु वीर्यमवासृजदि'ति । ततो विष्णुः छन्दसि तस्यादीनामुपलक्षणार्थत्वात्क्नुप्रत्यय इकारश्च ऋकारस्य । एवमन्यास्वपि संज्ञासु प्रकृतिप्रत्ययविभागादुन्नेयम् ॥ ३ ॥ मौनाद्ध्यानादिति । मौनं च ध्यानं च ताभ्यां युक्तो माधवः । गाण्डग्यजगात् संज्ञायामिति योगविभागाद्वप्रत्ययः । योगो व्युत्पत्तिनिमित्तं योगादित्यत्र चकारो भिन्नक्रमः । तेन मौनाच्च ध्यानाच्च योगाद्व्युत्पत्तिनिमित्तान्माधवं विद्धीत्यर्थः । यद्वा योगादिति संबन्धा दित्यर्थः । तथा च तद्धितप्रत्ययार्थोऽप्युक्तः । ननु योगादित्यत्राध्यात्मयोगो धकारस्य निमित्तत्वेनोक्त इति व्याख्यादरणीया ध्यानव्यतिरिक्तस्य तस्याभावात् । सर्वतत्वमयाच्चेति । सर्वतत्वं पृथिव्यादयो विषयाः ते च सुखसाधनतया मधुशब्देनोक्ताः । तेषां

१ ख. पृच्छते । २ ख. तस्य देवस्य । ३ ज. वृषत्वाद्वृष्णिरु° । ४ ख. सर्वतत्त्वमयाचैव ।

कृषिर्भूवाचकः शब्दो णश्च निर्वृतिवाचकः ।
विष्णुस्तद्भावयोगाच्च कृष्णो भवति सात्वतः ॥ ५ ॥
पुण्डरीकं परं धाम नित्यमक्षयमव्ययम् ।
तद्भावात्पुण्डरीकाक्षो दस्युत्रासाज्जनार्दनः ॥ ६ ॥

यतः सत्त्वान्न च्यवते यच्च सत्त्वान्न हीयते ।
सत्त्वतः सात्वतस्तस्मादार्षभाद्वृषभेक्षणः ॥ ७ ॥
न जायते जनित्राऽयमजस्तस्मादनीकजित् ।
देवानां स्वप्रकाशत्वाद्दमाद्दामोदरो विभुः ॥ ८ ॥

तत्र लयात् असौ तेषां हन्ता सूदनश्चेति मधुहा मधुसूदनश्चेति नामद्वयम् ॥ ४ ॥

[ लक्षा० ] विषुत्वाद्विष्णुरुच्यत इत्यत्र विष्लृ व्याप्तावितिधातोर्विषुः व्यापनशीलः ॥ ३ ॥ मौनाद्ध्यानाच्च योगाच्चेत्यत्र माङ् माने इतिधातोः मा इतिवाणी । ध्यै चिन्तायामिति धातोः धं ध्यानम् । वा गतिगन्धनयोरितिवचनात् वः ज्ञानयोगः । अर्शआदिभ्योऽच् इतिवत् तद्वान्माधवः । सर्वसत्त्वमयत्वात् मधुवत् सर्वसामर्थ्यसारसंग्रहरूपत्वाच्च माधव इति पूर्वेणान्वयः ॥ ४ ॥

[ नील० ] कृषिः कर्षत्यात्मनि सर्वं संहरतीति कृषिः सर्वप्रपञ्चबाधावधिभूतं सत्तामात्रं, भूवाचकः भवतीति भूः सत्ता तद्वाचकः कृषिरिति शब्दः । णश्च निर्वृतिः सुखं, विष्णुस्तद्भावयोर्धात्वर्थयोर्योगात् कृष्णः सन्मात्रानन्दरूपो भवतीत्यर्थः ॥ ५ ॥ पुण्डरीकं श्वेतपद्मं तत्सदृशं पुण्डरीकमिव पुण्डरीकं हृदयकमलं धाम वासस्थानं तत्र सन्नपि अक्षो न क्षीयते हन्यते वेति पुण्डरीकाक्षः । तथा च श्रुतिः ' नास्य जरयैतज्जीर्यति न वधेनास्य हन्यते ' इति हृत्पद्मदोषैर्जरानाशादिभिः परमात्मनोऽस्पृष्टत्वमाह । दस्युत्रासात् जनं दस्युजनं अर्दयति पीडयतीति जनार्दन इत्यर्थः ॥ ६ ॥ सत्त्वमबाधितत्वमस्यास्तीति सत्त्वतः "तपःसर्वगणस्तथाम्" इति स्मृतो मत्वर्थीयस्तप्रत्ययो बाहुलकात्सत्वशब्दादपि बोध्यः । अत्र सत्वेन अत्याज्यः सत्वं च यस्य अत्याज्यं स सत्वतः सत्वत एव सात्वतः राक्षसवायसादिवत्स्वार्थे तद्धितः । आर्षं वेदस्तेन भातीत्यार्षभ औपनिषदः पुरुषः उपनिषद्वेद्यत्वाद्योगात् वृषभेक्षणः । तथा चायं योगः वृषं धर्मं भासयतीति वृषभो वेदस्तदेव ईक्षणं चक्षुरिव ज्ञापकं यस्य सः वृषभेक्षण इति ॥ ७ ॥ न जायत इत्यजः अनीकजित्सेनाजित् कृष्णः देवानाम् इन्द्रियाणां मध्ये स्वप्रकाशत्वात् । ऋगतावित्यस्मादुत्पूर्वात् अप् उत् उत्कर्षेण ऋच्छति प्रकाशत इति उदरः दमोऽस्यास्तीति दामः दामश्चासावुदरश्चेति दामोदरः । दामादिति पाठे दम एव दामस्तस्मात् ॥ ८ ॥

[ अर्जु० ] कृषिर्भूवाचकः शब्दो नश्च निर्वृतिवाचकः । कृष्णस्तद्भावयोगाच्च कृष्णो भवति सात्वतः । कृषिः कृषिर्धातुः भूरात्मा तद्वाचकः प्रकृतिभागः । निर्वृतिवाचकः निर्वर्त्यते परिकल्प्यते भूरात्मा अनेनेति निर्वृतिः । नस्थानीयं भोगापवर्गप्रदं कर्म ज्ञानं च तद्वाचकः प्रत्ययभागः । तद्भावयोगाच्च, तयोः प्रकृतिप्रत्ययार्थयोः भोगापवर्गद्वारेण भवनं भावः तस्य योगाच्चकारायोजनाच्च जीवभावेन भोक्तृतया ईश्वरभावेन भोजयितृतया च । सात्वतः सत्वतकुलसंभवः कृष्णनामा कृष्णो भवतीत्यर्थः ॥ ५ ॥ पुण्डरीकं परं धाम नित्यमक्षयमव्ययम् । तद्भावात् पुण्डरीकाक्षो दस्युत्रासाज्जनार्दनः ॥ पुण्डरीकशब्दवाच्यं परं धाम अक्षयमस्मिन्निति पुण्डरीकाक्षः तद्भावात् तद्रूपत्वात् । दस्यून् जनान् अर्दयति त्रासयति हिनस्तीति वा जनार्दनः ॥ ६ ॥ यतः सत्यं न च्यवते यच्च सत्यान्न हीयते । सत्वतः सात्वतस्तस्मादार्षभाद्वृषभेक्षणः । सात्वतः सत्वतकुलसंभवः कृष्णः सात्वतस्तस्मादित्यर्थः । आर्षभात् श्रेष्ठयात् । शेषं निगदव्याख्यातम् ॥७॥ न जायते जनित्रा यदजस्तस्मादजीजनत् । देवानां स्वप्रकाशत्वाद् दमाद्दामोदरो विभुः । न जायते यद् यस्मात् अर्कादीन् जनयति च यस्मात् तस्मादजः । दमाद् दमनात् शेषं सुगमम् ॥ ८ ॥

[ सर्व० ] कृषिरिति शब्दो भूवाचकः । कृष्यते सस्यार्थमिति व्युत्पत्त्या तथाऽयं तदनन्तरो नकारो निर्वृतिवाचकः अव्ययं जनं विहाय इतराक्षरलोपात् । एवं च कृषिपदस्येकारलोपे सति कर्तर्येचप्रत्ययः । तथा चायं कृष्णः सात्वतकुलजः तद्भवनत्वाद्भूनिर्वृतेः भूमिलोकस्थप्राणिसुखस्य यो भावः उत्पादनं तत्कर्तृत्वात् कृष्णो भवति ॥ ५ ॥ पुण्डरीकं हृत्पुण्डरीकं धाम स्थानमस्य तच्च सर्वदाऽक्षयमविनाशि अव्ययमपक्षयरहितं तस्य भावात् सत्वात् पुण्डरीकमक्षयं धाम तदस्य सम्बन्धेन भवतीति पुण्डरीकाक्षः । जनान् दस्युजनानर्दयतीति जनार्दनः ॥ ६ ॥ न च्यवते नात्यंतं नश्यति सत्वात् बलात् । न हीयते ततोऽल्पशश्च्युतो न भवति । तद्भावात् तुल्यभावादुत्पादनाच्च (?) तस्मान्निमित्तत्रयात् सात्वतः । सत्व इति प्रकृतिभागस्त्रिष्वपि । आर्षभाद्योगात् ऋषभेक्षण ऋषभं श्रेष्ठमात्मानमीक्षत इति कर्तरि नन्द्यादेर्ल्युः ॥ ७ ॥ न जायते जनिता पिता तथाऽनीकजिदिति उभाभ्यां निमित्ताभ्यामजः । देवानां स्वप्रकाशत्वादुदर⋯तोरूपूर्वस्य ज्ञानार्थत्वात् । दमाद्दाम इति दामोदरः ॥ ८ ॥

६ ख. मक्षय्यमक्षरम् ।

हर्षात्सुखात्सुखैश्वर्याद्धृषीकेशत्वमश्नुते ।
बाहुभ्यां रोदसी बिभ्रन्महाबाहुरिति स्मृतः ॥ ९ ॥
अधो न क्षीयते जातु यस्माच्चस्मादधोक्षजः ।
नराणामयनाच्चापि ततो नारायणः स्मृतः ॥ १० ॥
पूरणात्सदनाच्चापि ततोऽसौ पुरुषोत्तमः ।
असतश्च सतश्चैव सर्वस्य प्रभवाप्ययात् ॥ ११ ॥
सर्वस्य च सदा ज्ञानात्सर्वमेतं प्रचक्षते ।
सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् ॥ १२ ॥
सत्यात्सत्यं तु गोविन्दस्तस्मात्सत्योऽपि नामतः ।
विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते ॥ १३ ॥
शाश्वतत्वादनन्तश्च गोविन्दो वेदनाद्गवाम् ।
अतत्त्वं कुरुते तत्त्वं तेन मोहयते प्रजाः ॥ १४ ॥
एवंविधो धर्मनित्यो भगवान्मधुसूदनः ।
आगन्ता हि महाबाहुरानृशंस्यार्थमच्युतः ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

---

[ लक्षा० ] कृषिर्भूवाचकः शब्द इत्यत्र कृष्यत इति कृषिर्भूः तस्यामपि णं सुखं यस्य स कृष्ण इत्यर्थः ॥ ५ ॥ पुण्डरीकं परं धामेत्यत्र पुण्डरीके हृत्पुण्डरीके अक्षः क्षयरहितः अक्षं क्षयरहितं पुण्डरीकं मुक्तानां हृत्पुण्डरीकं यस्य परं धामेति वा पुण्डरीकाक्ष इत्यर्थः ॥ ६ ॥ जनित्रा जनकेन ॥ ८ ॥

[ नील० ] हर्षादिति हृष्यत्यनेनेति हृषीकं वृत्तिसुखं सुखं स्वरूपानन्दः ईश ईशनवान् अतो हृषीकेशः ॥ ९ ॥ अधो न क्षीयते जातु इति विग्रहवाक्ये उत्तरपदावयवलोपेन अधोक्षजः सततोर्ध्वरूपः संसारधर्मेणास्पृष्ट इत्यर्थः ॥ १० ॥ पूरयतीति पुरुः सीदन्त्यस्मिन्निति सः तस्मात्पुरुषः स चासावुत्तमश्च पुरुषोत्तमः असतः कारणस्य सतः कार्यस्य प्रभवाप्ययात् उत्पत्तिप्रलयस्थानत्वात् ॥ ११ ॥ सत्ये धर्मे ॥ १२ ॥ सत्यात् धर्मात् तत्फलात् ब्रह्मलोकावधेरपि सत्यम् अबाधितम् अतः सत्योऽपि नामतः । विशेषेण स्नौति प्रस्नवते गच्छतीति विष्णुरित्यर्थः । एवं जयतीति जिष्णुः ॥ १३ ॥ शाश्वतत्वात् शश्वद्रूपत्वात् गवाम् इन्द्रियाणां वेदनात् लाभात् प्रकाशाद्वा गोविन्दः अतत्त्वं मिथ्याभूतं जगत् तत्त्वं सत्यमिव स्वीयसत्तास्फूर्तिप्रदानेन करोति तेन हेतुना लोकान्मोहयति ॥ १४ ॥ धर्मे नित्यं सन्निधानात् धर्मनित्यः आगन्ता आगमिष्यति आनृशंस्यार्थं कुरूणां क्षयो माभूदिति कृपां कर्तुम् ॥ १५ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे सप्ततितमोऽध्यायः ॥ ७० ॥

[ अर्जु० ] हर्षात्सुखात्सुखैश्वर्याद्धृषीकेशत्वमश्नुते । बाहुभ्यां रोदसी बिभ्रन्महाबाहुरिति स्मृतः । महत्यौ रोदस्यौ बहतीति महाबाहुः । शेषं सुबोधम् ॥ ९ ॥ अधो न क्षीयते जातु यस्मात् तस्मादधोक्षजः । नराणामयनाच्चापि ततो नारायणः स्मृतः । नराणां जीवानां वृन्दं नारं तदयनादाश्रयत्वात् अपिशब्दादापो नारा इत्याद्यपि बोध्यम ॥१०॥ पूरणात् सदनाच्चापि ततो वै पुरुषोत्तमः । असतः सतश्चैव सर्वस्य प्रभवाप्ययात् । पूरणात् सृष्टया सदनात् प्रलयेन । प्रभवन्त्यस्मात् प्रभवः । अपीयते लीयतेऽस्मिन्नित्यप्ययः ॥ ११ ॥ सर्वस्य च सदा ज्ञानात्सर्वमेतं प्रचक्षते । सत्ये प्रतिष्ठितः कृष्णः सत्यमत्र प्रतिष्ठितम् । सत्यात् सत्यं च गोविन्दस्तस्मात्सत्योपि नामतः । विष्णुर्विक्रमणाद्देवो जयनाज्जिष्णुरुच्यते । सर्वस्य ज्ञानान्निगनः । शेषमृज्वर्थम् ॥ १२ ॥ शाश्वतत्वादनन्तश्च गोविन्दो वेदनाद् गवाम् । अतत्वं कुरुते तत्वं तेन मोहयते प्रजाः । गवां वाचां गद्यपद्यादीनाम् । अतत्वं धर्मार्थरूपं तत्वं कुरुते ॥ १४ ॥ एवंविधो धर्मनित्यो भगवान् मधुसूदनः । आगन्ता हि महाबाहुरानृशंस्यार्थमच्युतः । एवं मोहजनकः धर्मनित्य-इति मकारधकारसामर्थ्यात् भगवान् देवकीपुत्रो मधुसूदनः । आनृशंस्यार्थमहिंसार्थमागन्ता स्थावरजङ्गमेषु प्रवेष्टा इत्याकारसमानवर्णत्वात् अकारस्य विगमेनाच्युतः कथ्यते । अन्यत्र प्रकारान्तरं बहुतरं च निर्वचनं नाम्नामनुसंधेयमिति ॥ १५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्ततितमोऽध्यायः ॥ ७० ॥

[ सर्व० ] हर्षाद्धृर्षिः सुखात्कं कमिति हि सुखनाम सुखैश्वर्यादीशः । मही इति छान्दसं रोदस्योर्नाम उर्वी महीति निघण्टुदर्शनात् । ते बाहुभ्यां बिभर्त्तीति महाबाहुः । इकाराकारश्छान्दसः ॥ ९ ॥ अधो न क्षीयते जातु अनादित्वात् । अध इति पदमस्त्येवाक्षोऽक्षयः जकारो जातुशब्दार्थे । नराणां जीवानामयनात् प्राप्तेः ॥ १० ॥ पूरणं सृष्टौ विश्वस्य करोतीति पुरुः । उप्रत्ययान्तं "बहुलं छन्दसि" इति कृततः सदनमेव सादरं प्रलये करोतीति सत् [ किरन्तं लिङ्गम् । तत्र ] 'अतिशायने तमप्' सकाराकारस्य चौकारः । असतोऽनित्यस्य प्रभवो जनकः । सतो नित्यस्याप्ययः अप्ययते प्राप्नोतीति व्युत्पत्त्या सदसच्च सर्वपदेनोच्यते । अतस्तच्छन्दस्तत्प्रभवाप्ययहेतावुपचारात् प्रवर्तते ॥ ११ ॥ एवं सर्वस्य ज्ञानादि-

---

१३ ख. विक्रमणादेव ॥ सप्ततितमोऽध्यायः ॥ ७० ॥

## एकसप्ततितमोऽध्यायः ७१

धृतराष्ट्रो भगवद्विषयिणीं । स्वरतिमाविष्करोति ॥ १ ॥

**धृतराष्ट्र उवाच—**

**चक्षुष्मतां वै स्पृहयामि सञ्जय**
**द्रक्ष्यन्ति ये वासुदेवं समीपे ।**
**विभ्राजमानं वपुषा परेण**
**प्रकाशयन्तं प्रदिशो दिशश्च ॥ १ ॥**
**ईरयन्तं भारतीं भारताना-**
**मभ्यर्चनीयां शंकरीं सृञ्जयानाम् ।**
**बुभूषद्भिर्ग्रहणीयामनिद्यां**
**परासूनामग्रहणीयरूपाम् ॥ २ ॥**
**समुद्यन्तं सात्त्वतमेकवीरं**
**प्रणेतारमृषभं यादवानाम् ।**
**निहन्तारं क्षोभणं शात्रवाणां**
**मुञ्चन्तं च द्विषतां वै यशांसि ॥ ३ ॥**
**द्रष्टारो हि कुरवस्तं समेता**
**महात्मानं शत्रुहणं वरेण्यम् ।**
**ब्रुवन्तं वाचमनृशंसरूपां**
**वृष्णिश्रेष्ठं मोहयन्तं मदीयान् ॥ ४ ॥**
**ऋषिं सनातनतमं विपश्चितं**
**वाचः समुद्रं कलशं यतीनाम् ।**
**अरिष्टनेमिं गरुडं सुपर्णं**
**हरिं प्रजानां भुवनस्य धाम ॥ ५ ॥**

---

त्यत्रापि निमित्ते उपचारः ॥ १२ ॥ सत्ये परब्रह्मणि प्रतिष्ठितः कामेन तस्मात्सत्यात् सत्यो नाम गोविंदो विष्णुरिति निमित्तान्तरं विक्रमणात् व्यापनात् ॥ १३ ॥ शाश्वतत्वाभिन्नत्वात् । गवां गोवर्धनधारणेन वेदनात् प्राप्तेः । अतत्वमसत्प्राक्सत्वमुपादानेन विषयजातं कुरुते तेन मोहयते तत्र स्थिरत्वादिभ्रमं जनयति ॥ १४ ॥ आनृशंस्यमहिंसा कुरुपाण्डवयोस्तदर्थम् ॥ १५ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां सप्ततितमोऽध्यायः ॥ ७० ॥

[ लक्षा० ] सत्याऽसत्ये चेत्यत्र सत् सत्ता याति नश्यतीति यं असत्ता तदुभयं यस्मात्स सत्य इत्यर्थः ॥ १३ ॥ गोविन्दश्चेतनादभूदित्यत्र चेतनात् ज्ञानात् । गम्लृ गताविति धातोः गां ज्ञानं विन्दतीति गोविन्द इत्यर्थः ॥ १४ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्ततितमोऽध्यायः ॥ ७० ॥

[ नील० ] चक्षुष्मतां भाग्याय स्पृहयामि धन्याश्चक्षुष्मन्त इत्यर्थः चक्षुष्मतां ज्ञानवतां वा परेण । चिन्मात्रेण वपुषा स्वरूपेण ॥ १ ॥ भारतानां पाण्डवानां भारतीं वाचम् ईरयंतम् अस्मत्सभायां कथयन्तं शंकरीं कल्याणकरीं बुभूषद्भिः ऐश्वर्यमिच्छद्भिः परासूनां मृतानाम् ॥२॥ उद्यन्तं प्रकटीभवन्तं देहरूपेणेत्यर्थात् शाश्वतं नित्यम् ॥ ३ ॥ वरेण्यं वरणीयम् ॥ ४ ॥ ऋषिं मुख्यं नारायणं विपश्चितम् आत्मज्ञम् । यतीनां संन्यासिनां कलशमिव कलशं करग्राह्यम् । समुद्रं योगमुद्रयोपेतम् अरिष्टः अहिंसितः नेमिः पादो यस्य सः अरिष्टनेमिरिति प्राञ्चः अरिष्टनेमिर्नामतः अहिंसितमर्यादः नेमिरिव नेमिर्मर्यादा । गरुडं जातितः । सुपर्णं शोभनपक्षं हरिं हर्तारम् ॥ ५ ॥

[ अर्जु० ] भारतानामर्चनीयां सृञ्जयानां शंकरीमित्यर्थः । परासूनां मुमूर्षूणामग्रहणीयरूपामनुपादेयाम् ॥ २ ॥ वाचः समुद्रं अनन्तवाक्प्रणेतृत्वात् । यतीनां परिव्राजकानां कलसमिव कलसं तृप्तिहेतुत्वेन तृष्णाछेदकत्वात् । अरिष्टनेमिनामानं गरुडं हरिं संहारकम् ॥ ५ ॥ यानसंधौ विषमाणि पदवाक्यान्यनेकशः । विवृतानि यथाप्रज्ञमवधार्याणि सूरिभिः ॥ इति यानसंधिः । सनत्सुजातीयानन्तरं मध्ये यानसन्धेरेव संजययाननाम्ना लिखनं प्रमादत एव यानसंधिसंज्ञा तु संजययानभगवद्यानयोर्मध्यवर्तित्वात् । ( विदुर ) प्रजागरसनत्सुजातीये च संजययानप्रसक्त एव तेन यानद्वयापेक्षया संधित्वमिति ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

[ सर्व० ] भारतानां मदायत्तानां सृंजयानां च समर्चनीयां पूज्यां शंकरीमुपशमार्थत्वात् । बुभूषद्भिर्भूतिमिच्छद्भिः । परासूनां परेषामरूपं (?) ॥ २ ॥ वाचः समुद्रं बहुवाचामाश्रयं यतीनां मुमुक्षूणां कलशमाश्रयमुपचारेण नेमिः पादौ चक्रवत् अन्तःस्थितत्वात् अरिष्टौ अहिंसितौ यस्येति तस्यारिष्टनेमिरिति नाम । गरुडरूपं सुपर्णं सुपक्षं प्रजानां हरिं हर्तारम् ॥ ५ ॥

[ लक्षा० ] परासूनामग्रहणीयरूपामित्यत्र परासुप्रेतसंस्थिता इत्यभिधानात् परासूनां प्राप्तमरणानां मुमूर्षूणामिति यावत् । तेषामग्रहणीयरूपाम् ॥ २ ॥ वाचःसमुद्रं कलशं यतीनामित्यत्र यतीनां वाचः समुद्रं समुद्रमिव

सहस्रशीर्षं पुरुषं पुराण-
मनादिमध्यान्तमनन्तकीर्तिम् ।
शुक्रस्य धातारमजं च नित्यं
परं परेषां शरणं प्रपद्ये ॥ ६ ॥

त्रैलोक्यनिर्माणकरं जनित्रं
देवासुराणामथ नागरक्षसाम् ।
नराधिपानां विदुषां प्रधान-
मिन्द्रानुजं तं शरणं प्रपद्ये ॥ ७ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकसप्ततितमोऽध्यायः ॥ ७१ ॥

समाप्तं यानसंधिपर्व ।

## ( अथ भगवद्यानपर्व ६ )

### द्विसप्ततितमोऽध्यायः ७२

कुरून्प्रति भगवद्यानस्योपोद्घातरूपः कृष्णयुधिष्ठिरयोः संवादः ॥ १ ॥

**वैशम्पायन उवाच—**

सञ्जये प्रतियाते तु धर्मराजो युधिष्ठिरः ।
अभ्यभाषत दाशार्हमृषभं सर्वसात्वताम् ॥ १ ॥
अयं स कालः संप्राप्तो मित्राणां मित्रवत्सल ।
न च त्वदन्यं पश्यामि यो न आपत्सु तारयेत् ॥२॥
त्वां हि माधवमाश्रित्य निर्भया मोघदर्पितम् ।
धार्तराष्ट्रं सहामात्यं स्वयं समनुयुङ्क्ष्महे ॥ ३ ॥
यथा हि सर्वास्वापत्सु पासि वृष्णीनरिन्दम ।
तथा ते पाण्डवा रक्ष्याः पाह्यस्मान्महतो भयात् ॥४॥

**श्रीभगवानुवाच—**

अयमस्मि महाबाहो ब्रूहि यत्ते विवक्षितम् ।
करिष्यामि हि तत्सर्वं यत्त्वं वक्ष्यसि भारत ॥ ५ ॥

**युधिष्ठिर उवाच—**

श्रुतं ते धृतराष्ट्रस्य सपुत्रस्य चिकीर्षितम् ।
एतद्धि सकलं कृष्ण सञ्जयो मां यदब्रवीत् ॥ ६ ॥
तन्मतं धृतराष्ट्रस्य सोऽस्यात्मा विवृतान्तरः ।
यथोक्तं दूत आचष्टे वध्यः स्यादन्यथा ब्रुवन् ॥७॥
अप्रदानेन राज्यस्य शान्तिमस्मासु मार्गति ।
लुब्धः पापेन मनसा चरन्नसममात्मनः ॥ ८ ॥

---

स्थितं, कलशं कलशमिव च स्थितं कैश्चिद्बहुवाचा स्तुत्यं केश्चिदल्पवाचा स्तुत्यमिति यावत् । अरिष्टनेमिम्, अरिष्टा अनष्टा नेमिः सुदर्शनचक्रं आज्ञाचक्रं वा यस्य तम् ॥ ५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे एकसप्ततितमोऽध्यायः ॥ ७१ ॥

[ नील० ] आदिः कारणम् । शुक्रस्य कर्मजन्यस्य बीजभूतस्य पुण्यादेः धातारं प्रतिभूरूपम् । परेषां विराडादीनां परं श्रेष्ठम् ॥ ६ ॥ निर्माणं रचना जनित्रं जनयितारम् ॥ ७ ॥

इति श्रीमहाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकसप्ततितमोऽध्यायः ॥ ७१ ॥

[ सर्व० ] आदिः कारणं मध्यः स्थितिहेतुः अन्तो विनाशकः तद्रहितम् । अत एव नित्यं जनित्रं जनयितारं परं पितरम् ॥ ६ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामेकसप्ततितमोऽध्यायः ॥ ७१ ॥

---

[ नील० ] संजये इति ॥ १ ॥ मोघं दर्पितं यस्य अनुयुङ्क्ष्महे प्रार्थयामहे ॥ ३ ॥ विवृतान्तरः प्रकाशितभावः ॥ ७ ॥

[ अर्जु० ] संजये प्रतियाते तु धर्मराजो युधिष्ठिर इत्यादेर्माधवः ससुतामात्यः सबलश्च पराभवमित्यन्तस्य भगवतः पृथिवीभारावतरणेच्छया प्रेरितं दैवं दुर्योधनादिषु मोहं [ मायां ] दर्पं च दृढतरमाधाय विकुर्वाणं कृष्णस्य मुनीनां भीष्मप्रभृतीनां च बहुना बहुधोपदिश्यमानेन पौरुषापरपर्यायेण न लङ्घनीयमिति तात्पर्यार्थः । ततो भगवान् कृष्णोऽपि बलवति दैवे निवेशितभावः स्वयमवाच्यो जातः ॥ १ ॥ मोघदर्पितं मोघमफलं दर्पितं यस्य अनुयुञ्ज्महे प्रार्थयामहे ॥ ३ ॥ संजयो धृतराष्ट्रस्यात्मा स्वरूपं विवृतान्तर आरोपितभेदः ॥ ७ ॥

[ सर्व० ] मोघदर्पितं वृथादर्पं वीर्याभावात् । अनुयुंज्महे प्रार्थयामहे ॥ ३ ॥ विवृतान्तरः प्रकाशितभावः सञ्जयो यदब्रवीदित्यन्वयः ॥ ७ ॥ शान्तिं वैरशान्तिम् । असंबन्धरूपम् ॥ ८ ॥

[ लक्षा० ] अहमस्मि महाबाहो इत्यत्र अस्मि तव

---

२ ख. संप्राप्तो मन्त्रिणां म जनार्दन ।

यत्तद्द्वादश वर्षाणि वनेषु द्युषिता वयम् ।
छद्मना शरदं चैकां धृतराष्ट्रस्य शासनात् ॥ ९ ॥
स्थाता नः समये तस्मिन् धृतराष्ट्र इति प्रभो ।
नाहास्म समयं कृष्ण तद्धि नो ब्राह्मणा विदुः ॥१०॥
गृद्धो राजा धृतराष्ट्रः स्वधर्मं नानुपश्यति ।
वश्यत्वात्पुत्रगृद्धित्वान्मन्दस्यान्वेति शासनम् ॥११॥
सुयोधनमते तिष्ठन् राजाऽस्मासु जनार्दन ।
मिथ्या चरति लुब्धः सन् चरन्हि प्रियमात्मनः ॥१२॥
इतो दुःखतरं किंनु यदहं मातरं ततः ।
संविधातुं न शक्नोमि मित्राणां वा जनार्दन ॥१३॥
काशिभिश्चेदिपाञ्चालैर्मत्स्यैश्च मधुसूदन ।
भवता चैव नाथेन पञ्च ग्रामा वृता मया ॥ १४ ॥
अविस्थलं वृकस्थलं माकन्दी वारणावतम् ।
अवसानं च गोविन्द किंचिदेवात्र पञ्चमम् ॥ १५ ॥
पञ्च नस्तात दीयन्तां ग्रामा वा नगराणि वा ।
वसेम सहिता येषु मा च नो भरता नशन् ॥ १६ ॥
न च तानपि दुष्टात्मा धार्तराष्ट्रोऽनुमन्यते ।
स्वाम्यमात्मनि मत्वाऽसावतो दुःखतरं नु किम् १७॥
कुले जातस्य वृद्धस्य परवित्तेषु गृद्ध्यतः ।
लोभः प्रज्ञानमाहन्ति प्रज्ञा हन्ति हता ह्रियम् ॥१८॥
ह्रीर्हता बाधते धर्मं धर्मो हन्ति हतः श्रियम् ।
श्रीर्हता पुरुषं हन्ति पुरुषस्याधनं वधः ॥ १९ ॥
अधनाद्धि निवर्तन्ते ज्ञातयः सुहृदो द्विजाः ।
अपुष्पादफलाद्वृक्षाद्यथा कृष्ण पतत्रिणः ॥ २० ॥
एतच्च मरणं तात यन्मत्तः पतितादिव ।
ज्ञातयो विनिवर्तन्ते प्रेतसत्त्वादिवासवः ॥ २१ ॥
नातः पापीयसीं कांचिदवस्थां शम्बरोऽब्रवीत् ।
यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ २२ ॥

---

वशेऽस्मि ॥ ५ ॥ सोऽन्यात्मा विवृतान्तर इत्यत्र सः धृतराष्ट्रः अन्यात्मा अन्यादृशे स्वपुत्रे आत्मा चित्तं यस्य स तथोक्तः ॥ ७ ॥

[ नील० ] छद्मना अज्ञातचर्यया ॥ ९ ॥ स्थाता स्थास्यति नः अस्माकं तस्मिन् चतुर्दशे वर्षे स्वं राज्यं गृह्णीतेत्यस्मिन् न अहास्म न त्यक्तवन्तो वयम् ॥ १० ॥ मातरं संविधातुं सम्यक् पोषयितुं ततः तत्रस्थामित्यर्थः । मित्राणां कर्मणि षष्ठी । मातुरिति पाठे अन्ततोऽन्येषां वणिक्प्रभृतीनां नागरिकाणां परित्यागेऽपि मातरं मित्राणि च विदुरादीनि संविधातुमिति प्राग्वत् ॥ १३ ॥ काशिभिः राजभिः नाथेन नाथवता भवदनुग्रहात् शक्तेनापीत्यर्थः ॥ १४ ॥ अवसीयते संस्थीयतेऽस्मिन्नित्यवसानं यावज्जीवनं वासस्थानम् ॥ १५ ॥ नः अस्माकं कृते भरताः भरतवंश्या भीष्मादयः मा नशन् मा नश्यन्तु ॥ १६ ॥ तानपि भरतानपि ॥ १७ ॥ कुले इति द्वाभ्यां गर्वजा दोषसंततिरुक्ता ॥ १८ ॥ द्विजाः अर्थिनः ॥ २० ॥ प्रेतसत्वात् प्रगतबुद्धेर्मृतादित्यर्थः ॥ २१ ॥

[ अर्जु० ] [ समं संधिम् । असममसदृशम् । ] निर्व्युषिता उषिताः । छद्मना गुप्त्या ॥ ९ ॥ स्थाता स्थास्यति समये नियमे तस्मिन् काले धृतराष्ट्र इति युधिष्ठिरः वेद । नाहास्म न त्यक्तवन्तः । समयं यत् तच्च नोऽस्माकम् ब्राह्मणा विदुरित्यर्थः ॥ १० ॥ गृद्धो लुब्धः । मन्दस्य मूढस्य दुर्योधनस्य ॥ ११ ॥ [ अन्ततः शेषतः । ] शं कल्याणं विधातुं कर्तुम् ॥ १३ ॥ अवसानं शेषम् ॥ १५ ॥ मानशन् मा नश्यन्तु ॥ १६ ॥ स्वाम्यं प्रभुत्वम् ॥ १७ ॥ कुले जातस्यापि बुधस्य परिपक्वज्ञानस्यापि लोभः परस्वजिघृक्षया प्रज्ञानमूहापोहज्ञानं ह्रियमकार्याभिवर्त्तकम् ॥ १८ ॥ मनो धर्मे स्वभावत इति लोभादिषु सर्वत्र योजनीयम् । अधनं वध इति प्रायशः पाठः ॥ १९ ॥ अस्वात् निर्धनात् । प्रेतसत्वात् गतान्तकालात् असवः प्राणाः ॥ २१ ॥ प्रातः श्वः ॥ २२ ॥

[ सर्व० ] छद्मनाऽज्ञातवासेन ॥ ९ ॥ तस्मिन् समये कृतनियमपालनानन्तरमस्माकं राज्यदानसमये प्रतिज्ञायामिति चिन्तयित्वा नाहास्म न त्यक्तवन्तः ॥ १० ॥ अंततोन्येषां परित्यागेऽपि शं क्षेमं मातुर्मित्राणां वा विधातुं कर्तुं न शक्नोमि ॥ १३ ॥ आत्मन्येव स्वाम्यं प्रभुत्वमस्तीति मत्वा ॥ १७ ॥ लोभे दोषमाह । कुले जातस्येति वृद्धस्य ज्ञानेन प्रज्ञानं दोषगुणज्ञानं पुरुषस्य स्वभावतः स्वदोषात् ॥ १८ ॥ श्रीर्हता पुरुषं हन्ति लोभेन ॥ १९ ॥ वित्तार्जनाभावे दोषमाह—अधनादिति ॥ २० ॥ प्रेतसत्वात् प्रगतमनसः ॥ २१ ॥

[ लक्षा० ] पुरुषश्च हतस्वतामित्यत्र अर्शवानर्श इतिवत् धनवानेव स्व इत्युच्यते । तस्य भावः स्वता तां हन्ति ॥ १९ ॥ अस्वतः अधनात् ॥ २० ॥ यदस्मात्पतितादिवेत्यत्र अस्मात् मदादिजनात् पतितात्पुरुषादिव एतच्च मरणम् ॥ २१ ॥ यच्च नैवोद्यतः प्रातर्भोजनं प्रतिदृश्यत इत्यत्र उद्यतः सन्नद्धः ॥ २२ ॥

---

१७ ख. सर्वमात्मनि संधाय ततो ।

धनमाहुः परं धर्मं धने सर्वं प्रतिष्ठितम् ।
जीवन्ति धनिनो लोके मृता ये त्वधना नराः ॥ २३ ॥
ये धनादपकर्षन्ति नरं स्वबलमास्थिताः ।
ते धर्ममर्थं कामं च प्रमथ्नन्ति नरं च तम् ॥ २४ ॥
एतामवस्थां प्राप्यैके मरणं वव्रिरे जनाः ।
ग्रामायैके वनायैके नाशायैके प्रवव्रजुः ॥ २५ ॥
उन्मादमेके पुष्यन्ति यान्त्यन्ये द्विषतां वशम् ।
दास्यमेके च गच्छन्ति परेषामर्थहेतुना ॥ २६ ॥
आपदेवास्य मरणात्पुरुषस्य गरीयसी ।
श्रियो विनाशस्तद्ध्यस्य निमित्तं धर्मकामयोः ॥ २७ ॥
यदस्य धर्म्यं मरणं शाश्वतं लोकवर्त्म तत् ।
समन्तात्सर्वभूतानां न तदत्येति कश्चन ॥ २८ ॥
न तथा बाध्यते कृष्ण प्रकृत्या निर्धनो जनः ।
यथा भद्रां श्रियं प्राप्य तया हीनः सुखैधितः ॥ २९ ॥
स तदाऽऽत्मापराधेन संप्राप्तो व्यसनं महत् ।
सेन्द्रान् गर्हयते देवानात्मानं च कथंचन ॥ ३० ॥
न चास्य सर्वशास्त्राणि प्रभवन्ति निबर्हणे ।
सोऽभिक्रुध्यति भृत्यानां सुहृदश्चाभ्यसूयति ॥ ३१ ॥
तत्तदा मन्युरेवैति स भूयः संप्रमुह्यति ।
स मोहवशमापन्नः क्रूरं कर्म निषेवते ॥ ३२ ॥
पापकर्मतया चैव संकरं तेन पुष्यति ।
संकरो नरकायैव सा काष्ठा पापकर्मणाम् ॥ ३३ ॥
न चेत्प्रबुध्यते कृष्ण नरकायैव गच्छति ।
तस्य प्रबोधः प्रज्ञैव प्रज्ञाचक्षुस्तरिष्यति ॥ ३४ ॥
प्रज्ञालाभे हि पुरुषः शास्त्राण्येवान्ववेक्षते ।
शास्त्रनिष्ठः पुनर्धर्मं तस्य ह्रीरङ्गमुत्तमम् ॥ ३५ ॥
ह्रीमान् हि पापं प्रद्वेष्टि तस्य श्रीरभिवर्धते ।
श्रीमान्स यावद्भवति तावद्भवति पूरुषः ॥ ३६ ॥
धर्मनित्यः प्रशान्तात्मा कार्ययोगवहः सदा ।
नाधर्मे कुरुते बुद्धिं न च पापे प्रवर्तते ॥ ३७ ॥
अह्रीको वा विमूढो वा नैव स्त्री न पुनः पुमान् ।
नास्याधिकारो धर्मेऽस्ति यथा शूद्रस्तथैव सः ॥ ३८ ॥

---

[ नील० ] धर्मं धर्मकारणं सर्वं यज्ञदानादि ये अधनास्ते मृता एव ॥ २३ ॥ एतां निर्धनताख्याम् एके नागरिकाः ग्रामाय कुग्रामवासार्थं वनायास्मदादयः नाशाय मरणाय ॥ २५ ॥ आपत्पदार्थमाह श्रियो विनाश इति तद्धि श्रीर्हि ॥ २७ ॥ धर्म्यं देहस्वभावात् प्राप्तं न तु दारिद्र्याद्यपराधजं मरणं तच्छाश्वतम् अनिमित्तमित्यर्थः समन्तात्सर्वत्र अपरिहार्यमिति शेषः । नात्येति नातिक्रामति ॥ २८ ॥ तदा संपत्काले आत्मापराधेन चित्तदोषेण रागादिना नात्मानं चेत्यस्य न चात्मानमित्यर्थः ॥ ३० ॥ अस्य व्यसनस्य निबर्हणे नाशनिमित्तम् ॥ ३१ ॥ तत्तदा सर्वदेत्यर्थः मन्युः क्रोधः स तद्वानेवेत्यर्थः मुह्यति कार्याकार्ये न जानाति ॥ ३२ ॥ एवं श्रिया युक्तानां नरकप्राप्तिमुक्त्वा तेषामुद्धारोपायमाह तस्येति । तस्य श्रीमतः अविद्यया निद्राणस्य प्रज्ञा विवेकः स एव प्रबोधो जागरणं यतः प्रज्ञाचक्षुः पुमान् तरिष्यति अविद्यामिति शेषः ॥ ३४ ॥ तरणे क्रममाह—प्रज्ञेति । धर्मं करोतीति शेषः । तस्य धर्मस्य ह्रीरकार्यकरणान्निवृत्तिहेतुश्चेतोवृत्तिविशेषः । ह्रीहीनेन कृतो धर्मोऽप्यधर्म एवेति भावः ॥ ३५ ॥ अह्रीकः तिर्यक्स्थावरतुल्यो न मनुष्य इत्यर्थः ॥ ३८ ॥

[ अर्जु० ] ग्रामाय भिक्षास्थानाय । वनाय कंदादिस्थानाय । नाशाय अपरिज्ञेयदेशान्तराय ॥ २५ ॥ आपत् धननाशः । श्रियो विनाशो धर्मकामयोश्च अस्य विनाशस्य तत् प्रसिद्धं निमित्तं हि पश्य ॥ २७ ॥ द्रव्यनाशकारणमभिधाय कालकृतमापदमाह यदस्येति । धर्म्यं कालधर्मादनपेतं शाश्वतमवश्यंभावित्वात् लोकवर्त्म सर्वजनसाधारणं समन्तात् सर्वैरपि दिव्यादिव्यैर्हेतुभिः ॥ २८ ॥ स नष्टार्थः व्यसनं धननाशम् ॥ ३० ॥ न प्रभवन्ति नातिक्रामन्ति । निगर्हणां निन्दाम् ॥ ३१ ॥ मन्युः शोकम् ॥ ३२ ॥ [ अनुयाय अनुगम्य । ] संकरं पापयोन्यादिविप्लवम् ॥ ३३ ॥ अह्रीको नैव स्त्री स्त्रीधर्माणां लज्जायाः प्राधान्यात्, विमूढो नैव पुमान् प्रज्ञाप्रधानत्वात् पुंसः, अनुभयत्वात् नपुंसकम् ॥ ३८ ॥

[ सर्व० ] ते धर्ममर्थं कामं च द्वेष्यस्य प्रमथ्नन्ति । नरं च द्वेष्यम् ॥ २४ ॥ एतां मदीयाम् । मरणं गृह एव ग्रामाय कचिदन्यत्र ग्रामे वस्तुं प्रवव्रजुः गृहान्निर्गताः नाशाय मरणाय ॥ २५ ॥ आपत् श्रियो विनाशरूपा मरणादतिरिच्यते तस्य तस्याः श्रियो हि यस्मादस्य पुरुषस्य धर्मकामयोर्निमित्तं यज्ञादिगृहादि च । तदित्यत्र पञ्चम्यर्थः । एवं च धर्मकामाभावादापन्नः परलोकेहलोकयोर्हतः ॥ २७ ॥ मरणातिरेकं दर्शयितुं मरणस्यानवद्यतामाह—यदस्येति । धर्म्यं मानुषधर्मप्राप्तं शाश्वत-

---

२६ ख. °मर्थहेतुभिः । ३३ ख. पापकर्मानुपापेन । ख. सावस्था पापं ।

३५ ख. शास्त्रं नित्यं पुनर्धर्म्यं ।

ह्रीमानवति देवांश्च पितॄनात्मानमेव च ।
तेनामृतत्वं व्रजति सा काष्ठा पुण्यकर्मणाम् ॥ ३९ ॥
तदिदं मयि ते दृष्टं प्रत्यक्षं मधुसूदन ।
यथा राज्यात्परिभ्रष्टो वसामि वसतीरिमाः ॥ ४० ॥
ते वयं न श्रियं हातुमलं न्यायेन केनचित् ।
अत्र नो यतमानानां वधश्चेदपि साधु तत् ॥ ४१ ॥
तत्र नः प्रथमः कल्पो यद्वयं ते च माधव ।
प्रशान्ताः समभूताश्च श्रियं तामश्नुवीमहि ॥ ४२ ॥
तत्रैषा परमा काष्ठा रौद्रकर्म क्षयोदया ।
यद्वयं कौरवान्हत्वा तानि राष्ट्राण्यवाप्नुमः ॥ ४३ ॥
ये पुनः स्युरसंबद्धा अनार्याः कृष्ण शत्रवः ।
तेषामप्यवधः कार्यः किं पुनर्ये स्युरीदृशाः ॥ ४४ ॥
ज्ञातयश्चैव भूयिष्ठाः सहाया गुरवश्च नः ।
तेषां वधोऽतिपापीयान्किं नु युद्धेऽस्ति शोभनम् ४५

पापः क्षत्रियधर्मोऽयं वयं च क्षत्रबन्धवः ।
स नः स्वधर्मोऽधर्मो वा वृत्तिरन्या विगर्हिता ॥४६॥
शूद्रः करोति शुश्रूषां वैश्या वै पण्यजीविकाः ।
वयं वधेन जीवामः कपालं ब्राह्मणैर्वृतम् ॥ ४७ ॥
क्षत्रियः क्षत्रियं हन्ति मत्स्यो मत्स्येन जीवति ।
श्वा श्वानं हन्ति दाशार्ह पश्य धर्मो यथागतः ४८॥
युद्धे कृष्ण कलिर्नित्यं प्राणाः सीदन्ति संयुगे ।
बलं तु नीतिमाधाय युध्ये जयपराजयौ ॥ ४९ ॥
नात्मच्छन्देन भूतानां जीवितं मरणं तथा ।
नाप्यकाले सुखं प्राप्यं दुःखं वापि यदूत्तम ॥५०॥
एको ह्यपि बहून् हन्ति घ्नन्त्येकं बहवोऽप्युत ।
शूरं कापुरुषो हन्ति अयशस्वी यशस्विनम् ॥५१ ॥
जयो नैवोभयोर्दृष्टो नोभयोश्च पराजयः ।
तथैवापचयो दृष्टो व्यपयाने क्षयव्ययौ ॥ ५२ ॥

मनादि । लोकवर्त्म लोकसाधारणं वर्त्म तत् । समन्तात् सर्वतः सर्वभूतानां मध्ये न कश्चिदत्येति अतिक्रामति ॥ २८ ॥ निगर्हणां निन्दाम् ॥ ३१ ॥ मन्युः शोकः ॥ ३२ ॥ सङ्करं धर्मसङ्करम् ब्राह्मणाः क्षत्रधर्ममित्यादि ॥ ३३ ॥ प्रज्ञा विवेकः ॥ ३५ ॥ तस्य धर्मस्य ॥ ३६ ॥ कार्ययोगः कर्तव्यो योगस्तद्द्रुहः न बुद्धिं कुरुते अतोऽन्यत्प्रवर्तते ॥ ३७ ॥ अह्रीको विमूढो भवति सत्क्रियाऽभावात् न स्त्रीति विमूढत्वान्न पुमान् ॥ ३८ ॥

[ नील० ] इदं ह्रीमत्त्वं ते त्वया मयि दृष्टम् ॥ ४० ॥ अत्र श्रीनिमित्तं नः अस्माकम् ॥ ४१ ॥ प्रथमः कल्पः मुख्यः पक्षः समभूताः निर्वैरत्वं गताः ॥ ४२ ॥ रौद्रकर्म रौद्रकर्मणां सुपां सुलुगिति सप्तम्याश्च(?) लुक् । क्षयोदया क्षयपूर्वक उदयो यस्यां सा रौद्रकर्मणां परमा काष्ठेति संबन्धः ॥ ४३ ॥ असंबद्धाः अबान्धवाः अवधः वधविरुद्धं पालनम् ईदृशा इति बान्धवा आर्या अशत्रवश्च ये तेषामवधः कार्य इति किमाश्चर्यमित्यर्थः ॥ ४४ ॥ तदेवाह— ज्ञातय इति । भूयिष्ठाः अतिमहान्तः ॥ ४५ ॥ कपालं भिक्षापात्रम् ॥ ४७ ॥ यथा येन प्रकारेण आगतः कुलपरंपरया प्राप्तस्तं पश्येति योजना ॥ ४८ ॥ बलमिति । नीतिमेव बलं कृत्वा युध्ये योत्स्ये जयपराजयौ तु आत्मच्छन्दे स्वेच्छया न भवतः तथा तद्वत् भूतानां जीवितं मरणं स्वेच्छया न स्तः ॥ ४९ ॥ पराजयभयाद्व्यपयानेऽपि अपचयः क्षयव्ययौ च दृष्टौ भवत एव अपचयो दीनता क्षयो मरणम् । तत्र हेतुः व्ययः द्रव्यादेर्नाशः ॥ ५२ ॥

[ अर्जु० ] अवति रक्षति ॥३९॥ अलं शक्ताः ॥४१॥ कल्पः पक्षः । प्रशान्ताः त्यक्तक्रोधाः । संभूताः समतां प्राप्ताः । अश्नुवीमहि प्राप्नुयाम ॥ ४२ ॥ ईदृशाः संबन्धिन आर्याश्च ॥ ४४ ॥ क्षत्रबन्धवो निन्दितक्षत्रियाः ॥ ४६ ॥ कपालमति तत्सदृशपात्रम् ॥ ४७ ॥ यस्य धर्मो यथागतः यस्य वर्गस्य धर्मो वेदलक्षणः यथा यं प्रकारं गतः प्राप्तः पश्येति पठित्वा वाक्यार्थं कर्म वदन्ति ॥ ४८ ॥ कलिः कलहः चतुर्थयुगमवतारो वा । बलं सेना नीतिमात्राय नीतिरक्षणाय । हठे दैवे बले योगोत्कर्षे वा ॥४९॥ नात्मच्छन्देन न स्वेच्छया ॥ ५० ॥ व्यपयाने पलायने ॥५२॥

[ सर्व० ] तदेवं श्रियो ग्रहणे लोभदोषमुक्त्वा तदभावे च मरणमभिधाय पूर्वपक्षमल्पदोषत्वाद्गृह्णाति । ते वयमिति ॥ ४१ ॥ प्रथमः कल्पः प्रथमः प्रकारः । समभूतास्तुल्यसुखदुःखाः । असंरब्धा बान्धवा ईदृशा इत्यन्वयः ॥ ४२ ॥ कपालं भिक्षापात्रम् ॥ ४७ ॥ यथागतो यं प्रकारं प्राप्तः ॥ ४८ ॥ बलं सैन्यं नीतिमात्राय नीतिशास्त्रोक्तपालनाय हवे युद्धे उत्पाद्याभावे दैव इति यावत् ॥ ४९ ॥ तथैवोभयोर्दृष्टः अपचयो हानिः किन्तु व्यपयाने पलायने एवं क्षयो नाशो व्ययश्च दृष्टौ ॥५२॥

[ लक्षा० ] तानि राष्ट्राण्यधीमहीत्यत्र तानि राष्ट्राणि प्राप्य वेदशास्त्राण्यधीमहीति योजना ॥ ४३ ॥ भवे जयपराजयावित्यत्र भूप्राप्तावात्मनेपदमिति वचनात् भवे प्राप्नोमि ॥ ४९ ॥ व्यपयाने क्षयव्ययावित्यत्र व्यपयाने पलायने ॥ ५२ ॥

४३ ख. चरमा । ४९ ख. बलं तु नीति मात्राय हवे । ५१ ख. का पुरुषो हेटि । ५२ ख. जयश्चैवोभयोर्दृष्ट उभं । ख. तथैवापयनेर्दृष्टोऽप्यपयाने तयेकयोः ।

सर्वथा वृजिनं युद्धं को घ्नन्न प्रतिहन्यते ।
हतस्य च हृषीकेश समौ जयपराजयौ ॥ ५३ ॥
पराजयश्च मरणान्मन्ये नैव विशिष्यते ।
यस्य स्याद्विजयः कृष्ण तस्याप्यपचयो ध्रुवम् ॥ ५४ ॥
अन्ततो दयितं घ्नन्ति केचिदप्यपरे जनाः ।
तस्याङ्गबलहीनस्य पुत्रान् भ्रातॄनपश्यतः ॥ ५५ ॥
निर्वेदो जीविते कृष्ण सर्वतश्चोपजायते ।
ये ह्येव धीरा ह्रीमन्त आर्याः करुणवेदिनः ॥ ५६ ॥
त एव युद्धे हन्यन्ते यवीयान्मुच्यते जनः ।
हत्वाऽप्यनुशयो नित्यं परानपि जनार्दन ॥ ५७ ॥
अनुबन्धश्च पापोऽत्र शेषश्चाप्यवशिष्यते ।
शेषो हि बलमासाद्य न शेषमनुशेषयेत् ॥ ५८ ॥
सर्वोच्छेदे च यतते वैरस्यान्तविधित्सया ।
जयो वैरं प्रसृजति दुःखमास्ते पराजितः ॥ ५९ ॥
सुखं प्रशान्तः स्वपिति हित्वा जयपराजयौ ।
जातवैरश्च पुरुषो दुःखं स्वपिति नित्यदा ॥ ६० ॥
अनिर्वृत्तेन मनसा ससर्प इव वेश्मनि ।
उत्सादयति यः सर्वं यशसा स विमुच्यते ॥ ६१ ॥
अकीर्तिं सर्वभूतेषु शाश्वतीं स नियच्छति ।
नहि वैराणि शाम्यन्ति दीर्घकालधृतान्यपि ॥ ६२ ॥
आख्यातारश्च विद्यन्ते पुमांश्चेद्विद्यते कुले ।
न चापि वैरं वैरेण केशव व्युपशाम्यति ॥ ६३ ॥
हविषाग्निर्यथा कृष्ण भूय एवाभिवर्धते ।
अतोऽन्यथा नास्ति शान्तिर्नित्यमन्तरमन्ततः ॥ ६४ ॥
अन्तरं लिप्समानानामयं दोषो निरन्तरः ।
पौरुषेयो हि बलवानाधिर्हृदयबाधनः ॥ ६५ ॥
तस्य त्यागेन वा शान्तिर्मरणेनापि वा भवेत् ।
अथवा मूलघातेन द्विषतां मधुसूदन ॥
फलनिर्वृत्तिरिद्धा स्यान्न नृशंसतरं भवेत् ॥ ६६ ॥

---

[ नील० ] विजयोऽप्यजयः पराजय एव इष्टजननाशादित्याह—यस्येति ॥ ५४ ॥ दयितं पुत्रादि हे अङ्ग बलहीनस्य जातिबलहीनस्य ॥ ५५ ॥ यवीयान् कनिष्ठः अनुशयः पश्चात्तापः ॥ ५७ ॥ अनुबन्धो दोषोत्पादः स च पापः कष्टप्रदः शेषः शत्रोः शेषं स्वस्य ॥ ५८ ॥ अनिर्वृत्तेन अस्वस्थेन ॥ ६१ ॥ अत इति यतः अन्तरं छिद्रं नित्यम् अपरिहार्यम् अतो हेतोः अन्ततोऽन्यथा स्वस्य शत्रोर्वा नाशं विना शान्तिर्नास्ति ॥ ६४ ॥ अयं दोषः नाशाख्यः अन्तत इत्येतद्व्याचष्टे पौरुषेय इति सार्धेन ॥ ६५ ॥ द्विषतां मूलघातेन फलनिर्वृत्तिः निष्कण्टकराज्यप्राप्तिः इद्धा प्रदीप्ता स्यात् तावता च नृशंसतरं न भवेत् नृशंसं तु भवेदेवेत्यर्थः । अतः शम एव श्रेयानिति भावः ॥ ६६ ॥

[ अर्जु० ] हतस्य मारितस्य समौ उभयफलसंबन्धात् ॥ ५३ ॥ दयितं प्रियम् । अजावरः पुत्रः ॥ ५५ ॥ निर्वेदो वैराग्यम् ॥ ५६ ॥ यवीयान् कनिष्ठः । अनुशयः पश्चात्तापः ॥ ५७ ॥ अनुबन्धो वैरप्रवाहः पापहेतुत्वात् शेषस्य मृतेभ्योऽवशिष्टस्य न शेषमवशेषयेत् निःशेषं कुर्यात् संभावने लिङ् अन्ततः शेषात् ॥ ६४ ॥ पौरुषेयः पुरुषसंबन्धी बलवान् सर्वाभिभावकः । आधिर्मनस्तापः ॥६५॥ तस्य वैरस्य शान्तिर्मनसो निर्वृत्तिः तया बलवत्प्रतिकारदृष्टिकृतया मूलघातेन वैरनिदानघातेन निर्वृत्तिः निष्पत्तिः इद्धा पुष्टा । ( न ) नृशंसतरं भवेत् बहुमारणाभावात् ॥ ६६ ॥

[ सर्व० ] घ्नन् अवश्यं हन्यते ॥ ५३ ॥ तेन यदि दैवात् कृतस्तस्य पराजयः जीवत एव ॥ ५४ ॥ अङ्गं सैन्यम् ॥ ५५ ॥ [ अवरमुत्तमम् ] यवीयान् हीनः ॥ ५७ ॥ पापानुबन्धः जेतुर्दुःखहेतुरुत्तरोत्तरप्रवाहः । शेषस्य युद्धे शेषितस्य परसैन्यस्य । अनुबन्ध्यमेवाह-शेषो हीति । न शेषं जेतुः शत्रोः ॥ ५८ ॥ अशेषावस्थाने दोषमाह उत्सादयतीति ॥ ६१ ॥ शेषावस्थाने दोषमाह—नहीति ॥ ६२ ॥ आख्यातारः पितृवधादेरज्ञातस्य कथयितारः विद्यन्ते भवन्ति पुमान् वीरश्चेद्विद्यते ॥ ६३ ॥ अतः शेषनाशादन्यथा शेषस्थापनेन अन्ततः शेषान्नित्यमात्मनोऽन्तरं छिद्रं संभवति ॥ ६४ ॥ अथ स्वयं तस्यान्तरं लिप्समानं तथाप्ययं दोषो वैरवृद्धिरूपः । तदाह पौरुषेयः पुरुषप्राप्तियोगः स्मरणजः त्यागेन वैरत्यागेन तस्याधिशान्तिनिर्वृत्त्या मनसो मरणेन तस्य मनोविच्छेदरूपत्वात् ॥ ६५ ॥ मूलघातेन वैरनिःशेषणेन फलनिर्वृत्तित्वादि ॥ ६६ ॥

[ लक्षा० ] हत्वाप्यनुशय इत्यत्र यस्य परान् हत्वापि नित्यमनुशयः अनुशयः अनुकूलः शयः आशयो बुद्धिः । तत्पुत्रादिषु आनुकूल्यकरणम् ॥ ५७ ॥ अस्य अनुबन्धः प्रलापः । तत्काले स्नेहवार्ता शेषः शत्रुशेषश्च अवशिष्यते ।

---

५४ ख. यश्च स्याद्विजयी कृष्ण । ५७ ख. सर्वशश्चोपजायते । ५८ ख. मन्यते जनः । ख. °मवशेषयेत् । ५९ ख. सर्वोच्छेदेन । ६२ ख. निगच्छति । ६४ ख. शान्तिर्निवृत्त्या मनसोऽपि वा । ६५ ख. नास्ति । ६६ ख. तन्नृशंस° ।

या तु त्यागेन शान्तिः स्यात्तद्दते वध एव सः ।
संशयाच्च समुच्छेदाद्द्विषतामात्मनस्तथा ॥ ६७ ॥
न च त्यक्तुं तदिच्छामो न चेच्छामः कुलक्षयम् ।
अत्र या प्रणिपातेन शान्तिः सैव गरीयसी ॥ ६८ ॥
सर्वथा यतमानानामयुद्धमभिकाङ्क्षताम् ।
सान्त्वे प्रतिहते युद्धं प्रसिद्धं नापराक्रमः ॥ ६९ ॥
प्रतिघाते तु सान्त्वस्य दारुणं संप्रवर्तते ।
तच्छुनामिव संपाते पण्डितैरुपलक्षितम् ॥ ७० ॥
लाङ्गूलचालनं क्ष्वेडा प्रतिवाचो विवर्तनम् ।
दन्तदर्शनमारावस्ततो युद्धं प्रवर्तते ॥ ७१ ॥
तत्र यो बलवान् कृष्ण जित्वा सोऽत्ति तदामिषम् ।
एवमेव मनुष्येषु विशेषो नास्ति कश्चन ॥ ७२ ॥
सर्वथा त्वेतदुचितं दुर्बलेषु बलीयसाम् ।
अनादरो विरोधश्च प्रणिपाती हि दुर्बलः ॥ ७३ ॥
पिता राजा च वृद्धश्च सर्वथा मानमर्हति ।
तस्मान्मान्यश्च पूज्यश्च धृतराष्ट्रो जनार्दन ॥ ७४ ॥
पुत्रस्नेहश्च बलवान् धृतराष्ट्रस्य माधव ।
स पुत्रवशमापन्नः प्रणिपातं प्रहास्यति ॥ ७५ ॥

---

न शेषमवशेषयेदित्यत्र शेषं स्वपितृहन्तुः शेषम् ॥ ५८ ॥ दोषःवैराख्यदोषः । निरन्तरः निरवकाशः ॥ ६५ ॥ तस्य त्यागेन वा शान्तिरित्यत्र त्यागेन देशत्यागेन प्राणत्यागेन कलहकारणीभूतवित्तत्यागेन वा । फलं निवृत्तिरर्थस्येत्यत्र । अर्थस्य स्वस्मादपहृतवित्तस्य निवृत्तिः ॥ ६६ ॥

[ नील० ] त्यागेन राज्यस्येति शेषः । तद्दते राज्यं विना द्विषतां संशयात् किं शत्रवश्छिद्रे प्रहरिष्यन्ति उत उपेक्षां करिष्यन्त्येवंरूपात् आत्मनः भ्रष्टश्रीकस्य सद्यः समुच्छेदात् नाशसंभवात् अतो राज्यत्यागो न युक्त इति भावः ॥ ६७ ॥ सिद्धान्तमाह—न चेति ॥ ६८ ॥ सर्वथा सामदानभेदैः राज्यार्थं यतमानानां युद्धं प्रसिद्धम् अवश्यं कर्तव्यमित्यर्थः न तु अपराक्रमः क्लीबत्वं युक्त इति शेषः ॥ ६९ ॥ दारुणं युद्धं तच्छुनामिव निन्द्यमित्यर्थः ॥७०॥ दृष्टान्तं विवृणोति लाङ्गूलेति । अत्र लाङ्गूलेन ध्वज उपमीयते, क्ष्वेडा ध्वनिकौटिल्यं परस्परछिद्रान्वेषणं च, प्रतिवाचः परस्परनिन्दा स्वप्रशंसा च, विवर्तनं भूमौ लुण्ठनं, दन्तदर्शनं मुखस्य व्यादानेन, आरावः भषणं पक्षे सिंहनादः ॥ ७१ ॥ सर्वथेति अनादरे राज्यस्याप्राप्तिः युद्धे कुलक्षयः प्रणिपाते तु दौर्बल्यप्रसिद्धिः ॥ ७३ ॥ अन्त्यः पक्षोऽपि न सेत्स्यतीत्याह—पितेति द्वाभ्याम् ॥ ७४ ॥ प्रहास्यति न स्वीकरिष्यति ॥ ७५ ॥

[ अर्जु० ] त्यागेन वैरमूलत्यागेन शान्तिरेव निवृत्तिः तद्दते इष्टां फलनिष्पत्तिं विना शान्तिरपि वध एव स इति वधविशेषणम् । वैरे सति दोषमाह संशयादिति । संशयात् द्विषतां चात्मनो वा द्वयोरेवातिसंशयः ॥ ६७ ॥ तत् फलबाहुल्यं प्रणिपातेन अञ्जलिबन्धादिना गुरुतमदैन्यात् । सर्वथा परोक्तप्रकारानुमत्यापि ॥ ६८ ॥ अयुद्धं युद्धानारम्भं सान्त्वे साम्नि अपराक्रमं सान्त्वप्रयोक्तुः पराक्रमहीनम् ॥६९॥ सान्त्वस्य प्रतिघाते अशक्तोऽयमिति धिया एकस्य दारुणाकारेण प्रवृत्तत्वात् संपाते सामवर्जिते ॥७०॥ लाङ्गूलचालनं दैन्यसूचनं, क्ष्वेडा याञ्चाध्वनिः प्रतिरोधः प्रतिकूलवासनं, विवर्त्तनं भूमौ लुण्ठनं सव्यासव्यकायपरिवर्त्तनं वा, दन्तदर्शनं युद्धाय शस्त्रदर्शनम्, आरावः परतर्जनाय गर्जनमिति शेषः ॥ ७१ ॥ सर्वथा सर्वप्रकारम् एतल्लाङ्गूलचालनादिकं दुर्बलेषु बलीयसामनुचितं तेषां दैन्यास्पदत्वात् बलवत्तया प्रसिद्धत्वात् दुर्बलेषु पुनर्लाङ्गूलचालनादि दैन्यसूचकेन विरोधे सति प्रणिपाती प्रणिपतनशीलः दुर्बलः हि यस्मात् ॥ ७३ ॥

[ सर्व० ] तद्दते तं वधमृते वधः महतोऽप्यसौ हत इत्यर्थः । समुच्छेदाप्रवृत्तावप्यात्मनो द्विषतां समुच्छेदः संशयात् संशयेन यदि कथञ्चित्स्यात् ॥ ६७ ॥ तद्राज्यम् ॥ ६८ ॥ सान्त्वे प्रतिहते कुपिते यद्युद्धं तदपराक्रमम् । (प्राक्) प्रवृत्तेरेव पराक्रमत्वात् । पराक्रमस्यान्त्यप्रयोगोप्यपराक्रमत्वादकीर्तिकर इत्याशयः ॥ ६९ ॥ दारुणं युद्धं यत्प्रवर्तते तत्र शुनां संपाते युद्धे इव सान्त्वनानिमित्तत्वमुपलक्षितं दृष्टम् । यथा तत्र सान्त्वना सान्त्वप्रवृत्तिस्तथात्रापीति श्वप्रवृत्तिरेवेति भावः ॥ ७० ॥ क्ष्वेडा प्रीत्या वीरः प्रतिवीरः प्रतिपक्षकुक्कुररवानुत्कृत्य वीरः विवर्तनम् भूमिलुंठनम् । ननु दन्तानां दर्शनम् । छायादर्शनम् । आरावः परुषशब्दकरणम् ॥ ७१ ॥ नान्त्वसान्त्वमनुपाय एवेत्यत आह । सर्वथेति । प्रणिपाती दुर्बल इति प्रसिद्धमेव । अतो अनादरविरोधे युद्धसान्त्वे इति यावत् । अत एतदुचितं बलीयसां दुर्बलेषु । एतदित्यत्र विरोधानादरस्य वक्ष्यमाणत्वात् । अज्ञातविशेषतया नपुंसकत्वम् । तस्मादस्माकमपि बलवत्तया प्रसिद्धिस्तेषु सान्त्वं युक्तमित्यर्थः ॥ ७३ ॥ तथा च हेत्वंतरमाह पितेति ॥ ७४ ॥

---

६७ ख. संशयश्च । ६९ ख. प्रसिद्धमपराक्रम् । ७१ ख. प्रतिरावो ।

७५ ख. पुत्रवशगः सान्त्वं प्राणिपातं च हा° ।

तत्र किं मन्यसे कृष्ण प्राप्तकालमनन्तरम् ।
कथमर्थाच्च धर्माच्च न हीयेमहि माधव ॥ ७६ ॥
ईदृशेऽत्यर्थकृच्छ्रेऽस्मिन्कमन्यं मधुसूदन ।
उपसंप्रष्टुमर्हामि त्वामृते पुरुषोत्तम ॥ ७७ ॥
प्रियश्च प्रियकामश्च गतिज्ञः सर्वकर्मणाम् ।
को हि कृष्णास्ति नस्त्वादृक् स वै निश्चयवित्सुहृत्७८

**वैशम्पायन उवाच—**

एवमुक्तः प्रत्युवाच धर्मराजं जनार्दनः ।
उभयोरेव वामर्थे यास्यामि कुरुसंसदम् ॥ ७९ ॥
शमं तत्र लभेयं चेद्युष्मदर्थमहापयन् ।
पुण्यं मे सुमहद्राजंश्चरितं स्यान्महाफलम् ॥ ८० ॥
मोचयेयं मृत्युपाशात्संरब्धान् कुरुसृञ्जयान् ।
पाण्डवान् धार्तराष्ट्रांश्च सर्वां च पृथिवीमिमाम् ८१॥

**युधिष्ठिर उवाच—**

न ममैतन्मतं कृष्ण यत्त्वं यायाः कुरून्प्रति ।
सुयोधनः सूक्तमपि न करिष्यति ते वचः ॥ ८२॥
समेतं पार्थिवं क्षत्रं दुर्योधनवशानुगम् ।
तेषां मध्यावतरणं तव कृष्ण न रोचये ॥ ८३ ॥
नहि नः प्रीणयेद्द्रव्यं न देवत्वं कुतः सुखम् ।
न च सर्वामरैश्वर्यं तव द्रोहेण माधव ॥ ८४ ॥

**श्रीभगवानुवाच—**

जानाम्येतां महाराज धार्तराष्ट्रस्य पापताम् ।
अवाच्यास्तु भविष्यामः सर्वलोके महीक्षिताम्८५॥
न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः ।
क्रुद्धस्य संयुगे स्थातुं सिंहस्येवेतरे मृगाः ॥ ८६ ॥
अथ चेत्ते प्रवर्तेत मयि किंचिदसांप्रतम् ।
निर्दहेयं कुरून्सर्वानिति मे धीयते मतिः ॥ ८७ ॥
न जातु गमनं पार्थ भवेत्तत्र निरर्थकम् ।
अर्थप्राप्तिः कदाचित्स्यादन्ततो वाप्यवाच्यता ८८॥

**युधिष्ठिर उवाच—**

यत्तुभ्यं रोचते कृष्ण स्वस्ति प्राप्नुहि कौरवान् ।
कृतार्थं स्वस्तिमन्तं त्वां द्रक्ष्यामि पुनरागतम्॥८९॥
विष्वक्सेन कुरून् गत्वा भरतान् शमयन्प्रभो ।
यथा सर्वे सुमनसः सह स्याम सुचेतसः ॥ ९० ॥
भ्राता चासि सखा चासि बीभत्सोर्मम च प्रियः ।
सौहृदेनाविशङ्क्योऽसि स्वस्ति प्राप्नुहि भूतये९१॥
अस्मान्वेत्थ परान्वेत्थ वेत्थार्थान्वेत्थ भाषितुम् ।
यद्यदस्मद्धितं कृष्ण तत्तद्वाच्यः सुयोधनः ॥ ९२ ॥
यद्यधर्मेण संयुक्तमुपपद्येद्धितं वचः ।
तत्तत्केशव भाषेथाः सान्त्वं वा यदि वेतरत् ॥९३॥

इति श्रीमहाभारते उद्योगपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

[ लक्षा० ] [ पुनः । स्वात्मानं । प्रत्यागमनं ] तच्छुनामिव गोपात इत्यत्र । गोपाते गोर्भरणे ॥ ७० ॥

[ नील० ] ते त्वत्संबन्धिनि मयि चेत् कुरुकृतम् असांप्रतम् अयुक्तं वधबन्धादि प्रवर्तेत तदा निर्दहेयं कुरूनित्यन्वयः ॥ ८७ ॥ कुरून्प्रत्वा तथा वदेति शेषः ॥९०॥ यदीति अधर्मेण सान्त्वं नो राज्यार्धार्हाणां पञ्च ग्रामदानेन । अधर्मेण इतरत् द्यूतेनैव राज्यप्रत्यादानं । बृहदश्वादक्षहृदयस्य प्राप्तत्वात् । यद्यद्धर्मेणेति सत्यं वेति च पाठे त्वनृतस्य धर्मसंयुक्तत्वमहिंसाप्राधान्येन बोध्यम् ॥ ९३ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

[ अर्जु० ] उपसंप्रष्टुमेकान्ते प्रष्टुम् ॥ ७७ ॥ वां युवयोः ॥ ७९ ॥ याया गच्छेः । सूक्तं शोभनं वचः समेतं मिलितं पार्थिवं पृथिव्या ईश्वरं क्षत्रं क्षत्रियजातीयम् ॥ ८३ ॥ पापतां बन्धनचिन्ताहेतोः अवाच्याः अपवादशून्याः ॥ ८५ ॥ असांप्रतमयुक्तं यथा भवति । धीयते पुष्यते ॥ ८७ ॥ अन्ततः शेषे ॥ ८८ ॥ सुमनसः प्रीतमनसः स्याम भवेम ॥ ९० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

[ सर्व० ] धीयते उत्पद्यते । धातूनामनेकार्थत्वात् ॥ ८७ ॥ यद्रोचते तद्ब्रूहीत्यर्थः ॥ ८९ ॥ सौहृदेन परेषु मृदुना ॥ ९१ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतौ व्याख्यायां द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

[ लक्षा० ] न देवत्वं कुतः सुखमित्यत्र देवत्वं राजत्वं तव रोधेन निषेधेन निर्बन्धकरणेनापीत्यर्थः ॥ ८४ ॥ अवाच्यास्तु भविष्याम इत्यत्र अवाच्याः अनिन्द्याः ॥८५॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षाभरणे द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

७९ ख. कुरु ससंदि । ८७ ख. प्रवर्तेरन् । ख. मनः । ९० ख. शमये ॥ द्विसप्ततितमोऽध्यायः ॥ ७२ ॥

## त्रिसप्ततितमोऽध्यायः ७३

दुर्योधनः प्रागिव संप्रत्यपि त्वय्यपकारशीलो जीवंस्ते राज्यं दातुं नालमिति परैः सहाहं युद्धमेवाशंसे, तदहं तत्र गत्वा राज्ञां मध्ये तव गुणान्दुर्योधनस्य च व्यतिक्रमान्कीर्तयिष्यामि येन सर्वे ते त्वां धर्मात्मानं संप्रतिपद्य धृतराष्ट्रं दुर्योधनं च गर्हयिष्यन्तीति श्रीकृष्णस्य युधिष्ठिरं प्रति वचनम् ॥ १ ॥

**श्रीभगवानुवाच—**

सञ्जयस्य श्रुतं वाक्यं भवतश्च श्रुतं मया ।
सर्वं जानाम्यभिप्रायं तेषां च भवतश्च यः ॥ १ ॥
तव धर्माश्रिता बुद्धिस्तेषां वैराश्रया मतिः ।
यदयुद्धेन लभ्येत तत्ते बहुमतं भवेत् ॥ २ ॥
न चैवं नैष्ठिकं कर्म क्षत्रियस्य विशाम्पते ।
आहुराश्रमिणः सर्वे न भैक्षं क्षत्रियश्चरेत् ॥ ३ ॥
जयो वधो वा संग्रामे धात्रा दिष्टः सनातनः ।
स्वधर्मः क्षत्रियस्यैष कार्पण्यं न प्रशस्यते ॥ ४ ॥
नहि कार्पण्यमास्थाय शक्या वृत्तिर्युधिष्ठिर ।
विक्रमस्व महाबाहो जहि शत्रून्परन्तप ॥ ५ ॥
अतिगृद्धाः कृतस्नेहा दीर्घकालं सहोषिताः ।
कृतमित्राः कृतबला धार्तराष्ट्राः परन्तप ॥ ६ ॥
न पर्यायोऽस्ति यत्साम्यं त्वयि कुर्युर्विशाम्पते ।
बलवत्तां हि मन्यन्ते भीष्मद्रोणकृपादिभिः ॥ ७ ॥
यावच्च मार्दवेनैतान्राजन्नुपचरिष्यसि ।
तावदेते हरिष्यन्ति तव राज्यमरिन्दम ॥ ८ ॥
नानुक्रोशान्न कार्पण्यान्न च धर्मार्थकारणात् ।
अलं कर्तुं धार्तराष्ट्रास्तव काममरिन्दम ॥ ९ ॥
एतदेव निमित्तं ते पाण्डवास्तु यथा त्वयि ।
नान्वतप्यन्त कौपीनं तावत्कृत्वाऽपि दुष्करम् ॥ १० ॥
पितामहस्य द्रोणस्य विदुरस्य च धीमतः ।
ब्राह्मणानां च साधूनां राज्ञश्च नगरस्य च ॥ ११ ॥
पश्यतां कुरुमुख्यानां सर्वेषामेव तत्त्वतः ।
दानशीलं मृदुं दान्तं धर्मशीलमनुव्रतम् ॥ १२ ॥
यत्त्वामुपधिना राजन् द्यूते वञ्चितवाँस्तदा ।
न चापत्रपते तेन नृशंसः स्वेन कर्मणा ॥ १३ ॥
तथाशीलसमाचारे राजन्मा प्रणयं कृथाः ।
वध्यास्ते सर्वलोकस्य किं पुनस्तव भारत ॥ १४ ॥
वाग्भिस्त्वप्रतिरूपाभिरतुदत्त्वां सहानुजम् ।
श्लाघमानः प्रहृष्टः सन् भाषते भ्रातृभिः सह ॥ १५ ॥

---

[ नील० ] संजयस्येति ॥ १ ॥ नैष्ठिकं कर्म यावज्जीवं ब्रह्मचर्यं पारिव्राज्यं च विहितमिति शेषः ॥ ३ ॥ कार्पण्यं ग्रामपञ्चकं देहीति दीनवचनम् ॥ ४ ॥ वृत्तिः जीविका कर्तुमिति शेषः ॥ ५ ॥ अतिगृद्धाः अत्यंतलुब्धाः ॥ ६ ॥ पर्याय उपायः यद्येन बलवत्तां स्वस्येति शेषः ॥ ७ ॥ अनुक्रोशात् भवत्सु कृपातः कार्पण्यात् स्वस्य दैन्यात् अलं कर्तुं पूर्णं कर्तुं न समर्थाः ॥ ९ ॥ निमित्तम् अशमे कारणं हे पाण्डव त्वयि कौपीनं धारयति सति ते कौरवाः नान्वतप्यन्त पश्चात्तापं न कृतवन्तः तावत् वनवासादि ॥ १० ॥ पितामहादीननादृत्य उपधिना छलेन त्वां द्यूते वञ्चितवानिति सार्धद्वयसंबन्धः ॥ ११ ॥ अतुदत् पीडितवान् ॥ १५ ॥

[ अर्जु० ] नैष्ठिकं विरोधकम् ॥ ३ ॥ कार्पण्यं कृपणता ॥ ४ ॥ युद्धेन विना तृणमपि न प्रयच्छन्तीत्यत्र हेतुमाह अति गृद्धा इति । अतिगृद्धाः अतिलुब्धाः कृतस्नेहा राजसु सहोषिताः राजभिः ॥ ६ ॥ पर्यायो हेतुः क्रमो वा ॥ ७ ॥ अनुक्रोशात् पश्चात्तापात् लोकापवादाद्वा कार्पण्याद् दयायाः दीनताया वा नालं न समर्थाः ॥ ९ ॥ निमित्तं वैरकरणं एतदेव पाण्डवाः पाण्डोर्हिता भीष्मादयः यथा येन प्रकारेणानुभूताः त्वयि त्वयेति यावत् एते चेद् युधिष्ठिरस्य तस्माद् युधिष्ठिरादेव भविष्यति वैरकारणम् । कौपीनमकार्यं तावत् तथाप्रकारम् ॥ १० ॥ पश्यतामित्यनादरे षष्ठी । पश्यतोऽनादृत्येत्यर्थः । अनुव्रतमनुगतं धृतराष्ट्रस्येति शेषः ॥ १२ ॥ उपाधिना छद्मना ॥ १३ ॥ प्रणयं स्नेहम् ॥ १४ ॥ सकनीयसं कनीयःसहितं त्वामिति शेषः ॥ श्लाघमान आत्मनमिति शेषः ॥ १५ ॥

[ सर्व० ] नैष्ठिकं निष्ठा निबर्हणम् जीवनाभावस्ततोऽन्यदनिबर्हणम् ॥ ३ ॥ कृतस्नेहो राजभिः सह ॥ ६ ॥ पर्यायः प्राप्तियुक्तिः ॥ ७ ॥ नानुक्रोशात् क्षमया युद्धेऽपि कार्पण्याभावः । अलं समर्थः ॥ ९ ॥ एतदेव निमित्तं कारणं यत्तव कामं यो ब्रूयात् तं न करिष्यति दुर्योधनोऽतो युद्धेनैव साध्यः । तथा ? श्रीस्वायतमित्येतत् प्रतिसन्धानेन ते पाण्डवा भीमादयः तावद्दुष्करं वनवासादि कृत्वा यावत्कौपीनम् त्वयि नानुतप्यन्ति त्वयि न कुपिताः । युद्धस्य तद्दुःखहेतोरवश्यकर्तव्यादित्याशयः ॥ १० ॥ अनुव्रतमनुमतम् ॥ १२ ॥ उपधिना छद्मना ॥ १३ ॥

[ लक्षा० ] न पर्यायोस्तीत्यत्र 'अयपय' गतौ गत्यर्था ज्ञानार्था इति वचनात् पर्यायो निश्चयः । तव दुष्करम-

---

१० ज. नानुतप्यान्ति । १२ ख. धर्मकाममनु° ।

एतावत्पाण्डवानां हि नास्ति किंचिदिह स्वकम् ।
नामधेयं च गोत्रं च तदप्येषां न शिष्यते ॥ १६ ॥
कालेन महता चैषां भविष्यति पराभवः ।
प्रकृतिं ते भजिष्यन्ति नष्टप्रकृतयो मयि ॥ १७ ॥
दुःशासनेन पापेन तदा द्यूते प्रवर्तिते ।
अनाथवत्तदा देवी द्रौपदी सुदुरात्मना ॥ १८ ॥
आकृष्य केशे रुदती सभायां राजसंसदि ।
भीष्मद्रोणप्रमुखतो गौरिति व्याहृता मुहुः ॥ १९ ॥
भवता वारिताः सर्वे भ्रातरो भीमविक्रमाः ।
धर्मपाशनिबद्धाश्च न किंचित्प्रतिपेदिरे ॥ २० ॥
एताश्चान्याश्च परुषा वाचः स समुदीरयन् ।
श्लाघते ज्ञातिमध्ये स्म त्वयि प्रव्रजिते वनम् ॥ २१ ॥
ये तत्रासन्समानीतास्ते दृष्ट्वा त्वामनागसम् ।
अश्रुकण्ठा रुदन्तश्च सभायामासते सदा ॥ २२ ॥
न चैनमभ्यनन्दंस्ते राजानो ब्राह्मणैः सह ।
सर्वे दुर्योधनं तत्र निन्दन्ति स्म सभासदः ॥ २३ ॥
कुलीनस्य च या निन्दा वधो वाऽमित्रकर्शन ।
महागुणो वधो राजन्न तु निन्दा कुजीविका ॥ २४ ॥
तदैव निहतो राजन्यदैव निरपत्रपः ।
निन्दितश्च महाराज पृथिव्यां सर्वराजभिः ॥ २५ ॥
ईषत्कार्यो वधस्तस्य यस्य चारित्रमीदृशम् ।
प्रस्कुन्देन प्रतिस्तब्धश्छिन्नमूल इव द्रुमः ॥ २६ ॥
वध्यः सर्प इवानार्यः सर्वलोकस्य दुर्मतिः ।
जह्येनं त्वममित्रघ्न मा राजन्विचिकित्सिथाः ॥ २७ ॥
सर्वथा त्वत्क्षमं चैतद्रोचते च ममानघ ।
यत्त्वं पितरि भीष्मे च प्रणिपातं समाचरेः ॥ २८ ॥
अहं तु सर्वलोकस्य गत्वा छेत्स्यामि संशयम् ।
येषामस्ति द्विधा भावो राजन्दुर्योधनं प्रति ॥ २९ ॥
मध्ये राज्ञामहं तत्र प्रातिपौरुषिकान्गुणान् ।
तव संकीर्तयिष्यामि ये च तस्य व्यतिक्रमाः ॥ ३० ॥
ब्रुवतस्तत्र मे वाक्यं धर्मार्थसहितं हितम् ।
निशम्य पार्थिवाः सर्वे नानाजनपदेश्वराः ॥ ३१ ॥
त्वयि संप्रतिपत्स्यन्ते धर्मात्मा सत्यवागिति ।
तस्मिंश्चाधिगमिष्यन्ति यथा लोभादवर्तत ॥ ३२ ॥
गर्हयिष्यामि चैवैनं पौरजानपदेष्वपि ।
वृद्धबालानुपादाय चातुर्वर्ण्ये समागते ॥ ३३ ॥
शमं वै याचमानस्त्वं नाधर्मं तत्र लप्स्यसे ।
कुरून्विगर्हयिष्यन्ति धृतराष्ट्रं च पार्थिवाः ॥ ३४ ॥
तस्मिन्लोकपरित्यक्ते किं कार्यमवशिष्यते ।
हते दुर्योधने राजन्यदन्यत्क्रियतामिति ॥ ३५ ॥

पराधं कृत्वापि त्वयि नान्वतप्यन्तेति यावत् ॥ ७ ॥ तत्र ते तव तत् मार्दवमेव निमित्तमित्यन्वयः ॥ १० ॥ नाध्यमानः प्रहृष्टात्मेत्यत्र नाध्यमानः याच्यमानः भाषते यत्किंचिद्भाषते ॥ १५ ॥

[ नील० ] प्रकृतिं पश्चतां, मयि मत्समीपे नष्टा प्रकृतिः शौर्यादिरूपः स्वभावो येषाम् ॥ १७ ॥ गौरिव सर्वभोग्येत्युपहासो गौर्गौरिति ॥ १९ ॥ ईषत्कार्यः अनायाससाध्यः प्रस्कुन्देन चक्राकारया वेदिकया । ' कुन्दश्चक्रभ्रमे मेघे ' इति विश्वः पारस्करादित्वात् सुट् । प्रस्कन्देनेति पाठे मध्यमशिफयेति प्राञ्चः ॥ २६ ॥ द्विधाभावः अयं साधुरसाधुर्वेति संशयः ॥ २९ ॥ प्रातिपौरुषिकान् सर्वपुरुषसाधारणान् ॥ ३० ॥ हते निन्द्यतया नष्टप्राये ॥ ३५ ॥

[ अर्जु० ] न शिष्यते न शेषं प्राप्स्यति ॥ १६ ॥ प्रकृतिस्थे प्रकृतिर्भिक्षां चरन्तं नष्टप्रकृतयोऽप्रजत्वात् ॥ १७ ॥ ईषत्कार्यः अयत्नसाध्यः प्रस्कन्दनं जनाघातः तेन प्रतिस्तब्धोऽर्वाक्पतितः ॥ २६ ॥ मा विचिकित्सथाः मा संशयं कृथाः [ दित्वाभावः संशयः ] ॥ २७ ॥ प्रातिपौरुषिकान् प्रतिपुरुषसंबन्धिनः असामान्यानित्यर्थः । व्यतिक्रमाः अपराधाः ॥ ३० ॥ संप्रपत्स्यन्ते निश्चयं करिष्यन्ते ॥ ३२ ॥ हते लोकापवादेन ॥ ३५ ॥

[ सर्व० ] प्रकृतिं भजिष्यन्ति प्रकृतौ लयं यास्यन्ति नाशं यान्तीति यावत् । ते पाण्डवाः नष्टप्रकृतयो नष्टस्वभावाः ॥ १७ ॥ ईषत्कार्योऽयत्नसाध्यः । प्रस्कन्देन मध्यशिफया पारस्करादिः । प्रतिष्टब्धः पतितः छिन्नश्छिन्नमूल इत्यर्थः । तदितरपार्श्वशिफः यथाऽल्पप्रयत्नश्छेद्यः ॥ २६ ॥ द्वैधीभावो युक्तमेतस्य चरितं न वेति ॥ २९ ॥ प्रातिपौरुषिकान् इतरपुरुषसाधारणान् ॥ ३० ॥ हते लोकपरियोगेन हतप्राये ॥ ३५ ॥

[ लक्षा० ] ईषत्कारो वधस्तस्येत्यत्र ईषत्कारः तुच्छीकरणम् । प्रस्कन्दनः प्रतिस्तब्ध इत्यत्र प्रस्कन्दनः प्रकर्षेण रेतःस्कन्दनशीलः स्त्रैण इत्यर्थः ॥ २६ ॥ मा विचिकित्सथाः संशयं मा कुरु ॥ २७ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

१७ ख. नष्टप्रकृतयो जनाः । १८–२० श्लोका न सन्ति । २२ ख. तदा । २४ ख. कुलीनस्य च निन्दा च वधश्चामित्रकर्शन ख. कुजीवितम् । २५ ख. तदैव हि हतो । २६ ख. प्रस्कम्भनप्रतिस्त° । ३३ ख. गर्हयिष्यन्ति ते चैनं ।

यात्वा चाहं कुरून्सर्वान् युष्मदर्थमहापयन् ।
यतिष्ये प्रशमं कर्तुं लक्षयिष्ये च चेष्टितम् ॥ ३६ ॥
कौरवाणां प्रवृत्तिं च गत्वा युद्धाधिकारिकाम् ।
निशम्य विनिवर्तिष्ये जयाय तव भारत ॥ ३७ ॥
सर्वथा युद्धमेवाहमाशंसामि परैः सह ।
निमित्तानि हि सर्वाणि तथा प्रादुर्भवन्ति मे॥३८॥
मृगाः शकुन्ताश्च वदन्ति घोरं
हस्त्यश्वमुख्येषु निशामुखेषु ।
घोराणि रूपाणि तथैव चाग्नि-
र्वर्णान्बहून्पुष्यति घोररूपान् ॥ ३९ ॥
मनुष्यलोकक्षयकृत्सुघोरो
नो चेदनुप्राप्त इहान्तकः स्यात् ।
शस्त्राणि यन्त्रं कवचा रथांश्च
नागान् हयांश्च प्रतिपादयित्वा ॥ ४० ॥
योधाश्च सर्वे कृतनिश्चयास्ते
भवन्तु हस्त्यश्वरथेषु यत्ताः ।
सांग्रामिकं ते यदुपार्जनीयं
सर्वं समग्रं कुरु तन्नरेन्द्र ॥ ४१ ॥
दुर्योधनो नह्यलमद्य दातुं
जीवंस्तवैतन्नृपते कथंचित् ।
यत्ते पुरस्तादभवत्समृद्धं
द्यूते हृतं पाण्डवमुख्य राज्यम् ॥ ४२ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

## चतुःसप्ततितमोऽध्यायः ७४

कौरवान्प्रति यास्यते कृष्णाय भरतेषु दयमानस्य भीमस्य वचनं दुर्योधनोऽत्यन्तममर्षी नोग्रमुक्तः शमं गृह्णीयादिति मृदु ब्रूया अपि वयमधश्चरा भूत्वा तमनुयास्यामः मास्म भरता नशन्निति ॥ १ ॥

**भीम उवाच—**

यथा यथैव शान्तिः स्यात्कुरूणां मधुसूदन ।
तथा तथैव भाषेथा मा स्म युद्धेन भीषयेः ॥ १ ॥
अमर्षी जातसंरम्भः श्रेयोद्वेषी महामनाः ।
नोग्रं दुर्योधनो वाच्यः साम्नैवैनं समाचरेः ॥ २ ॥
प्रकृत्या पापसत्त्वश्च तुल्यचेतास्तु दस्युभिः ।
ऐश्वर्यमदमत्तश्च कृतवैरश्च पाण्डवैः ॥ ३ ॥
अदीर्घदर्शी निष्ठूरी क्षेप्ता क्रूरपराक्रमः ।
दीर्घमन्युरनेयश्च पापात्मा निकृतिप्रियः ॥ ४ ॥
म्रियेतापि च भज्येत नैव जह्यात्स्वकं मतम् ।
तादृशेन शमः कृष्ण मन्ये परमदुष्करः ॥ ५ ॥
सुहृदामप्यवाचीनस्त्यक्तधर्मा प्रियानृतः ।
प्रतिहन्त्येव सुहृदां वाचश्चैव मनांसि च ॥ ६ ॥

---

[ नील० ] यात्वा गत्वा ॥ ३६ ॥ निशम्य आलोच्य ॥ ३७ ॥ चेदिहान्तकोऽनुप्राप्तो नो स्यात्तर्हि एतन्न स्यादिति शेषः यन्त्रं गोलकोत्क्षेपणं कवचा कवचानि वर्माणि सुपां सुलुगिति सुपो डादेशः नान्तपाठे पुंस्त्वमार्षं प्रतिपादयित्वा सज्जीकृत्य ॥ ४० ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

[ अर्जु० ] यात्वा गत्वा चेष्टितं जयपराजयलिङ्गम् ॥ ३६ ॥ हस्त्यश्वरथप्रभृतीनां प्रवृत्तिं वार्त्तां युद्धाधिकारिणींयुद्धप्रवर्त्तिनीम् चेद् यदि पत्रं वाहनं रथादिव्यतिरिक्तम् ॥ ४० ॥ अलं शक्तः ॥ ४२ ॥

इति श्रीमन्ममहाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

[ सर्व० ] युद्धाधिकारिकां युद्धावताराम् ॥ ३७ ॥ नचेन्न यदीहान्तक आगतस्तदा नैतद्भवतीति शेषः । एवं भुदेलोष्ठादिक्षेपक प्रतिपादयित्वा सज्जीकृत्य ॥ ४० ॥

इति महाभारते उद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

[ नील० ] यथेति शान्तिबाधक भयं तेषां मा कुर्वित्याह—तथेति ॥ १ ॥ महामनाः स्तब्धः समाचरेः प्रागपि समाहितवानसि ॥ २ ॥ निष्ठूरी निष्ठुरवाक् क्षेप्ता निन्दकः अनेयः शिक्षयितुमयोग्यः ॥ ४ ॥ अवाचीनो विपरीतः ॥ ६ ॥

[ अर्जु० ] नोग्रं न निष्ठुरं समाचरेः ब्रूयाः ॥ २ ॥ अनेयोऽविधेयः ॥ ४ ॥ मन्ये वाक्यार्थः कर्म ॥ ५ ॥ आवाचीनः विपरीतः ॥ ६ ॥

[ सर्व० ] समाचरेः व्यवहरसि ॥ २ ॥ निष्ठूरी

---

३७ ख. निशाम्य । ४० ख. मनुष्यलोकक्षपणोथ घो॰ । ख. कवचायुधानि ॥ त्रिसप्ततितमोऽध्यायः ॥ ७३ ॥

२ ख. नित्यसंरब्धः श्रेयोद्वेषी दुरात्मवान् । ६ ख. निहन्ति चैव ।

स मन्युवशमापन्नः स्वभावं दुष्टमास्थितः ।
स्वभावात्पापमभ्येति तृणैश्छन्न इवोरगः ॥ ७ ॥
दुर्योधनो हि यत्सेनः सर्वथा विदितस्तव ।
यच्छीलो यत्स्वभावश्च यद्बलो यत्पराक्रमः ॥ ८ ॥
पुरा प्रसन्नाः कुरवः सहपुत्रास्तथा वयम् ।
इन्द्रज्येष्ठा इवाभूम मोदमानाः सबान्धवाः ॥ ९ ॥
दुर्योधनस्य क्रोधेन भरता मधुसूदन ।
धक्ष्यन्ते शिशिरापाये वनानीव हुताशनैः ॥ १० ॥
अष्टादशेमे राजानः प्रख्याता मधुसूदन ।
ये समुच्चिच्छिदुर्ज्ञातीन् सुहृदश्च सबान्धवान् ॥ ११ ॥
असुराणां समृद्धानां ज्वलतामिव तेजसा ।
पर्यायकाले धर्मस्य प्राप्ते कलिरजायत ॥ १२ ॥
हैहयानां मुदावर्तो नीपानां जनमेजयः ।
बहुलस्तालजङ्घानां कृमीणामुद्धतो वसुः ॥ १३ ॥
अजबिन्दुः सुवीराणां सुराष्ट्राणां रुषर्द्धिकः ।
अर्कजश्च बलीहानां चीनानां धौतमूलकः ॥ १४ ॥
हयग्रीवो विदेहानां वरयुश्च महौजसाम् ।
बाहुः सुन्दरवंशानां दीप्ताक्षाणां पुरूरवाः ॥ १५ ॥
सहजश्चेदिमत्स्यानां प्रवीराणां वृषध्वजः ।
धारणश्चन्द्रवत्सानां मुकुटानां विगाहनः ॥ १६ ॥
शमश्च नन्दिवेगानामित्येते कुलपांसनाः ।
युगान्ते कृष्ण संभूताः कुले कुपुरुषाधमाः ॥ १७ ॥
अप्ययं नः कुरूणां स्याद्युगान्ते कालसंभृतः ।
दुर्योधनः कुलाङ्गारो जघन्यः पापपूरुषः ॥ १८ ॥
तस्मान्मृदु शनैर्ब्रूया धर्मार्थसहितं हितम् ।
कामानुबद्धं बहुलं नोग्रमुग्रपराक्रम ॥ १९ ॥
अपि दुर्योधनं कृष्ण सर्वे वयमधश्चराः ।
नीचैर्भूत्वाऽनुयास्यामो मा स्म नो भरता नशन् २०
अप्युदासीनवृत्तिः स्याद्यथा नः कुरुभिः सह ।
वासुदेव तथा कार्यं न कुरूननयः स्पृशेत् ॥ २१ ॥
वाच्यः पितामहो वृद्धो ये च कृष्ण सभासदः ।
भ्रातॄणामस्तु सौभ्रात्रं धार्तराष्ट्रः प्रशाम्यताम् ॥ २२ ॥
अहमेतद्ब्रवीम्येवं राजा चैव प्रशंसति ।
अर्जुनो नैव युद्धार्थी भूयसी हि दयार्जुने ॥ २३ ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

निष्ठुरवाक् क्षेप्ता आक्रोशकः ॥ ४ ॥ अवाचीनो विपरीतः ॥ ६ ॥

[ नील० ] ज्ञातीन् सगोत्रान् सुहृदः मित्राणि बान्धवान् श्यालश्वशुरादीन् ॥ ११ ॥ पर्यायकाले धर्मान्तकाले ॥ १२ ॥ कामानुबन्धबहुलं बाहुल्येन तस्य चित्तानुसारि ॥ १९ ॥ अनयः कुलक्षयकृतो दोषः ॥ २१ ॥ प्रशंसति शममेवेति शेषः ॥ २३ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

[ अर्जु० ] दुष्टं दुष्टत्वम् । खिन्नो व्यथितः ॥ ७ ॥ इन्द्रज्येष्ठाः ज्येष्ठोऽधिकाः ॥ ९ ॥ ज्ञातीन् स्वगोत्रान् । सुहृदः स्नेहपात्राणि । बान्धवान् सपिण्डान् ॥ ११ ॥ पर्यायकाले यत्र काले दानवान् वर्जयित्वा धर्मो गतः दानवा निर्मर्यादा यत्राऽभवन् इत्यर्थः ॥ १२ ॥ कुलपांसनाः कुलदूषणाः । युगान्ते प्रलये ॥ १७ ॥ मास्म नशन् मा नश्यन्तु ॥ २० ॥ उदासीनवृत्तिः स्वामित्वाभावः ॥ २१ ॥ अहं सभायां एतद्ब्रवीमि । यत् भ्रातॄणां सौभ्रात्रमस्तु धार्त्तराष्ट्रः प्रशाम्यताम् । हि अर्जुने भूयसी दया स च न युद्धार्थी ॥ २२ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

[ सर्व० ] ज्ञातीन्सपिण्डान् । सुहृदो मित्राणि । बान्धवान् बन्धुसंबन्धयुक्तान् ॥ ११ ॥ पर्यायकालेऽसुरेभ्यो धर्मस्य पर्याये गमनकाले ॥ १२ ॥ युगान्ते सत्ययुगान्ते ॥ १७ ॥ अप्युदासीनवृत्तिः स्यान्मैत्री तावन्माऽस्तु । उदासीनाऽपि वृत्तिः यथा कुरुभिः सह स्यात्तथा ॥ २१ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

---

१३ ख. कृमीणां पुद्गको । १४ ख. सुराष्ट्राणां कुशाद्विपः । ख. बलाहानां । १७ ख. कुलेषु पुरुषाधमाः । १९ ख. शनैरेनं ब्रूयाद्धर्मार्थं सहितम् । २० ख. मारमत्तो मा ॥ चतुःसप्ततितमोऽध्यायः ॥ ७४ ॥

## पञ्चसप्ततितमोऽध्यायः ७५

श्रीकृष्णेन संतेजनार्थं भीमस्योपालम्भः ॥ १ ॥

**वैशम्पायन उवाच—**

एतच्छ्रुत्वा महाबाहुः केशवः प्रहसन्निव ।
अभूतपूर्वं भीमस्य मार्दवोपहितं वचः ॥ १ ॥
गिरेरिव लघुत्वं तच्छीतत्वमिव पावके ।
मत्वा रामानुजः शौरिः शार्ङ्गधन्वा वृकोदरम् ॥२॥
संतेजयंस्तदा वाग्भिर्मातरिश्वेव पावकम् ।
उवाच भीममासीनं कृपयाऽभिपरिप्लुतम् ॥ ३ ॥

**श्रीभगवानुवाच—**

त्वमन्यदा भीमसेन युद्धमेव प्रशंससि ।
वधाभिनन्दिनः क्रूरान् धार्तराष्ट्रान्मिमर्दिषुः ॥४॥
न च स्वपिषि जागर्षि न्युब्जः शेषे परन्तप ।
घोरामशान्तां रुषतीं सदा वाचं प्रभाषसे ॥ ५ ॥
निःश्वसन्नग्निवर्णेन संतप्तः स्वेन मन्युना ।
अप्रशान्तमना भीम सधूम इव पावकः ॥ ६ ॥
एकान्ते निःश्वसन् शेषे भारार्त इव दुर्बलः ।
अपि त्वां केचिदुन्मत्तं मन्यन्ते तद्विदो जनाः ॥७॥
आरुज्य वृक्षान्निर्मूलान् गजः परिरुजन्निव ।
निघ्नन्पद्भिः क्षितिं भीम निष्टनन्परिधावसि ॥ ८ ॥
नास्मिन् जनेऽभिरमसे रहः क्षियसि पाण्डव ।
नान्यं निशि दिवा चापि कदाचिदभिनन्दसि ॥९॥
अकस्मात्स्मयमानश्च रहस्यास्से रुदन्निव ।
जान्वोर्मूर्धानमाधाय चिरमास्से प्रमीलितः ॥१०॥
भ्रुकुटिं च पुनः कुर्वन्नोष्ठौ च विदशन्निव ।
अभीक्ष्णं दृश्यसे भीम सर्वं तन्मन्युकारितम् ॥११॥
यथा पुरस्तात्सविता दृश्यते शुक्रमुच्चरन् ।
यथा च पश्चान्निर्मुक्तो ध्रुवं पर्येति रश्मिवान् ॥१२॥
तथा सत्यं ब्रवीम्येतन्नास्ति तस्य व्यतिक्रमः ।
हन्ताऽहं गदयाऽभ्येत्य दुर्योधनममर्षणम् ॥ १३ ॥
इति स्म मध्ये भ्रातॄणां सत्येनालभसे गदाम् ।
तस्य ते प्रशमे बुद्धिर्धीयतेऽद्य परन्तप ॥ १४ ॥
अहो युद्धाभिकाङ्क्षाणां युद्धकाल उपस्थिते ।
चेतांसि विप्रतीपानि यत्त्वां भीर्भीम विन्दति ॥१५॥
अहो पार्थ निमित्तानि विपरीतानि पश्यसि ।
स्वप्नान्ते जागरान्ते च तस्मात्प्रशममिच्छसि ॥१६॥
अहो नाशंससे किंचित्पुंस्त्वं क्लीब इवात्मनि ।
कश्मलेनाभिपन्नोऽसि तेन ते विकृतं मनः ॥ १७ ॥

---

[ नील० ] एतदिति ॥ १ ॥ रुषतीं रोषवतीम् ॥५॥ अग्निवत् अग्निनेव ॥ ६ ॥ आरुज्य भङ्क्त्वा ॥ ८ ॥ अस्मिन्वने जनेन ब्राह्मणसमूहेन क्षिपसि नयसि कालमिति शेषः ॥ ९ ॥ शुक्रं तेजः निर्मुक्तोऽस्तं गतः ध्रुवं निश्चलं पुनः पर्येति मेरुं पुनः पुनः प्रदक्षिणीकरोति ॥ १२ ॥ नियमेन हन्ता अस्मीति शेषः ॥१३॥ निमित्तानि महिषारोहणवामनेत्रस्फुरणादीनि स्वप्नान्ते स्वप्ने जागरान्ते जागरे ॥ १६ ॥

[ अर्जु० ] रामानुजो हलधरानुजः ॥ २ ॥ अन्यदा इमं कालं वर्जयित्वा सर्वस्मिन् काले ॥३॥ मिमर्दिषुः मर्दितुमिच्छुः ॥ ४ ॥ न्युब्जोऽधोमुखः शेषे स्वपिषि रुषतीं पुरुषां उषतीमिति च पठन्ति ॥ ५ ॥ अग्निवर्णेन अग्नितुल्येन ॥६॥ निःश्वसन् शब्दं कुर्वन् । अतद्विदः अकोविदाः ॥७॥ आरुह्य ईषद् भङ्क्त्वा । निर्मूलान् मूलाच्चालयित्वा परिरुजन् नमयन् निष्टनन् शब्दं कुर्वन् ॥ ८ ॥ क्षियसि निवससि ॥ ९ ॥ अकस्मात् हेतुं विना स्मयमानो हसन् आस्से तिष्ठसि । प्रमीलितः स्तिमितः ॥ १० ॥ मन्युकारितं क्रोधानुभाव इति यावत् ॥ ११ ॥ शुक्रो भास्वरः । उच्चरन् उद्गच्छन् पश्चात् शेषे निर्मुक्तो रश्मिभिरिति शेषः । पर्येति अस्तमेति । ध्रुवं सत्यम् । उद्गमनेऽस्तमने च स्थितिदृष्टान्तः ॥ १२ ॥ आलभसे स्पृशसि । धीयते पुष्टा भवति ॥ १४ ॥ प्रतीपानि विपरीतानि । शमवचनानि अप्रतीपानि अनुकूलानि विन्दति लभते ॥ १५ ॥ स्वप्नान्ते स्वप्ने जागरान्ते जागरे । अथवा स्वप्नान्ते जागरे जागरान्ते स्वप्ने ॥ १६ ॥ कश्मलेन मोहेन ॥ १७ ॥

[ सर्व० ] रुषतीं रोषयुक्ताम् । अग्निवर्णेनाग्निसदृशेन मन्युना ॥ ६ ॥ अतद्विदस्ते कोपावेदिनः ॥ ७ ॥ आरुज्य भङ्क्त्वा परिरुजन्निव नमयन्निव क्षितिमिति संबन्धः ॥८॥ क्षियसि निवससि ॥ ९ ॥ शुक्रं तेजः । पश्चान्निर्मुक्तो मुक्तैतल्लोकः । ध्रुवं मेरुं पर्येति वेष्टयति ॥ १२ ॥ वथा तदेत-

---

१ ख. मार्दवोपगतं । ९ ख. क्षीयसि । १० ख. रहस्यभि रुदन्निव । ११ ख. ओष्ठो च विलिहन्निव । १५ ख. अहो युद्धप्रतीपानि । ख. पश्यसीवा प्रती° । पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

उद्वेपते ते हृदयं मनस्ते प्रविषीदति ।
ऊरुस्तम्भगृहीतोऽसि तस्मात्प्रशममिच्छसि ॥ १८॥
अनित्यं किल मर्त्यस्य चित्तं पार्थ चलाचलम् ।
वातवेगप्रचलिता अष्ठीला शाल्मलेरिव ॥ १९ ॥
तवैषा विकृता बुद्धिर्गवां वागिव मानुषी ।
मनांसि पाण्डुपुत्राणां मज्जयत्यप्लवानिव ॥ २० ॥
इदं मे महदाश्चर्यं पर्वतस्येव सर्पणम् ।
यदीदृशं प्रभाषेथा भीमसेनासमं वचः ॥ २१ ॥
स दृष्ट्वा स्वानि कर्माणि कुले जन्म च भारत ।
उत्तिष्ठस्व विषादं मा कृथा वीर स्थिरो भव॥२२॥
न चैतदनुरूपं ते यत्ते ग्लानिररिन्दम ।
यदोजसा न लभते क्षत्रियो न तदश्नुते ॥ २३ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

## षट्सप्ततितमोऽध्यायः ७६

कशयाभिहतेनेव सदश्वेन भगवतोपालब्धेन भीमेन स्वपौरुषाविष्करणम् ॥ १ ॥

**वैशम्पायन उवाच—**
तथोक्तो वासुदेवेन नित्यमन्युरमर्षणः ।
सदश्ववत्समाधावद्बभाषे तदनन्तरम् ॥ १ ॥
**भीमसेन उवाच—**
अन्यथा मां चिकीर्षन्तमन्यथा मन्यसेऽच्युत ।
प्रणीतभावमत्यर्थं युधि सत्यपराक्रमम् ॥ २ ॥
वेत्सि दाशार्ह सत्यं मे दीर्घकालं सहोषितः ।
उत वा मां न जानासि प्लवन् ह्रद इवाप्लवे ॥ ३ ॥
तस्मादनभिरूपाभिर्वाग्भिर्मां त्वं समर्च्छसि ।
कथं हि भीमसेनं मां जानन्कश्चन माधव ॥ ४ ॥
ब्रूयादप्रतिरूपाणि यथा मां वक्तुमर्हसि ।
तस्मादिदं प्रवक्ष्यामि वचनं वृष्णिनन्दन ॥ ५ ॥
आत्मनः पौरुषं चैव बलं च न समं परैः ।
सर्वथा नार्यकर्मैतत्प्रशंसा स्वयमात्मनः ॥ ६ ॥
अतिवादापविद्धस्तु वक्ष्यामि बलमात्मनः ।
पश्येमे रोदसी कृष्ण ययोरासन्निमाः प्रजाः ॥७॥
अचले चाप्रतिष्ठे चाप्यनन्ते सर्वमातरौ ।
यदिमे सहसा क्रुद्धे समेयातां शिले इव ॥ ८ ॥

रसत्यं ब्रवीमि ॥ १३ ॥ निमित्तानि चक्षुःस्फुरणादीनि। स्वप्नान्ते स्वप्ननाशे। जागरान्ते स्वप्ने नेच्छसीत्यर्थः ॥१६॥

[ नील० ] अष्ठीला फलान्तर्ग्रन्थिः सा च शाल्मलेः केवलं तूलमयी भवति ॥ १९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

[ अर्जु० ] अनित्यं क्षणिकं चलाचलं क्षेपावस्थायां चलमेकाग्रतावस्थायामचलम् । अष्ठीला अष्ठिः तदपि सतूलं चलं अन्यत् निस्तूलमचलम् ॥ १९ ॥ एषा युद्धपराङ्मुखी अप्लवान् उडुपहीनान् ॥२०॥ सर्पणं गमनम् । असममनेकात्मनोऽसदृशम् ॥ २१ ॥ स त्वम् ॥ २२ ॥ ओजसा तेजसा ॥ २३ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

[ सर्व० ] अनित्यं विनाशि । चलाचलं चञ्चलम् अन्यतो गामी चञ्चलवाची चलाचलशब्दः । अष्ठीला अष्ठि प्रशमं आत्मनः समाधानम् । कौरवान्पततीति अवधीरितुमिच्छन् स अर्थान्तर्भावात् ॥ १९ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

[ लक्षा० ] अष्ठीला शाल्मलेरिवेत्यत्र अष्ठीला दृढशाखा ॥ १९ ॥ [ संजयस्यास्रवानिवेत्यत्र अस्रवान् नयनजलवान् शिशुरिव अंजसि अंजमंजनं तद्वत्करोषि श्यामीकरोषि माद्रीकरोषि वा ॥ ]

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चसप्ततितमोऽध्यायः ॥ ७५ ॥

[ नील० ] तथोक्त इति । समाधावत् तीव्रवेगं यथास्यात्तथा ॥ १ ॥ रोदसी द्यावाभूमी ॥ ७ ॥

[ अर्जु० ] समाधावत् वेगवान् । त्वरितं बभाष इत्यर्थः ॥ १ ॥ प्रणीतभावं स्वाभिप्रायम् ॥ २ ॥ समर्च्छसि क्षिपसि ॥ ४ ॥ अतिवादोऽतिक्रम्य वादः तेनापविद्धः क्षिप्तः आसन् स्थिताः ॥ ७ ॥ प्रतिष्ठे आधारौ ॥ ८ ॥

[ सर्व० ] प्रणीतभावं निर्णीताभिप्रायम् ॥ २ ॥ ह्रदेऽप्लवे ॥ ३ ॥

[ लक्षा० ] प्लवाद्ध्रदमिवाप्लवमित्यत्र अप्लवं नौकानपेक्षं प्लवद्ध्रदं प्लवाह्नशतप्लवमानं जलमिव मां न जानासि ॥ ३ ॥ यदि मे सहसाक्रुष्टे इत्यत्र मे मया यदि सहसा सत्वेन आक्रुष्टे तर्हि शिले इव समे सत्यौ यातां आया-

१ ख. समाधावन्स गोविन्दं बभाषे। २ ख. °मत्यन्तं। ४ ख. तस्मादप्रतिरू°।

अहमेते निगृह्णीयां बाहुभ्यां सचराचरे ।
पश्यैतदन्तरं बाह्वोर्महापरिघयोरिव ॥ ९ ॥
य एतत्प्राप्य मुच्येत न तं पश्यामि पूरुषम् ।
हिमवांश्च समुद्रश्च वज्री वा बलभित्स्वयम् ॥ १० ॥
मयाऽभिपन्नं त्रायेरन् बलमास्थाय न त्रयः ।
युद्धार्हान्क्षत्रियान्सर्वान् पाण्डवेष्वाततायिनः ॥११॥
अधःपादतलेनैतानधिष्ठास्यामि भूतले ।
नहि त्वं नाभिजानासि मम विक्रममच्युत ॥१२॥
यथा मया विनिर्जित्य राजानो वशगाः कृताः ।
अथ चेन्मां न जानासि सूर्यस्येवोद्यतः प्रभाम् ॥१३॥
विगाढे युधि संबाधे वेत्स्यसे मां जनार्दन ।
परुषैराक्षिपसि किं व्रणं पूतिमिवोन्नयन् ॥ १४ ॥
यथामति ब्रवीम्येतद्विद्धि मामधिकं ततः ।
द्रष्टाऽसि युधि संबाधे प्रवृत्ते वैशसेऽहनि ॥ १५ ॥
मया प्रणुन्नान्मातङ्गान्रथिनः सादिनस्तथा ।
तथा नरानभिक्रुद्धं निघ्नन्तं क्षत्रियर्षभान् ॥ १६ ॥
द्रष्टा मां त्वं च लोकश्च विकर्षन्तं वरान्वरान् ।
न मे सीदन्ति मज्जानो न ममोद्वेपते मनः ॥ १७ ॥
सर्वलोकादभिक्रुद्धान्न भयं विद्यते मम ।
किंतु सौहृदमेवैतत् कृपया मधुसूदन ।
सर्वांस्तितिक्षे संक्लेशान् मा स्म नो भरता नशन् ॥१८॥

इति श्रीमहाभारते उद्योगपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

## सप्तसप्ततितमोऽध्यायः ७७

दैवपौरुषयोर्बलाबलानवधारणात्पौरुषं कर्तव्यमेवेति बुद्धया युद्धाख्यपौरुषाद्विमुखं त्वां तत्र प्रवर्तयितुमहं किंचित्परुषमिवोक्तवानिति भीमं प्रति भगवदुक्तिः ॥ १ ॥

श्रीभगवानुवाच—
भावं जिज्ञासमानोऽहं प्रणयादिदमब्रवम् ।
न चाक्षेपान्न पाण्डित्यान्न क्रोधान्न विवक्षया ॥ १ ॥
वेदाहं तव माहात्म्यमुत ते वेद यद्बलम् ।
उत ते वेद कर्माणि न त्वां परिभवाम्यहम् ॥ २ ॥
यथा चात्मनि कल्याणं संभावयसि पाण्डव ।
सहस्रगुणमप्येतत्त्वयि संभावयाम्यहम् ॥ ३ ॥
यादृशे च कुले जन्म सर्वराजाभिपूजिते ।
बन्धुभिश्च सुहृद्भिश्च भीम त्वमसि तादृशः ॥ ४ ॥
जिज्ञासन्तो हि धर्मस्य संदिग्धस्य वृकोदर ।
पर्यायं नाध्यवस्यन्ति देवमानुषयोर्जनाः ॥ ५ ॥

---

ताम् । द्यावापृथिव्यौ सत्वेनाकृष्य शिलाद्वयवत्संघटयामीत्यर्थः ॥ ८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

[ नील० ] संबाधे संकीर्णे ॥ १४ ॥ वैशसे विशसनवति ॥ १५ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

[ अर्जु० ] एते रोदसी ॥ ९ ॥ अभिपन्नं ग्रस्तम ॥ ११ ॥ उद्यतः उद्गतः ॥ १३ ॥ विगाढे तीव्रे संबाधे संकटे भोत्स्यसे ज्ञास्यसि बुधधातोः । नेनेक्षि क्षालयसि । परुषैः कर्कशैः ॥ १४ ॥ विकर्षन्तमाकर्षन्तम ॥ १७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

[ सर्व० ] किं माम् नेनेक्षि शोधयसि परुषैरसह्यैर्वचनैः परुषैस्तप्तोदकादिभिर्व्रणं पूतिमिव ॥ १४ ॥ विकर्षन्तम् विनिघ्नन्तम ॥ १७ ॥ कृपया तितिक्षे सौहृदादेव ॥१८॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां षट्सप्ततितमोऽध्यायः ॥ ७६ ॥

[ नील० ] भावमिति । विवक्षया त्वया स्वरूपं वक्तव्यमितीच्छया प्रागेव तस्य ज्ञातत्वात् ॥ १ ॥ वेद वेद्मि ॥ २ ॥ कुतस्तर्हि मां निन्दितवानसीत्याशङ्क्याह—जिज्ञासन्त इति । देवमानुषयोर्धर्मस्य पर्यायमिति संबन्धः । देवधर्मस्य भाविनः पुण्यपापफलस्य पर्यायं पर्यन्तं दैवज्ञादेः सकाशाज्जिज्ञासन्तो ज्ञातुमिच्छन्तोऽपि नाध्यवस्यन्ति न निश्चिन्वन्ति । कदाचिद्दैवज्ञाद्युक्तावपि विसंवाददर्शनात् । तथा मानुषधर्मस्य पुरुषकारस्य पर्यायं बलाबलनिर्णयमिति पूर्ववत् । शूरस्यापि कदाचित् क्लीबत्वदृष्टेरिति भावः ॥५॥

[ अर्जु० ] भावमभिप्रायम् । सौहृद्यात् स्नेहात् ।

---

११ ख. मयाहं कौरवान्सर्वान् । १३ ख. तथा चे° । १४ ख. किं मां दुनोषि परुषैर्व्रणंपूतिमिवानघ; ज. किं मां नेनेक्षि परुषै° । १५ ख. वैशसे भुवि । १६ ख रथान्मातङ्गानाश्व । षट्सप्ततितमोऽध्यायः ॥ ७६ ॥ १ ख. युष्माभिश्च° । ६ विनाशोऽपि स एव स्यात् ।

स एव हेतुर्भूत्वा हि पुरुषस्यार्थसिद्धिषु ।
विनाशेऽपि स एवास्य संदिग्धं कर्म पौरुषम् ॥ ६ ॥
अन्यथा परिदृष्टानि कविभिर्दोषदर्शिभिः ।
अन्यथा परिवर्त्तन्ते वेगा इव नभस्वतः ॥ ७ ॥
सुमन्त्रितं सुनीतं च न्यायतश्चोपपादितम् ।
कृतं मानुष्यकं कर्म दैवेनापि विरुध्यते ॥ ८ ॥
दैवमप्यकृतं कर्म पौरुषेण विहन्यते ।
शीतमुष्णं तथा वर्षं क्षुत्पिपासे च भारत ॥ ९ ॥
यदन्यद्दिष्टभावस्य पुरुषस्य स्वयंकृतम् ।
तस्मादनुपरोधश्च विद्यते तत्र लक्षणम् ॥ १० ॥

---

प्रणयादिति वा पाठः । आक्षेपात् वाक्कृततिरस्कारात् विवक्षया किमपि वक्तुकाम्यया ॥ १ ॥ पर्यायेऽस्मिन् जन्मनि कृतं तज्जन्मनि वर्जयित्वा जन्मान्तरगमनं जन्मान्तरकृतमर्थहेतुः अस्मिन्नेव जन्मनि कृतमिति यावत् न व्यवस्यन्ति न निश्चिन्वन्ति दैवं प्राक्तनं कर्म मानुषमैहिकं तयोः ॥ ५ ॥

[ सर्व० ] विवक्षया एवमेव वक्तुमिच्छया ॥ १ ॥ धर्मस्य वस्तुनो दैवपौरुषरूपस्य संदिग्धस्य फलं प्रति कस्य प्राधान्यमिति जिज्ञासन्तः । पर्यायं क्रमम् । आदौ दैवमनन्तरं पौरुषं दैवं च प्रयोजकमिति वा विपरीता वा कचिद्दैवं कचित्पौरुषमिति वा न व्यवस्यन्ति न निश्चिन्वन्ति मानुषं पुरुषकारः ॥ ५ ॥

[ लक्षा० ] किंतु पर्यायधर्मस्येत्यत्र पर्यायधर्मस्य प्रातरादिकालक्रमेण क्रियमाणधर्मस्य संदिग्धस्य 'उदिते जुहोति' 'अनुदिते जुहोति' इत्यादिवाक्यैः संदिग्धस्य । प्रकृतेऽपि अस्मिन्काले युद्धं वा कर्तव्यं, संधिर्वा कर्तव्य इति संदिग्धस्य पर्यायं क्रमं न व्यवस्यन्ति दुर्जनैः सह फलकाले प्राप्ते युद्धमेव कर्तव्यं संधिस्तु साधुभिरेव इत्याद्याकारेण न निश्चिन्वन्ति ॥ ५ ॥

[ नील० ] स एव धर्म एव संदिग्धं संदिग्धफलम् ॥ ६ ॥ परिदृष्टानि कर्तव्यत्वेन निश्चितानि कार्याणि ॥ ७ ॥ सुनीतं सम्यगनुष्ठितं विरुध्यते निष्फलं क्रियते ॥ ८ ॥ अकृतं भोगायानारब्धं कर्म पुण्यादिकमागामि दुःखं दैवज्ञादिभिरुपदिष्टतया निश्चितसद्भावं पौरुषेण विहन्यते । तेन काम्यकर्मणामपि फलवत्त्वमस्त्येवेति सिद्धम् । यद्वा अकृतं कालस्वभावजं कर्म अनुभूयमानं शीतोष्णादि तत् पौरुषेण प्रावरणादिसंपादनेन निवार्येत इत्यर्थः ॥ ९ ॥ यदन्यदिति । दिष्टः फलभोगाय आज्ञप्तः भावः सत्ता यस्य तत् दिष्टभावं प्रारब्धकर्म पञ्चम्यर्थे षष्ठी प्रारब्धादन्यदित्यर्थः । पुरुषस्य पुरुषेण संचितं यत्स्वयं कृतं कर्म तस्मादनुपरोधो जन्मान्तरे निरोधो नास्ति । तत्र ज्ञानेन प्रायश्चित्तेन वा संचितपापानां नाशे लक्षणं ज्ञापकं श्रुतिस्मृतिजातं विद्यते । क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे, धर्मेण पापमपनुदति, ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथेति । यद्वा अकृतात् दैवात् शीतादेरन्यत्स्वयं कृतं दैवं देहान्तःकरणसंतापहेतुः तस्मादपि उपरोधोऽत्र वै नास्ति यतस्तत्रापि लक्षणं चिकित्सा विवेकहेतुः शास्त्रं प्रवर्त्तते । सर्वेष्वपि पौरुषं कर्त्तव्यमिति भावः ॥ १० ॥

[ अर्जु० ] स एव पर्याय एव विनाशो विनाशहेतुः । पौरुषमैहिकं कर्म संदिग्धमुपचितमेव परं न फलहेतुः अथवा पौरुषं दृष्टान्तः पुंसो व्यापारः दैवकृतानुसारित्वात् संदिग्धं केन कृतमिति संदेहास्पदम् ॥ ६ ॥ परिदृष्टानि निश्चितानि अन्यथा परिदृष्टाकारान्तरेण श्रेयोहेतुत्वेन परिदृष्टादश्रेयो जायत इति यावत् अत्र च परिदृष्टं न कारणं प्रमाणविरोधात् किंतु प्राक्तनमेव श्रेयःसाधनं कर्म कारणमित्युन्नीयते । दोषेत्युपलक्षणम् गुणदोषदर्शिभिरिति यावत् ॥ ७ ॥ सुमन्त्रितं सुष्ठुविचारितं सुनीतं सुष्ठु नीतं न्यायतः प्रमाणात् उपपादितमितीदं भविष्यतीत्यवधारितं कृतं संपूर्णं दैवेन प्राक्तनकर्मणा विरुध्यते तद्विरुद्धफलजननात् ॥ ८ ॥ अकृतं दुर्बलं व्यञ्जकानां देशकालानां दुर्बलत्वात् दैवस्य पौरुषेण विरोधः । तत् फलविरोधाज्ज्ञायते इति फलविरोधमाह—शीतमुष्णमिति । शीतादयो विहन्यत इत्यन्वयः ॥ तथा हि पूर्वकृतं कर्मकृतं शीतोष्णादि पुरुषव्यापारकृतेन प्रासादादिना बाध्यमानं दृश्यते । तेन फलबाधेन दैवमेव बाधितमित्यनुमीयते ॥ ९ ॥ एतदेव विवृणोति दिष्टं प्राक्तनं कर्म तदेव भवत्यस्माद् भावः कारणं यस्य दैवकृतशीतोष्णादिफलभाज इत्यर्थः । यत् स्वयंकृतं प्रासादादि अन्यद्दिष्टकृतशीतादिफलविरोधि तस्माद्दैवात् कदाचित्(अ?)प्राप्तबलात् अनवरोधोऽबाधनं तस्यैव स्वयंकृतप्रासादादेः । तत् पौरुषे दैवबाधलक्षणं प्रमाणं विद्यते ॥ १० ॥

[ सर्व० ] स एव पुरुषकारः । ततः पौरुषं कर्म सन्दिग्धम् फलवत्त्वे विनाशो विनाशकः ॥ ६ ॥ परिदृष्टानि निश्चितानि पौरुषकर्माणि ॥ ७ ॥ पौरुषस्य सुनीतं सम्यगारब्धम् । न्यायतो युक्तेरुत्पादितं निश्चितं कृतं निष्पादितं दैवेन प्राक्कर्मणा विरुध्यते अफलं क्रियते ॥ ८ ॥ अधुनाऽत्यन्तमफलत्वं पौरुषस्येत्याह । अकृतं स्वयमनुत्पादितमत एव दैवम् प्राकृतकर्ममात्रारब्धम् कर्म कार्यं शीतोष्णादि प्रावारजलादिसंपादकेन पौरुषेण विरुद्ध्यते विफलीक्रियते ॥ ९ ॥

**लोकस्य नान्यतो वृत्तिः पाण्डवान्यत्र कर्मणः ।**
**एवंबुद्धिः प्रवर्तेत फलं स्यादुभयान्वये ॥ ११ ॥**
**य एवं कृतबुद्धिः स कर्मस्वेव प्रवर्तते ।**
**नासिद्धौ व्यथते तस्य न सिद्धौ हर्षमश्नुते ॥ १२ ॥**

एवं दैवविरोधित्वं पौरुषस्याशंक्य निराकरोति । यदन्यस्त्वयंकृतं पुरुषस्य पौरुषं प्रावारादि तद्दिष्टभावस्य तस्य भवति तदैव तस्मात्प्रावारविरोधो दुःखोत्पत्तिर्भवति । अस्तीति भावः । दिष्टं दैवं भावं भावः सन् तस्मिन् सदिष्टभावः तेन तादृशदैवानुगुण एव प्रावारादिकं पुरुषेण कृतमपि शीतमपनयति । अतस्तत्रापि तद्भिद्यते लक्षणम् लक्ष्यते अभिव्यज्यते फलमनेनेति लक्षणं दैवम् ॥ १० ॥

[ लक्षा० ] संदिग्धं कर्म पौरुषमित्यत्र पौरुषं पुरुषसंबन्धि कर्म पौरुषं शौर्यं वा ॥ ६ ॥ यत्कृतं मानुषं कर्मेत्यत्र मानुषं विनयादि मनुष्यप्रयत्नेन कृतं कर्म व्याघ्रेण सह संधिरूपं कर्म दैवेन व्याघ्रजातेर्निष्ठुरस्वभावघटकदैवेन ॥ ८ ॥ यथा दैवकृतमनावृष्ट्यादिकं कर्म पौरुषेण कृषीवलपुरुषप्रयत्नेन विरुध्यते इदं द्वयमपि मिथो विरुद्धम् । तत्र दैवमेव ज्याय इति भावः ॥ ९ ॥ भिद्यते तत्र लक्षणमित्यत्र लक्षणं फलजनकत्वलक्षणं भिद्यते दैववशाद्भिद्यते । शीतोष्णादिसेवया यत्सुखादिकं भवेत् ( तदेव ) दैववशादुःखकारणं भवतीति भावः ॥ १० ॥

[ नील० ] एतदेवाह—लोकस्येति । कर्मणोऽन्यत्र पौरुषं विना अन्यत एकस्माद्दैवादेव वृत्तिर्जीविका नास्ति । एवंबुद्धिः ईदृग्ज्ञानवान्सन् प्रवर्तेत पुरुषकारं कुर्यात् । तथा सति उभयान्वये दैवपौरुषयोः संबन्धे फलं भवति नान्यतरत इत्यर्थः ॥ ११ ॥ य इति । यथा कर्षकः कर्म कृत्वा दैवानुकूल्यात्फलं लब्ध्वाऽपि न हृष्यति अनाकस्मिकत्वात्फलस्य । दैवप्रातिकूल्यादलब्ध्वाऽपि न व्यथते अनुचितस्याकरणात् । तद्वदत्रापि ज्ञेयमित्याशयः ॥ १२ ॥ तं प्रकृते योजयति—तत्रेति । अनुमात्राऽवधारणं निश्चय इत्यर्थः । ' मात्रं कार्त्स्न्येऽवधारणे ' इति कोशः लिङ्गव्यत्यय आर्षः ॥ १३ ॥ प्रहीणरश्मिः निष्प्रभः भावः प्रारब्धं कर्म अच्छेत् प्राप्नुयात् ॥ १४ ॥

[ अर्जु० ] लोकस्य स्थावरजङ्गमस्य नान्यतो न दैवादितरस्मात् वृत्तिः प्रवृत्तिः । हे पाण्डव अन्यत्र कर्मणि इत्यत्र नञ् योजनीयः । कर्मणोऽन्यत्रान्यस्मिन् निमित्तेऽपि न प्रवृत्तिरित्यर्थः । एवंबुद्धिः एवं दैवात् पौरुषाच्च प्रवृत्तिरिति बुद्धिर्यस्य स प्रवर्तेत आरम्भं कुर्यात् । तत्र हेतुः फलमिति । उभयोर्दैवपौरुषयोरन्वयात् संबन्धात् ।

११ ख. पाण्डवत्वात्र । १२ ज. सन् कर्मं° । १३ ज. अर्थमात्रा° ।

**तत्रेयमनुमात्रा मे भीमसेन विवक्षिता ।**
**नैकान्तसिद्धिर्वक्तव्या शत्रुभिः सह संयुगे ॥ १३ ॥**
**नातिप्रहीणरश्मिः स्यात्तथा भावविपर्यये ।**
**विषादमर्च्छेद्ग्लानिं वाऽप्येतमर्थं ब्रवीमि ते ॥ १४ ॥**

क्वापि दैवं प्रधानं पौरुषं गुणभूतं, यथा दैवात् प्रधानीभूतात् निधिप्राप्तिस्तत्स्वीकरणरक्षणविनियोगादिकं तु पौरुषं गुणभूतं, क्वापि पौरुषं प्रधानं दैवं गुणभूतं, दैवकृतशीतोष्णादिफलबाधकं प्रासादादिनिर्माणलक्षणं पौरुषं प्रधानम् । गुणभूतं तु दैवमन्यथा प्रासादादिनिर्माणस्यैवासति दैवे विपरीते चासंभवात् अन्ततो भूछिद्रादेरपि विघ्नस्य संभाव्यमानत्वाच्च, क्वचिदुभयमपि प्रधानं, यथाचिन्तितमभिप्रेते फले सिध्यत्यनुमितानुकूल्यस्य दैवस्य पौरुषशैथिल्ये सति प्रतिपक्षेण परिभूयमानस्य प्रचण्डपौरुषातिशयात् परै राज्यग्रहणं, न चापि पौरुषशैथिल्यकालेऽपि दैववैगुण्यमाशङ्कनीयं, पौरुषशैथिल्यादृष्टादेव परिभवसिद्धौ अदृष्टस्य दैववैगुण्यस्य कल्पनायां प्रमाणाभावात् इति दैवपौरुषयोस्त्रिधान्वयः ॥ ११ ॥ स कर्मसु प्रवर्त्तेत एवेत्यन्वयः । तस्य कर्मणः ॥ १२ ॥ अर्थमात्रा अर्थलेशः ॥ १३ ॥ अतिप्रणीतरश्मिस्तीव्रः तथा भवति तथा सति पर्यायवैपरीत्ये ॥ १४ ॥

[ सर्व० ] तर्हि पुरुषकारार्थं न प्रवर्तितव्यमेव दैवादेव फलसिद्धेरत आह । लोकस्य सर्वस्य कर्मणः पुरुषकारादन्यत्र दैवे नाऽन्यतो वृत्तिर्नाऽन्यैस्तत्र प्रवृत्तिर्जन्यते दैवस्य प्रवृत्त्यविषयत्वात् । केवलमुपदेशादिना पुरुषकार एव लोकः प्रवर्त्तते तत्र च एवंबुद्धिरतः फलं भावीति बुद्ध्या उपदेशजनितया प्रवर्तेत प्रवर्तते । तदाऽनुरूपस्थितेन दैवेनान्वये संरब्धे पुरुषकारस्य फलं स्यादिति ॥११॥ एवं कृतबुद्धिर्यदवश्यं कर्मणां फलमिति [ नास्ति प्रवृत्तिस्तत्रैव संभवतीत्यत्र गुणं दैवाल्लिखवयेऽपि ] तत्र प्रवर्तितव्यमिति निष्पादितबुद्धिः सन् कर्मस्वेव प्रवर्तते न दैवे स तस्य कर्मणोऽसिद्धौ फलाभावे न व्यथते सिद्धौ न हृष्यति [ तदेव दैवमेव लोपानमिति निर्वाच्य प्रकृति योजयत्विति ] ॥ १२ ॥ तत्रेयमिति ' मात्रं स्यादवधारणमिति नानार्थः । अत्र लिङ्गव्यत्ययादर्थमात्रावधारणमित्यर्थः । नैकान्तसिद्धिः संयुगे कर्मणां दैवानुकूल्याश्रयात्तस्य तु प्राधान्यादिति ॥ १३ ॥ अतिप्रणीतो विस्तारितो रश्मिस्तेजो यस्य विग्रहमात्रेच्छुरिति यावत् । तदाहि तथा तेन प्रकारेण प्रवृत्तः भावविपर्यये फलविपर्यये विषादं दुःखं ग्लानिमवसादं गच्छेत्प्राप्नुयात् । तस्मात्सान्त्वं प्रयुज्य तेनार्थसिद्ध्यभावे प्रकारान्तराभावात् युद्धं विधेयमिति ॥ १४ ॥

श्वोभूते धृतराष्ट्रस्य समीपं प्राप्य पाण्डव ।
यतिष्ये प्रशमं कर्तुं युष्मदर्थमहापयन् ॥ १५ ॥
शमं चेत्ते करिष्यन्ति ततोऽनन्तं यशो मम ।
भवतां च कृतः कामस्तेषां च श्रेय उत्तमम् ॥१६॥
ते चेदभिनिवेक्ष्यन्ते नाभ्युपैष्यन्ति मे वचः ।
कुरवो युद्धमेवात्र घोरं कर्म भविष्यति ॥ १७ ॥
अस्मिन्युद्धे भीमसेन त्वयि भारः समाहितः ।
धूर्जुनेन धार्या स्याद्वोढव्य इतरो जनः ॥ १८ ॥
अहं हि यन्ता बीभत्सोर्भविता संयुगे सति ।
धनञ्जयस्यैष कामो नहि युद्धं न कामये॥ १९ ॥
तस्मादाशङ्कमानोऽहं वृकोदर मतिं तव ।
गदतः क्लीबया वाचा तेजस्ते समदीदिपम्॥ २० ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

## अष्टसप्ततितमोऽध्यायः ७८

यदि परेषु भवान्प्रशममद्यकरं मन्यते नच ते न वधार्हास्तस्मायन्नः श्रेयस्तदाशु क्रियतामिति कृष्णं प्रत्यर्जुनस्योक्तिः ॥ १ ॥

अर्जुन उवाच—
उक्तं युधिष्ठिरेणैव यावद्वाच्यं जनार्दन ।
तव वाक्यं तु मे श्रुत्वा प्रतिभाति परन्तप ॥ १ ॥
नैव प्रशममत्र त्वं मन्यसे सुकरं प्रभो ।
लोभाद्वा धृतराष्ट्रस्य दैन्याद्वा समुपस्थितात् ॥ २ ॥
अफलं मन्यसे वापि पुरुषस्य पराक्रमम् ।
न चान्तरेण कर्माणि पौरुषेण फलोदयः ॥ ३ ॥

[ लक्षा० ] कर्मणः दैवकृतकर्मण. उभयान्वयाम दैवमानुषयोरुभयोरनुकूलत्वात् ॥ ११ ॥ नातिप्रणीतबुद्धिः स्यादित्यत्र भावविपर्यये भावस्य वैरिपदार्थस्य विपर्यये वैपरीत्ये सति नातिप्रणीतबुद्धिः अत्यन्तं प्रकर्षेण नीता नीतियुक्ता बुद्धिर्यस्य स न स्यात् । गृहदाहे सति विषघटिकादिकं न पश्येदितिभावः । विवृद्धिमिच्छेदित्यत्र स्वगृहस्य निवृद्धिं दाहकामेर्हानिमिच्छेत् ॥ १४ ॥

[ नील० ] ते कुरव इति संबन्धः ॥ १७ ॥ अस्मिन्निति रथोपमो भीमः अश्वोपमोऽर्जुनः ॥ १८ ॥ अहमिति युद्धकामोऽप्यहमर्जुनप्रीत्यै सारथ्यं करिष्यामीत्यर्थः ॥ १९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

[ अर्जु० ] अभिनिवेक्ष्यन्ति जाड्यमहं करिष्यन्ति ॥१७॥ धूर्भारः धार्या केवलं सर्वो भारस्त्वय्येवेति भावः । किं वा कश्चिद्भारो द्वाभ्यामेव उह्यते यथा गुडालिञ्जरादिस्तद्वत् युद्धभारो युवाभ्यां वहनीयः । अन्ये योधा रक्षणीया इति । वोढव्य इतरो जनः । त्वत्तोऽर्जुनाच्चान्यो योधजनो भारस्थानीयः । युवाभ्यां वक्ष्यमाणत्वादिति भावः ॥ १८ ॥ युद्धं नहि न कामये कामय एवेति। धनंजयस्य काम इच्छा ॥ १९ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

२० ख. वृदतःक्लीबया । ख. समदीपयम् ॥ सप्तसप्ततितमोऽध्यायः ॥७७॥

[ सर्व० ] श्वोभूते धृतराष्ट्रसमीपं प्राप्य प्रशमाय यतिष्ये ॥ १५ ॥ त इति ॥ १६ ॥ धूर्भारामम ॥ १८ ॥ एष कामः अहं यन्ता स्यामिति । अन्यथाऽहमपि युध्य एव । तदाऽहं नहि युद्धं न कामये स्वयं योद्धु नहि नेच्छामि ॥ १९ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

[ लक्षा० ] ते चेदभिनिवेक्ष्यन्ति इत्यत्र अभिनिवेक्ष्यन्ति अभिनिवेशं गर्व प्राप्स्यन्ति तर्हि ॥ १७ ॥ धनंजयस्यैष कार्ये इत्यत्र एष सहायः ॥ १९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्तसप्ततितमोऽध्यायः ॥ ७७ ॥

[ नील० ] उक्तमिति ॥ १ ॥ दैन्याद्वा अस्मदीयात् ॥ २ ॥ पराक्रमं सर्वेषां रक्षणे यत्नं कर्माणि जीवनबीजानि प्राक्तनानि तदभावात् दलद्वयहितार्थं कृतोऽपि यत्नो निष्फल इति मत्वाऽशममेवेच्छसीत्यर्थः ॥ ३ ॥

[ अर्जु० ] प्रतिभाति रोचते ॥ १ ॥ कर्माणि प्राक्तनानीति शेषः ॥ ३ ॥

[ सर्व० ] दैवाद्वा प्रतिकूलदैवात् ॥ २ ॥ कुतोऽयं परतन्त्र इत्याह न चान्तरेणेति । कर्माणि प्राक्तनानि ॥ ३ ॥

[ लक्षा० ] प्रतिभाति परंतपेत्यत्र प्रतिभाति युक्तमिति प्रतिभाति ॥१॥ अफलं मन्यसे चापीत्यत्र पराक्रमं सन्धिकरणपराक्रमं कर्माणि दैवकृतकर्माणि अनन्तरेण विना पौरुषेण पुरुषप्रयत्नेन फलोदयः न ॥ ३ ॥

तदिदं भाषितं वाक्यं तथाचन तथैव तत् ।
न चैतदेवं द्रष्टव्यमसाध्यमपि किंचन ॥ ४ ॥
किंचैतन्मन्यसे कृच्छ्रमस्माकमवसादकम् ।
कुर्वन्ति तेषां कर्माणि येषां नास्ति फलोदयः ॥५॥
संपाद्यमानं सम्यक्च स्यात्कर्म सफलं प्रभो ॥
स तथा कृष्ण वर्तस्व यथा शर्म भवेत्परैः ॥ ६ ॥
पाण्डवानां कुरूणां च भवान्नः प्रथमः सुहृत् ।
सुराणामसुराणां च यथा वीर प्रजापतिः ॥ ७ ॥
कुरूणां पाण्डवानां च प्रतिपत्स्व निरामयम् ।
अस्मद्धितमनुष्ठानं मन्ये तव न दुष्करम् ॥ ८ ॥
एवं च कार्यतामेति कार्यं तव जनार्दन ।
गमनादेवमेव त्वं करिष्यसि जनार्दन ॥ ९ ॥
चिकीर्षितमथान्यत्ते तस्मिन्वीर दुरात्मनि ।
भविष्यति च तत्सर्वं यथा तव चिकीर्षितम् ॥१०॥
शर्म तैः सह वा नोऽस्तु तव वा यच्चिकीर्षितम् ।
विचार्यमाणो यः कामस्तव कृष्ण स नो गुरुः ।
न स नार्हति दुष्टात्मा वधं ससुतबान्धवः ॥ ११ ॥
येन धर्मसुते दृष्टा न सा श्रीरुपमर्षिता ।
यच्चाप्यपश्यतोपायं धर्मिष्ठं मधुसूदन ॥ १२ ॥
उपायेन नृशंसेन हृता दुर्द्यूतदेविना ।
कथं हि पुरुषो जातः क्षत्रियेषु धनुर्धरः ॥ १३ ॥

[ नील० ] मन्त्रकारणमाह–तदिदमिति । नहि युद्धं न कामये इति यत्त्वया भाषितं तथाचन तथापि चन-शब्दोऽप्यर्थे । यद्यपि ममैतदनिष्टं तथापि त्वया यद्भाषितं तत्तथैव भविष्यतीत्यर्थः । परंतु शमोऽपि तव नासाध्योऽस्तीत्याह–न चेति ॥ ४ ॥ एतत् कृच्छ्रं युद्धं संकटं मन्यसेऽङ्गीकरोषि अस्माकं कुरुपाण्डवानां शमासंभवाद्युद्धमिच्छसीत्याह–कुर्वन्तीति । येषां पुंसां फलोदयो नास्ति तेषां कर्माणि क्रियमाणान्यपि सामादीनि कुर्वन्ति कृण्वन्ति हिंसन्ति कृहिंसायामित्यस्य स्वादिगणस्थस्य रूपं तनादित्वमस्यार्षं लेखकप्रमादजं वा । चतुर्थोपायसाध्ये तु रिपौ-सान्त्वमपक्रियेत्यभियुक्तोक्तेर्जीवनादृष्टाभावाद्दण्डैकसाध्येषु कुरुषु सान्त्वप्रयोगो दुष्कर इत्यर्थः ॥ ५ ॥ एवं जानन्नपि सामैव चेन्मन्यसे तत्राह–संपाद्येति । यत्कर्म सम्यक् संपाद्यमानं भवेत् तत्सफलं स्यादिति संबन्धः । प्रभो इत्यनेन असाध्यसाधनसामर्थ्यमस्य दर्शयति । फलितमाह–स इति ॥ ६ ॥ निरामयं कुशलम् ॥ ८ ॥ कार्यतामौचित्यं कार्यं कर्म ॥ ९ ॥ शर्मेति । कृष्णात्स्वस्य व्यवहारतो भेदात् मतभेदमुक्त्वा तत्त्वमाह–विचार्यमाण इति । गुरुः उपदेष्टा । प्राणस्य प्राणमुत चक्षुषश्चक्षुरुतश्रोत्रस्य श्रोत्रं मनसो ये मनो विदुस्ते निचिक्युर्ब्रह्म पुराणमग्र्यमिति श्रुतेरस्मन्मनसोऽपि मतस्त्वमतस्तव यः कामः स एवास्मत्कामस्य प्रवर्त्तक इति भावः । वस्तुतस्तु तवैव कामो युक्त इत्याह–न स इत्यादिना ॥ ११ ॥ धर्मिष्ठं युद्धादिकम् ॥ १२ ॥ हृता श्रीः ॥ १३ ॥

[ अर्जु० ] तदिदं व्याहृतं त्वया तथा च पौरुषस्य बलवत्त्वे दैवस्य बलवत्त्वे च एतदुभयं युक्तं तत् प्रशमलक्षणम् ॥ ४ ॥ एतन्न तथा चेत् अस्मिन् पक्षे अस्मत्तोऽस्मत्सकाशात् पापं त्वद्वचनाकरणलक्षणम् तेषामेव मते कर्माणि प्राक्तनानि कर्तॄणि कुर्वन्ति येषां फलोदयः फलस्य उदयो यस्मात् स पुरुषकारो नास्ति इत्यर्थः ॥ ५ ॥ संपाद्यमानं फलेन योज्यमानं कर्म प्राक्तनं सफलं परैः सह शर्म सुखं भवेत् ॥ ६ ॥ प्रथमः मुख्य इत्यर्थः । प्रजापतिर्ब्रह्मा ॥ ७ ॥ निरामयं हितम् ॥ ८ ॥ अन्यत् [शमात्] चिकीर्षितमशमरूपं तदर्थमपराधादिति तात्पर्यम् ॥ १० ॥ स दुर्योधनः ॥ ११ ॥ न उपमर्षिता न सोढा ॥ १२ ॥ कृता श्रीरिति संबन्धः दुर्द्यूतदेविना कपटद्यूतदेवनशीलेन ॥ १३ ॥

[ सर्व० ] भाषितं त्वया यथा यथार्थं पुरुषकारो न प्रधानमिति कृतेऽपि कर्मणि फलादर्शनात् । न तथा यथार्थं च प्रकृतमस्माकं भवता सहितानामसाध्याभावात् । तदाह । तदेतद्युद्धेनास्माकं फलप्रापणं असाध्यमलभ्यमपीति द्रष्टव्यम् ॥ ४ ॥ कृच्छ्रं दुःखजनकं पापं प्राक्तनं वाऽस्मत्तोऽस्मासु मन्यसे येनाऽस्मास्वपि फलं न संभावयसि । तदपि पापं नास्माकं विरोधाय पर्याप्तमित्याह । कुर्वन्ति हि तेषां कर्माणि पापानि कुर्वंति फलाभावमिति शेषः येषां नास्ति फलोदयः फलयोग्यता ॥ ५ ॥ तस्मादस्माभिः फलसंबन्धयोग्यैः संपाद्यमानं पुरुषकारेण फलसंपन्नं क्रियमाणं प्राक्तनं सफलं स्यादेव तथा प्रवर्तस्व न तु प्रवृत्तिर्निष्फलेति मत्वा वर्तय । यथा परैः सह शान्तिर्भवेत् ॥ ६ ॥ निरामयं शमरूपम् ॥ ८ ॥ अन्यच्चिकीर्षितं रणम् ॥ १० ॥ गुरुः श्रेष्ठः ॥ ११ ॥

[ लक्षा० ] यदिदं भाषितं वाक्यमित्यत्र यदिदं भवद्वाक्यं तत्तथैव तत् धर्मराजवाक्यं तथैव तथा वा भवति अन्यथा वा भवतीत्यर्थः ॥ ४ ॥ येन धर्मसुते दृष्टेत्यत्र

४ म. तथैव च । तथैव दैवं द्र । ५ म. केनैवं मन्यसे कृष्णमस्मत्तः पापमाहितः । कुर्वन्ति तेन कर्माणि नास्ति कर्मफलोदयः । ६ म. येन शर्म ।

९ म. करिष्यसि न संशयः । १० म. ॰मतोऽन्यत्ते ।

समाहूतो निवर्तेत प्राणत्यागेऽप्युपस्थिते ।
अधर्मेण जितान्दृष्ट्वा वने प्रव्रजितांस्तथा ॥ १४ ॥
वध्यतां मम वार्ष्णेय निर्गतोऽसौ सुयोधनः ।
न चैतदद्भुतं कृष्ण मित्रार्थे यच्चिकीर्षसि ।
क्रिया कथं च मुख्या स्यान्मृदुना चेतरेण वा॥१५॥
अथवा मन्यसे ज्यायान् वधस्तेषामनन्तरम् ।
तदेव क्रियतामाशु न विचार्यमतस्त्वया ॥ १६ ॥
जानासि हि यथैतेन द्रौपदी पापबुद्धिना ।
परिक्लिष्टा सभामध्ये तच्च तस्योपमर्षितम् ॥ १७ ॥
स नाम सम्यग्वर्तेत पाण्डवेष्विति माधव ।
न मे संजायते बुद्धिर्बीजमुप्तमिवोषरे ॥ १८ ॥
तस्माद्यन्मन्यसे युक्तं पाण्डवानां हितं च यत् ।
तथाऽऽशु कुरु वार्ष्णेय यन्नः कार्यमनन्तरम्॥१९॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

## एकोनाशीतितमोऽध्यायः ७९

कार्यसिद्धिर्हि दैवपुरुषकारोभयायत्ता तन्मया शमं याचितोऽपि न स गृह्णीयान्नचाहं दैवमन्यथयितुं शक्नोमि नच शममिच्छामीति जानन्नपि कथमद्य मामभिशङ्कसे इत्यर्जुनं प्रति भगवदुक्तिः ॥ १ ॥

श्रीभगवानुवाच—

एवमेतन्महाबाहो यथा वदसि पाण्डव ।
पाण्डवानां कुरूणां च प्रतिपत्स्ये निरामयम् ॥१॥
सर्वं त्विदं ममायत्तं बीभत्सो कर्मणोर्द्वयोः ।
क्षेत्रं हि रसवच्छुद्धं कर्मणैवोपपादितम् ॥ २ ॥
ऋते वर्षान्न कौन्तेय जातु निर्वर्तयेत्फलम् ।
तत्र वै पौरुषं ब्रूयुरासेकं यत्र कारितम् ॥ ३ ॥
तत्र चापि ध्रुवं पश्येच्छोषणं दैवकारितम् ।
तदिदं निश्चितं बुद्ध्या पूर्वैरपि महात्मभिः ॥ ४ ॥
दैवे च मानुषे चैव संयुक्तं लोककारणम् ।
अहं हि तत्करिष्यामि परं पुरुषकारतः ॥ ५ ॥

---

धर्मसुते या श्रीर्दृष्टा सा येन दुर्योधनेन नापकर्षिता बलात्कारेण नापकर्षिता ? अपकर्षितेति पाठे स्पष्टोर्थः । येनापश्यतोऽपायमित्यत्र या संपत् अपायमपश्यतः धर्मिष्ठात् धर्मराजात् ॥ १२ ॥

[ नील० ] समाहूतो द्यूतार्थम् ॥१४॥ निर्गतः निश्चयेन प्राप्तः कथंच कथमपि मुख्या फलवती मृदुना साम्ना इतरेण युद्धेन ॥ १५ ॥ नाम निश्चितं स पाण्डवेषु सम्यग्वर्तेतेति बुद्धिर्मे न संजायते नोत्पद्यते ॥ १८ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

[ अर्जु० ] वध्यतां निर्गतः निश्चयेन प्राप्तः ॥ १५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

[ सर्व० ] समाहूतो द्यूतेन ॥ १४ ॥ निर्गतो निश्चयेन गतः मुख्या फलवती मृदुना शमेन इतरेण युद्धेन ॥१५॥ स नामेति नाम संभावनायाम् । सम्यक् पाण्डवेषु वर्त्तेतेति संभावितमिति न मे जायते बुद्धिर्बीजमुप्तमिवोषरे संभावितमित्येवं यथा न बुद्धिर्जायते ॥ १८ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

[ लक्षा० ] वध्यतां वध्यत्वं निर्गतः नितरांगतः ॥१५॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥

[ नील० ] एवमिति ॥ १ ॥ द्वयोः कर्मणोः शमयुद्धयोर्मध्ये इदमनामयं सर्वं कृत्स्नं मम दूतस्यायत्तमधीनं तथापि दैवानुकूल्यमत्रापेक्षितमित्याह–क्षेत्रमिति । कर्मणा कर्षणेन वाप्यादिजलदानेन च शुद्धं भूदोषहीनं रसवदार्द्रं च उपपादितं कृतं तत् कदाचिद्वर्षं विनाऽपि फलप्रदं भवेत् ॥ २ ॥ अत्र केवलं पौरुषस्यैव श्रैष्ठ्यं दृष्टमित्याह–तत्रेति ॥ ३ ॥ एतदपि दैवाधीनमेवेत्याह–तत्र चापीति । शोषणं वाप्यादेः सर्वथा वृष्ट्यभावे यथा न फलनिष्पत्तिस्तद्वद्दैवाभावेपीत्यर्थः ॥ ४ ॥ संयुक्तमाहितं लोककारणं लोकहितसाधनम् ॥ ५ ॥

[ अर्जु० ] द्वयोर्हिताहितयोः शुद्धं न दूषितम् ॥ २ ॥ मानुषे पौरुषे लोककारणं पञ्चभूतानि ॥ ५ ॥

[ सर्व० ] कर्मणोर्द्वयोः प्राक् नैहजन्मिकयोः । रसवदत्यन्ताशुष्कं शुद्धं क्षाराद्यदूषितम् । कर्मणा पुरुषकारेण ॥२॥ वर्षा दैवकर्म आसेकं बीजवपनं यत्र कारितं पौरुषेण

---

१५ ज. विख्यातोऽसौ । १८ म. सभो न सम्य° । १९ म. यत्ते । अष्टसप्ततितमोऽध्यायः ॥ ७८ ॥ १ म. उत्तरार्धं नास्ति । ३ म. तत्रापि पौरुषं प्राहुरा° । ४ म. पूर्वार्धं नास्ति ॥ ऊनाशीतितमोऽध्यायः ॥ ७९ ॥

दैवं तु न मया शक्यं कर्म कर्तुं कथंचन ।
स हि धर्मं च लोकं च त्यक्त्वा चरति दुर्मतिः॥६॥
नहि संतप्यते तेन तथारूपेण कर्मणा ।
तथापि बुद्धिं पापिष्ठां वर्धयन्त्यस्य मन्त्रिणः ॥७॥
शकुनिः सूतपुत्रश्च भ्राता दुःशासनस्तथा ।
स हि त्यागेन राज्यस्य न शर्म समुपैष्यति ॥८॥
अन्तरेण वधं पार्थ सानुबन्धः सुयोधनः ।
न चापि प्रणिपातेन त्यक्तुमिच्छति धर्मराट् ॥
याच्यमानश्च राज्यं स न प्रदास्यति दुर्मतिः॥९॥
न तु मन्ये स तद्वाच्यो यद्युधिष्ठिरशासनम् ।
उक्तं प्रयोजनं यत्तु धर्मराजेन भारत ॥ १० ॥
तथा पापस्तु तत्सर्वं न करिष्यति कौरवः ।
तस्मिंश्चाक्रियमाणेऽसौ लोके वध्यो भविष्यति ११॥
मम चापि स वध्यो हि जगतश्चापि भारत ।
येन कौमारके यूयं सर्वे विप्रकृताः सदा ॥ १२ ॥
विप्रलुप्तं च वो राज्यं नृशंसेन दुरात्मना ।
न चोपशाम्यते पापः श्रियं दृष्ट्वा युधिष्ठिरे ॥१३॥
असकृच्चाप्यहं तेन त्वत्कृते पार्थ भेदितः ।
न मया तद्गृहीतं च पापं तस्य चिकीर्षितम् ॥१४॥
जानासि हि महाबाहो त्वमप्यस्य परं मतम् ।
प्रियं चिकीर्षमाणं च धर्मराजस्य मामपि ॥ १५ ॥
संजानंस्तस्य चात्मानं मम चैव परं मतम् ।
अजानन्निव मां कस्मादर्जुनाद्याभिशङ्कसे ॥ १६ ॥
यच्चापि परमं दिव्यं तच्चाप्यनुगतं त्वया ।
विधानं विहितं पार्थ कथं शर्म भवेत्परैः ॥ १७ ॥
यत्तु वाचा मया शक्यं कर्मणा वापि पाण्डव ।
करिष्ये तदहं पार्थ न त्वाशंसे शमं परैः ॥ १८ ॥
कथं गोहरणे ह्युक्तो नैतच्छर्म तथा हितम् ।
याच्यमानो हि भीष्मेण संवत्सरगतेऽध्वनि ॥१९॥
तदैव ते पराभूता यदा संकल्पितास्त्वया ।
लवशः क्षणशश्चापि न च तुष्टः सुयोधनः ॥२०॥
सर्वथा तु मया कार्यं धर्मराजस्य शासनम् ।
विभाव्यं तस्य भूयश्च कर्म पापं दुरात्मनः ॥२१॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

---

निष्पाद्यम् ॥ ३ ॥ शोषणमवग्रहादिना ॥ ४ ॥ संयुक्त-मायत्तनम् लोककारणं लोकहितसाधनम् ॥ ५ ॥

[ नील० ] दैवं कर्म प्राक्तनं कर्म कर्त्तुमन्यथा कर्त्तु ॥ ६ ॥ पुरुषकाराच्छमोऽप्यत्र दुःसंपाद इत्याह—स हीति । त्यागेन दानेन ॥ ८ ॥ सानुबन्धः सपरिवारः । न चेति । एको राज्यं त्यक्तुं नेच्छति परो दातुं नेच्छतीत्यर्थः ॥ ९ ॥ शासनं पञ्चग्रामान्देहीति तत् न वक्तव्यः दैन्यद्योतकत्वादिति भावः । अफलत्वाच्च नैवं स वाच्य इत्याह—उक्तमिति । प्रयोजनं शमम् ॥ १० ॥ अभिशङ्कसे मां शममनिच्छन्तमिव मन्यसे ॥ १६ ॥ दिव्यं विधानं भूभारापहारार्थं स्वर्गाद्देवानामवतरणम् ॥ १७ ॥ आशंसे संभावयामि ॥ १८ ॥ कथमिति भीष्मेण एतच्छर्म याच्यमानोऽपि सः हितं कथं नोक्तः अपि तु उक्त उपदिष्ट एव दुर्योधनस्तथापि न गृहीतवानिति भावः संवत्सरगते गतसंवत्सरे ॥ १९ ॥ संकल्पिताः वध्यत्वेन निश्चिताः लवशः क्षणशः लवोंशः क्षणः स्वीकारः राज्यलेशस्य स्वीकारेऽपि न संतुष्ट इत्यर्थः । क्रमेण षष्ठ्यर्थे सप्तम्यर्थे च शस्प्रत्ययः ॥ २० ॥ विभाव्यं विचारणीयम् ॥ २१ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे ऊनाशीतितमोऽध्यायः ॥ ७९ ॥

[ अर्जु० ] दैवं कर्म भाग्यमविद्यमानं कर्त्तुमशक्यम् ॥६ ॥ सानुबन्धः सपरिवारः ॥ ९ ॥ न न वाच्यो वाच्य एव ॥ १० ॥ आत्मानमशेषम् ॥१६॥ परमं दिव्यमैश्वरं ( सं )जिहीर्षाम् ॥ १७ ॥ विधानविहितं विधानं विधिस्तेन कृतम् ॥ १८ ॥ न त्वाशंसे न पुनरिच्छामि ॥१९॥ पराभूताः नष्टाः सङ्कल्पिताः वध्यत्वेन ॥ २० ॥ विभाव्यं विचार्यम् ॥ २१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकोनाशीतितमोऽध्यायः ॥ ७९ ॥

[ सर्व० ] दैवं भवतां भाग्यमविद्यमानं यदि तदा न शक्यम् ॥ ६ ॥ अन्यदपि शमार्थं पुरुषकारविरोध्याह । स हीति ॥८॥ सानुबन्धः सपरिवारः । प्रणिपातेन तस्य, त्यक्तुं राज्यम् ॥ ९ ॥ तद्वाच्यः तादृग्वचनयोग्यस्तथापि युधिष्ठिरादेशाद्वक्ष्यते इत्याशयेन युधिष्ठिरशासनमित्युक्तम् । अवाच्यत्वे हेतुरुक्तमित्यादि प्रयोजनं शमरूपम् ॥ १० ॥ त्वत्कृते त्वदपकारार्थं ॥१४॥ अभिशंकसे शक्तो नाऽहं शमं कारयिष्यामीति । यतो मां प्रति युद्धमुपदिशतीति ॥ १६ ॥ यद्यपि परमं विधानं विहितं विधिना निर्मितं दिव्यं दिविभवं दुर्योधनादयो भवद्भिर्हन्तव्या इति तथा च कथं परैः सह शमो भवेत् ॥ १७ ॥ आशंसे संभाव-

## अशीतितमोऽध्यायः ८०

नकुलेन श्रीकृष्णं प्रति यद्भवान्प्राप्तकालं क्षमं च मन्यते तत्करोत्विति कथनम् ॥ १ ॥

**नकुल उवाच—**

उक्तं बहुविधं वाक्यं धर्मराजेन माधव ।
धर्मज्ञेन वदान्येन श्रुतं चैव हि तत्त्वया ॥ १ ॥
मतमाज्ञाय राज्ञश्च भीमसेनेन माधव ।
संशमो बाहुवीर्यं च ख्यापितं माधवात्मनः ॥ २ ॥
तथैव फाल्गुनेनापि यदुक्तं तत्त्वया श्रुतम् ।
आत्मनश्च मतं वीर कथितं भवताऽसकृत् ॥ ३ ॥
सर्वमेतदतिक्रम्य श्रुत्वा परमतं भवान् ।
यत्प्राप्तकालं मन्येथास्तत्कुर्याः पुरुषोत्तम ॥ ४ ॥
तस्मिँस्तस्मिन्निमित्ते हि मतं भवति केशव ।
प्राप्तकालं मनुष्येण क्षमं कार्यमरिन्दम ॥ ५ ॥
अन्यथा चिन्तितो ह्यर्थः पुनर्भवति सोऽन्यथा ।
अनित्यमतयो लोके नराः पुरुषसत्तम ॥ ६ ॥
अन्यथाबुद्धयो ह्यासन्नस्मासु वनवासिषु ।
अदृश्येष्वन्यथा कृष्ण दृश्येषु पुनरन्यथा ॥ ७ ॥
अस्माकमपि वार्ष्णेय वने विचरतां तदा ।
न तथा प्रणयो राज्ये यथा संप्रति वर्तते ॥ ८ ॥
निवृत्तवनवासान्नः श्रुत्वा वीर समागताः ।
अक्षौहिण्यो हि सप्तेमास्त्वत्प्रसादाज्जनार्दन ॥ ९ ॥
इमान् हि पुरुषव्याघ्रानचिन्त्यबलपौरुषान् ।
आत्तशस्त्रान् रणे दृष्ट्वा न व्यथेदिह कः पुमान् ॥ १० ॥
स भवान्कुरुमध्ये तं सान्त्वपूर्वं भयोत्तरम् ।
ब्रूयाद्वाक्यं यथा मन्दो न व्यथेत सुयोधनः ॥ ११ ॥
युधिष्ठिरं भीमसेनं बीभत्सुं चापराजितम् ।
सहदेवं च मां चैव त्वां च रामं च केशव ॥ १२ ॥
सात्यकिं च महावीर्यं विराटं च सहात्मजम् ।
द्रुपदं च सहामात्यं धृष्टद्युम्नं च माधव ॥ १३ ॥
काशिराजं च विक्रान्तं धृष्टकेतुं च चेदिपम् ।
मांसशोणितभृन्मर्त्यः प्रतियुध्येत को युधि ॥ १४ ॥
स भवान् गमनादेव साधयिष्यत्यसंशयम् ।
इष्टमर्थं महाबाहो धर्मराजस्य केवलम् ॥ १५ ॥
विदुरश्चैव भीष्मश्च द्रोणश्च सहबाह्लिकः ।
श्रेयः समर्था विज्ञातुमुच्यमानास्त्वयाऽनघ ॥ १६ ॥
ते चैनमनुनेष्यन्ति धृतराष्ट्रं जनाधिपम् ।
तं च पापसमाचारं सहामात्यं सुयोधनम् ॥ १७ ॥
श्रोता चार्थस्य विदुरस्त्वं च वक्ता जनार्दन ।
कमिवार्थं निवर्तन्तं स्थापयेतां न वर्त्मनि ॥ १८ ॥

इति श्रीमहाभारते उद्योगपर्वणि अशीतितमोऽध्यायः ॥ ८० ॥

---

यामि ॥ १८ ॥ सङ्कल्पिता वध्या इति निश्चिताः । लवशः क्षणशः लवे लवे क्षणे क्षणे न तुष्टो न प्रहृष्टो भवति त्वया च वध्यत्वेन संकल्पितः ॥ २० ॥ विभाव्यं लोके ख्यापनीयम् ॥ २१ ॥

इति श्रीमहा० उद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्याया-
मूनाशीतितमोऽध्यायः ॥ ७९ ॥

[नील०] उक्तमिति ॥ १ ॥ राज्ञो मतमाज्ञाय संशमः सम्यक् शमः ख्यापितः हे माधव मधुदेशज आत्मनः मतमाज्ञाय बाहुवीर्यं ख्यापितं हे माधव लक्ष्मीपते ॥ २ ॥ तस्मिन्निति निमित्तभेदान्मतभेदो भवति कुलधुर्यस्य युधिष्ठिरस्य मतं कुलोच्छेदो मा भूदिति केशाकर्षणक्लिष्टायाः द्रौपद्या मतं शत्रवो निर्मूलमुन्मूलनीया इति तत्र कालानुरूपं यत् क्षमं योग्यं तत्त्वया कार्यमित्यर्थः ॥ ५ ॥ अनित्या नाशवती मतिर्येषां ते ॥ ६ ॥ न केवलं व्यक्तिभेदान्मतभेदः किंतु व्यक्त्यैक्येऽपि अवस्थाभेदान्मतभेदो भवतीत्याह—अन्यथेत्यादिना । अदृश्येष्विति अज्ञातवासकाले कथमनावृताश्चरिष्याम इत्येव मनोरथ आसीत् दृश्येषु इदानीं भव्येषु अस्मासु कदा राज्यं प्राप्स्याम इत्यस्तीतिभावः ॥ ७ ॥ प्रणय आदरः ॥ ८ ॥ न व्यथेत् क्रुद्ध्येत् ॥ ९ ॥ अर्थं प्रयोजनं निवर्तन्तं भ्रश्यन्तम् ॥ १८ ॥

इति उद्योगप० नैलकंठीये० भारतभावदीपे
अशीतितमोऽध्यायः ॥ ८० ॥

[अर्जु०] विवर्तन्तं विरुद्धेन मार्गेण गच्छन्तम् ॥ १८ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि
अशीतितमोऽध्यायः ॥ ८० ॥

[सर्व०] तस्मिंस्तस्मिन्निमित्तभेदेन मतं भवति । प्रत्येकं प्राप्तकालं तत्कालोचितं क्षमं शक्यं तव च कार्यम् ॥ ५ ॥ अदृश्येष्वज्ञातवासे वसत्सु दृश्येष्विदानीम् ॥ ७ ॥

---

१० म. रणे कृत्वा । अशीतितमोऽध्यायः ॥ ८० ॥

## एकाशीतितमोऽध्यायः ८१

सहदेवेन श्रीकृष्णस्य कौरवैः सह युद्धयोजनप्रार्थनं सर्वैस्तदनुमोदनं च ॥ १ ॥

**सहदेव उवाच—**

यदेतत्कथितं राज्ञा धर्म एष सनातनः ।
यथा च युद्धमेव स्यात्तथा कार्यमरिन्दम ॥ १ ॥
यदि प्रशममिच्छेयुः कुरवः पाण्डवैः सह ।
तथापि युद्धं दाशार्ह योजयेथाः सहैव तैः ॥ २ ॥
कथं नु दृष्ट्वा पाञ्चालीं तथा कृष्ण सभागताम् ।
अवधेन प्रशाम्येत मम मन्युः सुयोधने ॥ ३ ॥
यदि भीमार्जुनौ कृष्ण धर्मराजश्च धार्मिकः ।
धर्ममुत्सृज्य तेनाहं योद्धुमिच्छामि संयुगे ॥ ४ ॥

**सात्यकिरुवाच—**

सत्यमाह महाबाहो सहदेवो महामतिः ।
दुर्योधनवधे शान्तिस्तस्य कोपस्य मे भवेत् ॥ ५ ॥
न जानासि यथा दृष्ट्वा चीराजिनधरान्वने ।
तवापि मन्युरुद्भूतो दुःखितान्प्रेक्ष्य पाण्डवान् ॥ ६ ॥
तस्मान्माद्रीसुतः शूरो यदाह रणकर्कशः ।
वचनं सर्वयोधानां तन्मतं पुरुषोत्तम ॥ ७ ॥

**वैशम्पायन उवाच—**

एवं वदति वाक्यं तु युयुधाने महामतौ ।
सुभीमः सिंहनादोऽभूद्योधानां तत्र सर्वशः ॥ ८ ॥
सर्वे हि सर्वशो वीरास्तद्वचः प्रत्यपूजयन् ।
साधु साध्विति शैनेयं हर्षयन्तो युयुत्सवः ॥ ९ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

## द्व्यशीतितमोऽध्यायः ८२

द्रौपद्या दुर्योधने दण्डपातनमृते न मे हृदयस्य शान्तिर्भविष्यतीति प्रार्थितेन भगवता सर्वं त्वदभिप्रेतं संपत्स्यत इति तदाश्वासनम् ॥ १ ॥

**वैशम्पायन उवाच—**

राज्ञस्तु वचनं श्रुत्वा धर्मार्थसहितं हितम् ।
कृष्णा दाशार्हमासीनमब्रवीच्छोककर्शिता ॥ १ ॥
सुता द्रुपदराजस्य स्वसितायतमूर्धजा ।
संपूज्य सहदेवं च सात्यकिं च महारथम् ॥ २ ॥
भीमसेनं च संशान्तं दृष्ट्वा परमदुर्मनाः ।
अश्रुपूर्णेक्षणा वाक्यमुवाचेदं मनस्विनी ॥ ३ ॥
विदितं ते महाबाहो धर्मज्ञ मधुसूदन ।
यथा निकृतिमास्थाय भ्रंशिताः पाण्डवाः सुखात् ४
धृतराष्ट्रस्य पुत्रेण सामात्येन जनार्दन ।
यथा च सञ्जयो राज्ञा मन्त्रं रहसि श्रावितः ॥ ५ ॥

---

न व्यथेत न क्रुध्येत ॥ १० ॥ विवर्तन्तं विपरीतं वर्तमानम् ॥ १८ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामशीतितमोऽध्यायः ॥ ८० ॥

[ लक्षा० ] कमिवार्थं निवर्तेथा इत्यत्र अर्थ तेषां मनोगतमर्थं कमिव विचार्य निवर्तेथाः तान् वर्त्मनि न स्थापयेथाः ॥ १८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अशीतितमोऽध्यायः ॥ ८० ॥

[ नील० ] यदेतदिति ॥ १ ॥ यदि यद्यपि भीमादयो धार्मिकाः स्युः तथापि अहं धर्ममुत्सृज्य तेन सह योद्धुमिच्छामि ॥ ४ ॥ महाबाहो हे कृष्ण ॥ ५ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकाशीतितमोऽध्यायः ॥ ८१ ॥

[ अर्जु० ] तथा सभागतामित्यन्वयः ॥ ३ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकाशीतितमोऽध्यायः ॥ ८१ ॥

[ नील० ] राज्ञस्त्विति ॥१॥ स्वसितायतमूर्धजा अतिकृष्णा दीर्घाश्च केशा यस्याः ॥२॥ मन्त्रं शमप्रधानम् ॥५॥

[ अर्जु० ] असितायतमूर्धजा । असिता अबद्धा आयता दीर्घा मूर्धजाः केशाः यया ॥ २ ॥

---

३ म. कृष्णां समागताम् । ५ म. सम्यक्कोपस्य मे भवेत् । ६ म. जानासि हि यथा दृष्ट्वा । एकाशीतितमोऽध्यायः ॥ ८१ ॥

युधिष्ठिरस्य दाशार्ह तच्चापि विदितं तव ।
यथोक्तः सञ्जयश्चैव तच्च सर्वं श्रुतं त्वया ॥ ६ ॥
पञ्च नस्तात दीयन्तां ग्रामा इति महाद्युते ।
अविस्थलं वृकस्थलं माकन्दीं वारणावतम् ॥ ७ ॥
अवसानं महाबाहो कंचिदेकं च पञ्चमम् ।
इति दुर्योधनो वाच्यः सुहृदश्चास्य केशव ॥ ८ ॥
न चापि ह्यकरोद्वाक्यं श्रुत्वा कृष्ण सुयोधनः ।
युधिष्ठिरस्य दाशार्ह श्रीमतः सन्धिमिच्छतः ॥ ९ ॥
अप्रदानेन राज्यस्य यदि कृष्ण सुयोधनः ।
सन्धिमिच्छेन्न कर्तव्यं तत्र गत्वा कथंचन ॥ १० ॥
शक्ष्यन्ति हि महाबाहो पाण्डवाः सृञ्जयैः सह ।
धार्तराष्ट्रबलं घोरं क्रुद्धं प्रतिसमासितुम् ॥ ११ ॥
नहि साम्ना न दानेन शक्योऽर्थस्तेषु कश्चन ।
तस्मात्तेषु न कर्तव्या कृपा ते मधुसूदन ॥ १२ ॥
साम्ना दानेन वा कृष्ण ये न शाम्यन्ति शत्रवः ।
योक्तव्यस्तेषु दण्डः स्याज्जीवितं परिरक्षता ॥ १३ ॥
तस्मात्तेषु महादण्डः क्षेप्तव्यः क्षिप्रमच्युत ।
त्वया चैव महाबाहो पाण्डवैः सह सृञ्जयैः ॥ १४ ॥
एतत्समर्थं पार्थानां तव चैव यशस्करम् ।
क्रियमाणं भवेत्कृष्ण क्षत्रस्य च सुखावहम् ॥ १५ ॥
क्षत्रियेण हि हन्तव्यः क्षत्रियो लोभमास्थितः ।
अक्षत्रियो वा दाशार्ह स्वधर्ममनुतिष्ठता ॥ १६ ॥
अन्यत्र ब्राह्मणात्तात सर्वपापेष्ववस्थितात् ।
गुरुर्हि सर्ववर्णानां ब्राह्मणः प्रसृताग्रभुक् ॥ १७ ॥
यथाऽवध्ये वध्यमाने भवेद्दोषो जनार्दन ।
स वध्यस्यावधे दृष्ट इति धर्मविदो विदुः ॥ १८ ॥
यथा त्वां न स्पृशेदेष दोषः कृष्ण तथा कुरु ।
पाण्डवैः सह दाशार्हैः सृञ्जयैश्च ससैनिकैः ॥ १९ ॥
पुनरुक्तं च वक्ष्यामि विश्रम्भेण जनार्दन ।
का तु सीमन्तिनी मादृक् पृथिव्यामस्ति केशव २० ॥
सुता द्रुपदराजस्य वेदिमध्यात्समुत्थिता ।
धृष्टद्युम्नस्य भगिनी तव कृष्ण प्रिया सखी ॥ २१ ॥
आजमीढकुलं प्राप्ता स्नुषा पाण्डोर्महात्मनः ।
महिषी पाण्डुपुत्राणां पञ्चेन्द्रसमवर्चसाम् ॥ २२ ॥
सुता मे पञ्चभिर्वीरैः पञ्च जाता महारथाः ।
अभिमन्युर्यथा कृष्ण तथा ते तव धर्मतः ॥ २३ ॥
साऽहं केशग्रहं प्राप्ता परिक्लिष्टा सभां गता ।
पश्यतां पाण्डुपुत्राणां त्वयि जीवति केशव ॥ २४ ॥
जीवत्सु पाण्डुपुत्रेषु पञ्चालेष्वथ वृष्णिषु ।
दासीभूताऽस्मि पापानां सभामध्ये व्यवस्थिता २५
निरमर्षेष्वचेष्टेषु प्रेक्षमाणेषु पाण्डुषु ।
पाहि मामिति गोविन्द मनसा चिन्तितोऽसि मे २६
यत्र मां भगवान्राजा श्वशुरो वाक्यमब्रवीत् ।
वरं वृणीष्व पाञ्चालि वरार्हाऽसि मता मम ॥ २७ ॥
अदासाः पाण्डवाः सन्तु सरथाः सायुधा इति ।
मयोक्ते यत्र निर्मुक्ता वनवासाय केशव ॥ २८ ॥
एवंविधानां दुःखानामभिज्ञोऽसि जनार्दन ।
त्रायस्व पुण्डरीकाक्ष सभर्तृज्ञातिबान्धवान् ॥ २९ ॥
नन्वहं कृष्ण भीष्मस्य धृतराष्ट्रस्य चोभयोः ।
स्नुषा भवामि धर्मेण साहं दासी कृता बलात् ३० ॥
धिक्पार्थस्य धनुष्मत्तां भीमसेनस्य धिग्बलम् ।
यत्र दुर्योधनः कृष्ण मुहूर्तमपि जीवति ॥ ३१ ॥
यदि तेऽहमनुग्राह्या यदि तेऽस्ति कृपा मयि ।
धार्तराष्ट्रेषु वै कोपः सर्वः कृष्ण विधीयताम् ॥ ३२ ॥

---

[ नील० ] प्रतिसमासितुं प्रतिपक्षतया स्थातुम् ॥ ११ ॥ कश्चन अर्थः शमोपायः शक्यः कर्तुमिति शेषः ॥ १२ ॥ समर्थं युक्तम् ॥ १५ ॥ प्रसृतं प्रदत्तं च तदग्र्यं च तस्य भोक्ता प्रसृताग्रभुक् पूज्य इत्यर्थः ॥ १७ ॥

[ अर्जु० ] प्रतिसमासितुं बाधितुम् ॥ ११ ॥ समर्थं युक्तम् ॥ १५ ॥ सर्वपापेषु अपीति शेषः । प्रश्रृताग्रभुक् प्रश्रृतं लहनं तस्याग्रभुक् ॥ १७ ॥ अवध्ये बालादौ ॥ १८ ॥ विस्रम्भेण विश्वासेन ॥ २० ॥ अभिमन्युर्यथा तव भागिनेयस्तथा तेऽपि ॥ २३ ॥ निरामर्षेषु···(?) ॥ २६ ॥ विधीयतां विशिष्टः क्रियतां वधेनापनीयताम् ३२

[ सर्व० ] प्रतिसमासितुं प्रतिपक्षतया स्थातुम् ॥ ११ ॥ समर्थं समर्थार्थं प्रयोजनवत् ॥ १५ ॥ प्रसृतं पन्थानम् ॥ १७ ॥ तथा ते तव पञ्च स्वस्त्रीयाः ॥ २३ ॥ विधीयतां प्रवर्त्यताम् ॥ ३२ ॥

[ लक्षा० ] विनाशे पाण्डवाः सहेत्यत्र विनाशे जीविताशां विना वर्तमानः विनाशः संग्रामः तस्मिन् ॥ ११ ॥

---

६ म. युधिष्ठिरेण दा° । ८ म. किंचिदेवात्र पञ्चमम् । ९ म. तच्चापि नाकरोत् । म. सुयोधनम् । १३ म. मोक्तव्यस्तेषु । १८ म. वृत्तविदो । २९ म. त्राहि मां पुण्डरीकाक्ष ।

**वैशम्पायन उवाच—**

इत्युक्त्वा मृदुसंहारं वृजिनाग्रं सुदर्शनम् ।
सुनीलमसितापाङ्गी सर्वगन्धाधिवासितम् ॥ ३३ ॥
सर्वलक्षणसंपन्नं महाभुजगवर्चसम् ।
केशपक्षं वरारोहा गृह्य वामेन पाणिना ॥ ३४ ॥
पद्माक्षी पुण्डरीकाक्षमुपेत्य गजगामिनी ।
अश्रुपूर्णेक्षणा कृष्णा कृष्णं वचनमब्रवीत् ॥ ३५ ॥
अयं ते पुण्डरीकाक्ष दुःशासनकरोद्धृतः ।
स्मर्तव्यः सर्वकार्येषु परेषां संधिमिच्छता ॥ ३६ ॥
यदि भीमार्जुनौ कृष्ण कृपणौ सन्धिकामुकौ ।
पिता मे योत्स्यते वृद्धः सह पुत्रैर्महारथैः ॥ ३७ ॥
पञ्च चैव महावीर्याः पुत्रा मे मधुसूदन ।
अभिमन्युं पुरस्कृत्य योत्स्यन्ते कुरुभिः सह ॥ ३८ ॥
दुःशासनभुजं श्यामं संछिन्नं पांसुगुण्ठितम् ।
यद्यहं तु न पश्यामि का शान्तिर्हृदयस्य मे ॥ ३९ ॥
त्रयोदश हि वर्षाणि प्रतीक्षन्त्या गतानि मे ।
विधाय हृदये मन्युं प्रदीप्तमिव पावकम् ॥ ४० ॥
विदीर्यते मे हृदयं भीम वाक्शल्यपीडितम् ।
योऽयमद्य महाबाहुर्धर्ममेवानुपश्यति ॥ ४१ ॥
इत्युक्त्वा बाष्परुद्धेन कण्ठेनायतलोचना ।
रुरोद कृष्णा सोत्कम्पं सस्वरं बाष्पगद्गदम् ॥ ४२ ॥
स्तनौ पीनायतश्रोणी सहितावभिवर्षती ।
द्रवीभूतमिवात्युष्णं मुञ्चती वारि नेत्रजम् ॥ ४३ ॥
तामुवाच महाबाहुः केशवः परिसान्त्वयन् ।
अचिराद्द्रक्ष्यसे कृष्णे रुदतीर्भरतस्त्रियः ॥ ४४ ॥
एवं ता भीरु रोत्स्यन्ति निहतज्ञातिबान्धवाः ।
हतमित्रा हतबला येषां क्रुद्धाऽसि भामिनि ॥ ४५ ॥
अहं च तत्करिष्यामि भीमार्जुनयमैः सह ।
युधिष्ठिरनियोगेन दैवाच्च विधिनिर्मितात् ॥ ४६ ॥
धार्तराष्ट्राः कालपक्वा न चेच्छृण्वन्ति मे वचः ।
शेष्यन्ते निहता भूमौ श्वसृगालादनीकृताः ॥ ४७ ॥
चलेद्धि हिमवान् शैलो मेदिनी शतधा फलेत् ।
द्यौः पतेच्च सनक्षत्रा न मे मोघं वचो भवेत् ॥ ४८ ॥
सत्यं ते प्रतिजानामि कृष्णे बाष्पो निगृह्यताम् ।
हतामित्रान् श्रिया युक्तानचिराद्द्रक्ष्यसे पतीन् ॥ ४९ ॥

इति श्रीमहाभारते उद्योगपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

## त्र्यशीतितमोऽध्यायः ८३

कुरून्प्रयान्तं श्रीकृष्णं प्रति युधिष्ठिरेण पृथाश्वासनप्रार्थनम् ॥ १ ॥ पथि भगवता ऋषीणां दर्शनं, पूजितैश्च तैः सभायां भवद्वचनशुश्रूषाकुतूहलिनस्त्वां तत्र पुनर्द्रक्ष्याम इति कथनम् ॥ २ ॥

**अर्जुन उवाच—**

कुरूणामद्य सर्वेषां भवान्सुहृदनुत्तमः ।
संबन्धी दयितो नित्यमुभयोः पक्षयोरपि ॥ १ ॥

---

ब्राह्मणः प्रसृताग्रभुगित्यत्र प्रकर्षेण सृतं प्राप्तमग्रं ग्रासाग्रभागः तं भुनक्तीति ग्रासाग्रभुक् ॥ १७ ॥

[ नील० ] मृदुसंहारं वेणीरूपेण समाहृतमपि मृदुं वृजिनाग्रं कुटिलाग्रं केशवत्सूक्ष्माग्रं वा वृजिनः । कुटिलेऽन्यवदिति विश्वः । सुदर्शनं रमणीयम् ॥ ३३ ॥ हे भीम शत्रुभयंकर कृष्ण योऽयं भवान् ॥ ४१ ॥ अत्युष्णं वह्निम् ॥ ४३ ॥ रोत्स्यन्ति रोदिष्यन्ति ॥ ४५ ॥

इति श्रीनैल० उद्योग० भा० भा० द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

[ अर्जु० ] मृदुसंहारं मृदुग्रथनं सुदर्शनं नयनप्रीतिकरम् ॥ ३३ ॥ महाभुजगवर्चसं शत्रूणां भयंकरत्वात् केशपक्षं केशकलापम् ॥ ३४ ॥ कृपणौ कृपायुक्तौ ॥ ३७ ॥ सहितौ निरन्तरौ । द्रवीभूतं हृदयमिव ॥ ४३ ॥ रोत्स्यन्ति रोदिष्यन्ति ॥ ४५ ॥ अदनीकृता भक्षीकृताः ॥ ४७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

[ सर्व० ] मृदुसंहारम् समाहृतमपि मृदु । वृजिनाग्रं कुटिलाग्रं सुदर्शनं दर्शनीयम् ॥ ३३ ॥ अत्युष्णं दुःखम् तद्द्रवीभूतमिव ॥ ४३ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञ० द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

[ लक्षा० ] इत्युक्त्वा मृदुसंभारमित्यत्र सम्यक् भारो यस्य स संभारः । मृदुश्चासौ संभारश्च मृदुसंभारः तं वृजिनाग्रं कुटिलाग्रम् ॥ ३३ ॥

इति श्रीमहा० उद्यो० वा० टी० ल० द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

[ नील० ] कुरूणामिति ॥ १ ॥

---

३३ म. मृदुसंग्राहं । म. रम्यगन्धाधिवासितम् । ३६ म. सर्वलोकेषु । ४२ म. बाष्पसन्नेन । द्व्यशीतितमोऽध्यायः ॥ ८२ ॥

पाण्डवैर्धार्तराष्ट्राणां प्रतिपाद्यमनामयम् ।
समर्थः प्रशमं चैव कर्तुमर्हसि केशव ॥ २ ॥
त्वमितः पुण्डरीकाक्ष सुयोधनममर्षणम् ।
शान्त्यर्थं भ्रातरं ब्रूया यत्तद्वाच्यममित्रहन् ॥ ३ ॥
त्वया धर्मार्थयुक्तं चेदुक्तं शिवमनामयम् ।
हितं नादास्यते बालो दिष्टस्य वशमेष्यति ॥ ४ ॥

श्रीभगवानुवाच—

धर्म्यमस्मद्धितं चैव कुरूणां यदनामयम् ।
एष यास्यामि राजानं धृतराष्ट्रमभीप्सया ॥ ५ ॥

वैशम्पायन उवाच—

ततो व्यपेते तमसि सूर्ये विमलवद्गते ।
मैत्रे मुहूर्ते संप्राप्ते मृद्वर्चिषि दिवाकरे ॥ ६ ॥
कौमुदे मासि रेवत्यां शरदन्ते हिमागमे ।
स्फीतसस्यसुखे काले कल्पः सत्ववतां वरः ॥ ७ ॥
मङ्गल्याः पुण्यनिर्घोषा वाचः शृण्वंश्च सूनृताः ।
ब्राह्मणानां प्रतीतानामृषीणामिव वासवः ॥ ८ ॥
कृत्वा पौर्वाह्णिकं कृत्यं स्नातः शुचिरलंकृतः ।
उपतस्थे विवस्वन्तं पावकं च जनार्दनः ॥ ९ ॥
ऋषभं पृष्ठ आलभ्य ब्राह्मणानभिवाद्य च ।
अग्निं प्रदक्षिणं कृत्वा पश्यन् कल्याणमग्रतः ॥ १० ॥
तत्प्रतिज्ञाय वचनं पाण्डवस्य जनार्दनः ।
शिनेर्नप्तारमासीनमभ्यभाषत सात्यकिम् ॥ ११ ॥
रथ आरोप्यतां शङ्खश्चक्रं च गदया सह ।
उपासङ्गाश्च शक्त्यश्च सर्वप्रहरणानि च ॥ १२ ॥
दुर्योधनश्च दुष्टात्मा कर्णश्च सहसौबलः ।
न च शत्रुरवज्ञेयो दुर्बलोऽपि बलीयसा ॥ १३ ॥
ततस्तन्मतमाज्ञाय केशवस्य पुरःसराः ।
प्रसस्रुर्योजयिष्यन्तो रथं चक्रगदाभृतः ॥ १४ ॥
तं दीप्तमिव कालाग्निमाकाशगमिवाशुगम् ।
सूर्यचन्द्रप्रकाशाभ्यां चक्राभ्यां समलंकृतम् ॥ १५ ॥
अर्धचन्द्रैश्च चन्द्रैश्च मत्स्यैः समृगपक्षिभिः ।
पुष्पैश्च विविधैश्चित्रं मणिरत्नैश्च सर्वशः ॥ १६ ॥
तरुणादित्यसंकाशं बृहन्तं चारुदर्शनम् ।
मणिहेमविचित्राङ्गं सुध्वजं सुपताकिनम् ॥ १७ ॥
सूपस्करमनाधृष्यं वैयाघ्रपरिवारणम् ।
यशोघ्नं प्रत्यमित्राणां यदूनां नन्दिवर्धनम् ॥ १८ ॥
वाजिभिः शैब्यसुग्रीवमेघपुष्पबलाहकैः ।
स्नातैः संपादयामासुः संपन्नैः सर्वसंपदा ॥ १९ ॥
महिमानं तु कृष्णस्य भूय एवाभिवर्धयन् ।
सुघोषः पतगेन्द्रेण ध्वजेन युयुजे रथः ॥ २० ॥
तं मेरुशिखरप्रख्यं मेघदुन्दुभिनिःस्वनम् ।
आरुरोह रथं शौरिर्विमानमिव कामगम् ॥ २१ ॥
ततः सात्यकिमारोप्य प्रययौ पुरुषोत्तमः ।
पृथिवीं चान्तरिक्षं च रथघोषेण नादयन् ॥ २२ ॥
व्यपोढाभ्रस्ततः कालः क्षणेन समपद्यत ।
शिवश्चानुववौ वायुः प्रशान्तमभवद्रजः ॥ २३ ॥
प्रदक्षिणानुलोमाश्च मङ्गल्या मृगपक्षिणः ।
प्रयाणे वासुदेवस्य बभूवुरनुयायिनः ॥ २४ ॥
मङ्गल्यार्थपदैः शब्दैरन्ववर्तन्त सर्वशः ।
सारसाः शतपत्राश्च हंसाश्च मधुसूदनम् ॥ २५ ॥

---

[ नील० ] प्रतिपाद्यं संपाद्यमनामयं कुशलम् ॥ २ ॥ यास्यामि तदेव कर्तुमिति शेषः । अभीप्सया प्राप्तुमिच्छया ॥ ५ ॥ विमलवद्गते निर्मलाकाशगे मैत्रे जन्मर्क्षादष्टमतारायां दूतस्य हि स्वामिबलेनैव बलवत्त्वमित्यर्थः ॥ ६ ॥ कौमुदे कार्तिके रेवत्यां अर्जुनस्य फाल्गुनीजातस्य रेवती मैत्रतारा भवतीति प्रसिद्धम् ॥ ७ ॥ प्रतिज्ञाय अनुस्मृत्य ॥ ११ ॥ आकाशगः सूर्यः आकाशमिव चेति पाठः जङ्गममाकाशतुल्यमित्यर्थः विशालत्वात् नक्षत्रोपमरत्नाचितत्वाच्च । तदेवाह—सूर्येति ॥ १५ ॥ सूपस्करं शोभनैरुपकरणैरुपेतम् ॥ १८ ॥ संपादयामासुः सज्जीकृतवन्तः ॥ १९ ॥ मङ्गल्यार्थपदैः विजयी भवेत्यादिमङ्गलावहैः २५

[ अर्जु० ] बालो मूर्खः दिष्टस्य दैवस्य ॥ ४ ॥ मैत्रे मित्रदैवते ॥ ६ ॥ कौमुदे उत्थानैकादशीपूर्वदशम्याम् आश्विनकृष्णषष्ठ्यामिति विमलबोधपादाः । कृष्णाष्टम्यां दुर्योधनादिभिः सह कथा । अत एव वक्ष्यति सप्तमाच्चापि दिवसादमावस्या भविष्यतीति । आश्विने रेवतीनक्षत्रे । स्फीतैः समृद्धैः सस्यैरन्नैः सुखे सुखावहे । कल्पो निरामयः संज्ञो वा दक्षो वा ॥ ७ ॥ प्रतीतानामाप्तानाम् ॥ ८ ॥ ऋषभं वृषमालभ्य स्पृष्ट्वा ॥ १० ॥ उपासङ्गाः तूणाः ॥ १२ ॥ प्रसस्रुः प्रसृतवन्तः ॥ १४ ॥ आकाशगं सूर्यम् । अध्वगं दूरस्थम् ॥ १५ ॥ अर्धचन्द्रैरिति । अर्धचन्द्रादयः तत्रोत्कीर्णा इत्यर्थः ॥ १६ ॥ सूपस्करं सपुण्यकृत् ।

---

५ म. मभीशयन् । ७ म. स्फीतैः सस्यैः सुखे । २१ म. विमानमिव

मन्त्राहुतिमहाहोमैर्हूयमानश्च पावकः ।
प्रदक्षिणमुखो भूत्वा विधूमः समपद्यत ॥ २६ ॥
वसिष्ठो वामदेवश्च भूरिद्युम्नो गयः क्रथः ।
शुक्रनारदवाल्मीका मरुतः कुशिको भृगुः ॥ २७ ॥
देवब्रह्मर्षयश्चैव कृष्णं यदुसुखावहम् ।
प्रदक्षिणमवर्तन्त सहिता वासवानुजम् ॥ २८ ॥
एवमेतैर्महाभागैर्महर्षिगणसाधुभिः ।
पूजितः प्रययौ कृष्णः कुरूणां सदनं प्रति ॥ २९ ॥
तं प्रयान्तमनुप्रायात्कुन्तीपुत्रो युधिष्ठिरः ।
भीमसेनार्जुनौ चोभौ माद्रीपुत्रौ च पाण्डवौ ॥ ३० ॥
चेकितानश्च विक्रान्तो धृष्टकेतुश्च चेदिपः ।
द्रुपदः काशिराजश्च शिखण्डी च महारथः ॥ ३१ ॥
धृष्टद्युम्नः सपुत्रश्च विराटः केकयैः सह ।
संसाधनार्थं प्रययुः क्षत्रियाः क्षत्रियर्षभम् ॥ ३२ ॥
ततोऽनुव्रज्य गोविन्दं धर्मराजो युधिष्ठिरः ।
राज्ञां सकाशे द्युतिमानुवाचेदं वचस्तदा ॥ ३३ ॥
यो वै न कामान्न भयान्न लोभान्नार्थकारणात् ।
अन्यायमनुवर्तेत स्थिरबुद्धिरलोलुपः ॥ ३४ ॥
धर्मज्ञो धृतिमान् प्राज्ञः सर्वभूतेषु केशवः ।
ईश्वरः सर्वभूतानां देवदेवः सनातनः ॥ ३५ ॥
तं सर्वगुणसंपन्नं श्रीवत्सकृतलक्षणम् ।
संपरिष्वज्य कौन्तेयः संदेष्टुमुपचक्रमे ॥ ३६ ॥

**युधिष्ठिर उवाच—**

या सा बाल्यात्प्रभृत्यस्मान्पर्यवर्धयताबला ।
उपवासतपःशीला सदा स्वस्त्ययने रता ॥ ३७ ॥
देवतातिथिपूजासु गुरुशुश्रूषणे रता ।
वत्सला प्रियपुत्रा च प्रियाऽस्माकं जनार्दन ॥ ३८ ॥
सुयोधनभयाद्या नोऽत्रायतामित्रकर्शन ।
महतो मृत्युसंबाधादुद्धरेन्नौरिवार्णवात् ॥ ३९ ॥
अस्मत्कृते च सततं यया दुःखानि माधव ।
अनुभूतान्यदुःखार्हा तां स्म पृच्छेरनामयम् ॥ ४० ॥
भृशमाश्वासयेश्चैनां पुत्रशोकपरिप्लुताम् ।
अभिवाद्य स्वजेथास्त्वं पाण्डवान् परिकीर्तयन् ॥ ४१ ॥
ऊढात्प्रभृति दुःखानि श्वशुराणामरिन्दम ।
निकारानतदर्हा च पश्यन्ती दुःखमश्नुते ॥ ४२ ॥
अपि जातु स कालः स्यात्कृष्ण दुःखविपर्ययः ।
यदहं मातरं क्लिष्टां सुखं दद्यामरिन्दम ॥ ४३ ॥
प्रव्रजन्तोऽनुधावन्तीं कृपणां पुत्रगृद्धिनीम् ।
रुदतीमपहायैनामगच्छाम वयं वनम् ॥ ४४ ॥
न नूनं म्रियते दुःखैः सा चेज्जीवति केशव ।
तथा पुत्राधिभिर्गाढमार्ता ह्यानर्तसत्कृत ॥ ४५ ॥

---

रिकरं वैयाघ्रपरिवारणं व्याघ्रचर्मकृतवेष्टनम् ॥ १८ ॥ संपादयामासुः योजितवन्तः ॥ १९ ॥

[ सर्व० ] प्रतिपाद्यम् प्रापणीयमनामयमनाशः ॥ २ ॥ एतद्वचनं तव धर्म्यम् । अभीप्सया प्राप्तुमिच्छया ॥ ५ ॥ मैत्रे तारादिमैत्रेयोगिनि ॥ ६ ॥ कौमुदे कार्तिके । कोजागरयुक्तायां पौर्णमास्यां वा ॥ ७ ॥ तत्ततः प्रतिज्ञाय स्मृत्वा वचनं पाण्डवस्य दुर्योधनो द्रोहं चरिष्यतीति ॥ ११ ॥ आकाशगं पक्षिणमिव अध्वनं अध्वनि गच्छन्तम् ॥ १५ ॥ अर्धचन्द्रादिभिः कृत्रिमैः ॥ १६ ॥ सूपस्करं सूपकरणम् ॥ १८ ॥ संपादयामासुः । सज्जीकृतवन्तः ॥ १९ ॥ मङ्गल्योऽर्थः पद्यते प्राप्यते एभिरिति मङ्गल्यार्थपदैः ॥ २५ ॥

[ लक्षा० ] कौमुदे मासीत्यत्र कौमुदे कुमुदोत्पत्तिहेतुभूते कार्तिके मासि ॥ ७ ॥

[ नील० ] संसाधनार्थं कार्यनिष्पत्त्यर्थम् ॥ ३२ ॥ ऊढात् विवाहात् । यद्वा 'ऊढस्तन्द्रितबालयोः' इति विश्वः । बाल्यादित्यर्थः । उभयत्र भावप्रधानो निर्देशः ॥ ४२ ॥

[ अर्जु० ] संसाधनार्थं संसिद्ध्यर्थम् ॥ ३२ ॥ आत्रायतवती रक्षितवती मृत्युसंबाधात् मृत्युसंकटात् पङ्कात् उदध्रे उद्धृतवती ॥ ३९ ॥ ऊढात् विवाहात् निकारान् निर्भर्त्सनानि ॥ ४२ ॥ यत् यत्र ॥ ४३ ॥ अवहाय त्यक्त्वा ॥ ४४ ॥ आनर्तसत्कृत आनर्तैर्जनपदैः सत्कृतं पूजितम् ॥ ४५ ॥

[ सर्व० ] संसाधनार्थं वासुदेवस्याङ्गीकरणार्थम् । प्रीणयितुमिति यावत् ॥ ३२ ॥ उवाचेदं वचः—यो वैकामादित्यादि ईश्वरः सर्वभूतानां स एष इति शेषांतं, सर्वगुणसंपन्नं संदेष्टुमुपचक्रमे ॥ ३३–३६ ॥ उढाद्विवाहात् । श्वशुराणां पतिगुरूणां गृहे ॥ ४२ ॥

[ लक्षा० ] निकारानतदर्हा चेत्यत्र निकारान् न्यक्कारान् ॥ ४२ ॥ प्रव्रजन्तोऽन्वधावदित्यत्र मयि प्रव्रजति सति ४४ ॥

इति श्रीमं० भा० उ० वा० कृ० ल० त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

३५ म. देवदेवः प्रतापवान् । ३६ म. परिष्वज्य च । ४१ म. भृशमाश्वासयंश्चैनां पुत्रशोकैः परिप्लुताम् । ४२ म. दुःखमाप्नुते । ४३ म. दुःखविपर्ययात् । ४४ म. प्रव्राजनेस्वाधावत्सा कृपणा पुत्रगृद्धिनी । ४५ म. आनर्तसत्कृता ।

अभिवाद्याऽस्य सा कृष्ण त्वया मद्वचनाद्विभो ।
धृतराष्ट्रश्च कौरव्यो राजानश्च वयोधिकाः ॥ ४६ ॥
भीष्मं द्रोणं कृपं चैव महाराजं च बाह्लिकम् ।
द्रौणिं च सोमदत्तं च सर्वांश्च भरतान्प्रति ॥ ४७ ॥
विदुरं च महाप्राज्ञं कुरूणां मन्त्रधारिणम् ।
अगाधबुद्धिं धर्मज्ञं स्वजेथा मधुसूदन ॥ ४८ ॥
इत्युक्त्वा केशवं तत्र राजमध्ये युधिष्ठिरः ।
अनुज्ञातो निववृते कृष्णं कृत्वा प्रदक्षिणम् ॥ ४९ ॥
व्रजन्नेव तु बीभत्सुः सखायं पुरुषर्षभम् ।
अब्रवीत्परवीरघ्नं दाशार्हमपराजितम् ॥ ५० ॥
यदस्माकं विभो वृत्तं पुरा वै मन्त्रनिश्चये ।
अर्धराज्यस्य गोविन्द विदितं सर्वराजसु ॥ ५१ ॥
तच्चेद्दद्यादसङ्गेन सत्कृत्याऽनवमन्य च ।
प्रियं मे स्यान्महाबाहो मुच्येरन्महतो भयात् ॥ ५२ ॥
अतश्चेदन्यथा कर्ता धार्तराष्ट्रोऽनुपायवित् ।
अन्तं नूनं करिष्यामि क्षत्रियाणां जनार्दन ॥ ५३ ॥

वैशम्पायन उवाच—

एवमुक्ते पाण्डवेन समहृष्यद्वृकोदरः ।
मुहुर्मुहुः क्रोधवशात्प्रावेपत च पाण्डवः ॥ ५४ ॥
वेपमानश्च कौन्तेयः प्राक्रोशन्महतो रवान् ।
धनञ्जयवचः श्रुत्वा हर्षोत्सिक्तमना भृशम् ॥ ५५ ॥
तस्य तं निनदं श्रुत्वा संप्रावेपन्त धन्विनः ।
वाहनानि च सर्वाणि शकृन्मूत्रे प्रसुस्रुवुः ॥ ५६ ॥
इत्युक्त्वा केशवं तत्र तथा चोक्त्वा विनिश्चयम् ।
अनुज्ञातो निववृते परिष्वज्य जनार्दनम् ॥ ५७ ॥
तेषु राजसु सर्वेषु निवृत्तेषु जनार्दनः ।
तूर्णमभ्यगमद्धृष्टः शैब्यसुग्रीववाहनः ॥ ५८ ॥
ते हया वासुदेवस्य दारुकेण प्रचोदिताः ।
पन्थानमाचेमुरिव ग्रसमाना इवाम्बरम् ॥ ५९ ॥
अथापश्यन्महाबाहुर्ऋषीनध्वनि केशवः ।
ब्राह्म्या श्रिया दीप्यमानान् स्थितानुभयतः पथि ॥ ६० ॥
सोऽवतीर्य रथात्तूर्णमभिवाद्य जनार्दनः ।
यथावत्तानृषीन्सर्वानभ्यभाषत पूजयन् ॥ ६१ ॥
कच्चिल्लोकेषु कुशलं कच्चिद्धर्मः स्वनुष्ठितः ।
ब्राह्मणानां त्रयो वर्णाः कच्चित्तिष्ठन्ति शासने ॥ ६२ ॥
तेभ्यः प्रयुज्य तां पूजां प्रोवाच मधुसूदनः ।
भगवन्तः क्व संसिद्धाः का वीथी भवतामिह ॥ ६३ ॥
किं वा कार्यं भगवतामहं किं करवाणि वः ।
केनार्थेनोपसंप्राप्ता भगवन्तो महीतलम् ॥ ६४ ॥
तमब्रवीज्जामदग्न्य उपेत्य मधुसूदनम् ।
परिष्वज्य च गोविन्दं सुरासुरपतेः सखा ॥ ६५ ॥
देवर्षयः पुण्यकृतो ब्राह्मणाश्च बहुश्रुताः ।
राजर्षयश्च दाशार्ह मानयन्तस्तपस्विनः ।
देवासुरस्य द्रष्टारः पुराणस्य महामते ॥ ६६ ॥
समेतं पार्थिवं क्षत्रं दिदृक्षन्तश्च सर्वतः ।
सभासदश्च राजानस्त्वां च सत्यं जनार्दनम् ॥ ६७ ॥
एतन्महत्प्रेक्षणीयं द्रष्टुं गच्छाम केशव ।
धर्मार्थसहिता वाचः श्रोतुमिच्छाम माधव ॥ ६८ ॥
त्वयोच्यमानाः कुरुषु राजमध्ये परंतप ।
भीष्मद्रोणादयश्चैव विदुरश्च महामतिः ॥ ६९ ॥
त्वं च यादवशार्दूल सभायां वै समेष्यथ ।
तव वाक्यानि दिव्यानि तथा तेषां च माधव ॥ ७० ॥
श्रोतुमिच्छाम गोविन्द सत्यानि च हितानि च ।
आपृष्टोऽसि महाबाहो पुनर्द्रक्ष्यामहे वयम् ॥ ७१ ॥
याह्यविघ्नेन वै वीर द्रक्ष्यामस्त्वां सभागतम् ।
आसीनमासने दिव्ये बलतेजःसमाहितम् ॥ ७२ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

[ नील० ] वीथी मार्गः ॥ ६३ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

[ अर्जु० ] असंगेन कामेन । मुच्येरन् क्षत्रिया इति शेषः ॥ ५२ ॥ आचेमुः पीतवन्तः ॥ ५९ ॥ क्व संसिद्धाः क्व चलिताः वीथी मार्गः ॥ ६३ ॥ [ सुचरिते तपसि ] देवासुरं देवासुरसमाहारः तस्य पुराणस्य चिरन्तनस्य पूर्वे भीष्मविदुरादयो देवाः । असुराः दुर्योधनादयः ॥ ६६ ॥ सभ्यं सदस्यम् ॥ ६७ ॥

इति श्रीमन्म० मर्जुनमि० सुबो० त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

[ सर्व० ] आचेमुः पीतवन्तः ॥ ५९ ॥ क्व संसिद्धा इति यात्राया उद्देश्यप्रश्नः । वीथी वर्त्म ॥ ६३ ॥ पुराणस्य देवासुरस्य देवासुरसमुदायस्य ॥ ६६ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञ० त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

---

४७ म. भरतान्पृथक् । ५४ म. पर्यहृष्यद्वृकोदरः । ६६ म. महाद्युते ॥ त्र्यशीतितमोऽध्यायः ॥ ८३ ॥

## चतुरशीतितमोऽध्यायः ८४

भगवति हास्तिनपुरं प्रस्थिते शुभाशुभाः शकुनाः ॥ १ ॥

**वैशम्पायन उवाच—**

प्रयान्तं देवकीपुत्रं परवीररुजो दश ।
महारथा महाबाहुमन्वयुः शस्त्रपाणयः ॥ १ ॥
पदातीनां सहस्रं च सादिनां च परंतप ।
भोज्यं च विपुलं राजन् प्रेष्याश्च शतशोऽपरे ॥ २ ॥

**जनमेजय उवाच—**

कथं प्रयातो दाशार्हो महात्मा मधुसूदनः ।
कानि वा व्रजतस्तस्य निमित्तानि महौजसः ॥ ३ ॥

**वैशम्पायन उवाच—**

तस्य प्रयाणे यान्यासन्निमित्तानि महात्मनः ।
तानि मे शृणु सर्वाणि दैवान्यौत्पातिकानि च ॥ ४ ॥
अनभ्रेऽशनिनिर्घोषः सविद्युत्समजायत ।
अन्वगेव च पर्जन्यः प्रावर्षद्विघने भृशम् ॥ ५ ॥
प्रत्यगूहुर्महानद्यः प्राङ्मुखाः सिन्धुसत्तमाः ।
विपरीता दिशः सर्वा न प्राज्ञायत किंचन ॥ ६ ॥
प्राज्वलन्नग्नयो राजन् पृथिवी समकम्पत ।
उदपानाश्च कुम्भाश्च प्रासिञ्चन् शतशो जलम् ॥ ७ ॥
तमःसंवृतमप्यासीत्सर्वं जगदिदं तथा ।
न दिशो नादिशो राजन् प्रज्ञायन्ते स्म रेणुना ॥ ८ ॥
प्रादुरासीन्महाञ्छब्दः खे शरीरं न दृश्यते ।
सर्वेषु राजन्देशेषु तदद्भुतमिवाभवत् ॥ ९ ॥
प्रामथ्नाद्धास्तिनपुरं वातो दक्षिणपश्चिमः ।
आरुजन् गणशो वृक्षान् परुषोऽशनिनिःस्वनः ॥ १० ॥
यत्र यत्र च वार्ष्णेयो वर्तते पथि भारत ।
तत्र तत्र सुखो वायुः सर्वं चासीत्प्रदक्षिणम् ॥ ११ ॥
ववर्ष पुष्पवर्षं च कमलानि च भूरिशः ।
समश्च पन्था निर्दुःखो व्यपेतकुशकण्टकः ॥ १२ ॥
संस्तुतो ब्राह्मणैर्गीर्भिस्तत्र तत्र सहस्रशः ।
अर्च्यते मधुपर्कैश्च वसुभिश्च वसुप्रदः ॥ १३ ॥
तं किरन्ति महात्मानं वन्यैः पुष्पैः सुगन्धिभिः ।
स्त्रियः पथि समागम्य सर्वभूतहिते रतम् ॥ १४ ॥
स शालिभवनं रम्यं सर्वसस्यसमाचितम् ।
सुखं परमधर्मिष्ठमभ्यगाद्भरतर्षभ ॥ १५ ॥
पश्यन्बहुपशून् ग्रामान् रम्यान् हृदयतोषणान् ।
पुराणि च व्यतिक्रामन्राष्ट्राणि विविधानि च ॥ १६ ॥
नित्यं हृष्टाः सुमनसो भारतैरभिरक्षिताः ।
नोद्विग्नाः परचक्राणां व्यसनानामकोविदाः ॥ १७ ॥
उपप्लव्यादथागम्य जनाः पुरनिवासिनः ।
पथ्यतिष्ठन्त सहिता विष्वक्सेनदिदृक्षया ॥ १८ ॥

---

[ नील० ] प्रयान्तमिति ॥ १ ॥ दैवानि शकुनानि औत्पातिकानि अशकुनानि ॥ ४ ॥ प्रत्यक् प्रतीपम् ऊहुः प्रवाहं कृतवत्यः ॥ ६ ॥ खे शरीरं छायापुरुषशरीरम् ॥ ९ ॥ दक्षिणपश्चिमः निर्ऋतिदेशः ॥ १० ॥ औत्पातिकान्युक्त्वा दैवान्याह—यत्र यत्रेति ॥ ११ ॥ भवन्ति अस्मिन्निति भवनं क्षेत्रम् ॥ १५ ॥ उपप्लव्यात् ग्रामात् ॥ १८ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे चतुरशीतितमोऽध्यायः ॥ ८४ ॥

[ अर्जु० ] परवीररुजः परवीरानारुजन्तः ॥ १ ॥ सादिनामश्वारोहाणाम् ॥ २ ॥ अन्वक् पश्चाद्गामी विघने विगतघने नभसि ॥ ५ ॥ प्रत्यगूहुः पश्चिमाभिमुखा अवहन् ॥ ६ ॥ प्रासिञ्चन् उद्गिरन् ॥ ७ ॥ आदिशो विदिशः ॥ ८ ॥ दक्षिणपश्चिमो नैर्ऋतः ॥ १० ॥ महापुरुषयात्रायां कथमनिष्टमित्यत आह—यत्रयत्रेत्यादि । अन्यत्राप्यनिष्टं क्षत्रियनाशसूचकमिति भावः ॥ ११ ॥ शालिभवनं ग्रामविशेषम् ॥ १५ ॥ [ अह्ना दिवसेन ] उपप्लव्यात् विराटनगरात् ॥ १८ ॥

[ सर्व० ] दैवानि दैवकृतानि । औत्पातिकानि उत्पाताः ॥ ४ ॥ प्रत्यगनन्तरम् ॥ ६ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां चतुरशीतितमोऽध्यायः ॥ ८४ ॥

[ लक्षा० ] तत्र प्रयातो यान्यासन्नित्यत्र प्रकर्षेण यान् गच्छन् प्रयान् तस्य प्रयातः ॥ ४ ॥ प्रत्यगूहुर्महानद्य इत्यत्र प्रत्यक् पश्चिमस्यां दिशि ऊहुः प्रापुरित्यर्थः । सिन्धुः समुद्रः सत्तमो यासां तास्तथोक्ताः ॥ ६ ॥ संच्छन्नो ब्राह्मणैरित्यत्र संच्छन्नः सम्यक् छन्नः संछन्नः परितः पुञ्जीभूय प्राप्त इत्यर्थः ॥ १३ ॥ अनयानामकोविदाः इत्यत्र अनयानामन्यायानामकोविदा अकुशलाः । अन्यायानभिज्ञा इत्यर्थः ॥ १७ ॥

---

१७ म. परचक्राणामनयानामकोविदाः । १८ म. दशायान्तं ।

ते तु सर्वे समायान्तमग्निमिद्धमिव प्रभुम् ।
अर्चयामासुरर्चार्हं देशातिथिमुपस्थितम् ॥ १९ ॥
वृकस्थलं समासाद्य केशवः परवीरहा ।
प्रकीर्णरश्मावादित्ये व्योम्नि वै लोहितायति ॥२०॥
अवतीर्य रथात्तूर्णं कृत्वा शौचं यथाविधि ।
रथमोचनमादिश्य संध्यामुपविवेश ह ॥ २१ ॥
दारुकोऽपि हयान्मुक्त्वा परिचर्य च शास्त्रतः ।
मुमोच सर्वयोक्त्रादि मुक्त्वा चैनानवासृजत् ॥२२॥
अभ्यतीत्य तु तत्सर्वमुवाच मधुसूदनः ।
युधिष्ठिरस्य कार्यार्थमिह वत्स्यामहे क्षपाम् ॥ २३ ॥
तस्य तन्मतमाज्ञाय चक्रुरावसथं नराः ।
क्षणेन चान्नपानानि गुणवन्ति समार्जयन् ॥ २४ ॥
तस्मिन् ग्रामे प्रधानास्तु य आसन्ब्राह्मणा नृप ।
आर्याः कुलीना ह्रीमन्तो ब्राह्मीं वृत्तिमनुष्ठिताः २५
तेऽभिगम्य महात्मानं हृषीकेशमरिंदमम् ।
पूजां चक्रुर्यथान्यायमाशीर्मङ्गलसंयुताम् ॥ २६ ॥
ते पूजयित्वा दाशार्हं सर्वलोकेषु पूजितम् ।
न्यवेदयन्त वेश्मानि रत्नवन्ति महात्मने ॥ २७ ॥
तान्प्रभुः कृतमित्युक्त्वा सत्कृत्य च यथार्हतः ।
अभ्येत्य चैषां वेश्मानि पुनरायात्सहैव तैः ॥२८॥
सुमृष्टं भोजयित्वा च ब्राह्मणांस्तत्र केशवः ।
भुक्त्वा च सह तैः सर्वैरवसत्तां क्षपां सुखम् ॥२९॥

इति श्रीमहाभारते उद्योगपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

## पञ्चाशीतितमोऽध्यायः ८५

धृतराष्ट्राज्ञमते दुर्योधनेन श्रीकृष्णपूजार्थं पथि सर्वकामसमृद्धसभानिर्माणम् ॥ १ ॥ अनवेक्षमाणस्यैव ता भगवतो हास्तिनपुरप्राप्तिः ॥ २ ॥

**वैशम्पायन उवाच—**

तथा दूतैः समाज्ञाय प्रयान्तं मधुसूदनम् ।
धृतराष्ट्रोऽब्रवीद्भीष्ममर्चयित्वा महाभुजम् ॥ १ ॥
द्रोणं च सञ्जयं चैव विदुरं च महामतिम् ।
दुर्योधनं सहामात्यं हृष्टरोमाऽब्रवीदिदम् ॥ २ ॥
अद्भुतं महदाश्चर्यं श्रूयते कुरुनन्दन ।
स्त्रियो बालाश्च वृद्धाश्च कथयन्ति गृहे गृहे ॥ ३ ॥
सत्कृत्याचक्षते चान्ये तथैवान्ये समागताः ।
पृथग्वादाश्च वर्तन्ते चत्वरेषु सभासु च ॥ ४ ॥
उपयास्यति दाशार्हः पाण्डवार्थे पराक्रमी ।
स नो मान्यश्च पूज्यश्च सर्वथा मधुसूदनः ॥ ५ ॥
तस्मिन् हि यात्रा लोकस्य भूतानामीश्वरो हि सः ।
तस्मिन्धृतिश्च वीर्यं च प्रज्ञा चौजश्च माधवे ॥ ६ ॥
स मान्यतां नरश्रेष्ठः स हि धर्मः सनातनः ।
पूजितो हि सुखाय स्यादसुखः स्यादपूजितः ॥७॥
स चेत्तुष्यति दाशार्ह उपचारैररिन्दमः ।
कृष्णात्सर्वानभिप्रायान्प्राप्स्यामः सर्वराजसु ॥ ८ ॥
तस्य पूजार्थमद्यैव संविधत्स्व परंतप ।
सभाः पथि विधीयन्तां सर्वकामसमन्विताः ॥ ९ ॥

[ अर्जु० ] वृकस्थलं ग्रामभेदम् ॥ २० ॥ शास्त्रतोऽश्वशास्त्रविधिना ॥ २२ ॥ [ कर्मण्यं कवचादि ] गुणवन्ति व्यञ्जनादिसहितानि ॥ २४ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि चतुरशीतितमोऽध्यायः ॥ ८४ ॥

[ लक्षा० ] कुशस्थलं समासाद्येत्यत्र कुशस्थलं वृकस्थलमित्यत्रोक्तकुशस्थलम् ॥ २० ॥ मुक्त्वा परिवार्य च शास्त्रत इत्यत्र परिवार्य प्रदक्षिणीकृत्य ॥ २२ ॥ कृतमित्युक्त्वेत्यत्र कृतं सम्यक्कृतम् ॥ २८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे चतुरशीतितमोऽध्यायः ॥ ८४ ॥

[ नील० ] तथा दूतैरिति ॥ १ ॥ अभिप्रायान् मनोरथान् ॥ ८ ॥

इति श्रीनील० उद्यो० भा० भा० पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

[ अर्जु० ] यात्रा प्रवृत्तिः । वृत्तिराचारः । वीर्यं वीरभावः प्रज्ञा तत्वसाक्षात्कारः । [ शौचं संकरवर्जितम् ] ॥६॥ उपचारैः परिचरणैः । अभिप्रायान् मनोरथान् ॥८॥

इति श्रीमन्म० मर्जुनमि० उद्यो० पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

[ लक्षा० ] तस्मिन् हि यात्रा लोकस्येत्यत्र यान्ति यस्यामिति यात्रा मर्यादा ॥ ६ ॥

इति श्रीम० भा० उ० वा० कृ० ल० पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

१९ म. सर्वे तु नामानम° । २० म. माघवः । २२ म. सर्वान्विमेक्ष । चतुरशीतितमोऽध्यायः ॥ ८४ ॥

यथा प्रीतिर्महाबाहो त्वयि जायेत तस्य वै ।
तथा कुरुष्व गान्धारे कथं वा भीष्म मन्यसे ॥१०॥
ततो भीष्मादयः सर्वे धृतराष्ट्रं जनाधिपम् ।
ऊचुः परममित्येवं पूजयन्तोऽस्य तद्वचः ॥ ११ ॥
तेषामनुमतं ज्ञात्वा राजा दुर्योधनस्तदा ।
सभा वास्तूनि रम्याणि प्रदेष्टुमुपचक्रमे ॥ १२ ॥
ततो देशेषु देशेषु रमणीयेषु भागशः ।
सर्वरत्नसमाकीर्णाः सभाश्चक्रुरनेकशः ॥ १३ ॥
आसनानि विचित्राणि युतानि विविधैर्गुणैः ।
स्त्रियो गन्धानलंकारान्सूक्ष्माणि वसनानि च॥१४॥
गुणवन्त्यन्नपानानि भोज्यानि विविधानि च ।
माल्यानि च सुगन्धीनि तानि राजा ददौ ततः १५
विशेषतश्च वासार्थं सभां ग्रामे वृकस्थले ।
विदधे कौरवो राजा बहुरत्नां मनोरमाम् ॥ १६ ॥
एतद्विधाय वै सर्वं देवार्हमतिमानुषम् ।
आचख्यौ धृतराष्ट्राय राजा दुर्योधनस्तदा ॥ १७॥
ताः सभाः केशवः सर्वा रत्नानि विविधानि च ।
असमीक्ष्यैव दाशार्ह उपागात्कुरुसद्म तत् ॥ १८॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाशीतितमोऽध्यायः ॥ ८५ ॥

## षडशीतितमोऽध्यायः ८६

धृतराष्ट्रः श्रीकृष्णे देयत्वेन संकल्पितानि वस्तूनि विदुरं श्रावयति ॥ १ ॥

**धृतराष्ट्र उवाच—**

उपप्लव्यादिह क्षत्तरुपायातो जनार्दनः ।
वृकस्थले निवसति स च प्रातरिहैष्यति ॥ १ ॥
आहुकानामधिपतिः पुरोगः सर्वसात्वताम् ।
महामना महावीर्यो महासत्त्वो जनार्दनः ॥ २ ॥
स्फीतस्य वृष्णिराष्ट्रस्य भर्ता गोप्ता च माधवः ।
त्रयाणामपि लोकानां भगवान् प्रपितामहः ॥ ३ ॥
वृष्ण्यन्धकाः सुमनसो यस्य प्रज्ञामुपासते ।
आदित्या वसवो रुद्रा यथा बुद्धिं बृहस्पतेः ॥ ४ ॥
तस्मै पूजां प्रयोक्ष्यामि दाशार्हाय महात्मने ।
प्रत्यक्षं तव धर्मज्ञ तां मे कथयतः शृणु ॥ ५ ॥
एकवर्णैः सुकृष्णाङ्गैर्बाह्लिजातैर्हयोत्तमैः ।
चतुर्युक्तान् रथांस्तस्मै रौक्मान् दास्यामि षोडश ६
नित्यप्रभिन्नान्मातङ्गानीषादन्तान्प्रहारिणः ।
अष्टानुचरमेकैकमष्टौ दास्यामि कौरव ॥ ७ ॥
दासीनामप्रजातानां शुभानां रुक्मवर्चसाम् ।
शतमस्मै प्रदास्यामि दासानामपि तावताम् ॥ ८॥
आविकं च सुखस्पर्शं पार्वतीयैरुपाहृतम् ।
तदप्यस्मै प्रदास्यामि सहस्राणि दशाष्ट च ॥ ९ ॥
अजिनानां सहस्राणि चीनदेशोद्भवानि च ।
तान्यप्यस्मै प्रदास्यामि यावदर्हति केशवः ॥१०॥
दिवा रात्रौ च भात्येष सुतेजा विमलो मणिः ।
तमप्यस्मै प्रदास्यामि तमर्हति हि केशवः ॥ ११ ॥
एकेनाभिपतत्यह्ना योजनानि चतुर्दश ।
यानमश्वतरीयुक्तं दास्ये तस्मै तदप्यहम् ॥ १२ ॥
यावन्ति वाहनान्यस्य यावन्तः पुरुषाश्च ते ।
ततोऽष्टगुणमप्यस्मै भोज्यं दास्याम्यहं सदा ॥१३॥
मम पुत्राश्च पौत्राश्च सर्वे दुर्योधनादृते ।
प्रत्युद्यास्यन्ति दाशार्हं रथैर्मृष्टैः स्वलंकृताः ॥ १४॥
स्वलंकृताश्च कल्याण्यः पादैरेव सहस्रशः ।
वारमुख्या महाभागं प्रत्युद्यास्यन्ति केशवम् ॥१५॥
नगरादपि याः काश्चिद्गमिष्यन्ति जनार्दनम् ।
द्रष्टुं कन्याश्च कल्याण्यस्ताश्च यास्यन्त्यनावृताः १६॥

[ नील० ] उपप्लव्यादिति ॥ १ ॥ प्रपितामहः पितामहस्य ब्रह्मणोऽपि पिता ॥ ३ ॥ ईषा लाङ्गलदण्डस्तत्सदृशदन्तान् अष्टौ अनुचराः यस्य गजस्य ॥ ७ ॥

[ अर्जु० ] ईषादन्तान् स्थूलदीर्घदन्तान् । अष्टानुचरमष्टानुचर्यैः करिण्यो यस्य ॥ ७ ॥ अप्रजातानामप्रसूतानाम् ॥ ८ ॥ मृष्टैः शुद्धैः ॥ १४ ॥ अनावृताः अनवरुद्धाः ॥ १६ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

[ सर्व० ] ईषा लाङ्गलदण्डः तत्समदन्तान् । अष्टानुचरमष्टौ गजरक्षका गजा वा अनुचराः पश्चाच्चरा वा येषाम् ७

१८ म. कुरुसत्तम । पञ्चशीतितमोऽध्यायः ॥८५॥ ७ म. दास्यामि केशवे । ९ म. बहु सुस्पर्शं । १० म. द्भवानि मे । षडशीतितमोऽध्यायः ॥ ८६ ॥

सस्त्रीपुरुषबालं च नगरं मधुसूदनम् ।
उदीक्षतां महात्मानं भानुमन्तमिव प्रजाः ॥ १७ ॥
महाध्वजपताकाश्च क्रियन्तां सर्वतो दिशः ।
जलावसिक्तो विरजाः पन्थास्तस्येति चान्वशात् १८
दुःशासनस्य च गृहं दुर्योधनगृहाद्वरम् ।
तदद्य क्रियतां क्षिप्रं सुसंमृष्टमलंकृतम् ॥ १९ ॥
एतद्धि रुचिराकारैः प्रासादैरुपशोभितं ।
शिवं च रमणीयं च सर्वर्तु सुमहाधनं ॥ २० ॥
सर्वमस्मिन् गृहे रत्नं मम दुर्योधनस्य च ।
यद्यदर्हति वार्ष्णेयस्तत्तद्देयमसंशयम् ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि षडशीतितमोऽध्यायः ॥ ८६ ॥

## सप्ताशीतितमोऽध्यायः ८७

न स्वयार्थेन पाण्डवेभ्यः कृष्णो भेदयितुं शक्य इति धृतराष्ट्रं प्रति विदुरोक्तिः ॥ १ ॥

**विदुर उवाच—**

राजन्बहुमतश्चासि त्रैलोक्यस्यापि सत्तमः ।
संभावितश्च लोकस्य संमतश्चासि भारत ॥ १ ॥
यत्त्वमेवंगते ब्रूयाः पश्चिमे वयसि स्थितः ।
शास्त्राद्वा सुप्रतर्काद्वा सुस्थिरः सुस्थिरो ह्यसि ॥ २ ॥
लेखाः शशिनि भाः सूर्ये महोर्मिरिव सागरे ।
धर्मस्त्वयि तथा राजन्निति व्यवसिताः प्रजाः ॥३॥
सदैव भावितो लोको गुणौघैस्तव पार्थिव ।
गुणानां रक्षणे नित्यं प्रयतस्व सबान्धवः ॥ ४ ॥
आर्जवं प्रतिपद्यस्व मा बाल्याद्बहु नीनशः ।
राजन्पुत्रांश्च पौत्रांश्च सुहृदश्चैव सुप्रियान् ॥ ५ ॥
यत्त्वमिच्छसि कृष्णाय राजन्नतिथये बहु ।
एतदन्यच्च दाशार्हः पृथिवीमपि चार्हति ॥ ६ ॥
न तु त्वं धर्ममुद्दिश्य तस्य वा प्रियकारणात् ।
एतद्दित्ससि कृष्णाय सत्येनात्मानमालभे ॥ ७ ॥
मायैषासत्यमेवैतच्छद्मैतद्भूरिदक्षिण ।
जानामि त्वन्मतं राजन् गूढं बाह्येन कर्मणा ॥ ८ ॥
पञ्च पञ्चैव लिप्सन्ति ग्रामकान्पाण्डवा नृप ।
न च दित्ससि तेभ्यस्तांस्तच्छमं न करिष्यसि॥९॥
अर्थेन तु महाबाहुं वार्ष्णेयं त्वं जिहीर्षसि ।
अनेन चाप्युपायेन पाण्डवेभ्यो विभेत्स्यसि ॥१०॥
न च वित्तेन शक्योऽसौ नोद्यमेन न गर्हया ।
अन्यो धनञ्जयात्कर्तुमेतत्तत्त्वं ब्रवीमि ते ॥ ११ ॥
वेद कृष्णस्य माहात्म्यं वेदास्य दृढभक्तिताम् ।
अत्याज्यमस्य जानामि प्राणैस्तुल्यं धनञ्जयम् १२
अन्यत्कुम्भादपां पूर्णादन्यत्पादावसेचनात् ।
अन्यत्कुशलसंप्रश्नान्नैवेक्ष्यति जनार्दनः ॥ १३ ॥
यत्त्वस्य प्रियमातिथ्यं मानार्हस्य महात्मनः ।
तदस्मै क्रियतां राजन्मानार्होऽसौ जनार्दनः ॥१४॥
आशंसमानः कल्याणं कुरूनभ्येति केशवः ।
येनैव राजन्नर्थेन तदेवास्मा उपाकुरु ॥ १५ ॥
शममिच्छति दाशार्हस्तव दुर्योधनस्य च ।
पाण्डवानां च राजेन्द्र तदस्य वचनं कुरु ॥ १६ ॥
पितासि राजन्पुत्रास्ते वृद्धस्त्वं शिशवः परे ।
वर्तस्व पितृवत्तेषु वर्तन्ते ते हि पुत्रवत् ॥ १७ ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

---

[ नील० ] सर्वर्तु सर्वे ऋतवो युगपदस्मिन्सन्तीति तथा ॥ २० ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे षडशीतितमोऽध्यायः ॥ ८६ ॥

[ सर्व० ] सर्वर्तुषु रमणीयम् ॥ २० ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां षडशीतितमोऽध्यायः ॥ ८६ ॥

[ नील० ] राजन्निति ॥ १ ॥ भावितः हृष्टः मा नीनशः हेतुमण्णिच् मा नाशं प्राप्नुहि ॥ ५ ॥ माया इन्द्रजालं छद्म वञ्चनम् ॥ ८ ॥ विभेत्स्यसि शल्यवत् पृथक्करिष्यसि ॥ १० ॥ वेद वेद्मि ॥ १२ ॥ नैवेक्ष्यति नैवाङ्गीकरिष्यति ॥ १३ ॥ आतिथ्यं शमरूपम् ॥ १४ ॥ उपाकुरु अर्पय ॥ १५ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

[ अर्जु० ] पश्चिमे वयसि वृद्धभावे ॥ २ ॥ अत्र तु

---

५ म. राज्यं पुत्रांश्च । सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

## अष्टाशीतितमोऽध्यायः ८८

पूज्यतममपि कृष्णं संप्रति वयं न सत्कर्तुमर्हामः इति दुर्योधवचः श्रुत्वा भीष्मेण कृष्णो नावज्ञेयस्तद्द्वारा पाण्डवैः सह शमः कार्य इत्युक्ते दुर्योधनेन तन्नियमनोपायं पृष्टस्य भीष्मस्य क्रुधा निर्गमनम् ॥ १ ॥

**दुर्योधन उवाच—**

यदाह विदुरः कृष्णे सर्वं तत्सत्यमच्युते ।
अनुरक्तो ह्यसंहार्यः पार्थान्प्रति जनार्दनः ॥ १ ॥
यत्तत्सत्कारसंयुक्तं देयं वसु जनार्दने ।
अनेकरूपं राजेन्द्र न तद्देयं कदाचन ॥ २ ॥
देशः कालस्तथाऽयुक्तो नहि नार्हति केशवः ।
मंस्यत्यधोक्षजो राजन् भयादर्चति मामिति ॥ ३ ॥
अवमानश्च यत्र स्यात्क्षत्रियस्य विशांपते ।
न तत्कुर्याद्बुधः कार्यमिति मे निश्चिता मतिः ॥ ४ ॥
स हि पूज्यतमो लोके कृष्णः पृथुललोचनः ।
त्रयाणामपि लोकानां विदितं मम सर्वथा ॥ ५ ॥
न तु तस्मै प्रदेयं स्यात्तथा कार्यगतिः प्रभो ।
विग्रहः समुपारब्धो नहि शाम्यत्यविग्रहात् ॥ ६ ॥

**वैशम्पायन उवाच—**

तस्य तद्वचनं श्रुत्वा भीष्मः कुरुपितामहः ।
वैचित्रवीर्यं राजानमिदं वचनमब्रवीत् ॥ ७ ॥
सत्कृतोऽसत्कृतो वाऽपि न क्रुध्येत जनार्दनः ।
नालमेनमवज्ञातुं नावज्ञेयो हि केशवः ॥ ८ ॥
यत्तु कार्यं महाबाहो मनसा कार्यतां गतम् ।
सर्वोपायैर्न तच्छक्यं केनचित्कर्तुमन्यथा ॥ ९ ॥
स यद्ब्रूयान्महाबाहुस्तत्कार्यमविशङ्कया ।
वासुदेवेन तीर्थेन क्षिप्रं संशाम्य पाण्डवैः ॥ १० ॥
धर्म्यमर्थ्यं च धर्मात्मा ध्रुवं वक्ता जनार्दनः ।
तस्मिन्वाच्याः प्रिया वाचो भवता बान्धवैः सह ११

**दुर्योधन उवाच—**

न पर्यायोऽस्ति यद्राजन् श्रियं निष्केवलामहम् ।
तैः सहेमामुपाश्नीयां यावज्जीवं पितामह ॥ १२ ॥

---

मायाछद्मपर्यायैर्वञ्चनातिशयमाह ॥ ८ ॥ बिभित्ससि भेत्तुमिच्छसि ॥ १० ॥ धनञ्जयादन्यः पृथक् कर्तुं न शक्य इत्यर्थः ॥ ११ ॥ वेदाहं दृढभक्तितां भक्तिर्भजनम् ॥ १२ ॥ अन्यत् कुम्भात् मङ्गलधिया कल्पितात् । नैशिष्यति न स्वाम्येन विषयीकरिष्यति ईश ऐश्वर्ये इति धातोः ॥ १३ ॥ उपाकुरु निवेदय ॥ १५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

[ सर्व० ] मायेन्द्रजालम् अतत्वमन्यथा कथितम् मम वञ्चनम् ॥ ८ ॥ नैशिष्यति न स्वीकरिष्यति ॥ १३ ॥ उपाकुरु उपहर ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

[ लक्षा० ] यत्त्वमेवं गतं ब्रूया इत्यत्र गतमागतं कृष्णं शासनात् शास्त्रं शासनात् कारणात् स्वयोग्यताख्यकारणात् ॥ २ ॥ लेखाश्मनीव भाः सूर्य इत्यत्र अश्मनि शिलायां लेखा लेखनमिव ॥ ३ ॥ वार्ष्णेयं त्वं जिहीर्षसीत्यत्र जिहीर्षसि पाण्डवेभ्यः अपहर्तुमिच्छसि ॥ १० ॥ अन्यो धनञ्जयात्कर्तुमित्यत्र धनञ्जयात् अन्यः भिन्नः वियोजित इत्यर्थः ॥ ११ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्ताशीतितमोऽध्यायः ॥ ८७ ॥

[ नील० ] यदाहेति । असंहार्यः हर्तुमशक्यः ॥ १ ॥ देश इति यद्यपि केशवोऽर्चामर्हत्येव तथाऽपि अर्चायां देशः कालश्चायुक्त इत्यर्थः । तदेवाह–मंस्यतीति ॥ ३ ॥ कार्यगतिः कर्तव्यरीतिः अविग्रहात् आतिथ्यमात्रेण ॥६॥ नालं न पर्याप्तोऽसि ॥ ८ ॥ तीर्थेन अवतरणवर्त्मना संशाम्य शान्तो भव ॥ १० ॥ पर्यायः प्रकारान्तरं निष्केवलां कृत्स्नां पाण्डवान्यथा दासवद्वासयेयं तथा प्रकारो नास्तीत्यर्थः ॥ १२ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

[ अर्जु० ] असंहार्योऽभेद्यः ॥ १ ॥ कारणं भेदाभिप्रायः । देशः कालस्तथाऽयुक्तः यद्दानं दीयते अस्माभिस्तत् कृष्णेन न गृह्यते पाण्डवचेतसि भेदशङ्काजनकत्वात् । नहि नार्हति अर्हत्येव ॥ ३ ॥ कृष्णेनागृहीते धनेऽस्माकमवमानः स्यादिति भावः ॥ ४ ॥ अन्यमवमन्तारं नालं समर्थो न भवति माहात्म्यादेव ॥ ८ ॥ मनसा कार्यतां गतं कार्यतयावधारितम् ॥ ९ ॥ तीर्थेन गुरुणा संशाम्य क्रोधादुपरम ॥ १० ॥ निष्केवलामसाधारणां निश्चितां चिरकालभोगेन । सहोपाश्नीयां सह भुंजीय उपास्य वा जीवेयमिति पर्यायः क्रमो नास्ति॥१२॥

[ सर्व० ] देशः कालस्तथार्चनायायुक्तः । युक्तिमाह मंस्यतीति ॥ ३ ॥ अन्यमप्यवज्ञातुं नाऽलं शक्तोऽतच्छीलत्वात् ॥ ८ ॥ यत्कार्यं कृष्णस्य पाण्डवेभ्यो भेदनम्

---

८ म. नालमन्यमवज्ञातुमवज्ञातोऽसि केशव ।

इदं तु सुमहत्कार्यं शृणु मे यत्समर्थितम् ।
परायणं पाण्डवानां नियच्छामि जनार्दनम् ॥ १३ ॥
तस्मिन्बद्धे भविष्यन्ति वृष्णयः पृथिवी तथा ।
पाण्डवाश्च विधेया मे स च प्रातरिहैष्यति ॥ १४ ॥
अत्रोपायान्यथा सम्यङ्न बुध्येत जनार्दनः ।
न चापायो भवेत्कश्चित्तद्भवान्प्रब्रवीतु मे ॥ १५ ॥
तस्य तद्वचनं श्रुत्वा घोरं कृष्णाभिसंहितम् ।

**वैशम्पायन उवाच—**

धृतराष्ट्रः सहामात्यो व्यथितो विमनाऽभवत् ॥ १६ ॥
ततो दुर्योधनमिदं धृतराष्ट्रोऽब्रवीद्वचः ।
मैवं वोचः प्रजापाल नैष धर्मः सनातनः ॥ १७ ॥
दूतश्च हि हृषीकेशः संबन्धी च प्रियश्च नः ।
अपापः कौरवेयेषु स कथं बन्धमर्हति ॥ १८ ॥

**भीष्म उवाच—**

परीतस्तव पुत्रोऽयं धृतराष्ट्र सुमन्दधीः ।
वृणोत्यनर्थं नैवार्थं याच्यमानः सुहृज्जनैः ॥ १९ ॥
इममुत्पथि वर्तन्तं पापं पापानुबन्धिनम् ।
वाक्यानि सुहृदां हित्वा त्वमप्यस्यानुवर्तसे ॥ २० ॥
कृष्णमक्लिष्टकर्माणमासाद्यायं सुदुर्मतिः ।
तव पुत्रः सहामात्यः क्षणेन नभविष्यति ॥ २१ ॥
पापस्यास्य नृशंसस्य त्यक्तधर्मस्य दुर्मतेः ।
नोत्सहेऽनर्थसंयुक्ताः श्रोतुं वाचः कथंचन ॥ २२ ॥
इत्युक्त्वा भरतश्रेष्ठो वृद्धः परममन्युमान् ।
उत्थाय तस्मात्प्रातिष्ठद्भीष्मः सत्यपराक्रमः ॥ २३ ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

## एकोननवतितमोऽध्यायः ८९

श्रीकृष्णस्य हास्तिनपुरं प्रविश्य धृतराष्ट्रादिभिः संगम्य विदुरावसथेऽवस्थानम् ॥ १ ॥

**वैशम्पायन उवाच—**

प्रातरुत्थाय कृष्णस्तु कृतवान्सर्वमाह्निकम् ।
ब्राह्मणैरभ्यनुज्ञातः प्रययौ नगरं प्रति ॥ १ ॥
तं प्रयान्तं महाबाहुमनुज्ञाप्य महाबलम् ।
पर्यवर्तन्त ते सर्वे वृकस्थलनिवासिनः ॥ २ ॥
धार्तराष्ट्रास्तमायान्तं प्रत्युज्जग्मुः स्वलंकृताः ।
दुर्योधनादृते सर्वे भीष्मद्रोणकृपादयः ॥ ३ ॥
पौराश्च बहुला राजन् हृषीकेशं दिदृक्षवः ।
यानैर्बहुविधैरन्यैः पद्भिरेव तथा परे ॥ ४ ॥
स वै पथि समागम्य भीष्मेणाक्लिष्टकर्मणा ।
द्रोणेन धार्तराष्ट्रैश्च तैर्वृतो नगरं ययौ ॥ ५ ॥
कृष्णसंमानार्थं च नगरं समलंकृतम् ।
बभूव राजमार्गश्च बहुरत्नसमाचितः ॥ ६ ॥
न च कश्चिद्गृहे राजंस्तदाऽऽसीद्भरतर्षभ ।
न स्त्री न वृद्धो न शिशुर्वासुदेवदिदृक्षया ॥ ७ ॥
राजमार्गे नरास्तस्मिन्संस्तुवन्त्यवनिं गताः ।
तस्मिन्काले महाराज हृषीकेशप्रवेशने ॥ ८ ॥

---

॥ ९ ॥ तीर्थेन अवतारेण वर्त्मना ॥ १० ॥ पर्यायो युक्तिः । निष्कैवल्यं कृत्स्नम् ॥ १२ ॥

[ लक्षा० ] अनुरक्तोऽप्यसंहार्य इत्यत्र अनुरक्तोऽपि पूजादिसत्कारेण अनुरागं प्रापितोऽपि ॥ १ ॥ नहि शाम्यति निग्रहादित्यत्र ल्यब्लोपनिमित्ता पञ्चमी, निग्रहं विहायेत्यर्थः ॥ ६ ॥ वासुदेवेन तीर्थेनेत्यत्र निदानागमयोस्तीर्थमृषिजुष्टजले गुरावित्यभिधानात् तीर्थेन गुरुणा संशाम्य सम्यक्शमय ॥ १० ॥

[ अर्जु० ] समर्थितं निश्चयं नीतं, नियंस्यामि बन्धनं करिष्यामि ॥ १३ ॥ विधेया आयत्ताः ॥ १४ ॥ कृष्णाभिसंहितं कृष्णं पापम् ॥ १६ ॥ परीतो विपरीतः तव पुत्र इति शेषः ॥ १९ ॥ पापानुबन्धिनं पापोदर्कम् ॥ २० ॥ नभविष्यति मरिष्यति ॥ २१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

[ सर्व० ] परीतः प्रेतः ॥ १९ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायामष्टाशीतितमोऽध्यायः ॥ ८८ ॥

[ लक्षा० ] नियंस्यामि जनार्दनमित्यत्र नियंस्यामि बध्नामि ॥ १३ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अष्टाशीतितमोऽध्यायः ॥ ८८ ॥

[ नील० ] प्रातरिति ॥ १ ॥

---

१८ म. प्रियश्च मे । अष्टाशीतितमोऽध्यायः ॥ ८८ ॥ २ म. अनुज्ञाप्य ततो नृप । ५ म. समासाद्य । ८ म. तथाहि सुमहद्राजन् ।

आवृतानि वरस्त्रीभिर्गृहाणि सुमहान्त्यपि ।
प्रचलन्तीव भारेण दृश्यन्ते स्म महीतले ॥ ९ ॥
तथा च गतिमन्तस्ते वासुदेवस्य वाजिनः ।
प्रनष्टगतयोऽभूवन् राजमार्गे नरैर्वृते ॥ १० ॥
स गृहं धृतराष्ट्रस्य प्राविशच्छत्रुकर्शनः ।
पाण्डुरं पुण्डरीकाक्षः प्रासादैरुपशोभितम् ॥ ११ ॥
तिस्रः कक्ष्या व्यतिक्रम्य केशवो राजवेश्मनः ।
विचित्रवीर्यं राजानमभ्यगच्छदरिन्दमः ॥ १२ ॥
अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नराधिपः ।
सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः ॥ १३ ॥
कृपश्च सोमदत्तश्च महाराजश्च बाह्लिकः ।
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ॥१४॥
ततो राजानमासाद्य धृतराष्ट्रं यशस्विनम् ॥
सभीष्मं पूजयामास वार्ष्णेयो वाग्भिरञ्जसा ॥१५॥
तेषु धर्मानुपूर्वीं तां प्रयुज्य मधुसूदनः ।
यथावयः समीयाय राजभिः सह माधवः ॥ १६ ॥
अथ द्रोणं सबाह्लीकं सपुत्रं च यशस्विनम् ।
कृपं च सोमदत्तं च समीयाय जनार्दनः ॥ १७ ॥
तत्रासीदूर्जितं मृष्टं काञ्चनं महदासनं ।
शासनाद्धृतराष्ट्रस्य तत्रोपाविशदच्युतः ॥ १८ ॥
अथ गां मधुपर्कं चाप्युदकं च जनार्दने ।
उपजह्रुर्यथान्यायं धृतराष्ट्रपुरोहिताः ॥ १९ ॥
कृतातिथ्यस्तु गोविन्दः सर्वान्परिहसन्कुरून् ।
आस्ते सांबन्धिकं कुर्वन्कुरुभिः परिवारितः ॥२०॥
सोऽर्चितो धृतराष्ट्रेण पूजितश्च महायशाः ।
राजानं समनुज्ञाप्य निरक्रामदरिन्दमः ॥ २१ ॥
तैः समेत्य यथान्यायं कुरुभिः कुरुसंसादि ।
विदुरावसथं रम्यमुपातिष्ठत माधवः ॥ २२ ॥
विदुरः सर्वकल्याणैरभिगम्य जनार्दनम् ।
अर्चयामास दाशार्हं सर्वकामैरुपस्थितम् ॥ २३ ॥
या मे प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा ।
सा किमाख्यायते तुभ्यमन्तरात्माऽसि देहिनाम् २४
कृतातिथ्यं तु गोविन्दं विदुरः सर्वधर्मवित् ।
कुशलं पाण्डुपुत्राणामपृच्छन्मधुसूदनम् ॥ २५ ॥
प्रीयमाणस्य सुहृदो विदुरो बुद्धिसत्तमः ।
धर्मार्थनित्यस्य सतो गतरोषस्य धीमतः ॥ २६ ॥
तस्य सर्वं सविस्तारं पाण्डवानां विचेष्टितम् ।
क्षत्तुराचष्ट दाशार्हः सर्वं प्रत्यक्षदर्शिवान् ॥ २७ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

## नवतितमोऽध्यायः ९०

श्रीकृष्णं पश्यन्त्याः कुन्त्याः पुत्रविषयः स्वविषयश्च शोकः कृष्णेन तस्याः सान्त्वनं च ॥ १ ॥

**वैशम्पायन उवाच—**
अथोपगम्य विदुरमपराह्णे जनार्दनः ।
पितृष्वसारं स पृथामभ्यगच्छदरिन्दमः ॥ १ ॥

[ नील० ] मृष्टं शोधितम् ॥ १८ ॥ परिहसन् नर्म कुर्वन् साम्बन्धिकं धनञ्जयादिसम्बन्धहेतुकं व्यवहारम् ॥ २० ॥ पूजितः स्तुतः ॥ २१ ॥ विदुरः पाण्डवानां विचेष्टितं तस्य तं कृष्णं प्रति अपृच्छदित्यन्वयः । सार्धश्लोक एकं वाक्यम् । अपृच्छदिति पूर्वस्मादनुकृष्यते प्रीयमाणस्येत्यादिषष्ठ्यो द्वितीयार्थे ॥ २६ ॥

इति उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकोननवतितमोऽध्यायः ॥ ८९ ॥

[ अर्जु० ] अञ्जसा तत्वतः ॥ १५ ॥ [ न संभवन्ति न शान्ति ] समेयाय संगतः सम् आ इयाय संधिः । समीयाय इति पाठे दीर्घत्वमार्षम् ॥ १६ ॥ ऊर्जितं दृढं मृष्टं निर्मलम् ॥ १८ ॥ उदकमर्घोदकम् ॥ १९ ॥ सांबन्धिकं संबन्धोचितम् ॥ २० ॥ अर्चितो वाग्भिः; पूजितो मधुपर्कादिना ॥ २१ ॥ विदुरावसथं विदुरगृहम् ॥२२॥ धर्मसततो धर्मनित्यः ॥ २६ ॥ तस्य क्षत्तुः ॥ २७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकोननवतितमोऽध्यायः ॥ ८९ ॥

[ सर्व० ] गृहं प्रकोष्ठम् सभीष्मं भीष्मेण सहितम् ॥१५॥ परिहसन्नर्म कुर्वन् ॥२०॥ संबन्धकं सम्बन्धहेतुकं व्यवहारम् । अर्चितो मधुपर्काद्यैः । पूजितः पूजावचनैः२१

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायामेकोननवतितमोऽध्यायः ॥ ८९ ॥

[ नील० ] अथेति ॥ १ ॥

१२ म. राजवेश्मनि । २१ म. समनुप्राप्य । २३ म. कल्याणैर॰ । २६ धर्मनित्यस्य च सदा । एकोननवतितमोऽध्यायः ॥ ८९ ॥

सा दृष्ट्वा कृष्णमायान्तं प्रसन्नादित्यवर्चसम् ।
कण्ठे गृहीत्वा प्राक्रोशत्स्मरन्ती तनयान् पृथा ॥२॥
तेषां सत्ववतां मध्ये गोविन्दं सहचारिणम् ।
चिरस्य दृष्ट्वा वार्ष्णेयं बाष्पमाहारयत्पृथा ॥ ३ ॥
साऽब्रवीत्कृष्णमासीनं कृतातिथ्यं युधां पतिम् ।
बाष्पगद्गदपूर्णेन मुखेन परिशुष्यता ॥ ४ ॥
ये ते बाल्यात्प्रभृत्येव गुरुशुश्रूषणे रताः ।
परस्परस्य सुहृदः संमताः समचेतसः ॥
निकृत्या भ्रंशिता राज्याज्जनार्हा निर्जनं गताः ५॥
विनीतक्रोधहर्षाश्च ब्रह्मण्याः सत्यवादिनः ।
त्यक्त्वा प्रियसुखे पार्था रुदतीमपहाय माम् ॥ ६ ॥
अहार्षुश्च वनं यान्तः समूलं हृदयं मम ।
अतदर्हा महात्मानः कथं केशव पाण्डवाः ॥ ७ ॥
ऊषुर्महावने तात सिंहव्याघ्रगजाकुले ।
बाला विहीनाः पित्रा ते मया सततलालिताः ॥८॥
अपश्यन्तश्च पितरौ कथमूषुर्महावने ।
शङ्खदुन्दुभिनिर्घोषैर्मृदङ्गैर्वेणुनिःस्वनैः ॥ ९ ॥
पाण्डवाः समबोध्यन्त बाल्यात्प्रभृति केशव ।
ये स्म वारणशब्देन हयानां हेषितेन च ॥ १० ॥
रथनेमिनिनादैश्च व्यबोध्यन्त तदा गृहे ।
शङ्खभेरीनिनादेन वेणुवीणानुनादिना ॥ ११ ॥
पुण्याहघोषमिश्रेण पूज्यमाना द्विजातिभिः ।
वस्त्रै रत्नैरलंकारैः पूजयन्तो द्विजन्मनः ॥ १२ ॥
गीर्भिर्मङ्गलयुक्ताभिर्ब्राह्मणानां महात्मनाम् ।
अर्चितैरर्चनार्हैश्च स्तुवद्भिरभिनन्दिताः ॥ १३ ॥
प्रासादाग्रेष्वबोध्यन्त राङ्कवाजिनशायिनः ।
क्रूरं च निनदं श्रुत्वा श्वापदानां महावने ॥ १४ ॥
न स्मोपयान्ति निद्रां ते न तदर्हा जनार्दन ।
भेरीमृदङ्गनिनदैःशङ्खवैणवनिःस्वनैः ॥ १५ ॥
स्त्रीणां गीतनिनादैश्च मधुरैर्मधुसूदन ।
बन्दिमागधसूतैश्च स्तुवद्भिर्बोधिताः कथम् ॥ १६ ॥
महावनेष्वबोध्यन्त श्वापदानां रुतेन च ।
ह्रीमान्सत्यधृतिर्दान्तो भूतानामनुकम्पिता ॥ १७ ॥
कामद्वेषौ वशे कृत्वा सतां वर्त्मानुवर्तते ।
अम्बरीषस्य मान्धातुर्ययातेर्नहुषस्य च ॥ १८ ॥
भरतस्य दिलीपस्य शिबेरौशीनरस्य च ।
राजर्षीणां पुराणानां धुरं धत्ते दुरुद्वहाम् ॥ १९ ॥
शीलवृत्तोपसंपन्नो धर्मज्ञः सत्यसंगरः ।
राजा सर्वगुणोपेतस्त्रैलोक्यस्यापि यो भवेत्॥ २० ॥
अजातशत्रुर्धर्मात्मा शुद्धजाम्बूनदप्रभः ।
श्रेष्ठः कुरुषु सर्वेषु धर्मतः श्रुतवृत्ततः ॥
प्रियदर्शो दीर्घभुजः कथं कृष्ण युधिष्ठिरः ॥ २१ ॥
यः स नागायुतप्राणो वातरंहा महाबलः ।
सामर्षः पाण्डवो नित्यं प्रियो भ्रातुः प्रियंकरः॥२२॥
कीचकस्य तु सज्ञातेर्यो हन्ता मधुसूदन ।
शूरः क्रोधवशानां च हिडिम्बस्य बकस्य च ॥२३॥
पराक्रमे शक्रसमो मातरिश्वसमो बले ।
महेश्वरसमः क्रोधे भीमः प्रहरतां वरः ॥ २४ ॥
क्रोधं बलममर्षं च यो निधाय परंतपः ।
जितात्मा पाण्डवोऽमर्षी भ्रातुस्तिष्ठति शासने २५॥
तेजोराशिं महात्मानं वरिष्ठममितौजसम् ।
भीमं प्रदर्शनेनापि भीमसेनं जनार्दन ॥ २६ ॥
तं ममाचक्ष्व वार्ष्णेय कथमद्य वृकोदरः ।
आस्ते परिघबाहुः स मध्यमः पाण्डवो बली॥२७॥
अर्जुनेनार्जुनो यः स कृष्ण बाहुसहस्रिणा ।
द्विबाहुः स्पर्धते नित्यमतीतेनापि केशव ॥ २८ ॥
क्षिपत्येकेन वेगेन पञ्च बाणशतानि यः ।
इष्वस्त्रे सदृशो राज्ञः कार्तवीर्यस्य पाण्डवः ॥ २९ ॥
तेजसाऽऽदित्यसदृशो महर्षिसदृशो दमे ।
क्षमया पृथिवीतुल्यो महेन्द्रसमविक्रमः ॥ ३० ॥
आधिराज्यं महद्दीप्तं प्रथितं मधुसूदन ।
आहृतं येन वीर्येण कुरूणां सर्वराजसु ॥ ३१ ॥

---

[नील०] प्रियं राज्यादि सुखं भोगोत्थ आह्लादः ॥ ६ ॥ धुरं भारम् ॥ १९ ॥ प्रियो दर्शो दर्शनं यस्य दर्शादिश्राद्धकर्म वा यस्य ॥ २१ ॥ सामर्षत्वादेव पाण्डवः पाण्डुरेव पाण्डवः स्वार्थे तद्धितः यद्वा पाण्डवः पाण्डुपुत्रः । 'पाण्डुः कुन्तीपतौ सिते' इति विश्वः ॥ २२ ॥

[अर्जु०] अम्बपितरौ अम्बा च पिता च तौ ह्रस्वत्वमार्षम् ॥९॥ धुरं भारं वष्टि कामयते ॥ १९ ॥ सत्यसंगरः सत्यप्रतिज्ञः । कथं किंकारणेनास्त इत्यनागतेन संबन्धः

---

६ म. विगतक्रोधहर्षाश्च ब्राह्मण्याः । म. त्यक्तप्रियसुखाः । ९ म. मृदङ्गैः पणवैरपि । २१ म. दीर्घबाहुः ।

यस्य बाहुबलं सर्वे पाण्डवाः पर्युपासते ।
स सर्वरथिनां श्रेष्ठः पाण्डवः सत्यविक्रमः ॥ ३२ ॥
यं गत्वाऽभिमुखः संख्ये न जीवन् कश्चिदाव्रजेत् ।
यो जेता सर्वभूतानामजेयो जिष्णुरच्युत ॥ ३३ ॥
योऽपाश्रयः पाण्डवानां देवानामिव वासवः ।
स ते भ्राता सखा चैव कथमद्य धनञ्जयः ॥३४॥
दयावान्सर्वभूतेषु ह्रीनिषेवो महास्त्रवित् ।
मृदुश्च सुकुमारश्च धार्मिकश्च प्रियश्च मे ॥ ३५ ॥
सहदेवो महेष्वासः शूरः समितिशोभनः ।
भ्रातॄणां कृष्ण शुश्रूषुर्धर्मार्थकुशलो युवा ॥ ३६ ॥
सदैव सहदेवस्य भ्रातरो मधुसूदन ।
वृत्तं कल्याणवृत्तस्य पूजयन्ति महात्मनः ॥ ३७ ॥
ज्येष्ठोपचायिनं वीरं सहदेवं युधां पतिम् ।
शुश्रूषुं मम वार्ष्णेय माद्रीपुत्रं प्रचक्ष्व मे ॥ ३८ ॥
सुकुमारो युवा शूरो दर्शनीयश्च पाण्डवः ।
भ्रातॄणां चैव सर्वेषां प्रियः प्राणो बहिश्चरः ॥३९॥
चित्रयोधी च नकुलो महेष्वासो महाबलः ।
कच्चित्स कुशली कृष्ण वत्सो मम सुखैधितः ॥४०॥
सुखोचितमदुःखार्हं सुकुमारं महारथम् ।
अपि जातु महाबाहो पश्येयं नकुलं पुनः ॥ ४१ ॥
पक्ष्मसंपातजे काले नकुलेन विना कृता ।
न लभामि धृतिं वीर साद्य जीवामि पश्य माम् ४२
सर्वैः पुत्रैः प्रियतरा द्रौपदी मे जनार्दन ।
कुलीना रूपसंपन्ना सर्वैः समुदिता गुणैः ॥ ४३ ॥
पुत्रलोकात्पतिलोकं वृण्वाना सत्यवादिनी ।
प्रियान्पुत्रान्परित्यज्य पाण्डवाननुरुध्यते ॥ ४४ ॥
महाभिजनसंपन्ना सर्वकामैः सुपूजिता ।
ईश्वरी सर्वकल्याणी द्रौपदी कथमच्युत ॥ ४५ ॥
पतिभिः पञ्चभिः शूरैरग्निकल्पैः प्रहारिभिः ।
उपपन्ना महेष्वासैर्द्रौपदी दुःखभागिनी ॥ ४६ ॥
चतुर्दशमिदं वर्षं यन्नापश्यमरिन्दम ।
पुत्राधिभिः परिद्यूनां द्रौपदीं सत्यवादिनीम् ॥४७॥
न नूनं कर्मभिः पुण्यैरश्नुते पुरुषः सुखम् ।
द्रौपदी चेत्तथावृत्ता नाश्नुते सुखमव्ययम् ॥ ४८ ॥
न प्रियो मम कृष्णाया बीभत्सुर्न युधिष्ठिरः ।
भीमसेनो यमौ वापि यदपश्यं सभागताम् ॥ ४९ ॥
न मे दुःखतरं किंचिद्भूतपूर्वं ततोऽधिकम् ।
स्त्रीधर्मिणीं द्रौपदीं यच्छ्वशुराणां समीपगाम् ॥५०॥
आनायितामनार्येण क्रोधलोभानुवर्तिना ।
सर्वे प्रैक्षन्त कुरव एकवस्त्रां सभागताम् ॥ ५१ ॥
तत्रैव धृतराष्ट्रश्च महाराजश्च बाह्लिकः ।
कृपश्च सोमदत्तश्च निर्विण्णाः कुरवस्तथा ॥ ५२ ॥
तस्यां संसदि सर्वेषां क्षत्तारं पूजयाम्यहम् ।
वृत्तेन हि भवत्यार्यो न धनेन न विद्यया ॥ ५३ ॥
तस्य कृष्ण महाबुद्धेर्गम्भीरस्य महात्मनः ।
क्षत्तुः शीलमलंकारो लोकानिविष्टभ्य तिष्ठति ॥५४॥

**वैशम्पायन उवाच—**

सा शोकार्ता च हृष्टा च दृष्ट्वा गोविन्दमागतम् ।
नानाविधानि दुःखानि सर्वाण्येवान्वकीर्तयत् ॥५५॥
पूर्वैराचरितं यत्तत्कुराजभिररिन्दम ।
अक्षद्यूतं मृगवधः कच्चिदेषां सुखावहम् ॥ ५६ ॥

---

॥२०॥ सज्ञातेः सकुटुंबस्य ॥ २३ ॥ [ मरुत्पतिर्वायुः । ] भीमं भयानकम् प्रदर्शनेन प्रत्यक्षेण ॥ २६ ॥ अर्जुनेन कार्तवीर्येण अवर इदानीं जातः । अतीतेन मृतेन ॥ २८ ॥ आधिराज्यं राज्ञामुपरिराज्यम् ॥ ३१ ॥

[ सर्व० ] धुरं वष्टि भारं वोढुमर्हति ॥ १९ ॥ कथं कीदृक् । यः स श्रेष्ठः स ते भ्राता कथमिति भीमविशेष-संबन्धात्तच्छब्दापौनरुक्त्यम् ॥ २१ ॥

[ नील० ] ज्येष्ठोपचायिनं ज्येष्ठानां भाववृद्धिकरम् ॥ ३८ ॥ पक्ष्मणोः संपातजे निमेषमात्रे इत्यर्थः ॥ ४२ ॥ पुत्रलोकात्पुत्रसन्निकर्षं त्यक्त्वा पतिलोकं पतिसंन्निधिं वृण्वाना ॥ ४४ ॥ तथावृत्ता पुण्यशीला ॥ ४८ ॥ कच्चिदिति काका सुखावहत्वं नास्तीति व्यज्यते । एषां मत्पुत्रभर्त्रादीनाम् ॥ ५६ ॥

[ अर्जु० ] वृत्तमाचारम् ॥ ३७ ॥ ज्येष्ठापचायिन ज्येष्ठपूजकम् ॥ ३८ ॥ पक्ष्मसंघातजे पक्ष्मणां संघातो मेलकः तत्र जाते यावति काले निमेषः इत्यर्थः । पक्ष्म-संपातजमिति च पठन्ति ॥ ४२ ॥ अनुपद्यते अनुगच्छत् अनुरुध्यत इति पाठे अकामयत ॥ ४४ ॥ कृष्णायाः कृष्णामपेक्ष्य ल्यब्लोपे पञ्चमी ॥ ४९ ॥ यत् यस्मात् स्त्रीधर्मिणीं रजस्वलाम् ॥ ५० ॥ अनार्येण अधर्मेण

---

३७ म. ज्येष्ठोपचायिनं शूरं । ४६ म. प्रतापिभिः । ५३ म. सर्वस्यां । ५६ म. सुखावहः ।

तन्मां दहति यत्कृष्णा सभायां कुरुसंनिधौ ।
धार्तराष्ट्रैः परिक्लिष्टा यथा नकुशलं तथा ॥ ५७ ॥
निर्वासनं च नगरात् प्रव्रज्या च परन्तप ।
नानाविधानां दुःखानामभिज्ञाऽस्मि जनार्दन॥५८॥
अज्ञातचर्या बालानामवरोधश्च माधव ।
न मे क्लेशतमं तत्स्यात्पुत्रैः सह परन्तप ॥ ५९ ॥
दुर्योधनेन निकृता वर्षमद्य चतुर्दशम् ।
दुःखादपि सुखं नः स्याद्यदि पुण्यफलक्षयः॥६०॥
न मे विशेषो जात्वासीत् धार्तराष्ट्रेषु पाण्डवैः ।
तेन सत्येन कृष्ण त्वां हतामित्रं श्रिया वृतम् ॥
अस्माद्विमुक्तं संग्रामात्पश्येयं पाण्डवैः सह ॥ ६१ ॥
नैव शक्याः पराजेतुं सर्वं ह्येषां तथाविधम् ।
पितरं त्वेव गर्हेयं नात्मानं न सुयोधनम् ॥ ६२ ॥
येनाहं कुन्तिभोजाय धनं वृत्तैरिवार्पिता ।
बालां मामार्यकस्तुभ्यं क्रीडन्तीं कन्दुहस्तिकाम् ६३
अदात्तु कुन्तिभोजाय सखा सख्ये महात्मने ।
साऽहं पित्रा च निकृता श्वशुरैश्च परन्तप ॥
अत्यन्तदुःखिता कृष्ण किं जीवितफलं मम ॥६४॥
यन्मां वागब्रवीन्नक्तं सूतके सव्यसाचिनः ।
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् ॥६५॥
हत्वा कुरून्महाजन्ये राज्यं प्राप्य धनञ्जयः ।
भ्रातृभिः सह कौन्तेयस्त्रीन्मेधानाहरिष्यति ॥ ६६ ॥
नाहं तामभ्यसूयामि नमो धर्माय वेधसे ।
कृष्णाय महते नित्यं धर्मो धारयति प्रजाः ॥ ६७॥
धर्मश्चेदस्ति वार्ष्णेय यथा वागभ्यभाषत ।
त्वं चापि तत्तथा कृष्ण सर्वं संपादयिष्यसि॥६८॥

---

[ निवातस्थामुपवनप्रविष्टाम् । ] ॥ ५१ ॥ अलंकारः शोभातिशयहेतुत्वात् ॥ ५४ ॥

[ सर्व० ] पक्ष्मणोरक्षिपिधानरोमावल्योः संघातः संयोगः तज्जे तदुपहिते ॥ ४२ ॥ पुत्रलोकात् पुत्रसन्निकर्षमनपेक्ष्य पतिलोकं पतिभिः संवासं वृण्वाना ॥ ४४ ॥ चतुर्दशमिति पूरणप्रत्ययस्य पूरणीयापेक्षित्वेन पूर्ववर्षाणां परिग्रहः । या द्रौपदी नियतस्थां वातागम्यात्यंतगुप्तदेशस्थाम् ॥४७॥ अक्षद्यूतमक्षक्रीडा मृगवधः कृतः ॥५६॥

[ नील० ] नकुशलं मरणम् ॥ ५७ ॥ अवरोधः राज्याप्रदानरूपो वृत्तिनिरोधः ॥ ५९ ॥ यदि सुखं पुण्यक्षयरूपम् अर्थाद्दुःखं पापक्षयरूपं तर्हि दुःखात्पापक्षयहेतोस्तत्सुखं नः अस्माकं स्यात् तथा च न वयं दुःखाद्भयं प्राप्नुम इत्यर्थः ॥ ६० ॥ अस्मात् भाविनः कुरुपाण्डवसंग्रामात् गोत्रकलहे विषमधियामेवावमर्दः समबुद्धीनां तु सुखमेवेति भावः ॥ ६१ ॥ सर्वं वृत्तम् एषां पाण्डवानां तथाविधं अविषमम् ॥ ६२ ॥ वृत्तैर्वदान्यत्वेन ख्यातैर्धनं यथा अक्लेशेनार्प्यते तद्वत् येनाहमर्पिता । 'वृत्तोऽतीते दृढे ख्याते' इति विश्वः धूर्तैरिवेत्यपपाठः । आर्यकः पितामहः । तुभ्यं तव ॥ ६३ ॥ श्वशुरैर्भीष्मादिभिः धृतराष्ट्रोऽपि भर्तुर्ज्येष्ठत्वात् श्वशुर एव ॥ ६४ ॥ महाजन्ये महायुद्धे मेधान् अश्वमेधान् ॥ ६६ ॥ अभ्यसूयामि निन्दामि वेधसे विश्वकर्त्रे महते इति कृष्णस्येश्वरस्य निन्दार्थमुपहासः कर्मण एव प्राबल्यं धर्मपदस्यार्थदर्शनेनाह—धर्म इति । धारयतीति धर्म इति व्युत्पत्त्या धर्म एव कर्ता धारयिता ईश्वराराधनं तु वृथैवेति भावः ॥ ६७ ॥ धर्मश्चेदिति धर्मेऽपि संशयं दर्शयति । सतोऽपीश्वरस्याकिंचित्करत्वमाह—त्वं चेति ॥ ६८ ॥

[ अर्जु० ] पितरं शूरम् ॥ ६२ ॥ अर्पिता पणीकृता । आर्यकः पितामहः तुभ्यं तव ॥ ६३ ॥ विनिकृता वञ्चिता ॥ ६४ ॥ सूतके अर्जुनस्य जन्मसमये स्पृशेत् स्प्रक्ष्यति ॥ ६५ ॥ महाजन्ये महारणे त्रीन् मेधान् अश्वमेधादीन् ॥ ६६ ॥ तां वाचम् अभ्यसूयाभि निन्दामि वेधसे धात्रे धीकर्मविशेषणपदमिदं कृष्णाय तुभ्यं महते व्यापकाय कृष्णविशेषणमिदम् ॥ ६७ ॥ तं चेदसीत्यन्वयः ॥ ६८ ॥

[ सर्व० ] कच्चित्तेषां पाण्डवानां सुखावहम् न तत्सुखार्थं कुर्वन्ति कच्चिदित्यर्थः ॥ ५७ ॥ निर्वासनं च प्रव्रज्या च दहतीत्यन्वयः ॥ ५८ ॥ दुःखात्पापे क्षीणेऽपि यदि तेषां सुखं न तस्यात्तदा तेषां पुण्यस्य फलस्य सर्वथा क्षय एव ॥ ६० ॥ पितरं गर्हामि येन कुंतिभोजायाऽहं दत्ता । तस्मैचेन्न दत्ता स्यां तदा संबन्धान्तरायाभावात् त्वयैव रक्षिताः स्युरित्याशयः ॥ ६२ ॥ धूर्तैर्देवनशीलैः । ते द्यूतदेयं समर्पयन्ति तुभ्यं तव ॥ ६३ ॥ श्वशुरैः श्वशुरादिभिर्धृतराष्ट्रादिभिः ॥ ६४ ॥ त्रीन् मेधान् यज्ञादीन् ॥ ६६ ॥ अभ्यसूयामि निन्दामि । तस्याधर्मदैवरूपत्वात् । धर्मधारकाय वेधसे प्रजापतये ॥ ६७ ॥ येन सावागुक्ता । धर्मश्चेदस्ति त्वं चाप्यसि ॥ ६८ ॥

[ लक्ष्मा० ] निर्वासनं च नगरादित्यत्र यन्निर्वासनं या च प्रव्रज्या ततः जातानां दुःखानामिति संबन्धः ॥५८॥ अज्ञातचर्या बालानामित्यत्र पुत्रैः सह अज्ञातचर्या एकचक्रनगरे जाता ॥ ५९ ॥

---

५७ म. यथाप्यकुशलं तथा । ५८ म. दुःखानामावासोऽस्मि जनार्दन । ५९ म. केशवं । ६६ म. कुरुग्रामजमध्ये ।

न मां माधव वैधव्यं नार्थनाशो न वैरता ।
तथा शोकाय दहति यथा पुत्रैर्विनाभवः ॥ ६९ ॥
याऽहं गाण्डीवधन्वानं सर्वशस्त्रभृतां वरम् ।
धनञ्जयं न पश्यामि का शान्तिर्हृदयस्य मे ॥
इतश्चतुर्दशं वर्षं यन्नापश्यं युधिष्ठिरम् ॥ ७० ॥
धनञ्जयं च गोविन्द यमौ तं च वृकोदरम् ।
जीवनाशं प्रनष्टानां श्राद्धं कुर्वन्ति मानवाः ॥७१॥
अर्थतस्ते मम मृतास्तेषां चाहं जनार्दन ।
ब्रूया माधव राजानं धर्मात्मानं युधिष्ठिरम् ॥ ७२ ॥
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ।
पराश्रया वासुदेव या जीवति धिगस्तु ताम् ॥७३॥
वृत्तेः कार्पण्यलब्धाया अप्रतिष्ठैव ज्यायसी ।
अथो धनञ्जयं ब्रूया नित्योद्युक्तं वृकोदरम् ॥७४॥
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ।
अस्मिंश्चेदागते काले मिथ्या चातिक्रमिष्यति॥७५॥
लोकसंभाविताः सन्तः सुनृशंसं करिष्यथ ।
नृशंसेन च वो युक्तांस्त्यजेयं शाश्वतीः समाः॥७६॥
काले हि समनुप्राप्ते त्यक्तव्यमपि जीवनम् ।
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतौ सदा ॥ ७७ ॥
विक्रमेणार्जितान् भोगान् वृणीतं जीवितादपि ।
विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ॥ ७८ ॥
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ।
गत्वा ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम् ॥ ७९ ॥
अर्जुनं पाण्डवं वीरं द्रौपद्याः पदवीं चर ।
विदितौ हि तवात्यन्तं क्रुद्धौ तौ तु यथान्तकौ ८०
भीमार्जुनौ नयेतां हि देवानपि परां गतिम् ।
तयोश्चैतदवज्ञानं यत्सा कृष्णा सभां गता ॥ ८१ ॥
दुःशासनश्च कर्णश्च परुषाण्यभ्यभाषताम् ।
दुर्योधनो भीमसेनमभ्यगच्छन्मनस्विनम् ॥ ८२ ॥
पश्यतां कुरुमुख्यानां तस्य द्रक्ष्यति यत्फलम् ।
नहि वैरं समासाद्य प्रशाम्यति वृकोदरः ॥ ८३ ॥
सुचिरादपि भीमस्य नहि वैरं प्रशाम्यति ।
यावदन्तं न नयति शात्रवाञ्छत्रुकर्शनः ॥ ८४ ॥
न दुःखं राज्यहरणं न च द्यूते पराजयः ।
प्रव्राजनं तु पुत्राणां न मे तद्दुःखकारणम् ॥ ८५ ॥
यत्तु सा बृहती श्यामा एकवस्त्रा सभां गता ।
अशृणोत्परुषा वाचः किं नु दुःखतरं ततः ॥ ८६॥
स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाभ्यगच्छत्तदा नाथं कृष्णा नाथवती सती॥८७॥
यस्या मम सपुत्रायास्त्वं नाथो मधुसूदन ।
रामश्च बलिनां श्रेष्ठः प्रद्युम्नश्च महारथः ॥ ८८ ॥
साऽहमेवंविधं दुःखं सहेयं पुरुषोत्तम ।
भीमे जीवति दुर्धर्षे विजये चापलायिनि ॥ ८९ ॥

**वैशम्पायन उवाच—**

तत आश्वासयामास पुत्राधिभिरभिप्लुताम् ।
पितृष्वसारं शोचन्तीं शौरिः पार्थसखः पृथाम्९०

**वासुदेव उवाच—**

का तु सीमन्तिनी त्वादृक् लोकेष्वस्ति पितृष्वसः ।
शूरस्य राज्ञो दुहिता आजमीढकुलं गता ॥ ९१ ॥
महाकुलीना भवती ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ ९२ ॥
वीरसूर्वीरपत्नी त्वं सर्वैः समुदिता गुणैः ।
सुखदुःखे महाप्राज्ञे त्वादृशी सोढुमर्हति ॥ ९३ ॥
निद्रातन्द्रे क्रोधहर्षौ क्षुत्पिपासे हिमातपौ ।
एतानि पार्था निर्जित्य नित्यं वीरसुखे रताः॥९४॥

---

[ नील० ] अतिक्रमिष्यति अयुद्धेनेत्यर्थः ॥ ७५ ॥ सुनृशंसम् अत्यन्तबीभत्सम् ॥ ७६ ॥

[ अर्जु० ] न वैरता न वैरं स्वार्थे तल् । नवैरता (?) इति वा । भवो भवनम् ॥ ६९ ॥ वृत्तेर्जीविकायाः । अप्रतिष्ठा मरणम् । नित्योद्युक्तो नित्योद्यतः ॥ ७४ ॥ मिथ्याचातिक्रमिष्यति (अ)कृतकार्यो यास्यति ॥ ७५ ॥ सुनृशंसमात्महिंसाम् ॥ ७६ ॥ पदवीं वर्त्म चर गच्छ तस्याः प्रीतिं कुर्वित्यर्थः ॥ ८० ॥ अभ्यगच्छत् विडम्बयन्ननुगमं कृतवान् ॥ ८२ ॥ बृहती महिम्ना । यद्वा बृहतीपुष्पवच्छ्यामा ॥ ८६ ॥

[ सर्व० ] इत इतः(?) ॥ ७० ॥ अप्रतिष्ठाऽनवस्थानं नित्योद्युक्त एव वृकोदरः स्वयमेवोद्यमित्वात् त्वं तु अनुद्यमित्वादुच्यसे ॥ ७४ ॥ अतिक्रमिष्यति व्यर्थो यास्यति ॥ ७५ ॥ अनृशंसं अरिमन्नन्याय्यम् । अयुद्धेन पापस्योत्पत्तेः ॥ ७६ ॥ पदवीं गमनवर्त्म ॥ ८० ॥ अत्यगच्छदम्यभवत् ॥ ८२ ॥ बृहती अबाला ॥ ८६ ॥ ह्रदात् सम्पूर्णतया ॥ ९२ ॥ सुखैधिताः सुखवर्धिताः ॥ ९४ ॥

---

६९ म. विनताभवम् । ९२ म. पत्नी च ।

त्यक्तग्राम्यसुखाः पार्था नित्यं वीरसुखप्रियाः ।
न तु स्वल्पेन तुष्येयुर्महोत्साहा महाबलाः ॥९५॥
अन्तं धीरा निषेवन्ते मध्यं ग्राम्यसुखप्रियाः ।
उत्तमांश्च परिक्लेशान् भोगांश्चातीव मानुषान् ॥९६॥
अन्तेषु रेमिरे धीरा न ते मध्येषु रेमिरे ।
अन्तप्राप्तिं सुखमाहुर्दुःखमन्तरमेतयोः ॥ ९७ ॥
अभिवादयन्ति भवतीं पाण्डवाः सह कृष्णया ।
आत्मानं च कुशलिनं निवेद्याहुरनामयम् ॥ ९८ ॥
अरोगान् सर्वसिद्धार्थान् क्षिप्रं द्रक्ष्यसि पाण्डवान् ।
ईश्वरान्सर्वलोकस्य हतामित्रान् श्रियावृतान् ॥९९॥
एवमाश्वासिता कुन्ती प्रत्युवाच जनार्दनम् ।
पुत्रादिभिरभिध्वस्ता निगृह्याबुद्धिजं तमः ॥१००॥

कुन्त्युवाच—
यद्यत्तेषां महाबाहो पथ्यं स्यान्मधुसूदन ।
यथा यथा त्वं मन्येथाः कुर्याः कृष्ण तथा तथा ॥१॥
अविलोपेन धर्मस्य अनिकृत्या परन्तप ।
प्रभावज्ञाऽस्मि ते कृष्ण सत्यस्याभिजनस्य च ॥२॥
व्यवस्थायां च मित्रेषु बुद्धिविक्रमयोस्तथा ।
त्वमेव नः कुले धर्मस्त्वं सत्यं त्वं तपो महत् ॥ ३ ॥
त्वं त्राता त्वं महद्ब्रह्म त्वयि सर्वं प्रतिष्ठितम् ।
यथैवात्थ तथैवैतत्त्वयि सत्यं भविष्यति ॥ ४ ॥

वैशम्पायन उवाच—
तामामन्त्र्य च गोविन्दः कृत्वा चाभिप्रदक्षिणम् ।
प्रातिष्ठत महाबाहुर्दुर्योधनगृहान्प्रति ॥ १०५ ॥

इति श्रीमहाभारते उद्योगपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

---

[लक्षा०] स्त्रीधर्मिणी वरारोहेत्यत्र स्त्रीधर्मिण्यविरात्रेयी मलिनी पुष्पवत्यपीत्यभिधानात् स्त्रीधर्मिणी रजस्वला ॥ ८७ ॥

[नील०] अन्तं राज्यं वा वनं वा मध्यम् अल्पैश्वर्यम् । अन्तपदं व्याचष्टे उत्तमानिति । उत्तमान् तीव्रवैराग्यजान् परिक्लेशान् शीतवातादीन् ॥ ९६ ॥ अन्तेषु अन्तयोः परब्रह्मानन्दे सुषुप्तौ वा उभयत्रैव द्वैतादर्शनात्सुखमस्ति एतयोरन्तरं जाग्रत्स्वप्नौ दुःखं दुःखरूपं स्वयमात्मा निर्दुःख एव जाग्रत्स्वप्नयोस्तूपाधिसंबन्धात्तत्र भासमानं दुःखम् आगमापायित्वात्तव पुत्राः सहन्ते त्वं च सहस्वेति भावः ॥ ९७ ॥ अबुद्धिजम् अज्ञानजं तमो विपर्ययज्ञानम् अनात्मनि देहादावात्माभिमानरूपम् ॥ १०० ॥ अनिकृत्या अच्छलेन ॥ १०२ ॥ त्वमेवेति भगवतः सार्वात्म्यं सर्वाधिष्ठानत्वं प्रोक्तम् ॥ १०३ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे नवतितमोऽध्यायः ॥ ९० ॥

[अर्जु०] अन्तं चतुर्वर्गस्यान्तं धर्ममोक्षौ धीरा धिया रममाणा निषेवन्ते । मध्यं अर्थकामौ ग्राम्यसुखप्रियाः ग्राम्याणां मूर्खाणां सुखं प्रियं येषाम् । उत्तमान् प्रविष्टान् परिक्लेशान् दुःखानि अतिशयान् भोगान् सुखानुभवान् ॥ ९६ ॥ उक्तमर्थमितिहासेन द्रढयति अन्त्येष्वित्यादिना । कृतव्याख्यानमिदम् । अथवा अन्तौ मूढताविवेकिते मध्यमुभयात्मना ॥ ९७ ॥ अबुद्धिजं तमः संदेहाज्ञाने ॥ १०० ॥ व्यवस्थायां भूमिधनादिभागे मित्रेषु इत्युपलक्षणम्, अमित्रेष्वपि बोद्धव्यम् । बुद्धिविक्रमयोः बुद्धावध्यवसाये विक्रमे युद्धसाधनानुष्ठाने यथोक्तकार्ये कृष्णस्य मध्यस्थतां धर्माद्युपचारैः प्रकटयति–त्वमेव नः कुले धर्म इत्यादिना ॥ १०३ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि नवतितमोऽध्यायः ॥ ९० ॥

[सर्व०] अन्तमतिदुःखं तपःप्रभृति अतिदुःखशरणं परिक्लेशांश्च भोगांश्च निषेवन्ते धीरा इत्यन्वयः ॥ ९६ ॥ अन्तेष्विति । धर्मार्थकाममोक्षमध्ये धर्मेषु मोक्षेषु न मध्येषु दुःखशरणेषु । अत एव तयोरन्तरं मध्यं सङ्कम इति यावत् । अन्तौ धर्ममोक्षौ मध्यावर्थकामाविति । तदेवक्रोधव्याख्याचतुष्टयाप्रस्तावा(?)देतयोरित्यस्यानुपपत्तेश्चासङ्गतमेव ॥९७॥ अबुद्धिर्मोहस्तमो दुःखम् ॥१००॥ व्यवस्था नियता वृत्तिः ॥ १०३ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां नवतितमोऽध्यायः ॥ ९० ॥

[लक्षा०] न्तरं मध्यगम् ॥ ९७ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे नवतितमोऽध्यायः ॥ ९० ॥

---

९४ म. वीरा नित्यसुखे रताः नवतितमोऽध्यायः ॥ ९० ॥

## एकनवतितमोऽध्यायः ९१

भोजनाय निमन्त्रितेन श्रीकृष्णेन तदनङ्गीकारे दुर्योधनेन भवता सह नो वैराभावादस्मत्प्रयुक्तपूजाया अग्रहणं न युक्तमित्युक्तेन श्रीकृष्णेन धर्मे स्थितैः पाण्डवैः सह द्वेष एव मे द्वेषस्तस्माद्दुष्टाभिसंहितं त्वदन्नं न भोक्तव्यमित्युक्त्वा विदुरगृहगमनम् ॥ १ ॥

**वैशम्पायन उवाच—**

पृथामामन्त्र्य गोविन्दः कृत्वा चाभिप्रदक्षिणम् ।
दुर्योधनगृहं शौरिरभ्यगच्छदरिन्दमः ॥ १ ॥
लक्ष्म्या परमया युक्तं पुरन्दरगृहोपमम् ।
विचित्रैरासनैर्युक्तं प्रविवेश जनार्दनः ॥ २ ॥
तस्य कक्ष्या व्यतिक्रम्य तिस्रो द्वाःस्थैरवारितः ।
ततोऽभ्रघनसंकाशं गिरिकूटमिवोच्छ्रितम् ॥ ३ ॥
श्रिया ज्वलन्तं प्रासादमारुरोह महायशाः ।
तत्र राजसहस्रैश्च कुरुभिश्चाभिसंवृतम् ॥ ४ ॥
धार्तराष्ट्रं महाबाहुं ददर्शासीनमासने ।
दुःशासनं च कर्णं च शकुनिं चापि सौबलम् ॥५॥
दुर्योधनसमीपे तानासनस्थान् ददर्श सः ।
अभ्यागच्छति दाशार्हे धार्तराष्ट्रो महायशाः ॥ ६ ॥
उदतिष्ठत्सहामात्यः पूजयन्मधुसूदनम् ।
समेत्य धार्तराष्ट्रेण सहामात्येन केशवः ॥ ७ ॥
राजभिस्तत्र वार्ष्णेयः समागच्छद्यथावयः ।
तत्र जाम्बूनदमयं पर्यङ्कं सुपरिष्कृतम् ॥ ८ ॥
विविधास्तरणास्तीर्णमभ्युपाविशदच्युतः ।
तस्मिन्गां मधुपर्कं चाप्युदकं च जनार्दने ॥ ९ ॥
निवेदयामास तदा गृहान् राज्यं च कौरवः ।
तत्र गोविन्दमासीनं प्रसन्नादित्यवर्चसम् ॥ १० ॥
उपासांचक्रिरे सर्वे कुरवो राजभिः सह ।
ततो दुर्योधनो राजा वार्ष्णेयं जयतां वरम् ॥ ११ ॥
न्यमन्त्रयद्भोजनेन नाभ्यनन्दच्च केशवः ।
ततो दुर्योधनः कृष्णमब्रवीत्कुरुसंसदि ॥ १२ ॥
मृदुपूर्वं शठोदर्कं कर्णमाभाष्य कौरवः ।
कस्मादन्नानि पानानि वासांसि शयनानि च ॥१३॥
त्वदर्थमुपनीतानि नाग्रहीस्त्वं जनार्दन ।
उभयोश्च ददत्साह्यमुभयोश्च हिते रतः ॥ १४ ॥
संबन्धी दयितश्चासि धृतराष्ट्रस्य माधव ।
त्वं हि गोविन्द धर्मार्थौ वेत्थ तत्त्वेन सर्वशः ॥
तत्र कारणमिच्छामि श्रोतुं चक्रगदाधर ॥ १५ ॥

**वैशम्पायन उवाच—**

स एवमुक्तो गोविन्दः प्रत्युवाच महामनाः ।
उद्यन्मेघस्वनः काले प्रगृह्य विपुलं भुजम् ॥ १६ ॥
अलघूकृतमग्रस्तमनिरस्तमसंकुलम् ।
राजीवनेत्रो राजानं हेतुमद्वाक्यमुत्तमम् ॥ १७ ॥

---

[ नील० ] पृथामिति । तामामन्त्र्येति पूर्वश्लोकेन प्रस्थानमात्रमुक्त्वा पृथामामन्त्र्येत्यत्र तु तदर्थानुवादपूर्वकं दुर्योधनगृहप्राप्तिरुच्यत इत्यपौनरुक्त्यम् ॥ १ ॥ अभ्रघनः सजलो मेघः स हि सविद्युत् तत्सादृश्येन महेन्द्रनीलमणिमयत्वं सुवर्णमयत्वं च सूचितम् । अन्ये तु अभ्रघनः आकाशमात्रवर्तिघनः स हि शरत्संबन्धाद्धवल इति व्याचख्युः ॥ ३ ॥ शठोदर्कं शाठ्यपर्यवसानम् आभाष्य संबोधनेनोन्मुखीकृत्य ॥१३॥ तत्र अन्नादेरग्रहणे ॥ १५॥ प्रगृह्य उद्यम्य ॥ १६ ॥ अलघूकृतं प्रयत्नशैथिल्यहीनकरणम् । पाठान्तरे अनम्बूकृतम् अनिष्ठीवनम् अनन्यकृतमित्यपि पठन्ति । अग्रस्तम् अलुप्ताक्षरम् । अनिरस्तं स्थानभ्रंशरहितम् । असंकुलम् असंकीर्णवर्णम् ॥ १७ ॥

[ अर्जु० ] अभ्रघनेति पुनरुक्तवदाभासोऽयमलंकारः । घनीभूताभ्रसंकाशमित्यर्थः । अतिशयार्थम् ॥ ३ ॥ शठोदर्कं शठस्य शाठ्यस्य मायाया उदर्कं उत्तरफलं यस्मिन् वाक्ये ॥ १३ ॥ साह्यं साहाय्यम् ॥ १४ ॥ ओघेति ओघो जलप्रवाहः काले वर्षादिसमये उत्तरदानसमये वा । प्रगृह्य उत्क्षिप्य भुजं दक्षिणमिति शेषः ॥ १६ ॥ अनम्बूकृतं निष्ठीवनरहितं दण्डयोजनरहितं वा अग्रस्तमलुप्तपदम्, अनिरस्तम् अत्वरितम्, असंकुलं प्रसन्नं, हेतुमत् सयुक्तिकम्, उत्तमं फलवत् ॥ १७ ॥

[ सर्व० ] तामामंत्र्येत्यादेरध्यायान्ते एतदवतारार्थत्वात् पृथामामंत्र्येत्यस्य श्लोकस्य न पौनरुक्त्यम् ॥ १ ॥ अभ्रघनः आकाशमात्रवर्तिघनः । स हि जलासंबन्धाद्धवलः ॥ ३ ॥ शठः शाठ्यं । स उदर्कफलं यस्य ॥ १३ ॥ ओघो नदीरयः भुजम् प्रगृह्य दुर्योधनस्य ॥ १६ ॥ अनम्बूकृतमष्ठीवनोक्तम् । अग्रस्तमलुप्ताक्षरम् ॥ १७ ॥

[ लक्षा० ] अनम्बूकृतमत्रस्तमित्यत्र अम्बूकृतं सनिष्ठीवमबद्धं स्यादनर्थकमित्यभिधानात् न विद्यते आम्बूकृतमबद्धं न भवतीत्यनम्बूकृतम् । अत्रस्तं न विद्यते त्रस्तं त्रासो यस्य कथने तदत्रस्तमिति च वाक्यस्य विशे-

---

१३ माभाष्य केवकम् । म. रौक्मानि शयनानि च । १६ ज. ओघमेघ' ।

कृतार्था भुञ्जते दूताः पूजां गृह्णन्ति चैव ह ।
कृतार्थं मां सहामात्यं समर्चिष्यसि भारत ॥ १८ ॥
एवमुक्तः प्रत्युवाच धार्तराष्ट्रो जनार्दनम् ।
न युक्तं भवताऽस्मासु प्रतिपत्तुमसांप्रतम् ॥ १९ ॥
कृतार्थं चाऽकृतार्थं च त्वां वयं मधुसूदन ।
यतामहे पूजयितुं दाशार्ह न च शक्नुमः ॥ २० ॥
न च तत्कारणं विद्मो यस्मिन्नो मधुसूदन ।
पूजां कृतां प्रीयमाणैर्नामंस्थाः पुरुषोत्तम ॥ २१ ॥
वैरं नो नास्ति भवता गोविन्द न च विग्रहः ।
स भवान् प्रसमीक्ष्यैतन्नेदृशं वक्तुमर्हति ॥ २२ ॥

**वैशम्पायन उवाच—**

एवमुक्तः प्रत्युवाच धार्तराष्ट्रं जनार्दनः ।
अभिवीक्ष्य सहामात्यं दाशार्हः प्रहसन्निव ॥ २३ ॥
नाहं कामान्न संरम्भान्न द्वेषान्नार्थकारणात् ।
न हेतुवादाल्लोभाद्वा धर्मं जह्यां कथंचन ॥ २४ ॥
संप्रीतिभोज्यान्यन्नानि आपद्भोज्यानि वा पुनः ।
न च संप्रीयसे राजन्नचैवापद्गता वयम् ॥ २५ ॥
अकस्माद्द्वेष्टि वै राजन् जन्मप्रभृति पाण्डवान् ।
प्रियानुवर्तिनो भ्रातॄन्सर्वैः समुदितान्गुणैः ॥ २६ ॥
अकस्माच्चैव पार्थानां द्वेषणं नोपपद्यते ।
धर्मे स्थिताः पाण्डवेयाः कस्तान्किं वक्तुमर्हति ॥२७॥
यस्तान्द्वेष्टि स मां द्वेष्टि यस्ताननु स मामनु ।
ऐकात्म्यं मां गतं विद्धि पाण्डवैर्धर्मचारिभिः ॥२८॥
कामक्रोधानुवर्ती हि यो मोहाद्विरुरुत्सति ।
गुणवन्तं च यो द्वेष्टि तमाहुः पुरुषाधमम् ॥ २९ ॥
यः कल्याणगुणान् ज्ञातीन् मोहाल्लोभाद्दिदृक्षते ।
सोऽजितात्माऽजितक्रोधो न चिरं तिष्ठति श्रियम् ३०
अथ यो गुणसंपन्नान् हृदयस्याप्रियानपि ।
प्रियेण कुरुते वश्यांश्चिरं यशसि तिष्ठति ॥ ३१ ॥
सर्वमेतन्न भोक्तव्यमन्नं दुष्टाभिसंहितम् ।
क्षत्तुरेकस्य भोक्तव्यमिति मे धीयते मतिः ॥ ३२ ॥
एवमुक्त्वा महाबाहुर्दुर्योधनममर्षणम् ।
निश्चक्राम ततः शुभ्राद्धार्तराष्ट्रनिवेशनात् ॥ ३३ ॥
निर्याय च महाबाहुर्वासुदेवो महामनाः ।
निवेशाय ययौ वेश्म विदुरस्य महात्मनः ॥ ३४ ॥
तमभ्यगच्छद्द्रोणश्च कृपो भीष्मोऽथ बाह्लिकः ।
कुरवश्च महाबाहुं विदुरस्य गृहे स्थितम् ॥ ३५ ॥
त ऊचुर्माधवं वीरं कुरवो मधुसूदनम् ।
निवेदयामो वार्ष्णेय सरत्नाँस्ते गृहान्वयम् ॥ ३६ ॥
तानुवाच महातेजाः कौरवान्मधुसूदनः ।
सर्वे भवन्तो गच्छन्तु सर्वा मेऽपचितिः कृता ॥३७॥

---

षणम् । अनिस्तमसकुंडलः । न विद्यते नितरां तमसमन्ध तमसं ययोस्ते कुण्डले यस्य स तथोक्तः ॥ १७ ॥

[ नील० ] असाम्प्रतं प्रतिपत्तुम् अयुक्तं कर्तुम् ॥१९॥ वैरं द्वेषः विग्रहो युद्धम् ॥ २२ ॥ संरम्भात् क्रोधात् हेतुवादात् कपटात् ॥ २४ ॥ द्वेष्टि भवान् ॥ २६ ॥ विरुरुत्सति विरोधं कर्तुमिच्छति ॥ २९ ॥ मोहात् अदुष्टे दुष्टबुद्धिर्मोहः लोभः परकीयधनापहारेच्छा अजितक्रोध इति छेदः ॥ ३० ॥ शुभ्रात् नानारत्नमयत्वेन प्रदीप्तात् । 'शुभ्रं प्रदीप्ते धवलेऽभ्रके च' इति विश्वः ॥ ३३ ॥ अपचितिः पूजा ॥ ३७ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकनवतितमोऽध्यायः ॥ ९१ ॥

[ अर्जु० ] वैरं विरोधः । विग्रहो युद्धम् एतद् वै बाह्यभावम् ॥ २२ ॥ कामात् इच्छातः संरम्भात् कोपात् द्वेषात् विरागात् अर्थकारणात् द्रव्यहेतोः हेतुवादात् आत्महेतोः हेतुतया वदनात् लाभात् अर्थस्य विनियोक्तुमिच्छातः । लोभादिति केचित् पठन्ति ॥२४॥ संप्रीतिरुभयोः प्रीतिः ॥ २५ ॥ द्वेक्षि द्वेषविषयान् करोषि । प्रियानुवर्तिनः प्रियांश्चानुवर्तिनः ॥ २६ ॥ अनु अनुगतः ॥ २८ ॥ विरुरुत्सति विरोद्धुमिच्छति ॥ २९ ॥ निवेशाय विश्रामाय ॥ ३४ ॥ अपचितिः पूजाः ॥ ३७ ॥

[ सर्व० ] विग्रहो युद्धम् ॥ २२ ॥ कामादिच्छामात्रेण संरंभात् कृत्रिमद्वेषात् । अर्थकारणादर्थप्राप्त्यर्थम् । लोभात्कार्पण्यात् ॥ २४ ॥ अनु अनुकूलः ॥ २८ ॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामेकनवतितमोऽध्यायः ॥ ९१ ॥

[ लक्षा० ] प्रतिवक्तुमसांप्रतमित्यत्र संप्रति वक्तुमयोग्यमसांप्रतम् ॥ १९ ॥ विरुरुत्सते विरोद्धुमिच्छति ॥ २९ ॥ सर्वा मेऽपचितिः कृतेत्यत्र पूजा नमस्योपचितिः सपर्या चार्हणाः समा इत्यमरः । अपचितिः पूजा ॥३७॥ [ संभ्रमैस्तुष्य गोविन्देत्यत्र संभ्रमैः भक्त्युद्रेकादिसंभ्रमैः तुष्य संतुष्टो भव । तुष तुष्टाविति धातोर्लोटि मध्यमपुरुषवचनम् । एतत् संभ्रमकरणम् ]

इति श्रीमन्महाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे एकनवतितमोऽध्यायः ॥ ९१ ॥

---

२३ म. प्रहसन्निव । २५ म. न चाप्यापद्' । एकनवतितमोऽध्यायः॥९१॥

यातेषु कुरुषु क्षत्ता दाशार्हमपराजितम् ।
अभ्यर्चयामास तदा सर्वकामैः प्रयत्नवान् ॥ ३८ ॥
ततः क्षत्ताऽन्नपानानि शुचीनि गुणवन्ति च ।
उपाहरदनेकानि केशवाय महात्मने ॥ ३९ ॥
तैस्तर्पयित्वा प्रथमं ब्राह्मणान्मधुसूदनः ।
वेदविद्भ्यो ददौ कृष्णः प्रथमं द्रविणान्यपि ॥४०॥
ततोऽनुयायिभिः सार्धं मरुद्भिरिव वासवः ।
विदुरान्नानि बुभुजे शुचीनि गुणवन्ति च ॥ ४१ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

---

द्विनवतितमोऽध्यायः ९२

निर्मर्यादानां दुष्टचेतसां धार्तराष्ट्राणां मध्ये तवावतरणं मे न रोचत इति श्रीकृष्णं प्रति विदुरवचनम् ॥ १ ॥

**वैशम्पायन उवाच—**

तं भुक्तवन्तमाश्वस्तं निशायां विदुरोऽब्रवीत् ।
नेदं सम्यग्व्यवसितं केशवागमनं तव ॥ १ ॥
अर्थधर्मातिगो मन्दः संरम्भी च जनार्दन ।
मानघ्नो मानकामश्च वृद्धानां शासनातिगः ॥ २ ॥
धर्मशास्त्रातिगो मूढो दुरात्मा प्रग्रहं गतः ।
अनेयः श्रेयसां मन्दो धार्तराष्ट्रो जनार्दन ॥ ३ ॥
कामात्मा प्राज्ञमानी च मित्रध्रुक्सर्वशंकितः ।
अकर्ता चाकृतज्ञश्च त्यक्तधर्मा प्रियानृतः ॥ ४ ॥
मूढश्चाकृतबुद्धिश्च इन्द्रियाणामनीश्वरः ।
कामानुसारी कृत्येषु सर्वेष्वकृतनिश्चयः ॥ ५ ॥
एतैश्चान्यैश्च बहुभिर्दोषैरेव समन्वितः ।
त्वयोच्यमानः श्रेयोऽपि संरम्भान्न ग्रहीष्यति ॥६॥
भीष्मे द्रोणे कृपे कर्णे द्रोणपुत्रे जयद्रथे ।
भूयसीं वर्तते वृत्तिं न शमे कुरुते मनः ॥ ७ ॥
निश्चितं धार्तराष्ट्राणां सकर्णानां जनार्दन ।
भीष्मद्रोणमुखान्पार्थो न शक्ताः प्रतिवीक्षितुम् ॥८॥
सेनासमुदयं कृत्वा पार्थिवं मधुसूदन ।
कृतार्थं मन्यते बाल आत्मानमविचक्षणः ॥ ९ ॥
एकः कर्णः परान् जेतुं समर्थ इति निश्चितम् ।
धार्तराष्ट्रस्य दुर्बुद्धेः स शमं नोपयास्यति ॥ १० ॥
संविच्च धार्तराष्ट्राणां सर्वेषामेव केशव ।
शमे प्रयतमानस्य तव सौभ्रात्रकांक्षिणः ॥ ११ ॥
न पाण्डवानामस्माभिः प्रतिदेयं यथोचितम् ।
इति व्यवसितास्तेषु वचनं स्यान्निरर्थकम् ॥ १२ ॥
यत्र सूक्तं दुरुक्तं च समं स्यान्मधुसूदन ।
न तत्र प्रलपेत्प्राज्ञो बधिरेष्विव गायनः ॥ १३ ॥
अविजानत्सु मूढेषु निर्मर्यादेषु माधव ।
न त्वं वाक्यं ब्रुवन्युक्तश्चाण्डालेषु द्विजो यथा ॥१४॥

---

[ अर्जु० ] शुचीनि संकरविरहितानि । गुणवन्ति प्रशस्तबहुतरव्यञ्जनादियुक्तानि ॥ ३९ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकनवतितमोऽध्यायः ॥ ९१ ॥

[ नील० ] तं भुक्तवन्तमिति ॥ १ ॥ प्रग्रहं निर्बन्धम् अत्यन्ताभिनिवेशमित्यर्थः । अनेयः अप्रापणीयः श्रेयसां कर्मणि षष्ठी ॥ ३ ॥ सर्वशङ्किता सर्वत्रविश्वासहीनः ॥ ४ ॥ वृत्तिं जीविकाम् एते युद्धेन मह्यं राज्यं दास्यन्तीत्याशयेत्यर्थः ॥ ७ ॥ पार्थिवं पृथ्वीसंबन्धिनम् ॥९॥ प्रतिदेयं परावृत्य देयं व्यवसिताः निश्चिताः ॥१२॥

[ अर्जु० ] अर्थधर्मातिगः अर्थधर्मयोर्विहितपथमतिक्रम्य गच्छतीति तथा । मानघ्नो मान्येषु पूजाविमुखः । वृद्धानां ज्ञानवृद्धानां शासनमुपदेशम् ॥ २ ॥ दुरात्मा दुष्टहृदयः । प्रग्रहं प्रौढभावं दुर्ग्रहमिति यावत् । गतः प्राप्तः अनेयोऽविधेयः । श्रेयसां ज्ञानवृद्धानां उत्तमानामित्यर्थः ॥ ३ ॥ अकर्ता अनुपकारकः ॥ ४ ॥ अकृतविश्रमः फलपर्यन्तस्थायी विश्रमो निश्रमः ॥ ५ ॥ सेनासमुदयं सेनासमूहम् पार्थिवं पृथिव्या ईश्वरं बालोऽन्धः अविचक्षणोऽविवेचकः ॥ ९ ॥ निश्चितं कर्तृ ॥ १० ॥ संवित् परस्परानुमतिः ॥ ११ ॥

[ सर्व० ] अर्थे निमित्ते धर्ममतिगच्छतीति तथा ॥ २ ॥ प्रग्रहं प्रकृष्टं ग्रहमसदभिनिवेशं गतः प्राप्तः ॥ ३ ॥ भूयसीमुत्तमां वृत्तिं गौरवप्रवृत्तिम् योत्स्यते इत्यभिसंधानेन ॥ ७ ॥ संविदन्योन्यमर्यादास्थापनम् ॥११॥ न प्रतिदेयमिति व्यवसिता निश्चिताः ॥ १२ ॥ अविजानत्सु तत्वज्ञानरहितेषु । मूढेषु विपरीतज्ञानवत्सु॥१४॥

[ लक्षा० ] भूयसी वर्तते वृत्तिरित्यत्र वृत्तिः धनदानादिना अनुवृत्तिः ॥ ७ ॥

सोऽयं बलस्थो मूढश्च न करिष्यति ते वचः ।
तस्मिन्निरर्थकं वाक्यमुक्तं संपत्स्यते तव ॥ १५ ॥
तेषां समुपविष्टानां सर्वेषां पापचेतसां ।
तव मध्यावतरणं मम कृष्ण न रोचते ॥ १६ ॥
दुर्बुद्धीनामशिष्टानां बहूनां दुष्टचेतसां ।
प्रतीपं वचनं मध्ये तव कृष्ण न रोचते ॥ १७ ॥
अनुपासितवृद्धत्वाच्छ्रियो दर्पाच्च मोहितः ।
वयोदर्पादमर्षाच्च न ते श्रेयो ग्रहीष्यति ॥ १८ ॥
बलं बलवदप्यस्य यदि वक्ष्यसि माधव ।
त्वय्यस्य महती शङ्का न करिष्यति ते वचः ॥१९॥
नेदमद्य युधा शक्यमिन्द्रेणापि सहामरैः ।
इति व्यवसिताः सर्वे धार्तराष्ट्रा जनार्दन ॥ २० ॥
तेष्वेवमुपपन्नेषु कामक्रोधानुवर्तिषु ।
समर्थमपि ते वाक्यमसमर्थं भविष्यति ॥ २१ ॥
मध्ये तिष्ठन्हस्त्यनीकस्य मन्दो
रथाश्वयुक्तस्य बलस्य मूढः ।
दुर्योधनो मन्यते वीतभीतिः
कृत्स्ना मयेयं पृथिवी जितेति ॥ २२ ॥
आशंसते वै धृतराष्ट्रस्य पुत्रो
महाराज्यमसपत्नं पृथिव्याम् ।
तस्मिन् शमः केवलो नोपलभ्यो
बद्धं सन्तं मन्यते लब्धमर्थम् ॥ २३ ॥
पर्यस्तेयं पृथिवी कालपक्वा
दुर्योधनार्थे पाण्डवान् योद्धुकामाः ।
समागताः सर्वयोधाः पृथिव्यां
राजानश्च क्षितिपालैः समेताः ॥ २४ ॥
सर्वे चैते कृतवैराः पुरस्ता-
त्त्वया राजानो हृतसाराश्च कृष्ण ।
तवोद्वेगात्संश्रिता धार्तराष्ट्रा-
न्सुसंहताः सह कर्णेन वीराः ॥ २५ ॥
त्यक्तात्मानः सह दुर्योधनेन
हृष्टा योद्धुं पाण्डवान्सर्वयोधाः ।
तेषां मध्ये प्रविशेथा यदि त्वं
न तन्मतं मम दाशार्ह वीर ॥ २६ ॥
तेषां समुपविष्टानां बहूनां दुष्टचेतसां ।
कथं मध्यं प्रपद्येथाः शत्रूणां शत्रुकर्शन ॥ २७ ॥
सर्वथा त्वं महाबाहो देवैरपि दुरुत्सहः ।
प्रभावं पौरुषं बुद्धिं जानामि तव शत्रुहन् ॥ २८ ॥
या मे प्रीतिः पाण्डवेषु भूयः सा त्वयि माधव ।
प्रेम्णा च बहुमानाच्च सौहृदाच्च ब्रवीम्यहम् ॥२९॥
या मे प्रीतिः पुष्कराक्ष त्वद्दर्शनसमुद्भवा ।
सा किमाख्यायते तुभ्यमन्तरात्माऽसि देहिनाम् ३०॥

इति श्रीमहाभारते उद्योगपर्वणि द्विनवतितमोऽध्यायः ॥ ९२ ॥

[ नील० ] ते त्वत्तः ॥ १८ ॥ बद्धं भवदीयत्वेन प्रतिबद्धमपि लब्धमेव मन्यते ॥ २३ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारत-भावदीपे द्विनवतितमोऽध्यायः ॥ ९२ ॥

[ अर्जु० ] प्रतीपं प्रतिकूलम् ॥ १७ ॥ इदं बलं शक्यं जेतुमिति शेषः । व्यवसिता निश्चयबुद्धयः ॥ २० ॥ एवमुक्तैर्दोषैः उपपन्नेषु संबद्धेषु समर्थं युक्तं हितं वा॥२१॥ वीतमन्युः गतशोकः ॥२२॥ क्षेमः 'कुशलं क्षेममस्त्रियाम्' इत्यनुशासनात् पुंस्त्वं, कुशलम् केवलो मायारहितः बद्धं सन्तं मन्यते लब्धमर्थमिति बद्धं वञ्चनेन, सन्तं कतिपयदिवसस्थायिनं, लब्धं मन्यते परैराच्छेदं न पश्यति ॥२३॥ पर्यस्ता प्रेषिता पृथिवी निवासिनः तात्स्थ्यात् । राजानः क्षत्रियाः, क्षितिपालाः राज्येऽभिषिक्तास्तैः ॥ २४ ॥ हृतसाराः सारं सुवर्णादि सुसंहिताः सुष्ठुकृतसंधानाः ॥२५॥ त्यक्तात्मानः त्यक्तदेहाः सृष्टा विधिनेति शेषः ॥ २६ ॥

भूयः प्रचुरतरं यथा स्यात् तथा त्वयि प्रेम्णा स्नेहेन बहुमानात् महद्बुद्धेः । सौहृदात् माध्यस्थ्यात् ॥ २९ ॥

इति श्रीमन्म० मर्जुनमि० मुद्यो० द्विनवतितमोऽध्यायः ॥ ९२ ॥

[ सर्व० ] बलं पाण्डवानां बलवदतिशयितमिदमस्माकं बलं न शक्यं न साध्यं भवतीति व्यवसिताः ॥१९॥ तेष्वेवमुपपन्नेषु प्रवृत्तेषु ॥२१॥ वीतमन्युर्गतभीकः ॥२२॥ क्षमो नाभासाचः ? केवलः कृत्स्नः । लब्धमर्थमपेक्षितं मन्यते तमेव च बद्धं मन्यते बद्धत्वेनाचलत्वमभिप्रैति ॥ २३ ॥ पर्यस्ता विवर्तिताः क्षितिपालाः सामन्तादयः राजानः पृथ्वीपतयः ॥२४॥ संहताः कृतसन्धयः ॥२५॥ सृष्टा निश्चिताः 'सर्गस्तु निश्चयः' इति नानार्थः ॥२६॥ भूय इति । अव्ययं तेनालिङ्गता । प्रेम्णा स्नेहेन सौहृदान्मैत्र्या ॥२९॥

इति महाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां द्विनवतितमोऽध्यायः ॥ ९२ ॥

[ लक्षा० ] नेदमस्य युधा शक्यमित्यत्र अस्य दुर्योधनस्य इदं राज्यं युधा युद्धेन शक्यमपहर्तुं शक्यं न इति

२५ म. हृतरत्नाश्च । द्विनवतितमोऽध्यायः ॥ ९२ ॥

## त्रिनवतितमोऽध्यायः ९३

न मे पर्याप्ताः सर्वे पार्थिवाः, किंच पाण्डवानामर्थमहापयन्यदि कुरूणां शममाचरेयं तदा मे पुण्यं चरितं स्यादिति बुद्ध्याहमागतोऽस्मीति श्रीकृष्णवचः ॥ १ ॥

**श्रीभगवानुवाच—**

यथा ब्रूयान्महाप्राज्ञो यथा ब्रूयाद्विचक्षणः ।
यथा वाच्यस्त्वद्विधेन भवता मद्विधः सुहृत् ॥ १ ॥
धर्मार्थयुक्तं तथ्यं च यथा त्वय्युपपद्यते ।
तथा वचनमुक्तोऽस्मि त्वयैतत्पितृमातृवत् ॥ २ ॥
सत्यं प्राप्तं च युक्तं वाऽप्येवमेव यथाऽऽत्थ मां ।
शृणुष्वागमने हेतुं विदुरावहितो भव ॥ ३ ॥
दौरात्म्यं धार्तराष्ट्रस्य क्षत्रियाणां च वैरताम् ।
सर्वमेतदहं जानन् क्षत्तः प्राप्तोऽद्य कौरवान् ॥ ४ ॥
पर्यस्तां पृथिवीं सर्वां साश्वां सरथकुञ्जराम् ।
यो मोचयेन्मृत्युपाशात्प्राप्नुयाद्धर्ममुत्तमम् ॥ ५ ॥
धर्मकार्यं यतन् शक्त्या नो चेत्प्राप्नोति मानवः ।
प्राप्तो भवति तत्पुण्यमत्र मे नास्ति संशयः ॥ ६ ॥
मनसा चिन्तयन्पापं कर्मणा नातिरोचयन् ।
न प्राप्नोति फलं तस्येत्येवं धर्मविदो विदुः ॥ ७ ॥
सोऽहं यतिष्ये प्रशमं क्षत्तः कर्तुममायया ।
कुरूणां सृञ्जयानां च संग्रामे विनशिष्यताम् ॥ ८ ॥
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
कर्णदुर्योधनकृता सर्वे ह्येते तदन्वयाः ॥ ९ ॥
व्यसने क्लिश्यमानं हि यो मित्रं नाभिपद्यते ।
अनर्थाय यथाशक्ति तन्नृशंसं विदुर्बुधाः ॥ १० ॥
आकेशग्रहणान्मित्रमकार्यात्संनिवर्तयन् ।
अवाच्यः कस्यचिद्भवति कृतयत्नो यथाबलम् ॥ ११ ॥
तत्समर्थं शुभं वाक्यं धर्मार्थसहितं हितम् ।
धार्तराष्ट्रः सहामात्यो ग्रहीतुं विदुरार्हति ॥ १२ ॥
हितं हि धार्तराष्ट्राणां पाण्डवानां तथैव च ।
पृथिव्यां क्षत्रियाणां च यतिष्येऽहममायया ॥ १३ ॥
हिते प्रयतमानं मां शंकेद्दुर्योधनो यदि ।
हृदयस्य च मे प्रीतिरानृण्यं च भविष्यति ॥ १४ ॥
ज्ञातीनां हि मिथो भेदे यन्मित्रं नाभिपद्यते ।
सर्वयत्नेन माध्यस्थ्यं न तन्मित्रं विदुर्बुधाः ॥ १५ ॥

योजना ॥ २० ॥ वीतमन्युरित्यत्र विशेषेण इतः प्राप्तो मन्युर्यस्य स तथोक्तः ॥ २२ ॥ यश्चाशमं मन्यते प्राप्तमर्थमित्यत्र अशममशममेव अर्थं प्रयोजनं प्राप्तं मन्यते ॥ २३ ॥ पर्याप्तेयं पृथिवीत्यत्र दुर्योधनार्थे ये योद्धुकामाः तैः पर्याप्तेति संबन्धः ॥ २४ ॥ [ कृते कृताशा इत्यत्र कृते युद्धकर्मणि कृताशाः मन्युवशा विनीता इत्यत्र मन्युवशाश्च ते अविनीताश्चेति विशेषणसमासः ]

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे द्विनवतितमोऽध्यायः ॥ ९२ ॥

[ नील० ] यथेति ॥ १ ॥ पर्यस्ताम् अन्यथाभूताम् ॥ ५ ॥ यतन् यतमानः ॥ ६ ॥ तन्नृशंसम् अनर्थाय विदुरिति संबन्धः । अनुनीयेत्यपि पाठः ॥ १० ॥ हितं कर्तुमिति शेषः ॥ १३ ॥ नाभिपद्यते नोपकरोति ॥ १५ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे त्रिनवतितमोऽध्यायः ॥ ९३ ॥

[ अर्जु० ] पितृमातृवत् पितेव मातेव ॥ २ ॥ यतन् आरभमाणः प्राप्तो भवति तत् पुण्यं धर्माय पुनरारम्भः सङ्कल्पोऽपि न निष्फल इति वचनात् ॥ ६ ॥ नाभिरोचयन् अनभिरुचिः पापचिन्ता विरोधी सङ्कल्पः एतेन मानसं पापं मनसैव प्रायश्चित्तेन हतम् । यत्र तु पापचिन्तायां तद्विरोधी सङ्कल्पो न हतः तत्र मानसं पापमस्तीति धर्मविदां मतम् ॥ ७ ॥ तदन्वयाः तदनुयायिनः ॥ ९ ॥ नाभिपद्यते नोपसर्पति ॥ १० ॥ न वाच्यः कस्यचिद्भवति कस्यचिद्वाच्यो न भवतीत्यर्थः ॥ ११ ॥ प्रीतिर्भविष्यति आनृण्यं च भविष्यतीत्यर्थः ॥ १४ ॥

[ सर्व० ] विचक्षणः शास्त्रज्ञः । त्वद्विधेन त्वत्सदृशेन भवता वाच्यः ॥ १ ॥ त्वयि त्वन्मनसि उपपद्यते अस्ति अतो यथा भवता वाच्य इत्यपौनरुक्त्यम् ॥ २ ॥ मनसा प्राप्यमपकारं कर्मप्रवृत्या नाभिरोचयेत् । पापं लोके पापेन हि पापरुचिं प्रकामयति । शुद्धभाववदाचरतीति यावत् । तस्य कर्मणः ॥ ७ ॥ तदन्वयास्तदनुगताः ॥ ९ ॥ नाभिपद्यते नोपकरोति ॥ १० ॥ हृदयस्य प्रीतिः स्वकर्तव्यापरित्यागात् । अत एवानृण्यं मित्रेषु कर्तव्यकारित्वं च भविष्यति ॥ १४ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां त्रिनवतितमोऽध्यायः ॥ ९३ ॥

[ लक्षा० ] ग्रहीतुं धार्तराष्ट्राणामित्यत्र ग्रहीतुं ग्राहयितुम् ॥ १२–१३ ॥

इति श्रीम० भा० उ० वा० कृ० ल० त्रिनवतितमोऽध्यायः ॥ ९३ ॥

३ म. सर्वं प्राप्तं । ५ म. प्रमोचयन् । १४ म. दुर्योधनो हृदि ।

न मां ब्रूयुरधर्मिष्ठा मूढा ह्यसुहृदस्तथा ।
शक्तो नावारयत्कृष्णः संरब्धान्कुरुपाण्डवान्॥१६॥
उभयोः साधयन्नर्थमहमागत इत्युत ।
तत्र यत्नमहं कृत्वा गच्छेयं नृष्ववाच्यताम् ॥१७॥
मम धर्मार्थयुक्तं हि श्रुत्वा वाक्यमनामयम् ।
न चेदादास्यते बालो दिष्टस्य वशमेष्यति ॥ १८ ॥
अहापयन्पाण्डवार्थं यथाव-
च्छमं कुरूणां यदि चाचरेयम् ।
पुण्यं च मे स्याच्चरितं महात्म-
न्मुच्येरंश्च कुरवो मृत्युपाशात् ॥ १९ ॥
अपि वाचं भाषमाणस्य काव्यां
धर्मारामामर्थवतीमहिंस्राम् ।
अवेक्षेरन् धार्तराष्ट्राः शमार्थं
मां च प्राप्तं कुरवः पूजयेयुः ॥ २० ॥
न चापि मम पर्याप्ताः सहिताः सर्वपार्थिवाः ।
क्रुद्धस्य प्रमुखे स्थातुं सिंहस्येवेतरे मृगाः ॥ २१ ॥

**वैशम्पायन उवाच—**

इत्येवमुक्त्वा वचनं वृष्णीनामृषभस्तदा ।
शयने सुखसंस्पर्शे शिश्ये यदुसुखावहः ॥ २२ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

## चतुर्नवतितमोऽध्यायः ९४

श्रीकृष्णस्य कुरुसभाप्रवेशः अत्रान्तरे सभां द्रष्टुमृषीणामागमनम्, तेषु पूजितेषु सर्वैरासनपरिग्रहः ॥ १ ॥

**वैशम्पायन उवाच—**

तथा कथयतोरेव तयोर्बुद्धिमतोस्तदा ।
शिवा नक्षत्रसंपन्ना सा व्यतीयाय शर्वरी ॥ १ ॥
धर्मार्थकामयुक्ताश्च विचित्रार्थपदाक्षराः ।
शृण्वतो विविधा वाचो विदुरस्य महात्मनः ॥ २ ॥
कथाभिरनुरूपाभिः कृष्णस्यामिततेजसः ।
अकामस्येव कृष्णस्य सा व्यतीयाय शर्वरी ॥ ३ ॥
ततस्तु स्वरसंपन्ना बहवः सूतमागधाः ।
शङ्खदुन्दुभिनिर्घोषैः केशवं प्रत्यबोधयन् ॥ ४ ॥
तत उत्थाय दाशार्ह ऋषभः सर्वसात्वताम् ।
सर्वमावश्यकं चक्रे प्रातःकार्यं जनार्दनः ॥ ५ ॥
कृतोदकानुजप्यः स हुताग्निः समलंकृतः ।
ततश्चादित्यमुद्यन्तमुपातिष्ठत माधवः ॥ ६ ॥
अथ दुर्योधनः कृष्णं शकुनिश्चापि सौबलः ।
संध्यां तिष्ठन्तमभ्येत्य दाशार्हमपराजितम् ॥ ७ ॥
आचक्षेतां तु कृष्णस्य धृतराष्ट्रं सभागतम् ।
कुरूंश्च भीष्मप्रमुखान् राज्ञः सर्वांश्च पार्थिवान् ॥८॥
त्वामर्थयन्ते गोविन्द दिवि शक्रमिवामराः ।
तावभ्यनन्दद्गोविन्दः साम्ना परमवल्गुना ॥ ९ ॥
ततो विमल आदित्ये ब्राह्मणेभ्यो जनार्दनः ।
ददौ हिरण्यं वासांसि गाश्चाश्वांश्च परन्तपः ॥१०॥
विसृज्य बहुरत्नानि दाशार्हमपराजितम् ।
तिष्ठन्तमुपसंगम्य ववन्दे सारथिस्तदा ॥ ११ ॥
ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हयोत्तमयुजा शीघ्रमुपातिष्ठत दारुकः ॥ १२ ॥
तमुपस्थितमाज्ञाय रथं दिव्यं महामनाः ।
महाभ्रघननिर्घोषं सर्वरत्नविभूषितम् ॥ १३ ॥

---

[ अर्जु० ] आदास्यते आ सम्यक् दास्यति ॥ १८ ॥ महार्थं महानर्थः फलं स्वर्गादि यस्य ॥ १९ ॥ काव्यां वर्णनीयां धर्मारामां धर्मस्यारामः क्रीडा यत्र ॥ २० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृताया-
मुद्योगपर्वणि त्रिनवतितमोऽध्यायः ॥ ९३ ॥

[ नील० ] नक्षत्रसंपन्ना शरदि निरभ्रत्वात् ॥ १ ॥ उदकं स्नानाचमनादि अनुजप्यं संध्योपासनादि ते उभे कृते येन सः कृतोदकानुजप्यः ॥ ६ ॥ तिष्ठन्तम् उपासीनम् ॥ ७ ॥

[ अर्जु० ] शिवा निरुपद्रवत्वात् नक्षत्रसंपन्ना कृष्णपक्षत्वात् ॥ १ ॥ अभ्यैताम् अभ्यगच्छताम् ॥ ७ ॥ निसृष्टवन्तं दत्तवन्तम् ॥ ११ ॥ किङ्किणीकिना क्षुद्रघण्टिकावता हयोत्तमयुजा हयोत्तमानां युक् योजनं यत्र ॥१२॥

[ सर्व० ] धृतराष्ट्रादीन् सभागतानाचक्षेतां त्वामर्थयन्त

---

१५ म. मध्यस्थं । १९ म. अवाप्याहं पाण्डवार्थं । २० म. आदेक्ष्यते धार्तराष्ट्रः समर्थां । २२ म. स एवमुक्त्वा । ८ त्रिनवतितमोऽध्यायः ॥ ९३ ॥

१ म. °तोरेवं । २ म. धर्मकामार्थवत्यश्च ।

अग्निं प्रदक्षिणं कृत्वा ब्राह्मणांश्च जनार्दनः ॥
कौस्तुभं मणिमामुच्य श्रिया परमया ज्वलन् ॥१४॥
कुरुभिः संवृतः कृष्णो वृष्णिभिश्चाभिरक्षितः ॥
आतिष्ठत रथं शौरिः सर्वयादवनन्दनः ॥ १५ ॥
अन्वारुरोह दाशार्हं विदुरः सर्वधर्मवित् ॥
सर्वप्राणभृतां श्रेष्ठं सर्वबुद्धिमतां वरम् ॥ १६ ॥
ततो दुर्योधनः कृष्णं शकुनिश्चापि सौबलः ॥
द्वितीयेन रथेनैनमन्वयातां परन्तपम् ॥ १७ ॥
सात्यकिः कृतवर्मा च वृष्णीनां चापरे रथाः ॥
पृष्ठतोऽनुययुः कृष्णं गजैरश्वै रथैरपि ॥ १८ ॥
तेषां हेमपरिष्कारैर्युक्ताः परमवाजिभिः ॥
गच्छतां घोषणाश्चित्ररथा राजन्विरेजिरे ॥ १९ ॥
संमृष्टसंसिक्तरजः प्रतिपेदे महापथम् ॥
राजर्षिचरितं काले कृष्णो धीमान् श्रिया ज्वलन् २०
ततः प्रयाते दाशार्हे प्रावाद्यन्तैकपुष्कराः ॥
शङ्खाश्च दध्मिरे तत्र वाद्यान्यन्यानि यानि च ॥२१॥
प्रवीराः सर्वलोकस्य युवानः सिंहविक्रमाः ॥
परिवार्य रथं शौरेरगच्छन्त परन्तपाः ॥ २२ ॥
ततोऽन्ये बहुसाहस्रा विचित्राद्भुतवाससः ॥
असिप्रासायुधधराः कृष्णस्यासन्पुरःसराः ॥ २३ ॥
गजाः पञ्चशतास्तत्र रथाश्चासन्सहस्रशः ॥
प्रयान्तमन्वयुर्वीरं दाशार्हमपराजितम् ॥ २४ ॥

पुरं कुरूणां संवृत्तं द्रष्टुकामं जनार्दनम् ॥
सबालवृद्धं सस्त्रीकं रथ्यागतमरिन्दम ॥ २५ ॥
वेदिकामाश्रिताभिश्च समाक्रान्तान्यनेकशः ॥
प्रचलन्तीव भारेण योषिद्भिर्भवनान्युत ॥ २६ ॥
स पूज्यमानः कुरुभिः संशृण्वन्मधुराः कथाः ॥
यथार्हं प्रतिसत्कुर्वन् प्रेक्षमाणः शनैर्ययौ ॥ २७ ॥
ततः सभां समासद्य केशवस्यानुयायिनः ॥
सशङ्खैर्वेणुनिर्घोषैर्दिशः सर्वा व्यनादयन् ॥ २८ ॥
ततः सा समितिः सर्वा राज्ञाममिततेजसाम् ॥
संप्राकम्पत हर्षेण कृष्णागमनकाङ्क्षया ॥ २९ ॥
ततोऽभ्याशगते कृष्णे समहृष्यन्नराधिपाः ॥
श्रुत्वा तं रथनिर्घोषं पर्जन्यनिनदोपमम् ॥ ३० ॥
आसाद्य तु सभाद्वारमृषभः सर्वसात्वताम् ॥
अवतीर्य रथाच्छौरिः कैलासशिखरोपमात् ॥ ३१ ॥
नवमेघप्रतीकाशां ज्वलन्तीमिव तेजसा ॥
महेन्द्रसदनप्रख्यां प्रविवेश सभां ततः ॥ ३२ ॥
पाणौ गृहीत्वा विदुरं सात्यकिं च महायशाः ॥
ज्योतींष्यादित्यवद्राजन् कुरून्प्राच्छादयन् श्रिया ३३
अग्रतो वासुदेवस्य कर्णदुर्योधनावुभौ ॥
वृष्णयः कृतवर्मा चाप्यासन् कृष्णस्य पृष्ठतः ॥३४॥
धृतराष्ट्रं पुरस्कृत्य भीष्मद्रोणादयस्ततः ।
आसनेभ्योऽचलन्सर्वे पूजयन्तो जनार्दनम् ॥ ३५॥

---

इत्यादि चाचक्षेतामित्यावृत्त्या योज्यं तद्वत्समागतान् धृतराष्ट्रादन्यानित्याद्यपि विभक्तिविपरिणामेनान्वितम् ॥८॥ महांश्चासावभ्रे व्योम्नि घनेश्चति तथा ॥ १३ ॥

[ नील० ] चित्राश्च ते रथाश्च ॥ १९ ॥ संमृष्टं दूरीकृतं संसिक्तं जलेनाप्लावितं च रजो यस्मात्तम् अविभक्तिकं पदम् ॥ २० ॥ एकपुष्कराः काहलाः ॥ २१ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि चतुर्नवतितमोऽध्यायः ॥९४॥

[ अर्जु० ] आमुच्य निबध्य ॥ १४ ॥ हेमपरिष्कारैः हेम्ना परिष्कारो मण्डनं येषां तैः ॥ १९ ॥ संमृष्टसंसिक्तरजः संमृष्टं संमार्जन्या परिशोधितं संसिक्तं जलेन महापथमित्यस्य विशेषणत्वेन रजसमिति भवति तस्माद् रजमिति पाठः अदन्तोऽयं रजशब्दः ॥२०॥ एकपुष्कलाः। एकमुखाः एकस्वाना असंख्याः ॥ २१ ॥ संस्यूतं ग्रथितमिव ॥ २५ ॥ समितिः सभा ॥ २९ ॥ अचलन् उत्थिताः ॥ ३५ ॥

[ सर्व० ] एकपुष्कराः एकतो वादनीयाः ॥ २१ ॥

[ लक्षा० ] [ ब्रह्मादिवासुदेवान्तं वंशं समनुकीर्तयन्नित्यत्र 'बहुलं छन्दस्यमाङ्योगेऽपि' इति वचनात् समनुकीर्तयन् समन्वकीर्तयन्नित्यर्थः । पक्षिपक्षवितानैश्चेत्यत्र पक्षी गरुडः तस्य पक्षौ विस्तारदशायां वितानानीव तैः, कृत्रिमशुकहंसादिपक्षविरचितवितानैर्वा । तयीनीचैश्च पादपैः । व्याघ्रसिंहवरैश्चैवेत्यादौ पादपादयः सर्वे तत्र कृत्रिमरूपा इति ज्ञेयम् । ] प्रवाद्यन्ते स्म पुष्करा इत्यत्र द्विपकराग्रे पद्मे खड्गफले व्योम्नि वाद्यभाण्डमुखे अगदे जले च । तीर्थे पुष्करमष्टासु निर्दिष्टमित्यभिधानात् पुष्कराः वाद्यविशेषाः ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

---

२६ म. वेदिकाप्रासृताभिश्च ।

अभ्यागच्छति दाशार्हे प्रज्ञाचक्षुर्नरेश्वरः ।
सहैव द्रोणभीष्माभ्यामुदतिष्ठन्महायशाः ॥ ३६ ॥
उत्तिष्ठति महाराजे धृतराष्ट्रे जनेश्वरे ।
तानि राजसहस्राणि समुत्तस्थुः समन्ततः॥ ३७ ॥
आसनं सर्वतोभद्रं जाम्बूनदपरिष्कृतम् ।
कृष्णार्थे कल्पितं तत्र धृतराष्ट्रस्य शासनात् ॥३८॥
स्मयमानस्तु राजानं भीष्मद्रोणौ च माधवः ।
अभ्यभाषत धर्मात्मा राज्ञश्चान्यान्यथावयः ॥३९॥
तत्र केशवमानर्चुः सम्यगभ्यागतं सभाम् ।
राजानः पार्थिवाः सर्वे कुरवश्च जनार्दनम् ॥ ४० ॥
तत्र तिष्ठन्स दाशार्हो राजमध्ये परन्तपः ।
अपश्यदन्तरिक्षस्थानृषीन्परपुरञ्जयः ॥
ततस्तानभिसंप्रेक्ष्य नारदप्रमुखानृषीन् ॥ ४१ ॥
अभ्यभाषत दाशार्हो भीष्मं शातनवं शनैः ।
पार्थिवीं समितिं द्रष्टुमृषयोऽभ्यागता नृप ॥ ४२ ॥
निमन्त्र्यन्तामासनैश्च सत्कारेण च भूयसा ।
नैतेष्वनुपविष्टेषु शक्यं केनचिदासितुम् ॥ ४३ ॥
पूजा प्रयुज्यतामाशु मुनीनां भावितात्मनाम् ।
ऋषीन् शान्तनवो दृष्ट्वा सभाद्वारमुपस्थितान् ॥४४॥
त्वरमाणस्ततो भृत्यानासनानीत्यचोदयत् ।
आसनान्यथ मृष्टानि महान्ति विपुलानि च ॥४५॥
मणिकाञ्चनचित्राणि समाजह्रुस्ततस्ततः ।
तेषु तत्रोपविष्टेषु गृहीतार्घेषु भारत ॥ ४६ ॥
निषसादासने कृष्णो राजानश्च यथासनम् ।
दुःशासनः सात्यकये ददावासनमुत्तमम् ॥ ४७ ॥
विविंशतिर्ददौ पीठं काञ्चनं कृतवर्मणे ।
अविदूरे तु कृष्णस्य कर्णदुर्योधनावुभौ ॥ ४८ ॥
एकासने महात्मानौ निषीदतुरमर्षणौ ।
गान्धारराजः शकुनिर्गान्धारैरभिरक्षितः ॥ ४९ ॥
निषसादासने राजा सहपुत्रो विशाम्पते ।
विदुरो मणिपीठे तु शुक्लस्पर्ध्याजिनोत्तरे ॥ ५० ॥
संस्पृशन्नासनं शौरेर्महामतिरुपाविशत् ।
चिरस्य दृष्ट्वा दाशार्हं राजानः सर्व एव ते ॥५१॥
अमृतस्येव नातृप्यन् प्रेक्षमाणा जनार्दनम् ।
अतसीपुष्पसंकाशः पीतवासा जनार्दनः ॥ ५२ ॥
व्यभ्राजत सभामध्ये हेम्नीवोपहितो मणिः॥ ५३ ॥
ततस्तूष्णीं सर्वमासीद्गोविन्दगतमानसम् ।
न तत्र कश्चित् किंचिद्धा व्याजहार पुमान्क्वचित् ५४

इति श्रीमहाभारते उद्योगपर्वणि चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

## पञ्चनवतितमोऽध्यायः ९५

सभायां धृतराष्ट्रं प्रति भगवद्वचनम्—त्वं स्वबन्धुषु नृशंसवद्व्यवहरतः स्वपुत्रान्निगृह्णीष्व न चेदस्मिन्कुले त्वन्निमित्तः सर्वपार्थिवक्षयो भवेत् । पाण्डवास्तु त्वया प्राणेषु वित्तेषु चासकृत्प्रहृता अपि सौशील्यात्त्वामेवान्ववर्तन्त । संप्रति च शुश्रूषितुं योद्धुं च स्थिताः । तद्यदत्र पथ्यं मन्यसे तत्कुर्विति ॥ १ ॥

**वैशम्पायन उवाच—**

तेष्वासीनेषु सर्वेषु तूष्णींभूतेषु राजसु ।
वाक्यमभ्याददे कृष्णः सुदंष्ट्रो दुन्दुभिस्वनः ॥ १ ॥
जीमूत इव घर्मान्ते सर्वां संश्रावयन्सभाम् ।
धृतराष्ट्रमभिप्रेक्ष्य समभाषत माधवः ॥ २ ॥

**श्रीभगवानुवाच—**

कुरूणां पाण्डवानां च शमः स्यादिति भारत ।
अप्रणाशेन वीराणामेतद्याचितुमागतः ॥ ३ ॥
राजन्नान्यत्प्रवक्तव्यं तव नैःश्रेयसं वचः ।
विदितं ह्येव ते सर्वं वेदितव्यमरिन्दम ॥ ४ ॥
इदं ह्यद्य कुलं श्रेष्ठं सर्वराजसु पार्थिव ।
श्रुतवृत्तोपसंपन्नं सर्वैः समुदितं गुणैः ॥ ५ ॥
कृपाऽनुकम्पा कारुण्यमानृशंस्यं च भारत ।
तथार्जवं क्षमा सत्यं कुरुष्वेतद्विशिष्यते ॥ ६ ॥

---

[ अर्जु० ] आसनान्यानीयन्तामिति क्रियान्तरेणापि गमकम् ॥ ४५ ॥ निषीदतुरिति छान्दसं निषेदतुरित्यर्थे, निषेदतुरित्येव वा पाठः ॥ ४९ ॥

इति श्रीमन्म० मर्जुनमि० उद्यो० चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

[ सर्व० ] मणिर्मरकतः ॥ ४६ ॥

इति महा० उद्योगप० सर्वज्ञ० टीकायां चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

[ नील० ] तेष्विति ॥ १ ॥ आगतोऽस्मीति ॥ ३ ॥ कृपा परस्य सुखार्थे यत्नः । अनुकम्पा परदुःखदर्शने त्रासः । कारुण्यं परदुःखप्रहाणार्थो यत्नः । आनृशंस्यं परदुःखाप्रदानम् ॥ ६ ॥

[ अर्जु० ] कृपा परदुःखहानेच्छा । अनुकम्पा पर-

---

३६ म. प्रज्ञाचक्षुर्महामनाः । ५१ ख. सर्वपार्थिवाः ॥ इति चतुर्नवतितमोऽध्यायः ॥ ९४ ॥

तस्मिन्नेवंविधे राजन् कुले महति तिष्ठति ।
त्वन्निमित्तं विशेषेण नेह युक्तमसांप्रतम् ॥ ७ ॥
त्वं हि धारयिता श्रेष्ठः कुरूणां कुरुसत्तम ।
मिथ्या प्रचरतां तात बाह्येष्वाभ्यन्तरेषु च ॥ ८ ॥
ते पुत्रास्तव कौरव्य दुर्योधनपुरोगमाः ।
धर्मार्थौ पृष्ठतः कृत्वा प्रचरन्ति नृशंसवत् ॥ ९ ॥
अशिष्टा गतमर्यादा लोभेन हृतचेतसः ।
स्वेषु बन्धुषु मुख्येषु तद्वेत्थ पुरुषर्षभ ॥ १० ॥
सेयमापन्महाघोरा कुरुष्वेव समुत्थिता ।
उपेक्ष्यमाणा कौरव्य पृथिवीं घातयिष्यति ॥ ११ ॥
शक्या चेयं शमयितुं न चेद्दित्ससि भारत ।
न दुष्करो ह्यत्र शमो मतो मे भरतर्षभ ॥ १२ ॥
त्वय्यधीनः शमो राजन्मयि चैव विशाम्पते ।
पुत्रान्स्थापय कौरव्य स्थापयिष्याम्यहं परान् ॥ १३ ॥
आज्ञा तव हि राजेन्द्र कार्या पुत्रैः सहान्वयैः ।
हितं बलवदप्येषां तिष्ठतां तव शासने ॥ १४ ॥
तव चैव हितं राजन्पाण्डवानामथो हितम् ।
शमे प्रयतमानस्य मम शासनकाङ्क्षिणः ॥ १५ ॥
स्वयं निष्फलमालक्ष्य संविधत्स्व विशाम्पते ।
सहायभूता भरतास्तवैव स्युर्जनेश्वर ॥ १६ ॥
धर्मार्थयोस्तिष्ठ राजन् पाण्डवैरभिरक्षितः ।
नहि शक्यास्तथाभूता यत्नादपि नराधिप ॥ १७ ॥
नहि त्वां पाण्डवैर्जेतुं रक्ष्यमाणं महात्मभिः ।
इन्द्रोऽपि देवैः सहितः प्रसहेत कुतो नृपाः ॥ १८ ॥
यत्र भीष्मश्च द्रोणश्च कृपः कर्णो विविंशतिः ।
अश्वत्थामा विकर्णश्च सोमदत्तोऽथ बाह्लिकः ॥ १९ ॥
सैन्धवश्च कलिङ्गश्च काम्बोजश्च सुदक्षिणः ।
युधिष्ठिरो भीमसेनः सव्यसाची यमौ तथा ॥ २० ॥
सात्यकिश्च महातेजा युयुत्सुश्च महारथः ।
को नु तान्विपरीतात्मा युध्येत भरतर्षभ ॥ २१ ॥
लोकस्येश्वरतां भूयः शत्रुभिश्चाप्यधृष्यताम् ।
प्राप्स्यसि त्वममित्रघ्न सहितः कुरुपाण्डवैः ॥ २२ ॥
तस्य ते पृथिवीपालास्त्वत्समाः पृथिवीपते ।
श्रेयांसश्चैव राजानः संधास्यन्ते परन्तप ॥ २३ ॥
स त्वं पुत्रैश्च पौत्रैश्च पितृभिर्भ्रातृभिस्तथा ।
सुहृद्भिः सर्वतो गुप्तः सुखं शक्ष्यसि जीवितुम् ॥ २४ ॥
एतानेव पुरोधाय सत्कृत्य च यथापुरा ।
अखिलां भोक्ष्यसे सर्वां पृथिवीं पृथिवीपते ॥ २५ ॥
एतैर्हि सहितः सर्वैः पाण्डवैः स्वैश्च भारत ।
अन्यान्विजेष्यसे शत्रूनेष स्वार्थस्तवाखिलः ॥ २६ ॥
तैरेवोपार्जितां भूमिं भोक्ष्यसे च परन्तप ।
यदि संपत्स्यसे पुत्रैः सहामात्यैर्नराधिप ॥ २७ ॥
संयुगे वै महाराज दृश्यते सुमहान् क्षयः ।
क्षये चोभयतो राजन् कं धर्ममनुपश्यसि ॥ २८ ॥

---

दुःखहानं, कारुण्यं स्वयमुद्धृतदुःखस्य उत्तरोत्तरदुःखासंपादनम्, आनृशंस्यमहिंसा, आर्जवं विहितेन पथा गमनम् ॥ ६ ॥

[ सर्व० ] कृपा परदुःखदर्शने दुःखित्वम् । अनुकम्पा परदुःखप्रहापणेच्छा । कारुण्यम् अपकारिण्यपि स्नेहवत्ताप्रतिसंधानेन प्रत्यपकारानाचरणम् । आनृशंस्यम् अमारणेच्छा ॥ ६ ॥

[ नील० ] असाम्प्रतं कृपादिभ्यो विपरीतं, परस्य दुःखार्थो यत्नः परदुःखदर्शने आह्लादः परस्य सुखनाशार्थो यत्नः परस्य दुःखसंपादनं कौटिल्यादिकं च तच्चायुक्तम् ॥ ७ ॥ बाह्येषु द्यूतादिषु आभ्यन्तरेषु जतुगृहादिषु ॥ ८ ॥ कुरुष्वेव भवत्स्वेव न तु पाण्डवेषु ॥ ११ ॥ न दित्ससि कुलं न छेत्तुमिच्छसि । त्वं चेदिच्छसीति पाठे कुरून्स्थापयितुमिच्छसि तर्हि शमो न दुष्करः ॥ १२ ॥ बलवत् अत्यन्तमेषामेव अपिशब्द एवार्थे ॥ १४ ॥ शासनकाङ्क्षिणः पुत्रान् शासितुमिच्छतस्तव ॥ १५ ॥ निष्फलं वैरं संविधत्स्व शमं कुरु ॥ १६ ॥ पाण्डवैः सह संधास्यन्ते संधिं करिष्यन्ति ॥ २३ ॥ अखिलां निष्कण्टकाम् ॥ २५ ॥

[ अर्जु० ] असाम्प्रतमयुक्तम् ॥ ७ ॥ वारयतां निषेधताम् । आपत् कर्त्री ॥ ११ ॥ परान् पाण्डवान् ॥ १३ ॥ अन्वयैरनुगतैः कर्णादिभिरित्यर्थः ॥ १४ ॥ निष्कलं निर्मायं निष्कपटमित्यर्थः । निष्फलमिति च पठन्ति ॥ १६ ॥ सहभूता मिलिताः नहि शक्या जेतुमिति शेषः ॥ १७ ॥ प्रसहेत शक्नुयात् ॥ १८ ॥ तान् प्राप्येति शेषः ॥ २१ ॥ संधित्ससे संधातुमिच्छसि ॥ २७ ॥

[ सर्व० ] शमे प्रयतमानस्य मम स्वयमालक्ष्य विचार्य निष्कलं निरवयवं निरवशेषं यथा भवति तथा संविधत्स्वोत्तरमित्यर्थात् सहभूताः मिलिताः ॥ १५ ॥ १६ ॥ पाण्डवैः सह । शक्याः शक्तेर्विषयीभवन्त्यभिभवनीया

---

१२ ख. त्वंचेदिच्छसि भारत । ख. सुदुष्करो । १६ ख. सहभूतास्तु । २७ ख. तैरेव निर्जितां । ख. सहामात्यैः परंतप ।

पाण्डवैर्निहतैः संख्ये पुत्रैर्वाऽपि महाबलैः ।
यद्विन्देथाः सुखं राजंस्तद्ब्रूहि भरतर्षभ ॥ २९ ॥
शूराश्च हि कृतास्त्राश्च सर्वे युद्धाभिकाङ्क्षिणः ।
पाण्डवास्तावकाश्चैव तान्रक्ष महतो भयात् ॥ ३० ॥
न पश्येम कुरून्सर्वान्पाण्डवांश्चैव संयुगे ।
क्षीणानुभयतः शूरान्रथिनो रथिभिर्हतान् ॥ ३१ ॥
समवेताः पृथिव्यां हि राजानो राजसत्तम ।
अमर्षवशमापन्ना नाशयेयुरिमाः प्रजाः ॥ ३२ ॥
त्राहि राजन्निमं लोकं न नश्येयुरिमाः प्रजाः ।
त्वयि प्रकृतिमापन्ने शेषः स्यात्कुरुनन्दन ॥ ३३ ॥
शुक्ला वदान्या ह्रीमन्त आर्याः पुण्याभिजातयः ।
अन्योन्यसचिवा राजँस्तान्पाहि महतो भयात् ॥३४॥
शिवेनेमे भूमिपालाः समागम्य परस्परम् ।
सह भुक्त्वा च पीत्वा च प्रतियान्तु यथागृहम् ॥३५॥
सुवाससः स्रग्विणश्च सत्कृता भरतर्षभ ।
अमर्षं च निराकृत्य वैराणि च परन्तप ॥ ३६ ॥
हार्दं यत्पाण्डवेष्वासीत्प्राप्तेऽस्मिन्नायुषः क्षये ।
तदेव ते भवत्वद्य संधत्स्व भरतर्षभ ॥ ३७ ॥
बाला विहीनाः पित्रा ते त्वयैव परिवर्धिताः ।
तान्पालय यथान्यायं पुत्रांश्च भरतर्षभ ॥ ३८ ॥
भवतैव हि रक्ष्यास्ते व्यसनेषु विशेषतः ।
मा ते धर्मस्तथैवार्थो नश्येत भरतर्षभ ॥ ३९ ॥
आहुस्त्वां पाण्डवा राजन्नभिवाद्य प्रसाद्य च ।
भवतः शासनाद्दुःखमनुभूतं सहानुगैः ॥ ४० ॥
द्वादशेमानि वर्षाणि वने निर्व्युषितानि नः ।
त्रयोदशं तथाऽज्ञातैः सजने परिवत्सरम् ॥ ४१ ॥
स्थाता नः समये तस्मिन् पितेति कृतनिश्चयाः ।
नाहास्म समयं तात तच्च नो ब्राह्मणा विदुः ॥४२॥
तस्मिन्नः समये तिष्ठ स्थितानां भरतर्षभ ।
नित्यं संक्लेशिता राजन्स्वराज्यांशं लभेमहि ॥४३॥
त्वं धर्ममर्थं संजानन्सम्यङ्नस्त्रातुमर्हसि ।
गुरुत्वं भवति प्रेक्ष्य बहून्क्लेशांस्तितिक्ष्महे ॥ ४४ ॥
स भवान्मातृपितृवदस्मासु प्रतिपद्यताम् ।
गुरोर्गरीयसी वृत्तिर्या च शिष्यस्य भारत ॥ ४५ ॥
वर्तामहे त्वयि च तां त्वं च वर्तस्व नस्तथा ।
पित्रा स्थापयितव्या हि वयमुत्पथमास्थिताः ॥४६॥
संस्थापय पथिष्वस्मांस्तिष्ठ धर्मे सुवर्त्मनि ।
आहुश्चेमां परिषदं पुत्रास्ते भरतर्षभ ॥ ४७ ॥
धर्मज्ञेषु सभासत्सु नेह युक्तमसांप्रतम् ।
यत्र धर्मो ह्यधर्मेण सत्यं यत्रानृतेन च ॥ ४८ ॥
हन्यते प्रेक्षमाणानां हतास्तत्र सभासदः ।
विद्धो धर्मो ह्यधर्मेण सभां यत्र प्रपद्यते ॥ ४९ ॥
न चास्य शल्यं कृन्तन्ति विद्धास्तत्र सभासदः ।
धर्म एतानारुजति यथा नद्यनुकूलजान् ॥ ५० ॥
ये धर्ममनुपश्यन्तस्तूष्णीं ध्यायन्त आसते ।
ते सत्यमाहुर्धर्म्यं च न्यायं च भरतर्षभ ॥ ५१ ॥
शक्यं किमन्यद्वक्तुं ते दानादन्यज्जनेश्वर ।
ब्रुवन्तु ते महीपालाः सभायां ये समासते ॥ ५२ ॥

---

इति यावत् ॥ १७ ॥ सम्पत्स्यसे संयुक्तो भविष्यसि ॥ २७ ॥ उभयोः क्षये सति ॥ २८ ॥

[ नील० ] प्रकृतिं सत्त्वगुणम् ॥ ३३ ॥ हार्दं प्रीतिः आसीत् पूर्वं बाल्ये ॥ ३७ ॥ स्थाता स्थास्यति ॥ ४२ ॥ गुरोः गुरौ ॥ ४५ ॥ परिषदं धर्मज्ञसभां पुत्राः पाण्डवाः ॥ ४७ ॥ आरुजति हिनस्ति अनुकूलजान् कूलं कूलमनुसृत्य जातान् वृक्षादीन् ॥ ५० ॥ ये पाण्डवाः तूष्णीमासते कालं निर्वाह्य भवद्भ्यो राज्यांशं लब्धुमिच्छन्ति ते सत्यं धर्म्यं न्याय्यं चाहुः ॥ ५१ ॥

[ अर्जु० ] पुण्याभिजातयः अभिजातिः कुलम् ॥३४॥ शिवेन कुशलेन ॥ ३५ ॥ हार्दं स्नेहः आसीत् बालेषु आयुषः क्षये युद्धे प्राप्ते अद्य तदेव भवत्वित्यर्थः ॥ ३७ ॥ नाहास्म न त्यक्तवन्तः ॥ ४२ ॥ दानात् राज्यसमर्पणात् ॥ ५२ ॥

[ सर्व० ] पाण्डवैर्विजितं वा पुत्रैर्विजितं किं सुखं पश्यसि ॥ २९ ॥ यत्पूर्वमासीत् तदेवायुषः क्षये युद्धे प्राप्ते सति अद्य भवतु ॥ ३७॥ स्थितानां समय इत्यादि योज्यम् ॥ ४२ ॥ गुरोर्गुरौ ॥ ४५ ॥ परिषदं धर्मविचारणक्षमपुरुषसमुदायरूपमाहुः ॥ ४७ ॥ ये धर्मं पश्यन्तोऽपि तूष्णीमासत एतानारुजति हिनस्ति धर्मः अनुकूलजान् कूलं लक्ष्यीकृत्य जातान् वृक्षादीन् तस्मात् ते सभासदा त्वदीया एव सत्यं धर्ममाहुरिति न काप्यव्ययात् (?) ॥ ५० ॥ ते त्वया दानाद्राज्यदानादन्यत् किं शक्यमत्र वक्तुमिति । एतावद्धि ब्रुवन्तु माम् । यद्येतत् सत्यं ब्रवीमि न वेति ॥५२॥

---

२९ ख. विजितैः संख्ये पुत्रैश्चापि । ३५ ख. सान्त्वेनेमे च भूपालाः । ३६ ख. अमर्षांश्च । ३७ ख. शश्वच्च भरतर्षभ । ३८ ख. त्वयैव रक्षिता बालास्त्वयैव परिवर्धिताः । ३९ ख. भवतैवाभिरक्ष्यास्ते । ४५ ख. गुरोर्गरीयसी वृत्तिमवतिष्ठस्व भारत । ४७ ख. राजन्स्ववर्त्मनि ।

धर्मार्थौ संप्रधार्यैव यदि सत्यं ब्रवीम्यहम् ।
प्रमुञ्चेमान्मृत्युपाशात्क्षत्रियान्पुरुषर्षभ ॥ ५३ ॥
प्रशाम्य भरतश्रेष्ठ मा मन्युवशमन्वगाः ।
पित्र्यं तेभ्यः प्रदायांशं पाण्डवेभ्यो यथोचितम् ॥५४॥
ततः सपुत्रः सिद्धार्थो भुङ्क्ष्व भोगान्परन्तप ।
अजातशत्रुं जानीषे स्थितं धर्मे सतां सदा ॥५५॥
सपुत्रे त्वयि वृत्तिं च वर्तते यां नराधिप ।
दाहितश्च निरस्तश्च त्वामेवोपाश्रितः पुनः ॥ ५६ ॥
इन्द्रप्रस्थं त्वयैवासौ सपुत्रेण विवासितः ।
स तत्र निवसन्सर्वान्वशमानीय पार्थिवान् ॥५७॥
त्वन्मुखानकरोद्राजन्न च त्वामत्यवर्तत ।
तस्यैवं वर्तमानस्य सौबलेन जिहीर्षता ॥ ५८ ॥
राष्ट्राणि धनधान्यं च प्रयुक्तः परमोपधिः ।
स तामवस्थां संप्राप्य कृष्णां प्रेक्ष्य सभा गताम् ५९॥
क्षत्रधर्मादमेयात्मा नाकम्पत युधिष्ठिरः ।
अहं तु तव तेषां च श्रेय इच्छामि भारत ॥ ६० ॥
धर्मादर्थात्सुखाच्चैव मा राजन्नीनशः प्रजाः ।
अनर्थमर्थं मन्वानोऽप्यर्थं चानर्थमात्मनः ॥ ६१ ॥
लोभेऽतिप्रसृतान्पुत्रान्निगृह्णीष्व विशाम्पते ।
स्थिताः शुश्रूषितुं पार्थाः स्थिता योद्धुमरिन्दमाः ।
यत्ते पथ्यतमं राजंस्तस्मिंस्तिष्ठ परन्तप ॥ ६२ ॥

वैशम्पायन उवाच—

तद्वाक्यं पार्थिवाः सर्वे हृदयैः समपूजयन् ।
न तत्र कश्चिद्वक्तुं हि वाचं प्राक्रामदग्रतः ॥ ६३ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

## षण्णवतितमोऽध्यायः ९६

जामदग्न्येन दर्पस्य विनाशहेतुत्वमर्जुनमाहात्म्यं च प्रख्यापयितुं दम्भोद्भवाख्यानकथनम् ॥ १ ॥

वैशम्पायन उवाच—

तस्मिन्नभिहिते वाक्ये केशवेन महात्मना ।
स्तिमिता हृष्टरोमाण आसन् सर्वे सभासदः ॥१॥
कश्चिदुत्तरमेतेषां वक्तुं नोत्सहते पुमान् ।
इति सर्वे मनोभिस्ते चिन्तयन्ति स्म पार्थिवाः ॥२॥
तथा तेषु च सर्वेषु तूष्णींभूतेषु राजसु ।
जामदग्न्य इदं वाक्यमब्रवीत्कुरुसंसदि ॥ ३ ॥
इमां मे सोपमां वाचं शृणु सत्यामशङ्कितः ।
तां श्रुत्वा श्रेय आदत्स्व यदि साध्विति मन्यसे ॥४॥
राजा दम्भोद्भवो नाम सार्वभौमः पुराऽभवत् ।
अखिलां बुभुजे सर्वां पृथिवीमिति नः श्रुतम् ॥५॥
स स्म नित्यं निशापाये प्रातरुत्थाय वीर्यवान् ।
ब्राह्मणान्क्षत्रियांश्चैव पृच्छन्नास्ते महारथः ॥ ६ ॥
अस्ति कश्चिद्विशिष्टो वा मद्विधो वा भवेद्युधि ।
शूद्रो वैश्यः क्षत्रियो वा ब्राह्मणो वाऽपि शस्त्रभृत् ७
इति ब्रुवन्नन्वचरत्स राजा पृथिवीमिमाम् ।
दर्पेण महता मत्तः कंचिदन्यमचिन्तयन् ॥ ८ ॥

---

[ लक्षा० ] ते सत्यमाहुरित्यत्र पृष्टाश्चेदाहुरिति योग्याध्याहारेणान्वयः ॥ ५१ ॥

[ नील० ] दाहितः जतुगृहे, निरस्तो द्यूतेन राज्याद्दूरीकृतः ॥ ५६ ॥ परमोपधिः महच्छद्म ॥ ५९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

[ अर्जु० ] दाहितो जतुगृहे, निरस्तो निःसारितः ॥ ५६ ॥ अत्यवर्तत अतिक्रम्य स्थितः ॥ ५८ ॥ परमोपधिः उपधिः छद्म ॥ ५९ ॥ मा नीनशः मा नाशय ॥ ६१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

[ सर्व० ] निरस्तोऽतिदूरं क्षिप्तो जतुगृहदाहानन्तरम् आगतश्च वने पुनर्विवासितः ॥ ५६ ॥ परमोपधिः महच्छद्म ॥ ५९ ॥ अनर्थमर्थम् अर्थनिहतप्रज्ञः ॥ ६१ ॥ पूर्वं तानिदानीं तु पुत्रान् निगृह्णीयात् ॥ ६२ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

[ लक्षा० ] पित्र्यं तेभ्यः प्रदायेत्यत्र तेभ्यः कौरवेभ्यः पित्र्यमंशं पाण्डवेभ्यः प्रदायेति पञ्चमीचतुर्थ्योरन्वयः ५४॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

---

[ नील० ] तस्मिन्निति ॥ १ ॥

---

५९ ख. संताप्यं ॥ इति पञ्चनवतितमोऽध्यायः ॥ ९५ ॥

४ ख. य इमां बुभुजे ।

तं च वैद्या अकृपणा ब्राह्मणाः सर्वतोऽभयाः ।
प्रत्यषेधन्त राजानं श्लाघमानं पुनःपुनः ॥ ९ ॥
निषिध्यमानोऽप्यसकृत्पृच्छत्येव स वै द्विजान् ।
अतिमानं श्रिया मत्तं तमूचुर्ब्राह्मणास्तदा ॥ १० ॥
तपस्विनो महात्मानो वेदप्रत्ययदर्शिनः ।
उदीर्यमाणं राजानं क्रोधदीप्ता द्विजातयः ॥ ११ ॥
अनेकजयिनौ संख्ये यौ वै पुरुषसत्तमौ ।
तयोस्त्वं न समो राजन् भविताऽसि कदाचन १२
एवमुक्तः स राजा तु पुनः पप्रच्छ तान् द्विजान् ।
क्व तौ वीरौ क्वजन्मानौ किंकर्माणौ च कौ च तौ१३

ब्राह्मणा ऊचुः—

नरो नारायणश्चैव तापसाविति नः श्रुतम् ।
आयातौ मानुषे लोके ताभ्यां युध्यस्व पार्थिव १४
श्रूयेते तौ महात्मानौ नरनारायणावुभौ ।
तपो घोरमनिर्देश्यं तप्यते गन्धमादने ॥ १५ ॥
स राजा महतीं सेनां योजयित्वा षडङ्गिनीम् ।
अमृष्यमाणः संप्रापद्यत्र तावपराजितौ ॥ १६ ॥
स गत्वा विषमं घोरं पर्वतं गन्धमादनम् ।
मृगयाणोऽन्वगच्छत्तौ तापसौ वनमाश्रितौ ॥ १७ ॥
तौ दृष्ट्वा क्षुत्पिपासाभ्यां कृशौ धमनिसंततौ ।
शीतवातातपैश्चैव कर्शितौ पुरुषोत्तमौ ॥ १८ ॥
अभिगम्योपसंगृह्य पर्यपृच्छदनामयम् ।
तमर्चित्वा मूलफलैरासनेनोदकेन च ॥ १९ ॥
न्यमन्त्रयेतां राजानं किं कार्यं क्रियतामिति ।
ततस्तामानुपूर्वीं स पुनरेवान्वकीर्तयत् ॥ २० ॥
बाहुभ्यां मे जिता भूमिर्निहताः सर्वशत्रवः ।
भवद्भ्यां युद्धमाकाङ्क्षन्नुपयातोऽस्मि पर्वतम् ॥ २१ ॥
आतिथ्यं दीयतामेतत्काङ्क्षितं मे चिरं प्रति ।

नरनारायणावूचतुः—

अपेतक्रोधलोभोऽयमाश्रमो राजसत्तम ॥ २२ ॥
नह्यस्मिन्नाश्रमे युद्धं कुतः शस्त्रं कुतोऽनृजुः ।
अन्यत्र युद्धमाकाङ्क्ष बहवः क्षत्रियाः क्षितौ ॥ २३ ॥

राम उवाच—

उच्यमानस्तथाऽपि स्म भूय एवाभ्यभाषत ।
पुनःपुनः क्षम्यमाणः सान्त्व्यमानश्च भारत ॥ २४ ॥
दम्भोद्भवो युद्धमिच्छन्नाह्वयत्येव तापसौ ।
ततो नरस्त्विषीकाणां मुष्टिमादाय भारत ॥ २५ ॥
अब्रवीदेहि युध्यस्व युद्धकामुक क्षत्रिय ।
सर्वशस्त्राणि चादत्स्व योजयस्व च वाहिनीम् २६
अहं हि ते विनेष्यामि युद्धश्रद्धामितः परम् ।

दम्भोद्भव उवाच—

यद्येतदस्त्रमस्मासु युक्तं तापस मन्यसे ॥ २७ ॥
एतेनापि त्वया योत्स्ये युद्धार्थी ह्यहमागतः ।

राम उवाच—

इत्युक्त्वा शरवर्षेण सर्वतः समवाकिरत् ॥ २८ ॥
दम्भोद्भवस्तापसं तं जिघांसुः सहसैनिकः ।
तस्य तानस्यतो घोरानिषून् परतनुच्छिदः ॥ २९ ॥
कदर्थीकृत्य स मुनिरिषीकाभिः समार्पयत् ।
ततोऽस्मै प्रासृजद्घोरमैषीकमपराजितः ॥ ३० ॥

---

[ अर्जु० ] जामदग्न्य इदं वाक्यमब्रवीत् कुरुसंसदि । दम्भोद्भवोपाख्यानस्य दर्पस्य विनाशहेतुत्वच्छलेन नरनामधेयस्य अर्जुनस्य माहात्म्यं तात्पर्यार्थः ॥ ३ ॥

[ नील० ] वेदप्रत्ययदर्शिनः वेदजः प्रत्ययो ब्रह्मात्मैक्यापरोक्ष्यं तदेव द्रष्टुं शीलं येषां ते ॥ ११ ॥ तप्यते ताभ्यामिति शेषः ॥ १५ ॥ षडङ्गिनीं रथनागाश्वपादातशकटोष्ट्रवतीम् ॥ १७ ॥

[ अर्जु० ] वेद्या वेदाध्येतारः सुकृपणः सुष्ठुकृपानरः(?) ॥ ९ ॥ अनेकजननौ अनेकानि जननानि ययोः अनेकजयिनाविति पाठे अनेकान् दुष्टान् जेतुं शीलं ययोरित्यर्थः ॥ १२ ॥ आभ्यां युध्यस्व भारतेति दम्भोद्भवं प्रति ब्राह्मणवचनत्वेऽपि रामेण दुर्योधनसंबोधनम् । एवं कथान्तरव्यवधानेऽपि वैशम्पायनकृतं बहुशो दृश्यते । पार्थिवेति वा पाठः ॥ १४ ॥ अनिर्देश्यं वक्तुमशक्यम् ॥ १५ ॥ मृगयाणोऽन्वेषणं कुर्वन् ॥ १७ ॥ धमनिसन्ततौ शिराव्याप्तौ ॥ १८ ॥ उपसंगृह्य चरणाविति शेषः ॥ १९ ॥ अत्यगृह्यत अतिग्रहेण प्राप्तः ॥ २४ ॥ कदर्थीकृत्य निष्फलान् कृत्वा ॥ ३० ॥

[ सर्व० ] अनेकजननमनेकजन्मानुवृत्तम् । सख्यं मैत्रम् । ययोरित्यनामनिर्देशादतिमहत्वम् ॥ १२ ॥ पर्यपृच्छत् अनामयं कुशलम् ॥ १९ ॥ भूय एवात्यगृह्यत

---

९ ख. तं स्म । १० ख. अभिमानी श्रिया मत्तः । १२ ख. अनेकजननं सख्यं ययोः पुरुषसिंहयोः । २१ ख. विजिता भूमिः । २२ ख. चिरातनम् । २६ ख. कौरव । ३० ख. प्राहरद्घोरामिशिकामपराजितम् ।

अस्त्रमप्रतिसंधेयं तदद्भुतमिवाभवत् ।
तेषामक्षीणि कर्णांश्च नासिकाश्चैव मायया ॥ ३१ ॥
निमित्तवेधी स मुनिरिषीकाभिः समार्पयत् ।
स दृष्ट्वा श्वेतमाकाशमिषीकाभिः समाचितम् ॥३२॥
पादयोर्न्यपतद्राजा स्वस्ति मेऽस्त्विति चाब्रवीत् ।
तमब्रवीन्नरो राजन् शरण्यः शरणैषिणाम् ॥ ३३ ॥
ब्रह्मण्यो भव धर्मात्मा मा च स्मैवं पुनः कृथाः ।
नैतादृक् पुरुषो राजन् क्षत्रधर्ममनुस्मरन् ॥ ३४ ॥
मनसा नृपशार्दूल भवेत्परपुरञ्जयः ।
मा च दर्पसमाविष्टः क्षेप्सीः कांश्चित्कथंचन ॥३५॥
अल्पीयांसं विशिष्टं वा तत्ते राजन्समाहितम् ।
कृतप्रज्ञो वीतलोभो निरहंकार आत्मवान् ॥ ३६ ॥
दान्तः क्षान्तो मृदुः सौम्यः प्रजाः पालय पार्थिव ।
मा स्म भूयः क्षिपेः कंचिदविदित्वा बलाबलम् ३७
अनुज्ञातः स्वस्ति गच्छ मैवं भूयः समाचरेः ।
कुशलं ब्राह्मणान्पृच्छेरावयोर्वचनाद्भृशम् ॥ ३८ ॥
ततो राजा तयोः पादावभिवाद्य महात्मनोः ।
प्रत्याजगाम स्वपुरं धर्मं चैवाचरद्भृशम् ॥ ३९ ॥
सुमहच्चापि तत्कर्म यन्नरेण कृतं पुरा ।
ततो गुणैः सुबहुभिः श्रेष्ठो नारायणोऽभवत् ॥४०॥
तस्माद्यावद्धनुःश्रेष्ठं गाण्डीवेऽस्त्रं न युज्यते ।
तावत्त्वं मानमुत्सृज्य गच्छ राजन् धनञ्जयम् ॥४१॥
काकुदीकं शुकं नाकमक्षिसंतर्जनं तथा ।
संतानं नर्तकं घोरमास्यमोदकमष्टमम् ॥ ४२ ॥

---

युद्धाग्रहमतिशयितमकरोत् ॥ २४ ॥ कदर्थीकृत्य अनर्थकतया कुत्सितप्रयोजनानि कृत्वेत्यर्थः ॥ ३० ॥

[ लक्षा० ] तं स्म वैद्या अकृपणा इत्यत्र वैद्याः विद्यासंबन्धिनो विद्वांसः ॥ ९ ॥

[ नील० ] काकुदीकमित्यादयोऽष्टावस्त्रजातयः येनास्त्रेणाभिभूता रथगजादीनां ककुद्येव शेरते तत्काकुदीकं प्रस्वापनं नाम । येन शुकनलिकान्यायेन अभयेऽपि भयदर्शिनो हयरथादिपादेषु गाढं श्लिष्यन्ति तत् शुकं मोहनं नाम । येन स्वर्गनगरं पश्यति तन्नाकम् उन्मादनं नाम । येन क्षिप्तमात्रेणानुविद्धास्त्रासात् शकृन्मूत्रं स्रवन्ति तत् अक्षिसंतर्जनं त्रासनं नाम । संतानम् अविच्छेदेन शस्त्राणां वृष्टिकरमैन्द्रादि दिव्यम् । नर्तकं नर्तनकरं पैशाचम् । घोरं कदनकरं राक्षसम् । आस्यमोदकं येनाभिहताः मुखे पाषाणं दत्त्वा मरणार्थमेव प्रतिष्ठन्ते तत् याम्यं नाम । अत्रैव उन्मत्ताश्चेति श्लोकोक्ता दोषा यथायोग्यं संबन्धनीयाः ॥ ४२ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षण्णवतितमोऽध्यायः ॥ ९६ ॥

[ अर्जु० ] नस्तकान् नासिकारन्ध्रान् ॥३१॥ निमित्तवेधी निमित्तानीन्द्रियाणि प्रवृत्तिनिमित्तत्वात् तानि तथा समार्पयत् योजितवान् । समाचितं व्याप्तम समाहितमिति पाठे युक्तं अचिनोत् अकरोत् ॥ ३२ ॥ काकुदीकं शुकं नाकमक्षिसंतर्जनं तथा । संतानं नर्तनं घोरमास्यमोदकमष्टमम् । एतैर्विद्धाः सर्व एव मरणं यान्ति मानवाः । अस्यार्थः—कामक्रोधौ लोभमोहौ दम्भमानौ तथैव च । मात्सर्याहंकृती चैव क्रमादेते उदाहृताः । काकुदीकादयः स्कन्दापस्मारकसंभवाः । एतैराविष्टा अयथावत् पश्यन्ति ततो विनश्यन्तीति दुर्योधनं रामोऽब्रवीत् । ततस्त्वमचिरात् विनष्टो भविष्यसीति तात्पर्यार्थः । उन्मत्ताश्चेत्यादिना एषामष्टानामष्टावुदाहरणानि दर्शयति ॥ ४२ ॥

[ सर्व० ] नस्तकान्नासारन्ध्राणि ॥ ३१ ॥ निमित्तं समार्पयत् सङ्गतमकरोत् । अर्तेर्ण्यन्तस्य रूपम् ॥३२॥ समाहितमुचितम् ॥ ३६ ॥ काकुद्यीकं शुकं नाकमक्षिसन्तर्जनमित्यादयोऽष्टौ शराभिमन्त्रणमन्त्रभेदा इति । देवबोधपादास्तु "कामक्रोधौ लोभमोहौ मदमानौ तथैव च । मात्सर्याहङ्कृती चैव क्रमादेते उदहृताः" इति । केचित्तु काकुद्यीकं युधिष्ठिरं शुकं नकुलं तोकं सहदेवम् अक्षिसंतर्जनं कृष्णं सन्तानमभिमभिमन्युं नर्तनमर्जुनं घोरं घटोत्कचम् आस्यमोदकं भीमसेनम् इत्यष्टौ । तदेतदस्त्रं गाण्डीवे न युज्यते तावद्गच्छेत्यन्वयः ॥ ४१ ॥

[ लक्षा० ] निमित्तवेधी स मुनिरित्यत्र यावन्निमित्तमस्ति तावदेव विध्यतीति निमित्तवेधी । अत एव चक्षुरादेः स्पर्शमात्रं न तु व्रणम् ॥ ३२ ॥ कङ्कुदीपं कंकुलासमित्यत्र कं शिरः कु कुत्सिततया दीपयति जयतीति कंकुदीपम् । कं शिरः कु कुत्सिततया लासयति नर्तयति इति कंकुलासम् । आक्षेपम् आ समंतात् क्षेपः क्षेपणं यस्मात्तदाक्षेपम् । संतानम् एकशरप्रयोगेऽपि शतशः कोटिशः संतानो विस्तारो यस्मात्तत्संतानम् । हास्यं हास्यः अकारणतया सदा हासो यस्मात्तत् हास्यम् । औदकं सदा मूत्राद्युदकजनकमौदकम् ॥ ४२ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे षण्णवतितमोऽध्यायः ॥ ९६ ॥

---

३४ ख. न स्वादृक् । ३७ ख. क्षेम्यः षण्णवतितमोऽध्यायः ॥ ९६ ॥

एतैर्विद्धाः सर्वे एव मरणं यान्ति मानवाः ।
कामक्रोधौ लोभमोहौ मदमानौ तथैव च ॥ ४३ ॥
मात्सर्याहंकृती चैव क्रमादेत उदाहृताः ।
उन्मत्ताश्च विचेष्टन्ते नष्टसंज्ञा विचेतसः ॥ ४४ ॥
स्वपन्ति च प्लवन्ते च च्छर्दयन्ति च मानवाः ।
मूत्रयन्ते च सततं रुदन्ति च हसन्ति च ॥ ४५ ॥
निर्माता सर्वलोकानामीश्वरः सर्वकर्मवित् ।
यस्य नारायणो बन्धुरर्जुनो दुःसहो युधि ॥ ४६ ॥
कस्तमुत्सहते जेतुं त्रिषु लोकेषु भारत ।
वीरं कपिध्वजं जिष्णुं यस्य नास्ति समो युधि ॥४७॥
असंख्येया गुणाः पार्थे तद्विशिष्टो जनार्दनः ।
त्वमेव भूयो जानासि कुन्तीपुत्रं धनञ्जयम् ॥ ४८ ॥
नरनारायणौ यौ तौ तावेवार्जुनकेशवौ ।
विजानीहि महाराज प्रवीरौ पुरुषोत्तमौ ॥ ४९ ॥
यद्येतदेवं जानासि न च मामभिशङ्कसे ।
आर्यां मतिं समास्थाय शाम्य भारत पाण्डवैः ॥५०॥
अथ चेन्मन्यसे श्रेयो न मे भेदो भवेदिति ।
प्रशाम्य भरतश्रेष्ठ मा च युद्धे मनः कृथाः ॥ ५१ ॥
भवतां च कुरुश्रेष्ठ कुलं बहुमतं भुवि ।
तत्तथैवास्तु भद्रं ते स्वार्थमेवोपचिन्तय ॥ ५२ ॥

इति श्रीमहाभारते उद्योगपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

## सप्तनवतितमोऽध्यायः ९७

कण्वेन महर्षिणा श्रीकृष्णमाहात्म्यं ज्ञापयितुं मातलिवरान्वेषणाख्यानकथनम् ॥ १ ॥

**वैशम्पायन उवाच—**

जामदग्न्यवचः श्रुत्वा कण्वोऽपि भगवानृषिः ।
दुर्योधनमिदं वाक्यमब्रवीत्कुरुसंसदि ॥ १ ॥

**कण्व उवाच—**

अक्षयश्चाव्ययश्चैव ब्रह्मा लोकपितामहः ।
तथैव भगवन्तौ तौ नरनारायणावृषी ॥ २ ॥
आदित्यानां हि सर्वेषां विष्णुरेकः सनातनः ।
अजय्यश्चाव्ययश्चैव शाश्वतः प्रभुरीश्वरः ॥ ३ ॥
निमित्तमरणाश्चान्ये चन्द्रसूर्यौ मही जलम् ।
वायुरग्निस्तथाकाशं ग्रहास्तारागणास्तथा ॥ ४ ॥
ते च क्षयान्ते जगतो हित्वा लोकत्रयं सदा ।
क्षयं गच्छन्ति वै सर्वे सृज्यन्ते च पुनः पुनः ॥५॥
मुहूर्तमरणास्त्वन्ये मानुषा मृगपक्षिणः ।
तैर्यग्योन्यश्च वै चान्ये जीवलोकचरास्तथा ॥ ६ ॥
भूयिष्ठेन तु राजानः श्रियं भुक्त्वाऽऽयुषः क्षये ।
तरुणाः प्रतिपद्यन्ते भोक्तुं सुकृतदुष्कृते ॥ ७ ॥
स भवान् धर्मपुत्रेण शमं कर्तुमिहार्हति ।
पाण्डवाः कुरवश्चैव पालयन्तु वसुंधराम् ॥ ८ ॥
बलवानहमित्येव न मन्तव्यं सुयोधन ।
बलवन्तो बलिभ्यो हि दृश्यन्ते पुरुषर्षभ ॥ ९ ॥
न बलं बलिनां मध्ये बलं भवति कौरव ।
बलवन्तो हि ते सर्वे पाण्डवा देवविक्रमाः ॥ १० ॥

---

[ अर्जु० ] प्रवीरौ प्रकृष्टवीरौ ॥ ४९ ॥ आर्यामवक्रां शाम्यमविरोधं कुरु ॥५०॥ भद्रं ते कल्याणं तवास्तु ॥५२॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षण्णवतितमोऽध्यायः ॥ ९६ ॥

[ सर्व० ] असंख्येया गुणास्तपःप्रभृतयः ॥ ४८ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां षण्णवतितमोऽध्यायः ॥ ९६ ॥

[ नील० ] जामदग्न्येति ॥ १ ॥ अव्ययः अपचयशून्यः ॥ २ ॥ प्रभवत्यस्मादिति प्रभुर्जगत उपादानकारणं घटस्येव मृत्पिण्डः ॥ ३ ॥ निमित्तमरणा इति नाशवन्त इत्यर्थः । पाठान्तरे निमित्तकारणानि चक्रचीवरकुलालादिस्थानीयानि ॥ ४ ॥ तरुणा इति भोगकाले युद्धेन मरणं मा प्राप्नुवन्तीत्यर्थः ॥ ७ ॥ बलं सैन्यं बलिनाम् औरसबलवतां बलं सामर्थ्यं न भवति ॥ १० ॥

[ अर्जु० ] मातलिवरान्वेषणस्यापि नारायणनामधेयस्य कृष्णस्य महिमा दर्पातिग्रहयोर्निन्दा च तात्पर्यार्थः । आदित्यानां देवानामजेयो जेतुमशक्यः अव्ययोऽवस्थाव्ययाभावात् । शाश्वतः स्वरूपच्छेदाभावात् ॥ २ ॥ निमित्तमरणाः निमित्तं सहकारि तेन मरणं येषां ते ॥४॥ प्रतिपद्यन्ते भवन्ति ॥ ७ ॥ दृश्यन्ते दर्शनमात्रेण विरुध्य साध्यन्ते ॥ ९ ॥ बलं सैन्यबलं बलवतां दिव्यबलवतां यदाह देवविक्रमा इति ॥ १० ॥

[ सर्व० ] अव्ययोऽपचयरहितः ॥ २ ॥ प्रभुः स्वामी ईश्वरोऽणिमादिविशिष्टः ॥ ३ ॥ निमित्तं प्रलयादिनिमि-

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
मातलेर्दातुकामस्य कन्यां मृगयतो वरम् ॥ ११ ॥
मतस्त्रिलोकराजस्य मातलिर्नाम सारथिः ।
तस्यैकैव कुले कन्या रूपतो लोकविश्रुता ॥ १२ ॥
गुणकेशीति विख्याता नाम्ना सा देवरूपिणी ।
श्रिया च वपुषा चैव स्त्रियोऽन्याः साऽतिरिच्यते १३॥
तस्याः प्रदानसमयं मातलिः सह भार्यया ।
ज्ञात्वा विममृशे राजंस्तत्परः परिचिन्तयन् ॥ १४ ॥
धिक्खल्वलघुशीलानामुच्छ्रितानां यशस्विनाम् ।
नराणां मृदुसत्वानां कुले कन्याप्ररोहणम् ॥ १५ ॥
मातुः कुलं पितृकुलं यत्र चैव प्रदीयते ।
कुलत्रयं संशयितं कुरुते कन्यका सताम् ॥ १६ ॥
देवमानुषलोकौ द्वौ मानुषेणैव चक्षुषा ।
अवगाह्यैव विचितौ न च मे रोचते वरः ॥ १७ ॥

कण्व उवाच—

न देवांश्चैव दितिजान्न गन्धर्वांश्च मानुषान् ।
अरोचयद्वरकृते तथैव बहुलानृषीन् ॥ १८ ॥
भार्ययाऽनु स संमन्त्र्य सह रात्रौ सुधर्मया ।
मातलिर्नागलोकाय चकार गमने मतिम् ॥ १९ ॥
न मे देवमनुष्येषु गुणकेश्याः समो वरः ।
रूपतो दृश्यते कश्चिन्नागेषु भविता ध्रुवम् ॥ २० ॥
इत्यामन्त्र्य सुधर्मां स कृत्वा चाभिप्रदक्षिणम् ।
कन्यां शिरस्युपाघ्राय प्रविवेश महीतलम् ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तनवतितमोऽध्यायः ॥ ९७ ॥

## अष्टनवतितमोऽध्यायः ९८

वरान्वेषणाय नागलोकं गच्छतो मातलेर्मार्गे नारदेन समागमस्तेन सह वरुणलोकगमनं च ॥ १ ॥

कण्व उवाच—

मातलिस्तु व्रजन्मार्गे नारदेन महर्षिणा ।
वरुणं गच्छता द्रष्टुं समागच्छद्यदृच्छया ॥ १ ॥
नारदोऽथाब्रवीदेनं क्व भवान् गन्तुमुद्यतः ।
स्वेन वा सूत कार्येण शासनाद्वा शतक्रतोः ॥ २ ॥
मातलिर्नारदेनैवं संपृष्टः पथि गच्छता ।
यथावत्सर्वमाचष्ट स्वकार्यं नारदं प्रति ॥ ३ ॥
तमुवाचाथ स मुनिर्गच्छावः सहिताविति ।
सलिलेशदिदृक्षार्थमहमप्युद्यतो दिवः ॥ ४ ॥
अहं ते सर्वमाख्यास्ये दर्शयन्वसुधातलम् ।
दृष्ट्वा तत्र वरं कंचिद्रोचयिष्याव मातले ॥ ५ ॥

---

त्तम् मरणं नाशो येषां ते निमित्तमरणाः ॥ ४ ॥ प्रतिपद्यन्ते परलोकं तरुणा अपि । अतस्त्वमपि तारुण्येन मरणं संभावयेत्यर्थः ॥ ७ ॥ एवं बलं सैन्यं बलिनामौरसबलवताम् बलं सामर्थ्यम् न भवति ॥ १० ॥

[ नील० ] मातलेरितिहासमिति संबन्धः ॥ ११ ॥ उच्छ्रितानां महत्तया ख्यातानाम् ॥ १५ ॥ चक्षुषा ज्ञानेन विचितौ अन्वेषितौ ॥ १७ ॥

इति श्रीनैल० उद्योग० भारत० सप्तनवतितमोऽध्यायः ॥ ९७ ॥

[ अर्जु० ] अतिरिच्यते अतिक्रम्याधिका भवति॥१३॥ अलघुशीलानां अलघु गुरु । उच्छ्रितानामुद्धतानां कन्याप्ररोहणं कन्याजन्म ॥१५॥ अरोचयत् इष्टवान् । वरकृते वरहेतोः अव्ययेनाप्यार्षः समासः ॥१८॥ सुधर्मया नाम्ना॥१९॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्तनवतितमोऽध्यायः॥ ९७ ॥

[ सर्व० ] मातलेरितिहासं पुरावृत्तम् ॥११॥ उच्छ्रितानां महत्तयाख्यातानाम् ॥ १५॥ चक्षुषा ज्ञानेन ॥१७॥

इति श्रीमहा० योग० सर्वज्ञ० सप्तनवतितमोऽध्यायः ॥ ९७ ॥

[ लक्षा० ] मातुलेर्दातुकामस्येत्यत्र कन्यां दातुकामस्य वरं मृगयतः मातलेः इतिहासमुदाहरन्तीति संबन्धः ॥ ११ ॥ कुलत्रयं संशयितमित्यत्र दातुं प्रतिग्रहीतुं च योग्यं नवेति संशययुक्तं कुरुते ॥ १६ ॥ अवगाह्यैव विचिताविल्यत्र विचितौ विचारितौ ॥ १७ ॥

इति श्रीमहा० उद्यो० वा०ती० ल० सप्तनवतितमोऽध्यायः ॥ ९७ ॥

[ नील० ] मातलिरिति ॥ १ ॥

[ अर्जु० ] समागछत् मिलितः । यदृच्छया अनभिसन्धानेन ॥ १ ॥ सूत हे सारथे ॥ २ ॥ उद्यत आगतः दिवः स्वर्गात् ॥ ४ ॥ वसुधातलं पातालम् ॥ ५ ॥

---

१९ ख. चकार गमने मनः ॥ इति सप्तनवतितमोऽध्यायः ॥ ९७ ॥

३ ख. स्वकार्यं वरुणं प्रति ।

अवगाह्य तु तौ भूमिमुभौ मातलिनारदौ ।
ददृशाते महात्मानौ लोकपालमपां पतिम् ॥ ६ ॥
तत्र देवर्षिसदृशीं पूजां स प्राप नारदः ।
महेन्द्रसदृशीं चैव मातलिः प्रत्यपद्यत ॥ ७ ॥
तावुभौ प्रीतमनसौ कार्यवन्तौ निवेद्य ह ।
वरुणेनाभ्यनुज्ञातौ नागलोकं विचेरतुः ॥ ८ ॥
नारदः सर्वभूतानामन्तर्भूमिनिवासिनाम् ।
जानंश्चकार व्याख्यानं यन्तुः सर्वमशेषतः ॥ ९ ॥

नारद उवाच—

दृष्टस्ते वरुणः सूत पुत्रपौत्रसमावृतः ।
पश्योदकपतेः स्थानं सर्वतोभद्रमृद्धिमत् ॥ १० ॥
एष पुत्रो महाप्राज्ञो वरुणस्येह गोपतेः ।
एष वै शीलवृत्तेन शौचेन च विशिष्यते ॥ ११ ॥
एषोऽस्य पुत्रोऽभिमतः पुष्करः पुष्करेक्षणः ।
रूपवान्दर्शनीयश्च सोमपुत्र्या वृतः पतिः ॥ १२ ॥
ज्योत्स्नाकालीति यामाहुर्द्वितीयां रूपतः श्रियम् ।
अदित्याश्चैव यः पुत्रो ज्येष्ठः श्रेष्ठः कृतः स्मृतः ॥ १३ ॥
भवनं पश्य वारुण्यं यदेतत्सर्वकाञ्चनं ।
यत्प्राप्य सुरतां प्राप्ताः सुराः सुरपतेः सखे ॥ १४ ॥
एतानि हृतराज्यानां दैतेयानां स्म मातले ।
दीप्यमानानि दृश्यन्ते सर्वप्रहरणान्युत ॥ १५ ॥
अक्षयाणि किलैतानि विवर्तन्ते स्म मातले ।
अनुभावप्रयुक्तानि सुरैरवजितानि ह ॥ १६ ॥
अत्र राक्षसजात्यश्च दैत्यजात्यश्च मातले ।
दिव्यप्रहरणाश्चासन् पूर्वदैवतनिर्मिताः ॥ १७ ॥
अग्निरेष महार्चिष्मान् जागर्ति वारुणे ह्रदे ।
वैष्णवं चक्रमाविद्धं विधूमेन हविष्मता ॥ १८ ॥
एष गाण्डीमयश्चापो लोकसंहारसंभृतः ।
रक्ष्यते दैवतैर्नित्यं यतस्तद्गाण्डिवं धनुः ॥ १९ ॥
एष कृत्ये समुत्पन्ने तत्तद्धारयते बलम् ।
सहस्रशतसंख्येन प्राणेन सततं ध्रुवः ॥ २० ॥

---

[ नील० ] यन्तुः यन्तारं मातलिं प्रति ॥ ९ ॥ गोपतेः वारिपतेः । ‘ भूवाग्वारिषु गौर्मता’इति विश्वः ॥ ११ ॥ द्वितीयां सोमपुत्रीं तया अदित्याः पुत्रः सूर्यः श्रेष्ठः कृतः भर्ता कृतः ॥ १३ ॥ वारुण्यं वारुण्याः सुरायाः इदं वारुण्यं सुरा विद्यते येषां ते सुराः ॥ १४ ॥ विवर्तन्ते प्रक्षिप्तान्यपि पुनःपुनः प्रहर्तुर्हस्तमायान्ति॥१६॥ जात्यः जातीयाः पूर्वदैवतानि पूर्वदेवाः दैत्याः सर्वेति पाठे निर्मिताः निश्चयेन प्रक्षिप्ताः ॥ १७ ॥ अग्निरिति हविष्मताऽग्निना आविद्धं रुद्धं विष्णुचक्रजमप्यत्रभयं नास्तीत्यर्थः ॥ १८ ॥ गाण्डी खड्गाख्यः पशुविशेषः तस्य विकारो गाण्डीमयः तस्य हि पशून्या वा पृष्ठवंशस्य वर धनुः कर्तुं शक्यं यतः गाण्डीमयत्वादेव तत् गाण्डीवं नाम धनुरभूत् गाण्डीशब्दाद्विकारार्थो वप्रत्ययः कल्प्यत इति भावः । गाण्डी वज्रग्रन्थिस्तन्मय इत्यन्ये ॥ १९ ॥ एष चापः कृत्ये अभेद्यभेदने तत्तत् तावत्तावत्प्राणेन बलेन सर्वदा लक्षचापतुल्यबलोऽप्ययं चापः कार्यकालेऽधिकबलोऽपि भवतीत्यनन्तबल इत्यर्थः ॥ २० ॥

[ अर्जु० ] यन्तुः सारथेः संबन्धित्वेन ॥ ९ ॥ गोपतेः जलाधिपस्य ॥ ११ ॥ [ अतो वरुणात् । ] अदित्या देवमातुः । गोर्जलस्य पुत्रोन्वयः । गौरिति वा पाठः । पौलोमो (?) पुत्रो वरुणस्य ज्येष्ठो गुणाधिकः कृतः ॥१३॥ यां वारुणीं प्राप्य पीत्वेति यावत् देवाः सुरतां प्राप्ताः ॥ १४ ॥ सर्वप्रहरणानि सर्वाण्यस्त्राणि ॥ १५ ॥ निवर्तन्ते (?) अनुभावप्रयुक्तानि अनुभावो मन्त्रबलं मनोबलं वा ॥ १६ ॥ राक्षसजात्यः राक्षसजातयः जातीशब्दोऽपि । पूर्वदेवता देवाः ॥ १७ ॥ आविद्धं वेष्टितं हविष्मता अग्निना ॥ १८ ॥ गाण्डीमयः गाण्डी ग्रन्थिः । लोकसंभारसंभृतः लोकानां संभारः समुदायः तेन संभृतः पूर्णः ॥ १९ ॥

[ सर्व० ] यन्तुर्यतारं प्रति ॥ ९ ॥ गोपतेरादित्यस्य द्वादशादित्यमध्ये वरुणस्यापि संख्यानात् ॥ ११ ॥ अदितिर्देवमातुः पृथिव्याश्च नाम । “ इयं वै पृथिव्यदितिरिति ” श्रुतेः ॥ एतेन च व्यवच्छेदेन पृथिवीप्राप्त्यर्थम् गोरिति । तेनादितिगोपदयोः प्रत्येकं पृथिवीव्यभिचारेऽपि तयोरव्यभिचारात् । अदित्याः गोः पुत्र इति पृथिव्याः पुत्र इत्यर्थः । कृत इति तस्य नाम ॥ १३ ॥ यां वारुणीम् प्राप्य देवाः सुरतां सुरशब्दवाच्यताम् प्राप्ताः। सुराया आदानात् सुराग्रहणात् सुरा इति स्थानान्तरे दर्शनात् ॥१४॥ निवर्तन्ते क्षिप्राणि शत्रून् हत्वा आयान्ति । अनुभावस्तेजः ॥ १६ ॥ हविष्मता असिना ॥ १८ ॥ गाण्डी वज्रग्रन्थिस्तन्मयस्तद्वान् । लोकस्य संभारः समीचीनं गौरवं बलम् । तेन संभृतो निर्मितः ॥ १९ ॥ तत्तदनियतं बलं धनुर्दार्ढ्यविशेषः प्रसिद्धः प्रमाणेनेयत्तावच्छेदेन ध्रुवो नित्यः ॥ २० ॥

---

१३ ख. आदित्यस्यैष गोः पुत्रः । १४ ख. यां प्राप्य । १७ ख. भूतजात्यश्च ॥ इति अष्टनवतितमोऽध्यायः ॥ ९८ ॥

अशास्यानपि शास्त्येष रक्षोबन्धुषु राजसु ।
सृष्टः प्रथमतश्चण्डो ब्रह्मणा ब्रह्मवादिना ॥ २१ ॥
एतच्छत्रं नरेन्द्राणां महच्चक्रेण भासितम् ।
पुत्राः सलिलराजस्य धारयन्ति महोदयम् ॥ २२ ॥
एतत्सलिलराजस्य छत्रं छत्रगृहे स्थितम् ।
सर्वतः सलिलं शीतं जीमूत इव वर्षति ॥ २३ ॥
एतच्छत्रात्परिभ्रष्टं सलिलं सोमनिर्मलम् ।
तमसा मूर्च्छितं भाति येन नार्च्छति दर्शनम् ॥२४॥
बहून्यद्भुतरूपाणि द्रष्टव्यानीह मातले ।
तव कार्योपरोधस्तु तस्माद्गच्छाव माचिरम् ॥ २५ ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

## नवनवतितमोऽध्यायः ९९

नारदेन सह मातलिना पातालदर्शनम् ॥ १ ॥

नारद उवाच—
एतत्तु नागलोकस्य नाभिस्थाने स्थितं पुरम् ।
पातालमिति विख्यातं दैत्यदानवसेवितम् ॥ १ ॥
इदमद्भिः समं प्राप्ता ये केचिद्भुवि जङ्गमाः ।
प्रविशन्तो महानादं नदन्ति भयपीडिताः ॥ २ ॥
अत्रासुरोऽग्निः सततं दीप्यते वारिभोजनः ।
व्यापारेण धृतात्मानं निबद्धं समबुध्यत ॥ ३ ॥
अत्रामृतं सुरैः पीत्वा निहितं निहतारिभिः ।
अतः सोमस्य हानिश्च वृद्धिश्चैव प्रदृश्यते ॥ ४ ॥

---

[ लक्षा० ] यां प्राप्य सुरतामित्यत्र यां वारुणीमद्यरूपाम् सुष्ठु रमंत इति सुराः तेषां भावः सुरता ताम्॥१४॥ एतानि हृतराज्यानामित्यत्र हृतमाहृतं राज्यमेषां ते हृतराज्याः तेषाम् ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे ऽष्टनवतितमोऽध्यायः ॥ ९८ ॥

[ नील० ] रक्षोबन्धुषु रक्षस्तुल्येषु ॥ २१ ॥ एतच्छत्रं धनुः चक्रेण चक्रादपि एतच्छास्त्रं नरेन्द्राणां महच्छुक्रेण भाषितमिति पाठे नीतिशास्त्रं शुक्रेण काव्येन छत्रेणेति वा पाठः ॥ २२ ॥ मूर्छितम् अभिभूतम् आवृतमिति यावत् येन हेतुना जनोऽस्य दर्शनं नार्छति न प्राप्नोति ॥ २४ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे अष्टनवतितमोऽध्यायः ॥ ९८ ॥

[ अर्जु० ] एष चापः कृत्ये तत्तत्कार्यानुरूपे रक्षोबन्धुषु राक्षसेषु दण्डो दमनकः ॥ २१ ॥ शास्त्रं दुष्टशासनम् । महोदयं महानुदयः परराज्यलाभो यस्मात् ॥२२॥ सोमनिर्मलं सोमवच्च कान्तिमूर्च्छितं मुग्धम् ॥ २४ ॥ कार्योपरोधः । उपरोधो विरोधः ॥ २५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टनवतितमोऽध्यायः ॥ ९८ ॥

[ सर्व० ] दण्डो दमयिता ॥ २१ ॥ एतच्छास्त्रं नरेन्द्राणां नीतिशास्त्रपुस्तकम् शुक्रेण भाषितम् धारयन्ति पठन्ति ॥ २२ ॥ मूर्च्छितम् मिश्रितम् । इति तन्मिश्रमिव प्रकाशते ॥ २४ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायामष्टनवतितमोऽध्यायः ॥ ९८ ॥

[ नील० ] एतदिति ॥ १ ॥ अद्भिः समं प्राप्ताः जलवेगेनानीताः ॥ २ ॥ व्यापारेण यत्नेन धृतः मर्यादायां स्थापितः अन्यथा सद्यः कृत्स्नं समुद्रं लोकांश्च दहेत् आत्मानं निबद्धं दैवैरिति शेषः समबुद्धयत अग्निरित्यर्थः। धृतात्मेति संधिरार्षः ॥ ३ ॥ निहितं स्थापितम् अतः सोमस्येति कन्दुकाकारं भूगोलं प्रदक्षिणीकुर्वतः सूर्यस्य सोमस्य वा केनचिद्भूगोलप्रदेशेन आवरणात्कदाचिददर्शनं भवति सैव तेषां रात्रिः । ये तु गोलस्य शिरसि अधस्ताच्च तिष्ठन्ति ते सर्वदैव सूर्यादीन्पश्यन्ति तत्र जलमयं चन्द्रमण्डलं सूर्यरश्मिभिस्तैजसैः प्रकाश्यते तयोश्च यथा यथा विप्रकर्षः तथा तथाऽधिकं चन्द्रोऽवभासते । यथा यथा सन्निकर्षः तथा तथाऽधिकं सूर्यपुरोवर्तिभिरप्यादिभिर्देवताभिस्तिरोधीयतेऽस्मदृष्ट्या । एतदेवाभिलक्ष्य प्रथमां पिबते वह्निर्द्वितीयां पिबते रविरित्यादिशास्त्रं प्रवृत्तम् । पानं चेह सान्निध्यादाप्यायनमात्रं पातालनाभिस्थानां तु मेरुशिखरस्थानामिव सर्वदा संपूर्ण एव चन्द्रोऽवभासते । तद्दृश्यप्रदेशेऽन्याद्यावरणाभावात् अतः स्थानात् चन्द्रस्य ह्रासवृद्धी प्रदृश्येते इति विरुद्धलक्षणया न दृश्येते इत्यर्थः । न दृश्यते इत्येव पाठो लेखकप्रमादाद्भ्रष्टो वा ॥ ४ ॥

[ अर्जु० ] इदं पुरमद्भिरम्भोभिरेव दृश्याभिः समं सह । [ ध्रुवाः स्थिराः ] ॥ २ ॥ व्यापारेण देवकार्येण धृत आत्मा यस्य निबद्धः नियतः ॥ ३ ॥

[ सर्व० ] अद्भिः समं प्राप्ता जलवेगेनानीताः ॥ २ ॥ व्यापारेण जगत्कार्येण धृतमात्मशरीरं येन ॥ ३ ॥ अतः पानात् हानिः । विधानादमृतस्य वृद्धिः सोमस्य ॥ ४ ॥

अत्रादित्यो हयशिराः काले पर्वणि पर्वणि ।
उत्तिष्ठति सुवर्णाख्यं वाग्भिरापूरयन् जगत् ॥ ५ ॥
यस्मादलं समस्तास्ताः पतन्ति जलमूर्त्तयः ।
तस्मात्पातालमित्येव ख्यायते पुरमुत्तमम् ॥ ६ ॥
ऐरावणोऽस्मात्सलिलं गृहीत्वा जगतो हितः ।
मेघेष्वामुञ्चते शीतं यन्महेन्द्रः प्रवर्षति ॥ ७ ॥
अत्र नानाविधाकारास्तिमयो नैकरूपिणः ।
अप्सु सोमप्रभां पीत्वा वसन्ति जलचारिणः ॥ ८ ॥
अत्र सूर्यांशुभिर्भिन्नाः पातालतलमाश्रिताः ।
मृता हि दिवसे सूत पुनर्जीवन्ति वै निशि ॥ ९ ॥
उदयन्नित्यशश्चात्र चन्द्रमा रश्मिबाहुभिः ॥
अमृतं स्पृश्य संस्पर्शात् संजीवयति देहिनः ॥१०॥
अत्र तेऽधर्मनिरता बद्धाः कालेन पीडिताः ।
दैतेया निवसन्ति स्म वासवेन हृतश्रियः ॥ ११ ॥
अत्र भूतपतिर्नाम सर्वभूतमहेश्वरः ।
भूतये सर्वभूतानामचरत्तप उत्तमम् ॥ १२ ॥
अत्र गोव्रतिनो विप्राः स्वाध्यायाम्नायकार्शिताः ।
त्यक्तप्राणा जितस्वर्गा निवसन्ति महर्षयः ॥ १३ ॥

---

[ लक्षा० ] इदमद्भिः समं प्राप्ता इत्यत्र इदं पातालतलमद्भि शुभोदवमुत्क्षीरोदकसमुद्राच्च (?) प्रस्रवणरूपेण प्रविशन्तीभिरद्भिः समं प्राप्ताः ध्रुवजङ्गमाः स्थूलशरीराः, स्थिरपृष्ठाः कूर्मकर्कटकमकरादयः भयपीडिताः परितः प्रस्रवज्जलोपान्ते ज्वलदग्निदर्शनात् भयपीडिताः सन्तः ॥ २ ॥ अत्र पाताले आसुरोऽग्निः असुरसंहरणार्थं परिकल्पितोऽग्निः व्यापारेण परितो वनं सर्वभक्षणव्यापारेण महात्मानं वनान्तःस्थितं कंचिदृषिं निबध्य परितो बद्ध्वा क्रुद्धेन तेन अधः पाताले पतेति शप्तः सन् समबध्यत परितोऽन्तः प्रविष्टबहुयोजनविस्तृतजलसमुद्रप्रान्तजले सम्यग्बद्धोऽभूत् ॥ ३ ॥ अत्र पतालमध्यदेशे सोमस्य भगवदनुज्ञया पातालोपरि प्रदेशे संचरत्सोमस्य अमावास्यापर्यन्तं बहुशोऽह्नि संचरणेन सूर्यकिरणाभिभूतस्वकिरणानाममृतस्पर्शाभावात् हानिः क्रमेण कलाहानिः । पुनः पौर्णमासीपर्यन्तं क्रमेण निशि निश्येव बहुशः संचारादमृतस्पर्शस्याप्यभिवृद्धौ कलाभिवृद्धिश्च प्रदृश्यते । एवं च वृद्धिह्रासयोरमृतस्पर्शनिमित्तत्वात् ततोऽमृतादित्युक्तम् ॥ ४ ॥

[ नील० ] आदित्योऽदितेः पुत्रो विष्णुर्हयग्रीवरूपी सुवर्णाख्यं जगत् वेदरूपी नामात्मकः प्रपञ्चः । "नाम वा ऋग्वेद" इत्यादिश्रुतेः तं वाग्भिरापूरयन् उत्तिष्ठति वेदाध्यायिनां ध्वनिम् उपबृंहयितुमाविर्भवतीत्यर्थः ॥५॥ जलमूर्तयश्चन्द्राद्याः पतन्ति चन्द्रकान्तवज्जलं स्रवन्ति अतोऽयं पतज्जल इति वक्तव्ये पाताल इत्यर्थः ॥ ६ ॥ प्रदेशान्तरं गत्वाऽऽह—अत्र सूर्यांशुभिरिति । दिवसेऽस्मदीयरात्रौ निशि अस्मदीयदिवसे ॥ ९ ॥ स्वाध्यायाम्नायो वेदपाठः ॥१३॥

[ अर्जु० ] [ निक्षिप्तं ] आमुञ्चते बध्नाति ॥ ७ ॥ दिवसतो दिवसे ॥ ९ ॥ रश्मिपर्वतो रश्मिनिधिः ॥१०॥ भूतपतिः शिवः ॥ १२ ॥ गोव्रतिनः गोचरितं व्रतं येषां त्यक्तप्राणाः रेचकवायुपरा मरणाभिनिवेशिनो वा ॥१३॥

[ सर्व० ] आदित्यो हयशिराः विष्णुर्वाग्भिरापूरयन् वेदान् पठन् ॥ ५ ॥ यस्मादत्रेति पातनम् पतज्जलमिति निरुक्तार्थः ॥ ६ ॥ मृता दिवसतो दिवसे ॥ ९ ॥ चन्द्रमा रश्मिपर्वतो रश्मिसमूहः ॥ १० ॥

[ लक्षा० ] अत्र दिव्यो हयशिराः इत्यत्र अत्र पाताले हयशिराः वडवामुखो वडवाग्निः उत्तिष्ठति । पौर्णमास्याममावास्यायां च अभिवृद्धजलपानाय पूर्वस्थिताग्नेरुत्तेजकतयोत्तिष्ठति ॥ ५ ॥ यस्मादत्तेत्यत्र यस्मात्कारणात् प्रस्ताः जलचरैर्मिश्रिताः जलमूर्तयः जलरालयः तस्मात् जलपातान्निमित्तात् अम् अकारवाच्यं नारायणं लाति स्वान्तर्गृह्णातीति अलं जलं तस्य पातो यत्रेति व्युत्पत्त्या पातालमिति भावः ॥ ६ ॥ ऐरावतोऽस्मात्सलिलं प्रगृह्येत्यत्र ऐरावतः अस्मात् पातालस्थलजलाशयात् स्वशुण्डाद्वारा कचित्कचिदगाधतया पातालपर्यन्तस्पर्शिलवणसमुद्रे जले प्रक्षिप्य तद्द्वारा मेघेष्वामुचन्ते इति ज्ञेयम् । ऐरावतो नागराज इत्यत्र ऐरावतादयः चत्वारो दिग्गजाः सुप्रतीकस्य वंशे प्रसूताः अन्ये वारणसप्तमाश्च ॥ ७ ॥ अप्सु सोमप्रभाम् अप्सु पतितचन्द्रप्रभां चन्द्रप्रभास्पर्शादमृतीभूतजलमिति यावत् ॥८॥ अत्र सूर्यांशुभिर्भिन्ना इत्यत्र अत्र पाताले भगवदाज्ञया निशि चन्द्र इव अह्नि सूर्योऽपि रूपान्तरेण तत्र तत्र चरति । दशयोजनाभ्यन्तरे संचरतस्तस्य सूर्यस्यातिसमीपस्थात्वात् अत्युष्णकिरणैः भिन्नास्तप्ताः । अत एव दिवसे अह्नि मृताः निशि जीवन्ति । चन्द्रस्यातिसमीपस्थामृतकिरणत्वात् शुक्लपक्षे चन्द्रकिरणैः कृष्णपक्षे शीतलवातानीतामृतशीतकरैश्च जीवन्ति । ज्योतिश्चक्रे स्थितौ तु सूर्यचन्द्रमसौ । आरोहन्नुत्तरां दिवमितिश्रुतेः । इति उत्तरां दिशं गत्वा मेरोः प्रादक्षिण्येनैव संचरतः रूपान्तरेण भगवदाज्ञया पातालेऽपि संचरत इति विवेको द्रष्टव्यः ॥ ९ ॥ अत्र तेऽधर्मनिरता इत्यत्र अधर्मनिरताः बद्धाः चतुर्मुखाज्ञया मृत्युपाशैर्वरुणपाशैश्च बद्धाः अत्र पातालस्थजलसमुद्रे कालेन मृत्युना ॥ ११ ॥ भूतपतिर्नाम महेश्वरो महादेवः स किंकरैर्भूतगणैरमृतरक्षां च करोति इति

---

५ ख. सुपर्णाख्यं । नवनवतितमोऽध्यायः ॥ ९९ ॥

यत्रतत्रशयो नित्यं येनकेनचिदाशितः ।
येन केनचिदाच्छन्नः स गोव्रत इहोच्यते ॥ १४ ॥
ऐरावणो नागराजो वामनः कुमुदोऽञ्जनः ।
प्रसूताः सुप्रतीकस्य वंशे वारणसत्तमाः ॥ १५ ॥
पश्य यद्यत्र ते कश्चिद्रोचते गुणतो वरः ।
वरयिष्यामि तं गत्वा यत्नमास्थाय मातले ॥ १६ ॥
अण्डमेतज्जले न्यस्तं दीप्यमानमिव श्रिया ।
आप्रजानां निसर्गाद्वै नोद्भिद्यति न सर्पति ॥ १७ ॥
नास्य जातिं निसर्गं वा कथ्यमानं शृणोमि वै ।
पितरं मातरं चापि नास्य जानाति कश्चन ॥ १८ ॥
अतः किल महानग्निरन्तकाले समुत्थितः ।
धक्ष्यते मातले सर्वं त्रैलोक्यं सचराचरम् ॥ १९ ॥
मातलिस्त्वब्रवीच्छ्रुत्वा नारदस्याथ भाषितम् ।
न मेऽत्र रोचते कश्चिदन्यतो व्रज मा चिरम् ॥२०॥

इति श्रीमहाभारते उद्योगपर्वणि नवनवतितमोऽध्यायः ॥ ९९ ॥

---

## शततमोऽध्यायः १००

ताभ्यां हिरण्यपुरनामकदैत्यदानवस्थानगमनम् ॥ १ ॥

**नारद उवाच—**

हिरण्यपुरमित्येतत् ख्यातं पुरवरं महत् ।
दैत्यानां दानवानां च मायाशतविचारिणाम् ॥ १ ॥
अनल्पेन प्रयत्नेन निर्मितं विश्वकर्मणा ।
मयेन मनसा सृष्टं पातालतलमाश्रितम् ॥ २ ॥
अत्र मायासहस्राणि विकुर्वाणा महौजसः ।
दानवा निवसन्ति स्म शूरा दत्तवराः पुरा ॥ ३ ॥
नैते शक्रेण नान्येन यमेन वरुणेन वा ।
शक्यन्ते वशमानेतुं तथैव धनदेन च ॥ ४ ॥
असुराः कालखञ्जाश्च तथा विष्णुपदोद्भवाः ।
नैर्ऋता यातुधानाश्च ब्रह्मपादोद्भवाश्च ये ॥ ५ ॥
दंष्ट्रिणो भीमवेगाश्च वातवेगपराक्रमाः ।
मायावीर्योपसंपन्ना निवसन्त्यत्र मातले ॥ ६ ॥
निवातकवचा नाम दानवा युद्धदुर्मदाः ।
जानासि च यथा शक्रो नैतान् शक्नोति बाधितुम् ॥७॥
बहुशो मातले त्वं च तव पुत्रश्च गोमुखः ।
निर्भग्नो देवराजश्च सहपुत्रः शचीपतिः ॥ ८ ॥
पश्य वेश्मानि रौक्माणि मातले राजतानि च ।
कर्मणा विधियुक्तेन युक्तान्युपगतानि च ॥ ९ ॥
वैडूर्यमणिचित्राणि प्रवालरुचिराणि च ।
अर्कस्फटिकशुभ्राणि वज्रासारोज्ज्वलानि च ॥१०॥

---

सूचनाय भूतपतिर्नामेत्युक्तम् ॥ १२ ॥ अत्र गोप्रतिमा विप्रा इत्यत्र गोप्रतिमाः परमशान्ता इत्यर्थः । त्यक्तप्राणाः त्यक्तं प्रकर्षेण अनमननं चेष्टा यैस्ते त्यक्तप्राणाः ॥ १३ ॥

[ नील० ] गोव्रतं व्याचष्टे यत्रेति ॥ १४ ॥ आप्रजानां निसर्गात् प्रजोत्पत्तिमारभ्य ॥ १७ ॥ जातिं जन्म निसर्गं स्वभावं ततः पूर्वमुत्पन्नस्य कस्यचिदभावात् ॥१८॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे नवनवतितमोऽध्यायः ॥ ९९ ॥

[ अर्जु० ] निसर्गात् सृष्टेः ॥ १७ ॥ अस्याण्डस्य जातं जन्म विमर्दं क्षयं कथ्यमानमपि न शृणोति कुत एव दर्शनम् ॥ १८ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि नवनवतितमोऽध्यायः ॥ ९९ ॥

[ सर्व० ] आप्रजातादाजन्मनः । निसर्गात्स्वभावात् ॥ १७ ॥ जातिं सर्पत्वादिनिसर्गसृष्टम् ॥ १८ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां नवनवतितमोऽध्यायः ॥ ९९ ॥

[ लक्षा० ] यत्र तत्र शय इत्यत्र इहस्थितो मुनिवर्गः यत्र तत्र शयः यत्र कचिच्छयः शयनं तत्कुर्वन् येन केनचित्तृणपर्णादिना आहारेण आश्रितः देहमाश्रितः देहं रक्षन्निति यावत् । येन केनचित् वल्कलाजिनादिना आच्छन्नः अत एव असङ्गः विरक्तः अप्रतिः प्रतिरहित इत्युच्यते ॥ १४ ॥ अंशमेतज्जले न्यस्तमित्यत्र एतत् प्रागुक्तमंशमग्नेरंशभूतं तेजः जले न्यस्तम् अप्रजानान्निसर्गाद्वा इत्यत्र अप्रजानात् प्रकर्षेण जानो जननमिन्धनादिना उद्बोधनं तदभावात् निसर्गात् स्वभावात् नोद्भिद्यति ऊर्ध्वं न ज्वलति न सर्पति ततोऽन्यत्र न सर्पति च ॥ १७ ॥ अस्य पातालस्थितजनस्य ॥ १८ ॥ अतः किल महानग्निरित्यत्र अतः अस्मात् पाताललोकात् ॥ १९ ॥

इति श्रीम० भा० उ० वा० कृ० ल० नवनवतितमोऽध्यायः ॥ ९९ ॥

[ नील० ] हिरण्येति ॥ १ ॥

---

६ ख. भीमरूपाश्च । ख. निवसन्त्यात्मरक्षिणः ।

पार्थिवानीव चाभान्ति पद्मरागमयानि च ।
शैलानीव च दृश्यन्ते दारवाणीव चाप्युत ॥ ११ ॥
सूर्यरूपाणि चाभान्ति दीप्ताग्निसदृशानि च ।
मणिजालविचित्राणि प्रांशूनि निबिडानि च ॥१२॥
नैतानि शक्यं निर्देष्टुं रूपतो द्रव्यतस्तथा ।
गुणतश्चैव सिद्धानि प्रमाणगुणवन्ति च ॥ १३ ॥
आक्रीडान्पश्य दैत्यानां तथैव शयनान्युत ।
रत्नवन्ति महार्हाणि भाजनान्यासनानि च ॥ १४॥
जलदाभांस्तथा शैलाँस्तोयप्रस्रवणानि च ।
कामपुष्पफलांश्चापि पादपान्कामचारिणः ॥ १५ ॥
मातले कश्चिदत्रापि रुचिरस्ते वरो भवेत् ।
अथवाऽन्यां दिशं भूमेर्गच्छाव यदि मन्यसे ॥ १६॥
मातलिस्त्वब्रवीदेनं भाषमाणं तथाविधम् ।
देवर्षे नैव मे कार्यं विप्रियं त्रिदिवौकसाम् ॥ १७॥
नित्यानुषक्तवैरा हि भ्रातरो देवदानवाः ।
परपक्षेण संबन्धं रोचयिष्याम्यहं कथम् ॥ १८ ॥
अन्यत्र साधु गच्छाव द्रष्टुं नार्हामि दानवान् ।
जानामि तव चात्मानं हिंसात्मकमनं तथा ॥ १९॥

इति श्रीमहाभारते उद्योगपर्वणि शततमोऽध्यायः ॥ १०० ॥

## एकाधिकशततमोऽध्यायः १०१

उभाभ्यां सुपर्णलोकनिरीक्षणम् ॥ १ ॥

नारद उवाच—
अयं लोकः सुपर्णानां पक्षिणां पन्नगाशिनाम् ।
विक्रमे गमने भारे नैषामस्ति परिश्रमः ॥ १ ॥
वैनतेयसुतैः सूत षड्भिस्ततमिदं कुलम् ।
सुमुखेन सुनाम्ना च सुनेत्रेण सुवर्चसा ॥ २ ॥
सुरुचा पक्षिराजेन सुबलेन च मातले ।
वर्धितानि प्रसूत्या वै विनताकुलकर्तृभिः ॥ ३ ॥
पक्षिराजाभिजात्यानां सहस्राणि शतानि च ।
कश्यपस्य ततो वंशे जातैर्भूतिविवर्धनैः ॥ ४ ॥
सर्वे ह्येते श्रिया युक्ताः सर्वे श्रीवत्सलक्षणाः ।
सर्वे श्रियमभीप्सन्तो धारयन्ति बलान्युत ॥ ५ ॥
कर्मणा क्षत्रियाश्चैते निर्घृणा भोगिभोजिनः ।
ज्ञातिसंक्षयकर्तृत्वाद्ब्राह्मण्यं न लभन्ति वै ॥ ६ ॥
नामानि चैषां वक्ष्यामि यथा प्राधान्यतः शृणु ।
मातले श्लाघ्यमेतद्धि कुलं विष्णुपरिग्रहम् ॥ ७ ॥
दैवतं विष्णुरेतेषां विष्णुरेव परायणम् ।
हृदि चैषां सदा विष्णुर्विष्णुरेव सदा गतिः ॥८॥
सुवर्णचूडो नागाशी दारुणश्चण्डतुण्डकः ।
अनिलश्चानलश्चैव विशालाक्षोऽथकुण्डली ॥ ९ ॥

---

[ सर्व० ] अर्कस्फटिकमर्कोपमः ॥ १० ॥

[ नील० ] शैलानि शिलामयानि ॥ ११ ॥ आक्रीडान् क्रीडास्थानानि ॥ १४ ॥ आत्मानम् अहिंसापरं जानामि हिंसात्मनां तथा हिंसात्मकमनं हिंसाप्रधानानां दैत्यानां कमनम् अपेक्षणीयं च हिंसोदर्कतया जानामि अन्ये तु दित्सात्मकमलं तथेति पाठं प्रकल्प्य दित्सात्मकं दानेच्छाप्रचुरम् अलम् अत्यर्थं इति व्याचक्षते ॥ १९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे शततमोऽध्यायः ॥ १०० ॥

[ अर्जु० ] सूर्यरूपाणि वा भान्ति इवार्थे वा शब्दः ॥ १२ ॥ आक्रीडान् क्रीडास्थानानि ॥ १४ ॥ परपक्षेण शत्रुपक्षेण ॥१८॥ दित्सात्मकं दानप्रचुरं अलमत्यर्थम्॥१९॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि शततमोऽध्यायः ॥ १०० ॥

[ सर्व० ] दित्सात्मकं दानेच्छासंबद्धात्मानम् सुतां प्रति अलमत्यर्थम् ॥ १९ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां शततमोऽध्यायः ॥ १०० ॥

[ नील० ] अयमिति ॥ १ ॥ प्रसूत्या प्रकृष्टगत्या जवेन वृद्धिमन्तीत्यर्थः ॥ ३ ॥ निर्घृणाः निर्दयाः ॥ ६ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकाधिकशततमोऽध्यायः ॥ १०१ ॥

[ अर्जु० ] निर्घृणा निष्कृपाः ॥ ६ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

[ सर्व० ] ब्राह्मण्यं न लभं( ति ) काश्यपसुतत्वेनेह योग्यत्वेऽपि ॥ ६ ॥

[ लक्षा० ] वर्धितानि प्रसूत्या वै इत्यत्र प्रसूत्या

---

१९ ख. हिंसात्मकमलं यथा । इति शततमोऽध्यायः ॥ १०० ॥

६ ख. न भजन्ति ।

पङ्कजिद्वज्रविष्कम्भो वैनतेयोऽथ वामनः ।
वातवेगो दिशाचक्षुर्निमेषोऽनिमिषस्तथा ॥ १० ॥
त्रिरावः सप्तरावश्च वाल्मीकिर्द्वीपकस्तथा ।
दैत्यद्वीपः सरिद्द्वीपः सारसः सद्मकेतनः ॥ ११ ॥
सुमुखश्चित्रकेतुश्च चित्रबर्हस्तथाऽनघः ।
मेषहृत्कुमुदो दक्षः सर्पान्तः सोमभोजनः ॥ १२ ॥
गुरुभारः कपोतश्च सूर्यनेत्रश्चिरान्तकः ।
विष्णुधर्मा कुमारश्च परिबर्हो हरिस्तथा ॥ १३ ॥
सुस्वरो मधुपर्कश्च हेमवर्णस्तथैव च ।
मालयो मातरिश्वा च निशाकरदिवाकरौ ॥ १४ ॥
एते प्रदेशमात्रेण मयोक्ता गरुडात्मजाः ।
प्राधान्यतस्ते यशसा कीर्तिताः प्राणिनश्च ये ॥१५॥
यद्यत्र न रुचिः काचिदेहि गच्छाव मातले ।
तं नयिष्यामि देशं त्वां वरं यत्रोपलप्स्यसे ॥ १६ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकाधिकशततमोऽध्यायः ॥ १०१ ॥

---

## द्व्यधिकशततमोऽध्यायः १०२

मातलिनारदयो रसातलगमनम् ॥ १ ॥

**नारद उवाच—**

इदं रसातलं नाम सप्तमं पृथिवीतलम् ।
यत्रास्ते सुरभिर्माता गवाममृतसंभवा ॥ १ ॥
क्षरन्ती सततं क्षीरं पृथिवीसारसंभवम् ।
षण्णां रसानां सारेण रसमेकमनुत्तमम् ॥ २ ॥
अमृतेनाभितृप्तस्य सारमुद्गिरतः पुरा ।
पितामहस्य वदनादुदतिष्ठदनिन्दिता ॥ ३ ॥
यस्याः क्षीरस्य धाराया निपतन्त्या महीतले ।
ह्रदः कृतः क्षीरनिधिः पवित्रं परमुच्यते ॥ ४ ॥
पुष्पितस्येव फेनेन पर्यन्तमनुवेष्टितम् ।
पिबन्तो निवसन्त्यत्र फेनपा मुनिसत्तमाः ॥ ५ ॥
फेनपा नाम ते ख्याताः फेनाहाराश्च मातले ।
उग्रे तपसि वर्तन्ते येषां बिभ्यति देवताः ॥ ६ ॥
अस्याश्चतस्रो धेन्वोऽन्या दिक्षु सर्वासु मातले ।
निवसन्ति दिशां पाल्यो धारयन्त्यो दिशः स्म ताः ७
पूर्वां दिशं धारयते सुरूपा नाम सौरभी ।
दक्षिणां हंसिका नाम धारयत्यपरां दिशम् ॥ ८ ॥
पश्चिमा वारुणी दिक्क धार्यते वै सुभद्रया ।
महानुभावया नित्यं मातले विश्वरूपया ॥ ९ ॥
सर्वकामदुघा नाम धेनुर्धारयते दिशम् ।
उत्तरां मातले धर्म्यां तथैलविलसंज्ञिताम् ॥ १० ॥

---

संततिपरंपरया वर्धितानि पक्षिकुलानि ॥ ३ ॥ ज्ञातिसंक्षयकर्तृत्वाद्ब्राह्मण्यं न भजन्ति वै इत्यत्र ब्राह्मण्यं ब्राह्मणजातेर्धर्मं दाक्षिण्यम् ॥ ६ ॥

[ सर्व० ] प्राणतो बलतः ॥ १५ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामेकाधिकशततमोऽध्यायः ॥ १०१ ॥

[ लक्षा० ] एतेप्रादेशमात्रेणेत्यत्र प्रकृष्टामामादेशः कथनं तन्मात्रेणेत्यर्थः ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे एकाधिकशततमोऽध्यायः ॥ १०१ ॥

[ नील० ] इदं रसातलमिति ॥ १ ॥ वदनात् मुखादुदतिष्ठत् तेन मुखजेन ब्राह्मणेन तस्या एककुलत्वं यथोक्तं ब्राह्मणाश्चैव गावश्च कुलमेकं द्विधाकृतमिति ॥ ३ ॥ फेनेन पुष्पितस्येव श्वेतस्यास्य पर्यन्तं तीरप्रदेशं फेनेनैवानुवेष्टितं पिबन्तः सादरमवलोकयन्त एव वसन्ति तेनैव फेनपा इत्युच्यन्ते ॥ ५ ॥ एतेभ्योऽन्ये फेनाहाराश्चेत्यर्थः ॥ ६ ॥ इलविलस्येमां ऐलविलसंज्ञिताम् ॥ १० ॥

[ अर्जु० ] पृथिवीसारसंभवं पृथिवीसाराः षड्रसाः ॥ २ ॥ पुष्पितस्य पुष्पस्य पर्यन्तमनु लक्षीकृत्य वेष्टितं वेष्टनम् ॥ ५ ॥ [ बिभ्रतः पुष्टतः । ] ऐलविलः कुबेरः तेन जातसंज्ञाम् ॥ १० ॥

[ सर्व० ] फेनेन पुष्पितसदृशस्येव विकसितफेनवतः क्षीरनिधेः पर्यन्तमनुवेष्टितं व्याप्तं फेनं पिबन्तः ॥ ५ ॥ ऐलविलेन संज्ञितां चिह्निताम् ॥ १० ॥

[ लक्षा० ] निवसन्ति दिशां पाल्यः इत्यत्र दिशः

---

९ ख. नागोऽसौ । १० ख. कश्यपध्वजविष्कम्भो । ११ ख. त्रिधारः सप्तधारश्च । १२ ख. मुखकेतुश्च । ख. मेघकृत् । १४ ख. मत्स्यो । १५ ख. प्रयोगमात्रेण । इति एकाधिकशततमोऽध्यायः ॥ १०१ ॥

४ ख. पवित्रं यदनुत्तमम् । ५ ख. फेनस्य । ७ ख. च दिक्पाला । इति द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

आसां तु पयसा मिश्रं पयो निर्मथ्य सागरे ।
मन्थानं मन्दरं कृत्वा देवैरसुरसंहितैः ॥ ११ ॥
उद्धृता वारुणी लक्ष्मीरमृतं चापि मातले ।
उच्चैःश्रवाश्चाश्वराजो मणिरत्नं च कौस्तुभम् ॥१२॥
सुधाहारेषु च सुधा स्वधाभोजिषु च स्वधाम् ।
अमृतं चामृताशेषु सुरभी क्षरते पयः ॥ १३ ॥
अत्र गाथा पुरा गीता रसातलनिवासिभिः ।
पौराणी श्रूयते लोके गीयते या मनीषिभिः ॥१४॥
न नागलोके न स्वर्गे न विमाने त्रिविष्टपे ।
परिवासः सुखस्ताद्दृग्रसातलतले यथा ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

## त्र्यधिकशततमोऽध्यायः १०३

वरान्वेषणाय तयोर्भोगवतीतिख्यातायां सर्पपुर्यां गमनम् ॥ १ ॥ तत्रैरावतकुलप्रसूतं सुमुखनामानं नागं मातलिर्दुहितुः पतित्वेन रोचयामास ॥ २ ॥

नारद उवाच—
इयं भोगवती नाम पुरी वासुकिपालिता ।
यादृशी देवराजस्य पुरीवर्याऽमरावती ॥ १ ॥
एष शेषः स्थितो नागो येनेयं धार्यते सदा ।
तपसा लोकमुख्येन प्रभावसहिता मही ॥ २ ॥
श्वेताचलनिभाकारो दिव्याभरणभूषितः ।
सहस्रं धारयन्मूर्ध्नां ज्वालाजिह्वो महाबलः ॥ ३ ॥
इह नानाविधाकारा नानाविधविभूषणाः ।
सुरसायाः सुता नागा निवसन्ति गतव्यथाः ॥ ४ ॥
मणिस्वस्तिकचक्राङ्काः कमण्डलुकलक्षणाः ।
सहस्रसंख्या बलिनः सर्वे रौद्राः स्वभावतः ॥५॥
सहस्रशिरसः केचित्केचित्पञ्चशताननाः ।
शतशीर्षास्तथा केचित्केचित्त्रिशिरसोऽपि च ॥ ६ ॥
द्विपञ्चशिरसः केचित्केचित्सप्तमुखास्तथा ।
महाभोगा महाकायाः पर्वताभोगभोगिनः ॥ ७ ॥
बहूनीह सहस्राणि प्रयुतान्यर्बुदानि च ॥
नागानामेकवंशानां यथाश्रेष्ठं तु मे शृणु ॥ ८ ॥
वासुकिस्तक्षकश्चैव कर्कोटकधनञ्जयौ ।
कालीयो नहुषश्चैव कम्बलाश्वतरावुभौ ॥ ९ ॥
बाह्यकुण्डो मणिर्नागस्तथैवापूरणः खगः ।
वामनश्चैलपत्रश्च कुकुरः कुकुणस्तथा ॥ १० ॥
आर्यको नन्दकश्चैव तथा कलशपोतकौ ।
कैलासकः पिञ्जरको नागश्चैरावतस्तथा ॥ ११ ॥

---

चतुर्दिशः धारयन्त्यः ताः धेनवः दिशांपाल्यः दिक्पाल्य इति स्मृताः । अलुक्समासोऽयम् ॥ ७ ॥ तथैलिविलिसंश्रयामित्यत्र ऐलबिलः पौलस्त्यो वैश्रवणः किन्नरेश्वरो धनद इत्यभिधानात् ऐलिविलिर्वैश्रवणः ॥ १० ॥

[ नील० ] असुरसंहितैः असुरसहितैः ॥ ११ ॥ सुधेति सर्पपितृदेवानां तत्तद्योग्याहाररूपं पयः क्षरतीत्यर्थः सुधा सर्पस्य भोजनं स्वधाभोजिनः पितरः अमृताशेषु देवेषु ॥ १३ ॥ परिवासः निवासः सुखः सुखकरः ॥ १५ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

[ अर्जु० ] सुधाहारेषु नागेषु, स्वधाभोजिषु पितृषु, अमृताशेषु देवेषु, सुधा अमृतकल्पा ततो भेदः ॥ १३ ॥ परिचारो भोगः ॥ १५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

[ सर्व० ] सुधाहारेषु देवेषु सुधा अमृतं हव्यरूपम् । स्वधां कव्यरूपममृतम् । एवं चामृतं चामृताशेषु क्षरतीति प्रागुक्तस्य संक्षेपेण कथनं न प्रथग्भूतमिति मन्तव्यम् ॥ १३ ॥ परिचारो भोगः ॥ १५ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

[ लक्षा० ] सुधाहारेषु च सुधामित्यत्र सुष्ठु धार्यन्ते अनया देवा इति सुधा ॥ १३ ॥ [ देहादभूतास्वाहा ] ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे द्व्यधिकशततमोऽध्यायः ॥ १०२ ॥

[ नील० ] इयमिति ॥ १ ॥ कमण्डलुकलक्षणाः पानपात्रसदृशचिह्नाः ॥ ५ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

[ अर्जु० ] श्वेतोच्चयः कैलासः ॥ ३ ॥ पताकाभोगभोगिनः पताकाया आभोगो विस्तारः तद्वद् भोगः शरीरं येषाम् ॥ ७ ॥

[ सर्व० ] श्वेतोच्चयः कैलासः ॥ ४ ॥ पर्वताभोगवत् भोगो येषामिति ॥ ७ ॥

सुमनोमुखो दधिमुखः शंखो नन्दोपनन्दकौ ।
आप्तः कोटरकश्चैव शिखी निष्ठूरिकस्तथा ॥ १२ ॥
तित्तिरिर्हस्तिभद्रश्च कुमुदो माल्यपिण्डकः ।
द्वौ पद्मौ पुण्डरीकश्च पुष्पो मुद्गरपर्णकः ॥ १३ ॥
करवीरः पीठरकः संवृत्तो वृत्त एव च ।
पिण्डारो बिल्वपत्रश्च मूषिकादः शिरीषकः ॥ १४ ॥
दिलीपः शङ्खशीर्षश्च ज्योतिष्कोऽथापराजितः ।
कौरव्यो धृतराष्ट्रश्च कुहुरः कृशकस्तथा ॥ १५ ॥
विरजा धारणश्चैव सुबाहुर्मुखरो जयः ।
बधिरान्धौ विशुण्डिश्च विरसः सुरसस्तथा ॥ १६ ॥
एते चान्ये च बहवः कश्यपस्यात्मजाः स्मृताः ।
मातले पश्य यद्यत्र कश्चित्ते रोचते वरः ॥ १७ ॥

**कण्व उवाच—**

मातलिस्त्वेकमव्यग्रः सततं संनिरीक्ष्य वै ॥
पप्रच्छ नारदं तत्र प्रीतिमानिव चाभवत् ॥ १८ ॥

**मातलिरुवाच—**

स्थितो य एष पुरतः कौरव्यस्यार्यकस्य तु ।
द्युतिमान्दर्शनीयश्च कस्यैष कुलनन्दनः ॥ १९ ॥
कः पिता जननी चास्य कतमस्यैष भोगिनः ।
वंशस्य कस्यैष महान् केतुभूत इव स्थितः ॥ २० ॥
प्रणिधानेन धैर्येण रूपेण वयसा च मे ।
मनः प्रविष्टो देवर्षे गुणकेश्याः पतिर्वरः ॥ २१ ॥

**कण्व उवाच—**

मातलिं प्रीतमनसं दृष्ट्वा सुमुखदर्शनात् ।
निवेदयामास तदा माहात्म्यं जन्म कर्म च ॥२२॥

**नारद उवाच—**

ऐरावतकुले जातः सुमुखो नाम नागराट् ।
आर्यकस्य मतः पौत्रो दौहित्रो वामनस्य च ॥२३॥
एतस्य हि पिता नागश्चिकुरो नाम मातले ।
नचिराद्वैनतेयेन पञ्चत्वमुपपादितः ॥ २४ ॥
ततोऽब्रवीत्प्रीतमना मातलिर्नारदं वचः ।
एष मे रुचितस्तात जामाता भुजगोत्तमः ॥ २५ ॥
क्रियतामत्र यत्नो वै प्रीतिमानस्म्यनेन वै ।
अस्मै नागाय वै दातुं प्रियां दुहितरं मुने ॥ २६ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

## चतुरधिकशततमोऽध्यायः १०४

नारदेनार्यकं प्रति सुमुखार्थं गुणकेशीस्वीकरणप्रार्थनम् ॥ १ ॥ आर्यकेण गरुडकृतसुमुखभक्षणप्रतिज्ञाकथनम् ॥ २ ॥ नारदमातलिभ्यां प्रार्थितेनेन्द्रेण विष्णोः संमत्या सुमुखाय चिरायुःप्रदानम् ॥ ३ ॥

**नारद उवाच—**

सूतोऽयं मातलिर्नाम शक्रस्य दयितः सुहृत् ।
शुचिः शीलगुणोपेतस्तेजस्वी वीर्यवान्बली ॥ १ ॥
शक्रस्यायं सखा चैव मन्त्री सारथिरेव च ।
अल्पान्तरप्रभावश्च वासवेन रणे रणे ॥ २ ॥
अयं हीरसहस्रेण युक्तं जैत्रं रथोत्तमम् ।
देवासुरेषु युद्धेषु मनसैव नियच्छति ॥ ३ ॥
अनेन विजितानश्वैर्दोर्भ्यां जयति वासवः ।
अनेन बलभित्पूर्वं प्रहृते प्रहरत्युत ॥ ४ ॥
अस्य कन्या वरारोहा रूपेणासदृशी भुवि ।
सत्यशीलगुणोपेता गुणकेशीति विश्रुता ॥ ५ ॥
तस्यास्य यत्नाच्चरतस्त्रैलोक्यममरद्युते ।
सुमुखो भवतः पौत्रो रोचते दुहितुः पतिः ॥ ६ ॥

---

[लक्षा०] मणिस्वस्तिकचक्राङ्कमण्डलुकलक्षणा इत्यत्र मणेः फणाफणेः स्वस्तिकचक्रयोश्च अङ्को येषां तानि कानि शिरांसि तेषां मण्डलुकं मण्डलीकरणशीलमेव लक्षणं येषां ते तथोक्ताः ॥ ५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

[अर्जु०] प्रणिधानेन······ ॥२१॥ पञ्चत्वं मरणम् २४

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

[ सर्व० ] कतमस्य भोगिनां वंशस्येत्यन्वयः ॥ २० ॥ प्रणिधानेनावधानेन ॥ २१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतौ व्याख्यायां त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

[ अर्जु० ] तेजस्वी वीर्यवान्। बली कोदण्डजं बलं शत्रुभिर्विज्ञातं तेजः, अमोघफला शक्तिर्वीर्यं, बलं बहुसेना मन्त्रादिकं च तद्वान् ॥ १ ॥

[ सर्व० ] तेजस्वी अधर्षणीयः । वीर्यवान् शत्रुकृतभयरहितः । बली सामर्थ्यवान् ॥ १ ॥

---

१६ ख. विराजो विरणश्चैव । इति त्र्यधिकशततमोऽध्यायः ॥ १०३ ॥

यदि ते रोचते सम्यग्भुजगोत्तम माचिरम् ।
क्रियतामार्यक क्षिप्रं बुद्धिः कन्यापरिग्रहे ॥ ७ ॥
यथा विष्णुकुले लक्ष्मीर्यथा स्वाहा विभावसोः ।
कुले तव तथैवास्तु गुणकेशी सुमध्यमा ॥ ८ ॥
पौत्रस्यार्थे भवांस्तस्माद्गुणकेशीं प्रतीच्छतु ।
सदृशीं प्रतिरूपस्य वासवस्य शचीमिव ॥ ९ ॥
पितृहीनमपि ह्येनं गुणतो वरयामहे ।
बहुमानाच्च भवतस्तथैवैरावतस्य च ॥ १० ॥
सुमुखस्य गुणैश्चैव शीलशौचदमादिभिः ।
अभिगम्य स्वयं कन्यामयं दातुं समुद्यतः ॥ ११ ॥
मातलिस्तस्य संमानं कर्तुमर्हो भवानपि ।
स तु दीनः प्रहृष्टश्च प्राह नारदमार्यकः ॥ १२ ॥

कण्व उवाच—

व्रियमाणे तथा पौत्रे पुत्रे च निधनं गते ।
कथमिच्छामि देवर्षे गुणकेशीं स्नुषां प्रति ॥ १३ ॥

आर्यक उवाच—

न मे नैतद्बहुमतं महर्षे वचनं तव ।
सखा शक्रस्य संयुक्तः कस्यायं नेप्सितो भवेत्॥१४॥
कारणस्य तु दौर्बल्याच्चिन्तयामि महामुने ।
अस्य देहकरस्तात मम पुत्रो महाद्युते ॥ १५ ॥
भक्षितो वैनतेयेन दुःखार्त्तास्तेन वै वयम् ।
पुनरेव च तेनोक्तं वैनतेयेन गच्छता ।
मासेनान्येन सुमुखं भक्षयिष्य इति प्रभो ॥ १६ ॥
ध्रुवं तथा तद्भविता जानीमस्तस्य निश्चयम् ।
तेन हर्षः प्रनष्टो मे सुपर्णवचनेन वै ॥ १७ ॥

कण्व उवाच—

मातलिस्त्वब्रवीदेनं बुद्धिरत्र कृता मया ।
जामातृभावेन वृतः सुमुखस्तव पुत्रजः ॥ १८ ॥
सोऽयं मया च सहितो नारदेन च पन्नगः ।
त्रिलोकेशं सुरपतिं गत्वा पश्यतु वासवम् ॥ १९ ॥
शेषेणैवास्य कार्येण प्रज्ञास्याम्यहमायुषः ।
सुपर्णस्य विघाते च प्रयतिष्यामि सत्तम ॥ २० ॥
सुमुखश्च मया सार्धं देवेशमभिगच्छतु ।
कार्यसंसाधनार्थाय स्वस्ति तेऽस्तु भुजङ्गम ॥२१॥
ततस्ते सुमुखं गृह्य सर्व एव महौजसः ।
ददृशुः शक्रमासीनं देवराजं महाद्युतिम् ॥ २२ ॥
संगत्या तत्र भगवान्विष्णुरासीच्चतुर्भुजः ।
ततस्तत्सर्वमाचख्यौ नारदो मातलिं प्रति ॥ २३ ॥

वैशम्पायन उवाच –

ततः पुरन्दरं विष्णुर ।च भुवनेश्वरम् ।
अमृतं दीयतामस्मै क्रियताममरैः समः ॥ २४ ॥
मातलिर्नारदश्चैव सुमुखश्चैव वासव ।
लभन्तां भवतः कामात् काममेतं यथेप्सितम् ॥२५॥
पुरन्दरोऽथ संचिन्त्य वैनतेयपराक्रमम् ।
विष्णुमेवाब्रवीदेनं भवानेव ददात्विति ॥ २६ ॥

विष्णुरुवाच—

ईशस्त्वं सर्वलोकानां चराणामचराश्च ये ।
त्वया दत्तमदत्तं कः कर्तुमुत्सहते विभो ॥ २७ ॥
प्रादाच्छक्रस्ततस्तस्मै पन्नगायायुरुत्तमम् ।
न त्वेनममृतप्राशं चकार बलवृत्रहा ॥ २८ ॥

---

[ अर्जु० ] प्रतिरूपस्य तत्सदृशस्य ॥ ९ ॥ व्रियमाणे जीवति ॥ १३ ॥ संयुक्त उचितः ॥ १४ ॥ कारणस्य विवाहकारणस्यायुषः । देहकरः पिता ॥ १५ ॥ शेषेण आयुषः शेषेण मरणान्तरभाविना, कार्येण मया करणीयेन प्रज्ञास्यामि गरुडशक्तिश्लाघामिति शेषः । अथवा यत्ने क्रियमाणे किं भविष्यतीति ज्ञास्यामि ॥ २० ॥ गृह्य गृहीत्वा ॥ २२ ॥ संगत्या दैवयोगेन एतेषामिति शेषः ॥ २३ ॥ अमृतप्राशं अमृतप्राशनं चकार ण्यर्थोऽत्रावगन्तव्यः ॥ २८ ॥

[ सर्व० ] संयुक्तः संबन्धी ॥ १४ ॥ कारणस्य कन्याप्रतिग्रहकरणस्य दौर्बल्यत्वादल्पत्वात् ॥ १५ ॥ अस्यायुः शेषेण कार्येण प्रज्ञा स्यात् ॥ २० ॥

इति श्रीमहाभारतेोयोगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

[ लक्षा० ] शेषेणैवास्य कार्यस्येत्यत्र कार्यस्य शेषेण विशेषेण कार्यविशेषेणेत्यर्थः । अस्य सुमुखस्य आयुषः महद्रूपं प्राप्तं स्यादित्यन्वयः ॥ २० ॥ सङ्गत्या तत्र भगवान्विष्णुरित्यत्र सङ्गत्या अनुजत्वाख्यसंबन्धेन नारदो मातलिं प्रतीत्यत्र मातलिं प्रति मातलिमुद्दिश्य आचष्ट विष्णवे आचख्यौ ॥ २३ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

२५ ख. लभन्तो ।

लब्ध्वा वरं तु सुमुखः सुमुखः संबभूव ह ।
कृतदारो यथाकामं जगाम च गृहान्प्रति ॥ २९ ॥
नारदस्त्वार्यकश्चैव कृतकार्यौ मुदायुतौ ॥
अभिजग्मतुरभ्यर्च्य देवराजं महाद्युतिम् ॥ ३० ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

## पञ्चाधिकशततमोऽध्यायः १०५

सुमुखायायुःप्रदानश्रवणक्रुद्धेन गरुडेनेन्द्रोपेन्द्रयोरात्मानमधिकबलवत्त्वेन विकत्थ्य भर्त्सनम् ॥१॥ उपेन्द्रेण स्वैरमुक्तभुजभारपीडितस्य गरुडस्य गर्वभङ्गः ॥ २ ॥ स उपेन्द्र एवायं वासुदेवस्तेन द्वारीभूतेनात्मानं रक्षेत्युक्तवतः कण्वस्य दुर्योधनेनोपहसनम् ॥ ३ ॥

**कण्व उवाच—**

गरुडस्तत्र शुश्राव यथावृत्तं महाबलः ।
आयुःप्रदानं शक्रेण कृतं नागस्य भारत ॥ १ ॥
पक्षवातेन महता रुद्ध्वा त्रिभुवनं खगः ।
सुपर्णः परमक्रुद्धो वासवं समुपाद्रवत् ॥ २ ॥

**गरुड उवाच—**

भगवन्किमवज्ञानाद्वृत्तिः प्रतिहता मम ।
कामकारवरं दत्त्वा पुनश्चलितवानसि ॥ ३ ॥
निसर्गात्सर्वभूतानां सर्वभूतेश्वरेण मे ।
आहारो विहितो धात्रा किमर्थं वार्यते त्वया ॥ ४ ॥
वृतश्चैष महानागः स्थापितः समयश्च मे ।
अनेन च मया देव भर्तव्यः प्रसवो महान् ॥ ५ ॥
एतस्मिंस्तु तथाभूते नान्यं हिंसितुमुत्सहे ।
क्रीडसे कामकारेण देवराज यथेच्छकम् ॥ ६ ॥
सोऽहं प्राणान्विमोक्ष्यामि तथा परिजनो मम ।
ये च भृत्या मम गृहे प्रीतिमान् भव वासव ॥ ७ ॥
एतच्चैवाहमर्हामि भूयश्च बलवृत्रहन् ।
त्रैलोक्यस्येश्वरो योऽहं परभृत्यत्वमागतः ॥ ८ ॥
त्वयि तिष्ठति देवेश न विष्णुः कारणं मम ।
त्रैलोक्यराज राज्यं हि त्वयि वासव शाश्वतम् ॥९॥
ममापि दक्षस्य सुता जननी कश्यपः पिता ॥
अहमप्युत्सहे लोकान् समन्ताद्वोढुमञ्जसा ॥ १० ॥
असह्यं सर्वभूतानां ममापि विपुलं बलम् ।
मयापि सुमहत्कर्म कृतं दैतेयविग्रहे ॥ ११ ॥
श्रुतश्रीः श्रुतसेनश्च विवस्वान्रोचनामुखः ।
प्रसृतः कालकाक्षश्च मयापि दितिजा हताः ॥१२॥
यत्तु ध्वजस्थानगतो यत्नात्परिचराम्यहम् ।
वहामि चैवानुजं ते तेन मामवमन्यसे ॥ १३ ॥
कोऽन्यो भारसहो ह्यस्ति कोऽन्योस्ति बलवत्तरः ।
मया योऽहं विशिष्टः सन् वहामीमं सबान्धवम्॥१४॥
अवज्ञाय तु यत्तेहं भोजनाद्व्यपरोपितः ।
तेन मे गौरवं नष्टं त्वत्तश्चास्माच्च वासव ॥ १५ ॥
अदित्यां य इमे जाता बलविक्रमशालिनः ।
त्वमेषां किल सर्वेषां बलेन बलवत्तरः ॥ १६ ॥
सोऽहं पक्षैकदेशेन वहामि त्वां गतक्लमः ।
विमृश त्वं शनैस्तात को न्वत्र बलवानिति ॥ १७ ॥

**कण्व उवाच—**

स तस्य वचनं श्रुत्वा खगस्योदर्कदारुणम् ।
अक्षोभ्यं क्षोभयंस्तार्क्ष्यमुवाच रथचक्रभृत् ॥ १८ ॥
गरुत्मन्मन्यसेऽऽत्मानं बलवन्तं सुदुर्बलम् ।
अलमस्मत्समक्षं ते स्तोतुमात्मानमण्डज ॥ १९ ॥
त्रैलोक्यमपि मे कृत्स्नमशक्तं देहधारणे ।
अहमेवात्मनाऽऽत्मानं वहामि त्वां च धारये ॥२०॥
इमं तावन्ममैकं त्वं बाहुं सव्येतरं वह ।
यद्येनं धारयस्येकं सफलं ते विकत्थितम् ॥ २१ ॥

---

[ अर्जु० ] सुमुखः आयुः प्राप्त्या शोभनमुखवान् ॥२९॥
इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि चतुरधिकशततमोऽध्यायः ॥ १०४ ॥

[ नील० ] गरुड इति ॥ १ ॥
इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

[ अर्जु० ] [ प्रतिनये प्रतीकारे ] कामकारवशं स्वातन्त्र्यम् ॥ ३ ॥ प्रसवः सन्तानः ॥ ५ ॥ परिजनः परिवारः । भृत्यः पोष्यवर्गः ॥ ७ ॥ उदर्कदारुणं भविष्यत्फलदारुणम् रथचक्रभृत् रथचक्रं सुदर्शनाख्यम् ॥ १८ ॥ विकत्थितं विकत्थनं स्वश्लाघा ॥ २१ ॥
[ लक्षा० ] भगवन् किमिवाज्ञानात्सुधां प्रति भये ममे-

---

२९ ख. सुमुखः संबभूव मुदान्वितः । इति चतुरधिकशततमोऽध्यायः १०४

१८ ख. तस्य तद्वचनं ।

ततः स भगवांस्तस्य स्कन्धे बाहुं समासजत् ।
निपपात स भारार्तो विह्वलो नष्टचेतनः ॥ २२ ॥
यावान् हि भारः कृत्स्नायाः पृथिव्याः पर्वतैः सह ।
एकस्या देहशाखायास्तावद्भारममन्यत ॥ २३ ॥
न त्वेनं पीडयामास बलेन बलवत्तरः ।
ततो हि जीवितं तस्य न व्यनीनशदच्युतः ॥ २४ ॥
व्यात्तास्यः स्रस्तकायश्च विचेता विह्वलः खगः ।
मुमोच पत्राणि तदा गुरुभारप्रपीडितः ॥ २५ ॥
स विष्णुं शिरसा पक्षी प्रणम्य विनतासुतः ।
विचेता विह्वलो दीनः किंचिद्वचनमब्रवीत् ॥ २६ ॥
भगवन् लोकसारस्य सदृशेन वपुष्मता ।
भुजेन स्वैरमुक्तेन निष्पिष्टोऽस्मि महीतले ॥ २७ ॥
क्षन्तुमर्हसि मे देव विह्वलस्याल्पचेतसः ।
बलदाहविदग्धस्य पक्षिणो ध्वजवासिनः ॥ २८ ॥
नहि ज्ञातं बलं देव मया ते परमं विभो ।
तेन मन्याम्यहं वीर्यमात्मनो न समं परैः ॥ २९ ॥
ततश्चक्रे स भगवान् प्रसादं वै गरुत्मतः ।
मैवं भूय इति स्नेहात्तदा चैनमुवाच ह ॥ ३० ॥
पादाङ्गुष्ठेन चिक्षेप सुमुखं गरुडोरसि ।
ततःप्रभृति राजेन्द्र सह सर्पेण वर्तते ॥ ३१ ॥
एवं विष्णुबलाक्रान्तो गर्वनाशमुपागतः ।
गरुडो बलवान्राजन्वैनतेयो महायशाः ॥ ३२ ॥

**कण्व उवाच—**

तथा त्वमपि गान्धारे यावत्पाण्डुसुतान्रणे ।
नासादयसि तान् वीरांस्तावज्जीवसि पुत्रक ॥ ३३ ॥
भीमः प्रहरतां श्रेष्ठो वायुपुत्रो महाबलः ।
धनञ्जयश्चेन्द्रसुतो न हन्यातां तु कं रणे ॥ ३४ ॥
विष्णुर्वायुश्च शक्रश्च धर्मस्तौ चाश्विनावुभौ ।
एते देवास्त्वया केन हेतुना वीक्षितुं क्षमाः ॥ ३५ ॥
तदलं ते विरोधेन शमं गच्छ नृपात्मज ।
वासुदेवेन तीर्थेन कुलं रक्षितुमर्हसि ॥ ३६ ॥
प्रत्यक्षदर्शी सर्वस्य नारदोऽयं महातपाः ।
माहात्म्यस्य तदा विष्णोः सोऽयं चक्रगदाधरः ॥ ३७ ॥

**वैशम्पायन उवाच—**

दुर्योधनस्तु तच्छ्रुत्वा निःश्वसन् भ्रुकुटीमुखः ।
राधेयमभिसंप्रेक्ष्य जहास स्वनवत्तदा ॥ ३८ ॥
कदर्थीकृत्य तद्वाक्यमृषेः कण्वस्य दुर्मतिः ।
ऊरुं गजकराकारं ताडयन्निदमब्रवीत् ॥ ३९ ॥
यथैवेश्वरसृष्टोऽस्मि यद्भावि या च मे गतिः ।
तथा महर्षे वर्तामि किं प्रलापः करिष्यति ॥ ४० ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

## षडधिकशततमोऽध्यायः १०६

गालवोपाख्याने–शुश्रूषणान्ते दक्षिणाग्रहणं निर्बन्धेन प्रार्थयते गालवाय मनाक् क्रुध्यता विश्वामित्रेणैकतःश्यामकर्णानां हयानामष्टौ शतानि देहीति चोदनम् ॥ १ ॥

**जनमेजय उवाच—**

अनर्थे जातनिर्बन्धं परार्थे लोभमोहितम् ।
अनार्यकेष्वभिरतं मरणे कृतनिश्चयम् ॥ १ ॥

---

त्यत्र सुधाममृतं प्रति उद्दिश्य भये सति मम काकारवरं कामेन कारः कार्यकरणं तस्य वरं दत्त्वा ॥ ३ ॥ त्यत्त्वा रूपमित्यत्र रूपं मानुषाकारं पत्नीप्रीत्यै धृतं मानुषरूपम् मया योहं विशिष्टः सन् इत्यत्र मया संपदा विशिष्टः सन् इति संबन्धः । सबान्धवं भार्याख्यबन्धुसहितम् ॥ १४ ॥

[ अर्जु० ] देहशाखायाः बाहोः ॥ २३ ॥ विचेता नष्टचित्तः । विह्वलो निर्यत्नः । पत्राणि पक्षान् ॥ २५ ॥ लोकसारस्य लोकश्रेष्ठस्य नारायणस्येति शेषः ॥ २७ ॥ बलदाहविदग्धस्य बलस्य नाशेन भस्मीकृतस्य ॥ २८ ॥ मैवं सदर्पो भूयाः ॥ ३० ॥ तीर्थेन उपाध्यायेन ॥ ३६ ॥

इति श्रीमन्म० मर्जुनमि० मुद्यो० पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

[ सर्व० ] बलदाहो बलोष्मा तेन विदग्धस्य व्याप्तस्य ॥ २८ ॥ एते देवाः एतान् देवान् ॥ ३५ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

[ लक्षा० ] बलदाहविदग्धस्येत्यत्र बलस्य दानवसेनायाः दाहे विदग्धस्य निपुणस्य ॥ २८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

[ नील० ] अनर्थे इति । परार्थे परस्वनिमित्तम् ॥ १ ॥

[ अर्जु० ] अनार्यकेषु मन्देषु कर्मसु; कर्णादिसहायेषु वा ॥ १ ॥

---

२३ ख. यावद्धिभारः कृत्स्नायाः । २४ ख. बलिनां वर । २५ ख. विपक्षः स्रस्त° । ३७ ख. प्रत्यक्षो ह्यस्य । इति पञ्चाधिकशततमोऽध्यायः ॥ १०५ ॥

ज्ञातीनां दुःखकर्तारं बंधूनां शोकवर्धनम् ।
सुहृदां क्लेशदातारं द्विषतां हर्षवर्धनम् ॥ २ ॥
कथं नैनं विमार्गस्थं वारयन्तीह बान्धवाः ।
सौहृदाद्वा सुहृत् स्निग्धो भगवान्वा पितामहः ॥३॥

**वैशम्पायन उवाच—**

उक्तं भगवता वाक्यमुक्तं भीष्मेण यत्क्षमम् ।
उक्तं बहुविधं चैव नारदेनापि तच्छृणु ॥ ४ ॥

**नारद उवाच—**

दुर्लभो वै सुहृच्छ्रोता दुर्लभश्च हितः सुहृत् ।
तिष्ठते हि सुहृद्यत्र न बन्धुस्तत्र तिष्ठते ॥ ५ ॥
श्रोतव्यमपि पश्यामि सुहृदां कुरुनन्दन ।
न कर्तव्यश्च निर्बन्धो निर्बन्धो हि सुदारुणः ॥ ६ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
यथा निर्बन्धतः प्राप्तो गालवेन पराजयः ॥ ७ ॥
विश्वामित्रं तपस्यन्तं धर्मो जिज्ञासया पुरा ।
अभ्यगच्छत्स्वयं भूत्वा वसिष्ठो भगवानृषिः ॥ ८ ॥
सप्तर्षीणामन्यतमं वेषमास्थाय भारत ।
बुभुक्षुः क्षुधितो राजन्नाश्रमं कौशिकस्य तु ॥ ९ ॥
विश्वामित्रोऽथ संभ्रान्तः श्रपयामास वै चरुम् ।
परमान्नस्य यत्नेन न च तं प्रत्यपालयत् ॥ १० ॥
अन्नं तेन यदा भुक्तमन्यैर्दत्तं तपस्विभिः ।
अथ गृह्यान्नमत्युष्णं विश्वामित्रोऽप्युपागमत् ॥ ११॥
भुक्तं मे तिष्ठ तावत्त्वमित्युक्त्वा भगवान्ययौ ।
विश्वामित्रस्ततो राजन् स्थित एव महाद्युतिः ॥१२॥
भक्तं प्रगृह्य मूर्ध्ना वै बाहुभ्यां संशितव्रतः ।
स्थितः स्थाणुरिवाभ्याशे निश्चेष्टो मारुताशनः॥१३॥
तस्य शुश्रूषणे यत्नमकरोद्गालवो मुनिः ।
गौरवाद्बहुमानाच्च हार्देन प्रियकाम्यया ॥ १४ ॥
अथ वर्षशते पूर्णे धर्मः पुनरुपागमत् ।
वासिष्ठं वेषमास्थाय कौशिकं भोजनेप्सया ॥ १५ ॥
स दृष्ट्वा शिरसा भक्तं ध्रियमाणं महर्षिणा ।
तिष्ठता वायुभक्षेण विश्वामित्रेण धीमता ॥ १६ ॥
प्रतिगृह्य ततो धर्मस्तथैवोष्णं तथा नवम् ।
भुक्त्वा प्रीतोऽस्मि विप्रर्षे तमुक्त्वा स मुनिर्गतः १७
क्षत्रभावादपगतो ब्राह्मणत्वमुपागतः ।
धर्मस्य वचनात्प्रीतो विश्वामित्रस्तथाऽभवत् ॥१८॥
विश्वामित्रस्तु शिष्यस्य गालवस्य तपस्विनः ।
शुश्रूषया च भक्त्या च प्रीतिमानित्युवाच ह ॥१९॥

---

[ नील० ] भगवान्पितामहो व्यासो न तु भीष्मः उत्तरे तस्य पृथगुपादानात् उक्तमित्यस्यावृत्तिदर्शनाच्च॥३॥ सुहृत् प्रत्युपकारमनपेक्ष्य उपकर्ता मादृशः तदीयवाक्यस्य श्रोता सुहृच्छ्रोता मूढोऽयं हितमप्युक्तं न श्रोष्यतीति भावः । तिष्ठते स्थिरो भवति यत्र महासंकटे तत्र बन्धुः उपकारमपेक्ष्योपकर्ता कर्णादिः न तिष्ठते न प्रकाशते । प्रकाशनस्थेयाख्ययोश्चेत्युभयत्र तङ् । बन्धुतोऽपि सुहृद्वचः श्रेयस्करमित्यर्थः ॥ ५ ॥ श्रोतव्यं श्रोतुं युक्तं निर्बन्धः सत्यपि बलवद्बाधके तत्रैवाग्रहः सुदारुणो नाशकारी ॥६॥ वसिष्ठमूर्त्या धर्मोऽभ्यागच्छत् ॥ ८ ॥ न प्रत्यपालयत् अन्नसिद्धिपर्यन्तं न प्रतीक्षितवान् ॥ १० ॥ तेन वसिष्ठेन। उपागमत् वसिष्ठसमीपम् ॥ ११ ॥ मूर्ध्ना बाहुभ्यां च परिगृह्य अभ्याशे समीपे आश्रमस्य ॥ १३ ॥ गौरवात् गुरुत्वात् बहुमानात् लोकपूज्यत्वात् हार्देन प्रीत्या ॥१४॥ शुश्रूषया सेवया भक्त्या आराध्यत्वज्ञानेन ॥ १९ ॥

[ अर्जु० ] ज्ञातीनां स्वगोत्राणां बन्धूनां मातुलादीनाम् ॥ २ ॥भगवान् वा पितामहः व्यासः ॥ ३ ॥ गालवोपाख्यानस्यास्य निष्फलनिर्बन्धतोऽनर्थप्राप्तिरिति तात्पर्यार्थः । पराभवः क्लेशः धर्मः स्वयं वसिष्ठो भूत्वा अभ्यगच्छदित्यर्थः॥ ८ ॥ अन्यतमम् एकम् ॥९॥ सम्भ्रान्तः सत्वरः श्रपयामास पाचयामास न प्रत्यपालयत् न विलम्बितवान् ॥ १० ॥ मे मया भगवान् वशिष्ठः ॥ १२ ॥ भक्तं परमान्नं मूर्ध्ना बाहुभ्यां च प्रगृह्येत्यर्थः । मारुताशनो वायुभक्षः ॥ १३ ॥ शुश्रूषया श्रवणेच्छया । भक्त्या सेवया ॥१४॥

[ सर्व० ] भगवान् पितामहो भीष्मः ॥ ३ ॥ उक्तं भीष्मेणेत्युत्तरत्र दर्शनात् । भगवता विष्णुना ॥ ४ ॥ सुहृन्मित्रं तिष्ठते यत्र उपदेशविषये न तत्र बन्धुस्तिष्ठति । ततोऽपि सुहृद्वचः श्रेय इत्यर्थः । अतो वासुदेवस्य सुहृदो वचनं कुर्वित्यर्थः ॥ ५ ॥ श्रोतव्यं श्रोतुं युक्तम् । वाक्यमिति शेषः ॥ ६ ॥ वसिष्ठमूर्त्या धर्मोऽभ्यागच्छत् ॥८॥ न प्रत्यपालयत् चरुश्रपणपर्यन्तं न प्रतीक्षितवान् ॥ १० ॥ तेन वसिष्ठेन । उपागमद्वसिष्ठसमीपम् ॥ ११ ॥ मूर्ध्ना बाहुभ्यां च प्रगृह्य । अभ्याशे समीपे आश्रमस्य ॥ १३ ॥ गौरवात् गुरुत्वात् । बहुमानान्माननार्हत्वात् ॥ १४ ॥ शुश्रूषया वचनबन्धेन । भक्त्या आत्मसमर्पणेन ॥ १९ ॥

[ लक्षा० ] अभ्यगच्छत्स्वयं भूत्वेत्यत्र वसिष्ठः स्वयमवशिष्टो भूत्वेत्यावृत्त्या योजना ॥ ८ ॥ निश्चेष्टो मारुताशन इत्यत्र मारुताशनः वाय्वाहारः ॥ १३ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे षडधिकशततमोऽध्यायः ॥ १०६ ॥

अनुज्ञातो मया वत्स यथेष्टं गच्छ गालव ।
इत्युक्तः प्रत्युवाचेदं गालवो मुनिसत्तमम् ॥ २० ॥
प्रीतो मधुरया वाचा विश्वामित्रं महाद्युतिम् ।
दक्षिणाः काः प्रयच्छामि भवते गुरुकर्मणि ॥२१॥
दक्षिणाभिरुपेतं हि कर्म सिध्यति मानद ।
दक्षिणानां हि दाता वै अपवर्गेण युज्यते ॥ २२ ॥
स्वर्गे क्रतुफलं तद्धि दक्षिणा शान्तिरुच्यते ।
किमाहरामि गुर्वर्थं ब्रवीतु भगवानिति ॥ २३ ॥
जानानस्तेन भगवान् जितः शुश्रूषणेन वै ।
विश्वामित्रस्तमसकृद्गच्छ गच्छेत्यचोदयत् ॥ २४ ॥
असकृद्गच्छ गच्छेति विश्वामित्रेण भाषितः ।
किं ददानीति बहुशो गालवः प्रत्यभाषत ॥ २५ ॥
निर्बन्धतस्तु बहुशो गालवस्य तपस्विनः ।
किंचिदागतसंरम्भो विश्वामित्रोऽब्रवीदिदम् ॥२६॥
एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
अष्टौ शतानि मे देहि गच्छ गालव मा चिरम् ॥२७॥

इति श्रीमहाभारते उद्योगपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

## सप्ताधिकशततमोऽध्यायः १०७

हयदानाशक्तमात्मानं शोचतो गालवस्य गरुडेनाहं त्वां त्रैलोक्यं दर्शयिष्यामीत्युक्त्वा परिसान्त्वनम् ॥ १ ॥

**नारद उवाच—**

एवमुक्तस्तदा तेन विश्वामित्रेण धीमता ।
नास्ते न शेते नाहारं कुरुते गालवस्तदा ॥ १ ॥
त्वगस्थिभूतो हरिणश्चिन्ताशोकपरायणः ।
शोचमानोऽतिमात्रं स दह्यमानश्च मन्युना ।
गालवो दुःखितो दुःखाद्विललाप सुयोधन ॥ २ ॥
कुतः पुष्टानि मित्राणि कुतोऽर्थाः संचयः कुतः ।
हयानां चन्द्रशुभ्राणां शतान्यष्टौ कुतो मम ॥ ३ ॥
कुतो मे भोजने श्रद्धा सुखश्रद्धा कुतश्च मे ।
श्रद्धा मे जीवितस्यापि छिन्ना किं जीवितेन मे ॥४॥
अहं पारे समुद्रस्य पृथिव्या वा परंपरात् ।
गत्वाऽऽत्मानं विमुञ्चामि किं फलं जीवितेन मे ॥५॥

---

[ नील० ] गुरुकर्मणि ब्रह्मचर्यव्रतसमाप्तौ सत्याम् ॥ २१ ॥ मानवमिति पाठे सिद्धयति सिद्धं कृतकृत्यं करोतीत्यर्थः । एतदेवाह—दक्षिणानामिति । अपवर्गेण फलप्राप्त्या ॥ २२ ॥ क्रतुफलं दक्षिणाप्रद एव प्राप्नोति । हतो यज्ञस्त्वदक्षिण इति स्मृतेरदक्षिणस्य क्रतोर्हतत्वेनाफलत्वात् । शान्तिः सर्वोपद्रवहारिणी उच्यते वेदेन दक्षिणां कर्म कृणुते विजानन्निति ॥ २३ ॥ जानानः शुश्रूषणेनैव दक्षिणाकर्मसमाप्तिरिति । स जानंस्तेनेति पाठे तेन गालवेन शुश्रूषणेनैव जितो वशीकृतोऽस्मीति जानन्नित्यन्वयः ॥ २४ ॥ श्यामो हरितः एकतः बहिः प्रदेशे एव श्यामाः कर्णा येषां एकतःश्यामकर्णानाम् ॥ २७ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षडधिकशततमोऽध्यायः ॥ १०६ ॥

[ अर्जु० ] हे मानद हे संमानद । विमृष्टानां विशुद्धानां दक्षिणानामिति शेषः ॥ अपवर्गेण दानेन ॥२२॥ शांतिः समाप्तिः आप्यते प्राप्यते ॥ २३ ॥ जानमानो दक्षिणया कर्म समाप्तिरिति जानन् जातमान इति पाठे जातपूजः आवर्जितः शुश्रुषणेन ॥ २४ ॥ निर्बन्धतोऽतिग्रहात् संरम्भः क्रोधः ॥ २६ ॥ एकतः श्यावकर्णानां श्यावैककर्णानामित्यर्थः । श्यावो हरितः एकतःश्यामकर्णानामिति प्रायशः पाठः ॥ २७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षडधिकशततमोऽध्यायः ॥ १०६ ॥

[ सर्व० ] विमृष्टानां शास्त्रविमर्शनेन निश्चितानाम् अपवर्गेण दानेन ॥ २२ ॥ तत्तस्मात् दक्षिणा शान्तिरुपशमः ॥ २३ ॥ जानमानो दक्षिणाकर्मसमाप्तिरिति ॥ २४ ॥ श्यावो हरितः कर्णे एकत्र पार्श्वे येषाम् ॥ २७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां षडधिकशततमोऽध्यायः ॥ १०६ ॥

[ नील० ] एवमिति । हरिणः पाण्डुरः मन्युना दैन्येन दह्यमानश्चिन्ताग्निना ॥ २ ॥ परंपरात् दूरादपिदूरं आत्मानं देहम् ॥ ५ ॥

[ अर्जु० ] हरिणः पाण्डुः । मन्युना शोकेन ॥ २ ॥ भोजने श्रद्धा भोजनेच्छा ॥४॥ परम्परात् अतिदूरात्॥५॥

[ सर्व० ] परंपरात् दूरादपि दूरम् ॥ ५ ॥

---

२२ ख. सिध्यति मानवम् । ख. दक्षिणानां किसृष्टानामपतर्गेण भृज्यते । २३ ख. सद्भिर्दक्षि° । ख. जानमानस्तु भ° । ख. चोदयन् । इति षडधिकशततमोऽध्यायः ॥ १०६ ॥
२ ख. त्वगस्थिशेषो । ख. च शोचमानो दिवारात्रं ।

अधनस्याकृतार्थस्य त्यक्तस्य विविधैः फलैः ।
ऋणं धारयमाणस्य कुतः सुखमनीहया ॥ ६ ॥
सुहृदां हि धनं भुक्त्वा कृत्वा प्रणयमीप्सितम् ।
प्रतिकर्तुमशक्तस्य जीवितान्मरणं वरम् ॥ ७ ॥
प्रतिश्रुत्य करिष्येति कर्तव्यं तदकुर्वतः ।
मिथ्यावचनदग्धस्य इष्टापूर्तं प्रणश्यति ॥ ८ ॥
न रूपमनृतस्यास्ति नानृतस्यास्ति संततिः ।
नानृतस्याधिपत्यं च कुत एव गतिः शुभा ॥ ९ ॥
कुतः कृतघ्नस्य यशः कुतः स्थानं कुतः सुखम् ।
अश्रद्धेयः कृतघ्नो हि कृतघ्ने नास्ति निष्कृतिः ॥१०॥
न जीवत्यधनः पापः कुतः पापस्य तन्त्रणम् ।
पापो ध्रुवमवाप्नोति विनाशं नाशयन्कृतम् ॥ ११ ॥
सोऽहं पापः कृतघ्नश्च कृपणश्चानृतोऽपि च ।
गुरोर्यः कृतकार्यः संस्तत्करोमि न भाषितम् ॥१२॥
सोऽहं प्राणान्विमोक्ष्यामि कृत्वा यत्नमनुत्तमम् ।
अर्थिता न मया काचित्कृतपूर्वा दिवौकसाम् ॥१३॥
मानयन्ति च मां सर्वे त्रिदशा यज्ञसंस्तरे ।
अहं तु विबुधश्रेष्ठं देवं त्रिभुवनेश्वरम् ॥
विष्णुं गच्छाम्यहं कृष्णं गतिं गतिमतां वरम् ॥१४॥
भोगा यस्मात्प्रतिष्ठन्ते व्याप्य सर्वान् सुरासुरान् ।
प्रणतो द्रष्टुमिच्छामि कृष्णं योगिनमव्ययम् ॥ १५ ॥
एवमुक्ते सखा तस्य गरुडो विनतात्मजः ।
दर्शयामास तं प्राह संहृष्टः प्रियकाम्यया ॥ १६ ॥
सुहृद्भवान्मम मतः सुहृदां च मतः सुहृत् ।
ईप्सितेनाभिलाषेण योक्तव्यो विभवे सति ॥ १७ ॥
विभवश्चास्ति मे विप्र वासवावरजो द्विज ।
पूर्वमुक्तस्त्वदर्थं च कृतः कामश्च तेन मे ॥ १८ ॥
स भवानेतु गच्छाव नयिष्ये त्वां यथासुखम् ।
देशं पारं पृथिव्या वा गच्छ गालव माचिरम् ॥१९॥

इति श्रीमहाभारते उद्योगपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

[ लक्षा० ] कुतः पुष्णानि मित्राणीत्यत्र पुष्णानीति- लोटि उत्तमपुरुषवचनम् । पुष्टान् करवाणीत्यर्थः ॥ ३ ॥

[ नील० ] अनीहया अनुद्यमेन ॥ ६ ॥ ईप्सितं प्रणय कृत्वा ईप्सितं दास्यामीति विश्वासमुत्पाद्य । प्रणयः प्रेम्णि विस्रंभे इति विश्वः ॥ ७ ॥ एतदेवाह–प्रतिश्रुत्येति । करिष्येतीति संन्धिरार्षः ॥ ८ ॥ अनृतस्य सत्यहीनस्य रूपं स्वरूपं जीवन्नेव स मृत इत्यर्थः ॥ ९ ॥ तन्त्रणं कुटु- म्बधारणं पाठान्तरे मन्त्रणमिष्टैः सह विचारणमविश्वस- नीयत्वादित्यर्थः ॥ ११ ॥ तत् भाषितमिति संबन्धः ॥ १२ ॥ अनुत्तमं यत्नम् अधमोपायं विषोद्बन्धनादिरूपं कृत्वा प्राणान्मोक्ष्यामीत्यर्थः अर्थिता याच्ञा ॥ १३ ॥ अहं त्वित्यत्राहमिति पदस्य द्विरावृत्तिर्वक्तृवैक्लव्याददोषः ॥ १४ ॥ भोगाः भोग्यवर्गो वियदादिः प्रतिष्ठन्ते निःस- रन्ति बीजादिव वृक्षाः ॥ १५ ॥ तस्य विष्णुदासत्वेन सखा न तु पूर्वोपकारादिना ॥ १६ ॥ सुहृदां विश्वं त्रिष्णुरिति बुद्ध्या सर्वलोकमित्राणाम् ॥ १७ ॥ वास- वादवरजो विष्णुः उक्तः अहं गालवस्य साहाय्यं कर्तुमि- च्छामीति प्रार्थितः तेन विष्णुना ॥ १८ ॥ देशं पृथि- व्यन्तर्गतमेव पृथिव्याः पारः समुद्रः ॥ १९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

[ अर्जु० ] अनीहया अयत्नेन ॥ ६ ॥ सुहृदां हि धन- मित्यादि । प्रणयं स्नेहं कृत्वा धनं भुक्त्वेत्यानुपूर्वी ईप्सितं प्रतिकर्तुमशक्तस्येत्यर्थः ॥ ७ ॥ करिष्येतीति सन्धिरार्षः । इष्टापूर्तं यज्ञदानादि ॥ ८ ॥ अनृतस्य अनृतवक्तुः ॥ ९ ॥ तन्त्रणं कुटुम्बधारणं कृत्वा ॥ ११ ॥ यत्नमश्वार्थमुत्थाप्य प्रणश्येति शेषः अर्थना याच्ञा ॥ १३ ॥ अयमहं गतिं शरणम् ॥ १४ ॥ प्रतिष्ठन्ते निर्वसन्ति ॥ १५ ॥ दर्श- यामास दर्शनं चकार ॥ १६ ॥ वासवावरजो विष्णुरेव विभवः स च मया त्वदर्थमुक्तः गालवस्य मम सुहृदो गुरु- धनशोधना सिध्यत्विति तेन कामः कृतो वरो दत्तः । तस्मादर्थस्यासम्यक् तया मा खिद्यस्व ॥ १८ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

[ सर्व० ] अनीहया अनुद्यमेन ॥ ६ ॥ कृत्वा प्रणयं स्नेहानुवृत्तिम् । तेन च भक्त्या ईप्सितुं प्रतिकर्तुं प्रत्युप- कारं कर्तुमशक्तस्य ॥ ७ ॥ अनृतस्यानृताभिधायिनः ॥ ९ ॥ तन्त्रणम् कुटुम्बधारणम् ॥ ११ ॥ कृत्वा यत्नम् प्राणमोक्षाय ॥ १३ ॥ प्रतिष्ठन्ते स्थिरीभवन्ति ॥१५॥ तं गालवमात्मानं दर्शयामास प्राह च ॥ १६ ॥ सु- हृत् अन्येषां मध्ये सुहृन्मतः ॥ १७ ॥ मम च विभवो वासवावरजो विष्णुरेव धनमेव तत्राप्यापत्तिसंभवात् । पूर्वमुक्तस्तदर्थं मम सख्ये गालवाय प्रीतो भवेति याचितः सर्वकामस्तेन मे कृतस्त्वयि प्रीतोऽभूदित्यर्थः ॥ १८ ॥

६ ख. अपास्तमानकार्यस्य । ८ ख. करोमीति ।

इति सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

## अष्टाधिकशततमोऽध्यायः १०८

गरुडेन गालवाय प्राचीवर्णनम् ॥ १ ॥

**सुपर्ण उवाच—**

अनुशिष्टोऽस्मि देवेन गालव ज्ञानयोनिना ।
ब्रूहि कामं तु कां यामि द्रष्टुं प्रथमतो दिशम् ॥ १ ॥
पूर्वां वा दक्षिणां वाऽहमथवा पश्चिमां दिशम् ।
उत्तरां वा द्विजश्रेष्ठ कुतो गच्छामि गालव ॥ २ ॥
यस्यामुदयते पूर्वं सर्वलोकप्रभावनः ।
सविता यत्र संध्यायां साध्यानां वर्तते तपः ॥ ३ ॥
यस्यां पूर्वं मतिर्याता यया व्याप्तमिदं जगत् ।
चक्षुषी यत्र धर्मस्य यन्त्रवै सुप्रतिष्ठिते ॥ ४ ॥
कृतं यतो हुतं हव्यं सर्पते सर्वतोदिशम् ।
एतद्वारं द्विजश्रेष्ठ दिवसस्य तथाऽध्वनः ॥ ५ ॥
अत्र पूर्वं प्रसूता वै दाक्षायण्यः प्रजाः स्त्रियः ।
यस्यां दिशि प्रवृद्धाश्च कश्यपस्यात्मसंभवाः ॥ ६ ॥
अतो मूलं सुराणां श्रीर्यत्र शक्रोऽभ्यषिच्यत ।
सुरराज्येन विप्रर्षे देवैश्चात्र तपश्चितम् ॥ ७ ॥
एतस्मात्कारणाद्ब्रह्मन् पूर्वेत्येषा दिगुच्यते ।
यस्मात्पूर्वतरे काले पूर्वमेवावृता सुरैः ॥ ८ ॥
अत एव च सर्वेषां पूर्वामाशां प्रचक्षते ।
पूर्वं सर्वाणि कार्याणि दैवानि सुखमीप्सता ॥ ९ ॥
अत्र वेदान् जगौ पूर्वं भगवान् लोकभावनः ।
अत्रैवोक्ता सवित्राऽऽसीत्सावित्री ब्रह्मवादिषु ॥ १० ॥
अत्र दत्तानि सूर्येण यजूंषि द्विजसत्तम ।
अत्र लब्धवरैः सोमः सुरैः क्रतुषु पीयते ॥ ११ ॥

---

अतो यद्भवतोऽपेक्षितं मया शक्यं कर्तुं तत्करिष्यामि तच्च दिग्गमनादिकम् यदि तदा नयामीत्याह स भवानित्यादि ॥ १९ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

[ लक्षा० ] प्रतिश्रुत्य करिष्येतीत्यत्र अति अतिशयेन प्रतिश्रुत्य करिष्ये इति संबन्धः ॥ ८ ॥ वासवावरजो द्विजेत्यत्र वासवावरजः विष्णुः तेन विष्णुना मे कामश्च कृतः ॥ १८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्ताधिकशततमोऽध्यायः ॥ १०७ ॥

[ नील० ] अनुशिष्ट आज्ञापितः ज्ञानयोनिना धीप्रवर्तकेन विष्णुना पाठान्तरे अज्ञातयोनिना सर्वादित्वात् अज्ञातः रूपादिहीनत्वाच्च तादृशोऽपि योनिः जगदुदयप्रलयस्थानं तेन कामं यथेष्टम् ॥ १ ॥ साध्यानां देवताविशेषाणां तप आलोचनं वर्तते अनुवर्तते । साध्या देवा इह ध्यायन्तः सत्यकामा बभूवुरित्यर्थः ॥ ३ ॥ मतिर्बुद्धिः याता प्राप्ता प्रातःसन्ध्यायां सवितुः प्रसादात् प्रथमं यत्र धीप्राप्तिर्भवति । गायत्र्यां सवितुर्धीप्रवर्तकत्वदर्शनादित्यर्थः । चक्षुषी आज्यभागाख्ये अग्नीषोमदैवत्ये धर्मस्य यज्ञस्य यन्त्रवै यन्त्रणार्थं यन्त्रयतेस्तुमर्थे तवैप्रत्ययो वैदिकस्तकारलोपश्च ॥ ४ ॥ तदेवाह कृतं संस्कृतं हव्यं यतो हुतं ययोर्मध्ये हुतं सत् तदाज्यभागावन्तरेणाहुतीः प्रतिपादयेदिति श्रुतेर्यज्ञस्य रक्षणं भवति । अन्यत्र गतं त्वर्थाद्धर्मनाशकं भवतीति भावः । अध्वनः देवयानस्य पितृयाणस्य वा ॥ ५ ॥ दाक्षायण्यः अदितिर्दितिर्दनुः काष्ठा इत्यादयः प्रजाः लोकान् ॥ ६ ॥ पूर्वं पूर्वसंस्थानि सुखमीप्सता सुखाद्यर्थिना ॥ ९ ॥ यजूंषि दत्तानि याज्ञवल्क्यायेति शेषः ॥ ११ ॥

[ अर्जु० ] अज्ञातयोनिना अज्ञातकारणकेन विष्णुना ॥ १ ॥ मतिर्जागरणं यया व्याप्तं तत्रस्थेन सवित्रा व्याप्तम् । चाक्षुषी चक्षुरुपलब्धिः एष धर्मः प्रतिष्ठित इति । प्राङ्मुखैरेव धर्मानुष्ठानात् ॥ ४ ॥ यतो मुखं यन्मुखं सर्पते गच्छति । द्वारं मुखम् । अध्वनः कालस्य ॥ ५ ॥ स्त्रियो दाक्षायण्यो दक्षस्यापत्यानि प्रजाः प्रसूता इत्यन्वयः ॥ कश्यपस्यात्मसंभवाः देवासुराद्याः ॥ ६ ॥

[ सर्व० ] अनुशिष्टो अनुज्ञातः । अज्ञातयोनिना अनेन विष्णुना ॥ १ ॥ पूर्वं प्रथमं मतिर्बुद्धिः निद्रानाशस्य तद्धेतोः । पूर्वदिक्सवितृसंबन्धाधीनत्वात् । अत एव यया व्याप्तम् व्याप्तिर्व्यापारः तदर्थं प्रवर्तितम् । चक्षुषी धर्मस्य सूर्याचन्द्रमसौ । उद्यात्यनुगतत्वात् । धर्मस्य तयोश्च तत्र प्रथमदर्शनात् एष धर्मः प्रतिष्ठितः कार्यतया ॥ ४ ॥ एतदेव दर्शयति—भूतमिति । यतो मुखं यन्मुखम् । होतॄणाम् तन्मुखत्वेन हव्येऽपि तदुपचारात् । अध्वनोरर्थोपलब्धेर्भावं कारणम् ॥ ५ ॥ स्त्रियो दाक्षायण्यदित्याद्याः । प्रजाः लोकान् ॥ ६ ॥

---

१ ख. गालवाज्ञातयोनिना । ३ ख. यस्मादुदयते । ५ ख. हुतं यतो मुखे हव्यं सर्पते सर्वतो मुखम् । ६ ख. यत्र पूर्वं प्रसूताश्च । ९ ख. अत एव हि पूर्वेषां पूर्वामाशामवेक्षता ।

अत्र तृप्ता हुतवहाः स्वां योनिमुपभुञ्जते ।
अत्र पातालमाश्रित्य वरुणः श्रियमाप च ॥ १२ ॥
अत्र पूर्वं वसिष्ठस्य पौराणस्य द्विजर्षभ ।
सूतिश्चैव प्रतिष्ठा च निधनं च प्रकाशते ॥ १३ ॥
ॐकारस्यात्र जायन्ते सूतयो दशतीर्दश ।
पिबन्ति मुनयो यत्र हविर्धूमं स्म धूमपाः ॥ १४ ॥
प्रोक्षिता यत्र बहवो वराहाद्या मृगा वने ।
शक्रेण यज्ञभागार्थे दैवतेषु प्रकल्पिताः ॥ १५ ॥
अत्राहिताः कृतघ्नाश्च मानुषाश्चासुराश्च ये ।
उदयंस्तान् हि सर्वान्वै क्रोधाद्धन्ति विभावसुः १६॥
एतद्द्वारं त्रिलोकस्य स्वर्गस्य च सुखस्य च ।
एष पूर्वो दिशां भागो विशावोऽत्र यदीच्छसि॥१७॥
प्रियं कार्यं हि मे तस्य यस्यास्मि वचने स्थितः ।
ब्रूहि गालव यास्यामि शृणु चाप्यपरां दिशम्॥१८॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

## नवाधिकशततमोऽध्यायः १०९

दक्षिणस्या दिशो वर्णनम् ॥ १ ॥

**सुपर्ण उवाच—**

इयं विवस्वता पूर्वं श्रौतेन विधिना किल ।
गुरवे दक्षिणा दत्ता दक्षिणेत्युच्यते च दिक् ॥ १ ॥
अत्र लोकत्रयस्यास्य पितृपक्षः प्रतिष्ठितः ।
अत्रोष्मपाणां देवानां निवासः श्रूयते द्विज ॥ २ ॥
अत्र विश्वे सदा देवाः पितृभिः सार्धमासते ।
इज्यमानाः स्म लोकेषु संप्राप्तास्तुल्यभागताम् ॥३॥
एतद्द्वितीयं देवस्य द्वारमाचक्षते द्विज ।
त्रुटिशो लवशश्चापि गण्यते कालनिश्चयः ॥ ४ ॥

[ नील० ] स्वां योनिं सोमाज्यपयआदिरूपं जलम् ॥ १२ ॥ पूर्वं मित्रावरुणयोर्यज्ञकाले पौराणस्य पुराणस्य स्वार्थे तद्धितः, निधनं निमिशापात् स्थूलदेहवियोगः सूतिः कुम्भात् तस्मिन्नेव यज्ञे ॥ १३ ॥ दशशतीशब्दस्य पृषोदरादिशकारलोपेन दशतीशब्दः सहस्रवाची सृतयो मार्गाः । ओंकारो वै सर्वा वागितिश्रुतेर्वेदस्य शाखाप्रशाखादिभेदोऽत्रैव जात इत्यर्थः ॥ १४ ॥ ये मानुषाः कृतघ्नाः ये वाऽसुरास्तान् अत्रैवोदयन् हन्ति तेषामायुरल्पीकरोतीत्यर्थः ॥ १६ ॥ विशावः प्रविशावः ॥ १७ ॥

इति श्रीमन्महाभारते नैलकण्ठीये उद्योगपर्वणि भारतभावदीपे अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

[ अर्जु० ] स्वां योनिं हविरिन्धनं वा ॥१२॥ प्रसूतिः प्रसवः प्रतिष्ठा स्थितिः निधनं मरणम् । निमिना राज्ञा शरीरशून्यो भवेति शप्तत्वात् । ब्रह्माज्ञया पुनरुदककुम्भादभूत् । पौराणस्य पुराणप्रतिपादितस्य ॥ १३ ॥ दशति दशसहस्रं हवींषि धीयन्तेऽत्रेति हविर्धाने ॥ १४ ॥ विभावसुः सूर्यः ॥ १६ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

[ सर्व० ] स्वां योनिम् जलम् उपभुञ्जते तेषां पूर्वसंबन्धे स्थितत्वात् ॥ १२ ॥ पौराणस्य पुराणकालभवस्य निधनं वसिष्ठस्य निमिशापात् ॥ १३ ॥ सूतयो जन्मादिप्रकाराः संभवन्ति । दशतीर्दश दशसहस्रम् दशतीरिति वा छन्दसीति जसि पूर्वसवर्णः । हविर्धाने वेदिपूर्वभागशालायाम् ॥ १४ ॥ प्रोक्षिताः शक्रेण यज्ञार्थम् ॥ १५ ॥ मानुषा असुराश्च ये कृतघ्नाः । आच्छादयन् हन्ति तेषामायुः क्षपयति ॥ १६ ॥ त्रिलोकस्य पातालभूम्यंतरिक्षाणां विशाव प्रविशाव ॥ १७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

[ लक्षा० ] ॐकारस्येत्यत्र याः सूतीः लोकः दिशतीर्दिशताः ओंकारस्य सूतयः स्वरप्रसूतयः जायन्ते ॥१४॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अष्टाधिकशततमोऽध्यायः ॥ १०८ ॥

[ नील० ] इयमिति स्रौवेणेति पाठे स्रुवेण हूयतेऽस्मिन्निति स्रौवो विधिर्यज्ञः गुरवे कश्यपाय ॥ १ ॥ ऊष्मपाणां उष्णान्नभोजिनाम् । यावदुष्णं भवत्यन्नं पितरस्तावदश्नन्तीति स्मृतेः ॥२॥ विश्वे त्रयोदशमितो गणः ॥ ३ ॥ द्वितीयं देवस्य धर्मस्य द्वारं पूर्वा दिक् प्रथमं तदपेक्षया पित्र्यस्य धर्मस्य द्वारमिदं द्वितीयम् । प्राक्संस्थानि दैवानि कर्माणि दक्षिणसंस्थानि पित्र्याणीति स्मृतेः ॥ ४ ॥

[ अर्जु० ] स्रौवेण विधिना स्रुवागतेन विधिना यज्ञेनेत्यर्थः । गुरवे कश्यपाय ॥ १ ॥ कालनिश्चयः । प्राणिनामायुः ॥ ४ ॥

१७ ख. दिशाभागो विशावेनं यदीच्छसि । इति अष्टाधिकशतत० ॥१०८॥

४ ख. धर्मस्य द्वार° ।

अत्र देवर्षयो नित्यं पितृलोकर्षयस्तथा ।
तथा राजर्षयः सर्वे निवसन्ति गतव्यथाः ॥ ५ ॥
अत्र धर्मश्च सत्यं च कर्म चात्र निगद्यते ।
गतिरेषा द्विजश्रेष्ठ कर्मणामवसायिनाम् ॥ ६ ॥
एषा दिक्सा द्विजश्रेष्ठ यां सर्वः प्रतिपद्यते ।
वृता त्वनवबोधेन सुखं तेन न गम्यते ॥ ७ ॥
नैर्ऋतानां सहस्राणि बहून्यत्र द्विजर्षभ ।
सृष्टानि प्रतिकूलानि द्रष्टव्यान्यकृतात्मभिः ॥ ८ ॥
अत्र मन्दरकुञ्जेषु विप्रर्षिसदनेषु च ।
गायन्ति गाथा गन्धर्वाश्चित्तबुद्धिहरा द्विज ॥ ९ ॥
अत्र सामानि गाथाभिः श्रुत्वा गीतानि रैवतः ।
गतदारो गतामात्यो गतराज्यो वनं गतः ॥ १० ॥
अत्र सावर्णिना चैव यवक्रीतात्मजेन च ।
मर्यादा स्थापिता ब्रह्मन्यां सूर्यो नातिवर्तते ॥११॥
अत्र राक्षसराजेन पौलस्त्येन महात्मना ।
रावणेन तपश्चीर्त्वा सुरेभ्योऽमरता वृता ॥ १२ ॥
अत्र वृत्तेन वृत्रोऽपि शक्रशत्रुत्वमीयिवान् ।
अत्र सर्वासवः प्राप्ताः पुनर्गच्छन्ति पञ्चधा ॥१३॥
अत्र दुष्कृतकर्माणो नराः पच्यन्ति गालव ।
अत्र वैतरणी नाम नदी वितरणैर्वृता ॥ १४ ॥
अत्र गत्वा सुखस्यान्तं दुःखस्यान्तं प्रपद्यते ।
अत्रावृत्तो दिनकरः सुरसं क्षरते पयः ॥ १५ ॥
काष्ठां चासाद्य वासिष्ठीं हिममुत्सृजते पुनः ।
अत्राहं गालव पुरा क्षुधार्त्तः परिचिन्तयन् ॥१६॥

---

[ सर्व० ] स्रुवेणात्र हूयत इति स्रौवो विधिर्यज्ञः । गुरवे कश्यपाय ॥ १ ॥ प्राणनिश्चयः । आयुर्निश्चयः ॥४॥

[ नील० ] कर्म पुण्यापुण्यरूपं निगद्यते प्रकाश्यते चित्रगुप्तादिभिः अवसायिनां मृतानां कर्म निग्रहानुग्रहरूपम् ॥ ६ ॥ सर्वः मुमूर्षुमात्रः वृता छन्ना अनवबोधेन तमसा पुण्यवान् पापी वा मरणकाले अत्यन्तमूढत्वात् दुःखे वसन्नेतां दिशं गच्छतीत्यर्थः । कृत्वा त्वनवरोधेनेति पाठे अनवः प्राक्संचितेन कर्मणा उपस्थितो रोधो मोहस्तेन सर्वः कृत्वा कर्ता पूरुषः । अतो मनिन्कनिब्वनिपश्चेतिसूत्रात् कनिबित्यनुवर्तमानेऽन्येभ्योऽपि दृश्यन्त इति कृञः कर्तरि कनिप् ॥ ७ ॥ चित्तं च बुद्धिश्च तयोर्हराः योगिनां तत्त्वानुसंधानं प्रपञ्चमिथ्यात्वनिश्चयं च हरन्तीत्यर्थः ॥ ९ ॥ गाथाः वर्णमय्यो मन्त्राद्याः सामानि तदाश्रयाणि गीतानि श्रुत्वाऽतीतं कालमजानन् भूलोके आगत्य दारान्नष्टान्ज्ञात्वा वनं गत इति पौराणी कथा ॥ १० ॥ सावर्णिना मनुना मर्यादा सूर्यरथस्य वीथीनां वाहकानां देवतानां च नियमः ॥ ११ ॥ सर्वासवः सर्वेषां प्राणा अत्र प्राप्ताः सन्तः पुनः पञ्चधा गच्छन्ति देहं प्राप्नुवन्ति प्राणापानादिभेदेनेत्यर्थः ॥ १३ ॥ वितरणैः वैतरणीनदीसंज्ञकनरकगामिभिः ॥ १४ ॥ सुखस्यान्तं नरकं दुःखस्यान्तं स्वर्गमुखम् । आवृत्तः कर्कायनगतः । तदा हि प्रायेणार्द्रानक्षत्रं भवति तच्च वर्षाकालस्यादिभूतं प्रसिद्धम् ॥ १५ ॥ वासिष्ठीं काष्ठामुदीचीं वसिष्ठोपलक्षितसप्तर्षिभिरधिष्ठिताम् । धानिष्ठीमिति पाठेऽतिशयेन धनवान् धनिष्ठः कुबेरस्तदीयामुत्सृजते त्यजति ॥ १६ ॥

[ अर्जु० ] आत्मावसादिनः आत्मानं क्लेशयतः ॥६॥ सर्वः शरीरी लोकः वृता छन्ना अनवबोधेन अज्ञानेन ॥ ७ ॥ नैर्ऋतानां राक्षसानाम् । प्रतिकूलानि बाधनानि ॥ ८ ॥ चित्तबुद्धिहराः । चित्तं आलोचनव्यापारः बुद्धिरध्यवसायव्यापारः ॥ ९ ॥ रैवतो राजा गीतासक्तेन चित्तेन कालं नावबुध्यत ततो वैत्यनाम्ना ( ? ) कालेन गीतावसाने मृतदारामात्यो वनं गतः ॥ १० ॥ वृत्तेन आचारेण ॥ १३ ॥ सर्वासवः सर्वेषां प्राणाः प्राप्ताः मिलिताः पञ्चतां पृथक्तां गच्छन्ति ॥ १४ ॥ वैतरणैर्वृक्षैः वृता छन्ना । आवृत्तो दक्षिणायणगतः ॥ १५ ॥ धानिष्ठी धनिष्ठान्तम् ॥ १६ ॥

[ सर्व० ] आत्मावसादिनः पापस्य । धर्मस्य तु प्रागेवोक्तम् । वृताऽऽच्छन्ना ॥ ६ ॥ अनवबोधेन मोहेन ॥ ८ ॥ मन्दरकुञ्जेषु ये गन्धर्वास्ते चित्तं मनो बुद्धिं च हरन्ति ॥ ९ ॥ अत्र यादृश्यो गाथा गीयन्ते तादृशान्येव ब्रह्मसदने सामानि गाथा गीतं च शृण्वतः ककुद्मिनोऽनेकानि युगान्यतिवृत्तानि । तावता कालेन च भूर्लोके दारादयो मृता इत्यागत्य तानपश्यन् वनं गत इत्यर्थः ॥ १० ॥ मर्यादा स्थापिता माऽतः परं सूर्येण दक्षिणायनमप्यतिक्रमणीयमिति ॥ ११ ॥ वृत्तेनाचारेण । तपसा इत्यर्थः । सर्वासवः सर्वेषां प्राणाः मरणानन्तरमत्र प्राप्ताः प्राणादिभेदेन पञ्चधा पुनर्गर्भं गच्छन्ति ॥ १३ ॥ वैतरणैर्वैतरणीनरकगामिभिः प्राणिभिः ॥ १४ ॥ सुखस्यान्तं नाशं भोगेन प्रतिपद्यते । आवृत्तो दक्षिणायनेन । पयो जलं क्षरते दक्षिणायनेन वृष्टिर्भवति ॥ १५ ॥ धानिष्ठां स्रष्टां (?) धनिष्ठामागम्य काष्ठां मकरराशिस्थ इत्यर्थः । अथवा धनदो धनिष्ठः तस्य काष्ठां निष्ठां काष्ठाम् ॥ १६ ॥

---

६ ख. निशाम्यते । ख. कर्मणात्मावसादिनः । १५ ज. धानिष्ठां ।

लब्धवान्युध्यमानौ द्वौ बृहन्तौ गजकच्छपौ ।
अत्र चक्रधनुर्नाम सूर्याज्जातो महानृषिः ॥ १७ ॥
विदुर्यं कपिलं देवं येनार्त्ताः सगरात्मजाः ।
अत्र सिद्धाः शिवा नाम ब्राह्मणा वेदपारगाः ॥१८॥
अधीत्य सकलान्वेदाँल्लेभिरे मोक्षमक्षयम् ।
अत्र भोगवती नाम पुरी वासुकिपालिता ॥ १९ ॥
तक्षकेण च नागेन तथैवैरावतेन च ।
अत्र निर्याणकालेऽपि तमः संप्राप्यते महत् ॥२०॥
अभेद्यं भास्करेणापि स्वयं वा कृष्णवर्त्मना ।
एष तस्यापि ते मार्गः परिचार्यस्य गालव ।
ब्रूहि मे यदि गन्तव्यं प्रतीचीं शृणु चापराम् ॥२१॥

इति श्रीमहाभारते उद्योगपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

## दशाधिकशततमोऽध्यायः ११०

पश्चिमाया वर्णनम् ॥ १ ॥

**सुपर्ण उवाच—**

इयं दिग्दयिता राज्ञो वरुणस्य तु गोपतेः ।
सदा सलिलराजस्य प्रतिष्ठा चादिरेव च ॥ १ ॥
अत्र पश्चादहः सूर्यो विसर्जयति गाः स्वयम् ।
पश्चिमेत्यभिविख्याता दिगियं द्विजसत्तम ॥ २ ॥
यादसामत्र राज्येन सलिलस्य च गुप्तये ।
कश्यपो भगवान् देवो वरुणं स्माभ्यषेचयत् ॥ ३ ॥
अत्र पीत्वा समस्तान्वै वरुणस्य रसांस्तु षट् ।
जायते तरुणः सोमः शुक्लस्यादौ तमिस्रहा ॥ ४ ॥
अत्र पश्चात्कृता दैत्या वायुना संयतास्तदा ।
निःश्वसन्तो महावातैरर्दिताः सुषुपुर्द्विज ॥ ५ ॥
अत्र सूर्यं प्रणयिनं प्रतिगृह्णाति पर्वतः ।
अस्तो नाम यतः संध्या पश्चिमा प्रतिसर्पति ॥ ६ ॥
अतो रात्रिश्च निद्रा च निर्गता दिवसक्षये ।
जायते जीवलोकस्य हर्तुमर्धमिवायुषः ॥ ७ ॥
अत्र देवीं दितिं सुप्तामात्मप्रसवधारिणीम् ।
विगर्भामकरोच्छक्रो यत्र जातो मरुद्गणः ॥ ८ ॥
अत्र मूलं हिमवतो मन्दरं याति शाश्वतं ।
अपि वर्षसहस्रेण न चास्यान्तोऽधिगम्यते ॥ ९ ॥

[ लक्षा० ] अत्र गत्वा सुखस्यान्तं दुःखस्यान्तमित्यत्र सुखस्य अन्तं प्रदेशं प्रपद्यते ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षाभरणे नवाधिकशततमोऽध्यायः ॥ १०९ ॥

[ नील० ] निर्याणकाले मरणकाले तमः आन्ध्यम् ॥ २० ॥ तस्य ते तव परिचार्यस्य सेव्यस्य ॥ २१ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे नवाधिकशततमोऽध्यायः ॥ १०९ ॥

[ अर्जु० ] अत्ताः जग्धाः ॥१८॥ वेद्यं ज्ञेयम् ॥१९॥ निर्याणकालेषु मरणसमयेषु । तमोऽज्ञानम् ॥ २० ॥ कृष्णवर्त्मना वह्निना एतस्यापि परिधार्यस्यापि यज्ञस्य मार्गस्तवोक्त इति शेषः ॥ २१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि नवाधिकशततमोऽध्यायः ॥ १०९ ॥

[ सर्व० ] निर्याणकाले मृत्युकाले तमोऽन्धकारं नरकेषु ॥ २० ॥ एषोऽपि मार्गस्तस्य परिचार्यस्यान्वेषणस्य ॥ २१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां नवाधिकशततमोऽध्यायः ॥ १०९ ॥

[ नील० ] गोपतेः सूर्यस्य प्रतिष्ठेति संबन्धः ॥ १ ॥ एतदेवाह—पश्चादह इति । अह्नः पश्चाद्भागे गाः रश्मीन् विसर्जयति अत एव पश्चिमा अन्तिमेत्यर्थः ॥ २ ॥ पश्चात्कृताः विमुखीकृताः संयताः सन्नद्धाः सन्तः ॥ ५ ॥ अर्धमायुषो हर्तुं निद्रया व्ययीकर्तुमित्यर्थः ॥ ७ ॥ मन्दरं समुद्रे मग्नमेतेन हिमवन्मूलस्य समुद्रजलस्य चाप्रमेयत्वमुक्तम् ॥ ९ ॥

[ अर्जु० ] गोपतेर्जलेशस्य प्रतिष्ठानम् ॥ १ ॥ पश्चात् पश्चिमगिरौ अहर्भांसु विसर्जयतीत्यन्वयः ॥ २ ॥ अयं सूर्यः रसांश्च षट् अमृतं शुक्लस्य शुक्लपक्षस्य ॥ ४ ॥ पश्चात्कृता जिताः ॥ ५ ॥ मूलं जटा ॥ ९ ॥

[ सर्व० ] प्रतिष्ठा स्थितिभूमिः ॥ १ ॥ पश्चादहोऽह्नः पश्चाद्भागे भाः भासो विसर्जयतीति ॥ २ ॥ पश्चात्कृताः वेगेन पृष्ठतः कृताः ॥ ५ ॥ आत्मप्रसवो गर्भः ॥ ८ ॥ मूलं मूलभूमिसन्निकृष्टो भागः । अन्तोऽधःसीमा ॥ ९ ॥

[ लक्षा० ] अत्र रात्रिश्च निद्राचेत्यत्र निर्गता पश्चिम-

२१ ख. परिवासस्य । ख. शृणु वा मम । इति नवाधिकशततमो० ॥१०९॥

२ ख. भाः स्वयम् । ५ म. निःश्वसन्तो यथानागैरर्दिताः । ९ म. °धिगच्छति ।

अत्र काञ्चनशैलस्य काञ्चनाम्बुरुहस्य च ।
उदधेस्तीरमासाद्य सुरभिः क्षरते पयः ॥ १० ॥
अत्र मध्ये समुद्रस्य कबन्धः प्रतिदृश्यते ।
स्वर्भानोः सूर्यकल्पस्य सोमसूर्यौ जिघांसतः ॥११॥
सुवर्णशिरसोऽप्यत्र हरिरोम्णः प्रगायतः ।
अदृश्यस्याप्रमेयस्य श्रूयते विपुलो ध्वनिः ॥ १२ ॥
अत्र ध्वजवती नाम कुमारी हरिमेधसः ।
आकाशे तिष्ठतिष्ठेति तस्थौ सूर्यस्य शासनात् ॥१३॥
अत्र वायुस्तथा वह्निरापः खं चापि गालव ।
आह्निकं चैव नैशं च दुःखं स्पर्शं विमुञ्चति ॥१४॥
अतःप्रभृति सूर्यस्य तिर्यगावर्त्तते गतिः ।
अत्र ज्योतींषि सर्वाणि विशन्त्यादित्यमण्डलम् १५
अष्टाविंशतिरात्रं च चङ्क्रम्य सह भानुना ।
निष्पतन्ति पुनः सूर्यात्सोमसंयोगयोगतः ॥ १६ ॥
अत्र नित्यं स्रवन्तीनां प्रभवः सागरोदयः ।
अत्र लोकत्रयस्यापस्तिष्ठन्ति वरुणालये ॥ १७ ॥
अत्र पन्नगराजस्याप्यनन्तस्य निवेशनम् ।
अनादिनिधनस्यात्र विष्णोः स्थानमनुत्तमम् ॥१८॥
अत्रानलसखस्यापि पवनस्य निवेशनम् ।
महर्षेः कश्यपस्यात्र मारीचस्य निवेशनम् ॥ १९ ॥
एष ते पश्चिमो मार्गो दिग्द्वारेण प्रकीर्तितः ।
ब्रूहि गालव गच्छावो बुद्धिः का द्विजसत्तम ॥२०॥

इति श्रीमहाभारते उद्योगपर्वणि दशाधिकशततमोऽध्यायः ॥ ११० ॥

---

दिक्ङ्मध्यादुत्थिता ॥ ७ ॥ अत्र मूलं हि मरुत इत्यत्र अत्र दिशि मरुतः वायोः मूलमुत्पत्तिस्थानमस्ति ॥ ९ ॥

[ नील० ] काञ्चनमयानि अम्बुरुहाणि यत्र तस्य उदधेः समुद्रतुल्यस्य सरसः ॥ १० ॥ सुवर्णशिरसो मुनेः हरिरोम्णः अपलितस्य नित्यतरुणस्येत्यर्थः ॥ १२ ॥ हरिमेधसो मुनेः कुमारी तिष्ठ तिष्ठेति सूर्यस्य शासनात् ॥ १३ ॥ अत्र वायुरिति वाय्वादयोऽत्र दुःखदं शीतोष्णस्पर्शं विमुञ्चन्ति सदा सुखसंस्पर्शा एवेत्यर्थः ॥ १४ ॥ अतः प्रभृतीति मेरुं प्रदक्षिणीकुर्वन्सूर्यः सर्वदा तिर्यग्गतिरेव सन् लोकदृष्टया उपर्यधश्च गच्छतीत्येव भाति । अतःपरं लोकदृष्ट्यभावात्तिर्यगेवावर्त्तत इत्यर्थः । आदित्यमण्डलं कर्तृ ज्योतींष्यग्न्यादीन् विशति । आदित्यो वा अस्तं यन्नग्निमनुप्रविशतीति श्रुतेः । नक्षत्रादीन्यपि अम्मयत्वादप्रकाशानि आदित्यप्रभयैव भासन्ते रात्रौ दिवा तु तयैव तिरोभवन्तीति प्रसिद्धिः ॥ १५ ॥ अष्टेति अष्टाविंशतितमे दिने एकैकं नक्षत्रं भानुना चन्द्रेण सह संक्रम्य एकोनत्रिंश्यां रात्रौ निष्पतति बहिर्निर्गच्छति चन्द्रादेव पुनस्तद्वत् सोमसंयोगसदृशेन योगेन संबन्धेन सूर्येण सहापि संक्रम्य काले निष्पतन्तीत्यर्थः । एवं चन्द्रवत् सर्वेषामपि नक्षत्राणां सर्वग्रहयोगस्तुल्यः ॥ १६ ॥ स्रवन्तीनां नदीनां सागरस्य उदयः पूर्त्तिर्येन तादृशः प्रभवः ॥ १७ ॥ दिग्द्वारेण संक्षेपप्रकारेण ते तव ॥ २० ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे दशाधिकशततमोऽध्यायः ॥ ११० ॥

[ अर्जु० ] सुवर्णशिरसो मुनेः हरिरोम्णः हरिततनूरुहस्य ॥ १२ ॥ वाय्वादिर्दुःखस्पर्शं विमुञ्चति ॥ १४ ॥ अष्टाविंशति नक्षत्राणि सपादनक्षत्रद्वययोगे द्वादश राशयः । चन्द्रोऽपि क्षीणो नक्षत्राण्यपि तथा भवन्ति । पीतसोमानुसारेण सोमेन सह निर्गच्छन्ति ॥ १६ ॥ स्रवन्तीनां नदीनां प्रभवो मेघमुखेन ॥ १७ ॥

इति श्रीमहाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि दशाधिकैशततमोऽध्यायः ॥ ११० ॥

[ सर्व० ] कांचनाम्बुवहस्योदधेर्जलस्थानमात्रस्य जंबूनदीरूपस्य ॥ ११ ॥ सुवर्णशिरसो मुनेः हरिमेधसो मुने- ॥ १२ ॥ तिष्ठ तिष्ठेति सूर्यस्य शासनात् ॥ १३ ॥ अत्र वाय्वादिचतुष्टयं दुःखस्य स्पर्शं संबन्धं विमुञ्चति जनयतिः आह्निकमहःसंबन्धिकाले । एवं नैशमिति सर्वदेत्यर्थः ॥१४॥ ज्योतींष्यश्विन्यादिनक्षत्राणि ॥ १५ ॥ अष्टाविंशतिरात्रे। ष्टाविंशतितमे दिने । निष्पतन्त्येकं दिनं चन्द्रेण युक्ता । न सूर्येण युज्यन्ते । तदाह सोमसंयोगयोगत इति । अमावास्यानक्षत्रं तु सोमसंग्रामेऽपि सूर्येण वियुज्यते इति शेषः ॥ १६ ॥ सागरस्योदय उद्भवः ॥ २० ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां दशाधिकशततमोऽध्यायः ॥ ११० ॥

[ लक्षा० ] अतः प्रभृतिसूर्यस्येत्यत्र तिर्यक् मेरोरुत्तरभागे ॥ १५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे दशाधिकशततमोऽध्यायः ॥ ११० ॥

---

१६ म. सोमयोगेन योगिनः । १७ म. वरुणाश्रयाः । इति दशाधिकशततमोऽध्यायः ॥ ११० ॥

## एकादशाधिकशततमोऽध्यायः १११

उदीचीवर्णनम् ॥ १ ॥

**सुपर्ण उवाच—**

यस्मादुत्तार्यते पापाद्यस्मान्निःश्रेयसोऽश्नुते ।
अस्मादुत्तारणबलादुत्तरेत्युच्यते द्विज ॥ १ ॥
उत्तरस्य हिरण्यस्य परिवापश्च गालव ।
मार्गः पश्चिमपूर्वाभ्यां दिग्भ्यां वै मध्यमः स्मृतः॥२॥
अस्यां दिशि वरिष्ठायामुत्तरायां द्विजर्षभ ।
नासौम्यो नाविधेयात्मा नाधर्मो वसते जनः ॥ ३ ॥
अत्र नारायणः कृष्णो जिष्णुश्चैव नरोत्तमः ।
बदर्यामाश्रमपदे तथा ब्रह्मा च शाश्वतः ॥ ४ ॥
अत्र वै हिमवत्पृष्ठे नित्यमास्ते महेश्वरः ।
प्रकृत्या पुरुषः सार्धं युगान्ताग्निसमप्रभः ॥ ५ ॥
न स दृश्यो मुनिगणैस्तथा देवैः सवासवैः ।
गन्धर्वयक्षसिद्धैर्वा नरनारायणादृते ॥ ६ ॥
अत्र विष्णुः सहस्राक्षः सहस्रचरणोऽव्ययः ।
सहस्रशिरसः श्रीमानेकः पश्यति मायया ॥ ७ ॥
अत्र राज्येन विप्राणां चन्द्रमाश्चाभ्यषिच्यत ।
अत्र गङ्गा महादेवः पतन्तीं गगनाच्च्युताम् ॥ ८ ॥
प्रतिगृह्य ददौ लोके मानुषे ब्रह्मवित्तम ।
अत्र देव्या तपस्तप्तं महेश्वरपरीप्सया ॥ ९ ॥
अत्र कामश्च रोषश्च शैलश्चोमा च संबभुः ।
अत्र राक्षसयक्षाणां गन्धर्वाणां च गालव ॥ १० ॥
आधिपत्येन कैलासे धनदोऽप्यभिषेचितः ।
अत्र चैत्ररथं रम्यमत्र वैखानसाश्रमः ॥ ११ ॥
अत्र मन्दाकिनी चैव मन्दरश्च द्विजर्षभ ।
अत्रसौगन्धिकवनं नैर्ऋतैरभिरक्ष्यते ॥ १२ ॥
शाद्वलं कदलीस्कन्धमत्र संतानका नगाः ।
अत्र संयमनित्यानां सिद्धानां स्वैरचारिणाम्॥१३॥
विमानान्यनुरूपाणि कामभोग्यानि गालव ।
अत्र ते ऋषयः सप्त देवी चारुन्धती तथा ॥ १४ ॥
अत्र तिष्ठति वै स्वातिरत्रास्या उदयः स्मृतः ।
अत्र यज्ञं समासाद्य ध्रुवं स्थाता पितामहः ॥ १५॥
ज्योतींषि चन्द्रसूर्यौ च परिवर्तन्ति नित्यशः ।
अत्र गङ्गामहाद्वारं रक्षन्ति द्विजसत्तम ॥ १६ ॥
धामा नाम महात्मानो मुनयः सत्यवादिनः ।
न तेषां ज्ञायते मूर्तिर्नाकृतिर्न तपश्चितम् ॥ १७ ॥

---

[ नील० ] यस्मादिति । उत्तरेण पथा गतानां हि पापनाशः स्वर्गप्राप्तिश्च भवतीति योगादुत्तरा उत्कृष्टतरा इयं दिगित्यर्थः ॥ १ ॥ परिवापः स्थानं हिरण्यस्य निधीनामित्यर्थः उत्तरं यन्निधिस्थानं ततः स्वर्गमार्गः दिग्भ्यामुपलक्षितो मध्यमो ज्ञेय इति भावः ॥ २ ॥ अविधेयात्मा अजितचित्तः ॥ ३ ॥ प्रकृत्या उमया ॥ ५ ॥ न सः मायाविष्टोऽपि न दृश्यो दर्शनार्हः किमुत मायारहितः शुद्धचिन्मात्रः ॥ ६ ॥ सहस्रशिरस इत्यकारान्तः शब्दः मायया उपेतमिति शेषः । वस्तुतोऽस्य प्रत्यगात्मत्वेन द्रष्टृदृश्यभावादिति भावः सगुणब्रह्मभावप्राप्तिपूर्विकैव निर्गुणप्राप्तिरिति प्रघट्टकार्थः । यथोक्तम् । सोपाधिर्निरुपाधिश्च द्वेधा ब्रह्मविदुच्यते । सोपाधिकः स्यात्सर्वात्मा निरुपाख्योऽनुपाधिक इति । एतच्च सम्यग्व्युत्पादितमस्माभिर्वेदान्तकतके ॥ ७ ॥ शाद्वलं जम्बालं देवताभेदः कदली वैजयन्ती पताका तस्याः स्कन्धवदुच्छ्रितम् । अथ कदली पताकामृगभेदयोरिति मेदिनी । नगाः वृक्षाः कल्पद्रुमाः संयमो धारणाध्यानादिभिर्नित्यो न त्याज्यो येषां तेषाम् ॥ १३ ॥ गङ्गामहाद्वारमित्यत्र गायन्तिकाद्वारमिति पाठे गायन्तिका बिलविशेषः॥ १६ ॥ मूर्त्तिः पिण्डः आकृतिः संस्थानविशेषः ॥ १७ ॥

[ अर्जु० ] परिवापस्य विस्तारस्य ॥२॥ अविधेयात्मा अजितेन्द्रियः ॥ ३ ॥ संबभुः शुशुभिरे । गान्धारं मोक्षमार्गम् ॥१०॥ चितिर्यज्ञादि; कृतिरिति वा पाठः ॥१७॥

[ सर्व० ] उत्तरस्य रम्यस्य परिवापस्य स्थानस्य मार्गो गमनदिक् पश्चिमपूर्वाभ्यां दिग्भ्याम् पश्चिमपूर्वयोर्मध्यगो मध्यमः ॥ २ ॥ प्रकृत्या प्रकृतिरूपया उमया सार्धं युगान्ताग्निना तृतीयेन रूपेण परिष्कृतः अलंकृतः ॥ ५ ॥ गायंतिकाद्वारं गायन्तिकाख्यबिलविशेषस्य द्वारं न कृतिः सदाचारक्रिया ॥ १७ ॥

[ लक्षा० ] शैलो मैनाकः ॥ १० ॥ नाकृतिर्न तु पश्चिममित्यत्र पश्चिमः पृष्ठभागः ॥ १७ ॥

इति श्रीम० उ० वा० कृ० ल० एकादशाधिकशततमोऽध्यायः ॥१११॥

---

१ म. °त्युच्यते बुधैः । ३ म. नासमो १६ म. अत्र गायन्तिकाद्वारं । म. सत्तमाः । १७ अ. सूतिर्न कृति°

परिवर्तः सहस्राणि कामभोज्यानि गालव ।
यथा यथा प्रविशति तस्मात्परतरं नरः॥ १८ ॥
तथा तथा द्विजश्रेष्ठ प्रविलीयति गालव ।
नैतत्केनचिदन्येन गतपूर्वं द्विजर्षभ ॥ १९ ॥
ऋते नारायणं देवं नरं वा जिष्णुमव्ययम् ।
अत्र कैलासमित्युक्तं स्थानमैलविलस्य तत् ॥ २० ॥
अत्र विद्युत्प्रभा नाम जज्ञिरेऽप्सरसो दश ।
अत्र विष्णुपदं नाम क्रमता विष्णुना कृतम्॥२१॥
त्रिलोकविक्रमे ब्रह्मन्नुत्तरां दिशमाश्रितम् ।
अत्र राज्ञा मरुत्तेन यज्ञेनेष्टं द्विजोत्तम ॥ २२ ॥
उशीरबीजे विप्रर्षे यत्र जाम्बूनदं सरः ।
जीमूतस्यात्र विप्रर्षेरुपतस्थे महात्मनः ॥ २३ ॥
साक्षाद्धैमवतः पुण्यो विमलः कनकाकरः ।
ब्राह्मणेषु च यत्कृत्स्नं स्वन्तं कृत्वा धनं महत् ॥२४॥
वव्रे धनं महर्षिः स जैमूतं तद्धनं ततः ।
अत्र नित्यं दिशां पालाः सायंप्रातर्द्विजर्षभ ॥२५॥
कस्य कार्यं किमिति वै परिक्रोशन्ति गालव ।
एवमेषा द्विजश्रेष्ठ गुणैरन्यैर्दिगुत्तरा ॥ २६ ॥
उत्तरेति परिख्याता सर्वकर्मसु चोत्तरा ।
एता विस्तरशस्तात तव संकीर्तिता दिशः ॥ २७ ॥
चतस्रः क्रमयोगेन कामाशां गन्तुमिच्छसि ।
उद्यतोऽहं द्विजश्रेष्ठ तव दर्शयितुं दिशः ।
पृथिवीं चाखिलां ब्रह्मंस्तस्मादारोह मां द्विज ॥२८॥

इति श्रीमहाभारते उद्योगपर्वणि एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

## द्वादशाधिकशततमोऽध्यायः ११२

गरुडाज्ञया तमारुह्य प्राचीं दिशं गच्छतो गालवस्य गरुडवेगेन समुद्रस्वनश्रवणेन च वैक्लव्यम् ॥ १ ॥ गरुडेन तमाश्वास्य ऋषभाख्यपर्वते विश्रामः ॥ २ ॥

गालव उवाच—

गरुत्मन् भुजगेन्द्रारे सुपर्ण विनतात्मज ।
नय मां तार्क्ष्य पूर्वेण यत्र धर्मस्य चक्षुषी ॥ १ ॥
पूर्वमेतां दिशं गच्छ या पूर्वं परिकीर्तिता ।
देवतानां हि सान्निध्यमत्र कीर्तितवानसि ॥ २ ॥
अत्र सत्यं च धर्मश्च त्वया सम्यक् प्रकीर्तितः ।
इच्छेयं तु समागन्तुं समस्तैर्दैवतैरहम् ।
भूयश्च तान्सुरान्द्रष्टुमिच्छेयमरुणानुज ॥ ३ ॥

नारद उवाच—

तमाह विनतासूनुरारोहस्वेति वै द्विजम् ।
आरुरोहाथ स मुनिर्गरुडं गालवस्तदा ॥ ४ ॥

गालव उवाच—

क्रममाणस्य ते रूपं दृश्यते पन्नगाशन ।
भास्करस्येव पूर्वाह्णे सहस्रांशोर्विवस्वतः ॥ ५ ॥

---

[ नील० ] परिवर्त्तो गतागतं सहस्राणि सत्रेऽन्नपरिवेषणपात्राणि कामभोज्यानि च न ज्ञायन्ते स्थूलदृष्टिभिरित्यर्थः तस्मात् हिमस्थानात् ॥ १८ ॥ प्रविलीयति हिमेन नश्यति ॥ १९ ॥ ऐलविलस्य कुबेरस्य ॥ २० ॥ उशीरबीजे स्थाने ॥ २३ ॥ कनकाकरः जीमूतस्य उपसमीपे तस्थे प्रकाशं गतः । प्रकाशनस्थेयाख्ययोश्चेति तङ् ॥ २४ ॥ वव्रे ब्राह्मणेभ्यः मन्नामकमेतदस्त्विति ॥ २५ ॥ उत्तरा उत्कृष्टतरा ॥ २६ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकादशाधिकशततमोऽध्यायः॥१११॥

[ अर्जु० ] परिवर्तो युगम् ॥ १८ ॥ प्रविलीयति विनश्यति ॥ १९ ॥ उशीरबीजस्थाने जम्बूनदं सरः ॥ २३ ॥ स्वन्तं स्वायत्तम् ॥ २४ ॥ कर्मसु चोत्तरा प्रधानम् ॥२७॥

इति श्रीम० मर्जुन० उद्यो० एकादशाधिकशततमोऽध्यायः ॥१११॥

[ सर्व० ] परिवर्तो युगान्तः ॥ १८ ॥ प्रविलीयति नश्यति ॥ १९ ॥ उशीरबीजे स्थाने जीमूतस्य उप समीपे तस्थौ ॥ २३ ॥ हैमवतः कनकाकरः । स्वंतं शोभनफलं दत्तमित्यर्थः ॥ २४ ॥ वव्रे ब्राह्मणेभ्यः मन्नामकमेतदस्त्विति ॥ २५ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामेकादशाधिकशततमोऽध्यायः॥ १११ ॥

[ नील० ] गरुत्मन्निति । पूर्वेण पूर्वस्यां दिशि चक्षुषी अग्नीषोमौ ॥ १ ॥ समागन्तुं एकीभवितुम् ॥ ३ ॥ सहस्रांशोर्विवस्वत इति पक्षवातानुगामिनां गरुडप्रभयाऽवभासितानां वृक्षाणामंशुसाम्यं निरावरणत्वं चाभिप्रेत्य विशेषणद्वयम् । एतच्च वाक्यशेषाद्व्यक्तं भविष्यति । वस आच्छादनेऽस्मात् क्विपि वः वस्त्रादि तद्वान् वस्वान् तद्विपरीतो विवस्वानित्यर्थः ॥ ५ ॥

---

२५ म० द्विजोत्तम एकादशाधिकशततमोऽध्यायः ॥ १११ ॥

पक्षवातप्रणुन्नानां वृक्षाणामनुगामिनाम् ।
प्रस्थितानामिव समं पश्यामीह गतिं खग ॥ ६ ॥
ससागरवनामुर्वी सशैलवनकाननाम् ।
आकर्षन्निव चाभासि पक्षवातेन खेचर ॥ ७ ॥
समीननागनक्रं च खमिवारोप्यते जलम् ।
वायुना चैव महता पक्षवातेन चानिशम् ॥ ८ ॥
तुल्यरूपाननान्मत्स्यांस्तथा तिमितिमिङ्गिलान् ।
नागाश्वनरवक्त्रांश्च पश्याम्युन्मथितानिव ॥ ९ ॥
महार्णवस्य च रवैः श्रोत्रे मे बधिरे कृते ।
न शृणोमि न पश्यामि नात्मनो वेद्मि कारणम् १०
शनैः स तु भवान्यातु ब्रह्मवध्यामनुस्मरन् ।
न दृश्यते रविस्तात न दिशो न च खं खग॥११॥
तम एव तु पश्यामि शरीरं ते न लक्षये ।
मणी व जात्यौ पश्यामि चक्षुषी तेऽहमण्डज॥१२॥
शरीरं तु न पश्यामि तव चैवात्मनश्च ह ।
पदे पदे तु पश्यामि शरीरादग्निमुत्थितम् ॥ १३ ॥
स मे निर्वाप्य सहसा चक्षुषी शाम्यते पुनः ।
तन्नियच्छ महावेगं गमने विनतात्मज ॥ १४ ॥

न मे प्रयोजनं किंचिद्गमने पन्नगाशन ।
संनिवर्त महाभाग न वेगं विषहामि ते ॥ १५ ॥
गुरवे संश्रुतानीह शतान्यष्टौ हि वाजिनाम् ।
एकतः श्यामकर्णानां शुभ्राणां चन्द्रवर्चसाम् ॥१६॥
तेषां चैवापवर्गाय मार्गं पश्यामि नाण्डज ।
ततोऽयं जीवितत्यागे दृष्टो मार्गो मयाऽऽत्मनः ॥१७॥
नैव मेऽस्ति धनं किंचिन्न धनेनान्वितः सुहृत् ।
न चार्थेनापि महता शक्यमेतद्व्यपोहितुम् ॥ १८ ॥

नारद उवाच—

एवं बहु च दीनं च ब्रुवाणं गालवं तदा ।
प्रत्युवाच व्रजन्नेव प्रहसन्विनतात्मजः ॥ १९ ॥
नातिप्रज्ञोऽसि विप्रर्षे योऽऽत्मानं त्यक्तुमिच्छसि ।
न चापि कृत्रिमः कालः कालो हि परमेश्वरः॥२०॥
किमहं पूर्वमेवेह भवता नाभिचोदितः ।
उपायोऽत्र महानस्ति येनैतदुपपद्यते ॥ २१ ॥
तदेष ऋषभो नाम पर्वतः सागरान्तिके ।
अत्र विश्रम्य भुक्त्वा च निवर्तिष्याव गालव ॥२२॥

इति श्रीमहाभारते उद्योगपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

---

[ नील० ] खमिवारोप्यते खेऽवस्थाप्यत इव ॥ ८ ॥ रवैः शब्दैः कारणं प्रयोजनमपि न वेद्मि न स्मरामि ॥ १० ॥ ते तव मणी वेति इवार्थे वशब्दः ॥ १२ ॥ निर्वाप्य मन्दीकृत्य ॥ १४ ॥ संनिवर्त निवर्तस्व ॥ १५ ॥ योऽऽत्मानं सन्धिरार्षः कृत्रिमः स्वेच्छासंपाद्यः कालो मृत्युः ॥ २० ॥ निवर्त्तिष्यावेत्यार्षस्तङोऽभावः ॥ २२ ॥

इति श्रीनैलकण्ठीये उद्योगपर्वणि भारतभावदीपे द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

[ अर्जु० ] आत्मनः कारणं बाधिर्यादि ॥ १० ॥ मणीव मणीवादीनामुपसंख्यानमिति संधिः इवार्थे वा वशब्दः ॥ १२ ॥ स मे सोऽग्निः मम चक्षुषी निर्वाप्य शाम्यति निर्वाति ॥ १४ ॥ अपवर्गाय दानाय ॥ १७ ॥ एतद् दक्षिणादानं व्यपोहितुं संपादयितुम् ॥ १८ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

[ सर्व० ] आत्मनः शरीरस्य कारणं जीवात्मानम् ॥ १० ॥ ब्रह्मवध्यामनुस्मरन् शङ्कमानो मद्वधेन ॥ ११ ॥ सोऽग्निश्चक्षुषी निर्वाप्य मन्दीकृत्य शाम्यते निर्वाति ॥ १४ ॥ दृष्टो मार्गः सागरपतनरूपः ॥ १७ ॥ कृत्रिमः कृत्यधीनः । कालो नाशकालः परमेश्वर एव । तस्मान्न स्वेच्छया मरणमपि संभवतीत्यर्थः ॥ २० ॥ नाभिचोदितः गुरुदक्षिणानिमित्तम् । उपायो हि तस्य तत्रैवाऽस्ति ॥२१॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां द्वादशाधिकशततमोऽध्यायः ॥ ११२ ॥

[ लक्षा० ] स मे निर्वास्य सहसा चक्षुषी इत्यत्र सः अग्निः मे चक्षुषी निर्वास्य निर्मस्य ॥ १४ ॥ गुरवे मच्छ्रुतानीहेत्यत्र मच्छ्रुतानि मया प्रतिश्रुतानि प्रतिज्ञातानीत्यर्थः ॥ १६ ॥ तेषां चैवापवर्गायेत्यत्र अपगतो वर्गो वर्जनं यस्मात्सः अपवर्गः आर्जनमित्यर्थः तस्मै ॥ १७ ॥ न चापि कृत्रिमः काल इत्यत्र कृत्रिमः कृतलक्षलवादिः । किमिदं पूर्वमेवेदमित्यत्र इदं गुरवे अश्वदानप्रतिश्रुतम् ॥ २० ॥

इति श्रीमहा०उद्यो०वा०ती०ल० द्वादशाधिकशततमोऽध्यायः ॥११२॥

## त्रयोदशाधिकशततमोऽध्यायः ११३

ऋषभशृङ्गे शाण्डिल्याया आश्रमे भुक्त्वा सुप्तयोस्तयोर्गरुडस्य पक्षभ्रंशः ॥ १ ॥ क्षमापितायास्तस्याः प्रसादेन गरुडस्य पुनः पक्षप्राप्तिः ॥ २ ॥

**नारद उवाच—**

ऋषभस्य ततः शृङ्गं निपत्य द्विजपक्षिणौ ।
शाण्डिलीं ब्राह्मणीं तत्र ददृशाते तपोन्विताम् ॥१॥
अभिवाद्य सुपर्णस्तु गालवश्चाभिपूज्य ताम् ।
तया च स्वागतेनोक्तौ विष्टरे संनिषीदतुः ॥ २ ॥
सिद्धमन्नं तया दत्तं बलिमन्त्रोपबृंहितम् ।
भुक्त्वा तृप्तावुभौ भूमौ सुप्तौ तावनुमोहितौ ॥ ३ ॥
मुहूर्तात्प्रतिबुद्धस्तु सुपर्णो गमनेप्सया ।
अथ भ्रष्टतनूजाङ्गमात्मानं ददृशे खगः ॥ ४ ॥
मांसपिण्डोपमोऽभूत्स मुखपादान्वितः खगः ।
गालवस्तं तथा दृष्ट्वा विमनाः पर्यपृच्छत ॥ ५ ॥
किमिदं भवता प्राप्तमिहागमनजं फलम् ।
वासोऽयमिह कालं तु कियन्तं नौ भविष्यति ॥६॥
किं नु ते मनसा ध्यातमशुभं धर्मदूषणम् ।
नह्ययं भवतः स्वल्पो व्यभिचारो भविष्यति ॥७॥
सुपर्णोऽथाब्रवीद्विप्रं प्रध्यातं वै मया द्विज ।
इमां सिद्धामितो नेतुं तत्र यत्र प्रजापतिः ॥ ८ ॥
यत्र देवो महादेवो यत्र विष्णुः सनातनः ।
यत्र धर्मश्च यज्ञश्च तत्रेयं निवसेदिति ॥ ९ ॥
सोऽहं भगवतीं याचे प्रणतः प्रियकाम्यया ।
मयैतन्नाम प्रध्यातं मनसा शोचता किल ॥ १० ॥
तदेवं बहुमानात्ते मयेहानीप्सितं कृतम् ।
सुकृतं दुष्कृतं वा त्वं माहात्म्यात्क्षन्तुमर्हसि ॥११॥
सा तौ तदाऽब्रवीत्तुष्टा पतगेन्द्रद्विजर्षभौ ।
न भेतव्यं सुपर्णोऽसि सुपर्ण त्यज संभ्रमम् ॥१२॥
निन्दिताऽस्मि त्वया वत्स न च निन्दां क्षमाम्यहम् ।
लोकेभ्यः सपदि भ्रश्येद्यो मां निन्देत पापकृत् ॥१३॥
हीनयाऽलक्षणैः सर्वैस्तथाऽनिन्दितया मया ।
आचारं प्रतिगृह्णन्त्या सिद्धिः प्राप्तेयमुत्तमा ॥१४॥
आचारः फलते धर्ममाचारः फलते धनम् ।
आचाराच्छ्रियमाप्नोति आचारोहन्त्यलक्षणम् ॥१५॥
तदायुष्मन् खगपते यथेष्टं गम्यतामितः ।
न च ते गर्हणीयाऽहं गर्हितव्याः स्त्रियः क्वचित् ॥१६॥
भवितासि यथापूर्वं बलवीर्यसमन्वितः ।
बभूवतुस्ततस्तस्य पक्षौ द्रविणवत्तरौ ॥ १७ ॥
अनुज्ञातस्तु शाण्डिल्या यथागतमुपागमत् ।
नैव चासादयामास तथारूपांस्तुरङ्गमान् ॥ १८ ॥
विश्वामित्रोऽथ तं दृष्ट्वा गालवं चाध्वनि स्थितः ।
उवाच वदतां श्रेष्ठो वैनतेयस्य सन्निधौ ॥ १९ ॥
यस्त्वया स्वयमेवार्थः प्रतिज्ञातो मम द्विज ।
तस्य कालोऽपवर्गस्य यथा वा मन्यते भवान् ॥२०॥
प्रतीक्षिष्याम्यहं कालमेतावन्तं तथा परम् ।
यथा संसिद्ध्यते विप्र स मार्गस्तु निशम्यताम् ॥२१॥
सुपर्णोऽथाब्रवीदीनं गालवं भृशदुःखितम् ।
प्रत्यक्षं खल्विदानीं मे विश्वामित्रो यदुक्तवान् ॥२२॥
तदागच्छ द्विजश्रेष्ठ मन्त्रयिष्याव गालव ।
नादत्त्वा गुरवे शक्यं कृत्स्नमर्थं त्वयाऽऽसितुम् ॥२३॥

इति श्रीमहाभारते उद्योगपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

---

[ नील० ] ऋषभस्येति ॥ १ ॥ भ्रष्टतनूजं छिन्नपक्षमङ्गं यस्य तं भ्रष्टतनूजाङ्गम् ॥ ४ ॥ व्यभिचारो धर्मातिक्रमः ॥ ७ ॥ शोचता कथमियमत्र वसतीति ॥ १० ॥ द्रविणवत्तरौ बलवत्तरौ ॥ १७ ॥ अपवर्गस्य फलप्राप्तेः ॥ २० ॥ निशम्यतां विचार्यताम् ॥ २१ ॥ आसितुं स्थातुम् ॥ २३ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

[ अर्जु० ] स्विन्नं स्निग्धम् ॥ ३ ॥ भ्रष्टतनूजाङ्गम् । तनूजं रोम ॥ ४ ॥ कियन्तं कालं वासो नौ आवयोः ॥ ६ ॥ व्यभिचारोऽतिक्रमः ॥ ७ ॥ प्रध्यातं चिन्तितम् ॥ ८ ॥ [ अनयात् अनौचित्यात् ] लक्षणैर्हीनया सर्वैर्जनैर्निन्दितया आचारं शिष्टाचारम् ॥ १४ ॥ [ गर्हिताः कुत्सिताः ] द्रविणं धनं वीर्यं वा ॥ १७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

---

१ म. पृष्ठे द्विजन्मानौ निपत्य तौ । ३ म. सिद्धमन्नं ततः क्षिप्रं । १७ म. ततः पूर्वं । १९ म. ह्यध्वनि स्थितम् । त्रयोदशाधिकशततमोऽध्यायः ॥११३॥

## चतुर्दशाधिकशततमोऽध्यायः ११४

अश्वार्थं धनं याचयितुं सुपर्णेन ययातिं प्रति गालवनयनम् ॥ १ ॥

**नारद उवाच—**

अथाह गालवं दीनं सुपर्णः पततां वरः ।
निर्मितं वह्निना भूमौ वायुना शोधितं तथा ।
यस्माद्धिरण्मयं सर्वं हिरण्यं तेन चोच्यते ॥ १ ॥
धत्ते धारयते चेदमेतस्मात्कारणाद्धनम् ।
तदेतत्त्रिषु लोकेषु धनं तिष्ठति शाश्वतम् ॥ २ ॥
नित्यं प्रोष्ठपदाभ्यां च शुक्रे धनपतौ तथा ।
मनुष्येभ्यः समादत्ते शुक्रश्चित्तार्जितं धनम् ॥ ३ ॥
अजैकपादहिर्बुध्न्यै रक्ष्यते धनदेन च ।
एवं न शक्यते लब्धुमलब्धव्यं द्विजर्षभ ।
ऋते च धनमश्वानां नावाप्तिर्विद्यते तव ॥ ४ ॥
स त्वं याचात्र राजानं कंचिद्राजर्षिवंशजम् ।
अपीड्य राजा पौरान् हि यो नौ कुर्यात्कृतार्थिनौ॥५॥
अस्ति सोमान्ववाये मे जातः कश्चिन्नृपः सखा ।
अभिगच्छावहे तं वै तस्यास्ति विभवो भुवि ॥ ६ ॥
ययातिर्नाम राजर्षिर्नाहुषः सत्यविक्रमः ।
स दास्यति मया चोक्तो भवता चार्थितः स्वयम्॥७॥

---

[ सर्व० ] व्यभिचारो धर्मातिक्रमः । अनयादनौचित्यात् ॥ ७ ॥ शोचता कथमेषा वसतीति ॥ १० ॥

इति श्रीमहा० उद्यो० सर्वज्ञ० त्रयोदशाधिकशततमोऽध्यायः ॥ ११३ ॥

[ लक्षा० ] अथभ्रष्टतनूजाङ्ग इत्यत्र पतत्रं च तनूरुहमित्यभिधानात् तनूजौ पक्षौ ॥ ४ ॥ पक्षौ द्रवणवत्तरावित्यत्र द्रवणं द्रुतगमनमतिशयेन तद्वन्तौ द्रवणवत्तरौ ॥१७॥

इति श्रीमहा०उद्यो०वा०ती०ल०त्रयोदशाधिकशततमोऽध्यायः॥११३॥

[ नील० ] हिरण्यपदप्रवृत्तिनिमित्तमाह—निर्मितमिति । भूम्यन्तर्गतमेवं पार्थिवेषु पांसुषु वह्निना धम्यमानेषु व्यक्तीभवतीति वह्निना निर्मितं वायुना वह्निमुद्दीपयता विशोधितं वायुना वर्धितमित्यपि पाठः सर्वं जगत् हिरण्मयं हिरण्यप्रधानं तेन भूमेः सारत्वात् शुद्धत्वात् सर्वजगन्मोहकत्वाच्च हिरण्यमित्युच्यत इत्यर्थः ॥ १ ॥ धत्ते पुष्णाति धारयते जीवयति ॥ २ ॥ नित्यमिति प्रोष्ठपदाभ्यामिति तृतीया मूलेनावाहयेद्देवीमितिवत्सप्तम्यर्थे । तेन तस्मिन्नक्षत्रद्वये शुक्रे शुक्रवासरे तद्योगे सति शुक्रोऽग्निः धनपतौ कुबेरस्य वृद्ध्यर्थं मनुष्येभ्यः संप्रदानेभ्यः धनं दत्ते ददाति शुक्रश्चित्तार्जितमित्यनेन वह्निरेतस्त्वं तस्य प्रदर्श्यते । शुक्रः काव्येऽनले ज्येष्ठे इति विश्वः । धनार्थी उक्तनक्षत्रवारयोगे वह्निं प्रार्थयेत् तच्च धनं यागादिद्वारा वा भूमौ निखननेन वा सर्वं कुबेरं प्रत्येव गच्छतीति भावः ॥ ३ ॥ अजेति । अजएकपात् पूर्वप्रोष्ठपदादेवता अहिर्बुध्न्य उत्तरप्रोष्ठपदादेवता धनदश्च तदध्यक्षस्तस्मादेतानि प्रार्थयता धनं लब्धुं शक्यं नान्यथेत्यर्थः ॥ ४॥ याच याचस्व यः राजा नौ आवाम् ॥५॥

[ अर्जु० ] वह्निना अग्निना निर्मितं नवेन अग्निमयेन वायुना बोधितं वर्द्धितं वा हि यस्मात् तस्मात् सुवर्णं हिरण्यमुच्यते हिरण्मयमग्निवायुविकारम् ॥ १ ॥ धत्ते पुष्णाति धारयते ऋणं कारयते तस्माद् धनम् ॥ २ ॥ प्रोष्ठपदाभ्यां निधिरक्षकाभ्यां कृतं शुक्रे धनपतौ तिष्ठतीत्यन्वयः । चिन्तार्जितं मनोरथार्जितं ॥ ३ ॥ नौ आवाम् ॥ ५ ॥ अन्ववाये वंशे ॥ ६ ॥

[ सर्व० ] हिर्वह्निबोधिका किंचिदेकाक्षरनाशेनापि निगमदर्शनात् । रणो रमणीयो वायुः । तत्राग्निना जनिते वायुना त्वभिवर्धयता वर्धितं तमिति तत्तन्मयत्वात् । सर्वधनमित्यग्रिमेण संबन्धः हिरण्मयमित्युच्यते । हिरण्यं च सर्वधनं यत्प्रशस्तत्वेऽपि तस्यार्थस्यात्वलाभात् ॥ १ ॥ धत्ते पुष्णाति धारयते जीवति एवं च वाय्वग्निमत्सु त्रिषु लोकेषु धनं तिष्ठत्येव ॥ २ ॥ प्रौष्ठपदयोर्नक्षत्रयोः शुक्रे धनपतौ कु···विवेचयन्ति तया उपयाचितापूर्वमप्यर्जके नष्टे शुक्रे एव । अत्रैवमनेकैराच्छिन्नत्वात् अजश्चव्यं कर्मणा पुरुषकारेण षष्ठे प्राप्तियोग्यता नानीत(?) ॥ ४ ॥ नौ कृतार्थिनौ कृतार्थौ कुर्यात् ॥ ५ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

[ लक्षा० ] यस्माद्धिरण्मयं सर्वमित्यत्र क्षिणोति रुजमिति हिरुक् सुखं तन्मयं हिरण्मयम् ॥ १ ॥ नित्यं प्रोष्ठपदाभ्यां चेत्यत्र प्रोष्ठपदाभ्यां पूर्णिमायां यस्य नक्षत्रस्य योगे सति भाद्रमासारम्भः तस्य नक्षत्रस्य तारे प्रोष्ठपदे ताभ्यामुपलक्षितकाले वामनावतारे सति शक्रे तदेतद्धनं तिष्ठति धनपतौ कुबेरे तदेतद्धनं तथा पूर्वं यथा हरिणा दत्तं तथैवास्ति । मनुष्येभ्यः सदादत्त इत्यत्र मनुष्येभ्यः इति पञ्चमी । आदत्त इति पदच्छेदः ॥३॥ एवं न शक्यते लब्धुमित्यत्र एवमुक्तविधया अलब्धव्यमिन्द्रकुबेरयोर्धनं ऋते न धनमित्यत्र धनमृते अश्वानामवाप्तिर्न विद्यते । धनं कुतश्चिद्याचितुं शक्यते अश्वास्तु न लभ्यन्त इति भावः॥४॥

---

४ म. अजैकपादहिबुध्नौ।

विभवश्चास्य सुमहानासीद्धनपतेरिव ।
एवं गुरुधनं विद्वन् दानेनैव विशोधय ॥ ८ ॥
तथा तौ कथयन्तौ च चिन्तयन्तौ च यत्क्षमम् ।
प्रतिष्ठाने नरपतिं ययातिं प्रत्युपस्थितौ ॥ ९ ॥
प्रतिगृह्य च सत्कारैरर्घ्यपाद्यादिकं वरम् ।
पृष्टश्चागमने हेतुमुवाच विनतासुतः ॥ १० ॥
अयं मे नाहुष सखा गालवस्तपसो निधिः ।
विश्वामित्रस्य शिष्योऽभूद्वर्षाण्ययुतशो नृप ॥११॥
सोऽयं तेनाभ्यनुज्ञात उपकारेप्सया द्विजः ।
तमाह भगवान्काले ददानि गुरुदक्षिणाम् ॥ १२ ॥
असकृत्तेन चोक्तेन किंचिदागतमन्युना ।
अयमुक्तः प्रयच्छेति जानता विभवं लघु ॥ १३ ॥
एकतःश्यामकर्णानां शुभ्राणां शुद्धजन्मनाम् ।
अष्टौ शतानि मे देहि हयानां चन्द्रवर्चसाम् ॥१४॥
गुर्वर्थो दीयतामेष यदि गालव मन्यसे ।
इत्येवमाह सक्रोधो विश्वामित्रस्तपोधनः ॥ १५ ॥
सोऽयं शोकेन महता तप्यमानो द्विजर्षभः ।
अशक्तः प्रतिकर्तुं तद्भवन्तं शरणं गतः ॥ १६ ॥
प्रतिगृह्य नरव्याघ्र त्वत्तो भिक्षां गतव्यथः ।
कृत्वाऽपवर्गं गुरवे चरिष्यति महत्तपः ॥ १७ ॥
तपसः संविभागेन भवन्तमपि योक्ष्यते ।
स्वेन राजर्षितपसा पूर्णं त्वां पूरयिष्यति ॥ १८॥
यावन्ति रोमाणि हये भवन्तीह नरेश्वर ।
तावन्तो वाजिनो लोकान् प्राप्नुवन्ति महीपते ॥१९॥
पात्रं प्रतिग्रहस्यायं दातुं पात्रं तथा भवान् ।
शंखे क्षीरमिवासिक्तं भवत्वेतत्तथोपमम् ॥ २० ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुर्दशाधिकशततमोऽध्यायः ॥ ११४ ॥

## पञ्चदशाधिकशततमोऽध्यायः ११५

क्रतुषु क्षीणवित्तेन ययातिना धनं याचमानाय गालवाय माधवीनाम्न्याः स्वकन्याया धनार्जनोपायतया दानम् ॥ १ ॥
कन्यामादाय शुल्कार्थं हर्यश्वंप्रति गालवगमनम् ॥ २ ॥

**नारद उवाच—**

एवमुक्तः सुपर्णेन तथ्यं वचनमुत्तमम् ।
विमृश्यावहितो राजा निश्चित्य च पुनः पुनः ॥१॥
यष्टा क्रतुसहस्राणां दाता दानपतिः प्रभुः ।
ययातिर्वत्सकाशीश इदं वचनमब्रवीत् ॥ २ ॥
दृष्ट्वा प्रियसखं तार्क्ष्यं गालवं च द्विजर्षभम् ।
निदर्शनं च तपसो भिक्षां श्लाघ्यां च कीर्तिताम् ॥३॥
अतीत्य च नृपानन्यानादित्यकुलसंभवान् ।
मत्सकाशमनुप्राप्तावेतां बुद्धिमवेक्ष्य च ॥ ४ ॥
अद्य मे सफलं जन्म तारितं चाद्य मे कुलम् ।
अद्यायं तारितो देशो मम तार्क्ष्य त्वयाऽनघ ॥५॥
वक्तुमिच्छामि तु सखे यथा जानासि मां पुरा ।
न तथा वित्तवानस्मि क्षीणं वित्तं च मे सखे ॥६॥
न च शक्तोऽस्मि ते कर्तुं मोघमागमनं खग ।
न चाशामस्य विप्रर्षेर्वितथीकर्तुमुत्सहे ॥ ७ ॥
तत्तु दास्यामि यत्कार्यमिदं संपादयिष्यति ।
अभिगम्य हताशो हि निवृत्तो दहते कुलम् ॥८॥

---

[ नील० ] विशोधय परिहर ॥ ८ ॥
इति श्रीमन्महाभा०उ०प० नै० भा०भा० चतुर्दशा०श० ॥११४॥
[ अर्जु० ] प्रतिष्ठाने पुरे ॥९॥ सत्कारं पूजाम् ॥१०॥ तथोपमं तथा उपमा यस्य ॥ २० ॥
इति श्रीम० मर्जुन० मुद्यो० चतुर्दशाधिकशततमोऽध्यायः ॥११४॥
[ लक्षा० ] उपकारेप्सया द्विज इत्यत्र मया दत्तं विद्यादिकं तव उपकार एवास्तु इति ईप्सया इच्छया अभ्यनुज्ञातः गच्छेत्याज्ञप्तः ॥ १२ ॥ कृत्वापवर्गं गुरव इत्यत्र अपवर्गमृणमोचनम् ॥ १७ ॥
इति श्रीम० उ० वा० कृ० ल० चतुर्दशाधिकशततमोऽध्यायः ॥११४॥

[ नील० ] एवमुक्त इति ॥ १ ॥ हताशोऽतिथिरिति शेषः ॥ ८ ॥
इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे पंचदशाधिकशततमोऽध्यायः ॥ ११६ ॥
[ अर्जु० ] वत्सकाशीशः वत्सभूमेः काश्याः ईशः प्रभुः ॥ २ ॥
[ सर्व० ] वत्सदेशश्च काश्याश्चेश्वरः ॥ २ ॥ निदर्शनं प्रमाणं तपसः गालवस्य अनेककालं गुरूपासनं तपःसमृद्धिमनुमापयति ॥ ३ ॥

---

८ म. परं स तु धनं विद्वान्दानेनैव व्यशोधयन् । १० म. सत्कारमहर्धिमोनाम्नर भ् । १८ म. राज्येन तपसा । इति चतुर्दशाधिकशततमो० ॥ ११४ ॥
१ ख. तदावचनं । २ अ. ययातिःसर्वकाशीश । ४ ख. प्राप्तावेतौ ।

नातःपरं वैनतेय किंचित्पापिष्ठमुच्यते ।
यथाऽऽशानाशनाल्लोके देहि नास्तीति वा वचः ॥९॥
हताशो ह्यकृतार्थः सन् हतः संभावितो नरः ।
हिनस्ति तस्य पुत्रांश्च पौत्रांश्चाकुर्वतो हितम् ॥१०॥
तस्माच्चतुर्णां वंशानां स्थापयित्री सुता मम ।
इयं सुरसुतप्रख्या सर्वधर्मोपचायिनी ॥ ११ ॥
सदा देवमनुष्याणामसुराणां च गालव ।
काङ्क्षिता रूपतो बाला सुता मे प्रतिगृह्यताम् ॥१२॥
अस्याः शुल्कं प्रदास्यन्ति नृपा राज्यमपि ध्रुवम् ।
किं पुनः श्यामकर्णानां हयानां द्वे चतुःशते ॥१३॥
स भवान्प्रतिगृह्णातु ममैतां माधवीं सुताम् ।
अहं दौहित्रवान्स्यां वै वर एष मम प्रभो ॥ १४ ॥
प्रतिगृह्य च तां कन्यां गालवः सह पक्षिणा ।
पुनर्द्रक्ष्याव इत्युक्त्वा प्रतस्थे सह कन्यया ॥ १५ ॥
उपलब्धमिदं द्वारमश्वानामिति चाण्डजः ।
उक्त्वा गालवमापृच्छ्य जगाम भवनं स्वकम् ॥१६॥
गते पतगराजे तु गालवः सह कन्यया ।
चिन्तयानः क्षमं दाने राज्ञां वै शुल्कतोऽगमत् ॥१७॥
सोऽगच्छन्मनसेक्ष्वाकुं हर्यश्वं राजसत्तमम् ।
अयोध्यायां महावीर्यं चतुरङ्गबलान्वितम् ॥ १८ ॥
कोशधान्यबलोपेतं प्रियपौरं द्विजप्रियम् ।
प्रजाभिकामं शाम्यन्तं कुर्वाणं तप उत्तमम् ॥ १९ ॥
तमुपागम्य विप्रः स हर्यश्वं गालवोऽब्रवीत् ।
कन्येयं मम राजेन्द्र प्रसवैः कुलवर्धिनी ॥ २० ॥
इयं शुल्केन भार्यार्थं हर्यश्व प्रतिगृह्यताम् ।
शुल्कं ते कीर्तयिष्यामि तच्छ्रुत्वा संप्रधार्यताम् २१

इति श्रीमहाभारते उद्योगपर्वणि पंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥

## षोडशाधिकशततमोऽध्यायः ११६

हर्यश्वेनैकपुत्रोत्पादनायैकतःश्यामकर्णानामश्वानां द्विशत्या मूल्येन कन्यापरिक्रयणम् ॥ १ ॥ पुत्रमुत्पाद्य पुनःकन्याभूतामादाय दिवोदासं प्रति गालवगमनम् ॥ २ ॥

नारद उवाच—

हर्यश्वस्त्वब्रवीद्राजा विचिन्त्य बहुधा ततः ।
दीर्घमुष्णं च निःश्वस्य प्रजाहेतोर्नृपोत्तमः ॥ १ ॥
उन्नतेषून्नता षट्सु सूक्ष्मा सूक्ष्मेषु सप्तसु ।
गम्भीरा त्रिषु गम्भीरेष्वियं रक्ता च पञ्चसु ॥२॥

[ अर्जु० ] आशानाशनात् प्रार्थनाभङ्गात् नास्तीति प्रत्याख्यात्य देहीति वा यद् वचो नातः पापिष्ठतरमुच्यत इत्यन्वयः ॥ ९ ॥ सम्भावितो मानविषयीकृतः [ अर्थितामर्थवत्ताम् ] ॥ १० ॥ अपचायिनी पूजिता ॥ ११ ॥ द्वे चतुःशते अष्टौ शतानि ॥ १३ ॥ उपलब्धं ज्ञातं प्राप्तं वा, द्वारमुपायः ॥ १६ ॥ राज्ञां मध्ये क्षमं समर्थम् । शुल्कतः शुल्केन मूल्येन ॥ १७ ॥ प्रजाभिकामं प्रजार्थं शाम्यन्तं वयसा ॥ १९ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

[ सर्व० ] देहीत्युक्तेऽनंतरं नास्तीति वचो देहिनास्ति इति वचो यथाशानाशनात् पापिष्ठं त्वाकारोऽवधारणे । अल्पस्यास्य दानात् । नास्तीत्येतद्वचः । अल्पादाने हि न तादृग्दोषं संभावितमाशया विषयीकृतम ॥ ९ ॥ चतुर्णां पृथग्गोत्राणाम् वंशानां स्थापयित्रीति दैवज्ञादिभिरुक्तत्वात्प्रश्रितं वरोऽपेक्षेतोऽर्थः । सर्वधर्माणामपचायिनी पूजिका सर्वेषां धर्माणां योग्येत्यर्थः ॥ ११ ॥ राज्ञां मध्ये दाने क्षमम् चिंतयानः शुल्कतः शुल्केन निमित्तेनागच्छत् ॥ १७ ॥ शाम्यंतं वृद्धं तपः उत्तमं प्रजार्थम् ॥ १९ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां पञ्चदशाधिकशततमोऽध्यायः ॥ ११५ ॥

[ नील० ] हर्यश्व इति ॥ १ ॥ षट्सु करपृष्ठयोः पादपृष्ठयोः कुचयोश्च । स्तनयोर्नितम्बयोश्चक्षुषोश्चेति प्राञ्चः । वक्षःकुक्ष्यलकस्कन्धकरवक्त्रं षडुन्नतमिति काशीखण्डोक्तिः । सप्तसु सूक्ष्मा त्वक्केशदशनेषु कराङ्गुलिषु पादाङ्गुलिषु तदुभयपर्वसु च सूक्ष्मा । त्रिषु स्वरसत्वनाभिषु गम्भीरा । पञ्चसु पाणितले नेत्रान्ते तालुनि जिह्वायामधरोष्ठे च रक्ता ॥ २ ॥

[ अर्जु० ] उन्नता षट्सु स्तनद्वय-नितम्बद्वय-चक्षुर्द्वयेषु, सूक्ष्मा सप्तसु करद्वय-चरणद्वय-नखकेशचर्मसु, गम्भीरा त्रिषु नाभिहृदयस्वरेषु, रक्ता पञ्चसु करद्वय-चरणाधरेषु ॥ २ ॥

९ ख. यद्वचः । ११ ख. सुरसुताप्रख्या । इति पंचदशाधिकशततमोऽध्यायः ॥ ११५ ॥

बहुदेवासुरालोका बहुगन्धर्वदर्शना ।
बहुलक्षणसंपन्ना बहुप्रसवधारिणी ॥ ३ ॥
समर्थेयं जनयितुं चक्रवर्तिनमात्मजम् ।
ब्रूहि शुल्कं द्विजश्रेष्ठ समीक्ष्य विभवं मम ॥ ४ ॥

**गालव उवाच—**

एकतः श्यामकर्णानां शतान्यष्टौ प्रयच्छ मे
हयानां चन्द्रशुभ्राणां देशजानां वपुष्मताम् ॥ ५ ॥
ततस्तव भवित्रीयं पुत्राणां जननी शुभा ।
अरणीव हुताशानां योनिरायतलोचना ॥ ६ ॥

**नारद उवाच—**

एतच्छ्रुत्वा वचो राजा हर्यश्वः काममोहितः ।
उवाच गालवं दीनो राजर्षिर्ऋषिसत्तमम् ॥ ७ ॥
द्वे मे शते संनिहिते हयानां यद्विधास्तव ।
एष्टव्याः शतशस्त्वन्ये चरन्ति मम वाजिनः ॥ ८ ॥
सोऽहमेकमपत्यं वै जनयिष्यामि गालव ।
अस्यामेतं भवान्कामं संपादयतु मे वरम् ॥ ९ ॥
एतच्छ्रुत्वा तु सा कन्या गालवं वाक्यमब्रवीत् ।
मम दत्तो वरः कश्चित्केनचिद्ब्रह्मवादिना ॥ १० ॥
प्रसूत्यन्ते प्रसूत्यन्ते कन्यैव त्वं भविष्यसि ।
स त्वं ददस्व मां राज्ञे प्रतिगृह्य हयोत्तमान् ॥११॥
नृपेभ्यो हि चतुर्भ्यस्ते पूर्णान्यष्टौ शतानि मे ।
भविष्यन्ति तथा पुत्रा मम चत्वार एव च ॥ १२ ॥
क्रियतामुपसंहारो गुर्वर्थे द्विजसत्तम ।
एषा तावन्मम प्रज्ञा यथा वा मन्यसे द्विज ॥ १३ ॥
एवमुक्तस्तु स मुनिः कन्यया गालवस्तदा ।
हर्यश्वं पृथिवीपालमिदं वचनमब्रवीत् ॥ १४ ॥
इयं कन्या नरश्रेष्ठ हर्यश्व प्रतिगृह्यताम् ।
चतुर्भागेन शुल्कस्य जनयस्वैकमात्मजम् ॥ १५ ॥
प्रतिगृह्य स तां कन्यां गालवं प्रतिनन्द्य च ।
समये देशकाले च लब्धवान्सुतमीप्सितम् ॥ १६ ॥
ततो वसुमना नाम वसुभ्यो वसुमत्तरः ।
वसुप्रख्यो नरपतिः स बभूव वसुप्रदः ॥ १७ ॥
अथ काले पुनर्धीमान् गालवः प्रत्युपस्थितः ।
उपसंगम्य चोवाच हर्यश्वं प्रीतमानसम् ॥ १८ ॥
जातो नृप सुतस्तेऽयं बालो भास्करसंनिभः ।
कालो गन्तुं नरश्रेष्ठ भिक्षार्थमपरं नृपम् ॥ १९ ॥
हर्यश्वः सत्यवचने स्थितः स्थित्वा च पौरुषे ।
दुर्लभत्वाद्धयानां च प्रददौ माधवीं पुनः ॥ २० ॥
माधवी च पुनर्दीप्तां परित्यज्य नृपश्रियम् ।
कुमारी कामतो भूत्वा गालवं पृष्ठतोऽन्वगात्॥२१॥
त्वय्येव तावत्तिष्ठन्तु हया इत्युक्तवान् द्विजः ।
प्रययौ कन्यया सार्धं दिवोदासं प्रजेश्वरम् ॥२२॥

इति श्रीमहाभारते उद्योगपर्वणि षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

---

[ सर्व० ] षट्सु करपृष्ठयोः कुचयोश्च एतेषून्नतेषु संबन्धादुन्नता स्तनयोर्नितम्बयोश्चक्षुषोश्चेति वा। सप्तसु सूक्ष्मा करयोश्चरणयोर्मुखे केशेषु नखेषु चेति । त्रिषु गंभीरा नाभिहृदयस्वरेषु। पंचसु रक्ता करयो श्चरणयोरधरे च॥२॥

[ नील० ] बहुभिर्देवैरसुरैश्च आलोकयितुं योग्या बहुदेवासुरालोका गन्धर्वाणां दर्शनं शास्त्रं गीतादिविद्या यस्यां सा तथा ॥ ३ ॥ कामत इच्छया योगबलेन कुमारी भूत्वा यौवनं परित्यज्येत्यर्थः ॥ २१ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

[ अर्जु० ] बहुदेवासुरेत्यादि । बहुभिर्देवासुरैः आलोकः सादृश्यं यस्याः ॥ ३ ॥ योनिः कारणम् ॥ ६ ॥ यद्विधा यत्प्रकाराः [ या इति शेषः ] तथैष्टव्या इच्छार्हाः शतशोऽनन्ताः ॥ ९ ॥ उपसंहारो दानम् ॥ १३ ॥ वसुमत्तरो धनवत्तरः वसुप्रभोऽग्निप्रभः । वसुरग्निः ॥ १७ ॥ त्वयि-त्वत्समीपे ॥ २२ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षोडशाधिकशततमोऽध्यायः ॥११६॥

[ सर्व० ] बहुदेवासुरानूका ईषदसमाप्तौ बहुच् छान्दसत्वादप्रकृतिलिङ्गता । अनूकं शीलम् । देवासुरप्रायशीला । एवमुत्तरत्रापि बहुलक्षणेत्यादौ बहुशब्द एव च ॥ ३ ॥ वसुरग्निस्तत्प्रायाः ॥ १७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

[ लक्षा० ] एष्टव्याः शतशस्त्वन्य इत्यत्र अन्ये त्वदभिलाषितवाजिभ्यः अन्ये मम वाजिनः शतशश्चरन्ति ते एष्टव्याः त्वया प्राप्तव्याः ॥ ८ ॥ ततः स्थित्वा च पौरुष इत्यत्र पुरुषो नारायणः तदधीनत्वे स्थित्वा ॥ २० ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे षोडशाधिकशततमोऽध्यायः ॥ ११६ ॥

## सप्तदशाधिकशततमोऽध्यायः ११७

दिवोदासेनापि तनैव मूल्येनैकं पुत्रमुत्पादयितुं माधवीस्वीकरणम् ॥ १ ॥ पुत्रमुत्पाद्य गालवाय तन्निर्यातनम् ॥ २ ॥

**गालव उवाच—**

महावीर्यो महीपालः काशीनामीश्वरः प्रभुः ।
दिवोदास इति ख्यातो भैमसेनिर्नराधिपः ॥ १ ॥
तत्र गच्छावहे भद्रे शनैरागच्छ मा शुचः ।
धार्मिकः संयमे युक्तः सत्ये चैव जनेश्वरः ॥ २ ॥

**नारद उवाच—**

तमुपागम्य स मुनिर्न्यायतस्तेन सत्कृतः ।
गालवः प्रसवस्यार्थे तं नृपं प्रत्यचोदयत् ॥ ३ ॥

**दिवोदास उवाच—**

श्रुतमेतन्मया पूर्वं किमुक्त्वा विस्तरं द्विज ।
काङ्क्षितो हि मयैषोऽर्थः श्रुत्वैव द्विजसत्तम ॥ ४ ॥
एतच्च मे बहुमतं यदुत्सृज्य नराधिपान् ।
मामेवमुपयातोऽसि भावि चैतदसंशयम् ॥ ५ ॥
स एव विभवोऽस्माकमश्वानामपि गालव ।
अहमप्येकमेवास्यां जनयिष्यामि पार्थिवम् ॥ ६ ॥
तथेत्युक्त्वा द्विजश्रेष्ठः प्रादात्कन्यां महीपतेः ।
विधिपूर्वं च तां राजा कन्यां प्रतिगृहीतवान् ॥७॥
रेमे स तस्यां राजर्षिः प्रभावत्यां यथा रविः ।
स्वाहायां च यथा वह्निर्यथा शच्यां च वासवः ॥८॥
यथा चन्द्रश्च रोहिण्यां यथा धूमोर्णया यमः ।
वरुणश्च यथा गौर्यां यथा चर्घ्यां धनेश्वरः ॥ ९ ॥
यथा नारायणो लक्ष्म्यां जाह्नव्यां च यथोदधिः ।
यथा रुद्रश्च रुद्राण्यां यथा वेद्यां पितामहः ॥ १० ॥
अदृश्यन्त्यां च वासिष्ठो वसिष्ठश्चाक्षमालया ।
च्यवनश्च सुकन्यायां पुलस्त्यः संध्यया यथा ॥११॥
आगस्त्यश्चापि वैदर्भ्यां सावित्र्यां सत्यवान्यथा ।
यथा भृगुः पुलोमायामदित्यां कश्यपो यथा ॥१२॥
रेणुकायां यथार्चीको हैमवत्यां च कौशिकः ।
बृहस्पतिश्च तारायां शुक्रश्च शतपर्वणा ॥ १३ ॥
यथा भूम्या भूमिपतिरुर्वश्यां च पुरूरवाः ।
ऋचीकः सत्यवत्यां च सरस्वत्यां यथा मनुः ॥१४॥
शकुन्तलायां दुष्यन्तो धृत्यां धर्मश्च शाश्वतः ।
दमयन्त्यां नलश्चैव सत्यवत्यां च नारदः ॥ १५ ॥
जरत्कारुर्जरत्कार्वां पुलस्त्यश्च प्रतीच्यया ।
मेनकायां यथोर्णायुस्तुम्बुरुश्चैव रम्भया ॥ १६ ॥
वासुकिः शतशीर्षायां कुमार्यां च धनञ्जयः ।
वैदेह्यां च यथा रामो रुक्मिण्यां च जनार्दनः ॥१७॥
तथा तु रममाणस्य दिवोदासस्य भूपतेः ।
माधवी जनयामास पुत्रमेकं प्रतर्दनम् ॥ १८ ॥
अथाजगाम भगवान् दिवोदासं स गालवः ।
समये समनुप्राप्ते वचनं चेदमब्रवीत् ॥ १९ ॥
निर्यातयतु मे कन्यां भवांस्तिष्ठन्तु वाजिनः ।
यावदन्यत्र गच्छामि शुल्कार्थं पृथिवीपते ॥ २० ॥
दिवोदासोऽथ धर्मात्मा समये गालवस्य ताम् ।
कन्यां निर्यातयामास स्थितः सत्ये महीपतिः ॥२१॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

---

[ नील० ] महावीर्य इति ॥ १ ॥

श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

[ अर्जु० ] वाशिष्टः शक्तिः । अक्षमालया अरुन्धत्या ॥ ११ ॥ वैदर्भ्यां लोपामुद्रायाम् ॥ १२ ॥ आर्चीको जमदग्निः कौशिको विश्वामित्रः ॥ १३ ॥ रुक्मिण्यां च जनार्दन इति कथं सङ्गच्छतां कृष्णावतारस्येदानीन्तनत्वात् ययातिकन्यायाश्च ततोऽतिप्राचीनत्वात् । उच्यते नारदोक्ते इति वैशम्पायनवचनं जनमेजये । भारतस्यानादित्वाद्वा ॥ १७ ॥ निर्यातयतु प्रयच्छतु ॥ २० ॥ निर्यातयामास ददौ ॥ २१ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

---

२ ख. धार्मिकः समयुक्तश्च सत्यमेव । ६ ख. °मेतस्याम् । १३ ख. शतपर्वया । इति सप्तदशाधिकशततमोऽध्यायः ॥ ११७ ॥

## अष्टादशाधिकशततमोऽध्यायः ११८

गालवेन पुनरौशीनराय तेनैव मूल्येनैकं पुत्रं जनयितुं माधवीदानम् ॥ १ ॥ पुत्रमुत्पाद्य तेन निर्यातितां तामादाय गच्छता गालवेन पथि सुपर्णदर्शनम् ॥ २ ॥

**नारद उवाच—**

तथैव तां श्रियं त्यक्त्वा कन्या भूत्वा यशस्विनी ।
माधवी गालवं विप्रमभ्ययात्सत्यसंगरा ॥ १ ॥
गालवो विमृशन्नेव स्वकार्यगतमानसः ।
जगाम भोजनगरं द्रष्टुमौशीनरं नृपम् ॥ २ ॥
तमुवाचाथ गत्वा स नृपतिं सत्यविक्रमम् ।
इयं कन्या सुतौ द्वौ ते जनयिष्यति पार्थिवौ ॥ ३ ॥
अस्यां भवानवाप्तार्थो भविता प्रेत्य चेह च ।
सोमार्कप्रतिसंकाशौ जनयित्वा सुतौ नृप ॥ ४ ॥
शुल्कं तु सर्वधर्मज्ञ हयानां चन्द्रवर्चसाम् ।
एकतः श्यामकर्णानां देयं मह्यं चतुःशतम् ॥ ५ ॥
गुर्वर्थोऽयं समारम्भो न हयैः कृत्यमस्ति मे ।
यदि शक्यं महाराज क्रियतामविचारितम् ॥ ६ ॥
अनपत्योऽसि राजर्षे पुत्रौ जनय पार्थिव ।
पितॄन्पुत्रप्लवेन त्वमात्मानं चैव तारय ॥ ७ ॥
न पुत्रफलभोक्ता हि राजर्षे पात्यते दिवः ।
न याति नरकं घोरं यथा गच्छन्त्यनात्मजाः ॥८॥
एतच्चान्यच्च विविधं श्रुत्वा गालवभाषितम् ।
उशीनरः प्रतिवचो ददौ तस्य नराधिपः ॥ ९ ॥
श्रुतवानस्मि ते वाक्यं यथा वदसि गालव ।
विधिस्तु बलवान्ब्रह्मन् प्रवणं हि मनो मम ॥१०॥
शते द्वे तु ममाश्वानामीदृशानां द्विजोत्तम ।
इतरेषां सहस्राणि सुबहूनि चरन्ति मे ॥ ११ ॥
अमहप्येकमेवास्यां जनयिष्यामि गालव ।
पुत्रं द्विज गतं मार्गं गमिष्यामि परैरहम् ॥ १२ ॥
मूल्येनापि समं कुर्यां तवाहं द्विजसत्तम ।
पौरजानपदार्थं तु ममार्थो नात्मभोगतः ॥ १३ ॥
कामतो हि धनं राजा पारक्यं यः प्रयच्छति ।
न स धर्मेण धर्मात्मन्युज्यते यशसा न च ॥ १४ ॥
सोऽहं प्रतिग्रहीष्यामि ददात्वेतां भवान्मम ।
कुमारीं देवगर्भाभामेकपुत्रभवाय मे ॥ १५ ॥
तथा तु बहुधा कन्यामुक्तवन्तं नराधिपम् ।
उशीनरं द्विजश्रेष्ठो गालवः प्रत्यपूजयत् ॥ १६ ॥
उशीनरं प्रतिग्राह्य गालवः प्रययौ वनम् ।
रेमे स तां समासाद्य कृतपुण्य इव श्रियम् ॥ १७ ॥
कन्दरेषु च शैलानां नदीनां निर्झरेषु च ।
उद्यानेषु विचित्रेषु वनेषूपवनेषु च ॥ १८ ॥
हर्म्येषु रमणीयेषु प्रासादशिखरेषु च ।
वातायनविमानेषु तथा गर्भगृहेषु च ॥ १९ ॥
ततोऽस्य समये जज्ञे पुत्रो बालरविप्रभः ।
शिबिर्नाम्नाऽभिविख्यातो यः स पार्थिवसत्तमः २०
उपस्थाय स तं विप्रो गालवः प्रतिगृह्य च ।
कन्यां प्रयातस्तां राजन् दृष्टवान्विनतात्मजम् ॥२१॥

इति श्रीमहाभारते उद्योगपर्वण्यष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

---

[ नील० ] तथेति ॥१॥ प्रवणं पुत्रोत्पत्तौ तत्परं॥१०॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारत-भावदीपे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

[ अर्जु० ] सत्यसंगरा सत्यप्रतिज्ञा ॥ १ ॥ प्रति-ग्राह्य कन्यामिति शेषः ॥ १७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

[ सर्व० ] परैरन्यैर्गतं मार्गं यामीत्यन्वयः ॥ १२ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्याया-मष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

[ लक्षा० ] द्रष्टुमौशीनरं नृपमित्यत्र उशीनर एव औशीनरः । स्वार्थिकोऽण् ॥ २ ॥ पुत्रगतं मार्गमित्यत्र परैरन्यैः पुत्रैर्निमित्तैर्गतं प्राप्तं मार्गम् ॥ १२ ॥ कन्यामुक्त-वन्तं नराधिपमित्यत्र कन्यामुद्दिश्य ॥ १६ ॥ प्रादाच्च तं राज्ञ इत्यत्र तं शिबिम् ॥

इति श्रीमन्महाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अष्टादशाधिकशततमोऽध्यायः ॥ ११८ ॥

---

२ ख. नगरे । ५ ख. शुल्केन । इति.अष्टादशाधिकशततमोऽध्यायः ११८

## एकोनविंशत्यधिकशततमोऽध्यायः ११९

सुपर्णवचसा ज्ञाताधिकाश्वालाभेन गालवेनाश्वषट्शत्या सहैकपुत्रोत्पादनाय विश्वामित्राय माधवीदानम् ॥ १ ॥ एवं गुरुदक्षिणां निर्यात्य विश्वामित्रेण पुत्रोत्पादनान्ते पुनः कन्याभूताया माधव्यास्तत्पित्रे निर्यातनम् ॥ २ ॥

नारद उवाच—

गालवं वैनतेयोऽथ प्रहसन्निदमब्रवीत् ।
दिष्ट्या कृतार्थं पश्यामि भवन्तमिह वै द्विज ॥१॥
गालवस्तु वचः श्रुत्वा वैनतेयेन भाषितम् ।
चतुर्भागावशिष्टं तदाचख्यौ कार्यमस्य हि ॥ २ ॥
सुपर्णस्त्वब्रवीदेनं गालवं वदतां वरः ।
प्रयत्नस्ते न कर्तव्यो नैष संपत्स्यते तव ॥ ३ ॥
पुरा हि कान्यकुब्जे वै गाधेः सत्यवतीं सुताम् ।
भार्यार्थेऽवरयत्कन्यामृचीकस्तेन भाषितः ॥ ४ ॥
एकतः श्यामकर्णानां हयानां चन्द्रवर्चसाम् ।
भगवन्दीयतां मह्यं सहस्रमिति गालव ॥ ५ ॥
ऋचीकस्तु तथेत्युक्त्वा वरुणस्यालयं गतः ।
अश्वतीर्थे हयान् लब्ध्वा दत्तवान्पार्थिवाय वै ॥६॥
इष्ट्वा ते पुण्डरीकेण दत्ता राज्ञा द्विजातिषु ।
तेभ्यो द्वे द्वे शते क्रीत्वा प्राप्ते तैः पार्थिवैस्तदा ॥७॥
अपराण्यपि चत्वारि शतानि द्विजसत्तम ।
नीयमानानि संतारे हृतान्यासन् वितस्तया ॥ ८ ॥
एवं न शक्यमप्राप्यं प्राप्तुं गालव कर्हिचित् ।
इमामश्वशताभ्यां वै द्वाभ्यां तस्मै निवेदय ॥ ९ ॥
विश्वामित्राय धर्मात्मन् षड्भिरश्वशतैः सह ।
ततोऽसि गतसंमोहः कृतकृत्यो द्विजोत्तम ॥ १० ॥
गालवस्तं तथेत्युक्त्वा सुपर्णसहितस्ततः ।
आदायाश्वांश्च कन्यां च विश्वामित्रमुपागमत्॥११॥
अश्वानां काङ्क्षितार्थानां षडिमानि शतानि वै ।
शतद्वयेन कन्येयं भवता प्रतिगृह्यताम् ॥ १२ ॥
अस्यां राजर्षिभिः पुत्रा जाता वै धार्मिकास्त्रयः ।
चतुर्थं जनयत्वेकं भवानपि नरोत्तमम् ॥ १३ ॥
पूर्णान्येवं शतान्यष्टौ तुरगाणां भवन्तु ते ।
भवतो ह्यनृणो भूत्वा तपः कुर्यां यथासुखम् ॥१४॥
विश्वामित्रस्तु तं दृष्ट्वा गालवं सह पक्षिणा ।
कन्यां च तां वरारोहामिदमित्यब्रवीद्वचः ॥ १५ ॥
किमियं पूर्वमेवेह न दत्ता मम गालव ॥ ।
पुत्रा ममैव चत्वारो भवेयुः कुलभावनाः ॥ १६ ॥
प्रतिगृह्णामि ते कन्यामेकपुत्रफलाय वै ।
अश्वाश्चाश्रममासाद्य चरन्तु मम सर्वशः ॥ १७ ॥
स तया रममाणोऽथ विश्वामित्रो महाद्युतिः ।
आत्मजं जनयामास माधवीपुत्रमष्टकम् ॥ १८ ॥
जातमात्रं सुतं तं च विश्वामित्रो महामुनिः ।
संयोज्यार्थैस्तथा धर्मैरश्वैस्तैः समयोजयत् ॥ १९ ॥
अथाष्टकः पुरं प्रायात्तदा सोमपुरप्रभम् ।
निर्यात्य कन्यां शिष्याय कौशिकोऽपि वनं ययौ २०
गालवोऽपि सुपर्णेन सह निर्यात्य दक्षिणाम् ।
मनसाऽतिप्रतीतेन कन्यामिदमुवाच ह ॥ २१ ॥
जातो दानपतिः पुत्रस्त्वयाशूरस्तथा परः ।
सत्यधर्मरतश्चान्यो यज्वा चापि तथा परः ॥२२॥
तदागच्छ वरारोहे तारितस्ते पिता सुतैः ।
चत्वारश्चैव राजानस्तथा चाहं सुमध्यमे ॥ २३ ॥
गालवस्त्वभ्यनुज्ञाय सुपर्णं पन्नगाशनम् ।
पितुर्निर्यात्य तां कन्यां प्रययौ वनमेव ह ॥ २४ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

---

[ नील० ] गालवमिति ॥ १ ॥ सन्तारे मार्गे ॥८॥ निर्यात्य प्रत्यर्प्य शिष्याय गालवाय ॥ २० ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकोनविंशत्यधिकशततमोऽध्यायः ॥११९॥

[ अर्जु० ] पुण्डरीकेण यज्ञेन ॥ ७ ॥ इदमिति-इति वचोविशेषणम् । इदं वक्ष्यमाणम् इति एवंप्रकारम् ॥१५॥ अभिप्रतीतेन तुष्टेन ॥ २१ ॥ दानपतिर्वसुमनाः, शूरः प्रतर्दनः, सत्यधर्मरतः शिबिः, तथापरो यज्वा अष्टकः ॥२२॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकोनविंशत्यधिकशततमोऽध्यायः ॥११९॥

[ सर्व० ] इदं वक्ष्यमाणमिति एवंप्रकारम् ॥ १५ ॥

इति श्रीमहा० उद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामेकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

[ लक्षा० ] तेभ्यो मे द्वे शते क्रीत्वा प्राप्ता इत्यत्र तेभ्यः विश्वेभ्यः द्वे शते द्विशतसंख्याकास्ते अश्वाः । पार्थिवैः क्रीत्वा मे प्राप्ताः । प्रकर्षेण आसमंतात्संपाद्य दत्ताः ॥ ७ ॥ हृतान्यासन्नित्यत्र हृतानि मया अपहृतानि ॥ ८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे एकोनविंशत्यधिकशततमोऽध्यायः ॥ ११९ ॥

न चैष शक्तः पार्थानां यस्त्वमर्थमभीप्ससि ।
सूतपुत्रो दृढक्रोधो भ्राता दुःशासनश्च ते ॥ ४८ ॥
भीष्मे द्रोणे कृपे कर्णे भीमसेने धनञ्जये ।
धृष्टद्युम्ने च संक्रुद्धे न स्युः सर्वाः प्रजा ध्रुवम् ॥ ४९ ॥
अमर्षवशमापन्नो मा कुरूंस्तात जीघनः ।
एषा हि पृथिवी कृत्स्ना मागमत्त्वत्कृते वधम् ॥ ५० ॥
यच्च त्वं मन्यसे मूढ भीष्मद्रोणकृपादयः ।
योत्स्यन्ते सर्वशक्त्येति नैतदद्योपपद्यते ॥ ५१ ॥
समं हि राज्यं प्रीतिश्च स्थानं हि विदितात्मनाम् ।
पाण्डवेष्वथ युष्मासु धर्मस्त्वभ्यधिकस्ततः ॥ ५२ ॥
राजपिण्डभयादेते यदि हास्यन्ति जीवितम् ।
न हि शक्ष्यन्ति राजानं युधिष्ठिरमुदीक्षितुम् ॥ ५३ ॥
न लोभादर्थसंपत्तिर्नराणामिह दृश्यते ।
तदलं तात लोभेन प्रशाम्य भरतर्षभ ॥ ५४ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

## त्रिंशदधिकशततमोऽध्यायः १३०

मातुर्वाक्यमनादृत्य पुनः सभातो निष्क्रम्य दुःशासनादिभिः कृष्णबन्धनं मन्त्रयमाणस्य दुर्योधनस्याभिप्रायमिङ्गितेन ज्ञात्वा सात्यकिना कृतवर्मणे सभाद्वाररक्षणाय सेनायोजनमादिश्य कृष्णंप्रति तेषामभिप्रायमुक्त्वा स्मितपूर्वं धृतराष्ट्रविदुराभ्यां तत्कथनम् ॥ १ ॥ विदुरेण धृतराष्ट्र पुत्रास्ते परीतकाला इत्युक्ते कृष्णेन दुर्योधनादिभिः स्वनिग्रहणं स्वेन वा तन्निग्रहणं यस्यात्तदनुजानीहीति सर्वेषु शृण्वत्सु धृतराष्ट्रप्रार्थनम् ॥ २ ॥ धृतराष्ट्रेण पुनर्दुर्योधनं सानुजं सहामात्यं च सभामानाय्य बहु गर्हयित्वा कृष्णधर्षणस्याशक्यत्वप्रतिपादनम् ॥ ३ ॥ विदुरेणापि कृष्णस्येश्वरत्वप्रतिपादनमुखेन तथैव प्रतिपादनम् ॥ ४ ॥

**वैशम्पायन उवाच—**

तत्तु वाक्यमनादृत्य सोऽर्थवन्मातृभाषितम् ।
पुनः प्रतस्थे संरम्भात्सकाशमकृतात्मनाम् ॥ १ ॥
ततः सभाया निर्गम्य मन्त्रयामास कौरवः ।
सौबलेन मताक्षेण राज्ञा शकुनिना सह ॥ २ ॥
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च ।
दुःशासनचतुर्थानामिदमासीद्विचेष्टितम् ॥ ३ ॥
पुराऽयमस्मान् गृह्णाति क्षिप्रकारी जनार्दनः ।
सहितो धृतराष्ट्रेण राज्ञा शान्तनवेन च ॥ ४ ॥
वयमेव हृषीकेशं निगृह्णीम बलादिव ।
प्रसह्य पुरुषव्याघ्रमिन्द्रो वैरोचनिं यथा ॥ ५ ॥
श्रुत्वा गृहीतं वार्ष्णेयं पाण्डवा हतचेतसः ।
निरुत्साहा भविष्यन्ति भग्नदंष्ट्रा इवोरगाः ॥ ६ ॥
अयं ह्येषां महाबाहुः सर्वेषां शर्म वर्म च ।
अस्मिन् गृहीते वरदे ऋषभे सर्वसात्वताम् ॥ ७ ॥
निरुद्यमा भविष्यन्ति पाण्डवाः सोमकैः सह ।
तस्माद्वयमिहैवैनं केशवं क्षिप्रकारिणम् ॥ ८ ॥
क्रोशतो धृतराष्ट्रस्य बद्ध्वा योत्स्यामहे रिपून् ।
तेषां पापमभिप्रायं पापानां दुष्टचेतसाम् ॥ ९ ॥
इङ्गितज्ञः कविः क्षिप्रमन्वबुद्ध्यत सात्यकिः ।
तदर्थमभिनिष्क्रम्य हार्दिक्येन सहास्थितः ॥ १० ॥
अब्रवीत्कृतवर्माणं क्षिप्रं योजय वाहिनीम् ।
व्यूढानीकः सभाद्वारमुपतिष्ठस्व दंशितः ॥ ११ ॥

---

मत्स्यगलग्राहिशंकुविशेषो यस्य तत् क्षुद्राक्षमक्षस्य क्षुद्रत्वात् मत्स्यौ जालमेव यथा बिलुम्पतः तथेति भावः ॥ ३१ ॥ बिभ्यतोऽनुपरागस्येत्यत्र अनुपरागस्य विषयोपरागरहितस्य पुंसः वर्धितौ स्वविषयाभ्यां वर्धितावपि स्वयमेव बिभ्यतः भीतौ भवतः ॥ ३२ ॥

[ नील० ] यः त्वं पार्थानांमर्थमभीप्ससि स एष त्वं न शक्तः तदर्थोपहारायेत्यर्थः नापि सूतपुत्रादयः शक्ताः ॥ ४८ ॥ मागमत् मागच्छतु ॥ ५० ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

[ अर्जु० ] माजीघनो माघातय ॥ ५० ॥ उदीक्षितुं क्रोधादूर्ध्वमीक्षितुम् ॥ ५३ ॥

इति श्रीमन्म० व्या० म० म्रु० एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

[ सर्व० ] स्थानं देशः । विदितात्मनां विदुषां प्रीतिश्चेत्यन्वयः ॥ ५२ ॥

इति श्रीमन्म० व्या० म० म्रु० एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

[ लक्षा० ] अमर्षवशमापन्न इत्यत्र जीघनः जीघन् कुरुः कुरुकुलोत्पन्नः पुरुषः अमर्षवशमापन्नः मा भवेत् ॥ ५० ॥ राजपिण्डभयादित्यत्र राजपिण्डं राजदत्तान्नम् ॥ ५३ ॥

इति श्रीम० उ० वा० ल० एकोनत्रिंशदधिकशततमोऽध्यायः ॥ १२९ ॥

[ नील० ] तत्त्विति ॥ १ ॥ वैरोचनिं बलिम् ॥ ५ ॥ केशवं बद्ध्वा रिपून्योत्स्यामहे इत्युत्तरश्लोकेनान्वयः ॥ ८ ॥

[ अर्जु० ] अकृतात्मनामवशीकृतात्मनाम् ॥ १ ॥ दुःशासनश्चतुर्थो येषाम् ॥ ३ ॥ पुरा प्रथमम् गृह्णाति ग्रहीष्यति ॥ ४ ॥ इन्द्रो विष्णुद्वारा ॥ ५ ॥ शर्म सुखहेतुः ।

यावदाख्याम्यहं चैतत् कृष्णायाक्लिष्टकारिणे ।
स प्रविश्य सभां वीरः सिंहो गिरिगुहामिव ॥१२॥
आचष्ट तमभिप्रायं केशवाय महात्मने ।
धृतराष्ट्रं ततश्चैव विदुरं चान्वभाषत ॥ १३ ॥
तेषामेतमभिप्रायमाचचक्षे स्मयन्निव ।
धर्मादर्थाच्च कामाच्च कर्म साधुविगर्हितम् ॥ १४ ॥
मन्दाः कर्तुमिहेच्छन्ति न चावाप्यं कथंचन ।
पुरा विकुर्वते मूढाः पापात्मानः समागताः ॥१५॥
धर्षिताः काममन्युभ्यां क्रोधलोभवशानुगाः ।
इमं हि पुण्डरीकाक्षं जिघृक्षन्त्यल्पचेतसः ॥ १६ ॥
पटेनाग्निं प्रज्वलितं यथा बाला यथा जडाः ।
सात्यकेस्तद्वचः श्रुत्वा विदुरो दीर्घदर्शिवान् ॥१७॥
धृतराष्ट्रं महाबाहुमब्रवीत्कुरुसंसदि ।
राजन् परीतकालास्ते पुत्राः सर्वे परन्तप ॥ १८ ॥
अशक्यमयशस्यं च कर्तुं कर्म समुद्यताः ।
इमं हि पुण्डरीकाक्षमभिभूय प्रसह्य च ॥ १९ ॥
निग्रहीतुं किलेच्छन्ति सहिता वासवानुजम् ।
इमं पुरुषशार्दूलमप्रधृष्यं दुरासदम् ॥ २० ॥
आसाद्य न भविष्यन्ति पतङ्गा इव पावकम् ।
अयमिच्छन् हि तान्सर्वान्युध्यमानान् जनार्दनः॥२१
सिंहो नागानिव क्रुद्धो गमयेद्यमसादनम् ।
न त्वयं निन्दितं कर्म कुर्यात्पापं कथंचन ॥ २२ ॥
न च धर्मादपक्रामेदच्युतः पुरुषोत्तमः ।
विदुरेणैवमुक्ते तु केशवो वाक्यमब्रवीत् ॥ २३ ॥
धृतराष्ट्रमभिप्रेक्ष्य सुहृदां शृण्वतां मिथः ।
राजन्नेते यदि क्रुद्धा मां निगृह्णीयुरोजसा ॥ २४ ॥
एते वा मामहं वैनाननुजानीहि पार्थिव ।
एतान् हि सर्वान्संरब्धान्नियन्तुमहमुत्सहे ॥ २५ ॥
न त्वहं निन्दितं कर्म कुर्यां पापं कथंचन ।
पाण्डवार्थे हि लुभ्यन्तः स्वार्थान् हास्यन्ति ते सुताः॥२६
एते चेदेवमिच्छन्ति कृतकार्यो युधिष्ठिरः ।
अद्यैव ह्यहमेनांश्च ये चैनाननु भारत ॥ २७ ॥
निगृह्य राजन्पार्थेभ्यो दद्यां किं दुष्कृतं भवेत् ।
इदं तु न प्रवर्तेयं निन्दितं कर्म भारत ॥ २८ ॥
सन्निधौ ते महाराज क्रोधजं पापबुद्धिजम् ।
एष दुर्योधनो राजन् यथेच्छति तथाऽस्तु तत्॥२९॥
अहं तु सर्वांस्तनयाननुजानामि ते नृप ।
एतच्छ्रुत्वा तु विदुरं धृतराष्ट्रोऽभ्यभाषत ।
क्षिप्रमानय तं पापं राज्यलुब्धं सुयोधनम् ॥ ३० ॥
सहमित्रं सहामात्यं ससोदर्यं सहानुगम् ।
शक्नुयां यदि पन्थानमवतारयितुं पुनः ॥ ३१ ॥
ततो दुर्योधनं क्षत्ता पुनः प्रावेशयत्सभाम् ।
अकामं भ्रातृभिः सार्धं राजभिः परिवारितम् ॥३२॥
अथ दुर्योधनं राजा धृतराष्ट्रोऽभ्यभाषत ।
कर्णदुःशासनाभ्यां च राजभिश्चापि संवृतम् ॥३३॥
नृशंस पापभूयिष्ठ क्षुद्रकर्मसहायवान् ।
पापैः सहायैः संहत्य पापं कर्म चिकीर्षसि ॥ ३४ ॥
अशक्यमयशस्यं च सद्भिश्चापि विगर्हितम् ।
यथा त्वादृशको मूढो व्यवस्येत् कुलपांसनः ॥३५॥
त्वमिमं पुण्डरीकाक्षमप्रधृष्यं दुरासदम् ।
पापैः सहायैः संहत्य निग्रहीतुं किलेच्छसि ॥३६॥
यो न शक्यो बलात्कर्तुं देवैरपि सवासवैः ।
तं त्वं प्रार्थयसे मन्द बालश्चन्द्रमसं यथा ॥ ३७ ॥
देवैर्मनुष्यैर्गन्धर्वैरसुरैरुरगैश्च यः ।
न सोढुं समरे शक्यस्तं न बुद्ध्यसि केशवम् ॥३८॥
दुर्ग्राह्यः पाणिना वायुर्दुस्पर्शः पाणिना शशी ।
दुर्धरा पृथिवी मूर्ध्ना दुर्ग्राह्यः केशवो बलात् ॥३९॥
इत्युक्ते धृतराष्ट्रेण क्षत्ताऽपि विदुरोऽब्रवीत् ।
दुर्योधनमभिप्रेत्य धार्तराष्ट्रममर्षणम् ॥ ४० ॥

**विदुर उवाच—**

दुर्योधन निबोधेदं वचनं मम सांप्रतम् ।
सौभद्वारे वानरेन्द्रो द्विविदो नाम नामतः ।
शिलावर्षेण महता छादयामास केशवम् ॥ ४१ ॥

---

ऋषभे श्रेष्ठे ॥ ७ ॥ क्रोशतो निषेधं कुर्वतोऽनादरे षष्ठी ॥ ९ ॥ कविः पण्डितः ॥ १० ॥

[ नील० ] कर्म दूतनिग्रहाख्यम् ॥१४॥ विकुर्वते विकारं कलहाख्यं कुर्वते ॥ १५ ॥ अशक्यं न च कर्तुं शक्यम् ॥ १९ ॥ वासवानुजं विष्णुं त्रिविक्रममित्यर्थः ॥२०॥ न भविष्यन्ति मरिष्यन्ति ॥ २१ ॥ पाण्डवार्थे पाण्डवधने लुभ्यन्तः लोभं कुर्वन्तः ॥ २६ ॥ इदं तु कर्म कर्तुमितिशेषः ॥२८॥ पन्थानमवतारयितुं सत्पथे निवेशयितुम् ॥ ३१ ॥

[ अर्जु० ] नचावाप्यं न च प्राप्यम् ॥ १५ ॥ [ अर्धं राज्यं दातव्यमिति । ] काममन्युभ्यां मन्युः क्रोधः ॥१६॥

ग्रहीतुकामो विक्रम्य सर्वयत्नेन माधवम् ।
ग्रहीतुं नाशकच्चैनं तं त्वं प्रार्थयसे बलात् ॥ ४२ ॥
प्राग्ज्योतिषगतं शौरिं नरकः सह दानवैः ।
ग्रहीतुं नाशकत्तत्र तं त्वं प्रार्थयसे बलात् ॥ ४३ ॥
अनेकयुगवर्षायुर्निहत्य नरकं मृधे ।
नीत्वा कन्यासहस्राणि उपयेमे यथाविधि ॥ ४४ ॥
निर्मोचने षट्सहस्राः पाशैर्बद्धा महासुराः ।
ग्रहीतुं नाशकंश्चैनं तं त्वं प्रार्थयसे बलात् ॥ ४५ ॥
अनेन हि हता बाल्ये पूतना शकुनी तथा ।
गोवर्धनो धारितश्च गवार्थे भरतर्षभ ॥ ४६ ॥
अरिष्टो धेनुकश्चैव चाणूरश्च महाबलः ।
अश्वराजश्च निहतः कंसश्चारिष्टमाचरन् ॥ ४७ ॥
जरासंधश्च वक्रश्च शिशुपालश्च वीर्यवान् ।
बाणश्च निहतः संख्ये राजानश्च निषूदिताः ॥४८॥
वरुणो निर्जितो राजा पावकश्चामितौजसा ।
पारिजातं च हरता जितः साक्षाच्छचीपतिः ॥४९॥
एकार्णवे च स्वपता निहतौ मधुकैटभौ ।
जन्मान्तरमुपागम्य हयग्रीवस्तथा हतः ॥ ५० ॥
अयं कर्ता न क्रियते कारणं चापि पौरुषे ।
यद्यदिच्छेदयं शौरिस्तत्तत्कुर्यादयत्नतः ॥ ५१ ॥
तं न बुध्यसि गोविन्दं घोरविक्रममच्युतम् ।
आशीविषमिव क्रुद्धं तेजोराशिमनिन्दितम् ॥ ५२ ॥
प्रधर्षयन्महाबाहुं कृष्णमक्लिष्टकारिणम् ।
पतङ्गोऽग्निमिवासाद्य सामात्यो न भविष्यसि ॥५३॥

इति श्रीमहाभारते उद्योगपर्वणि त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

## एकत्रिंशदधिकशततमोऽध्यायः १३१

दुर्योधनादीन्भीषयितुं कुरुसभायां भगवता विश्वरूपं प्रदर्श्य ततः प्रस्थानम् ॥ १ ॥ भगवत्प्रसादाल्लब्धदिव्यदृष्ट्या तत्पश्यता धृतराष्ट्रेण भगवते शममिच्छतोऽप्यात्मनः पुत्रेष्वनीशत्वकथनं भगवता सभ्येषु तत्ख्यापनं च ॥ २ ॥

**वैशम्पायन उवाच—**

विदुरेणैवमुक्तस्तु केशवः शत्रुपूगहा ।
दुर्योधनं धार्तराष्ट्रमभ्यभाषत वीर्यवान् ॥ १ ॥
एकोऽहमिति यन्मोहान्मन्यसे मां सुयोधन ।
परिभूय सुदुर्बुद्धे ग्रहीतुं मां चिकीर्षसि ॥ २ ॥
इहैव पाण्डवाः सर्वे तथैवान्धकवृष्णयः ।
इहादित्याश्च रुद्राश्च वसवश्च महर्षिभिः ॥ ३ ॥
एवमुक्त्वा जहासोच्चैः केशवः परवीरहा ।
तस्य संस्मयतः शौरेर्विद्युद्रूपा महात्मनः ॥ ४ ॥
अङ्गुष्ठमात्रास्त्रिदशा मुमुचुः पावकार्चिषः ।
अस्य ब्रह्मा ललाटस्थो रुद्रो वक्षसि चाभवत् ॥५॥
लोकपाला भुजेष्वासन्नग्निरास्यादजायत ।
आदित्याश्चैव साध्याश्च वसवोऽथाश्विनावपि ॥ ६ ॥
मरुतश्च सहेन्द्रेण विश्वेदेवास्तथैव च ।
बभूवुश्चैकरूपाणि यक्षगन्धर्वरक्षसाम् ॥ ७ ॥
प्रादुरास्तां तथा दोर्भ्यां संकर्षणधनञ्जयौ ।
दक्षिणेऽथार्जुनो धन्वी हली रामश्च सव्यतः ॥ ८ ॥
भीमो युधिष्ठिरश्चैव माद्रीपुत्रौ च पृष्ठतः ।
अन्धका वृष्णयश्चैव प्रद्युम्नप्रमुखास्ततः ॥ ९ ॥
अग्रे बभूवुः कृष्णस्य समुद्यतमहायुधाः ।
शङ्खचक्रगदाशक्तिशार्ङ्गलाङ्गलनन्दकाः ॥ १० ॥

---

प्रसह्य हठेनाभिभूय इत्यन्वयः ॥ १९ ॥ अनु अनुगताः ॥ २७ ॥ त्वादृशक इति कुत्सितार्थे कः । कुलपांसनः कूलदूषणः ॥ ३५ ॥ सौभद्वारे सौभं पुरम् ॥ ४१ ॥

[ नील० ] निर्मोचने नगरविशेषे ॥ ४५ ॥

इति उद्यो० नैल० भा० भा० त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

[ अर्जु० ] निर्मोचने पुरे । जरासन्धो भीमद्वारा बाणो बाहुच्छेदनाद्धतप्रायः । परे वा बाणरक्षिणः ॥४८॥ स्वपता शयानेन जन्मान्तरे ॥ ५० ॥

इति श्रीम० मर्जुनमि० मुद्यो० त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

[ लक्षा० ] उद्धर्षयन् महाबाहुमित्यत्र उत्कर्षेण धर्षयन्निति पदच्छेदः ॥ ५३ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे त्रिंशदधिकशततमोऽध्यायः ॥ १३० ॥

[ नील० ] विदुरेणेति ॥ १ ॥

[ अर्जु० ] शत्रुपूगहा शत्रुसमूहहन्ता ॥ १ ॥ धन्वी गृहीतचापः । हली गृहीतहलः ॥ ८ ॥

---

१ म. परवीरहा । म. प्रथनाशरम्—यदा यदा पश्यसि वानरध्वजं धनुर्धरं पाण्डवमध्यमं रणे । गदा प्रहस्तं भ्रमतं वृकोदरं तदा तदा दास्यासि सर्वमेदिनीम् । इत्यधिकम् । ४ म. विद्युद्रूपं । ५ म. तथा ब्रह्मा । १० म. आविर्बभूवुः ।

अदृश्यन्तोद्यतान्येव सर्वप्रहरणानि च ।
नानाबाहुषु कृष्णस्य दीप्यमानानि सर्वशः ॥११॥
नेत्राभ्यां नस्ततश्चैव श्रोत्राभ्यां च समन्ततः ।
प्रादुरासन्महारौद्राः सधूमाः पावकार्चिषः ॥ १२ ॥
रोमकूपेषु च तथा सूर्यस्येव मरीचयः ।
तं दृष्ट्वा घोरमात्मानं केशवस्य महात्मनः ॥ १३ ॥
न्यमीलयन्त नेत्राणि राजानस्त्रस्तचेतसः ।
ऋते द्रोणं च भीष्मं च विदुरं च महामतिम् ॥१४॥
संजयं च महाभागमृषींश्चैव तपोधनान् ।
प्रादात्तेषां स भगवान् दिव्यं चक्षुर्जनार्दनः ॥१५॥
तद्दृष्ट्वा महदाश्चर्यं माधवस्य सभातले ।
देवदुन्दुभयो नेदुः पुष्पवर्षं पपात च ॥ १६ ॥

धृतराष्ट्र उवाच—

त्वमेव पुण्डरीकाक्ष सर्वस्य जगतो हितः ।
तस्मात्त्वं यादवश्रेष्ठ प्रसादं कर्तुमर्हसि ॥ १७ ॥
भवन्मम नेत्राणामन्तर्धानं वृणे पुनः ।
भवन्तं द्रष्टुमिच्छामि नान्यं द्रष्टुमिहोत्सहे ॥ १८ ॥
ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनार्दनः ।
अदृश्यमाने नेत्रे द्वे भवेतां कुरुनन्दन ॥ १९ ॥
तत्राद्भुतं महाराज धृतराष्ट्रश्च चक्षुषी ।
लब्धवान्वासुदेवाच्च विश्वरूपदिदृक्षया ॥ २० ॥
लब्धचक्षुषमासीनं धृतराष्ट्रं नराधिपाः ।
विस्मिता ऋषिभिः सार्धं तुष्टुवुर्मधुसूदनम् ॥ २१ ॥
चचाल च मही कृत्स्ना सागरश्चापि चुक्षुभे ।
विस्मयं परमं जग्मुः पार्थिवा भरतर्षभ ॥ २२ ॥
ततः स पुरुषव्याघ्रः संजहार वपुः स्वकम् ।
तां दिव्यामद्भुतां चित्रामृद्धिमत्तामरिन्दमः ॥ २३ ॥
ततः सात्यकिमादाय पाणौ हार्दिक्यमेव च ।
ऋषिभिस्तैरनुज्ञातो निर्ययौ मधुसूदनः ॥ २४ ॥
ऋषयोऽन्तर्हिता जग्मुस्ततस्ते नारदादयः ।
तस्मिन्कोलाहले वृत्ते तदद्भुतमिवाभवत् ॥ २५ ॥
तं प्रस्थितमभिप्रेक्ष्य कौरवाः सह राजभिः ।
अनुजग्मुर्नरव्याघ्रं देवा इव शतक्रतुम् ॥ २६ ॥
अचिन्तयन्नमेयात्मा सर्वं तद्राजमण्डलम् ।
निश्चक्राम ततः शौरिः सधूम इव पावकः ॥ २७ ॥

---

[ नील० ] महामतिं धृतराष्ट्रम् ॥ १४ ॥ अदृश्यमाने इतरैरिति शेषः ॥ १९ ॥

[ अर्जु० ] नस्ततो नासिकारन्ध्रतः आर्षस्तकारः । अर्चिषो ज्वालाः ॥ १२ ॥ आत्मानं रूपम् ॥ १३ ॥

---

१२ म. विधूमाः । १५ म. ऋषींश्चापि । १७–२१ म. न सन्ति । २२ म. सागराश्चापि चुक्षुभुः । २३ म. मद्भुतामृद्धिं दर्शयित्वा ह्यरिन्दमः । २५ म. यत्र ते नारदादयः । म. तदद्भुतमभूत्तदा । २६ म. नरव्याघ्रा । २७ म. राजसंसदि ।

---

१३ स्य पूर्वार्धादनन्तरं म.—

सहस्रचरणः श्रीमान् शतबाहुः सहस्रदृक् ।
तलानि नागलोकश्च गुल्फाधो ददृशे तदा ॥ १ ॥
चन्द्रसूर्यौ तथा नेत्रे ग्रहा वै सर्वतः स्थिताः ।
ऊर्ध्वलोकाश्च सर्वेऽपि कुक्षौ तस्य व्यवस्थिताः ॥ २ ॥
सरितः सागरश्चैव स्वेदस्तस्य महात्मनः ।
अस्थीनि पर्वताः सर्वे वृक्षा रोमाणि तस्य हि ॥ ३ ॥
निमेषणं रात्र्यहनी जिह्वायां शारदा तथा ।
पुराणन्यायमीमांसा मुखे तस्य व्यवस्थिताः ॥ ४ ॥
तले च ददृशे भूमिः सशैलवनकानना ।
विष्वग्रूपो विश्वकायो विश्वात्मा विश्वभृत्तथा ॥ ५ ॥
नैवास्ति सकले लोके यन्न दृष्टं महात्मभिः ।
सूक्ष्मात्सूक्ष्मं च यद्वस्तु त्रसं च स्थाणुरेव च ॥ ६ ॥
अनन्तमूर्तौ ददृशे गोविन्दे तन्महात्मभिः ।
सूर्यकोटिप्रतीकाशे विश्वेशे पुरुषोत्तमे ॥ ७ ॥
अष्टमूर्तिमहेशश्च शक्तिभिः समलं ततः ।
संस्तुतः पार्षदैर्मुक्तैर्भुक्तिमुक्तिप्रदायिभिः ॥ ८ ॥
ब्रह्मा महर्षिभिः सार्धं स्तुवन्वै पुरुषोत्तमम् ।
नान्तं हि ददृशे कश्चित् न चादिं न च मध्यकम् ॥ ९ ॥
अनन्तरूपो विश्वात्मा विश्वं व्याप्य व्यवस्थितः ।
तां मूर्तिं पूजयामासुर्ब्रह्माद्या देवतागणाः ॥ १० ॥
ऋषयश्च महाभागा योगिचिन्त्यां महात्मनः ।
अर्घादिभिश्च सत्कारैः संपूज्य तुष्टुवुः सदा ॥ ११ ॥ इत्यधिकम्

१४ चतुर्दशस्याग्रे म.—

ततो देवाः सगन्धर्वाः किंनराश्च महोरगाः ।
ऋषयश्च महाभागा लोकपालैः समन्विताः ॥
प्रणम्य शिरसा देवं तुष्टुवुः प्राञ्जलि स्थिताः ।
क्रोधं प्रभो संहार संहर स्वं
रूपं च यद्दर्शितमात्मसंस्थम् ।
यावस्त्विमे देवगणैः समेता
लोकाः समस्ता भुवि नाशमीयुः ॥
त्वं च कर्ता विकर्ता च त्वमेव परिरक्षसे ।
त्वयाऽथाप्तमिदं सर्वं जगत्स्थावरजङ्गमम् ॥
कियन्मात्रा महीपालाः किंवीर्याः किंपराक्रमाः ।
येषामर्थे महाबाहो दिव्यं रूपं प्रदर्शितवान् ॥
एवमुच्चारिता वाचः सह देवैर्विभुस्तथा । इत्यधिकम् ।

ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
हेमजालविचित्रेण लघुना मेघनादिना ॥ २८ ॥
सूपस्करेण शुभ्रेण वैयाघ्रेण वरूथिना ।
शैब्यसुग्रीवयुक्तेन प्रत्यदृश्यत दारुकः ॥ २९ ॥
तथैव रथमास्थाय कृतवर्मा महारथः ।
वृष्णीनां संमतो वीरो हार्दिक्यः समदृश्यत ॥३०॥
उपस्थितरथं शौरिं प्रयास्यन्तमरिन्दमम् ।
धृतराष्ट्रो महाराजः पुनरेवाभ्यभाषत ॥ ३१ ॥
यावद्बलं मे पुत्रेषु पश्यतस्ते जनार्दन ।
प्रत्यक्षं ते न ते किंचित्परोक्षं शत्रुकर्शन ॥ ३२ ॥
कुरूणां शममिच्छन्तं यतमानं च केशव ।
विदित्वैतामवस्थां मे नाभिशङ्कितुमर्हसि ॥ ३३ ॥
न मे पापोऽस्त्यभिप्रायः पाण्डवान्प्रति केशव ।
ज्ञातमेव हितं वाक्यं यन्मयोक्तः सुयोधनः ॥ ३४ ॥
जानन्ति कुरवः सर्वे राजानश्चैव पार्थिवाः ।
शमे प्रयतमानं मां सर्वयत्नेन माधव ॥ ३५ ॥

**वैशम्पायन उवाच—**

ततोऽब्रवीन्महाबाहुर्धृतराष्ट्रं जनार्दनः ।
द्रोणं पितामहं भीष्मं क्षत्तारं बाह्लिकं कृपम् ॥३६॥
प्रत्यक्षमेतद्भवतां यद्वृत्तं कुरुसंसदि ।
यथा चाशिष्टवन्मन्दो रोषादद्य समुत्थितः ॥ ३७ ॥
वदत्यनीशमात्मानं धृतराष्ट्रो महीपतिः ।
आपृच्छे भवतः सर्वान् गमिष्यामि युधिष्ठिरम् ॥३८॥
आमन्त्र्य प्रस्थितं शौरिं रथस्थं पुरुषर्षभ ।
अनुजग्मुर्महेष्वासाः प्रवीरा भरतर्षभाः ॥ ३९ ॥
भीष्मो द्रोणः कृपः क्षत्ता धृतराष्ट्रोऽथ बाह्लिकः ।
अश्वत्थामा विकर्णश्च युयुत्सुश्च महारथः ॥ ४० ॥
ततो रथेन शुभ्रेण महता किङ्किणीकिना ।
कुरूणां पश्यतां द्रष्टुं स्वसारं स पितुर्ययौ ॥ ४१ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

## द्वात्रिंशदधिकशततमोऽध्यायः १३२

पृथागृहगतेन भगवता तस्यै सभावृत्तान्तकथनम् ॥ १ ॥ तया तं प्रति युधिष्ठिराय क्षत्रियोचिताचारचरणसंदेशः ॥ २ ॥

**वैशम्पायन उवाच—**

प्रविश्याथ गृहं तस्याश्चरणावभिवाद्य च ।
आचख्यौ तत्समासेन यद्वृत्तं कुरुसंसदि ॥ १ ॥

**वासुदेव उवाच—**

उक्तं बहुविधं वाक्यं ग्रहणीयं सहेतुकम् ।
ऋषिभिश्चैव च मया न चासौ तद्गृहीतवान् ॥ २ ॥
कालपक्वमिदं सर्वं सुयोधनवशानुगम् ।
आपृच्छे भवतीं शीघ्रं प्रयास्ये पाण्डवान्प्रति ॥ ३ ॥
किं वाच्याः पाण्डवेयास्ते भवत्या वचनान्मया ।
तद्ब्रूहि त्वं महाप्राज्ञे शुश्रूषे वचनं तव ॥ ४ ॥

**कुन्त्युवाच—**

ब्रूयाः केशव राजानं धर्मात्मानं युधिष्ठिरम् ।
भूयांस्ते हीयते धर्मो मा पुत्रक वृथा कृथाः ॥ ५ ॥
श्रोत्रियस्येव ते राजन्मन्दकस्याविपश्चितः ।
अनुवाकहता बुद्धिर्धर्ममेवैकमीक्षते ॥ ६ ॥

---

[ नील० ] वरूथिना रथगुप्तिमता ॥ २९ ॥ मन्दो दुर्योधनः ॥ ३७ ॥ किङ्किणीकं क्षुद्रघण्टिकाजालं तद्वता किङ्किणीकिना ॥ ४१ ॥

इति श्रीनैल० उद्यो० भारत० एकत्रिंशदधिकशततमोऽध्यायः ॥१३१॥

[ अर्जु० ] लघुना शीघ्रेण ॥२८॥ सूपस्करेण शोभना-भवनेन वैयाघ्रेण व्याघ्रचर्मावृतेन वरूथिना गुप्तिमता ॥ २९ ॥ यावद्बलं नैते मामनुवर्तन्त इत्यर्थः ॥३२॥ महाबाहुः कृष्णः ॥ ३६ ॥

इति श्रीम० मर्जुन० उद्यो० एकत्रिंशदधिकशततमोऽध्यायः ॥१३१॥

[ लक्षा० ] यावद्बलं मे पुत्रेष्वित्यत्र शममिच्छन्तं मे पुत्रेषु यावद्बलं यथाशक्ति यतमानं मां पश्यसीति संबन्धः ॥ ३२ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे एकत्रिंशदधिकशततमोऽध्यायः ॥ १३१ ॥

[ नील० ] प्रविश्येति ॥ १ ॥ भूयान् पृथ्वीपालनजो धर्मः ॥ ५ ॥ श्रोत्रियस्य वेदाध्यायिनः । मन्दकस्य अर्थ-ज्ञानशून्यस्य । अनुवाकेन अत्यन्तं वेदाक्षरावृत्त्या । हता नष्टा ॥ ६ ॥

---

३३ म. अस्मात्परं–निर्गुणैरपि गोविन्द पुत्रैरुपकृतं मम । त्रैलोक्यनाथ पादौ ते यदयत्नान्नमस्कृतौ । इत्यधिकम् । ३९ म. पुरुषर्षभ । ४१ म. पश्यतां प्रायात्पादौ द्रष्टुं पितृष्वसुः । अध्यायः ॥ १३१ ॥
६ म. बुद्धिर्नैषा तत्त्वार्थदर्शिनी ।

अङ्गावेक्षस्व धर्मं त्वं यथा सृष्टः स्वयंभुवा ।
बाहुभ्यां क्षत्रियाः सृष्टा बाहुवीर्योपजीविनः ॥७॥
क्रूराय कर्मणे नित्यं प्रजानां परिपालने ।
शृणु चात्रोपमामेकां या वृद्धेभ्यः श्रुता मया ॥ ८ ॥
मुचुकुन्दस्य राजर्षेरददत्पृथिवीमिमाम् ।
पुरा वैश्रवणः प्रीतो न चासौ तद्गृहीतवान् ॥ ९ ॥
बाहुवीर्यार्जितं राज्यमश्नीयामिति कामये ।
ततो वैश्रवणः प्रीतो विस्मितः समपद्यत ॥ १० ॥
मुचुकुंदस्ततो राजा सोऽन्वशासद्वसुंधराम् ।
बाहुवीर्योर्जितां सम्यक् क्षत्रधर्ममनुव्रतः ॥ ११ ॥
यं हि धर्मं चरन्तीह प्रजा राज्ञा सुरक्षिताः ।
चतुर्थं तस्य धर्मस्य राजा विन्देत भारत ॥ १२ ॥
राजा चरति चेद्धर्मं देवत्वायैव कल्पते ।
स चेदधर्मं चरति नरकायैव गच्छति ॥ १३ ॥
दण्डनीतिश्च धर्मेभ्यश्चातुर्वर्ण्यं नियच्छति ।
प्रयुक्ता स्वामिना सम्यगधर्मेभ्यश्च यच्छति ॥ १४ ॥
दण्डनीत्यां यदा राजा सम्यक् कात्स्न्येन वर्तते ।
तदा कृतयुगं नाम कालः श्रेष्ठः प्रवर्तते ॥ १५ ॥
कालो वा कारणं राज्ञो राजा वा कालकारणम् ।
इति ते संशयो मा भूद्राजा कालस्य कारणम् ॥१६॥
राजा कृतयुगस्रष्टा त्रेताया द्वापरस्य च ।
युगस्य च चतुर्थस्य राजा भवति कारणम् ॥१७॥
कृतस्य करणाद्राजा स्वर्गमत्यन्तमश्नुते ।
त्रेतायाः करणाद्राजा स्वर्गमत्यन्तमश्नुते ॥ १८ ॥
प्रवर्तनाद्द्वापरस्य यथाभागमुपाश्नुते ।
कलेः प्रवर्तनाद्राजा पापमत्यन्तमश्नुते ॥ १९ ॥
ततो वसति दुष्कर्मा नरके शाश्वतीः समाः ।
राजदोषेण हि जगत्स्पृश्यते जगतः स च ॥ २० ॥
राजधर्मानवेक्षस्व पितृपैतामहोचितान् ।
नैतद्राजर्षिवृत्तं हि यत्र त्वं स्थातुमिच्छसि ॥ २१ ॥
न हि वैक्लव्यसंसृष्ट आनृशंस्यव्यवस्थितः ।
प्रजापालनसंभूतं फलं किंचन लब्धवान् ॥ २२ ॥
न ह्येतामाशिषं पाण्डुर्न चाहं न पितामहः ।
प्रयुक्तवन्तः पूर्वं ते यया चरसि मेधया ॥ २३ ॥
यज्ञो दानं तपः शौर्यं प्रज्ञासंतानमेव च ।
माहात्म्यं बलमोजश्च नित्यमाशंसितं मया ॥ २४ ॥
नित्यं स्वाहा स्वधा नित्यं दद्युर्मानुषदेवताः ।
दीर्घमायुर्धनं पुत्रान् सम्यगाराधिताः शुभाः ॥२५॥
पुत्रेष्वाशासते नित्यं पितरो दैवतानि च ।
दानमध्ययनं यज्ञः प्रजानां परिपालनम् ॥ २६ ॥
एतद्धर्ममधर्मं वा जन्मनैवाभ्यजायथाः ।
ते तु वैद्याः कुले जाता अवृत्त्या तात पीडिताः ॥२७॥

---

[ अर्जु० ] श्रोत्रियस्य छन्दोमात्राध्येतुः मन्दकस्य स्वल्पमतेः अनुवाको वाचकः शब्द इति यावत् ॥ ६ ॥

[ सर्व० ] अनुवाको यजुर्वेदाध्यायः ॥ ६ ॥

[ लक्षा० ] अनुवाकहता बुद्धिरित्यत्र अनुवाको धर्मकाण्डस्थसूक्तवाक्यम् ॥ ६ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

[ नील० ] दण्डनीतिः स्वामिना प्रयुक्तेति संबन्धः धर्मेभ्यः धर्मार्थं नियच्छति निबन्धं करोति दण्डनीतिरेव ॥ १४ ॥ राजा धर्ममधर्मं वा प्रवर्तयन् कृतत्रेतादियुगरूपस्य कालस्य कारणम् । एवं च सर्वस्मिन्नपि काले धर्मादितारतम्याद्युगचतुष्टयमस्तीति भावः ॥ १६ ॥ जगतः दोषेण स च राजा स्पृश्यते ॥ २० ॥ फलं न लब्धवान्प्राप्तवान् असीति शेषः ॥ २२ ॥ नित्यमिति मानुषाश्च देवताश्च सम्यगाराधिताः सत्यः इह लोके आयुरादीनि परलोकसाधनानि स्वधादीनि सत्कर्माणि च दद्युः ॥२५॥

एतत् मद्वाक्यं धर्मं धर्मयुक्तमधर्मं वा जन्मनैव स्वभावत एव अभ्यजायथाः अभिजानीषे हेकृष्ण । ते तु पाण्डवास्तु वैद्याः विद्यावन्तः ॥ २७ ॥

[ अर्जु० ] अंग हे उरस्तः उरसः ॥ ७ ॥ क्रूराय हिंसात्मकाय ॥ ८ ॥ वैश्रवणः कुबेरः । तस्य राजराजत्वात् राज्यदाने प्रभुत्वम् ॥ ९ ॥ अत्यन्तमक्षयम् ॥ १८ ॥ यथाभागं पुण्यपापे समभागे ॥ १९ ॥ जगतो दोषेणेत्यनुषज्यते ॥ २० ॥ वैक्लव्यम् परदुःखैर्विक्लवता । आनृशंस्यमहिंसा । दुष्टशमनाभावेन प्रजापालनस्य तस्मिन्नसंभवात् ॥ २२ ॥ मेधा भूतथा शेषेत्यर्थः (?) ॥ २३ ॥ स्वाहा दैवं स्वधा पित्र्यं येऽदुर्दत्तवन्तः ते मानुषा एवं देवाः सम्यक् आराधिताः मानुषैरितिशेषः ॥ २५ ॥ धर्म्यमधर्म्यं वा अभि लक्षीकृत्य अजायथाः जातोऽसि [ सुरमत ] ॥ २६ ॥ वैद्याः विद्यां विदन्त्यधीयते वेति । अवृत्त्या जीवनाभावेन ॥ २७ ॥

[ सर्व० ] जगतः स च दोषेण स्पृश्यते ॥२०॥ आनृ-

---

१३ म. नरकायैव कल्पते । १४ म. दण्डनीतिस्त्वधर्मेण ।

यत्र दानपतिं शूरं क्षुधिताः पृथिवीचराः ।
प्राप्य तुष्टाः प्रतिष्ठन्ते धर्मः कोऽभ्यधिकस्ततः ॥२८॥
दानेनान्यं बलेनान्यं तथा सूनृतया परम् ।
सर्वतः प्रतिगृह्णीयाद्राज्यं प्राप्येह धार्मिकः ॥ २९ ॥
ब्राह्मणः प्रचरेद्भैक्षं क्षत्रियः परिपालयेत् ।
वैश्यो धनार्जनं कुर्याच्छूद्रः परिचरेच्च तान् ॥३०॥
भैक्षं विप्रतिषिद्धं ते कृषिर्नैवोपपद्यते ।
क्षत्रियोसि क्षतात्त्राता बाहुवीर्योपजीविता ॥३१॥
पित्र्यमंशं महाबाहो निमग्नं पुनरुद्धर ।
साम्ना भेदेन दानेन दण्डेनाथ नयेन वा ॥ ३२ ॥
इतो दुःखतरं किं नु यदहं दीनबान्धवा ।
परपिण्डमुदीक्षे वै त्वां सूत्वा मित्रनन्दन ॥ ३३ ॥
युद्धयस्व राजधर्मेण मा निमज्जीः पितामहान् ।
मा गमः क्षीणपुण्यस्त्वं सानुजः पापिकां गतिम् ॥३४॥

इति श्रीमहाभारते उद्योगपर्वणि द्वात्रिंशदधिकशततमोऽध्यायः ॥ १३२ ॥

## त्रयस्त्रिंशदधिकशततमोऽध्यायः १३३

युधिष्ठिरमिव क्षत्रियोचिताचारपराङ्मुखं परपरिभूतं स्वपुत्रं विदुला नाम राजन्या बहु गर्हयित्वा शत्रुजये प्रावर्तयत्ततोऽप्यधिकं भवता युधिष्ठिरो वक्तव्य इत्युक्त्वा कुन्त्या श्रीकृष्णाय विदुलातत्पुत्रयोः संवादकथनम् ॥ १ ॥

**कुन्त्युवाच—**

अत्राप्युदाहरन्तीममितिहासं पुरातनम् ।
विदुलायाश्च संवादं पुत्रस्य च परंतप ॥ १ ॥
ततः श्रेयश्च भूयश्च यथावद्वक्तुमर्हसि ।
यशस्विनी मन्युमती कुले जाता विभावरी ॥ २ ॥
क्षत्रधर्मरता दान्ता विदुला दीर्घदर्शिनी ।
विश्रुता राजसंसत्सु श्रुतवाक्या बहुश्रुता ॥ ३ ॥
विदुला नाम राजन्या जगर्हे पुत्रमौरसम् ।
निर्जितम् सिन्धुराजेन शयानं दीनचेतसम् ॥ ४ ॥

**विदुलोवाच—**

अनन्दन मया जात द्विषतां हर्षवर्धन ।
न मया त्वं न पित्रा च जातः क्वाभ्यागतो ह्यसि॥५॥
निर्मन्युश्चाप्यसंख्येयः पुरुषः क्लीबसाधनः ।
यावज्जीवं निराशोऽसि कल्याणाय धुरं वह ॥ ६ ॥
माऽऽत्मानमवमन्यस्व मैनमल्पेन बीभरः ।
मनः कृत्वा सुकल्याणं मा भैस्त्वं प्रतिसंहर ॥ ७ ॥

---

शंस्यं सर्वत्र लभते लभ्यते ॥ २२ ॥ स्वधास्वाहाकारेण देवताः । अव्ययत्वाद्विभक्त्यभावः । एवं स्वधाकारेण मानुषाः सेवन्त इति कर्मव्युत्क्रमादन्वयः ॥ २५ ॥ एवमुक्तप्रकारं धर्ममधर्मं वा संतम् जन्मनैवाभिगम्य प्राप्याजायथाः । तद्यूयं वैद्याः विद्यावन्तः । अवृत्त्या जीवनाभावेन ॥ २७ ॥

[ नील० ] दानपतिं पालनाधिकारिणं देङ्पालने इत्यस्य रूपम् ॥ २८ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि द्वात्रिंसदधिकशततमोऽध्यायः ॥ १३२ ॥

[ अर्जु० ] दानपतिं दातारं पृथिवीचराः पथिकाः अतिथय इति यावत् ॥ २८ ॥ सूनृतया प्रियया सत्यया च वाचा । प्रतिगृह्णीयादर्जयेत् ॥२९॥ क्षतात् त्राणात् क्षतं दस्युव्याघ्रादिकम् ॥३१॥ सूत्वा प्रसूय ॥३३॥ राजधर्मेण युध्यस्व । पितामहान् पूर्वपुरुषान् मा निमज्जीः ॥ ३४ ॥

इति श्रीम० मर्जुनमि० उद्यो० द्वात्रिंसदधिकशततमोऽध्यायः ॥१३२॥

[ सर्व० ] राज्यं(?)क्षत्रियं प्राप्य । राजा क्षत्रियमात्रेऽपीति कोषः ॥ २९ ॥

इति श्रीमहा० उद्यो० सर्वज्ञ० द्वात्रिंसदधिकशततमोऽध्यायः ॥ १३२ ॥

[ नील० ] अत्रेति ॥ १ ॥ ततः मदुक्तात् श्रेयः प्रशस्तस्तरं भूयोऽधिकतरं मन्युमती दैन्यवती विभावरी कुपिता । विभावरी रजन्यां च वक्रयोषितीति विश्वः ॥ २ ॥ राजन्या मूर्धाभिषिक्ता । मूर्द्धाभिषिक्तो राजन्य इत्यमरः जगर्हे निन्दितवती ॥ ४ ॥ अनन्दन कुपुत्र कुत्सार्थेऽत्र नञ् ॥ ५ ॥ असंख्येयः अगणनीयः तुच्छत्वात् क्लीबं निर्वीर्यं साधनं बाह्वादिकं यस्य स तथा ॥ ६ ॥ मा बीभरः मा पालय प्रतिसंहर भयमिति शेषः ॥ ७ ॥

[ अर्जु० ] विदुला काचित् क्षत्रिया ॥ ४ ॥ अनन्दन दुःखद अजात अनुत्पन्नत्वात् । उपमापीयम् ॥ ५ ॥ षष्ठोऽङ्गुलिरिव असंख्येयोऽगण्यः क्लीबं क्लीबत्वं तस्य साधनः । कल्याणाय धुरं वह स्वकल्याणाय वह अथवा कल्याणाय धुरं भारं वह ॥ ६ ॥ एवं आत्मानं माबीभरः मा पोषय प्रतिसंहर प्रतिकूलानाच्छादय प्रतिसंस्तरेति पाठे स एवार्थः ॥ ७ ॥

[ सर्व० ] ततो मद्वाक्यात् श्रेयश्च भूयश्च यथावद्वक्तुमर्हसीति ॥ २ ॥ अजाताः कुत्सितजननाः । उपशाखीयः उपशाखायां भवः क्षत्रियाः राजत्वत्तेभ्योऽवरः·········

---

२ म. विभावती । ३ म. श्रुतव.क्या तु भारत । ५ म. अनन्दनमराजानं ।

उत्तिष्ठ हे कापुरुष मा शेष्वैवं पराजितः ।
अमित्रान्नन्दयन्सर्वान्निर्मानो बन्धुशोकदः ॥ ८ ॥
सुपूरा वै कुनदिका सुपूरो मूषिकाञ्जलिः ।
सुसंतोषः कापुरुषः स्वल्पकेनैव तुष्यति ॥ ९ ॥
अप्यहेरारुजन्दंष्ट्रामाश्वेव निधनं व्रज ।
अपि मा संशयं प्राप्य जीवितेऽपि पराक्रमेः॥१०॥
अप्यरेः श्येनवच्छिद्रं पश्येस्त्वं विपरिक्रमन् ।
विवदन्वाऽथवा तूर्ष्णीं व्योम्नीवापरिशङ्कितः॥११॥
त्वमेवं प्रेतवच्छेषे कस्माद्वज्रहतो यथा ।
उत्तिष्ठ हे कापुरुष मा स्वाप्सीः शत्रुनिर्जितः॥१२॥
माऽस्तंगमस्त्वं कृपणो विश्रूयस्व स्वकर्मणा ।
मा मध्ये मा जघन्ये त्वं माऽधोभूस्तिष्ठ गर्जितः॥१३॥
अलातं तिन्दुकस्येव मुहूर्तमपि हि ज्वल ।
मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः ॥ १४ ॥
मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् ।
मा ह स्म कस्यचिद्गेहे जनि राज्ञः खरो मृदुः॥१५॥
कृत्वा मानुष्यकं कर्म सृत्वाऽऽजिं यावदुत्तमम् ।
धर्मस्यानृण्यमाप्नोति न चात्मानं विगर्हते ॥ १६ ॥
अलब्ध्वा यदि वा लब्ध्वा नानुशोचति पण्डितः ।
आनन्तर्यं चारभते न प्राणानां धनाय ते ॥ १७ ॥

---

नं बाह्वादि क्लीबं निरुद्यमं यस्य ॥ ६ ॥ बीभरः । पोषय आत्मानं माभैस्त्वं प्रतिसंहर ॥ ७ ॥

[ लक्षा० ] मैवमल्पेन बीभर इत्यत्र अल्पेन भाग्येन आत्मानं मा बीभरः । भृञ्भरण इति धातोः यङ्लुङ् (?) मध्यमपुरुषैकवचनम् ॥ ७ ॥

[ नील० ] मा शेष्व निरुद्योगो मा भूः ॥ ८ ॥ पराक्रमेः पराक्रमं कुरु ॥ १० ॥ विवदन् शत्रुजयार्थमनेकान् पक्षानुद्भावयन्वा तूर्ष्णीभूतोऽरेश्छिद्रं पश्येः यथा व्योम्नि अपरिशङ्कितः शत्रोराधिक्याद्भयमपश्यन् श्येनस्तद्वत् ॥११॥ विश्रूयस्व ख्यातो भव। मा मध्य इति, सामभेदौ जघन्यमध्यमौ दानमधमो नीच उपायः । दण्डस्तूत्तमः। तत्राद्यत्रयकर्ता मा भूः किंतु गर्जितो दण्डयितैव भवेत्यर्थः ऊर्जित इति वा पाठः ॥ १३ ॥ तिंदुकस्य अलातं यथा दिक्षु स्फुलिङ्गान्विक्षिपति ज्वलति तद्वत् ज्वल दीप्यस्व। परंतु तुषाग्निवदनर्चिर्मा धूमायस्व काकरं खा जिजीविषुरिति पाठान्तरे काकरं खाः काकरमभ्यगारं मा खाः मा नाशय। खै तु स्थैर्ये खदनहिंसयोरिति खायतेरिदं रूपं, काकरङ्ख इति पाठे काकवत् रङ्खति पलायते वा काकरङ्खः । रखिगतावित्यस्य रूपम् ॥ १४ ॥ मा जनि मा उत्पद्यतां खरः कर्कशः। खरीति पाठे खरत्ववानिति स एवार्थः मृदुर्दयालुः ॥ १५ ॥ आजिं संग्रामं सृत्वाऽभिसृत्य मानुष्यकं मनुष्यस्योचितम् ॥ १६ ॥ प्राणानां प्राणाः बलं तत्साध्यानां कार्याणामानंतर्यमविच्छेदेन कार्यधारामारभते इत्यर्थः न धनायते धनमात्मनो नेच्छति तृष्णां त्यजतीत्यर्थः ॥ १७ ॥

[ अर्जु० ] मा शेष्व मास्वपिहि। निर्मानो निरहंकारः ॥ ८ ॥ अप्यहेरारुजन् दंष्ट्रामाश्वेव निधनं व्रज भक्ष्यमाणस्त्वमहेः दंष्ट्रामप्यारुजन् व्यथयन् आशु एव शीघ्रमेव निधनं व्रज ॥ १० ॥ परिक्रमन् परिभ्रमन् तूर्ष्णीं वा व्योम्नि वा अपरिशंकितोऽज्ञातः ॥ ११ ॥ प्रेतवत् मृतवत् ॥१२॥ विश्रूयस्व विख्यातो भव। मा मध्य इत्यादि मध्यमाधमातिनीचेषु याच्ञां विहाय ऊर्जितस्तिष्ठ ॥१३॥ अलातमुल्मुकं यथा स्फुलिङ्गैर्दिशो व्याप्य ज्वलति तथा त्वमपि प्रतापैर्ज्वल। मा तुषाग्निरिवानर्चिर्धूमायस्व जिजीविषुः। काकरङ्खाजिजीविषुः इति च । काकरंकोऽग्निस्तस्याकर इत्यर्थः अग्न्यगारं माखाः माखादीः दीरित्यस्यार्षो लोपः। तथाच आत्मानं प्रतापागारं मा खादीरित्यर्थः। अथवा काकरङ्खा इति काकवत् रङ्खति रखि गतौ धातुरस्वन्(?)यथा काकः करतालिकामात्रेण पलायत इति काकरङ्खा एवं भवान् मा भव । जिजीविषुर्जीवनार्थी ॥ १४ ॥ माहास्मेति राज्ञः कस्य चिद्गेहे निरुत्पत्तिः मास्म भूयात्। खरीमृदुः गर्दभीवत् वाचा कर्कशः क्रियया मृदुः अथवा कस्यचित् राज्ञो जनिरुत्पत्तिः खरी खरैव केवला मा स्मभूयात् किं तु खरसाध्ये खरो मृदुसाध्ये मृदुरिति यावत् ॥ १५ ॥ मानुष्यकं मनुष्यजात्युचितं श्रित्वा सेवित्वा आजिं बलं यावदुत्तमम् सकलमुत्तमम् ॥ १६ ॥ आनन्तर्यमनन्तरं कार्यं धनायते धनवदाचरति तृष्णां करोतीत्यर्थः ॥ १७ ॥

[ सर्व० ] तूर्ष्णीं विनदन् वा परिशङ्कितो विपरिक्रमन् श्येन इवारेः छिद्रं पश्येस्त्वमित्यन्वयः ॥ ११ ॥ काकरंखाजिजीविषुः । हे काक काकतुल्यो भूत्वा रंख भ्रम रखिर्गत्यर्थः ॥ १४ ॥ मा स्म कस्यचिद्राज्ञो गेहे खरीमृदुः गर्दभीवन्मृदुरकिंचित्करो जनिः पुत्रो भूयादित्यर्थोत्त्वं जायत इति जनिः ॥ १५ ॥ मानुष्यकं पौरुषं श्रित्वा आश्रित्य यावदुत्तमं यावदिति साकल्येऽव्ययं सर्वेष्वनुत्तमम् प्रशस्तम् ॥ १६ ॥ आनन्तर्यमनन्तरकार्यम् प्राणानां न धनायते । धनवत्तेषु बुद्धिं न करोति। प्राणेभ्योऽपि धनमधिकं मन्यत इत्यर्थः ॥१७॥

---

१३ म. ऽवाग्भूस्तिष्ठ चोर्जितः ।

उद्भावयस्व वीर्यं वा तां वा गच्छ ध्रुवां गतिम् ।
धर्मं पुत्राग्रतः कृत्वा किंनिमित्तं हि जीवसि ॥१८॥
इष्टापूर्तं हि ते क्लीब कीर्तिश्च सकला हता ।
विच्छिन्नं भोगमूलं ते किंनिमित्तं हि जीवसि ॥१९॥
शत्रुर्निमज्जता ग्राह्यो जङ्घायां प्रपतिष्यता ।
विपरिच्छिन्नमूलोऽपि न विषीदेत्कथंचन ॥ २० ॥
उद्यम्य धुरमुत्कर्षेदाजानेयकृतं स्मरन् ।
कुरु सत्वं च मानं च विद्धि पौरुषमात्मनः ॥ २१ ॥
उद्भावय कुलं मग्नं त्वत्कृते स्वयमेव हि ।
यस्य वृत्तं न जल्पन्ति मानवा महदद्भुतम् ॥ २२ ॥
राशिवर्धनमात्रं स नैव स्त्री न पुनः पुमान् ।
दाने तपसि सत्ये च यस्य नोच्चरितं यशः ॥२३॥
विद्यायामर्थलाभे वा मातुरुच्चार एव सः ।
श्रुतेन तपसा वाऽपि श्रिया वा विक्रमेण वा ॥२४॥
जनान्योऽभिभवत्यन्यान्कर्मणा हि स वै पुमान् ।
न त्वेव जाल्मीं कापालीं वृत्तिमेषितुमर्हसि ॥ २५ ॥
नृशंस्यामयशस्यां च दुःखां कापुरुषोचिताम् ।
यमेनमभिनन्देयुरमित्राः पुरुषं कृशम् ॥ २६ ॥
लोकस्य समवज्ञातं निहीनासनवाससम् ।
अहोलाभकरं हीनमल्पजीवनमल्पकम् ॥ २७ ॥
नेदृशं बंधुमासाद्य बान्धवः सुखमेधते ।
अवृत्त्यैव विपत्स्यामो वयं राष्ट्रात्प्रवासिताः ॥ २८ ॥
सर्वकामरसैर्हीनाः स्थानभ्रष्टा अकिंचनाः ।
अवल्गुकारिणं सत्सु कुलवंशस्य नाशनम् ॥ २९ ॥

[लक्षा०] अलातं तिन्दुकस्येवेत्यत्र तिन्दुकस्य वृक्षविशेषस्य 'तुंबूरू' इति अपभ्रंशभाषा ॥ १४ ॥

[ नील० ] ध्रुवां गतिं मरणमग्रत इत्युपहासः पृष्ठतः कृत्वेत्यर्थः ॥ १८ ॥ भोगमूलं राज्यं धनं वा ॥ १९ ॥ निमज्जता प्रपतिष्यता च शत्रुर्जङ्घायां ग्राह्यः तेनैव सह निमज्जेत्पतेद्वेत्यर्थः न विषीदेत् निरुद्यमो न भवेत् ॥ २० ॥ उद्यम्य उद्यमं कृत्वा धुरं भारमुत्कर्षेत् उद्यच्छेत् आजानेयाः जात्यश्वाः तेषां कृतं कर्म युद्धेऽनवसादरूपं स्मरन् विद्धि प्राप्नुहि ॥ २१ ॥ त्वत्कृते मग्नमिति संबन्धः ॥ २२ ॥ राशिवर्धनः संख्यापूरको न तु प्रयोजनान्तरार्हः ॥ २३ ॥ मातुः उच्चारो विष्ठा ॥ २४ ॥ कापालीं वृत्तिं भिक्षाचर्याम् ॥२५॥ यमेनममित्रा अभिनन्देयुः तं बन्धुं बान्धवः आसाद्य न सुखमेधत इति तृतीयश्लोकेन संबन्धः ॥२६॥ अहोलाभकरं अल्पेऽपि लाभे अहो लाभो जात इति विस्मयं कुर्वाणम् ॥ २७ ॥ अवृत्त्या जीवनोपायाभावेन विपत्स्यामः मरिष्यामः ॥ २८ ॥ अवल्गु अमङ्गलमकर्मेति वा पाठः तत्कारिणं निश्चेष्टं कुलं ज्ञातयः वंशः सोमसूर्यादिमूलोत्पत्तिस्थानम् ॥ २९ ॥

[ अर्जु० ] तद् भावयस्व तत् तस्मात् भावयस्व ध्रुवां मरणलक्षणाम् ॥ १८ ॥ शत्रुरित्यादि । निमज्जतापि जङ्घायां प्रपतिष्यतापि शत्रुर्ग्राह्य इत्यन्वयः ॥२०॥ उद्यम्य उद्योगं कृत्वा धुरं भारं आजानेयाः जात्यश्वाः तेषां कृतं युद्धे अनवसादम् । राशिवर्धनं संख्यादेःपिण्डवर्धनं वा ॥ २३ ॥ उच्चारो विष्ठा ॥ २४ ॥ जाल्मीं मौर्ख्यां जडाग्रहमिति यावत् । कापालीं भिक्षाम् ॥ २५ ॥ यमेनममित्रा अभिनन्देयुरित्यादिविशेषणविशिष्टं बन्धुमासाद्य बान्धवो न सुखमेधत इत्यन्वयः । अहोलाभकरं स्वल्पे लाभे आश्चर्यं कुर्वाणम् । अवृत्त्या जीवनाभावेन विपत्स्यामो विनङ्क्ष्यामः ॥ २६ ॥ अवल्गुकारिणं कुत्सितक्रियं अकर्मकारिणमिति च पाठे स एवार्थः कुलवंशस्य नाशनं कुलमेव वंश इव वंशो वंशकरत्वात् पुनरुक्तवदाभासोऽयमलंकारः ॥ २९ ॥

२६ म. थ पनम २७ म. मल्पशोचनमल्पकम् । २९ म. अकर्मकारिण ।

[ सर्व० ] युद्धेन धर्ममग्रतः कृत्वा तां ध्रुवां गतिं मरणं गच्छ ॥ १८ ॥ निमज्जता प्रपतिष्यता च शत्रुर्जङ्घायां ग्राह्यः । पातयित्वा समौ स्यातामिति ॥ २० ॥ राशिवर्धनः पङ्क्तिपूरणः । प्रयोजनान्तरविरही ॥ २३ ॥ कापालीं कपालेन भिक्षाचर्याम् ॥२५॥ यं एनं पुरुषमभिलक्षीकृत्य नन्देयुरमित्रास्तमीदृशम् कृशत्वादिविशेषणयुक्तं बन्धुमासाद्य बान्धवः न सुखमेधत इत्यन्वयः ॥२६॥ अहोलाभकरं अल्पेऽपि लाभे अहो लाभ इति मन्यमानम् ॥ २७ ॥ अवृत्त्या जीवनोपायाभावेन विपत्स्यामो मरिष्यामः॥२८॥ अकर्मकारिणं निश्चेष्टं कुलेन कुलत्वेनोपलक्षितो वंशः कुलवंशः तस्य ॥ २९ ॥

[ लक्षा० ] विपरिच्छिन्नमूलेनेत्यत्र विशेषेण परिछिन्नं मूलं यस्मात् तेन शत्रुणा न विषीदेत ॥ २० ॥ राशिवर्धनमात्रं स इत्यत्र राशिवर्धनं केवलं राशिभिरन्नराशिभिर्वर्धनमुदरपूरणं यस्य स राशिवर्धनमात्रम् ॥ २३ ॥ मातुरुच्चार एव स इत्यत्र मूत्रं प्रस्राव उच्चारावस्करं शमलं शकृदित्यमरोक्तेः उच्चारः मूत्रम् ॥ २४ ॥ नत्वेव जाल्मीं कापालीमित्यत्र निहीनोऽपसदो जाल्म इत्यमरवचनात् जाल्मीं हीनस्य विद्यमानाम् ॥ २५ ॥ अवर्णकारिणमित्यत्र 'अवर्णाक्षेपनिर्वादपरीवादापवादवत्' इत्यमरोक्तेः अवर्णकारिणमपवादकारिणम् ॥ २९ ॥

कलिं पुत्रप्रवादेन संजय त्वामजीजनम् ।
निरमर्षं निरुत्साहं निर्वीर्यमरिनंदनम् ॥ ३० ॥
मा स्म सीमंतिनी काचिज्जनयेत्पुत्रमीदृशम् ।
मा धूमाय ज्वलत्यन्तमाक्रम्य जहि शात्रवान् ॥३१॥
ज्वल मूर्धन्यमित्राणां मुहूर्तमपि वा क्षणम् ।
एतावानेव पुरुषो यदमर्षी यदक्षमी ॥ ३२ ॥
क्षमावान्निरमर्षश्च नैव स्त्री न पुनः पुमान् ।
संतोषो वै श्रियं हन्ति तथाऽनुक्रोश एव च ॥३३॥
अनुत्थानभये चोभे निरीहो नाश्नुते महत् ।
एभ्यो निकृतिपापेभ्यः प्रमुञ्चात्मानमात्मना ॥३४॥
आयसं हृदयं कृत्वा मृगयस्व पुनः स्वकम् ।
परं विषहते यस्मात्तस्मात्पुरुष उच्यते ॥ ३५ ॥
तमाहुर्व्यर्थनामानं स्त्रीवद्य इह जीवति ।
शूरस्योर्जितसत्वस्य सिंहविक्रान्तचारिणः ॥ ३६ ॥
दिष्टभावं गतस्यापि विषये मोदते प्रजा ।
य आत्मनः प्रियसुखे हित्वा मृगयते श्रियम् ॥३७॥
अमात्यानामथो हर्षमादधात्यचिरेण सः ॥ ३८ ॥

पुत्र उवाच—
किंनु ते मामपश्यंत्याः पृथिव्या अपि सर्वया ।
किमाभरणकृत्यं ते किं भोगैर्जीवितेन वा ॥ ३९ ॥

मातोवाच—
अनादृतानां ये लोका द्विषन्तस्तानवाप्नुयुः ।
ये त्वादृतात्मनां लोकाः सुहृदस्तान्व्रजन्तु नः ॥४०॥
भृत्यैर्विहीयमानानां परपिण्डोपजीविनाम् ।
कृपणानामसत्वानां मा वृत्तिमनुवर्तिथाः ॥ ४१ ॥
अनु त्वां तात जीवंतु ब्राह्मणाः सुहृदस्तथा ।
पर्जन्यमिव भूतानि देवा इव शतक्रतुम् ॥ ४२ ॥
यमाजीवन्ति पुरुषं सर्वभूतानि संजय ।
पक्वं द्रुममिवासाद्य तस्य जीवितमर्थवत् ॥ ४३ ॥
यस्य शूरस्य विक्रान्तैरेधन्ते बान्धवाः सुखम् ।
त्रिदशा इव शक्रस्य साधु तस्येह जीवितम् ॥ ४४ ॥
स्वबाहुबलमाश्रित्य योऽभ्युज्जीवति मानवः ।
स लोके लभते कीर्तिं परत्र च शुभां गतिम् ॥४५॥

इति श्रीमहाभारते उद्योगपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

[ नील० ] संजयेति तस्य नाम ॥ ३० ॥ अनुक्रोशो दया ॥ ३३ ॥ अनुत्थानं शत्रुं प्रत्यनवस्थानं भयं च ते उभे च श्रियं हत इति पूर्वेण संबन्धः । निरीहो निश्चेष्टो नाश्नुते महत्पदमिति शेषः निकृतिपापेभ्यः पराभवदोषेभ्यः ॥ ३४ ॥ स्वकं धनादिकं परं विषहते इति पुरुषपदनिर्वचनं वर्णविकारादिना ज्ञेयम् ॥ ३५ ॥ दिष्टभावं मरणं प्रजा सन्ततिः प्रियं पुत्रादि सुखं तत्परिष्वङ्गादिजो हर्षः ॥ ३७ ॥ मामपश्यन्त्यास्ते पृथिव्या किमिति संबन्धः ॥ ३९ ॥ किमद्य किं भोक्तव्यमिति ये चिन्तयन्ति निर्धनास्तेषां किमद्यकानां, यद्वा किमद्य त्वरया श्व एव शत्रून् जेष्याम इति विलम्बशीलानां, हन्यमानस्येति पाठे अनुद्युतस्य । अत्र हन्तिर्गत्यर्थः । अनाहवानामिति पाठे शस्त्रैरक्षतानाम् । अनादृतानामिति पाठे अलसानां निर्मन्युकानामित्यपि पाठः ॥ ४० ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

[ अर्जु० ] कलिं कलिपुरुषं पुत्रप्रवादेन पुत्रनाम्ना ॥३०॥ संतोषः स्वल्पे लाभे पर्याप्तबुद्धिः ॥ ३३ ॥ अनुत्थानमपौरुषम् ॥ ३४ ॥ पुरं शत्रोरिति शेषः ॥ ३५ ॥ दिष्टभावं मरणम् । विघसे भुक्तशिष्टे । प्रियं स्त्र्यादि, सुखं स्रक्चन्दनादिभवम् ॥ ३७ ॥ किमद्यकानां किमद्य नो भावीति दैवं परायणं येषाम् ॥ ४० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

[ सर्व० ] पुत्रप्रवादेन छलेन ॥ ३० ॥ निकृतिर्निकारः परिभवः ॥ ३४ ॥ विघसे तद्भुक्तशेषे । प्रजा सन्ततिः ॥ ३७ ॥ किमद्यकानां अद्य चेन्न मया किंचित्कृतं तेन श्वः किमहं करिष्यामीति कालं प्रेरयताम् ॥४०॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

[ लक्षा० ] अनुत्थानभये चोभे इत्यत्र अनुत्थानभये उत्थानमभिवृद्धिस्तदभावोनुत्थानं तदेव भयं ययोस्ते ॥३४॥ दिष्टभावं मरणम् ॥ ३७ ॥ किं नु ते मामपश्यन्त्या इत्यत्र युद्धान्मरणे सति मामपश्यन्त्याः ॥ ३९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे त्रयस्त्रिंशदधिकशततमोऽध्यायः ॥ १३३ ॥

३६ म. विक्रान्तगामिनः । अध्यायः ॥ १३३ ॥

## चतुस्त्रिंशदधिकशततमोऽध्यायः १३४

विदुलयाऽयुद्धमनिमित्तेन पुत्रं बहु विनिन्द्य क्षत्रस्वभावं च निर्वर्ण्य तस्य शत्रूत्सादनचोदनम् ॥ १ ॥

अथैतस्यामवस्थायां पौरुषं हातुमिच्छसि ।
निहीनसेवितं मार्गं गमिष्यस्यचिरादिव ॥ १ ॥
यो हि तेजो यथाशक्ति न दर्शयति विक्रमात् ।
क्षत्रियो जीविताकाङ्क्षी स्तेन इत्येव तं विदुः ॥२॥
अर्थवन्त्युपपन्नानि वाक्यानि गुणवंति च ।
नैव संप्राप्नुवंति त्वां मुमूर्षुमिव भेषजम् ॥ ३ ॥
संति वै सिंधुराजस्य संतुष्टा न तथा जनाः ।
दौर्बल्यादासते मूढा व्यसनौघप्रतीक्षिणः ॥ ४ ॥
सहायोपचितिं कृत्वा व्यवसायं ततस्ततः ।
अनुदुष्येयुरपरेऽपश्यंतस्तव पौरुषम् ॥ ५ ॥
तैः कृत्वा सह संघातं गिरिदुर्गालयं चरम् ।
कामव्यसनमाकाङ्क्षन्नैवायमजरामरः ॥ ६ ॥
संजयो नामतश्च त्वं नच पश्यामि तत्त्वयि ।
अन्वर्थनामा भव मे पुत्र मा व्यर्थनामकः ॥ ७ ॥
सम्यग्दृष्टिर्महाप्राज्ञो बालं त्वा ब्राह्मणोऽब्रवीत् ।
अयं प्राप्य महत्कृच्छ्रं पुनर्वृद्धिं गमिष्यति ॥ ८ ॥
तस्य स्मरन्ती वचनमाशंसे विजयं तव ।
तस्मात्तात ब्रवीमि त्वां वक्ष्यामि च पुनःपुनः ॥९॥
यस्य ह्यर्थाभिनिर्वृत्तौ भवन्त्याप्यायिताः परे ।
तस्यार्थसिद्धिर्नियता नयेष्वर्थानुसारिणः ॥ १० ॥
समृद्धिरसमृद्धिर्वा पूर्वेषां मम संजय ।
एवं विद्वान्युद्धमना भव मा प्रत्युपाहरः ॥ ११ ॥
नातः पापीयसीं कांचिदवस्थां शंबरोऽब्रवीत् ।
यत्र नैवाद्य न प्रातर्भोजनं प्रतिदृश्यते ॥ १२ ॥
पतिपुत्रवधादेतत्परमं दुःखमब्रवीत् ।
दारिद्र्यमिति यत्प्रोक्तं पर्यायमरणं हि तत् ॥१३॥
अहं महाकुले जाता ह्रदाद्ध्रदमिवागता ।
ईश्वरी सर्वकल्याणी भर्त्रा परमपूजिता ॥ १४ ॥
महार्हमाल्याभरणां सुमृष्टां वरवाससम् ।
पुरा दृष्ट्वा सुहृद्वर्गो मामपश्यत्सुहृद्गताम् ॥ १५ ॥
यदा मां चैव भार्यां च द्रष्टाऽसि भृशदुर्बलाम् ।
न तदा जीवितेनार्थो भविता तव संजय ॥ १६ ॥
दासकर्मकरान् भृत्यानाचार्यर्त्विक्पुरोहितान् ।
अवृत्त्याऽस्मान् प्रजहतो दृष्ट्वा किं जीवितेन ते ॥१७॥

---

[ नील० ] अथेति ॥ १ ॥ सहायोपचितिं सहायसंपत्तिं कृत्वाऽपि अपरे स्वकीयास्तव पौरुषमपश्यन्तो यत्ननैष्फल्यादनुदुष्येयुः शत्रुपक्षं श्रयेयुरित्यर्थः ॥ ५ ॥ स्वीयानां संग्रहे उपायमाह—तैरिति तैः स्वीयैः संघातमैक्यं व्यसनं परस्य अयं तव शत्रुः ॥ ६ ॥ मे महां ब्राह्मणोऽब्रवीदिति संबन्धः ॥ ८ ॥ अर्थाभिनिर्वृत्तौ प्रयोजननिष्पत्तौ परे तत्संबन्धिनः तेनार्थेन आप्यायिता भवन्ति तस्य तद्भाग्यादेवार्थसिद्धिः नयेषु नीतिमार्गेषु ॥ १० ॥ पूर्वेषां मम च युद्धे समृद्धिरसमृद्धिर्वाऽवश्यं भाविनीत्येवं विद्वान् युद्धमना भव लाभालाभौ समौ कृत्वा युद्धयस्वेतिभावः । मा प्रत्युपाहरः प्रत्युपहारं युद्धोपसंहारं मा कार्षीरित्यर्थः ॥११॥ अयुध्यतो दरिद्रत्वं स्यात्तच्चानिष्टमित्याह—नात इति ॥१२॥ पर्यायमरणं दारिद्र्यं नामान्तरेण मरणमेवेत्यर्थः ॥१३॥ अस्मान्प्रजहतः अस्मत्त्यागं कुर्वतः॥१७॥

[ अर्जु० ] स्तेनः पौरुषचौरः ॥ २ ॥ अनुदुष्येयुः पश्चाद्युध्येयुः ॥ ५ ॥ नैवायं अयं सिन्धुराजः ॥ ६ ॥ तत् सञ्जयत्वम् ॥ ७ ॥ अयं सञ्जयः । कृच्छ्रं कष्टम् । ऋद्धिं संपत्तिम् ॥ ८ ॥ अर्थाभिनिर्वृत्तौ अर्थस्य कार्यस्य सिद्धौ परे अन्ये अनुयायिनोऽपि आप्यायिता भवन्ति । तस्य तद्भाग्यैरपि अस्ति ॥ १० ॥ समृद्धिरसमृद्धिर्वा प्रथमं मम संबन्धिनीति विद्वान् युध्यमानो भव मा प्रत्युपाहरः पलायनपरो मा भूः ॥ ११ ॥ पर्यायमरणं नामान्तरेण मरणम् ॥ १३ ॥ प्रजहतः त्यजतः ॥ १७ ॥

[ सर्व० ] सहायोपचयं कृत्वा यत्तव पौरुषं तत्पश्यन्तोऽनुदुष्येयुस्त्वां प्रतिपन्नाः दुष्टा भवेयुः ॥ ५ ॥ व्यसनं परस्य ॥ ६ ॥ अर्थाभिनिर्वृत्तौ प्रयोजननिष्पत्तौ परे तत्संबन्धिनः तेनार्थेनाप्यायिता भवन्ति तस्य तद्भाग्यादेवार्थसिद्धिः ॥ १० ॥ समृद्धिरसमृद्धिर्वा प्रथमं तद्भविष्यतीति विद्वान् युद्धमना भव संजय प्रत्यवाहरः हरतिर्गत्यर्थः प्रत्यावृत्त्या माधोगच्छेत्यर्थः ॥ ११ ॥ तत्पतिपुत्रवधरूपं मरणं पर्यायमरणं क्रमप्राप्तमरणं न शोच्यम् ॥ १३ ॥

[ लक्षा० ] सृञ्जयो नामतश्च त्वमित्यत्र सृगताविति धातोः सरति शत्रून् जयति चेति सृञ्जयः ॥ ७ ॥ समृद्धिरसमृद्धिर्वेत्यत्र मम सकाशात् पूर्वेषां समृद्धिरसमृद्धिर्वा भवतु एवं विद्वानिति संबन्धः ॥ ११ ॥ यदा मां चैव

---

११ ज. प्रत्यवाहरः । १४ म. सर्वकल्याणैर्भर्त्रा ।

यदि कृत्यं न पश्यामि तवाद्याहं यथा पुरा ।
श्लाघनीयं यशस्यं च का शान्तिर्हृदयस्य मे ॥१८॥
नेति चेद्ब्राह्मणं ब्रूयां दीर्येत हृदयं मम ।
न ह्यहं न च मे भर्ता नेति ब्राह्मणमुक्तवान् ॥१९॥
वयमाश्रयणीयाः स्म न श्रोतारः परस्य च ।
साऽन्यमासाद्य जीवन्ती परित्यक्ष्यामि जीवितम् २०
अपारे भव नः पारमप्लवे भव नः प्लवः ।
कुरुष्व स्थानमस्थाने मृतान्संजीवयस्व नः ॥२१॥
सर्वे ते शत्रवः शक्या न चेज्जीवितुमर्हसि ।
अथ चेदीदृशीं वृत्तिं क्लीबामभ्युपपद्यसे ॥ २२ ॥
निर्विण्णात्मा हतमना मुञ्चैतां पापजीविकाम् ।
एकशत्रुवधेनैव शूरो गच्छति विश्रुतिम् ॥ २३ ॥
इन्द्रो वृत्रवधेनैव महेन्द्रः समपद्यत ।
माहेन्द्रं च ग्रहं लेभे लोकानां चेश्वरोऽभवत् ॥ २४ ॥
नाम विश्राव्य वै संख्ये शत्रूनाहूय दंशितान् ।
सेनाग्रं चापि विद्राव्य हत्वा वा पुरुषं वरम् ॥२५॥
यदैव लभते वीरः सुयुद्धेन महद्यशः ।
तदैव प्रव्यथन्तेऽस्य शत्रवो विनमन्ति च ॥ २६ ॥
त्यक्त्वाऽऽत्मानं रणे दक्षं शूरं कापुरुषा जनाः
अवशास्तर्पयन्ति स्म सर्वकामसमृद्धिभिः ॥ २७ ॥
राज्यं चाप्युग्रविभ्रंशं संशयो जीवितस्य वा ।
न लब्धस्य हि शत्रोर्वै शेषं कुर्वन्ति साधवः ॥२८॥
स्वर्गद्वारोपमं राज्यमथवाऽप्यमृतोपमम् ।
रुद्धमेकायनं मत्वा पतोल्मुक इवारिषु ॥ २९ ॥
जहि शत्रून्रणे राजन्स्वधर्ममनुपालय ।
मा त्वा दृशं सुकृपणं शत्रूणां भयवर्धनम् ॥ ३० ॥
अस्मदीयैश्च शोचद्भिर्नदद्भिश्च परैर्वृतम् ।
अपि त्वां नानुपश्येयं दीनाद्दीनमिवास्थितम् ॥३१॥
हृष्य सौवीरकन्याभिः श्लाघस्वार्थैर्यथा पुरा ।
मा च सैन्धवकन्यानामवसन्नो वशं गमः ॥ ३२ ॥

---

भार्या चेत्यत्र मां तव भार्या च भृशदुर्बले द्रष्टासि ॥१६॥ अभृत्यास्मान् प्रजहत इत्यत्र अभृत्याऽभरणेन ॥ १७ ॥

[ नील० ] कृत्यं कर्तव्यं पराक्रमम् ॥ १८ ॥ श्रोतारः पराज्ञायाः । पाठान्तरे श्रेतार आश्रयितारः ॥ २० ॥ शक्याः जेतुमिति शेषः सह्या इति पाठे सहनीयाः ॥२२॥ निर्विण्णात्मा विरक्तचित्तः यतो हतमना नष्टसंकल्पः विश्रुतिं ख्यातिम् ॥ २३ ॥ ग्रहं सोमपात्रं प्रग्रहमिति पाठे नियमनं नियन्तृत्वमित्यर्थः । प्रग्रहश्च तुलासूत्रे बन्द्यां नियमने भुजे इति विश्वः ॥ २४ ॥ कापुरुषाः जनाः रणे आत्मानं देहं त्यक्त्वा रणे दक्षं शूरं समृद्धिभिस्तर्पयन्ति स्मेति संबन्धः ॥ २७ ॥ उग्रविभ्रंशं महाप्रपातं जीवितस्य संशयो मरणं लब्धस्य जितस्य शेषं पुनः स्वल्पेन विभवेनावस्थापनम् ॥ २८ ॥ रुद्धं ग्रस्तं मत्वा एकायनं स्वर्गराज्ययोर्मध्ये एकं मार्गं पत गच्छ ॥ २९ ॥ मा त्वेति शत्रूणां भयवर्धनं भयच्छेदनम् अनुग्रत्वात् सुकृपणं दीनं त्वा त्वां मा दृशं माद्राक्षं दृशमिति माङ्योगादडभावे इरितो वेत्यङ्पक्षे दृशिर् प्रेक्षणेऽस्य लुङुत्तमैकवचनं पाठान्तरं तु मूढजनकल्पितं नादरणीयम् ॥ ३० ॥ हृष्य हर्षं प्राप्नुहि सौवीरकन्याभिः स्वदारैः मा चेति सैन्धवकन्यानां शत्रुदेशजकन्यानाम् ॥ ३२ ॥

[ अर्जु० ] नेति ब्रूयां यदीति शेषः ॥ १९ ॥ न श्रोतारो न पराज्ञायाः श्रोतारः । साऽहम् ॥ २० ॥ सह्याः सहनीयाः ॥२२॥ निर्विण्णात्मा उपेक्षितशरीरः । हतमनाः शोकेन, विश्रुतिं विख्यातिम् ॥ २३ ॥ ग्रहं सोमरसपानमात्रं प्रग्रहमिति पाठे प्रग्रहं संमानम् ॥२४॥ दंशितान् संनद्धान् ॥ २५ ॥ उग्रविभ्रंशं मरणं प्रलब्धस्य जितकाशिनः शेषं अवसानम् ॥ २८ ॥ एकायने एकमार्गे यत् मारणं मरणं वा कुरु ॥ २९ ॥ हृष्य सौवीरकन्याभिः सौवीरराज्यं प्राप्नुहीत्यर्थः । श्लाघ्यः स्वजनैः इति शेषः । अवसन्नः पराजितः ॥ ३२ ॥

[ सर्व० ] नेति ब्रूयां यदा तदैव हृदयं दीर्येत ॥ १९ ॥ न श्रोतारः पराज्ञायाः ॥ २० ॥ सह्याः शक्याभिभवाः ॥ २२ ॥ हतमना हतज्ञानः ॥ २३ ॥ माहेन्द्रं च ग्रहमिति तथा च श्रुतिः—इन्द्रो वृत्रं हत्वा महेन्द्रोऽभवदित्यनुवृत्तौ स एनं माहेन्द्रं ग्रहमग्रूतेति । प्रग्रहमिति पाठे प्रकृष्टो ग्रहः ॥ २४ ॥ उग्रविभ्रंशं मरणम् । प्रलब्धस्य जितकाशिनः शेषमन्तम् ॥ २८ ॥ रुद्धं ग्रस्तम् एकायने एकमार्गे पत गच्छ ॥ २९ ॥ सुकृपणं पापाभिभूतम् ॥ ३० ॥ हृष्य सौवीरकन्याभिः तद्राज्यस्वाम्यात् । श्लाघ्यस्व श्लाघाश्रयो भव ॥ ३२ ॥

[ लक्षा० ] सर्वे ते शत्रवः सह्या नोचेदित्यत्र शत्रवः सह्याः नोचेदपि जीवितुमिच्छसि ॥ २२ ॥ माहेन्द्रं च ग्रहं लेभ इत्यत्र गृह्यत इति ग्रहो यज्ञभागः तम् ॥ २४ ॥ प्रलब्धस्य हि शत्रोर्निर्वेशं कुर्वतीत्यत्र कर्तरि क्तः । प्रल-

---

२० म. हि न श्रो° । २२ म. सह्या नचेत् । म. अनुवर्तते । २४ म. प्रग्रहं लोके । २६ म. प्रव्यथन्तेऽस्य शत्रवोऽपि । ३० म. मा त्वां पश्येत्सुकृपणं शत्रुः श्रीमान्कदाचन ! ३१ म. त्वामनुपश्येयं परस्य प्रियवादिनम् ।

युवा रूपेण संपन्नो विद्ययाऽभिजनेन च ।
यस्त्वादृशो विकुर्वीत यशस्वी लोकविश्रुतः ॥ ३३ ॥
अधुर्यवच्च वोढव्ये मन्ये मरणमेव तत् ।
यदि त्वामनुपश्यामि परस्य प्रियवादिनम् ॥ ३४ ॥
पृष्ठतोऽनुव्रजन्तं वा का शान्तिर्हृदयस्य मे ।
नास्मिन् जातु कुले जातो गच्छेद्योऽन्यस्य पृष्ठतः ३५
न त्वं परस्यानुचरस्तात जीवितुमर्हसि ।
अहं हि क्षत्रहृदयं वेद यत्परिशाश्वतम् ॥ ३६ ॥
पूर्वैः पूर्वतरैः प्रोक्तं परैः परतरैरपि ।
शाश्वतं चाव्ययं चैव प्रजापतिविनिर्मितम् ॥ ३७ ॥
यो वै कश्चिदिहाजातः क्षत्रियः क्षत्रकर्मवित् ।
भयाद्वृत्तिसमीक्षो वा न नमेदिह कस्यचित् ॥३८॥
उद्यच्छेदेव न नमेदुद्यमो ह्येव पौरुषम् ।
अप्यपर्वणि भज्येत न नमेतेह कस्यचित् ॥ ३९ ॥
मातङ्गो मत्त इव च परीयात्स महामनाः ।
ब्राह्मणेभ्यो नमेन्नित्यं धर्मायैव च संजय ॥ ४० ॥
नियच्छन्नितरान्वर्णान्विनिघ्नन्सर्वदुष्कृतः ।
ससहायोऽसहायो वा यावज्जीवं तथा भवेत् ॥४१॥

इति श्रीमहाभारते उद्योगपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

## पञ्चत्रिंशदधिकशततमोऽध्यायः १३५

पुनःपुनर्युद्धचोदनात्पुत्रेण निष्करुणत्वेनाक्षिप्तया विदुलया धर्मार्थहीनपुत्रवात्सल्यं खरीवात्सल्यत्वेन विगर्ह्य मनस्विपुरुषस्वभाववर्णनेन तद्विपरीतः पुत्रोऽर्थादधमत्वेनोक्तः पुनः करुणमब्रुवन् शत्रुवधानन्तरं त्वां पूजयिष्यामीति तया समाश्वासितः कोशाभावादात्मानमवजानन्नुपायमपृच्छत् ॥ १ ॥ मात्राऽत्मन्यवज्ञाया अयुक्तत्वस्य शत्रुजयोपायस्य च कथनम् ॥ २ ॥

**पुत्र उवाच—**

कृष्णायसस्येव च ते संहत्य हृदयं कृतम् ।
मम मातस्त्वकरुणे वीरप्रज्ञे ह्यमर्षणे ॥ १ ॥
अहो क्षत्रसमाचारो यत्र मामितरं यथा ।
नियोजयसि युद्धाय परमातेव मां तथा ॥ २ ॥
ईदृशं वचनं ब्रूयाद्भवती पुत्रमेकजम् ।
किं नु ते मामपश्यन्त्याः पृथिव्या अपि सर्वया ॥३॥
किमाभरणकृत्येन किं भोगैर्जीवितेन वा ।
मयि वा सङ्गरहते प्रियपुत्रे विशेषतः ॥ ४ ॥

**मातोवाच—**

सर्वावस्था हि विदुषां तात धर्मार्थकारणात् ।
तावेवाभिसमीक्ष्याहं संजय त्वामचूचुदम् ॥ ५ ॥

---

भ्रस्य वध्यकस्य । निर्वेशं प्रतिक्रियां, निर्वेश उपभोगः प्रतिक्रियेत्यमरः ॥ २८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

[ नील० ] विकुर्वीत अपसरणं कुर्वीत ॥ ३३ ॥ अधुर्यवत् अदान्तवृषभवत् अनड्वानिवेत्यपि पाठः तत् विकारकरणम् ॥ ३४ ॥ वेद वेद्मि परिशाश्वतं सर्वथैवैकरूपं अक्षीणमित्यर्थः ॥ ३६ ॥ पूर्वैः स्ववंशजैः परैरन्यवंशीयैः परतरैर्वृद्धैः अव्ययमपक्षयहीनं क्षत्रहृदयं प्रोक्तमिति पूर्वेण संबन्धः ॥ ३७ ॥ आजातः सम्यग्जातः कुलेजात इत्यर्थः य आजात स भयात्कस्यचिन्न नमेत् वृत्तिसमीक्षो वृत्तिं समीक्षमाणो वा न नमेत् ॥ ३८ ॥ उद्यच्छेत् उद्यमं कुर्यात् अपर्वणि अकाण्डे वृथाऽपीत्यर्थः ॥ ३९ ॥ परीयात् पर्यटनं कुर्यात् ॥ ४० ॥ दुष्कृतः पापिष्ठान् ॥४१॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

[ अर्जु० ] विकुर्वीत पृथिवीं त्यजेत् ॥ ३३ ॥ सोढव्ये सहनीये धूरि विषये अनडुद्वत् अनड्वानिव दुष्टबलीवर्द इव ॥ ३४ ॥ आजातः कुलीनः ॥ ३८ ॥ परीयात् परिभ्रमेत् ॥४०॥ सर्वदुष्कृतः सर्वान् दुष्कृतकारिणः ॥४१॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

[ सर्व० ] विकुर्वीत कर्तव्यविरुद्धं कुर्वीत ॥ ३३ ॥ आजातः सम्यग्जातः ॥ ३८ ॥ परीयात् सर्वतो गच्छेत् ॥ ४० ॥ दुष्कृतो दुष्कृतिनः ॥ ४१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां चतुस्त्रिंशदधिकशततमोऽध्यायः ॥ १३४ ॥

[ नील० ] कृष्णायसस्य लोहस्य संहत्य पिण्डीकृत्य ॥ १ ॥ एकजमभ्रातृकम् ॥ ३ ॥ सर्वावस्था गार्हस्थ्यादिरूपा सर्वारम्भा इति पाठान्तरं तावेव धर्मार्थावेव अचूचुदं प्रेरितवत्यस्मि ॥ ५ ॥

[ अर्जु० ] कृष्णायसस्य लोहस्य संहत्य संघातं कृत्वा ॥ १ ॥ एकजमेकमेव जातम् ॥ ३ ॥

[ सर्व० ] कृष्णायसस्य लोहस्य संहत्य पिण्डीकृत्य ॥ १ ॥ एकजमभ्रातृकम् ॥ ३ ॥

---

३६ म. न त्वं परस्य विधुरं । म. परिमाणतः । ३८ म. इहायातः क्षत्रियः सर्वधर्मवित् । ४० म. परियान्सुमहामनाः । ४१ म. नियमेदि । अध्याय:१३४

५ सर्वारम्भो हि विदुषां । म. तान्येवाभि° ।

स समीक्ष्य क्रमोपेतो मुख्यः कालोऽयमागतः ।
अस्मिंश्चेदागते काले कार्यं न प्रतिपद्यसे ॥ ६ ॥
असंभावितरूपस्त्वमानृशंस्यं करिष्यसि ।
तं त्वामयशसा स्पृष्टं न ब्रूयां यदि संजय ॥ ७ ॥
खरीवात्सल्यमाहुस्तन्निःसामर्थ्यमहेतुकम् ।
सद्भिर्विगर्हितं मार्गं त्यज मूर्खनिषेवितम् ॥ ८ ॥
अविद्या वै महत्यस्ति यामिमां संश्रिताः प्रजाः ।
तव स्याद्यदि सद्वृत्तं तेन मे त्वं प्रियो भवेः ॥ ९ ॥
धर्मार्थगुणयुक्तेन नेतरेण कथंचन ।
दैवमानुषयुक्तेन सद्भिराचरितेन च ॥ १० ॥
यो ह्येवमविनीतेन रमते पुत्रनप्तृणा ।
अनुत्थानवता चापि दुर्विनीतेन दुर्धिया ॥ ११ ॥
रमते यस्तु पुत्रेण मोघं तस्य प्रजाफलम् ।
अकुर्वन्तो हि कर्माणि कुर्वन्तो निन्दितानि च ॥ १२ ॥
सुखं नैवेह नामुत्र लभन्ते पुरुषाधमाः ।
युद्धाय क्षत्रियः सृष्टः संजयेह जयाय च ॥ १३ ॥
जयन्वा वध्यमानो वा प्राप्नोतीन्द्रसलोकताम् ।
न शक्रभवने पुण्ये दिवि तद्विद्यते सुखम् ॥
यदमित्रान्वशे कृत्वा क्षत्रियः सुखमेधते ॥ १४ ॥
मन्युना दह्यमानेन पुरुषेण मनस्विना ।
निकृतेनेह बहुशः शत्रून्प्रतिजिगीषया ॥ १५ ॥
आत्मानं वा परित्यज्य शत्रुं वा विनिपात्य च ।
अतोन्येन प्रकारेण शान्तिरस्य कुतो भवेत् ॥ १६ ॥
इह प्राज्ञो हि पुरुषः स्वल्पमप्रियमिच्छति ।
यस्य स्वल्पं प्रियं लोके ध्रुवं तस्याल्पमप्रियम् ॥ १७ ॥
प्रियाभावाच्च पुरुषो नैव प्राप्नोति शोभनम् ।
ध्रुवं चाभावमभ्येति गत्वा गङ्गेव सागरम् ॥ १८ ॥

**पुत्र उवाच—**

नेयं मतिस्त्वया वाच्या मातः पुत्रे विशेषतः ।
कारुण्यमेवात्र पश्य त्वं भूत्वेह जडमूकवत् ॥ १९ ॥

**मातोवाच—**

अतो मे भूयसी नन्दिर्यदेवमनुपश्यसि ।
चोद्यं मां चोदयस्येतद्भृशं वै चोदयामि ते ॥ २० ॥

---

[ नील० ] समीक्ष्य क्रमोपेतः द्रष्टुं योग्येन पराक्रमेण युक्तः अस्मिन्काले चेत् कार्यं कर्तव्यं युद्धं न प्रतिपद्यसे ॥ ६ ॥ आनृशंस्यं शत्रुषु स्वदेहे वा दयां करिष्यसि तर्हि त्वमसंभावितरूपस्तिरस्कृतरूपो भविष्यसीति संबन्धः ॥७॥ खरीति उभयलोकानुपयुक्तेपि पुत्रे वृथा वात्सल्यं खरी करोति तद्वदहमपि स्यामित्यर्थः ॥ ८ ॥ अविद्या अनात्मनि देहे आत्मबुद्धिः सा यदि तव स्यात् तर्हि सत् समीचीनं तव देहनाशादात्मनाशं पश्यतो वृत्तं शीलम् । उपहासार्थमिदमुच्यते । तेन देहात्मभावेन मम देहादन्यमात्मानं पश्यन्त्याः प्रियो भवेः । अयमप्युपहासः । देहात्मवादी दुर्वृत्तो मम द्वेष्यश्च भविष्यसीत्यर्थः ॥९॥ धर्मार्थेति त्वया भाव्यमिति शेषः ॥१०॥ निकृतेन अपकृतेनापि शत्रून्प्रति जिगीषया प्रस्थातव्यमेवेति शेषः ॥ १५ ॥ स्वल्पमैश्वर्यमप्रियमनिष्टमिच्छति मन्यते प्राज्ञः यस्य तु अल्पमेवैश्वर्यं प्रियं तस्य ध्रुवं निश्चितं तदेवाल्पं प्रियत्वेन गृहीतमप्रियमनर्थकरं स्यात् तेन राज्ञाऽल्पसंतुष्टेन न भवितव्यमित्यर्थः ॥ १७ ॥ अभावं नाशम् ॥१८॥ कारुण्यमेव पश्य हितत्वेनेति शेषः ॥ १९ ॥ अतो वचनात् मे मम भूयसी नन्दिः समृद्धिः भवितेति शेषः यत् एवं कारुण्यं देहे कृपामनुपश्यसि हितत्वेन एवं सत्यपि त्वमेव चोद्यं पूर्वपक्षं चोदयसि प्रेरयसि कारुण्यं कुर्विति अथापि वज्रहृदयाऽहं ते तुभ्यं चोदयामि ॥ २० ॥

[ अर्जु० ] खरीवात्सल्यं गर्दभीपुत्रे दयां [ कुर्वीत ] निःसामर्थ्यमकिंचित्करम् । अहेतुकं हेतुः प्रत्युपकारः तद्रहितम् ॥ ८ ॥ अविद्या विष्णुमाया तया संमोहितं अकार्यप्रवृत्तं सद्वृत्तं धर्मार्थसंबन्धिवृत्तम् ॥ ९ ॥ पुत्रनप्तृणा पुत्रेण नप्त्रा च । अनुत्थानवता अनुद्योगवता ॥ ११ ॥ प्राज्ञः प्रकृष्टोऽज्ञः अप्रियं दुःखम् कर्मरूपं दुःखं कर्मेत्यनुभवो लोक इति न्यायात् । यस्य प्रियं सुखं स्वल्पं तस्य तत् साधनीभूतं कर्मापि ध्रुवं स्वल्पमेव ॥ १७ ॥ अभावं मरणम् ॥ १८ ॥ नन्दी तुष्टिः । चोद्यं चित्रं चोदयामि कारुण्यप्रार्थनया चोदयामि युद्धार्थं प्रेरयामि ॥ २० ॥

[ सर्व० ] खरीवात्सल्यं सीदति स्नेहात् । अपत्यस्य अपरोक्षं पृष्ठतस्तनपानविलम्बमपि नावेक्षते असामर्थ्यमर्थैः प्रयोजनम् । अहेतुकम् प्रत्यवायादिदर्शनं विना अनुत्पन्नम् ॥ ८ ॥ अविद्यामोहत्यागादेवाऽन्येभ्यस्तवाधिक्यं स्यादित्यर्थः ॥९॥ मानुषं पुरुषकारः ॥ १० ॥ पुत्रश्चनप्तृ च पुत्रनप्तृ तेन ॥ ११ ॥ इह प्राज्ञः स्वल्पमप्रियमिच्छति । अर्थात् प्रियं बहुर्यस्य पुनरल्पतुष्टस्याल्पं प्रियमपेक्षितं स्यात् । तस्य च तद्घातकमप्रियमप्यल्पमेव ॥१७॥ अतः प्रियाभावादल्पेनैवसन्तोषात् । अत एवाप्रियाभावात् न तद्विजयार्थं प्रवर्तत इति शोभनं नाप्नोत्येवेति प्रिये असंतोषवता भाव्यमित्याशयः । अभावमभ्येति प्राप्नोति अनुद्यमित्वादन्य-

---

७ म. त्वं ह्यनृशंसं । १६ म. शत्रुं वापि विजित्य वै । प्राप्यते तेन शान्तिर्हि नित्यमेव तु सञ्जय । अध्यायः ॥ १३५ ॥

अथ त्वां पूजयिष्यामि हत्वा वै सर्वसैन्धवान् ।
अहं पश्यामि विजयं कृच्छ्रभावितमेव ते ॥ २१ ॥

**पुत्र उवाच—**

अक्रोशस्यासहायस्य कुतः सिद्धिर्जयो मम ।
इत्यवस्थां विदित्वैतामात्मनात्मनि दारुणाम् ॥२२॥
राज्याद्भावो निवृत्तो मे त्रिदिवादिव दुष्कृतः ।
ईदृशं भवती कंचिदुपायमनुपश्यति ॥ २३ ॥
तन्मे परिणतप्रज्ञे सम्यक्प्रब्रूहि पृच्छते ।
करिष्यामि हि तत्सर्वं यथावदनुशासनम् ॥ २४ ॥

**मातोवाच—**

पुत्र नात्माऽवमन्तव्यः पूर्वाभिरसमृद्धिभिः ।
अभूत्वा हि भवन्त्यर्था भूत्वा नश्यन्ति चापरे ॥
अमर्षेणैव चाप्यर्था नारब्धव्याः सुबालिशैः ॥२५॥
सर्वेषां कर्मणां तात फले नित्यमनित्यता ।
अनित्यमिति जानन्तो न भवन्ति भवन्ति च॥२६॥
अथ ये नैव कुर्वन्ति नैव जातु भवन्ति ते ।
ऐकगुण्यमनीहायामभावः कर्मणां फलम् ॥ २७ ॥
अथ द्वैगुण्यमीहायां फलं भवति वा नवा ।
यस्य प्रागेव विदिता सर्वार्थानामनित्यता ॥ २८ ॥
नुदेद्वृद्धिसमृद्धी स प्रतिकूले नृपात्मज ।
उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु ॥ २९ ॥
भविष्यतीत्येव मनः कृत्वा सततमव्यथैः ।
मङ्गलानि पुरस्कृत्य ब्राह्मणांश्चेश्वरैः सह ॥ ३० ॥

---

स्यापि प्रियस्य रक्षणासंभवात् ॥ १८ ॥ अतस्तव वाक्यात् मे नन्दिरानन्दः यन्मां चोदयसि रणाय प्रेरयसि । एवं च पुनरप्यहं त्वां चोदयामि प्रेरयाम्येव ॥ २० ॥

[ लक्षा० ] परिवाक्शल्यमाहुस्त्वामित्यत्र परिवादाख्यशल्यं यथा भवति तथा ॥ ८ ॥ प्रियाभावाच्च पुरुष इत्यत्र प्रियाभावात् सर्वथाविद्याभावात् ॥ १८ ॥

[ नील० ] सैन्धवान् हत्वा कृच्छ्रेण भावितं ते तव विजयं यदा पश्यामि द्रक्ष्यामि अथ त्वां पूजयिष्यामीति योजना ॥ २१ ॥ एतामवस्थां दारुणामात्मनि आत्मना स्वयं विदित्वा मे मम भावश्चित्तं राज्यान्निवृतः इत्युत्तरेण संबन्धः ॥ २२ ॥ अर्थाः धर्माद्याः बालिशैरमर्षेणैव नारब्धव्याः पण्डितैस्तु आदरेण आरब्धव्या एवेति भावः ॥ २५ ॥ अनित्यमिति जानन्तः पण्डिता आरभमाणा न भवंति कदाचिदैश्वर्यं न लभन्ते भवन्ति च कदाचित्सिद्धार्थाः ॥ २६ ॥ अकुर्वाणान्निन्दति अथेति अनीहायां चेष्टाया अभावे ऐकगुण्यमेकगुणमेव फलं यत्कर्मणामीप्सिततमानामभावोऽप्राप्तिः ॥ २७ ॥ ईहायां तु द्वैगुण्यं गुणद्वयं यत्फलं भवति वा नवेति अभावनिश्चयापेक्षया पाक्षिकफलसद्भाववती प्रवृत्तिरेव श्रेष्ठेत्यर्थः ॥२८॥ वृद्धिः पीडा वृधु हिंसायामित्यस्य रूपं समृद्धिरैश्वर्यं ते उभे नुदेत् दूरीकुर्यात् आत्मनः पीडां परस्यैश्वर्यं च नुदेदित्यर्थः योक्तव्यं सज्जीभवितव्यम् ॥ २९ ॥ ईश्वरैर्दैवैः ॥ ३० ॥

[ अर्जु० ] कृच्छ्रभाविनं दुःखसाध्यम् ॥ २१ ॥ भाव आस्था । दुष्टा पापा कृतिः कर्म यस्य ॥ २३ ॥ फलं नित्यमिति अनित्यता अनित्यारूपं फलं नित्यं सर्वदेत्यन्वयः । भवन्ति प्राप्नुवन्ति ॥ २६ ॥ ऐकगुण्यमसंदेहः ॥ २७ ॥ द्वैगुण्यं संदेहः तदेवाह वा न वेति । वृत्तिसमृद्धी व्यापारतत्फले नुदेत् त्यजेत् । यस्य प्रागेवानुष्ठानादि तदर्थानामनित्यतेति वैराग्यकारणोपन्यासः । प्रतिकूले नियमविरोधिनी उत्थातव्यं यतितव्यमुपाये तदन्तराये च योक्तव्यं संनद्धव्यम् ॥ २८ ॥ २९ ॥ भविष्यतीत्येवेति विरामादन्य एवायं मार्गः इति दर्शयति ईश्वरैर्देवैः ॥ ३० ॥

[ सर्व० ] सैन्धवान् हत्वा स्थितं त्वां पूजयिष्यामि । तत्र च विजयं ते कृच्छभाविनं दुःखार्थभावेन भाविनं पश्याम्यतो युद्धयस्वेति भावः ॥ २१ ॥ कर्मणां फलोत्पादने नित्यानित्यतानियमाभावः । एतद्ये जानंति ते संदेहात्प्रवर्तमाना भवन्ति विभूतिमन्तो भवन्ति ज्ञानवं······संदेहाभावेऽपि विपरीतनिश्चयं कुर्वन्ति ते न भवन्त्येव ॥ २६ ॥ अनीहायामप्रवृत्तौ फलमैकगुण्यमेकस्वरूपम् ॥ २७ ॥ ईहायान्तु भवति वा न वेति द्वैगुण्यं द्विरूपफलम् यस्य प्रवृत्तेः प्रागेव विहिता निश्चिता सर्वार्थानामनित्यता अनियतफलता ॥२८॥ स प्रतिकूले गतो वृत्तमाचारं समृद्धिं धनं च नुदेत् प्रतिक्षिपति । उत्थातव्यं यतितव्यम् । परच्छिद्रेषु योक्तव्यम् सन्नद्धव्यम् ॥ २९ ॥ ईश्वरैर्देवैः ॥ ३० ॥

[ लक्षा० ] अतो मे भूयसी नन्दिरित्यत्र यद्यस्मात् एवमनुपश्यसि अनुकूलतया मां पश्यसि अतो मे भूयसी नन्दिः कार्यमपि करिष्यसीति हर्षः ॥ २१ ॥ ऐकगुण्यमनीहायामित्यत्र अनीहायामिच्छाभावे कर्मैव न भवतीत्यवधारणमेको गुणः तस्य भावः ऐकगुण्यं तदेव दर्शयति—कर्मणामभाव एव फलमिति ॥ २७ ॥ द्वौ गुणौ फलभावाभावौ तयोः भावः द्वैगुण्यम् ॥२८॥ वदेद्वृद्धिसमृद्धी इत्यत्र प्रतिकूले वृद्ध्यसमृद्धी न वदेत् ॥ २९ ॥

प्राज्ञस्य नृपतेराशु वृद्धिर्भवति पुत्रक ।
अभिवर्तेति लक्ष्मीस्तं प्राचीमिव दिवाकरः ॥३१॥
निदर्शनान्युपायांश्च बहून्युद्धर्षणानि च ।
अनुदर्शितरूपोऽसि पश्यामि कुरु पौरुषम् ॥ ३२ ॥
पुरुषार्थमभिप्रेतं समाहर्तुमिहार्हसि ।
क्रुद्धान् लुब्धान् परिक्षीणानवलिप्तान्विमानितान्३३
स्पर्धिनश्चैव ये केचित्तान्युक्त उपधारय ।
एतेन त्वं प्रकारेण महतो भेत्स्यसे गणान् ॥ ३४ ॥
महावेग इवोद्भूतो मातरिश्वा बलाहकान् ।
तेषामग्रप्रदायी स्याः कल्योत्थायी प्रियंवदः ।
ते त्वां प्रियं करिष्यन्ति पुरोधास्यन्ति च ध्रुवम् ३५

यदैव शत्रुर्जानीयात्सपत्नं त्यक्तजीवितम् ।
तदैवास्मादुद्विजते सर्पाद्वेश्मगतादिव ॥ ३६ ॥
तं विदित्वा पराक्रान्तं वशे न कुरुते यदि ।
निर्वादैर्निर्वदेदेनमन्ततस्तद्भविष्यति ॥ ३७ ॥
निर्वादादास्पदं लब्ध्वा धनवृद्धिर्भविष्यति ।
धनवन्तं हि मित्राणि भजन्ते चाश्रयन्ति च ॥३८॥
स्खलितार्थं पुनस्तानि संत्यजन्ति च बान्धवाः ।
अप्यस्मिन्नाश्वसन्ते च जुगुप्सन्ते च तादृशम् ॥३९॥
शत्रुं कृत्वा यः सहायं विश्वासमुपगच्छति ॥
अतः संभाव्यमेवैतद्यद्राज्यं प्राप्नुयादिति ॥ ४० ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

---

[ नील० ] ऊद्धर्षणानि प्रोत्साहकानि अनुदर्शितं रूपं लोकवृत्तान्तो यस्मै स तथा ॥ ३२ ॥ तेषां क्रुद्धादीनामग्रप्रदायी भक्तं वेतनं च सर्वेभ्यः प्रथमं देयं न चेत्सद्यः कुपितास्ते त्यजेयुरित्यर्थः ॥ ३५ ॥ त्यक्तजीवितं युद्धे जीवितनिराकाङ्क्षं शत्रुर्जीविताकाङ्क्षी उद्विजते ॥ ३६ ॥ तमिति तं शत्रुं पराक्रान्तं पराक्रमवन्तं विदित्वा अशक्त्या वशे स्वाज्ञायां यदि न करोति तर्हि एनं निर्वादैः परिनिष्ठितैर्दूतैर्निर्वदेत् परिनिष्ठां प्रापयेत् । साम्ना दानेन वा तं पर्यवस्थापयेदित्यर्थः । निर्वादः स्यात्परीवादे परिनिष्ठितवादयोरिति विश्वः । अन्ततः फलतः तत् शत्रोर्वशीकरणं भविष्यति ॥ ३७ ॥ तत्रोपायमाह—निर्वादादिति । एवं परिनिष्ठिततया आस्पदं स्थानं प्राप्तं चेत् शत्रुणाऽनुपद्रुतस्य धनवृद्ध्यादिकं सर्वं सेत्स्यतीत्यर्थः ॥ ३८ ॥ स्खलितार्थं च्युतधनं न आश्वसन्ते इतिच्छेदः विश्वासं न कुर्वन्तीत्यर्थः ॥ ३९ ॥ संभाव्यमेवैतदित्युपहासः असंभावितमेतत् यच्छत्रौ विश्वासं कृत्वाऽपि राज्यं प्राप्नुयादिति ॥ ४० ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

[ अर्जु० ] निदर्शनानि दृष्टान्ताः उपायान् सामादीन् उद्धर्षणानि हृष्टकरणानि । अनुदर्शितरूपोऽसि शुभैर्लक्षणैरिति शेषः ॥३२॥ युक्तोऽरहितः । उपधारय समीपे स्थापय गणान् संघभूतान् भेत्स्यसे ऐकमत्यान्निवर्त्तयिष्यसि॥३४॥ आधूतोऽतिवृद्धः । अग्रप्रदायी प्रथमदाता । कल्योत्थायी प्रातः प्रबुद्धः । पुरोधास्यन्ति अग्रे करिष्यन्ति ॥ ३५ ॥

निर्वादैः आक्षेपबन्धनैः निर्वदेत् कदर्थयेत् । अन्ततः पौरुषावसाने तत् ईप्सितम् ॥ ३७ ॥ निर्वादात् शत्रुकदर्थनात् आस्पदं स्थानं तेन सह वैरं कुर्वाणं तद्वैरिणस्तदुदासीनाश्च भजन्ते ॥ ३८ ॥ अस्मिन् धनवति तादृशं धनहीनम् ॥ ३९ ॥ संभाव्यमेव संदिग्धमेव । अथवा दैवागतम् ॥ ४० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

[ सर्व० ] उद्धर्षणानि उत्साहजनकानि । अनुदर्शितरूपोऽसि दर्शितमेषां रूपं त्वां प्रतीत्यर्थः ॥ ३२ ॥ ॥ ३३ ॥ उपधारय समीपस्थान् कुरु ॥ ३४ ॥ अग्रप्रदायी प्रथमवेतनदाता ॥ ३५ ॥ विदित्वेति शत्रोः पराक्रममधिकं दृष्ट्वा यदि तं…तदा निर्वादैर्नीचवादैः प्रणामेनेति यावत् । एवं शत्रुं निर्वदेत् नीचमात्मानमेनं प्रति वदेत् । तन्नाशकारणं भविष्यति ॥ ३७ ॥ तदेव दर्शयति निर्वादान्नीचैर्वादादास्पदं स्थानं तदनुपमार्दनं लब्ध्वा धनवृद्धिर्भविष्यति ॥ ३८ ॥ स्खलितार्थमर्थात्स्खलितम् ॥३९॥ एवं च यः शत्रुं सहायं प्रणतं कृत्वा विश्वासमुपयाति । असमुपगतविश्वासस्य……द्राज्यं प्राप्नुयादिति संभाव्यमेतदित्युपसंहारः ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

[ लक्षा० ] अन्ततस्तद्भविष्यतीत्यत्र तन्निर्वादफलम् ३७

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चत्रिंशदधिकशततमोऽध्यायः ॥ १३५ ॥

## षट्त्रिंशदधिकशततमोऽध्यायः १३६

मातुः शत्रुजयोपाय–निगूढकोशनिचयौ श्रृण्वता संजयेन शत्रुजयोद्योगप्रतिज्ञानम् ॥ १ ॥ कुन्त्याऽस्याख्यानस्य जयनामत्व–वीरप्रसवहेतुत्वयोः कथनम् ॥ २ ॥

**मातोवाच—**

नैव राज्ञा दरः कार्यो जातु कस्यांचिदापदि ।
अथ चेदपि दीर्णः स्यान्नैव वर्तेत दीर्णवत् ॥ १ ॥
दीर्णं हि दृष्ट्वा राजानं सर्वमेवानुदीर्यते ।
राष्ट्रं बलममात्याश्च पृथक्कुर्वन्ति ते मतीः ॥ २ ॥
शत्रूनेके प्रपद्यन्ते प्रजहत्यपरे पुनः ॥
अन्ये तु प्रजिहीर्षन्ति ये पुरस्ताद्विमानिताः ॥ ३ ॥
य एवात्यन्तसुहृदस्त एनं पर्युपासते ।
अशक्तयः स्वस्तिकामा बद्धवत्सा इला इव ॥ ४ ॥
शोचन्तमनुशोचन्ति पतितानिव बान्धवान् ।
अपि ते पूजिताः पूर्वमपि ते सुहृदो मताः ॥ ५ ॥
ये राष्ट्रमभिमन्यन्ते राज्ञो व्यसनमीयुषः ।
मा दीदरस्त्वं सुहृदो मा त्वां दीर्णं प्रहासिषुः॥६॥
प्रभावं पौरुषं बुद्धिं जिज्ञासन्त्या मया तव ।
विदधत्या समाश्वासमुक्तं तेजोविवृद्धये ॥ ७ ॥
यदेतत्संविजानासि यदि सम्यग्ब्रवीम्यहम् ।
कृत्वाऽसौम्यमिवात्मानं जयायोत्तिष्ठ संजय ॥८॥
अस्ति नः कोशनिचयो महान्ह्यविदितस्तव ।
तमहं वेद नान्यस्तमुपसंपादयामि ते ॥ ९ ॥
संति नैकतमा भूयः सुहृदस्तव संजय ।
सुखदुःखसहा वीर संग्रामादनिवर्तिनः ॥ १० ॥
तादृशा हि सहाया वै पुरुषस्य बुभूषतः ।
इष्टं जिहीर्षतः किंचित्सचिवाः शत्रुकर्शन ॥ ११ ॥
यस्यास्त्वीदृशकं वाक्यं श्रुत्वाऽपि स्वल्पचेतसः ।
तमस्त्वपागमत्तस्य सुचित्रार्थपदाक्षरम् ॥ १२ ॥

**पुत्र उवाच—**

उदके भूरियं धार्या मर्तव्यं प्रवणे मया ।
यस्य मे भवती नेत्री भविष्यद्भूतिदर्शिनी ॥ १३ ॥
अहं हि वचनं त्वत्तः शुश्रूषुरपरापरम् ।
किंचित्किंचित्प्रतिवदंस्तूष्णीमासं मुहुर्मुहुः ॥ १४ ॥

[ नील० ] दरो भयं जातु कदाचित् दीर्णो भीतः ॥ १ ॥ महीमिति पाठे महीस्थान् लोकान् ॥ २ ॥ अपरे स्वीयाः । प्रजिहीर्षन्ति प्रहर्तुं ताडितुमिच्छन्ति ॥ ३ ॥ इलाः धेनवः इलाधेनुः सहवत्सा नं आगादिति मन्त्रवर्णात् ॥ ४ ॥ ते तवापि सुहृदः सन्ति ॥ ५ ॥ ये राष्ट्रमस्मदीयमिदमस्माभी रक्षणीयं राजा च व्यसनादुद्धर्तव्य इति अभिमन्यन्ते अभिमानवन्तः। मा दीदरः माविदारय ॥६॥ समाश्वासं धैर्यम् ॥ ७ ॥ स्वल्पचेतसोऽपि तस्य तमोऽपागमदिति संबन्धः ॥ १२ ॥ उदके मज्जन्तीव भूः पित्र्यं राज्यं धूरिति पाठेऽपि स एवार्थः इयं मया धार्या मग्नं राज्यं वा उद्धर्तव्यं प्रवणे प्रपाते वा युद्धाख्ये वा मर्तव्यं न तु एवमेव निर्व्यापारेण स्थेयं नेत्री शिक्षयित्री ॥ १३ ॥ अपरापरमपरमपरमुत्तरोत्तरमिति यावत् प्रतिवदम् प्रतिकूलं वदन् आयसं हृदयं तवेति पुत्रे निःस्नेहासीत्यादि ॥ १४ ॥

[ अर्जु० ] दरो भयं दीर्णो भीतः ॥ १ ॥ इला इडा इव गाव इव ॥ ४ ॥ प्रमीतान् मृतान् ॥५॥ व्यसनं ईयुषः प्राप्नुवतः ये राष्ट्रमभिमन्यन्ते पालयन्ति तव ते पूजिताः सुहृदो मता इत्यन्वयः । मा दीदरो मादारय मा प्रहासिसुः मा त्यजेयुः ॥ ६ ॥ नैकशताः अनन्ताः शतार्हा बहुवेतनाः ॥१०॥ [उच्छ्रयत ]अपि स्वल्पतेजसः स्वल्पतेजसोऽपीत्यन्वयः । तमोऽज्ञानं सुचित्रार्थपदाक्षरं वाक्यमिति पूर्वेण संबन्धः॥१२॥उदके धूर्भारो दुर्वहनीयोऽपि मया धर्त्तव्यः । प्रबलेऽनुकुले (?) सर्तव्यं शमे निवृत्तिः कर्त्तव्येति अशक्यमपि कर्तुं शक्ष्यामि त्वयि नेत्र्यां समुपदिशन्त्यामशक्यमपि अनुष्ठातव्यमिति ॥ १३ ॥ प्रतिवदन् प्रतिकूलं वदन् तूष्णीमवदन् ॥ १४ ॥

[ सर्व० ] दरो भयं दीर्णो भीतः ॥ १ ॥ प्रतीतान् प्रतिगतान्···अपीति प्रश्ने मताः संमताः ॥५॥ ये सुहृदो राज्ञो व्यसनंगतस्य राष्ट्रमभिमन्यन्ते अस्मदीयमेतदित्यभिमानविषयीकुर्वन्ति ॥ ६ ॥ पौरुषमुरसः (?) ॥ ७ ॥ सौम्यं शान्तमिव आपातत एव शान्तम् ॥ ८ ॥ नैकशता अनेकशताः शतार्हाः शतवेतनयोग्याः॥१०॥उज्जहतः उद्यच्छतः ॥ ११ ॥ उदके धू र्याम्यं धार्यमवश्यं मयापि भारो वोढव्य इत्यर्थः। प्रवणे प्रवणप्राये क्रमनिम्ने पर्वतादिभागे। भवती नेत्री यस्य । तेनाशक्यं न प्रारब्धुमित्यर्थः ॥ १३ ॥ अवरावरमपरावरम् । प्रतिवदन् प्रतिकूलं वदन् कचित्तूष्णीमकिंचिद्वदन् आसम् ॥ १४ ॥

[ लक्षा० ] नैव राज्ञा दरः कार्य इत्यत्र दरः भयं दरत्रासौभीतिर्भीः साध्वसं भयम्' इत्यमरः ॥ १ ॥ बद्ध-

८ म. ब्रवीमि ते। ९ म. नान्यो वै तंच संपादयामि ते। १० म. नैकशत। म. पुत्रक। ज. शतार्हा हानित्र्। १३ म. भवत्या भूतदर्शिनी।

अतृप्यन्नमृतस्येव कृच्छ्राल्लब्धस्य बान्धवात् ।
उद्यच्छाम्येष शत्रूणां नियमार्थं जयाय च ॥१५॥

कुन्त्युवाच—

सदश्व इव स क्षिप्तः प्रणुन्नो वाक्यसायकैः ।
तच्चकार तथा सर्वं यथावदनुशासनम् ॥ १६ ॥
इदमुद्धर्षणं भीमं तेजोवर्धनमुत्तमम् ।
राजानं श्रावयेन्मन्त्री सीदन्तं शत्रुपीडितम् ॥१७॥
जयो नामेतिहासोऽयं श्रोतव्यो विजिगीषुणा ।
महीं विजयते क्षिप्रं श्रुत्वा शत्रूंश्च मर्दति ॥ १८ ॥
इदं पुंसवनं चैव वीराजननमेव च ।
अभीक्ष्णं गर्भिणी श्रुत्वा ध्रुवं वीरं प्रजायते ॥१९॥
विद्याशूरं तपःशूरं दानशूरं तपस्विनम् ।
ब्राह्म्या श्रिया दीप्यमानं साधुवादे च संमतम्॥२०॥
अर्चिष्मन्तं बलोपेतं महाभागं महारथम् ।
धृतिमन्तमनाधृष्यं जेतारमपराजितम् ॥ २१ ॥
नियन्तारमसाधूनां गोप्तारं धर्मचारिणाम् ।
ईदृशं क्षत्रिया सूते वीरं सत्यपराक्रमम् ॥ २२ ॥

इति श्रीमहाभारते उद्योगपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

## सप्तत्रिंशदधिकशततमोऽध्यायः १३७

कुन्त्यार्जुनादिभ्यः प्रनष्टस्वांशोद्धारावश्यकत्व-शत्रुकृतापराधाक्षम्यत्वसंदेशप्रेषणम् ॥ १ ॥ भगवताकुन्तीमभिवाद्य स्वरथे कर्णमारोप्य तेन सह सुचिरं मन्त्रयित्वोपप्लव्यगमनम् ॥ २ ॥

कुन्त्युवाच—

अर्जुनं केशव ब्रूयास्त्वयि जाते स्म सूतके ।
उपोपविष्टा नारीभिराश्रमे परिवारिता ॥ १ ॥
अथान्तरिक्षे वागासीद्दिव्यरूपा मनोरमा ।
सहस्राक्षसमः कुन्ति भविष्यत्येष ते सुतः ॥ २ ॥
एष जेष्यति संग्रामे कुरून्सर्वान्समागतान् ।
भीमसेनद्वितीयश्च लोकमुद्वर्तयिष्यति ॥ ३ ॥
पुत्रस्ते पृथिवीं जेता यशश्चास्य दिवं स्पृशेत् ।
हत्वा कुरूंश्च संग्रामे वासुदेवसहायवान् ॥ ४ ॥
पित्र्यमंशं प्रनष्टं च पुनरप्युद्धरिष्यति ।
भ्रातृभिः सहितः श्रीमांस्त्रीन्मेधानाहरिष्यति ॥५॥
स सत्यसंधो बीभत्सुः सव्यसाची यथाऽच्युत ।
तथा त्वमेव जानासि बलवन्तं दुरासदम् ॥ ६ ॥
तथा तदस्तु दाशार्ह यथा वागभ्यभाषत ।
धर्मश्चेदस्ति वार्ष्णेय तथा सत्यं भविष्यति ॥ ७ ॥
त्वं चापि तत्तथा कृष्ण सर्वं संपादयिष्यसि ।
नाहं तदभ्यसूयामि यथा वागभ्यभाषत ॥ ८ ॥
नमो धर्माय महते धर्मो धारयति प्रजाः ।
एतद्धनंजयो वाच्यो नित्योद्युक्तो वृकोदरः ॥ ९ ॥
यदर्थं क्षत्रिया सूते तस्य कालोऽयमागतः ।
नहि वैरं समासाद्य सीदन्ति पुरुषर्षभाः ॥ १० ॥

---

वत्सा जला इवेत्यत्र जं जातं वत्सं लालयन्तीति जलाः गावः ॥ ४ ॥ उदकं धूरियं धार्येत्यत्र धार्या धर्तुं शक्या सर्तव्यं सृ गताविति धातोर्गतं शक्यं त्वद्बुद्ध्या असाध्यमपि करिष्यामीति भावः ॥ १३ ॥

इति श्रीम० उ० वा० कृ० ल० षट्त्रिंशदधिकशततमोऽध्यायः ॥१३६॥

[ नील० ] बान्धवात् बन्धुतः उद्यच्छामि उद्यमं करोमि नियमार्थं निग्रहार्थे बान्धवानिति पाठे उद्यच्छामि धारयामि ॥ १५ ॥ पुंसवनं पुत्रप्रसवकरं वीराणामाजननं येन तद्वीराजननं प्रजायते जनयति ॥ १९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

[ अर्जु० ] बान्धवात् त्वत्तः उद्यच्छामि ॥ १५ ॥ पुंसवनं पुत्रप्रदं वीराजननं वीरजनकम् । धृष्ट्यं प्रागल्भ्यं तद्वन्तम् ॥ १९ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

[ सर्व० ] बान्धवाद्बन्धुतः ॥ १५ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां षट्त्रिंशदधिकशततमोऽध्यायः ॥ १३६ ॥

[ नील० ] अर्जुनमिति ॥१॥ उद्वर्तयिष्यति आकुलीकरिष्यति लोकं शत्रुजनम् ॥३॥ मेधान् अश्वमेधान् ॥५॥

[ अर्जु० ] भीमसेनद्वितीयो भीमसेनो द्वितीयः सहायो यस्य उद्वर्तयिष्यति उद्धरिष्यति ॥ ३ ॥ [ ग्रामजन्ये

---

१८ म. मर्दयेत् । २० म. वादेन । २१ म. महाभागं महोदयम् ॥ अध्यायः ॥ १३६ ॥

६ म. सव्यसाची धनंजयः । ९ म. महते नमः कृष्णाय वेधसे ।

विदिता ते सदा बुद्धिर्भीमस्य न स शाम्यति ।
यावदन्तं न कुरुते शत्रूणां शत्रुकर्शन ॥ ११ ॥
सर्वधर्मविशेषज्ञां स्नुषां पाण्डोर्महात्मनः ।
ब्रूया माधव कल्याणीं कृष्ण कृष्णां यशस्विनीम् ॥१२
युक्तमेतन्महाभागे कुले जाते यशस्विनि ।
यन्मे पुत्रेषु सर्वेषु यथावत्त्वमवर्तिथाः ॥ १३ ॥
माद्रीपुत्रौ च वक्तव्यौ क्षत्रधर्मरतावुभौ ।
विक्रमेणार्जितान् भोगान् वृणीतं जीवितादपि॥१४॥
विक्रमाधिगता ह्यर्थाः क्षत्रधर्मेण जीवतः ।
मनो मनुष्यस्य सदा प्रीणन्ति पुरुषोत्तम ॥ १५ ॥
यच्च वः प्रेक्षमाणानां सर्वधर्मोपचायिनाम् ।
पाञ्चाली परुषाण्युक्ता को नु तत्क्षन्तुमर्हति ॥१६॥
न राज्यहरणं दुःखं द्यूते चापि पराजयः ।
प्रव्राजनं सुतानां वा न मे तद्दुःखकारणम् ॥ १७ ॥
यत्र सा बृहती श्यामा सभायां रुदती तदा ।
अश्रौषीत्परुषा वाचस्तन्मे दुःखतरं महत् ॥ १८ ॥
स्त्रीधर्मिणी वरारोहा क्षत्रधर्मरता सदा ।
नाध्यगच्छत्तदा नाथं कृष्णा नाथवती सती ॥१९॥
तं वै ब्रूहि महाबाहो सर्वशस्त्रभृतां वरम् ।
अर्जुनं पुरुषव्याघ्रं द्रौपद्याः पदवीं चर ॥ २० ॥
विदितं हि तवात्यन्तं क्रुद्धाविव यमान्तकौ ।
भीमार्जुनौ नयेतां हि देवानपि परां गतिम् ॥२१॥
तयोश्चैतदवज्ञानं यत्सा कृष्णा सभागता ।
दुःशासनश्च यद्भीमं कटुकान्यभ्यभाषत ॥ २२ ॥
पश्यतां कुरुवीराणां तच्च संस्मारयेः पुनः ।
पाण्डवान् कुशलं पृच्छेः सपुत्रान् कृष्णया सह ॥२३॥
मां च कुशलिनीं ब्रूयास्तेषु भूयो जनार्दन ।
अरिष्टं गच्छ पन्थानं पुत्रान्मे प्रतिपालय ॥ २४ ॥

**वैशम्पायन उवाच—**

अभिवाद्याथ तां कृष्णः कृत्वा चापि प्रदक्षिणम् ।
निश्चक्राम महाबाहुः सिंहखेलगतिस्ततः ॥ २५ ॥
ततो विसर्जयामास भीष्मादीन्कुरुपुङ्गवान् ।
आरोप्याथ रथे कर्णं प्रायात्सात्यकिना सह ॥२६॥
ततः प्रयाते दाशार्हे कुरवः संगता मिथः ।
जजल्पुर्महदाश्चर्यं केशवे परमाद्भुतम् ॥ २७ ॥
प्रमूढा पृथिवी सर्वा मृत्युपाशवशीकृता ।
दुर्योधनस्य बालिश्यान्नैतदस्तीति चाब्रुवन् ॥२८॥
ततो निर्याय नगरात्प्रययौ पुरुषोत्तमः ।
मन्त्रयामास च तदा कर्णेन सुचिरं सह ॥ २९ ॥
विसर्जयित्वा राधेयं सर्वयादवनन्दनः ।
ततो जवेन महता तूर्णमश्वानचोदयत् ॥ ३० ॥
ते पिबन्त इवाकाशं दारुकेण प्रचोदिताः ।
हया जग्मुर्महावेगा मनोमारुतरंहसः ॥ ३१ ॥
ते व्यतीत्य महाध्वानं क्षिप्रं श्येना इवाशुगाः ।
उच्चैर्जग्मुरुपप्लव्यं शार्ङ्गधन्वानमावहन् ॥ ३२ ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

---

राजसमूहसंग्रामे ] नित्योद्युक्तः स्वभावशिक्षितः ॥ ९ ॥ समासज्य वैरं संयोज्य ॥ १० ॥

[ सर्व० ] ग्रामजन्ये समूहयुद्धे ॥ ३ ॥

[ नील० ] धर्मोपचायिनां धर्मवर्धनशीलानाम् ॥१६॥ पदवीं चर मार्गमनुसर शत्रुस्त्रीणां वैधव्यार्थं यतस्वेत्यर्थः ॥ २० ॥ परां गतिं मरणम् ॥ २१ ॥ नैतदस्ति राष्ट्रमिति शेषः ॥ २८ ॥ निर्याय निर्गत्य ॥२९॥ उपप्लव्यं विराटनगरम् ॥ ३२ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

[ अर्जु० ] स भीमः ॥ ११ ॥ बृहती कर्मणा, बृहती- पुष्पवत् श्यामा वा ॥ १८ ॥ अवज्ञातमवज्ञानम् ॥ २२ ॥ अरिष्टं अरिन्नम् ॥ २४ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

[ सर्व० ] अरिष्टं हिंसासहितम् ॥ २४ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां सप्तत्रिंशाधिकशततमोऽध्यायः ॥ १३७ ॥

[ लक्षा० ] स्त्रीधर्मिणी वरारोहेत्यत्र स्त्रीधर्मिणी रजस्वला ॥ १९ ॥ एतद्राज्यमस्य दुर्योधनस्य नास्तीत्यब्रुवन् ॥ २८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्तत्रिंशदधिकशततमोऽध्यायः ॥ १३७ ॥

---

१३ म. कुले जाताऽसि भामिनि । १५ म. जीवितम् । १६ म. सर्वधर्मोपचायिनी १७ म. कारकम् । १८ म. यत्तु सा । ३२ म. तेनातीत्य । म. । उच्चैःसूर्यमुप° । अध्यायः ॥ १३७ ॥

## अष्टात्रिंशदधिकशततमोऽध्यायः १३८

भीष्मद्रोणाभ्यां दुर्योधनाय पुनः शमविधानोपदेशः ॥ १ ॥

**वैशम्पायन उवाच—**

कुन्त्यास्तु वचनं श्रुत्वा भीष्मद्रोणौ महारथौ ।
दुर्योधनमिदं वाक्यमूचतुः शासनातिगम् ॥ १ ॥
श्रुतं ते पुरुषव्याघ्र कुन्त्याः कृष्णस्य संनिधौ ।
वाक्यमर्थवदत्युग्रमुक्तं धर्म्यमनुत्तमम् ॥ २ ॥
तत्करिष्यन्ति कौन्तेया वासुदेवस्य संमतम् ।
नहि ते जातु शाम्येरन्नृते राज्येन कौरव ॥ ३ ॥
क्लेशिता हि त्वया पार्था धर्मपाशसितास्तदा ।
सभायां द्रौपदी चैव तैश्च तन्मर्षितं तव ॥ ४ ॥
कृतास्त्रं ह्यर्जुनं प्राप्य भीमं च कृतनिश्चयम् ।
गाण्डीवं चेषुधी चैव रथं च ध्वजमेव च ॥ ५ ॥
नकुलं सहदेवं च बलवीर्यसमन्वितौ ।
सहायं वासुदेवं च न क्षाम्यति युधिष्ठिरः ॥ ६ ॥
प्रत्यक्षं ते महाबाहो यथा पार्थेन धीमता ।
विराटनगरे पूर्वं सर्वे स्म युधि निर्जिताः ॥ ७ ॥
दानवा घोरकर्माणो निवातकवचा युधि ।
रौद्रमस्त्रं समादाय दग्धा वानरकेतुना ॥ ८ ॥
कर्णप्रभृतयश्चेमे त्वं चापि कवची रथी ।
मोक्षितो घोषयात्रायां पर्याप्तं तन्निदर्शनम् ।
प्रशाम्य भरतश्रेष्ठ भ्रातृभिः सह पाण्डवैः ॥ ९ ॥
रक्षेमां पृथिवीं सर्वां मृत्योर्दंष्ट्रान्तरं गताम् ।
ज्येष्ठो भ्राता धर्मशीलो वत्सलः श्लक्ष्णवाक्कविः ॥१०॥
तं गच्छ पुरुषव्याघ्रं व्यपनीयेह किल्बिषम् ।
दृष्टश्च त्वं पाण्डवेन व्यपनीतशरासनः ॥ ११ ॥
प्रशान्तभ्रुकुटिः श्रीमान् कृता शान्तिः कुलस्य नः ।
तमभ्येत्य सहामात्यः परिष्वज्य नृपात्मजम् ॥१२॥
अभिवादय राजानं यथापूर्वमरिन्दम ।
अभिवादयमानं त्वां पाणिभ्यां भीमपूर्वजः ॥१३॥
प्रतिगृह्णातु सौहार्दात्कुन्तीपुत्रो युधिष्ठिरः ।
सिंहस्कन्धोरुबाहुस्त्वां वृत्तायतमहाभुजः ॥ १४ ॥
परिष्वजतु बाहुभ्यां भीमः प्रहरतां वरः ।
कम्बुग्रीवो गुडाकेशस्ततस्त्वां पुष्करेक्षणः ॥ १५ ॥
अभिवादयतां पार्थः कुन्तीपुत्रो धनञ्जयः ॥ १६ ॥
आश्विनेयौ नरव्याघ्रौ रूपेणाप्रतिमौ भुवि ।
तौ च त्वां गुरुवत्प्रेम्णा पूजया प्रत्युदीयताम् ॥१७॥
मुञ्चन्त्वानन्दजाश्रूणि दाशार्हप्रमुखा नृपाः ।
संगच्छ भ्रातृभिः सार्धं मानं संत्यज्य पार्थिव ॥१८॥
प्रशाधि पृथिवीं कृत्स्नां ततस्त्वं भ्रातृभिः सह ।
समालिङ्ग्य च हर्षेण नृपा यान्तु परस्परम् ॥१९॥
अलं युद्धेन राजेन्द्र सुहृदां शृणु वारणम् ।
ध्रुवं विनाशो युद्धे हि क्षत्रियाणां प्रदृश्यते ॥२०॥
ज्योतींषि प्रतिकूलानि दारुणा मृगपक्षिणः ।
उत्पाता विविधा वीर दृश्यन्ते क्षत्रनाशनाः ॥२१॥
विशेषत इहास्माकं निमित्तानि निवेशने ।
उल्काभिर्हि प्रदीप्ताभिर्बाध्यते पृतना तव ॥ २२ ॥
वाहनान्यप्रहृष्टानि रुदन्तीव विशांपते ।
गृध्रास्ते पर्युपासन्ते सैन्यानि च समन्ततः ॥ २३ ॥
नगरं न यथापूर्वं तथा राजनिवेशनम् ।
शिवाश्चाशिवनिर्घोषा दीप्तां सेवन्ति वै दिशम् ॥२४॥
कुरु वाक्यं पितुर्मातुरस्माकं च हितैषिणाम् ।
त्वय्यायत्तो महाबाहो शमो व्यायाम एव च ॥२५॥

---

[ नील० ] कुन्त्या इति ॥२॥ प्रशाम्य प्रशमं कुरु ॥९॥ आश्विनेयौ अश्विनोः पुत्रौ नकुलसहदेवौ ॥ १७ ॥ वारणं प्रतिषेधम् ॥ २० ॥ दीप्तां दिशमिति दिग्दाहाख्य उत्पात उक्तः ॥ २४ ॥

[ अर्जु० ] धर्मपाशसिताः धर्मरज्जुबद्धाः ॥ ४ ॥ रौद्रं रुद्रस्य संबन्धि पाशुपतम् ॥ ८ ॥ निदर्शनं दृष्टान्तः ॥ ९ ॥ पृथिवीं पृथिवीस्थान् ॥ १० ॥ कंबुग्रीवः कम्बुः शंखस्तस्येव त्रिरेखा ग्रीवा यस्य गुडाकेशः गुडा स्नुही तद्वत् केशा यस्य यद्वा गुडाका धनुर्विद्या तस्या ईशः यद्वा गुडाका निद्रा तस्या ईशः जितनिद्र इत्यर्थः ॥ १५ ॥ मानं गर्वम् ॥ १८ ॥ निवेशने गृहे ॥ २२ ॥ दीप्तां सूर्याधिष्ठिताम् ॥ २४ ॥ व्यायामो युद्धम् ॥ २५ ॥

[ सर्व० ] द्रौपदी चैव क्लेशिता ॥ ४ ॥ दीप्तां सूर्याध्युषिताम् ॥ २४ ॥ व्यायामो युद्धम् ॥ २५ ॥

---

३ म. संमतः ॥ अध्यायः ॥ १३८ ॥

न चेत्करिष्यसि वचः सुहृदामरिकर्शन ।
तप्स्यसे वाहिनीं दृष्ट्वा पार्थबाणप्रपीडिताम् ॥२६॥
भीमस्य च महानादं नदतः शुष्मिणो रणे ।
श्रुत्वा स्मर्ताऽसि मे वाक्यं गाण्डीवस्य च निःस्वनम् ।
यद्येतदपसव्यं ते वचो मम भविष्यति ॥ २७ ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

## एकोनचत्वारिंशदधिकशततमोऽध्यायः १३९

स्ववचनश्रवणेन विमनसं दुर्योधनं दृष्ट्वा भीष्मद्रोणाभ्यां शुश्रूषुणा पार्थेन सहावश्यंभावियुद्धप्रसंगं शोचित्वा दुर्योधनं च विगर्ह्य पाण्डवानामजेयत्वमात्मनश्च जीविते उदासीनत्वमुक्त्वा पुनः शमोपदेशः ॥ १ ॥

**वैशम्पायन उवाच—**

एवमुक्तस्तु विमनास्तिर्यग्दृष्टिरधोमुखः ।
संहत्य च भ्रुवोर्मध्यं न किंचिद्व्याजहार ह ॥ १ ॥
तं वै विमनसं दृष्ट्वा संप्रेक्ष्यान्योन्यमन्तिकात् ।
पुनरेवोत्तरं वाक्यमुक्तवन्तौ नरर्षभौ ॥ २ ॥

**भीष्म उवाच—**

शुश्रूषुमनसूयं च ब्रह्मण्यं सत्यवादिनम् ।
प्रतियोत्स्यामहे पार्थमतो दुःखतरं नु किम् ॥ ३ ॥

**द्रोण उवाच—**

अश्वत्थाम्नि यथा पुत्रे भूयो मम धनंजये ।
बहुमानः परो राजन् संनतिश्च कपिध्वजे ॥ ४ ॥
तं च पुत्रात्प्रियतमं प्रतियोत्स्ये धनंजयम् ।
क्षात्रं धर्ममनुष्ठाय धिगस्तु क्षत्रजीविकाम् ॥ ५ ॥
यस्य लोके समो नास्ति कश्चिदन्यो धनुर्धरः ।
मत्प्रसादात्स बीभत्सुः श्रेयानन्यैर्धनुर्धरैः ॥ ६ ॥
मित्रध्रुग्दुष्टभावश्च नास्तिकोऽथानृजुः शठः ।
न सत्सु लभते पूजां यज्ञे मूर्ख इवागतः ॥ ७ ॥
वार्यमाणोऽपि पापेभ्यः पापात्मा पापमिच्छति ।
चोद्यमानोऽपि पापेन शुभात्मा शुभमिच्छति ॥८॥
मिथ्योपचरिता ह्येते वर्तमाना ह्यनुप्रिये ।
अहितत्वाय कल्पन्ते दोषा भरतसत्तम ॥ ९ ॥
त्वमुक्तः कुरुवृद्धेन मया च विदुरेण च ।
वासुदेवेन च तथा श्रेयो नैवाभिमन्यसे ॥ १० ॥
अस्ति मे बलमित्येव सहसा त्वं तितीर्षसि ।
सग्राहनक्रमकरं गङ्गावेगमिवोष्णगे ॥ ११ ॥
वाससैव यथा हि त्वं प्रावृण्वानोऽभिमन्यसे ।
स्रजं त्यक्तामिव प्राप्य लोभाद्यौधिष्ठिरीं श्रियम्१२

---

[ नील० ] शुष्मिणः बलिनः अपसव्यं विपरीतं यदि निर्घातसदृशमिति पाठे निर्घातसदृशं वज्रपाततुल्यम् ॥२७॥

इति श्रीमन्महाभारते नैलकण्ठीये उद्योगपर्वणि भारतभावदीपे अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

[ अर्जु० ] शुष्मिणः तेजस्विनः अपसव्यं विपरीतम् २७

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

[ सर्व० ] अपसव्यं विपरीतमकार्यम् ॥ २७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्याया-मष्टात्रिंशदधिकशततमोऽध्यायः ॥ १३८ ॥

[ नील० ] एवमिति ॥ १ ॥ पूजां न लभते हे दुर्योधन त्वद्वत् ॥ ७ ॥ एते पाण्डवास्त्वया मिथ्योपचरिता अपि अनु पश्चात्प्रिये वर्तमाना हि प्रसिद्धं तव तु दोषाः द्वेषादयः अहितत्वाय वैरभावाय कल्पन्ते ॥ ९ ॥ उष्णगे उष्णातिगमे वर्षाकाले ॥ ११ ॥ वास एवेति पाठे वासगृहे। पाठान्तरे त्यक्तं वासो वस्त्रं परकीयं स्वीयमिति मन्यसे इति योज्यम् ॥ १२ ॥

[ अर्जु० ] अनुप्रिये अनुकूले ॥ ९ ॥ उष्णगे वर्षासु ॥ ११ ॥ स्रजं त्यक्तामिव योधिष्ठिरीं श्रियं प्रावृण्वानो यथा वासः निरायस(?)स्तथाद्य संप्रति मन्यसे । द्रक्ष्यसिपुनः क्लेशमित्यभिप्रायः ॥ १२ ॥ भगवद्यानपद्यानि विषमाणि कचित् कचित् । व्याख्यातानि मया यत्नात् विन्दन्त्यां(?)तानि सूरयः ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

[ सर्व० ] न सत्सु लभते पूजां यथा भवान् ॥ ७ ॥ एते शूनात्मनः(?)अनुप्रिये अनुकूलतया प्रिये दोषा दोषहेतवः ॥ ९ ॥ उष्णगे उष्णातिगमने वर्षासु ॥ ११ ॥ वासः स्रजं परित्यक्ताम् प्राप्य आवृण्वानो यथा त्वं यौधिष्ठिरीं श्रियं प्राप्य मन्यसे श्रीस्वामिनमात्मानमित्यर्थात् ॥ १२ ॥

[ लक्षा० ] पुनरेवोचतुर्वाक्यमुक्तवन्तावित्यत्र उक्तवंतौ प्रशस्तवाक्यवंतौ उक्तं भाषितमुदितं जल्पितमित्यमरः॥२॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षाभरणे एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

---

३ म. सत्यसंगरम् । १२ वास एव यथा त्यक्तं ॥ अध्यायः ॥ १३९ ॥

द्रौपदीसहितं पार्थं सायुधैर्भ्रातृभिर्वृतम् ।
वनस्थमपि राज्यस्थः पाण्डवं को विजेष्यति॥१३॥
निदेशे यस्य राजानः सर्वे तिष्ठन्ति किंकराः ।
तमैलविलमासाद्य धर्मराजो व्यराजत ॥ १४ ॥
कुबेरसदनं प्राप्य ततो रत्नान्यवाप्य च ।
स्फीतमाक्रम्य ते राष्ट्रं राज्यमिच्छन्ति पाण्डवाः१५
दत्तं हुतमधीतं च ब्राह्मणास्तर्पिता धनैः ।
आवयोर्गतमायुश्च कृतकृत्यौ च विद्धि नौ ॥१६॥
त्वं तु हित्वा सुखं राज्यं मित्राणि च धनानि च ।
विग्रहं पाण्डवैः कृत्वा महद्व्यसनमाप्स्यसि ॥ १७ ॥
द्रौपदी यस्य चाशास्ते विजयं सत्यवादिनी ।
तपोघोरव्रता देवी कथं जेष्यसि पाण्डवम् ॥ १८ ॥
मन्त्री जनार्दनो यस्य भ्राता यस्य धनंजयः ।
सर्वशस्त्रभृतां श्रेष्ठः कथं जेष्यसि पाण्डवम् ॥ १९ ॥
सहाया ब्राह्मणा यस्य धृतिमन्तो जितेन्द्रियाः ।
तमुग्रतपसं वीरं कथं जेष्यसि पाण्डवम् ॥ २० ॥
पुनरुक्तं च वक्ष्यामि यत्कार्यं भूतिमिच्छता ।
सुहृदा मज्जमानेषु सुहृत्सु व्यसनार्णवे ॥ २१ ॥
अ लंयुद्धेन तैर्वीरैः शाम्य त्वं कुरुवृद्धये ।
मा गमः ससुतामात्यः सबलश्च पराभवम् ॥ २२ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

## चत्वारिंशदधिकशततमोऽध्यायः १४०

कर्णं प्रति भगवता धर्मतस्त्वं पाण्डोः पुत्रोसि तद्दुर्योधनादीन्परित्यज्य युधिष्ठिरं समाश्रय पार्थाश्चाग्रजत्वात्त्वामेव राज्येऽभिषेक्ष्यन्तीत्युक्तमिति संजयेन धृतराष्ट्रं प्रति कथनम् ॥ १ ॥

**धृतराष्ट्र उवाच—**

राजपुत्रैः परिवृतस्तथा भृत्यैश्च संजय ।
उपारोप्य रथे कर्णं निर्यातो मधुसूदनः ॥ १ ॥
किमब्रवीदमेयात्मा राधेयं परवीरहा ।
कानि सांत्वानि गोविन्दः सूतपुत्रे प्रयुक्तवान् ॥२॥
उद्यन्मेघस्वनः काले कृष्णः कर्णमथाब्रवीत् ।
मृदु वा यदि वा तीक्ष्णं तन्ममाचक्ष्व संजय ॥ ३ ॥

**संजय उवाच—**

आनुपूर्व्येण वाक्यानि तीक्ष्णानि च मृदूनि च ।
प्रियाणि धर्मयुक्तानि सत्यानि च हितानि च ॥४॥
हृदयग्रहणीयानि राधेयं मधुसूदनः ।
यान्यब्रवीदमेयात्मा तानि मे शृणु भारत ॥ ५ ॥

**वासुदेव उवाच—**

उपासितास्ते राधेय ब्राह्मणा वेदपारगाः ।
तत्त्वार्थं परिपृष्टाश्च नियतेनानसूयया ॥ ६ ॥
त्वमेव कर्ण जानासि वेदवादान् सनातनान् ।
त्वमेव धर्मशास्त्रेषु सूक्ष्मेषु परिनिष्ठितः ॥ ७ ॥
कानीनश्च सहोढश्च कन्यायां यश्च जायते ।
वोढारं पितरं तस्य प्राहुः शास्त्रविदो जनाः ॥ ८ ॥

---

[ नील० ] ऐलविलं कुबेरमासाद्य रणे प्राप्य ॥ १४ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

[ सर्व० ] व्यराजत तेजस्वी बभूव ॥ १४ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामेकोनचत्वारिंशदधिकशततमोऽध्यायः ॥ १३९ ॥

[ नील० ] राजपुत्रैरिति ॥ १ ॥ कानीनो द्विविधः सहोढः विवाहादूर्ध्वं जातः विवाहात्प्राग्जातश्च तन्मातुर्वोढारं तस्य पितरं प्राहुः ॥ ८ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

[ अर्जु० ] राजपुत्रैः परिवृतः इत्यादिर्याहि याहीति सारथिमित्यन्तस्य ईश्वरेच्छाप्रेरितेन दैवेन दुर्योधनकर्णशकुनिदुःशासनेषु चतुर्षु अनयेन बुद्धिस्तादृशी चरिता या बृहस्पतिसमानामुपदेशसहस्रैरपि न भेदमापद्यते । कर्णस्यैकान्ते प्रमाणवद्भिः धर्मार्थयुक्तैर्वचनैः प्रबोध्यमानस्यापि दैवप्रेरितबुद्धिकृत्यादीनुपाधीनालम्ब्य तादृशमुपदेशरूपं पौरुषं कृष्णस्यातिवर्तते तस्मात्कौरवेषु दुर्दैवं बलवद्दुर्बलं पौरुषम्। पाण्डवेषु तु दैवपौरुषे परस्परं कृतानुकूले समबले इति तात्पर्यार्थः । रथोपस्थे रथस्योपवेशनस्थाने ॥ १ ॥ ओघ [ मेघ ] स्वनः ओघो जलप्लवम् ॥ ३ ॥ तीक्ष्णानि वर्णतः मृदून्यर्थतः ॥ ४ ॥ हृदयग्रहणीयानि तस्य ग्रहकाले ॥ ५ ॥ परिपृष्टा जनैः । परिदृष्टा इति पाठे कर्तरि क्तः । बहुव्रीहिर्वा ॥ ६ ॥ कानीनः कन्यायां जातः कन्यायां यश्च जायत इति कन्यायामेव जातो यः तस्य कानीनत्वं सहोढत्वं चावधारणार्थेन चकारेण बोधयति । वोढारं पितरं तस्य प्राहुः न बीजिनं

---

२ म. रथोपस्थो । ४ म. श्लक्ष्णानि च ।

सोऽसि कर्ण तथाजातः पाण्डोः पुत्रोऽसि धर्मतः ।
निग्रहाद्धर्मशास्त्राणामेहि राजा भविष्यसि ॥ ९ ॥
पितृपक्षे च ते पार्था मातृपक्षे च वृष्णयः ।
द्वौ पक्षावभिजानीहि त्वमेतौ पुरुषर्षभ ॥ १० ॥
मया सार्द्धमितो यातमद्य त्वां तात पाण्डवाः ।
अभिजानन्तु कौन्तेयं पूर्वजातं युधिष्ठिरात् ॥११॥
पादौ तव ग्रहीष्यन्ति भ्रातरः पंच पाण्डवाः ।
द्रौपदेयास्तथा पंच सौभद्रश्चापराजितः ॥ १२ ॥
राजानो राजपुत्राश्च पाण्डवार्थे समागताः ।
पादौ तव ग्रहीष्यन्ति सर्वे चांधकवृष्णयः ॥ १३ ॥
हिरण्मयाश्च ते कुम्भाऽराजतान्पार्थिवांस्तथा ।
ओषध्यः सर्वबीजानि सर्वरत्नानि वीरुधः ॥ १४ ॥
राजन्या राजकन्याश्चाप्यानयन्त्वाभिषेचनम् ।
षष्ठे त्वां च तथा काले द्रौपद्युपगमिष्यति ॥ १७ ॥
अग्निं जुहोतु वै धौम्यः संशितात्मा द्विजोत्तमः ।
अद्य त्वामभिषिञ्चन्तु चातुर्वैद्या द्विजातयः ॥ १६ ॥
पुरोहितः पाण्डवानां ब्रह्मकर्मण्यवस्थितः ।
तथैव भ्रातरः पञ्च पाण्डवाः पुरुषर्षभाः ॥ १७ ॥
द्रौपदेयास्तथा पञ्च पञ्चालाश्चेदयस्तथा ।
अहं च त्वाऽभिषेक्ष्यामि राजानं पृथिवीपतिम् १८
युवराजोऽस्तु ते राजा धर्मपुत्रो युधिष्ठिरः ।
गृहीत्वा व्यजनं श्वेतं धर्मात्मा संशितव्रतः ॥ १९ ॥
उपान्वारोहतु रथं कुन्तीपुत्रो युधिष्ठिरः ।
छत्रं च ते महाश्वेतं भीमसेनो महाबलः ॥ २० ॥
अभिषिक्तस्य कौन्तेयो धारयिष्यति मूर्धनि ।
किङ्किणीशतनिर्घोषं वैयाघ्रपरिवारणं ॥ २१ ॥
रथं श्वेतहयैर्युक्तमर्जुनो वाहयिष्यति ।
अभिमन्युश्च ते नित्यं प्रत्यासन्नो भविष्यति॥२२॥
नकुलः सहदेवश्च द्रौपदेयाश्च पञ्च ये ।
पञ्चालाश्चानुयास्यन्ति शिखण्डी च महारथः॥२३॥
अहं च त्वाऽनुयास्यामि सर्वे चान्धकवृष्णयः ।
दाशार्हाः परिवारास्ते दाशार्णाश्च विशांपते ॥२४॥
भुङ्क्ष्व राज्यं महाबाहो भ्रातृभिः सह पाण्डवैः ।
जपैर्होमैश्च संयुक्तो मङ्गलैश्च पृथग्विधैः ॥ २५ ॥
पुरोगमाश्च ते सन्तु द्रविडाः सह कुन्तलैः ।
आन्ध्रास्तालचराश्चैव चूचुपा वेणुपास्तथा ॥२६॥
स्तुवन्तु त्वां च बहुभिः स्तुतिभिः सूतमागधाः ।
विजयं वसुषेणस्य घोषयन्तु च पाण्डवाः ॥ २७ ॥
स त्वं परिवृतः पार्थैर्नक्षत्रैरिव चन्द्रमाः ।
प्रशाधि राज्यं कौन्तेय कुन्तीं च प्रतिनन्दय ॥२८॥
मित्राणि ते प्रहृष्यन्तु व्यथन्तु रिपवस्तथा ।
सौभ्रात्रं चैव तेऽद्यास्तु भ्रातृभिः सह पाण्डवैः २९

इति श्रीमहाभारते उद्योगपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

---

नापि पोष्टारं तस्मात् पाण्डोः पुत्रोऽसि न सूर्यस्य न चाधिरथेः ॥ ८ ॥

[ सर्व० ] श्लक्ष्णानि मृद्वक्षराणि मृदूनि मृदुलानि ॥ ४ ॥ कन्यायां यो जायते स कानीनः सहोढश्चेति द्विविधः । आद्यः विवाहपूर्वकालप्रसूतोऽन्यो विवाहानंतरम् इति । वोढारं तत्कन्यापाणिग्राहम् । यश्चेति चकारः पादपूरणे ॥ ८ ॥

[ लक्षा० ] कानीनश्च सहोढश्चेत्यत्र कन्यायां जातोऽयं कानीनः । तस्य पुरुषस्य तया कन्यया सह यः ऊढः विवाहीकृतः तं वोढारं पितरं प्राहुरिति संबन्धः ॥ ८ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

[ अर्जु० ] तथाजातः कन्यायां जातः निग्रहात् निश्चयात् । एहि आगच्छ ॥ ९ ॥ पार्थिवान् मृन्मयान् ॥ १४ ॥ षष्ठे कालस्य भागे ॥ १५ ॥ चातुर्वैद्याश्चतुर्भिर्वेदैश्चरन्तः ॥ १६ ॥ त्वा त्वाम् ॥ १८ ॥ आन्ध्रादयो आन्ध्रादिदेशेषु राजानः पुरोगमाः सन्त्वित्यन्वयः ॥ २६ ॥ वसुषेणस्य कर्णस्य ॥ २७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

[ सर्व० ] धर्मशास्त्राणां निग्रहान्नियामकत्वात् पाण्डोः पुत्रोऽसि ॥ ९ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां चत्वारिंशदधिकशततमोऽध्यायः ॥ १४० ॥

---

१९ म. महात्मा ॥ अध्यायः ॥ १४० ॥

## एकचत्वारिंशदधिकशततमोऽध्यायः १४१

इदानीं मया पाण्डवाश्रयणे मम तेषां चाकीर्तिः स्यात्, किंचाधिरथदुर्योधनादीनां सौहार्दादपि तथा कर्तुं नोत्सहे युद्धे च पाण्डवानामेव जयो भवितेत्याद्युक्तवतः कर्णस्य भगवता विसर्जनम् ॥ १ ॥

कर्ण उवाच—

असंशयं सौहृदान्मे प्रणयाच्चात्थ केशव ।
सख्येन चैव वार्ष्णेय श्रेयस्कामतयैव च ॥ १ ॥
सर्वं चैवाभिजानामि पाण्डोः पुत्रोऽस्मि धर्मतः ।
निग्रहाद्धर्मशास्त्राणां यथा त्वं कृष्ण मन्यसे ॥ २ ॥
कन्या गर्भं समाधत्त भास्करान्मां जनार्दन ।
आदित्यवचनाच्चैव जातं मां सा व्यसर्जयत् ॥३॥
सोऽस्मि कृष्ण तथा जातः पाण्डोः पुत्रोऽस्मि धर्मतः ।
कुन्त्या त्वहमपाकीर्णो यथा न कुशलं तथा ॥ ४ ॥
सूतो हि मामधिरथो दृष्ट्वैवाभ्यानयद्गृहान् ।
राधायाश्चैव मां प्रादात्सौहार्दान्मधुसूदन ॥ ५ ॥
मत्स्नेहाच्चैव राधायां सद्यः क्षीरमवातरत् ।
सा मे मूत्रं पुरीषं च प्रतिजग्राह माधव ॥ ६ ॥
तस्याः पिण्डव्यपनयं कुर्यादस्मद्विधः कथम् ।
धर्मविद्धर्मशास्त्राणां श्रवणे सततं रतः ॥ ७ ॥
तथा मामभिजानाति सूतश्चाधिरथः सुतम् ।
पितरं चाभिजानामि तमहं सौहृदात्सदा ॥ ८ ॥
स हि मे जातकर्मादि कारयामास माधव ।
शास्त्रदृष्टेन विधिना पुत्रप्रीत्या जनार्दन ॥ ९ ॥
नाम वै वसुषेणेति कारयामास वै द्विजैः ।
भार्याश्चोढा मम प्राप्ते यौवने तत्परिग्रहात् ॥ १० ॥
तासु पुत्राश्च पौत्राश्च मम जाता जनार्दन ।
तासु मे हृदयं कृष्ण संजातं कामबन्धनम् ॥ ११ ॥
न पृथिव्या सकलया न सुवर्णस्य राशिभिः ।
हर्षाद्भयाद्वा गोविन्द मिथ्या कर्तुं तदुत्सहे ॥ १२ ॥
धृतराष्ट्रकुले कृष्ण दुर्योधनसमाश्रयात् ।
मया त्रयोदश समा भुक्तं राज्यमकण्टकम् ॥ १३ ॥
इष्टं च बहुभिर्यज्ञैः सह सूतैर्मयाऽसकृत् ।
आवाहाश्च विवाहाश्च सह सूतैर्मया कृताः ॥ १४ ॥
मां च कृष्ण समासाद्य कृतः शस्त्रसमुद्यमः ।
दुर्योधनेन वार्ष्णेय विग्रहश्चापि पाण्डवैः ॥ १५ ॥
तस्माद्रणे द्वैरथे मां प्रत्युद्यातारमच्युत ।
वृतवान्परमं कृष्ण प्रतीपं सव्यसाचिनः ॥ १६ ॥
वधाद्बन्धाद्भयाद्वापि लोभाद्वाऽपि जनार्दन ।
अनृतं नोत्सहे कर्तुं धार्तराष्ट्रस्य धीमतः ॥ १७ ॥
यदि ह्यद्य न गच्छेयं द्वैरथं सव्यसाचिना ।
अकीर्तिः स्याद्धृषीकेश मम पार्थस्य चोभयोः ॥१८॥
असंशयं हितार्थाय ब्रूयास्त्वं मधुसूदन ।
सर्वं च पाण्डवाः कुर्युस्त्वद्वशित्वान्न संशयः ॥१९॥
मन्त्रस्य नियमं कुर्यास्त्वमत्र मधुसूदन ।
एतदत्र हितं मन्ये सर्वं यादवनन्दन ॥ २० ॥

---

[ नील० ] असंशयमिति ॥ १ ॥ आवाहाः कुलधर्माः आवापा इति पाठेऽपि स एवार्थः ॥ १४ ॥ मां च मित्रमिति शेषः शस्त्रसमुद्यमः युद्धोत्साहः ॥ १५ ॥ वधात् वधं प्राप्यापि बन्धात् निर्बन्धात् कुन्तीसंबन्धाद्वा भयात् पराजयभयात् ॥ १७ ॥ उभयोरपि अकीर्तिः उभाभ्यामप्यन्योन्यवधस्य प्रतिज्ञातत्वात् ॥ १८ ॥ ब्रूयास्त्वं पाण्डवान्प्रतीति शेषः त्वद्वशित्वात् त्वमेव वशी नियामको येषां तेषां भावस्तत्त्वं ततः ॥ १९ ॥ मन्त्रस्य कर्णः कुन्तीसुत इत्येवंविधस्य आवयोर्गुप्तपरिभाषणस्य नियमं गोपनं युधिष्ठिरेऽप्रकाशनमिति यावत् ॥ २० ॥

[ अर्जु० ] सौहृदात् स्नेहात् प्रणयात् स्नेहपूर्विकाया श्चेष्टायाः ॥ १ ॥ निग्रहात् निश्चयात् ॥२॥ व्यसर्जयत् । अत्यजत् ॥ ३ ॥ तथाजातः कन्यायामेव जातः । अपाकीर्णः त्यक्तः । यथा न कुशलं यथा न धर्मः ॥ ४ ॥ पिण्डव्यपनयं पिंडो ग्रासः व्यपनयोऽपहारः ॥ ७ ॥ आवाहाः उत्साहा उत्सवा इति यावत् ॥ १४ ॥ प्रतिघं प्रतिहन्तारम् ॥ १६ ॥ अकीर्त्तिरुभयोर्वधप्रतिज्ञा हानितः ॥ १८ ॥ तद्वशित्वात् तदधीनत्वात् ॥ १९ ॥ मन्त्रस्य नियमं मदुक्तस्य पाण्डवेष्वकथनम् ॥ २० ॥

[सर्व०] सौहृदाद्बान्धवात् । प्रणयात् स्नेहात् ॥१॥ अथ अपाकीर्णस्त्यक्तः । यथा न कुशलं न युक्तम् ॥ ४ ॥ पिण्डव्यपनयमपोषणेन परित्याजनम् ॥ ७ ॥ आवाहा आवाहनानि बन्धूनाम् ॥१४॥ अकीर्तिरुभयोरुभाभ्यामपि अन्योऽन्यवधप्रतिज्ञानात् । मम कुन्तीसुतस्त्वमेवं रूपस्य मम ॥१८॥

---

२ म. सर्वं चैवानुजा । ३ म. मे जनार्दन । १० म. मया प्राप्ते यौवने केशिसूदन । १४ म. उत्सवाश्च विवाहाश्च । १५ म. समाश्रित्य । १६ म. प्रतियायाहमर्जुनम् । धृतवान्परमं हृष्टः प्रतिज्ञां । १८ म. द्वैरथे सव्यसाचिनम् ।

यदि जानाति मां राजा धर्मात्मा संयतेन्द्रियः ।
कुन्त्याः प्रथमजं पुत्रं न स राज्यं ग्रहीष्यति ॥२१॥
प्राप्य चापि महद्राज्यं तदहं मधुसूदन ।
स्फीतं दुर्योधनायैव संप्रदद्यामरिन्दम ॥ २२ ॥
स एव राजा धर्मात्मा शाश्वतोऽस्तु युधिष्ठिरः ।
नेता यस्य हृषीकेशो योद्धा यस्य धनंजयः ॥२३॥
पृथिवी तस्य राष्ट्रं च यस्य भीमो महारथः ।
नकुलः सहदेवश्च द्रौपदेयाश्च माधव ॥ २४ ॥
धृष्टद्युम्नश्च पाञ्चाल्यः सात्यकिश्च महारथः ।
उत्तमौजा युधामन्युः सत्यधर्मा च सौमकिः ॥२५॥
चैद्यश्च चेकितानश्च शिखण्डी चापराजितः ।
इन्द्रगोपकवर्णाश्च केकया भ्रातरस्तथा ।
इन्द्रायुधसवर्णश्च कुन्तिभोजो महामनाः ॥ २६ ॥
मातुलो भीमसेनस्य श्येनजिच्च महारथः ।
शङ्खः पुत्रो विराटस्य निधिस्त्वं च जनार्दन॥२७॥
महानयं कृष्ण कृतः क्षत्रस्य समुदानयः ।
राज्यं प्राप्तमिदं दीप्तं प्रथितं सर्वराजसु ॥ २८ ॥
धार्तराष्ट्रस्य वार्ष्णेय शस्त्रयज्ञो भविष्यति ।
अस्य यज्ञस्य वेत्ता त्वं भविष्यसि जनार्दन ॥२९॥
आध्वर्यवं च ते कृष्ण क्रतावस्मिन्भविष्यति ।
होता चैवात्र बीभत्सुः सन्नद्धः स कपिध्वजः॥३०॥
गाण्डीवं स्रुक् तथा चाऽऽज्यं वीर्यं पुंसां भविष्यति ।
ऐन्द्रं पाशुपतं ब्राह्मं स्थूणाकर्णं च माधव ।
मन्त्रास्तत्र भविष्यन्ति प्रयुक्ताः सव्यसाचिना॥३१॥
अनुयातश्च पितरमधिको वा पराक्रमे ।
गीतं स्तोत्रं स सौभद्रः सम्यक् तत्र भविष्यति॥३२
उद्गाताऽत्र पुनर्भीमः प्रस्तोता सुमहाबलः ।
विनदन्स नरव्याघ्रो नागानीकान्तकृद्रणे ॥ ३३ ॥
स चैव तत्र धर्मात्मा शश्वद्राजा युधिष्ठिरः ।
जपैर्होमैश्च संयुक्तो ब्रह्मत्वं कारयिष्यति ॥ ३४ ॥
शङ्खशब्दाः समुरजा भेर्यश्च मधुसूदन ।
उत्कृष्टसिंहनादश्च सुब्रह्मण्यो भविष्यति ॥ ३५ ॥
नकुलः सहदेवश्च माद्रीपुत्रौ यशस्विनौ ।
शामित्रं तौ महावीर्यौ सम्यक् तत्र भविष्यतः॥३६॥
कल्माषदण्डा गोविन्द विमला रथपङ्क्तयः ।
यूपाः समुपकल्पन्तामस्मिन् यज्ञे जनार्दन ॥ ३७ ॥

---

[ लक्षा० ] कुन्त्या त्वहमबाकीर्ण इत्यत्र कुलजो यथा न भवाभि तथा अबाकीर्णः अप्सु विसृष्टः ॥ ४ ॥ तस्याः पिण्डव्यपनयमित्यत्र पिण्डव्यपनयं पिण्डत्यागम् ॥ ७ ॥ आवाहाश्च विवाहाश्चेत्यत्र आवाहाः वह-प्रापण इतिधातोः स्वगृहं प्रति प्रापणानि ॥ १४ ॥ मन्त्रस्य नियममित्यत्र नियमं नितरां यमं यमनमाच्छा-दनम् ॥ २० ॥

[ नील० ] अन्यथा बाधकमाह–यदीति ॥ २१ ॥ इष्टापत्तिमाशङ्क्याह–प्राप्येति । अधर्मिष्ठस्य दुर्योधनस्य राज्यं लोकनाशकरमिति भावः ॥ २२ ॥ इन्द्रगोपकः वर्षासु प्रचलन् रक्तजन्तुस्तद्वर्णास्ताम्रा इत्यर्थः इन्द्रायुधं इन्द्रधनुः ॥ २६ ॥ निधिस्त्वं च जनार्दन निधिरिवाक्षयः कामपूरकः ॥ २७ ॥ समुदानयः समुदायीकरणम् ॥२८॥ अस्य यज्ञस्य वेत्ता उपद्रष्टा ॥ २९ ॥ आध्वर्यवं यज्ञस्य नेतृत्वं लोके हि उपद्रष्टाऽन्योऽध्वर्युरन्यो दृश्यते अत्र तु त्वमेव ईश्वररूपेण कर्ता ब्रह्मरूपेण साक्षी चेति भावः ॥ ३० ॥ अनुयातोऽनुगतः पितृसम इत्यर्थः गीतं स्तोत्रं प्रगीतमन्त्रप्रसाध्यां स्तुतिं उद्गातृकर्मेत्यर्थः तत् सौभद्रः भविष्यति अनुभविष्यति करिष्यतीत्यर्थः ॥ ३२ ॥ कारयिष्यति स्वार्थे णिच् करिष्यतीत्यर्थः ॥ ३४ ॥ नाद एव सुब्रह्मण्यो युद्धयज्ञे भोक्तुः कालस्यावाहनकर्ता ॥३५॥ शामित्रं क्षत्रियपशूनां मारणम् ॥ ३६ ॥ कल्माषदण्डाश्चित्रध्वजाः ॥ ३७ ॥

[ अर्जु० ] तत्प्रकाशने दोषमाह यदीत्यादि ॥ २१ ॥ औत्तमोजःप्रभृतयो द्रुपदपुत्राः ॥ २५ ॥ चेकितानो याद-वविशेषः । इन्द्रगोपः कीटविशेषः । लोहितवर्णः कास-ण्डियेति प्रसिद्धः ॥ २६ ॥ समुदानयः संघः ॥ २८ ॥ आध्वर्यवमध्वर्युकर्म ॥ ३० ॥ अनुयातः समः ॥ ३२ ॥ उद्गाता साम्ना यः कर्म करोति, प्रस्तुतं यः स्तौति स प्रस्तोता भीम एव ॥ ३३ ॥ कारयिष्यति स्वार्थे णिच् ॥ ३४ ॥ सुब्रह्मण्य इन्द्रप्रकाशनमन्त्रः ॥ ३५ ॥ शामित्रं पशुहिंसनम् ॥ ३६ ॥ कल्माषदण्डाः सुवर्णबद्धाः रथपङ्क्त्य एव यूपाः ॥ ३७ ॥

[ सर्व० ] समुदानयः समानयनम् ॥ २८ ॥ वेत्ता गुरुः ॥ २९ ॥ अनुजातोऽनुगम्य जातः । पितुः सम इति यावत् । गीतं स्तोत्रं भविष्यति प्राप्स्यति ॥ ३२ ॥ उद्गाता सन् सौभद्रः अत्र भीमः प्रस्तोता उद्गातृद्वितीयः ॥ ३३ ॥ कारयिष्यति । स्वार्थे णिच् ॥ ३४ ॥ सुब्रह्मण्यो उद्गातृचतुर्थः ॥ ३५ ॥ कल्माषादिकमुपबृंहणम् । स्थिरी-करणार्थं दण्डो येषां ते ॥ ३७ ॥

[ लक्षा० ] शामित्रं तौ महात्मानावित्यत्र शमिता पशुहिंसनकर्ता । तयोर्भावः शामित्रम् ॥३६॥ मैत्रावरुण-

कर्णिनालीकनाराचा वत्सदन्तोपबृंहणाः ।
तोमराः सोमकलशाः पवित्राणि धनूंषि च ॥३८॥
असयोऽत्र कपालानि पुरोडाशाः शिरांसि च ।
हविस्तु रुधिरं कृष्ण तस्मिन्यज्ञे भविष्यति ॥३९॥
इध्माः परिधयश्चैव शक्तयो विमला गदाः ।
सदस्या द्रोणशिष्याश्च कृपस्य च शरद्वतः ॥४०॥
इषवोऽत्र परिस्तोमा मुक्ता गाण्डीवधन्वना ।
महारथप्रयुक्ताश्च द्रोणद्रौणिप्रचोदिताः ॥ ४१ ॥
प्रतिप्रास्थानिकं कर्म सात्यकिस्तु करिष्यति ।
दीक्षितो धार्तराष्ट्रोऽत्र पत्नी चास्य महाचमूः॥४२॥
घटोत्कचोऽत्र शामित्रं करिष्यति महाबलः ।
अतिरात्रे महाबाहो वितते यज्ञकर्मणि ॥ ४३ ॥
दक्षिणा त्वस्य यज्ञस्य धृष्टद्युम्नः प्रतापवान् ।
वैतानिके कर्ममुखे जातो यत्कृष्ण पावकात् ॥४४॥
यदब्रुवमहं कृष्ण कटुकानि स्म पाण्डवान् ।
प्रियार्थं धार्तराष्ट्रस्य तेन तप्ये ह्यकर्मणा ॥ ४५ ॥
यदा द्रक्ष्यसि मां कृष्ण निहतं सव्यसाचिना ।
पुनश्चितिस्तदा चास्य यज्ञस्याथ भविष्यति ॥४६॥
दुःशासनस्य रुधिरं यदा पास्यति पाण्डवः ।
आनर्दं नर्दतः सम्यक् तदा सूयं भविष्यति ॥४७॥
यदा द्रोणं च भीष्मं च पाञ्चाल्यौ पातयिष्यतः ।
तदा यज्ञावसानं तद्भविष्यति जनार्दन ॥ ४८ ॥
दुर्योधनं यदा हन्ता भीमसेनो महाबलः ।
तदा समाप्स्यते यज्ञो धार्तराष्ट्रस्य माधव ॥ ४९ ॥
स्नुषाश्च प्रस्नुषाश्चैव धृतराष्ट्रस्य संगताः ।
हतेश्वरा नष्टपुत्रा हतनाथाश्च केशव ॥ ५० ॥

---

आग्नीध्रावित्यत्र मैत्रावरुणे कर्मणि आग्नीध्र आदेष्टा त्वध्वरे व्रतीत्यमरोक्तेः मित्रमुपब्रूहीत्यादिमंत्रादेशकर्तारौ कल्माषदण्ड इत्यत्र कल्माषदण्डा कृष्णपाण्डर इत्यभिधानात् नानाविधरत्नकान्त्या कृष्णपाण्डरा दण्डा यष्टयो यासां ताः ३७

[ नील० ] कर्णिप्रभृतयो वत्सदन्तान्ताः उपबृंहणाः अध्वर्योःसोमाहुतिप्रक्षेपकाले सहायाश्चमसाध्वर्यव इत्यर्थः। सोमकलशाः सोमरसग्रहणपात्राणि तोमराः तोमरच्छायाः पवित्राणि सोमोत्पवनसाधनानि बाणोत्क्षेपणसाम्यात् धनूंषि ॥ ३८ ॥ कपालानि शिरःपुरोडाशपाचकानि खर्परशकलानि, हविः सोमाज्यपयोरूपम् ॥ ३९ ॥ इध्माः अग्निसमिंधनार्थाः समिधः शक्तयः, परिधयः अग्नेः परितः आहुतिरक्षणार्थं स्थापितानि काष्ठानि गदाः ॥ ४० ॥ परिस्तोमाः सोमचमसादयः ॥ ४१ ॥ प्रतिप्रस्थाताऽध्वर्योस्तव द्वितीयः तस्य कर्म प्रतिप्रास्थानिकम् ॥ ४२ ॥ अतिरात्रे क्रतौ श्लेषेण निशीथे च घटोत्कचः रात्रिचरत्वात् शामित्रं करिष्यति ॥ ४३ ॥ वैतानिके वितानोऽग्नीनां विस्तरः तत्र विदिते वैतानिके श्रौतयज्ञे कर्ममुखे कर्मप्रभवे द्वारे कर्मैव मुखं निर्गमद्वारं यस्मिन्न तु योनिः तस्मिन् ॥ ४४ ॥ पाण्डवेषु स्नेहं दर्शयति—यदब्रुवमिति ॥४५॥ पुनश्चित्तिर्यज्ञानन्तरं चयनारम्भो यज्ञविशेषेपूक्तः ॥ ४६ ॥ आनर्दं महानादं नर्दतः णमुलन्तं पूर्वं पदं, सूयं सोमाभिषवः राजसूयसूर्येतिनिपातनात् उपपदयोगस्त्वनित्यः आर्षो वा तदभावेऽपि सुञः क्यप् दीर्घश्च । सुत्यमित्यपि पठन्ति ॥ ४७ ॥ यज्ञावसानं यज्ञस्य मध्ये मध्ये विरम्यावस्थानम् ॥ ४८ ॥ प्रस्नुषाः स्नुषाणामपि स्नुषाः संगता एकीभूताः हतेश्वराः ईश्वरो राजा नाथः पतिः ५०

[ अर्जु० ] कर्णीति वत्सदन्तोपबृंहणाः उपबृंहणः समित्सदृशो बाणः । सोमकलसा ग्रहाः सोमरसाधारपात्राणि इति यावत् । पवित्राणि अभिषवणानि ॥ ३८ ॥ कृपस्य च शिष्या इत्यन्वयः । शरद्वतः संज्ञापूर्वकविधेरनित्यत्वात् वृद्ध्यभावः ॥ ४० ॥ परिस्तोमाः आस्तराः ॥ ४१ ॥ प्रतिप्रास्थानिकं मन्त्रसाधारणम् ॥ ४२ ॥ अतिरात्रे वितते संतते अतिरात्रनाम्नि यज्ञे वा ॥ ४३ ॥ पुनश्चितिः पुनरारम्भः ॥ ४६ ॥ सुत्यं सुत्यापाटाः ॥४७॥ प्रस्नुषाः नप्तृवध्वः । हतनाथाः नाथ आश्रयणीयः ॥५०॥

[ सर्व० ] तोमराः कलशानि(?)येषाम् ॥३८॥ सदस्याः द्रोणशिष्याः कृपस्यापि शिष्याः ॥ ४० ॥ परिस्तोमाः सोमभूमिः ॥ ४१ ॥ प्रतिप्रस्थाता अध्वर्युद्वितीयः । तस्य कर्माणि प्रतिप्रास्थातृकम् ॥ ४२ ॥ अतिरात्रे बहुरात्र्यतिक्रमणे । श्लेषाऽर्थेन यज्ञविशेषे ॥ ४३ ॥ पुनश्चितिर्यज्ञानंतरं चयनारंभः ॥ ४६ ॥ सूत्यं सोमाभिषवः ॥ ४७ ॥ ईश्वरो राजा । नाथः पतिः रुदंत्यो हतेश्वरा यदेति पूर्वश्लोकेनानुवृत्तेनान्वयः । भविष्यन्तीति शेषः ॥ ५० ॥

[ लक्षा० ] दीक्षितो धार्तराष्ट्रोऽत्रेत्यत्र दीक्षितः दीक्षां प्रापितः । अत्र यज्ञे महाचमूरेव पत्नी ॥ ४२ ॥ अतिरात्रे यज्ञे अतिरात्रनामकयज्ञे । रात्रियुद्ध इतिध्वनिः । तदा शामित्रं घटोत्कचः करोतु ॥ ४३ ॥ तदा सुत्या भविष्यतीत्यत्र सुत्या सोमसवनम् ॥ ४७ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

---

४७ म. आनन्दं । अध्यायः ॥ १४१ ॥

रुदन्त्यः सह गान्धार्या श्वगृध्रकुरराकुले ।
स यज्ञेऽस्मिन्नवभृथो भविष्यति जनार्दन ॥ ५१ ॥
विद्यावृद्धा वयोवृद्धाः क्षत्रियाः क्षत्रियर्षभ ।
वृथा मृत्युं न कुर्वीरंस्त्वत्कृते मधुसूदन ॥ ५२॥
शस्त्रेण निधनं गच्छेत् समृद्धं क्षत्रमण्डलम् ।
कुरुक्षेत्रे पुण्यतमे त्रैलोक्यस्यापि केशव ॥ ५३ ॥
तदत्र पुण्डरीकाक्ष विधत्स्व यदभीप्सितम् ।
यथा कार्त्स्न्येन वार्ष्णेय क्षत्रं स्वर्गमवाप्नुयात्॥५४॥
यावत्स्थास्यन्ति गिरयः सरितश्च जनार्दन ।
तावत् कीर्तिभवः शब्दः शाश्वतोऽयं भविष्यति ५५
ब्राह्मणाः कथयिष्यन्ति महाभारतमाहवम् ।
समागमेषु वार्ष्णेय क्षत्रियाणां यशोधनम् ॥५६॥
समुपानय कौन्तेयं युद्धाय मम केशव ।
मन्त्रसंवरणं कुर्वन्नित्यमेव परंतप ॥ ५७ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

## द्विचत्वारिंशदधिकशततमोऽध्यायः १४२

भगवतः कर्णं प्रति क्षत्रमण्डलस्य युद्धे निधनं भवदाकाङ्क्षितमर्जुनोऽचिरात्संपादयिष्यतीति युद्धार्थमभ्युपागतान्सर्वान्कथयेत्युक्तिः ॥१॥

**संजय उवाच—**
कर्णस्य वचनं श्रुत्वा केशवः परवीरहा ।
उवाच प्रहसन्वाक्यं स्मितपूर्वमिदं यथा ॥ १ ॥

**श्रीभगवानुवाच—**
अपि त्वां न लभेत्कर्ण राज्यलम्भोपपादनम् ।
मया दत्तां हि पृथिवीं न प्रशासितुमिच्छसि ॥ २ ॥
ध्रुवो जयः पाण्डवानामितीदं
न संशयः कश्चन विद्यतेऽत्र ।
जयध्वजो दृश्यते पाण्डवस्य
समुच्छ्रितो वानरराज उग्रः ॥ ३ ॥
दिव्या माया विहिता भौमनेन
समुच्छ्रिता इन्द्रकेतुप्रकाशा ।
दिव्यानि भूतानि जयावहानि
दृश्यन्ति चैवात्र भयानकानि ॥ ४ ॥
न सज्जते शैलवनस्पतिभ्य
ऊर्ध्वं तिर्यग्योजनमात्ररूपः
श्रीमान् ध्वजः कर्ण धनंजयस्य
समुच्छ्रितः पावकतुल्यरूपः ॥ ५ ॥
यदा द्रक्ष्यसि संग्रामे श्वेताश्वं कृष्णसारथिम् ।
ऐन्द्रमस्त्रं विकुर्वाणमुभे चाप्यग्निमारुते ॥ ६ ॥
गाण्डीवस्य च निर्घोषं विस्फूर्जितमिवाशनेः ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ७ ॥

---

[नील०] स्नुषादयो यद्रुदन्त्योऽश्रुभिरार्द्रदेहाः स एवार्द्रीभावोऽवभृथ इत्यर्थः ॥ ५१ ॥ इदं युद्धं श्रेय एवेत्याह—विद्येति । वृथा अयुद्धेन ॥ ५२ ॥ समागमेषु संग्रामेषु यशो जयः पराक्रमेण मृत्युर्वा तदेव क्षत्रियाणां धनम् ॥ ५६ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

[अर्जु०] अवभृथो यज्ञान्तस्नानम् ॥ ५१ ॥ वृथामृत्युं युद्धं विना मरणम् । त्वत्कृते तव यज्ञपुरुषस्य प्रीतये ॥ ५२ ॥ क्षत्रमण्डलं क्षत्रजातीयमित्यर्थः ॥ ५३॥ कीर्त्तिभवः शब्दः साधुकारः ॥ ५५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

[सर्व०] स कालः अवभृथो यज्ञान्तस्नानादाविष्टिविशेषः ॥ ५१ ॥ वृथा युद्धं विना मृत्युम् ॥ ५२ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामेकचत्वारिंशदधिकशततमोऽध्यायः ॥ १४१ ॥

[नील०] कर्णस्येति ॥१॥ राज्यलम्भोपपादनं राज्यप्राप्त्युपायस्त्वां न लभेत् न स्पृशेत् तं न स्वीयं मन्यसे इत्यर्थः ॥ २ ॥ भौमनेन विश्वकर्मणा दृश्यन्ति पश्यन्ति । स्वार्थयगन्तोऽयं कण्ड्वादेराकृतिगणत्वात् अत्र ध्वजे ॥४॥ अग्निमारुते आग्नेयं मारुतं च ॥ ६ ॥ न तदेति कृते हि सर्वे कृतकृत्या एवेति न त्रिवर्गं कश्चिदपेक्षते । त्रेतायां तु धर्मं प्राधान्येनार्थकामावानुषङ्गिकत्वेन चापेक्षन्ते । द्वापरे तु अर्थकामौ प्राधान्येन धर्मं च तदङ्गत्वेन । तत्र कृतं न भवितेति मोक्षात् भ्रंश उक्तः । न त्रेतेति धर्माद्भ्रंश उक्तः । स च दुर्योधनादीनामस्त्येव । द्वापरं न भवितेति तेषामर्थकामावपि न भविष्यतो युद्धेन मरणस्यावश्यंभावादित्यर्थः ॥ ७ ॥

[अर्जु०] प्रहसन् उपहासं कुर्वन् ॥ १ ॥ अपि त्वां न तपेदिति शिरश्चालने नशब्दः तपेदेवेत्यर्थः । उपपादना दानम् ॥ २ ॥ भौमनेन विश्वसृजा । भयावहानि

२ म. न त्वं शासितुमिच्छसि ।

यदा द्रक्ष्यसि संग्रामे कुन्तीपुत्रं युधिष्ठिरम् ।
जपहोमसमायुक्तं स्वां रक्षन्तं महाचमूम् ॥ ८ ॥
आदित्यमिव दुर्धर्षं तपन्तं शत्रुवाहिनीम् ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥ ९ ॥
यदा द्रक्ष्यसि संग्रामे भीमसेनं महाबलम् ।
दुःशासनस्य रुधिरं पीत्वा नृत्यन्तमाहवे ॥ १० ॥
प्रभिन्नमिव मातङ्गं प्रतिद्विरदघातिनम् ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥११॥
यदा द्रक्ष्यसि संग्रामे द्रोणं शान्तनवं कृपम् ।
सुयोधनं च राजानं सैन्धवं च जयद्रथम् ॥ १२ ॥
युद्धायापततस्तूर्णं वारितान् सव्यसाचिना ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥१३॥
यदा द्रक्ष्यसि संग्रामे माद्रीपुत्रौ महाबलौ ।
वाहिनीं धार्तराष्ट्राणां क्षोभयन्तौ गजाविव ॥१४॥
विगाढे शस्त्रसंपाते परवीररथारुजौ ।
न तदा भविता त्रेता न कृतं द्वापरं न च ॥१५॥
ब्रूयाः कर्ण इतो गत्वा द्रोणं शान्तनवं कृपम् ।
सौम्योऽयं वर्तते मासः सुप्रापयवसेन्धनः ॥ १६ ॥
सर्वौषधिवनस्फीतः फलवानल्पमक्षिकः ।
निष्पङ्को रसवत्तोयो नात्युष्णशिशिरः सुखः॥१७॥
सप्तमाच्चापि दिवसादमावास्या भविष्यति ।
संग्रामो युज्यतां तस्यां तामाहुः शक्रदेवताम् ॥१८॥
तथा राज्ञो वदेः सर्वान् ये युद्धायाभ्युपागताः ।
यद्वो मनीषितं तद्वै सर्वं संपादयाम्यहम् ॥ १९ ॥
राजानो राजपुत्राश्च दुर्योधनवशानुगाः ।
प्राप्य शस्त्रेण निधनं प्राप्स्यन्ति गतिमुत्तमाम् ॥२०॥

इति श्रीमहाभारते उद्योगपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

## त्रिचत्वारिंशदधिकशततमोऽध्यायः १४३

कालः क्षत्रं नाशयिष्यति तत्र निमित्तमात्रं वयं किंच पाण्डवधार्तराष्ट्रयोः क्रमेण शुभाऽशुभशंसीनि निमित्तानि दृश्यन्ते तेन पाण्डवानामेवात्र जयो भवितेत्युक्तवतः कर्णस्य भगवतो विसर्जनम् ॥ १ ॥

**संजय उवाच—**

केशवस्य तु तद्वाक्यं कर्णः श्रुत्वाऽऽहितः शुभम् ।
अब्रवीदभिसंपूज्य कृष्णं तं मधुसूदनम् ॥ १ ॥
जानन्मां किं महाबाहो संमोहयितुमिच्छसि ।
योऽयं पृथिव्याः कार्त्स्न्येन विनाशः समुपस्थितः ॥२
निमित्तं तत्र शकुनिरहं दुःशासनस्तथा ।
दुर्योधनश्च नृपतिर्धृतराष्ट्रसुतोऽभवत् ॥ ३ ॥

---

भयकारीणि भयानकानि रौद्ररूपाणि ॥ ४ ॥ न तदा भविता त्रेतेत्यादि । युगक्षयो मृत्युस्तात्पर्यार्थः ॥ ७ ॥

[ सर्व० ] अपि त्वां न तपेत् न तापयति किमित्यर्थः उपपादना प्रदानम् ॥ २ ॥ भयावहानि भयदानि । भयानकानि दर्शनमात्रेण भयहेत्वाकृतीनि ॥ ४ ॥ न तदा भविता त्रेतेति युगत्रयान्तः कलिर्दुःखप्राय इति दुःखं भावीत्यर्थः । अन्वयवार्थालोचनेन च तदा दुर्योधनशकुनिदुःशासनानां त्रयाणां समाहारास्तेषां भवन्मूलत्वात् न कृतं कर्म भवतः न च द्वापरं कलह इतिबोद्धव्यम् ॥ ७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

[ लक्षा० ] समुच्छ्रितो वानरराज उग्र इत्यत्र वानरेण राजत इति वानरराजो ध्वजः ॥३॥ न तदा भविता त्रेतेत्यत्र युगत्रयेप्येतादृशा न सन्तीति भावः ॥ ७ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

[ नील० ] रथारुजौ रथभञ्जकौ ॥ १५ ॥ सौम्यः चन्द्रिकया अभिरामः ॥ १६ ॥ संग्रामः संग्रामसाधनकलापः युज्यतां एकीभूयावतिष्ठतां संग्रामारम्भस्तु दिनान्तरे एवेति वक्ष्यते ॥ १८ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

[ अर्जु० ] कलिरेव भवितेति तात्पर्यार्थः ॥ ९ ॥ सौम्योऽचण्डः अयं कार्तिको मासः ॥ १६ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि द्विचत्वारिंशदधिकशततमोऽध्यायः ॥ १४२ ॥

[ नील० ] केशवस्येति शुभं राज्यादिलाभमाहितः प्रवेशितः प्रलोभित इत्यर्थः ॥ १ ॥

[ सर्व० ] विजानन्नपि मां मोहयितुमिच्छसि राज्यप्रदानादिनाऽस्माकमपि तत्र नाशस्य दैवविहितत्वेन राज्यवै ··· ॥ २ ॥

---

१९ म. यान्युद्धायाभ्युपागतान् । २० म. परमां गतिम् । अध्यायः ॥१४२॥

१ म. हितं शुभम् ।

भीमसेनं च संक्रुद्धं यमौ चापि यमोपमौ ।
युयुधानद्वितीयं च धृष्टद्युम्नममर्षणम् ॥ ४६ ॥
अभिमन्युं द्रौपदेयान् विराटद्रुपदावपि ।
अक्षौहिणीपतींश्चान्यान्नरेन्द्रान् भीमविक्रमान्॥४७॥
सारवद्बलमस्माकं दुष्प्रधर्षं दुरासदम् ।
धार्तराष्ट्रबलं संख्ये हनिष्यति न संशयः ॥ ४८ ॥
धृष्टद्युम्नमहं मन्ये सेनापतिमरिन्दम ।

**वैशंपायन उवाच—**

एवमुक्ते तु कृष्णेन संप्राहृष्यन्नरोत्तमाः ॥ ४९ ॥
तेषां प्रहृष्टमनसां नादः समभवन्महान् ।
योग इत्यथ सैन्यानां त्वरतां संप्रधावताम् ॥ ५० ॥
हयवारणशब्दाश्च नेमिघोषाश्च सर्वतः ।
शङ्खदुन्दुभिघोषाश्च तुमुलाः सर्वतोऽभवन् ॥ ५१ ॥
तदुग्रं सागरनिभं क्षुब्धं बलसमागमम् ।
रथपत्तिगजोदग्रं महोर्मिभिरिवाकुलम् ॥ ५२ ॥
धावतामाह्वयानानां तनुत्राणि च बध्नताम् ।
प्रयास्यतां पाण्डवानां ससैन्यानां समन्ततः ॥ ५३ ॥
गङ्गेव पूर्णा दुर्धर्षा समदृश्यत वाहिनी ।
अग्रानीके भीमसेनो माद्रीपुत्रौ च दंशितौ ॥ ५४ ॥
सौभद्रो द्रौपदेयाश्च धृष्टद्युम्नश्च पार्षतः ।
प्रभद्रकाः सपञ्चाला भीमसेनमुखा ययुः ॥ ५५ ॥
ततः शब्दः समभवत्समुद्रस्येव पर्वणि ।
हृष्टानां संप्रयातानां घोषो दिवमिवास्पृशत् ॥५६॥
प्रहृष्टा दंशिता योधाः परानीकविदारणाः ।
तेषां मध्ये ययौ राजा कुन्तीपुत्रो युधिष्ठिरः ॥५७॥
शकटापणवेशाश्च यानयुग्यं च सर्वशः ।
कोशं यन्त्रायुधं चैव ये च वैद्याश्चिकित्सकाः॥५८॥
फल्गु यच्च बलं किंचिद्यच्चापि कृशदुर्बलम् ।
तत्संगृह्य ययौ राजा ये चापि परिचारकाः ॥५९॥
उपप्लव्ये तु पाञ्चाली द्रौपदी सत्यवादिनी ।
सह स्त्रीभिर्निववृते दासीदाससमावृता ॥ ६० ॥
कृत्वा मूलप्रतीकारं गुल्मैः स्थावरजङ्गमैः ।
स्कन्धावारेण महता प्रययुः पाण्डुनन्दनाः ॥६१॥
ददतो गां हिरण्यं च ब्राह्मणैरभिसंवृताः ।
स्तूयमाना ययू राजन् रथैर्मणिविभूषितैः ॥ ६२ ॥
केकया धृष्टकेतुश्च पुत्रः काश्यस्य चाभिभूः ।
श्रेणिमान्वसुदानश्च शिखण्डी चापराजितः ॥ ६३ ॥
हृष्टास्तुष्टा कवचिनः सशस्त्राः समलंकृताः ।
राजानमन्वयुः सर्वे परिवार्य युधिष्ठिरम् ॥ ६४ ॥
जघनार्धे विराटश्च याज्ञसेनिश्च सौमकिः ।
सुधर्मा कुन्तिभोजश्च धृष्टद्युम्नस्य चात्मजाः ॥६५॥

---

[ सर्व० ] अधिवासितं गन्धैः, कौतुकं रक्षासूत्रबन्धनम् । मङ्गलं स्वस्तिवाचनादि ॥ ३८ ॥

[ नील० ] अस्माकं बलं कर्तृ धार्तराष्ट्रबलं कर्म ॥४८॥ योगो युद्धाय सज्जीभवनम् । द्रव्योपायसन्नहनेष्वपि योग इति विश्वः ॥ ५० ॥ शकटा अनांसि आपणो वणिग्वीथ्युपलक्षितं विक्रेयद्रव्यं वेशो वेश्याजनाश्रयः पटगृहाणि । यानयुग्यं यानेषु युग्यं युगमर्हतीति रथादि । शकटमुपस्करादिभारवहं युग्यम् इदं तु केवलं प्रयाणार्हं युग्यम् । युग्यं च पत्रे इति निपातनात् । कोशं धनचयं यन्त्रायुधं गोलकप्रक्षेपणं नाल इत्युच्यते लोके । चिकित्सकाः शस्त्रवैद्याः ॥ ५८ ॥ मूलप्रतीकारं धनदाररक्षां गुल्मैः स्थावरैः प्राकाररूपैः जङ्गमैः परितः स्थाने स्थाने शूरसङ्घैः स्कन्धावारेण सैन्येन ॥ ६१ ॥ गां भूमिं धेनुं वा ॥ ६२ ॥ जघनार्द्धं पश्चिमार्द्धं ॥ ६५ ॥

[ अर्जु० ] योगः संनहनकालः ॥ ५० ॥ शकटापणवेशाः शकटाः यानविशेषाः आपणः पण्यवीथिका वेशो वेश्याजनसमाश्रयः ॥ ५८ ॥ फल्गु असारम् ॥ ५९ ॥ मूलप्रतीकारं मूलस्य मूलशरणस्य सेनाया वा प्रतीकारं रक्षा गुल्मैः आरक्षैः स्थावरैः इव स्थावरैः एकत्र स्थितैः वीरैर्जङ्गमैः प्रतिदिशं भ्रमद्भिः । अथवा स्थावरैः शिलाकाष्ठचयैः जङ्गमैः गजाश्वादिभिः । स्कन्धावारेण सेनासमूहेन ॥ ६१ ॥ अणिभूषितैरिति पाठे अणिस्त्विशूलमक्षाग्रकीलिका वा ॥ ६२ ॥ जघनार्धे पश्चार्धे ॥ ६५ ॥

[ सर्व० ] शकटा अनांसि । आपणः पण्यवीथ्युलक्षितं विक्रेयद्रव्यम् । वेशो वेश्याश्रयः पटगृहाणि । यानयुग्यं यानयुगसंबन्धि ॥ ५८ ॥ अश्वबलीवर्दादिमूलस्य स्त्रीशिबिरस्य प्रतीकारं गुल्मैरारक्षैः प्रकारादिभिरेकत्र स्थितैः । गजादिभिर्वा जंगमैर्भ्रमद्भिः सैन्यैः ॥ ६१ ॥ जघनार्धे पश्चार्धे ॥ ६५ ॥

इति श्रीमहा० उद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्याया-
मेकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

[ लक्षा० ] कृत्वा मूलप्रतीकारमित्यत्र मूलप्रतीकारं मूलस्य स्वमूलस्थानभूतोपप्लाव्यस्य प्रतीकारं रक्षाम् ॥६१॥

---

४९ ख. तथैव भृशदुर्बलम् । ख. राजा कुन्तीपुत्रो युधिष्ठिरः ।

६५ ख. सुवर्मा ।

रथायुतानि चत्वारि हयाः पञ्चगुणास्तथा ।
पत्तिसैन्यं दशगुणं गजानामयुतानि षट् ॥ ६६ ॥
अनाधृष्टिश्चेकितानो धृष्टकेतुश्च सात्यकिः ।
परिवार्य ययुः सर्वे वासुदेवधनंजयौ ॥ ६७ ॥
आसाद्य तु कुरुक्षेत्रं व्यूढानीकाः प्रहारिणः ।
पाण्डवाः समदृश्यन्त नर्दन्तो वृषभा इव ॥ ६८ ॥
तेऽवगाह्य कुरुक्षेत्रं शङ्खान् दध्मुररिन्दमाः ।
तथैव दध्मतुः शङ्खं वासुदेवधनंजयौ ॥ ६९ ॥
पांचजन्यस्य निर्घोषं विस्फूर्जितमिवाशनेः ।
निशम्य सर्वसैन्यानि समहृष्यन्त सर्वशः ॥ ७० ॥
शङ्खदुन्दुभिसंहृष्टः सिंहनादस्तरस्विनाम् ।
पृथिवीं चान्तरिक्षं च सागरांश्चान्वनादयत् ॥७१॥

इति श्रीमहाभारते उद्योगपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

## द्विपञ्चाशदधिकशततमोऽध्यायः १५२

धार्तराष्ट्रसैनिकान्विद्राव्य हिरण्वत्यास्तीरे पाण्डवैः स्वेषां कृते महार्हशिबिराणां विरचनं तत्र सर्वसंपत्संपादनं च ॥ १ ॥

**वैशंपायन उवाच—**

ततो देशे समे स्निग्धे प्रभूतयवसेन्धने ।
निवेशयामास तदा सेनां राजा युधिष्ठिरः ॥ १ ॥
परिहृत्य श्मशानानि देवतायतनानि च ।
आश्रमांश्च महर्षीणां तीर्थान्यायतनानि च ॥ २ ॥
मधुरानूषरे देशे शुचौ पुण्ये महामतिः ।
निवेशं कारयामास कुन्तीपुत्रो युधिष्ठिरः ॥ ३ ॥
ततश्च पुनरुत्थाय सुखी विश्रान्तवाहनः ।
प्रययौ पृथिवीपालैर्वृतः शतसहस्रशः ॥ ४ ॥
विद्राव्य शतशो गुल्मान् धार्तराष्ट्रस्य सैनिकान् ।
पर्यक्रामत्समन्ताच्च पार्थेन सह केशवः ॥ ५ ॥
शिबिरं मापयामास धृष्टद्युम्नश्च पार्षतः ।
सात्यकिश्च रथोदारो युयुधानश्च वीर्यवान् ॥ ६ ॥
आसाद्य सरितं पुण्यां कुरुक्षेत्रे हिरण्वतीम् ।
सूपतीर्थां शुचिजलां शर्करापङ्कवर्जिताम् ॥ ७ ॥
खानयामास परिखां केशवस्तत्र भारत ।
गुप्त्यर्थमपि चादिश्य बलं तत्र न्यवेशयत् ॥ ८ ॥
विधिर्यः शिबिरस्यासीत्पाण्डवानां महात्मनाम् ।
तद्विधानि नरेन्द्राणां कारयामास केशवः ॥ ९ ॥
प्रभूततरकाष्ठानि दुराधर्षतराणि च ।
भक्ष्यभोज्यान्नपानानि शतशोऽथ सहस्रशः ॥१०॥
शिबिराणि महार्हाणि राज्ञां तत्र पृथक्पृथक् ।
विमानानीव राजेन्द्र निविष्टानि महीतले ॥ ११ ॥
तत्रासन् शिल्पिनः प्राज्ञाः शतशो दत्तवेतनाः ।
सर्वोपकरणैर्युक्ता वैद्याः शास्त्रविशारदाः ॥ १२ ॥
ज्याधनुर्वर्मशस्त्राणां तथैव मधुसर्पिषोः ।
ससर्जरसपांसूनां राशयः पर्वतोपमाः ॥ १३ ॥
बहूदकं सुयवसं तुषाङ्गारसमन्वितम् ।
शिबिरे शिबिरे राजा संचकार युधिष्ठिरः ॥ १४ ॥

---

[ लक्षा० ] जघनार्धे विराटश्चेत्यत्र जघनार्धे सेनाख्यनार्या जघनस्थानीये अर्धे मध्य इत्यर्थः ॥ ६५ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

[ नील० ] समहृष्यन्त रोमाञ्चितानि ॥ ७० ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

[ अर्जु० ] समहृष्यन्त रोमाञ्चिताः ॥ ७० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि एकपञ्चाशदधिकशततमोऽध्यायः ॥ १५१ ॥

[ नील० ] तत इति ॥ १ ॥ मधुरं मनोहरं ॥ ३ ॥ गुल्मान् सैनिकसङ्घान् ॥ ५ ॥ सूपतीर्थां शोभनोपकण्ठाम् ॥ ७ ॥ तद्विधानि शिबिराणि ॥ ९ ॥

[ अर्जु० ] मधुरे मनोहरे, शुभे मङ्गल्ये ॥३॥ विद्राव्य निःसार्य । शिबिरं सेनानिवेशस्थानम् ॥ ६ ॥ तद्विधानि परिखादिसज्जितानि ॥ ९ ॥ शिबिराणि प्रासादादीनि ॥ ११ ॥ वैद्याः शल्यादिचिकित्सकाः ॥ १२ ॥

[ सर्व० ] तुषाङ्गारो लोहादिधमनार्थं कृत्यबन्धूनाम् (?) ॥ १४ ॥

[ लक्षा० ] विद्राव्य शतशो गुल्मानित्यत्र सैनामुखं गुल्मगणा इत्यमरोक्तेः गुल्मान् सेनामुखान् ॥ ५ ॥ सूपतीर्थां शुचिजलामित्यत्र सुष्ठु उप समीपे तीर्थानि यस्याः सा ताम् ॥ ७ ॥

इति श्रीम०भा०उ०वा०कृ०ल०द्विपञ्चाशदधिकशततमोऽध्यायः॥१५२॥

---

७० ख. सर्वभूतानि ॥ अध्यायः ॥ १५१ ॥

८ ख. चोद्दिश्य । १० ख. भोज्योपपन्नानि । ११ ख. राजन्ते निविष्टानि महात्मनाम् । १२ ख. वैद्याश्च सुविशारदाः ।

महायन्त्राणि नाराचास्तोमराणि परश्वधाः ।
धनूंषि कवचादीनि ऋष्टयस्तूणसंयुताः ॥ १५ ॥
गजाः कण्टकसन्नाहा लोहवर्मोत्तरच्छदाः ।
दृश्यन्ते तत्र गिर्याभाः सहस्रशतयोधिनः ॥ १६ ॥
निविष्टान्पाण्डवांस्तत्र ज्ञात्वा मित्राणि भारत ।
अभिसस्रुर्यथादेशं सबलाः सहवाहनाः ॥ १७ ॥
चरितब्रह्मचर्यास्ते सोमपा भूरिदक्षिणाः ।
जयाय पाण्डुपुत्राणां समाजग्मुर्महीक्षितः ॥ १८ ॥

इति श्रीमहाभारते उद्योगपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

## त्रिपञ्चाशदधिकशततमोऽध्यायः १५३

धार्तराष्ट्रैः सांग्रामिकसज्जनम् ॥ १ ॥

**जनमेजय उवाच—**

युधिष्ठिरं सहानीकमुपायान्तं युयुत्सया ।
सन्निविष्टं कुरुक्षेत्रे वासुदेवेन पालितम् ॥ १ ॥
विराटद्रुपदाभ्यां च सपुत्राभ्यां समन्वितम् ।
केकयैर्वृष्णिभिश्चैव पार्थिवैः शतशो वृतम् ॥ २ ॥
महेन्द्रमिव चादित्यैरभिगुप्तं महारथैः ।
श्रुत्वा दुर्योधनो राजा किं कार्यं प्रत्यपद्यत ॥ ३ ॥
एतदिच्छाम्यहं श्रोतुं विस्तरेण महामते ।
संभ्रमे तुमुले तस्मिन्यदासीत्कुरुजाङ्गले ॥ ४ ॥
व्यथयेयुरिमे देवान् सेन्द्रानपि समागमे ।
पाण्डवा वासुदेवश्च विराटद्रुपदौ तथा ॥ ५ ॥
धृष्टद्युम्नश्च पाञ्चाल्यः शिखण्डी च महारथः ।
युधामन्युश्च विक्रान्तो देवैरपि दुरासदः ॥ ६ ॥
एतदिच्छाम्यहं श्रोतुं विस्तरेण तपोधन ।
कुरूणां पाण्डवानां च यद्यदासीद्विचेष्टितम् ॥ ७ ॥

**वैशंपायन उवाच—**

प्रतियाते तु दाशार्हे राजा दुर्योधनस्तदा ।
कर्णं दुःशासनं चैव शकुनिं चाब्रवीदिदम् ॥ ८ ॥
अकृतेनैव कार्येण गतः पार्थानधोक्षजः ।
स एनान्मन्युनाऽऽविष्टो ध्रुवं धक्ष्यत्यसंशयम् ॥ ९ ॥
इष्टो हि वासुदेवस्य पाण्डवैर्मम विग्रहः ।
भीमसेनार्जुनौ चैव दाशार्हस्य मते स्थितौ ॥ १० ॥
अजातशत्रुरत्यर्थं भीमसेनवशानुगः ।
निकृतश्च मया पूर्वं सह सर्वैः सहोदरैः ॥ ११ ॥
विराटद्रुपदौ चैव कृतवैरौ मया सह ।
तौ च सेनाप्रणेतारौ वासुदेववशानुगौ ॥ १२ ॥
भविता विग्रहः सोऽयं तुमुलो लोमहर्षणः ।
तस्मात्सांग्रामिकं सर्वं कारयध्वमतन्द्रिताः ॥ १३ ॥
शिबिराणि कुरुक्षेत्रे क्रियन्तां वसुधाधिपाः ।
स्वपर्याप्तावकाशानि दुरादेयानि शत्रुभिः ॥ १४ ॥
आसन्नजलकोष्ठानि शतशोऽथ सहस्रशः ।
अच्छेद्याहारमार्गाणि वन्धोच्छ्रयचितानि च ॥ १५ ॥
विविधायुधपूर्णानि पताकाध्वजवन्ति च ।
समाश्च तेषां पन्थानः क्रियन्तां नगराद्बहिः ॥ १६ ॥

---

[ नील० ] कण्टकसन्नाहाः येषां स्पर्शमात्रादपि गजान्तराणां कण्टकवेधो भवति तादृशाः सन्नाहाः कवचानि कण्टकैः कवचैः सन्नहनं येषामिति प्राञ्चः ॥ १६ ॥ अभिसस्रुरभ्याजग्मुः ॥ १७ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

[ अर्जु० ] [हृद्यभवन् हृदि स्थिताः योधोपयोगित्वात् ] कङ्कटा बाणाः संनहना येषु ॥ १६ ॥ अभिमस्रुः अभ्याजग्मुः ॥ १७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

[सर्व०] महायंत्रादीनेव सर्वे च गुणदोषाभ्यां चिन्तयन्तीत्यर्थः ॥ १५ ॥ कङ्कटैः कवचैः सन्नाहः सन्नहनं येषाम् ॥ १६ ॥ सरसा इति मित्रपदार्थविशेषणत्वेपि पुंस्त्वं छान्दसत्वात् ॥ १७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां द्विपञ्चाशदधिकशततमोऽध्यायः ॥ १५२ ॥

[ नील० ] युधिष्ठिरमिति ॥१॥ आसन्नजलाः कोष्ठाः कक्ष्या येषु तानि तथा अच्छेद्यः शत्रुभिरनिवार्य आहार आहरणं वस्तूनां मार्गश्च येषु तानि अच्छेद्याहारमार्गाणि १५

[ अर्जु० ] एनान् राज्ञः ॥ ९ ॥ निकृतो वञ्चितः ॥ ११ ॥ दुरादानानि दुर्वहाणि ॥ १४ ॥ अच्छेद्याहार्यमार्गा मार्गबन्धका अच्छेद्या अवध्या येषु ॥ १५ ॥

---

१५ ज. तृणसंयुताः । १६ ज. कङ्कट ।१७ ख. यथोद्देशं ॥ अध्यायः१५२

४ ख. तपोधन । १५ ख. कामानि सुगमानि । ख. अच्छेद्याहार्यमार्गाणि रत्नोच्चय ।

प्रयाणं घुष्यतामद्य श्वोभूत इति मा चिरम्।
ते तथेति प्रतिज्ञाय श्वोभूते चक्रिरे तथा ॥ १७ ॥
हृष्टरूपा महात्मानो निवासाय महीक्षिताम्।
ततस्ते पार्थिवाः सर्वे तच्छ्रुत्वा राजशासनम् ॥१८॥
आसनेभ्यो महार्हेभ्य उदतिष्ठन्नमर्षिताः।
बाहून्परिघसंकाशान्संस्पृशतः शनैः शनैः ॥ १९ ॥
काञ्चनाङ्गददीप्तांश्च चन्दनागुरुभूषितान्।
उष्णीषाणि नियच्छन्तः पुण्डरीकनिभैः करैः।
अन्तरीयोत्तरीयाणि भूषणानि च सर्वशः ॥ २० ॥
ते रथान् रथिनः श्रेष्ठा हयांश्च हयकोविदाः।
सज्जयन्ति स्म नागांश्च नागशिक्षास्वनुष्ठिताः ॥२१॥
अथ वर्माणि चित्राणि काञ्चनानि बहूनि च।
विविधानि च शस्त्राणि चक्रुः सर्वाणि सर्वशः ॥२२॥
पदातयश्च पुरुषाः शस्त्राणि विविधानि च।
उपाजह्रुः शरीरेषु हेमचित्राण्यनेकशः ॥ २३ ॥
तदुत्सव इवोदग्रं संप्रहृष्टनरावृतम्।
नगरं धार्तराष्ट्रस्य भारतासीत्समाकुलम् ॥ २४ ॥
जनौघसलिलावर्तो रथनागाश्वमीनवान्।
शङ्खदुन्दुभिनिर्घोषः कोशसंचयरत्नवान् ॥ २५ ॥
चित्राभरणवर्मोर्मिः शस्त्रनिर्मलफेनवान्।
प्रासादमालाद्रिवृतो रथ्यापणमहाह्रदः ॥ २६ ॥
योधचन्द्रोदयोद्भूतः कुरुराजमहार्णवः।
व्यदृश्यत तदा राजंश्चन्द्रोदय इवोदधिः ॥ २७ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

## चतुःपञ्चाशदधिकशततमोऽध्यायः १५४

युधिष्ठिरेण श्रीकृष्णं प्रति कथमस्मिन्काले स्वधर्मान्न च्यवेमहीति प्रश्नः ॥१॥ भगवता न वयमस्वर्यं परित्यागेन शममिच्छाम इत्युक्ते युधिष्ठिरेण युद्धमाज्ञाप्य गुरुभिः सह संग्रामस्य शोचनमर्जुनेन कुन्तीविदुराभ्यामपि तथोपदेशात्तत्राधर्मशङ्का युक्तेति समाधानम् ॥ २ ॥

**वैशम्पायन उवाच—**

वासुदेवस्य तद्वाक्यमनुस्मृत्य युधिष्ठिरः।
पुनः पप्रच्छ वार्ष्णेयं कथं मन्दोऽब्रवीदिदम् ॥ १ ॥
अस्मिन्नभ्यागते काले किंच नः क्षममच्युत।
कथं च वर्तमाना वै स्वधर्मान्न च्यवेमहि ॥ २ ॥
दुर्योधनस्य कर्णस्य शकुनेः सौबलस्य च।
वासुदेव मतज्ञोऽसि मम सभ्रातृकस्य च ॥ ३ ॥
विदुरस्यापि तद्वाक्यं श्रुतं भीष्मस्य चोभयोः।
कुन्त्याश्च विपुलप्रज्ञ प्रज्ञा कार्त्स्न्येन ते श्रुता ॥ ४ ॥
सर्वमेतदतिक्रम्य विचार्य च पुनः पुनः।
क्षमं यन्नो महाबाहो तद्ब्रवीह्यविचारयन् ॥ ५ ॥
श्रुत्वैतद्धर्मराजस्य धर्मार्थसहितं वचः।
मेघदुन्दुभिनिर्घोषः कृष्णो वाक्यमथाब्रवीत् ॥ ६ ॥

**कृष्ण उवाच—**

उक्तवानस्मि यद्वाक्यं धर्मार्थसहितं हितम्।
न तु तन्निकृतिप्रज्ञे कौरव्ये प्रतितिष्ठति ॥ ७ ॥
न च भीष्मस्य दुर्मेधाः शृणोति विदुरस्य वा।
मम वा भाषितं किंचित्सर्वमेवातिवर्तते ॥ ८ ॥
नैष कामयते धर्मं नैष कामयते यशः।
जितं स मन्यते सर्वं दुरात्मा कर्णमाश्रितः ॥ ९ ॥
बन्धमाज्ञापयामास मम चापि सुयोधनः।
न च तं लब्धवान्कामं दुरात्मा पापनिश्चयः ॥ १० ॥
न च भीष्मो न च द्रोणो युक्तं तत्राहतुर्वचः।
सर्वे तमनुवर्तन्ते ऋते विदुरमच्युत ॥ ११ ॥

---

[ सर्व० ] अच्छेद्योऽभञ्जनीयः आहार्यः आहारगमनहितश्च मार्गो येषु ॥ १५ ॥

[ नील० ] अन्तरीयं परिधानीयम् उत्तरीयं प्रावरणवस्त्रम् ॥ २० ॥ उपाजह्रुः परिधानं कृतवन्तः ॥ २३ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

[ अर्जु० ] श्वोभूते प्रभाते ॥१७॥ नियच्छन्तो नियच्छन्तः। पुण्डरीकं पद्मम्। अन्तरीयोत्तरीयाणि अन्तरीयं द्वीपमेवोत्तरीयं येषु ॥२०॥ प्रासादमाला एवाद्रयः॥२६॥

इति श्रीम० मर्जुन० उद्यो० त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

[ सर्व० ] नियच्छन्तो बध्नन्तः ॥ २० ॥

इति श्रीमहा० सर्वज्ञ० त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

[लक्षा०] योगचन्द्रोदयोद्भूत इत्यत्र योगः उपायः २७

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे त्रिपञ्चाशदधिकशततमोऽध्यायः ॥ १५३ ॥

[ नील० ] वासुदेवेति ॥ १ ॥

---

२३ ख. उपजह्रुः। २४ ख. नराकुलम्। २७ ख. इवार्णवः ॥ अध्यायः १५३
२ ख. न च्यवेम स्वधर्मतः। ९ ख. न स ॥ अध्यायः ॥ १५४ ॥

शकुनिः सौबलश्चैव कर्णदुःशासनावपि ।
त्वय्ययुक्तान्यभाषन्त मूढा मूढममर्षणम् ॥ १२ ॥
किं च तेन मयोक्तेन यान्यभाषत कौरवः ।
संक्षेपेण दुरात्माऽसौ न युक्तं त्वयि वर्तते ॥ १३ ॥
पार्थिवेषु न सर्वेषु य इमे तव सैनिकाः ।
यत्पापं यन्नकल्याणं सर्वं तस्मिन्प्रतिष्ठितम् ॥ १४ ॥
न चापि वयमत्यर्थं परित्यागेन कर्हिचित् ।
कौरवैः शममिच्छामस्तत्र युद्धमनन्तरम् ॥ १५ ॥

**वैशंपायन उवाच—**

तच्छ्रुत्वा पार्थिवाः सर्वे वासुदेवस्य भाषितम् ।
अब्रुवन्तो मुखं राज्ञः समुदैक्षन्त भारत ॥ १६ ॥
युधिष्ठिरस्त्वभिप्रायमभिलक्ष्य महीक्षिताम् ।
योगमाज्ञापयामास भीमार्जुनयमैः सह ॥ १७ ॥
ततः किलकिलाभूतमनीकं पाण्डवस्य ह ।
आज्ञापिते तदा योगे समहृष्यन्त सैनिकाः ॥ १८ ॥
अवध्यानां वधं पश्यन् धर्मराजो युधिष्ठिरः ।
निःश्वसन् भीमसेनं च विजयं चेदमब्रवीत् ॥ १९ ॥
यदर्थं वनवासश्च प्राप्तं दुःखं च यन्मया ।
सोऽयमस्मानुपैत्येव परोऽनर्थः प्रयत्नतः ॥ २० ॥
तस्मिन् यत्नः कृतोऽस्माभिः स नो हीनः प्रयत्नतः ।
अकृते तु प्रयत्नेऽस्मानुपावृत्तः कलिर्महान् ॥ २१ ॥
कथं ह्यवध्यैः संग्रामः कार्यः सह भविष्यति ।
कथं हत्वा गुरून् वृद्धान्विजयो नो भविष्यति ॥ २२ ॥
तच्छ्रुत्वा धर्मराजस्य सव्यसाची परंतपः ।
यदुक्तं वासुदेवेन श्रावयामास तद्वचः ॥ २३ ॥
उक्तवान्देवकीपुत्रः कुन्त्याश्च विदुरस्य च ।
वचनं तत्त्वया राजन्निखिलेनावधारितम् ॥ २४ ॥
न च तौ वक्ष्यतोऽधर्ममिति मे नैष्ठिकी मतिः ।
नापि युक्तं च कौन्तेय निवर्तितुमयुध्यतः ॥ २५ ॥
तच्छ्रुत्वा वासुदेवोऽपि सव्यसाचिवचस्तदा ।
स्मयमानोऽब्रवीद्वाक्यं पार्थमेवमिति ब्रुवन् ॥ २६ ॥
ततस्ते धृतसंकल्पा युद्धाय सहसैनिकाः ।
पाण्डवेया महाराज तां रात्रिं सुखमावसन् ॥ २७ ॥

इति श्रीमहाभारते उद्योगपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

---

[ नील० ] युक्तं सम्यक् ॥ १३ ॥ नकल्याणमकल्याणं पापमकल्याणं च त्वदीयेष्वविद्यमानं सर्वं तस्मिन् दुर्योधने प्रतिष्ठितम् ॥ १४ ॥ परित्यागेन राज्यस्योपेक्षया ॥ १५ ॥ योगं युद्धोद्योगम् ॥ १७ ॥ यदर्थं यन्निवृत्त्यर्थमनर्थः कुलक्षयः प्रयत्नतो बलात् ॥ २० ॥ तस्मिन्निति तस्मिन्ननर्थे निमित्ते सति यत्नस्तत्परिहारार्थं उपायः सद्यः शत्रुवधरूपो भीमस्य द्यूतकाले संमतः स नोऽस्माकमस्माभिः क्षमां कुर्वद्भिः प्रयत्नतो बलाद्धीनो व्यर्थः कृतः अकृते तु अकृतेऽपि प्रयत्ने युद्धार्थमुद्योगे तथापि अस्मान्कलिरुपावृत्त आगतः ॥ २१ ॥ तौ कुन्तीविदुरौ अधर्ममितिच्छेदः अयुद्ध्यतस्तव निवर्तितुमपि न युक्तम् ॥२५॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे चतुःपञ्चाशदधिकशततमोऽध्यायः॥१५४॥

[ अर्जु० ] अयुक्तान्यभाषन्त तेन उक्तेन भावे क्तः ॥ १३ ॥ अत्यर्थं परित्यागः पञ्चग्रामप्रार्थनापि न तद्वृत्तेनहेतुत्वेन किन्तु तदत्यागेनान्यायिता लोकप्रसिद्धा दुर्योधने स्यादिति ॥ १५ ॥ योगः संनहनम् ॥ १७ ॥ किलकिला कोलाहलं भूतं प्राप्तम् ॥ १८ ॥ निष्टनन् क्रन्दन् ॥१९॥ यदर्थं यन्निवृत्तये प्रयत्नतः प्रयत्ने वनवासादि(रूपे) व्यर्थे सति ॥२०॥ यस्मिन् संधौ प्रयत्नतः सत्येव प्रयत्ने यदर्थं याचितं तन्न लब्धम्। यदर्थं स्वप्नेऽपि न यतितं तत्प्राप्तमित्यर्थः ॥ २१ ॥ अवध्यैः द्रोणादिभिः सहेत्यन्वयः ॥ २२ ॥ तौ कुन्तीविदुरौ न चाधर्मं वक्ष्यतः अयुध्यतो युद्धाभावादेव यद्यस्यावश्यंभावित्वात् ॥ २५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

[ सर्व० ] मूढं दुर्योधनमयुक्तान्यभ्यभाषन्त ॥ १२ ॥ यान्यभाषन्त किं तेन मयोक्तेनेति सामान्यापेक्षमेकत्वम् । न पार्थिवेषु युक्तं वर्तते ॥ १३ ॥ किलकिलारावं भूतं प्राप्तम् ॥ १८ ॥ यदर्थं यस्य निवृत्तये प्रयत्नतो बलात ॥ २० ॥ तस्मिन्निमित्ते तन्निवृत्त्यर्थं प्रयत्नतो यत्नः कृतः ॥ २१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां चतुःपञ्चाशदधिकशततमोऽध्यायः ॥ १५४ ॥

## पञ्चपञ्चाशदधिकशततमोऽध्यायः १५५

दुर्योधनेन सेनाविभजनम् ॥ १ ॥

**वैशंपायन उवाच—**

व्युष्टायां वै रजन्यां हि राजा दुर्योधनस्ततः ।
व्यभजत्तान्यनीकानि दश चैकं च भारत ॥ १ ॥
नरहस्तिरथाश्वानां सारं मध्यं च फल्गु च ।
सर्वेष्वेतेष्वनीकेषु संदिदेश नराधिपः ॥ २ ॥
सानुकर्षाः सतूणीराः सवरूथाः सतोमराः ।
सोपासङ्गाः सशक्तीकाः सनिषङ्गाः सहर्ष्टयः ॥ ३ ॥
सध्वजाः सपताकाश्च सशरासनतोमराः ।
रज्जुभिश्च विचित्राभिः सपाशाः सपरिच्छदाः ॥ ४॥
सकचग्रहविक्षेपाः सतैलगुडवालुकाः ।
साशीविषघटाः सर्वे ससर्जरसपांसवः ॥ ५ ॥
सघण्टफलकाः सर्वे सायोगुडजलोपलाः ।
सशालभिन्दिपालाश्च समधूच्छिष्टमुद्गराः ॥ ६ ॥
सकाण्डदण्डकाः सर्वे ससीरविषतोमराः ।
सशूर्पपिटकाः सर्वे सदात्राङ्कुशतोमराः ॥ ७ ॥

[ नील० ] व्युष्टायां व्यतीतायाम् ॥ १ ॥ सारं पुरोगामि मध्यं मध्यमं फल्गु पाश्चात्यम् ॥ २ ॥ सानुकर्षा इत्यादीनि नानामणिविभूषिता इत्यन्तानि चित्रानीकानां विशेषणानि । अनुकर्षः युद्धविमर्दे यस्य कस्यचिद्रथावयवस्य नष्टस्य प्रतिसमाधानार्थं यद्रथस्याधो दारु बद्ध्यते तत् । अनुकर्षो रथाधःस्थदारुणीति मेदिनी । तूणीरो रथवाह्यो बाणकोशः महान् निषङ्ग इति यावत् । वरूथो रथगुप्तिर्व्याघ्रादिचर्ममयी । तोमराः हस्तक्षेप्याः सशल्या दण्डाः । उपासङ्गाः हयगजवाह्यास्तूणाः । निषङ्गः पत्तिवाह्यः स एव । शक्तिर्लोहदण्डः । ऋष्टिर्गुरुतरः काष्ठदण्डः ॥ ३ ॥ शरासनतोमराः धनुःप्रक्षेप्यास्तोमराः स्थूलबाणाः । पाशाः समीपागतस्य गले प्रक्षेपार्थम् । परिच्छदा आस्तरणादीनि । परिस्तरा इति पाठे आस्तरणमेव ॥ ४ ॥ कचग्रहविक्षेपः कचेषु गृहीत्वा येन शत्रुर्विक्षिप्यते तादृशः कलविङ्कग्रहतुल्यश्चिक्कणद्रव्याश्रितात्रो दण्डविशेषः । करग्रहेतिपाठे अङ्कुशविशेषः । तैलादयः प्रतप्ताः शत्रूणामुपरि क्षिप्यन्ते । साशीविषघटाः ससर्पाः कुम्भाः । सर्जरसो रालद्रव्यमग्न्युद्दीपकम् ॥ ५ ॥ सघण्टानि फलकानि शस्त्राग्राणि येषां ते सघण्टफलकाः घण्टासहितं चर्मेत्यन्ये । अयोऽसिखड्गपट्टिशच्छुरिकादीनि गुडजलं तप्तम् उपला यन्त्रक्षेप्या गोलाः शालते कत्थते शब्दं करोतीति शालः स चासौ भिन्दिपालो गोफलकः । सशूलेति गौडपाठः । मधूच्छिष्टं मयनं तदपि द्रवीकृत्य गुडजलवत्प्रक्षेप्यम् । मुद्गरः मुशलतुल्यो दण्डः ॥ ६ ॥ काण्डं बाणफलकं तद्युक्तो दण्डः काण्डदण्डः कण्टकदण्ड इति यावत् दण्डकण्टक इति पाठे स एवार्थः । सीरं लाङ्गलम् । विषं प्रसिद्धं तेन युक्तास्तोमरा विषतोमराः । शूर्पाणि तप्तगुडादिप्रक्षेपार्थानि । पिटकास्तदाश्रया मञ्जूषाः अस्त्ररोधनार्था वा । दात्रं परशुप्रभृति । अङ्कुशतोमराः बदरीकण्टकतुल्यलोहकण्टकोपेतास्तोमराः । येषामन्तःप्रविष्टानां बहिर्निःसरणे अन्त्राण्यपि बहिर्निःसरन्ति ॥७॥

[ अर्जु० ] व्युष्टायां प्रभातायाम् ॥ १ ॥ फल्गु असारं जघन्यमित्यर्थः ॥ २ ॥ सानुकर्षाः अनुकर्षौ याभ्यां रथयुगं ध्रियते । सतूणीराः सतूणाः वरूथे रथस्य पश्चात् गुप्तिः रथगुप्तिरिति प्रसिद्धः । तोमरो हस्तबाणः । उपासंगो रथे कीलितस्तूणः । पावकोऽग्नितैलम् ॥ ३ ॥ तोमरा बाणाः ॥ ४ ॥ कचग्रह आकर्षकोऽकुंशः विक्षेपः प्रेरणयन्त्रं येन दूरादेव प्रेर्यते । तैलगुडवालुकास्तप्ता दाहाय । आशीविषघटाः सर्पपूर्णकुम्भाः । सर्जरसपांशुः रालधूलिः ॥ ५ ॥ घण्टाफलकं घण्टासहितं चर्म । अयोगुडो लोहबिन्बम् (?) । सारो हस्तक्षेप्यः पाषाणः । भिन्दिपालो गोफलकः मधूच्छिष्टं मयनकम् ॥ ६ ॥ दण्डकण्टकं कण्टकीदण्डः सीरं हलं विषतोमरं विषदिग्धं काण्डं गुल्मपीटके उपकरणे सदात्राङ्कुशरोधोपार्श्वत्वयोगे (?) ॥ ७ ॥

[ सर्व० ] अनुकर्षो रथधूर्धारणदण्डः । तूणीरश्चलस्तूणः । तोमरो हस्तकाण्डः । उपासङ्गः शक्त्यादि तूणा निषङ्गो(?) चलतूणः ॥ ३ ॥ तोमरः शल्यं ॥ ४ ॥ करग्रहविक्षेपः करे ग्रहीत्वा विक्षेप्यः पाशविशेषः तैलगुडवालुकाः तापयित्वा यंत्रेण क्षेप्तुम् । एतदर्थमेव साशीविषघटाः सर्पकुंभाः । सर्जरसपांसवो ज्वलयित्वा क्षेप्तुम् ॥ ५ ॥ घण्टाफलकं घण्टा''सारीकाष्ठम् । सारनिर्मितमस्त्रम् ॥ ६ ॥ सदण्डकण्टकाः कण्टकोपलक्षितदण्डवन्तः । [ द्वीपिचर्मभिश्छन्नम् । कर्मभिः ] सीरं लाङ्गलम् । विषतोमरो विषदिग्धस्तोमरः । शूलः प्रसिद्धः । पिटकं पेटकम् । योधा अस्त्रनिरोधसाधनमण्डलानि ॥ ७ ॥

२ ख. महीपतिः । ३ ख. सनिषङ्गः सपावकाः । ६ ख. सघण्टाफलकः । ख. सशूल० । ७ ख. सदण्डकेटकाः । ख. ससरीविष ।

सकीलकवचाः सर्वे वाशीवृक्षादनान्विताः ।
व्याघ्रचर्मपरीवारा द्वीपिचर्मावृताश्च ते ॥ ८ ॥
सहर्ष्टयः सशृङ्गाश्च सप्रासविविधायुधाः ।
सकुठाराः सकुद्दालाः सतैलक्षौमसर्पिषः ॥ ९ ॥
रुक्मजालप्रतिच्छन्ना नानामणिविभूषिताः ।
चित्रानीकाः सुवपुषो ज्वलिता इव पावकाः ॥ १० ॥
तथा कवचिनः शूराः शस्त्रेषु कृतनिश्चयाः ।
कुलीना हययोनिज्ञाः सारथ्ये विनिवेशिताः ॥ ११ ॥
बद्धारिष्टा बद्धकक्षा बद्धध्वजपताकिनः ।
बद्धाभरणनिर्यूहा बद्धचर्मासिपट्टिशाः ॥ १२ ॥
चतुर्युजो रथाः सर्वे सर्वे चोत्तमवाजिनः ।
सप्रासऋष्टिकाः सर्वे सर्वे शतशरासनाः ॥ १३ ॥
धुर्ययोर्हययोरेकस्तथान्यौ पार्ष्णिसारथी ।
तौ चापि रथिनां श्रेष्ठौ रथी च हयवित्तथा १४ ॥
नगराणीव गुप्तानि दुराधर्षाणि शत्रुभिः ।
आसन् रथसहस्राणि हेममालीनि सर्वशः ॥ १५ ॥
यथा रथास्तथा नागा बद्धकक्षाः स्वलंकृताः ।
बभूवुः सप्तपुरुषा रत्नवन्त इवाद्रयः ॥ १६ ॥
द्वावङ्कुशधरौ तत्र द्वावुत्तमधनुर्धरौ ।
द्वौ वरासिधरौ राजन्नेकः शक्तिपिनाकधृक् ॥ १७ ॥

[ लक्षा० ] सानुकर्षाः सतूणीरा इत्यत्र तूणीरोपासङ्गनिषङ्गपदेन अवान्तरभेदाः कथ्यन्ते ॥ ३ ॥

[ नील० ] कीलकवचवान् हि परेण मुष्टियुद्धे जेतुमशक्यः । सकीलक्रकचा इति पाठे सदन्तं करपत्रं येन तक्षा काष्ठं पाटयति । वाशी काष्ठप्रच्छन्नं शस्त्रम् । वास्येति वासीति वा पाठेऽपि स एवार्थः । वृक्षादनाः लोहकण्टककीलादीन्युपकरणानि । व्याघ्रचर्मणा द्वीपी चित्रव्याघ्रस्तच्चर्मणा च परिवृता रथा एव ॥ ८ ॥ ऋष्टिः द्रविडेषु प्रसिद्धं हस्तक्षेप्यं वक्रं काष्टफलकं शृङ्गसाहचर्यात् । शृङ्गं गदाघातेन नष्टस्य रक्तस्य मोक्षणार्थं विण्मूत्रोत्सर्जनस्थानं वा । प्रासाः भल्लाः । तैलक्षौमानि तैलाक्तवस्त्रविशेषा येषां भस्म प्रहारस्थले दीयते । सर्पिश्च पुरातनं तदर्थमेव ॥ ९ ॥ चित्राश्च ते अनीकाश्च चित्रानीकाः चित्राणि सैन्यानि । अनीकोऽस्त्री रणे सैन्ये इति मेदिनी ॥ १० ॥ विनिवेशिता येषु रथेष्विति शेषः ॥ ११ ॥ बद्धानि अरिष्टानि अशुभहराणि यन्त्रौषधादीनि येषु ते बद्धारिष्टाः रिष्टं क्षेमशुभाभावे इति मेदिनी । बद्धकक्षाः बद्धाः कक्षाः स्पर्धापदानि तुरगादिशिरसि घण्टामालामौक्तिकगुच्छादीन्यतिशौर्यावद्योतीनि बिरुदानि येषु । कक्षा स्यादन्तरीयस्य पश्चादञ्चलपल्लवे । स्पर्धापदे ना दोर्मूले इति मेदिनी । बद्धानि आभरणानि क्षुद्रघण्टिकादीनि निर्यूहाः शिखराणि च येषु । निर्यूहः शिखरे द्वारे इति मेदिनी ॥ १२ ॥ चतुर्युज इत्येतद्व्याचष्टे धुर्ययोरिति धुर्ययोः धूःसन्निहितयोः पार्ष्णिसारथी चक्ररक्षौ ॥ १४ ॥ अङ्कुशधरौ गजनियन्तारौ । उत्तमधनुर्धरौ दूरस्थान् प्रहर्तुम् । असिधरौ समीपस्थान् । शक्तिपिनाकधरौ मध्यस्थान् पिनाकः त्रिशूलम् । पिनाकोऽस्त्री रुद्रचापे पांशुवर्षत्रिशूलयोरिति मेदिनी ॥ १७ ॥

[ अर्जु० ] कीलं शूलं क्रकचं करपत्रं, वासी काष्ठतक्षणशस्त्रं वृक्षादनं बृहद्दात्रं, द्वीपी चित्रव्याघ्रः ॥ ८ ॥ बस्तिर्नाभी शृङ्गो महिषादेः, प्रासः कुन्तः ॥ ९ ॥ चित्रानीकाः चित्रसैन्याः ॥ १० ॥ कृतनिःश्रमा कृताभ्यासाः ॥ ११ ॥ बद्धारिष्टा अरिष्टा आयुधसर्पकाः ॥ कक्षा वस्त्रम् आवरणं कवचं निर्यूहः समूहः पट्टिशं काष्टफलकम् ॥ १२ ॥ सप्राप्तिवाहकाः प्राप्तयो रथकर्मकराः वाहको रथहयानाम् । शरासनं धनुः ॥ १३ ॥ एकं पक्षमुक्त्वा पक्षान्तरमाह -धुर्ययोरिति । धुर्ययोर्मुख्यहययोः एकः प्रेरकः पार्ष्णिसारथी पुनर्धुर्यप्रेरकस्य पार्श्वस्थितौ हयप्ररकौ तौ द्वौ ॥ १४ ॥ दुरादेयानि दुर्ग्राह्याणि ॥ १५ ॥ द्वावङ्कुशधरौ तत्र द्वावेव च धनुर्धरौ असिचर्मधरौ द्वौ च एकः शक्तिपिनाकधृक् । एते सप्त पुरुषाः नैतेषामेकस्मिन् हस्तिन्यवस्थानमेव तावत् संभवति संभवेऽपि न कार्यक्षमत्वं संभवति, तस्मादयमर्थः–द्वावंकुशधरौ तयोरेको ग्रामणीः शक्तिधरश्चान्यः पश्चात् प्रेरकः पताकी च । द्वावेव धनुर्धरौ अस्त्रविदौ । तत्रैकस्य संमुखबाणक्षेपकत्वं बाणे क्षीणे खड्गचर्मव्यापारकत्वम् । अपरस्य विमुखबाणप्रेरकत्वं बाणे क्षीणे खड्गचर्मव्यापारकत्वमिति चत्वारः पुरुषाः । तत्रैकेन बाणशक्तिपताकिना सह पञ्च पुरुषाः कर्मभेदेन सप्तान्वाख्यानं यथा–स एवाध्वर्युः स एव उद्गाता चेति भावः । अयं च श्लोको भीष्मपर्वणि कैश्चिद् व्याख्यातः । प्रकरणात्तत्रैव व्याख्यातुमुचितः ॥ १७ ॥

[ सर्व० ] वृक्षादमः कण्टकः ऋष्टि''पाद्यर्थं ॥ ८ ॥ शृंगं रक्तमोक्षार्थम् ॥ ९ ॥ सारथ्ये विनिवेशिता येषु रथेषु इति शेषः । सानुकर्षा इत्यादीनां सर्वेषां सर्वे रथा इत्यनेन संबन्धात् ॥ ११ ॥ अरिष्टकं रिष्टप्रतिघातकमौषधादि ।

८ ख. सकीलक्रकचाः सर्वे वासोभक्ष्योदनान्विताः । ९ ख. सबस्तयः सशृ° । ११ ख. कृतनिश्रमाः । १३ ख. सर्वे चैव शतोत्तराः । सपार्ष्णिवाहकाः सर्वे । १४ ख. धनुषि श्रेष्ठौ ।

गजैर्मत्तैः समाकीर्णं सर्वमायुधकोशकैः ।
तद्वभूव बलं राजन् कौरव्यस्य महात्मनः ॥ १८ ॥
आमुक्तकवचैर्युक्तैः सपताकैः स्वलंकृतैः ।
सादिभिश्चोपपन्नास्तु तथा चायुतशो हयाः ॥ १९ ॥
असंग्राहाः सुसंपन्ना हेमभाण्डपरिच्छदाः ।
अनेकशतसाहस्राः सर्वे सादिवशे स्थिताः ॥ २० ॥
नानारूपविकाराश्च नानाकवचशस्त्रिणः ।
पदातिनो नरास्तत्र बभूवुर्हेममालिनः ॥ २१ ॥
रथस्यासन् दश गजा गजस्य दश वाजिनः ।
नरा दश हयस्यासन् पादरक्षाः समन्ततः ॥ २२ ॥
रथस्य नागाः पञ्चाशन्नागस्यासन् शतं हयाः ।
हयस्य पुरुषाः सप्त भिन्नसंधानकारिणः ॥ २३ ॥

सेना पञ्चशतं नागा रथास्तावन्त एव च ।
दशसेना च पृतना पृतना दश वाहिनी ॥ २४ ॥
सेना च वाहिनी चैव पृतना ध्वजिनी चमूः ।
अक्षौहिणीति पर्यायैर्निरुक्ता च वरूथिनी ॥ २५ ॥
एवं व्यूढान्यनीकानि कौरवेयेण धीमता ।
अक्षौहिण्यो दशैका च संख्याताः सप्त चैव ह ॥ २६ ॥
अक्षौहिण्यस्तु सप्तैव पाण्डवानामभूद्बलम् ।
अक्षौहिण्यो दशैका च कौरवाणामभूद्बलम् ॥ २७ ॥
नराणां पञ्चपञ्चाशदेषा पत्तिर्विधीयते ।
सेनामुखं च तिस्रस्ता गुल्म इत्यभिशब्दितम् ॥ २८ ॥
त्रयो गुल्मा गणस्त्वासीद्गणास्त्वयुतशोऽभवन् ।
दुर्योधनस्य सेनासु योत्स्यमानाः प्रहारिणः ॥ २९ ॥

---

निर्यूहोनागशाला नागदन्तकम् ॥१२॥ एकः सारथिः । प्राप्तः प्रकर्षेण वर्त्यो व्यापकः ॥१४॥ एकः सारथिः ॥१७॥

[ लक्षा० ] बद्धारिष्टा बद्धकक्ष्या इत्यत्र रिष्टं न भवतीत्यरिष्टम् । अभेद्यायाः । कवचशिरस्त्राणादिकं कक्ष्याः हस्त्यश्वादीनामुदरादिबन्धनरज्ज्वादयः ॥ १२ ॥ धुर्ययोर्हय्ययोरेक इत्यत्र धुर्ययोः रथाग्रे धुरंधरयोः एकः सारथिः बभूवुः सप्तपुरुषा इत्यत्र सप्तपुरुषाः सप्तसेवकपुरुषाः ॥ १६ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १६६ ॥

[ नील० ] सादिभिः अश्वारोहैः ॥ १९ ॥ संग्राहः बृहदुद्रङ्कः हेषणपूर्वकमग्रपादाभ्यामुत्प्लवनमिति यावत् तद्रहिताः असंग्राहाः । संग्राहो बृहदुद्रङ्क इति विश्वः । यतः सुसंपन्नाः सम्यक् शिक्षिताः भाण्डमश्वाभरणं तेन परिच्छदः परिष्कारो येषां ते । भाण्डं भूषाश्वभूषयोरिति विश्वः ॥ २० ॥ रूपविकाराः रक्तकृष्णहयमुखत्वादयः ॥ २१ ॥ रथस्येति एकस्य रथस्य यथोक्तविभागेन दश गजाः शतमश्वाः सहस्रं पदातयश्च परिवार इत्यर्थः ॥२२॥ पक्षान्तरमाह–रथस्येति । एकस्य रथस्य पञ्चाशद्गजाः पञ्चसहस्रमश्वाः पञ्चत्रिंशत्सहस्रं पदातयः परिवार इत्यर्थः ॥ २३ ॥ अत्र रथादीनां प्राधान्याप्राधान्याभिप्रायेण परिवाराल्पत्वबहुत्वे ज्ञेये । साधारणी तु संख्या आदिपर्वण्युक्ता । एको रथो गजस्त्वेको नराः पञ्च पदातयः ॥ त्रयश्च तुरगास्तज्ज्ञैः पत्तिरित्यभिधीयत इत्यादिना । तामेवानुसरति सेनेति तत्र गजानां रथानां च तुल्यसंख्योक्तिः पूर्वोक्तसंख्योपलक्षणार्था तेन पञ्चविंशतिशतानि मनुष्याः पञ्चदशशतं तुरगा इत्यपि ज्ञेयम् । पृतनायां तु पञ्चसहस्रं नागास्तावन्तो रथाः पञ्चविंशतिसहस्रं नराः पञ्चदशसहस्रमश्वाः । वाहिन्यां पञ्चाशत्सहस्रं नागास्तावन्तो रथाः सार्धलक्षद्वयं नराः सार्धलक्षमश्वा इति ज्ञेयम् ॥२४॥ एवमपि पूर्वोक्ताक्षौहिणीसंख्यया विसंवाद एवेत्याशङ्क्याह–सेनेति । सेनादयः शब्दाः पर्यायाः न तु संख्येयानां संख्याभेदमात्रेण नानार्थाः । एकस्मिन्नपि भीमसेने दशनागसहस्रबलत्वस्मरणात् । एवं च बलस्यैवेयमेकादश सप्तेति संख्या न संख्येयस्येति भावः । पाण्डवानां हीनबलत्वेऽपि असंख्येयं वासुदेवबलं तत्र सहायीभूतमिति जयोऽभूदिति द्रष्टव्यम् ॥ २५ ॥ नराणामिति अयुतश इत्यनेन नराणामन्तो नास्तीति दर्शितम् ॥ २८ ॥

इति श्रीनैलकण्ठीये भारतभावदीपे उद्योगपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १६६॥

[ अर्जु० ] आमुक्तं बद्धं । सादिनोऽश्ववाराः ॥१९॥ भाण्डमश्वाभरणम् ॥ २० ॥ विकारा भङ्गयः ॥ २१ ॥ रथस्येत्यादिना दशगुणवृद्ध्या एकः पक्षः ॥ २२ ॥ रथस्य नागा इति पक्षान्तरम् । भिन्नसंधानकारिणो भिन्नानां संधानं घटना ॥ २३ ॥ नागा ६० रथा ६० सेना, सेनैव दशगुणा पृतना, पृतनैव दशगुणा वाहिनी, वाहिन्यादिपर्याया अक्षौहिण्या अपीत्याह वाहिनीति ॥ २५ ॥ पञ्चाधिकाः पञ्चाशन्नराः पत्तिः सेनामुखं च । पत्तयः तिस्रो गुल्मः । गुल्मास्त्रयो गणः । गणा अयुतशः अयुतानि अभवन् ॥ २९ ॥

[ सर्व० ] रथप्राधान्याप्राधान्याभ्यां तद्रक्षार्थगजादिसंख्याहान्यधिकत्वे द्रष्टव्ये । तेन रथस्यासन् , रथस्य नागा इति श्लोकयोरविरोधः ॥ २२ ॥ सेनाचेति एतैः पर्यायैः व्याप्यव्यापकभावेनाविशेषवाचकैः सारकाविन्युच्यत(?)

---

१८ ख. सर्वमायुधभूषणैः । २० ख. सुसंतोषा हेम ॥ अध्यायः ॥ १५५ ॥

तत्र दुर्योधनो राजा शूरान् बुद्धिमतो नरान् ।
प्रसमीक्ष्य महाबाहुश्चक्रे सेनापतींस्तदा ॥ ३० ॥
पृथगक्षौहिणीनां च प्रणेतॄन्नरसत्तमान् ।
विधिवत्पूर्वमानीय पार्थिवानभ्यभाषत ॥ ३१ ॥
कृपं द्रोणं च शल्यं च सैन्धवं च जयद्रथम् ।
सुदक्षिणं च काम्बोजं कृतवर्माणमेव च ॥ ३२ ॥
द्रोणपुत्रं च कर्णं च भूरिश्रवसमेव च ।
शकुनिं सौबलं चैव बाह्लीकं च महाबलम् ॥ ३३ ॥
दिवसे दिवसे तेषां प्रतिवेलं च भारत ।
चक्रे स विविधाः पूजाः प्रत्यक्षं च पुनःपुनः ॥ ३४ ॥
तथा विनियताः सर्वे ये च तेषां पदानुगाः ।
बभूवुः सैनिका राज्ञां प्रियं राज्ञश्चिकीर्षवः ॥ ३५ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

## षट्पंचाशदधिकशततमोऽध्यायः १५६

दुर्योधनप्रार्थितेन भीष्मेण पाण्डवानोत्सादयेयं तेभ्यः श्रेयश्चोपदिशेयं मयि च युध्यमाने कर्णेन न योद्धव्यमिति समयं कृत्वा सैनापत्याङ्गीकारः ॥ १ ॥ भीष्मं सैनापत्येऽभिषिच्य कौरवैः कुरुक्षेत्रगमनं शिबिरादिमापनं च ॥ २ ॥

**वैशम्पायन उवाच—**

ततः शान्तनवं भीष्मं प्राञ्जलिर्धृतराष्ट्रजः ।
सह सर्वैर्महीपालैरिदं वचनमब्रवीत् ॥ १ ॥
ऋते सेनाप्रणेतारं पृतना सुमहत्यपि ।
दीर्यते युद्धमासाद्य पिपीलिकपुटं यथा ॥ २ ॥
नहि जातु द्वयोर्बुद्धिः समा भवति कर्हिचित् ।
शौर्यं च बलनेतॄणां स्पर्धते च परस्परम् ॥ ३ ॥
श्रूयते च महाप्राज्ञ हैहयानमितौजसः ।
अभ्ययुर्ब्राह्मणाः सर्वे समुच्छ्रितकुशध्वजाः ॥ ४ ॥
तानभ्ययुस्तदा वैश्याः शूद्राश्चैव पितामह ।
एकतस्तु त्रयो वर्णा एकतः क्षत्रियर्षभाः ॥ ५ ॥
ततो युद्धेष्वभज्यन्त त्रयो वर्णाः पुनःपुनः ।
क्षत्रियाश्च जयन्त्येव बहुलं चैकतो बलम् ॥ ६ ॥
ततस्ते क्षत्रियानेव पप्रच्छुर्द्विजसत्तमाः ।
तेभ्यः शशंसुर्धर्मज्ञा याथातथ्यं पितामह ॥ ७ ॥
वयमेकस्य शृण्वाना महाबुद्धिमतो रणे ।
भवन्तस्तु पृथक्सर्वे स्वबुद्धिवशवर्तिनः ॥ ८ ॥
ततस्ते ब्राह्मणाश्चक्रुरेकं सेनापतिं द्विजम् ।
नये सुकुशलं शूरमजयन्क्षत्रियांस्ततः ॥ ९ ॥
एवं ये कुशलं शूरं हितेप्सितमकल्मषम् ।
सेनापतिं प्रकुर्वन्ति ते जयन्ति रणे रिपून् ॥ १० ॥
भवानुशनसा तुल्यो हितैषी च सदा मम ।
असंहार्यः स्थितो धर्मे स नः सेनापतिर्भव ॥ ११ ॥
रश्मिवतामिवादित्यो वीरुधामिव चन्द्रमाः ।
कुबेर इव यक्षाणां देवानामिव वासवः ॥ १२ ॥
पर्वतानां यथा मेरुः सुपर्णः पक्षिणां यथा ।
कुमार इव देवानां वसूनामिव हव्यवाट् ॥ १३ ॥
भवता हि वयं गुप्ताः शक्रेणेव दिवौकसः ।
अनाधृष्या भविष्यामस्त्रिदशानामपि ध्रुवम् ॥ १४ ॥
प्रयातु नो भवानग्रे देवानामिव पावकिः ।
वयं त्वामनुयास्यामः सौरभेया इवर्षभम् ॥ १५ ॥

**भीष्म उवाच—**

एवमेतन्महाबाहो यथा वदसि भारत ।
यथैव हि भवन्तो मे तथैव मम पाण्डवाः ॥ १६ ॥

---

इत्यर्थः । वस्तुतस्तु ध्वजिन्यादिपदानि तत्तत्साधकाभिधानानि पत्तीनां संख्यान्तरं नराणामित्यादि ॥ २५ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

[ अर्जु० ] प्रतिवेलं प्रतिक्षणम् ॥ ३४ ॥ [ संज्ञा गुप्तसंकेतान् ॥ ]

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि पञ्चपञ्चाशदधिकशततमोऽध्यायः ॥ १५५ ॥

[ नील० ] तत इति ॥ १ ॥ उशनसा शुक्रेण । असंहार्यः पितुर्वरदानात् कालेनापि संहर्तुमशक्यः ॥ ११ ॥ कुमारः कार्त्तिकेयः ॥१३॥ पावकिः कार्त्तिकेय एव ॥१५॥

[ अर्जु० ] पिपीलिकपुटं पुटं संघातः पिपीलिकाकृतं पत्रगृहम् ॥ २ ॥ असंहार्योऽभेद्यः । स्थित इति प्रसिद्धः ॥ ११ ॥ हव्यवाड् अग्निः ॥ १३ ॥ अनाधृष्या अनाधर्षणीयाः ॥ १४ ॥ पावकिः स्कन्दः ॥ १५ ॥

[ लक्षा० ] देवानामिव पावकिरित्यत्र पावकिः । षण्मुखः । सेनानीरग्निभूर्गुहः इत्यमरः ॥ १५ ॥ [ अभियाने यात्रायाम् ॥ ]

इति श्रीमन्महाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

अपि चैव मया श्रेयो वाच्यं तेषां नराधिप ।
संयोद्धव्यं तवार्थाय यथा मे समयः कृतः ॥ १७ ॥
न तु पश्यामि योद्धारमात्मनः सदृशं भुवि ।
ऋते तस्मान्नरव्याघ्रात् कुन्तीपुत्राद्धनंजयात्॥ १८ ॥
स हि वेद महाबुद्धिर्दिव्यान्यस्त्राण्यनेकशः ।
न तु मां विवृतो युद्धे जातु युध्येत पाण्डवः ॥ १९ ॥
अहं चैव क्षणेनैव निर्मनुष्यमिदं जगत् ।
कुर्यां शस्त्रबलेनैव ससुरासुरराक्षसम् ॥ २० ॥
न त्वेवोत्सादनीया मे पाण्डोः पुत्रा जनाधिप ।
तस्माद्योधान् हनिष्यामि प्रयोगेणायुतं सदा ॥ २१ ॥
एवमेषां करिष्यामि निधनं कुरुनन्दन ।
न चेत्ते मां हनिष्यन्ति पूर्वमेव समागमे ॥ २२ ॥
सेनापतिस्त्वहं राजन् समयेनापरेण ते ।
भविष्यामि यथाकामं तन्मे श्रोतुमिहार्हसि ॥ २३ ॥
कर्णो वा युध्यतां पूर्वमहं वा पृथिवीपते ।
स्पर्धते हि सदाऽत्यर्थं सूतपुत्रो मया रणे ॥ २४ ॥

**कर्ण उवाच—**

नाहं जीवति गाङ्गेये राजन् योत्स्ये कथंचन ।
हते भीष्मे तु योत्स्यामि सह गाण्डीवधन्वना ॥ २५ ॥

**वैशंपायन उवाच—**

ततः सेनापतिं चक्रे विधिवद्भूरिदक्षिणम् ।
धृतराष्ट्रात्मजो भीष्मं सोऽभिषिक्तो व्यरोचत ॥ २६ ॥
ततो भेरीश्च शङ्खांश्च शतशोऽथ सहस्रशः ।
वादयामासुरव्यग्रा वादका राजशासनात् ॥ २७ ॥
सिंहनादाश्च विविधा वाहनानां च निःस्वनाः ।
प्रादुरासन्ननभ्रे च वर्षं रुधिरकर्दमम् ॥ २८ ॥
निर्घाताः पृथिवीकम्पा गजबृंहितनिःस्वनाः ।
आसंश्च सर्वयोधानां पातयन्तो मनांस्युत ॥ २९ ॥
वाचश्चाप्यशरीरिण्यो दिवश्चोल्काः प्रपेदिरे ।
शिवाश्च भयवेदिन्यो नेदुर्दीप्तस्वरा भृशम् ॥ ३० ॥
सैनापत्ये यदा राजा गाङ्गेयमभिषिक्तवान् ।
तदैतान्युग्ररूपाणि बभूवुः शतशो नृप ॥ ३१ ॥
ततः सेनापतिं कृत्वा भीष्मं परबलार्दनम् ।
वाचयित्वा द्विजश्रेष्ठान् गोभिर्निष्कैश्च भूरिशः ॥ ३२ ॥
वर्धमानो जयाशीर्भिर्निर्ययौ सैनिकैर्वृतः ।
आपगेयं पुरस्कृत्य भ्रातृभिः सहितस्तदा ॥ ३३ ॥
स्कन्धावारेण महता कुरुक्षेत्रं जगाम ह ॥ ३४ ॥
परिक्रम्य कुरुक्षेत्रं कर्णेन सह कौरवः ।
शिबिरं मापयामास समे देशे जनाधिप ॥ ३५ ॥
मधुरानूषरे देशे प्रभूतयवसेन्धने ।
यथैव हास्तिनपुरं तद्वच्छिबिरमाबभौ ॥ ३६ ॥

इति श्रीमहाभारते उद्योगपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

## सप्तपञ्चाशदधिकशततमोऽध्यायः १५७

धार्तराष्ट्रैर्भीष्मं सैनापत्येऽभिषिक्तं श्रुत्वा युधिष्ठिरो द्रुपदादीनक्षौहिणीपतित्वे धृष्टद्युम्नं सर्वसेनापतित्वेऽभिषिच्यार्जुनं च सेनापतिपतिं कृत्वा श्रीकृष्णं तस्यापि नेतारं चकार ॥ १ ॥ अत्रान्तरे बलरामस्तत्रागत्य पाण्डवैः पूजितो युद्धात्समुत्तीर्णान्भवतो द्रक्ष्यामीत्युक्त्वा कौरवान्नश्यत उपेक्षितुमशक्तस्तीर्थयात्रां प्रययौ ॥ २ ॥

**जनमेजय उवाच—**

आपगेयं महात्मानं भीष्मं शस्त्रभृतां वरम् ।
पितामहं भारतानां ध्वजं सर्वमहीक्षिताम् ॥ १ ॥

---

[ नील० ] विवृतो विस्पष्टो भूत्वेत्यर्थः ॥ १९ ॥ न मे मया उत्सादनीयाः नाशयितुं शक्याः सदा प्रत्यहम्॥२१॥ पातयन्तः मूर्च्छितानि कुर्वन्तः ॥ २९ ॥

इति श्रीम० उ० नै० भा०भा०षट्पञ्चाशदधिकशततमोऽध्यायः॥१५६॥

[ अर्जु० ]समयः संकेतः ॥ १७ ॥ न विवृतो न प्रकटः लज्जावशात् ॥ १९ ॥ प्रयोगेण शस्त्राणाम् ॥ २१ ॥ एषां योधानाम् ॥२२॥ स भीष्मः ॥२६॥ पुष्करं तूर्यमुखम् २७ दीप्तस्वराः सज्वालमुखाः अथवा असौम्यस्वराः ॥ ३० ॥ वाचयित्वा स्वस्तीति शेषः ॥३२॥ स्कन्धावारेण सेनासमूहेन॥३४॥कटकेनेति यावत्। मधुरे मनोहरे मृष्टजले वा ३६

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

[ सर्व० ] न तु मां विवृतः प्रकटः युध्यते योद्धुं शक्नोति ॥ १९ ॥ प्रयोगेण शस्त्रस्य ॥ २१ ॥ पुष्कराणि वाद्यमुखानि ॥ २७ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां षट्पञ्चाशदधिकशततमोऽध्यायः ॥ १५६ ॥

[ नील० ] आपगेयमिति ॥ १ ॥

---

१९ ख. महाबाहुर्दिव्यान्यस्त्राणि सर्वशः । नतु मे । २७ ख. नोदयामासु" । ३२ ख. निष्कैर्गोभिर्धनेन च । ३३ ख. वन्द्यमानो ॥ अध्यायः ॥ १५६ ॥

बृहस्पतिसमं बुद्ध्या क्षमया पृथिवीसमम् ।
समुद्रमिव गाम्भीर्ये हिमवन्तमिव स्थिरम् ॥ २ ॥
प्रजापतिमिवौदार्ये तेजसा भास्करोपमम् ।
महेन्द्रमिव शत्रूणां ध्वंसनं शरवृष्टिभिः ॥ ३ ॥
रणयज्ञे प्रवितते सुभीमे लोमहर्षणे ।
दीक्षितं चिररात्राय श्रुत्वा तत्र युधिष्ठिरः ॥ ४ ॥
किमब्रवीन्महाबाहुः सर्वशस्त्रभृतां वरः ।
भीमसेनार्जुनौ वापि कृष्णो वा प्रत्यभाषत ॥ ५ ॥

**वैशंपायन उवाच—**

आपद्धर्मार्थकुशलो महाबुद्धिर्युधिष्ठिरः ।
सर्वान्भ्रातॄन्समानीय वासुदेवं च शाश्वतम् ॥ ६ ॥
उवाच वदतां श्रेष्ठः सान्त्वपूर्वमिदं वचः ।
पर्याक्रामत सैन्यानि यत्तास्तिष्ठत दंशिताः ॥ ७ ॥
पितामहेन वो युद्धं पूर्वमेव भविष्यति ।
तस्मात्सप्तसु सेनासु प्रणेतॄन्मम पश्यत ॥ ८ ॥

**कृष्ण उवाच—**

यथाऽर्हति भवान्वक्तुमस्मिन्काले ह्युपस्थिते ।
तथेदमर्थवद्वाक्यमुक्तं ते भरतर्षभ ॥ ९ ॥
रोचते मे महाबाहो क्रियतां यदनन्तरम् ।
नायकास्तव सेनायां क्रियन्तामिह सप्त वै ॥ १० ॥

**वैशंपायन उवाच—**

ततो द्रुपदमानाय्य विराटं शिनिपुङ्गवम् ।
धृष्टद्युम्नं च पाञ्चाल्यं धृष्टकेतुं च पार्थिव ॥ ११ ॥
शिखण्डिनं च पाञ्चाल्यं सहदेवं च मागधम् ।
एतान्सप्त महाभागान्वीरान्युद्धाभिकाङ्क्षिणः॥१२॥
सेनाप्रणेतॄन्विधिवदभ्यषिञ्चद्युधिष्ठिरः ।
सर्वसेनापतिं चात्र धृष्टद्युम्नं चकार ह ॥ १३ ॥
द्रोणान्तहेतोरुत्पन्नो य इद्धाज्जातवेदसः ।
सर्वेषामेव तेषां तु समस्तानां महात्मनाम् ॥ १४ ॥
सेनापतिपतिं चक्रे गुडाकेशं धनंजयम् ।
अर्जुनस्यापि नेता च संयन्ता चैव वाजिनाम् ॥१५॥
संकर्षणानुजः श्रीमान्महाबुद्धिर्जनार्दनः ।
तद्दृष्ट्वोपस्थितं युद्धं समासन्नं महात्ययम् ॥ १६ ॥
प्राविशद्भवनं राजन्पाण्डवानां हलायुधः ।
सहाक्रूरप्रभृतिभिर्गदसाम्बोद्धवादिभिः ॥ १७ ॥
रौक्मिणेयाहुकसुतैश्चारुदेष्णपुरोगमैः ।
वृष्णिमुख्यैरभिगतैर्व्याघ्रैरिव बलोत्कटैः ॥ १८ ॥
अभिगुप्तो महाबाहुर्मरुद्भिरिव वासवः ।
नीलकौशेयवसनः कैलासशिखरोपमः ॥१९॥
सिंहखेलगतिः श्रीमान्मदरक्तान्तलोचनः ।
तं दृष्ट्वा धर्मराजश्च केशवश्च महाद्युतिः २० ॥
उदतिष्ठत्ततः पार्थो भीमकर्मा वृकोदरः ।
गाण्डीवधन्वा ये चान्ये राजानस्तत्र केचन ॥ २१ ॥
पूजयांचक्रिरे ते वै समायान्तं हलायुधम् ।
ततस्तं पाण्डवो राजा करे पस्पर्श पाणिना ॥ २२ ॥
वासुदेवपुरोगास्तं सर्वे एवाभ्यवादयन् ।
विराटद्रुपदौ वृद्धावभिवाद्य हलायुधः ॥ २३ ॥
युधिष्ठिरेण सहित उपाविशदरिन्दमः ।
ततस्तेषूपविष्टेषु पार्थिवेषु समन्ततः ।
वासुदेवमभिप्रेक्ष्य रौहिणेयोऽभ्यभाषत ॥ २४ ॥
भविताऽयं महारौद्रो दारुणः पुरुषक्षयः ।
दिष्टमेव ध्रुवं मन्ये न शक्यमतिवर्तितुम् ॥ २५ ॥
तस्माद्युद्धात्समुत्तीर्णानपि वः ससुहृज्जनान् ।
अरोगानक्षतैर्देहैर्द्रष्टाऽस्मीति मतिर्मम ॥ २६ ॥
समेतं पार्थिवं क्षत्रं कालपक्वमसंशयम् ।
विमर्दश्च महान्भावी मांसशोणितकर्दमः ॥ २७ ॥
उक्तो मया वासुदेवः पुनः पुनरुपह्वरे ।
संबन्धिषु समां वृत्तिं वर्तस्व मधुसूदन ॥ २८ ॥

---

[ नील० ] इद्धात्प्रदीप्तात् ॥ १४ ॥ महात्ययमत्यन्तं क्षयकरम् ॥ १६ ॥ रौहिणेयो बलरामः ॥ २४ ॥ उपह्वरे एकान्ते ॥ २८ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

[ अर्जु० ] औदार्ये महत्त्वे । ध्वंसनं नाशकरम् ॥३॥ प्रतिभये शत्रुभयंकरे व्याडीले द्वयोर्भयंकरे । यद्वा द्वयोः शोकावहे ॥४॥ आपद्धर्मेण यद्बलं तेनापि सह युद्धम्॥६॥ इद्धात् प्रदीप्तात् ॥ १४ ॥ दिष्टं भाग्यं ध्रुवमनपायि ॥२५॥ उपह्वरे विजने । वर्तस्व कुरु ण्यर्थस्य गम्यमानत्वात् ॥२८॥

[ सर्व० ] प्रतिभये भयहेतौ । आभीले गहने आभीलं गहनेपीति नानार्थाः ॥ ४ ॥ आपदि धर्मार्थयोः कुशलः ॥ ६ ॥ उपह्वरे एकान्ते ॥ २८ ॥

इति श्रीम० उद्यो० सर्वज्ञ० सप्तपञ्चाशदधिकशततमोऽध्यायः ॥१५७॥

[ लक्षा० ] पुनः पुनरुपह्वर इत्यत्र उपह्वरे एकान्ते २८॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

---

५ ख. सर्वधर्मविशारदः । १३ ख. धृष्टद्युम्नमुपादिशत् ।

पाण्डवा हि यथाऽस्माकं तथा दुर्योधनो नृपः ।
तस्यापि क्रियतां साह्यं सपर्येति पुनः पुनः ॥ २९ ॥
तच्च मे नाकरोद्वाक्यं त्वदर्थे मधुसूदनः ।
निर्विष्टः सर्वभावेन धनंजयमवेक्ष्य ह ॥ ३० ॥
ध्रुवो जयः पाण्डवानामिति मे निश्चिता मतिः ।
तथा ह्यभिनिवेशोऽयं वासुदेवस्य भारत ॥ ३१ ॥
न चाहमुत्सहे कृष्णमृते लोकमुदीक्षितुम् ।
ततोऽहमनुवर्तामि केशवस्य चिकीर्षितम् ॥ ३२ ॥
उभौ शिष्यौ हि मे वीरौ गदायुद्धविशारदौ ।
तुल्यस्नेहोऽस्म्यतो भीमे तथा दुर्योधने नृपे ॥ ३३ ॥
तस्माद्यास्यामि तीर्थानि सरस्वत्या निषेवितुम् ।
नहि शक्ष्यामि कौरव्यान्नश्यमानानुपेक्षितुम् ॥ ३४ ॥
एवमुक्त्वा महाबाहुरनुज्ञातश्च पाण्डवैः ।
तीर्थयात्रां ययौ रामो निवर्त्य मधुसूदनम् ॥ ३५ ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

## अष्टपञ्चाशदधिकशततमोऽध्यायः १५८

अस्मिन्नेव काले रुक्मी महत्या सेनया पाण्डवानुपेत्यार्जुनं 'यदि भीतोऽसि साहाय्यं ते करिष्यामि' इति वदन्नर्जुनेन प्रत्याख्यातो धार्तराष्ट्रं गतस्तत्रापि पूर्ववद्वदंस्तेनापि प्रत्याख्यातः स्वनगरं ययौ ॥ १ ॥

**वैशंपायन उवाच**

एतस्मिन्नेव काले तु भीष्मकस्य महात्मनः ।
हिरण्यरोम्णो नृपतेः साक्षादिन्द्रसखस्य वै ॥ १ ॥
आकृतीनामधिपतिर्भोजस्यातियशस्विनः ।
दाक्षिणात्यपतेः पुत्रो दिक्षु रुक्मीति विश्रुतः ॥२॥
यः किंपुरुषसिंहस्य गन्धमादनवासिनः ।
कृत्स्नं शिष्यो धनुर्वेदं चतुष्पादमवाप्तवान् ॥ ३ ॥
यो माहेन्द्रं धनुर्लेभे तुल्यं गाण्डीवतेजसा ।
शार्ङ्गेण च महाबाहुः सम्मितं दिव्यलक्षणम् ॥ ४ ॥
त्रीण्येवैतानि दिव्यानि धनूंषि दिविचारिणाम् ।
वारुणं गाण्डिवं तत्र माहेन्द्रं विजयं धनुः ।
शार्ङ्गं तु वैष्णवं प्राहुर्दिव्यं तेजोमयं धनुः ॥ ५ ॥
धारयामास तत्कृष्णः परसेनाभयावहम् ।
गाण्डीवं पावकाल्लेभे खाण्डवे पाकशासनिः ॥ ६ ॥
द्रुमाद्रुक्मी महातेजा विजयं प्रत्यपद्यत ।
संछिद्य मौरवान् पाशान्निहत्य मुरुमोजसा ॥ ७ ॥
निर्जित्य नरकं भौममाहृत्य मणिकुण्डले ।
षोडश स्त्रीसहस्राणि रत्नानि विविधानि च ॥ ८ ॥
प्रतिपेदे हृषीकेशः शार्ङ्गं च धनुरुत्तमम् ।
रुक्मी तु विजयं लब्ध्वा धनुर्मेघनिभस्वनम् ॥ ९ ॥
विभीषयन्निव जगत्पाण्डवानभ्यवर्तत ।
नामृष्यत पुरा योऽसौ स्वबाहुबलगर्वितः ॥ १० ॥
रुक्मिण्या हरणं वीरो वासुदेवेन धीमता ।
कृत्वा प्रतिज्ञां नाहत्वा निवर्तिष्ये जनार्दनम् ॥ ११ ॥
ततोऽन्वधावद्वार्ष्णेयं सर्वशस्त्रभृतां वरः ।
सेनया चतुरङ्गिण्या महत्या दूरपातया ॥ १२ ॥
विचित्रायुधवर्मिण्या गङ्गयेव प्रवृद्धया ।
स समासाद्य वार्ष्णेयं योगानामीश्वरं प्रभुम् ॥ १३ ॥
व्यंसितो व्रीडितो राजन्नाजगाम स कुण्डिनम् ।
यत्रैव कृष्णेन रणे निर्जितः परवीरहा ॥ १४ ॥
तत्र भोजकटं नाम कृतं नगरमुत्तमम् ।
सैन्येन महता तेन प्रभूतगजवाजिना ॥ १५ ॥
पुरं तद्भुवि विख्यातं नाम्ना भोजकटं नृप ।
स भोजराजः सैन्येन महता परिवारितः ॥ १६ ॥
अक्षौहिण्या महावीर्यः पाण्डवान् क्षिप्रमागमत् ।
ततः स कवची धन्वी तली खड्गी शरासनी ॥ १७ ॥

---

[ अर्जु० ] साह्यं साहाय्यम् ॥ २९ ॥ ऋते विना । लोकमुदीक्षितुं जीवलोकं द्रष्टुम् ॥ ३२ ॥ निवर्त्य अनुयान्तं मधुसूदनम् ॥ ३५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्तपञ्चाशदधिकशततमोऽध्यायः ॥ १५७ ॥

[ नील० ] एतस्मिन्निति साक्षात्पुत्र इति संबन्धः ॥१॥ आकृतीनां संकल्पानां सत्यसंकल्प इत्यर्थः ॥ २ ॥ मौरवान् आन्त्रतन्तिमयान् यैरिदानीं शार्ङ्गे धनुषि ज्या क्रियते ॥ ७ ॥

[ अर्जु० ] किंपुरुषसिंहस्य द्रुमाख्यस्य चतुष्पादं दृढतरमुपस्कारम् ॥ ३ ॥ गाण्डीवधन्वना गाण्डीवेन धनुषा ॥ ४ ॥ प्रत्यपद्यत प्राप्तवान् ॥ ७ ॥ व्यंसितो जितः ॥ १४ ॥

[ लक्षा० ] स भोजराज इत्यत्र भोजराजः । रु-

---

३१ ख. वासुदेवस्य दृश्यते ॥ अध्यायः ॥ १५७ ॥

११ ख. निवर्तिष्यामि केशवम् । १२ ख. वरम् ॥ अध्यायः ॥ १५८ ॥

ध्वजेनादित्यवर्णेन प्रविवेश महाचमूम् ।
विदितः पाण्डवेयानां वासुदेवप्रियेप्सया ॥ १८ ॥
युधिष्ठिरस्तु तं राजा प्रत्युद्गम्याभ्यपूजयत् ।
स पूजितः पाण्डुपुत्रैर्यथान्यायं सुसंस्तुतः ॥ १९ ॥
प्रतिगृह्य तु तान्सर्वान्विश्रान्तः सहसैनिकः ।
उवाच मध्ये वीराणां कुन्तीपुत्रं धनंजयम् ॥ २० ॥
सहायोऽस्मि स्थितो युद्धे यदि भीतोऽसि पाण्डव ।
करिष्यामि रणे साह्यमसह्यं तव शत्रुभिः ॥ २१ ॥
न हि मे विक्रमे तुल्यः पुमानस्तीह कश्चन ।
हनिष्यामि रणे भागं यन्मे दास्यसि पाण्डव ॥२२॥
अपि द्रोणकृपौ वीरौ भीष्मकर्णावथो पुनः ।
अथवा सर्व एवैते तिष्ठन्तु वसुधाधिपाः ॥ २३ ॥
निहत्य समरे शत्रूंस्तव दास्यामि मेदिनीम् ।
इत्युक्तो धर्मराजस्य केशवस्य च संनिधौ ॥ २४ ॥
शृण्वतां पार्थिवेन्द्राणामन्येषां चैव सर्वशः ।
वासुदेवमभिप्रेक्ष्य धर्मराजं च पाण्डवम् ॥ २५ ॥
उवाच धीमान् कौन्तेयः प्रहस्य सखिपूर्वकम् ।
कौरवाणां कुले जातः पाण्डोः पुत्रो विशेषतः ॥ २६ ॥
द्रोणं व्यपदिशन् शिष्यो वासुदेवसहायवान् ।
भीतोऽस्मीति कथं ब्रूयां दधानो गाण्डिवं धनुः ॥२७॥
युध्यमानस्य मे वीर गन्धर्वैः सुमहाबलैः ।
सहायो घोषयात्रायां कस्तदासीत्सखा मम ॥ २८ ॥
तथा प्रतिभये तस्मिन् देवदानवसंकुले ।
खाण्डवे युध्यमानस्य कः सहायस्तदाभवत् ॥ २९ ॥
निवातकवचैर्युद्धे कालकेयैश्च दानवैः ।
तत्र मे युध्यमानस्य कः सहायस्तदाऽभवत् ॥ ३० ॥
तथा विराटनगरे कुरुभिः सह संगरे ।
युध्यतो बहुभिस्तत्र कः सहायोऽभवन्मम ॥ ३१ ॥
उपजीव्य रणे रुद्रं शक्रं वैश्रवणं यमम् ।
वरुणं पावकं चैव कृपं द्रोणं च माधवम् ॥ ३२ ॥
धारयन् गाण्डिवं दिव्यं धनुस्तेजोमयं दृढम् ।
अक्षय्यशरसंयुक्तो दिव्यास्त्रपरिबृंहितः ॥ ३३ ॥
कथमस्मद्विधो ब्रूयाद्भीतोऽस्मीति यशोहरम् ।
वचनं नरशार्दूल वज्रायुधमपि स्वयम् ॥ ३४ ॥
नास्मि भीतो महाबाहो सहायार्थश्च नास्ति मे ।
यथाकामं यथायोगं गच्छ वाऽन्यत्र तिष्ठ वा ॥ ३५ ॥
विनिवर्त्य ततो रुक्मी सेनां सागरसंनिभाम् ॥
दुर्योधनमुपागच्छत्तथैव भरतर्षभ ॥ ३६ ॥
तथैव चाभिगम्यैनमुवाच वसुधाधिपः ।
प्रत्याख्यातश्च तेनापि स तदा शूरमानिना ॥ ३७ ॥
द्वावेव तु महाराज तस्माद्युद्धादपेयतुः ।
रौहिणेयश्च वार्ष्णेयो रुक्मी च वसुधाधिप ॥ ३८ ॥
गते रामे तीर्थयात्रां भीष्मकस्य सुते तथा ।
उपाविशन्पाण्डवेया मन्त्राय पुनरेव च ॥ ३९ ॥
समितिर्धर्मराजस्य सा पार्थिवसमाकुला ।
शुशुभे तारकैश्चित्रा द्यौश्चन्द्रेणेव भारत ॥ ४० ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

---

ग्मिणः प्रागेव बलरामेण हतत्वात् रुग्मिणोऽनुजो रुग्मरथाख्यः कश्चिद्भीष्मकपुत्रकः ॥ १६ ॥

[ नील० ] द्रोणमयं मम गुरुरिति व्यपदिशन् कथयन् ॥ २७ ॥ उपजीव्य आराध्य रणे युद्धनिमित्तम् ॥ ३२ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

[ अर्जु० ] भागं सेनांशम् ॥ २२ ॥ द्रोणं व्यपदिशन् गुरुतया कथयन् शिल्पे शस्त्रशिक्षानैपुण्ये ॥ २७ ॥ अपेयतुः अपजग्मतुः ॥ ३८ ॥ समितिः सभा ॥ ४० ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

[ सर्व० ] व्यपदिशन् गुरुत्वेन शिल्पे अस्त्रनैपुण्ये २७

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायाम् अष्टपञ्चाशदधिकशततमोऽध्यायः ॥ १५८ ॥

[ लक्षा० ] द्रोणं व्यपदिशन् शिष्य इत्यत्र द्रोणं गुरुं व्यपदिशन् ॥ २७ ॥ वचनं राजशार्दूलेत्यत्र भीतोऽस्मीति वचनमिति पूर्वेण संबन्धः वज्रायुधमिद्रं प्रत्यपि ॥ ३४ ॥ विनिवर्त्य ततो रुग्मीत्यत्र रुग्ममिति पदमस्य नाम्नि वर्तत इति रुग्मी रुग्मरथाख्यः ॥ ३६ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अष्टपञ्चाशधिकशततमोऽध्यायः ॥ १५८ ॥

## एकोनषष्ट्यधिकतशततमोऽध्यायः १५९

युद्धदोषान्दुर्योधने आधित्सन्ते धृतराष्ट्रं प्रति स्वमात्मनो दुश्चरितादनर्थमापन्नो न दुर्योधनं कालमीश्वरं वा दूषयितुमर्हसीति संजयवचनम् ॥ १ ॥

**जनमेजय उवाच—**

तथा व्यूढेष्वनीकेषु कुरुक्षेत्रे द्विजर्षभ ।
किमकुर्वंश्च कुरवः कालेनाभिप्रचोदिताः ॥ १ ॥

**वैशंपायन उवाच—**

तथा व्यूढेष्वनीकेषु यत्तेषु भरतर्षभ ।
धृतराष्ट्रो महाराज संजयं वाक्यमब्रवीत् ॥ २ ॥
एहि संजय सर्वं मे आचक्ष्वानवशेषतः ।
सेनानिवेशे यद्वृत्तं कुरुपाण्डवसेनयोः ॥ ३ ॥
दिष्टमेव परं मन्ये पौरुषं चाप्यनर्थकम् ।
यदहं बुध्यमानोऽपि युद्धदोषान्क्षयोदयान् ॥ ४ ॥
तथापि निकृतिप्रज्ञं पुत्रं दुर्द्यूतदेविनम् ।
न शक्नोमि नियन्तुं वा कर्तुं वा हितमात्मनः ॥ ५ ॥
भवत्येव हि मे सूत बुद्धिर्दोषानुदर्शिनी ।
दुर्योधनं समासाद्य पुनः सा परिवर्तते ॥ ६ ॥
एवं गते वै यद्भावि तद्भविष्यति संजय ।
क्षत्रधर्मः किल रणे तनुत्यागो हि पूजितः ॥ ७ ॥

**संजय उवाच—**

त्वद्युक्तोऽयमनुप्रश्नो महाराज यथेच्छसि ।
न तु दुर्योधने दोषमिममाधातुमर्हसि ॥ ८ ॥
शृणुष्वानवशेषेण वदतो मम पार्थिव ।
य आत्मनो दुश्चरितादशुभं प्राप्नुयान्नरः ।
न स कालं न वा देवानेनसा गन्तुमर्हति ॥ ९ ॥
महाराज मनुष्येषु निन्द्यं यः सर्वमाचरेत् ।
स वध्यः सर्वलोकस्य निन्दितानि समाचरन् ॥१०॥
निकारा मनुजश्रेष्ठ पाण्डवैस्त्वत्प्रतीक्षया ।
अनुभूताः सहामात्यैर्निकृतैरधिदेवने ॥ ११ ॥
हयानां च गजानां च राज्ञां चामिततेजसाम् ।
वैशसं समरे वृत्तं यत्तन्मे शृणु सर्वशः ॥ १२ ॥
स्थिरो भूत्वा महाप्राज्ञ सर्वलोकक्षयोदयम् ।
यथाभूतं महायुद्धे श्रुत्वा चैकमना भव ॥ १३ ॥
न ह्येव कर्ता पुरुषः कर्मणोः शुभपापयोः ।
अस्वतन्त्रो हि पुरुषः कार्यते दारुयन्त्रवत् ॥ १४ ॥
केचिदीश्वरनिर्दिष्टाः केचिदेव यदृच्छया ।
पूर्वकर्मभिरप्यन्ये त्रैधमेतत्प्रदृश्यते ।
तस्मादनर्थमापन्नः स्थिरो भूत्वा निशामय ॥१५॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

## षष्ट्यधिकशततमोऽध्यायः १६०

हिरण्वत्यां पाण्डवेषु निविष्टेषु तत्र दुर्योधनो बलं निवेश्य कर्णादिभिः सह मंत्रयित्वोपह्वरे वासुदेवस्य शृण्वतः "वासुदेवसहस्रं वा फाल्गुनानां शतानि वाऽमोघेषुं मामासाद्य दश दिशो द्रविष्यन्ति, अहं वासुदेवस्य भयात्तथा युष्माकं भयाद्वा राज्यं न प्रतिप्रदास्यामि" इति सन्देशं पाण्डवेभ्यः कथयेत्युलूकं प्रति दुर्योधनोक्तिः ॥ १ ॥

**संजय उवाच—**

हिरण्वत्यां निविष्टेषु पाण्डवेषु महात्मसु ।
न्यविशन्त महाराज कौरवेया यथाविधि ॥ १ ॥

---

[ नील० ] तथेति ॥ १ ॥ क्षयस्यैव उदयो येभ्यस्तान् क्षयोदयान् ॥ ४ ॥ निकृतिप्रज्ञं कपटविषयैव प्रज्ञा न धर्मविषया यस्य तम् ॥ ५ ॥ एनसा दोषेण देवान् कालं वा गन्तुमुपालब्धुं नार्हति । दृष्टे संभवत्यदृष्टकल्पनाया अन्याय्यत्वाद्दृष्टापराधाभावे देवस्य कालस्य वा उपालम्भः कर्तुमुचितो न तु तस्मिन्सतीत्यर्थः । न स कालं न वा देवं वक्तुमेतदिहार्हतीति पाठेऽप्ययमेवार्थः ॥ ९ ॥ निकाराः तिरस्काराः ॥ ११ ॥ वैशसं वैरं समरं निमित्ते ॥ १२ ॥

इति श्रीनै० भा० भा० उ० ऊनषष्ट्यधिकशततमोऽध्यायः ॥१५९॥

[ अर्जु० ] कालेन मृत्युना ॥ १ ॥ अनवशेषतः निःशेषेण वद ॥ ३ ॥ गन्तुं गमयितुं अन्तर्भावितण्यर्थत्वात् ॥ ९ ॥ निकाराः परिभवाः त्वत्प्रतीक्षया त्वयि गौरवेण ॥ ११ ॥ वशसं वधं वृत्तं भाविनि भूतोपचारात् ॥ १२ ॥ त्रैधं त्रिप्रकारं विकृष्यते विभज्यते ॥ १५ ॥

इति श्रीमन्म०व्या०म०भु०एकोनषष्ट्यधिकशततमोऽध्यायः ॥ १५९ ॥

[ सर्व० ] एनसा अपराधेन सहितान् गन्तुं ज्ञातुम् ॥ ९ ॥ समरे निमित्ते वैशसं वैरम् ॥ १२ ॥

इ० श्रीम० उद्योगप० सर्वज्ञ०व्या०एकोनषष्ट्यधिकशततमो० ॥१५९॥

[ नील० ] हिरण्वत्यामिति ॥ १ ॥

---

१५ ख. त्रयमेतद्विकृष्यते । ख. अनर्थमासन्न ॥ अध्यायः ॥ १५९ ॥

१ ख. हिरण्यानां । म. हिरण्यवत्यां ।

तत्र दुर्योधनो राजा निवेश्य बलमोजसा ।
संमानयित्वा नृपतीन्न्यस्य गुल्मांस्तथैव च ॥ २ ॥
आरक्षस्य विधिं कृत्वा योधानां तत्र भारत ।
कर्णं दुःशासनं चैव शकुनिं चापि सौबलम् ॥ ३ ॥
आनाय्य नृपतिस्तत्र मन्त्रयामास भारत ।
तत्र दुर्योधनो राजा कर्णेन सह भारत ॥ ४ ॥
संभाषित्वा च कर्णेन भ्रात्रा दुःशासनेन च ।
सौबलेन च राजेन्द्र मन्त्रयित्वा नरर्षभ ॥ ५ ॥
आहूयोपह्वरे राजन्नुलूकमिदमब्रवीत् ।
उलूक गच्छ कैतव्य पाण्डवान्सहसोमकान् ॥ ६ ॥
गत्वा मम वचो ब्रूहि वासुदेवस्य शृण्वतः ।
इदं तत्समनुप्राप्तं वर्षपूगाभिचिन्तितम् ॥ ७ ॥
पाण्डवानां कुरूणां च युद्धं लोकभयंकरम् ।
यदेतत्कत्थनावाक्यं संजयो महदब्रवीत् ॥ ८ ॥
वासुदेवसहायस्य गर्जतः सानुजस्य ते ।
मध्ये कुरूणां कौन्तेय तस्य कालोऽयमागतः ॥ ९ ॥
यथा वः संप्रतिज्ञातं तत्सर्वं क्रियतामिति ।
ज्येष्ठं तथैव कौन्तेयं ब्रूयास्त्वं वचनान्मम ॥ १० ॥
भ्रातृभिः सहितः सर्वैः सोमकैश्च सकेकयैः ।
कथं वा धार्मिको भूत्वा त्वमधर्मे मनः कृथाः ॥ ११ ॥
य इच्छसि जगत्सर्वं नश्यमानं नृशंसवत् ।
अभयं सर्वभूतेभ्यो दाता त्वमिति मे मतिः ॥ १२ ॥
श्रूयते हि पुरा गीतः श्लोकोऽयं भरतर्षभ ।
प्रह्रादेनाथ भद्रं ते हृते राज्ये तु दैवतैः ॥ १३ ॥
यस्य धर्मध्वजो नित्यं सुराध्वज इवोच्छ्रितः ।
प्रच्छन्नानि च पापानि बैडालं नाम तद्व्रतम् ॥ १४ ॥
अत्र ते वर्णयिष्यामि आख्यानमिदमुत्तमम् ।
कथितं नारदेनेह पितुर्मम नराधिप ॥ १५ ॥

मार्जारः किल दुष्टात्मा निश्चेष्टः सर्वकर्मसु ।
ऊर्ध्वबाहुः स्थितो राजन् गङ्गातीरे कदाचन ॥ १६ ॥
स वै कृत्वा मनःशुद्धिं प्रत्ययार्थं शरीरिणाम् ।
करोमि धर्ममित्याह सर्वानेव शरीरिणः ॥ १७ ॥
तस्य कालेन महता विश्रम्भं जग्मुरण्डजाः ।
समेत्य च प्रशंसन्ति मार्जारं तं विशांपते ॥ १८ ॥
पूज्यमानस्तु तैः सर्वैः पक्षिभिः पक्षिभोजनः ।
आत्मकार्यं कृतं मेने चर्यायाश्च कृतं फलम् ॥ १९ ॥
अथ दीर्घस्य कालस्य तं देशं मूषिका ययुः ।
ददृशुस्तं च ते तत्र धार्मिकं व्रतचारिणम् ॥ २० ॥
कार्येण महता युक्तं दम्भयुक्तेन भारत ।
तेषां मतिरियं राजन्नासीत्तत्र विनिश्चये ॥ २१ ॥
बहुमित्रा वयं सर्वे तेषां नो मातुलो ह्ययम् ।
रक्षां करोतु सततं वृद्धबालस्य सर्वशः ॥ २२ ॥
उपगम्य तु ते सर्वे बिडालमिदमब्रुवन् ।
भवत्प्रसादादिच्छामश्चर्तुं चैव यथासुखम् ॥ २३ ॥
भवान्नो गतिरव्यग्रा भवान्नः परमः सुहृत् ।
ते वयं सहिताः सर्वे भवन्तं शरणं गताः ॥ २४ ॥
भवान् धर्मपरो नित्यं भवान्धर्मे व्यवस्थितः ।
स नो रक्ष महाप्रज्ञ त्रिदशानिव वज्रभृत् ॥ २५ ॥
एवमुक्तस्तु तैः सर्वैर्मूषिकैः स विशांपते ।
प्रत्युवाच ततः सर्वान्मूषिकान्मूषिकान्तकृत् ॥ २६ ॥
द्वयोर्योगं न पश्यामि तपसो रक्षणस्य च ।
अवश्यं तु मया कार्यं वचनं भवतां हितम् ॥ २७ ॥
युष्माभिरपि कर्तव्यं वचनं मम नित्यशः ।
तपसाऽस्मि परिश्रान्तो दृढं नियममास्थितः ॥ २८ ॥
न चापि गमने शक्तिं कांचित्पश्यामि चिन्तयन् ।
सोऽस्मि नेयः सदा ताता नदीकूलमितः परम् ॥ २९ ॥

---

[ नील० ] गुल्मान् सैन्यान् ॥ २ ॥ आरक्षस्य रक्षणीयस्य द्रव्यादेः विधिं रक्षाविधानम् । आरक्षं रक्षणीये स्यादिति विश्वः ॥ ३ ॥ कत्थनावाक्यमात्मप्रशंसनम् ॥ ८ ॥ संप्रतिज्ञातं दुःशासनरुधिरपानादि ॥ १० ॥ भ्रातृभिः सहितः कथमधर्मे मनः कृथा इति संबन्धः ॥ ११ ॥ दाता दास्यसि पारिव्राज्यं करिष्यसीत्यर्थः ॥ १२ ॥ भोसुरा इति देवान् प्रह्रादः संबोधयति यस्य व्रतस्य धर्मध्वजो धर्मचिह्नं दर्भपवित्रपाणित्वादि उच्छ्रितः सर्वलोकविदितः ॥ १४ ॥ मनःशुद्धिं हिंसातो निवृत्तिम् ॥ १७ ॥ विश्रम्भं विश्वासम् ॥ १८ ॥ बहवश्च ते मित्राणि चेति बहुमित्राः । बह्वमित्रा इत्यपि पाठः । वृद्धाश्च बालाश्च तेषां समाहारो वृद्धबालं तस्य ॥ २२ ॥

[ अर्जु० ] कैतव्य हे कितवपुत्र ॥ ६ ॥ कत्थनावाक्यम् आत्मप्रशंसनम् ॥ ८ ॥ योगं संबन्धम् ॥ २७ ॥

---

३ ख. म. ख. उत्तरार्धं नास्ति । ४ म. नृपतीस्तत्र । ख. पूर्वार्धं नास्ति । ५ ख. म. पूर्वार्धं नास्ति । ८ ख. म. कथितं । म. ख. महदद्भुतम् । ९ ख. म. पूर्वार्धं नास्ति । १०-८१ श्लोकाः ख. म. न सन्ति ।

तरुणौ सुकुमारौ च राजपुत्रौ तरस्विनौ ।
युद्धानां च विशेषज्ञौ प्रणेतारौ च सर्वशः ॥१५॥
रथौ तौ कुरुशार्दूल मतौ मे रथसत्तमौ ।
क्षत्रधर्मरतौ वीरौ महत्कर्म करिष्यतः ॥ १६ ॥
दण्डधारो महाराज रथ एको नरर्षभ ।
योत्स्यते तव संग्रामे स्वेन सैन्येन पालितः ॥१७॥
बृहद्बलस्तथा राजा कौसल्यो रथसत्तमः ।
रथो मम मतस्तात महावेगपराक्रमः ॥ १८ ॥

एष योत्स्यति संग्रामे स्वान्बन्धून् संप्रहर्षयन् ।
उग्रायुधो महेष्वासो धार्तराष्ट्रहिते रतः ॥ १९ ॥
कृपः शारद्वतो राजन् रथयूथपयूथपः ।
प्रियान्प्राणान्परित्यज्य प्रधक्ष्यति रिपूंस्तव ॥२०॥
गौतमस्य महर्षेर्य आचार्यस्य शरद्वतः ।
कार्तिकेय इवाजेयः शरस्तम्बात्सुतोऽभवत् ॥२१॥
एष सेनाः सुबहुला विविधायुधकार्मुकाः ।
अग्निवत्समरे तात चरिष्यति विनिर्दहन् ॥ २२ ॥

इति श्रीमहाभारते उद्योगपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

## सप्तषष्ट्यधिकशततमोऽध्यायः १६७

भीष्मेण स्वसेनायां रथातिरथसंख्यानम् ॥ १ ॥

**भीष्म उवाच—**

शकुनिर्मातुलस्तेऽसौ रथ एको नराधिप ।
प्रयुज्य पाण्डवैर्वैरं योत्स्यते नात्रसंशयः ॥ १ ॥
एतस्य सेना दुर्धर्षा समरे प्रतियायिनः ।
विकृता युद्धभूयिष्ठा वायुवेगसमा जवे ॥ २ ॥
द्रोणपुत्रो महेष्वासः सर्वानेवातिधन्विनः ।
समरे चित्रयोधी च दृढास्त्रश्च महारथः ॥ ३ ॥
एतस्य हि महाराज यथा गाण्डीवधन्वनः ।
शरासनविनिर्मुक्ताः संसक्ता यान्ति सायकाः॥४॥
नैष शक्यो मया वीरः संख्यातुं रथसत्तमः ।
निर्दहेदपि लोकांस्त्रीनिच्छन्नेष महारथः ॥ ५ ॥

क्रोधस्तेजश्च तपसा संभृतोऽऽश्रमवासिनाम् ।
द्रोणेनानुगृहीतश्च दिव्यैरस्त्रैरुदारधीः ॥ ६ ॥
दोषस्त्वस्य महानेको येनैव भरतर्षभ ।
न मे रथो नातिरथो मतः पार्थिवसत्तम ॥ ७ ॥
जीवितं प्रियमत्यर्थमायुष्कामः सदा द्विजः ।
न ह्यस्य सदृशः कश्चिदुभयोः सेनयोरपि ॥ ८ ॥
हन्यादेकरथेनैव देवानामपि वाहिनीम् ।
वपुष्मांस्तलघोषेण स्फोटयेदपि पर्वतान् ॥ ९ ॥
असंख्येयगुणो वीरः प्रहर्ता दारुणद्युतिः ।
दण्डपाणिरिवासह्यः कालवत्प्रचरिष्यति ॥ १० ॥

---

[ लक्षा० ] व्यलीकं पाण्डवेयेनेत्यत्र ' व्यलीकमप्रियं जातं व्यलीकं त्वप्रियेऽनृते ' इत्यमरः ॥ १२ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

[ अर्जु० ] सुकुमारावपि रथसत्तमाविति विरोधाभासोऽलंकारः ॥ १५ ॥ रथयूथपयूथप इति बहूनां रथानामपि रक्षकः इत्यर्थः । परित्यज्य परित्यागसंकल्पं कृत्वा २०

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

[ सर्व० ] रथौ तौ नातिरथाविति सुकुमाराविति हेतुः ॥१६॥ प्राणान्परित्यज्य तेषु निर्ममो भूत्वा ॥२०॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां षट्षष्ट्यधिकशततमोऽध्यायः ॥ १६६ ॥

[ नील० ] शकुनिरिति ॥ १ ॥ विकृतानि नानाविधानि आयुधानि तैर्भूयिष्ठा ॥ २ ॥ आश्रमवासिनामृषीणां क्रोधस्तेजश्च तयोः समुदायरूप इत्यर्थः आश्रमेत्याकारस्य पूर्वरूपमार्षम् ॥ ६ ॥

[ अर्जु० ] सैन्याः सेनासमवेताः ॥ २ ॥ संसक्ता अन्योन्यसंलग्नाः ॥ ४ ॥ अश्रमः आश्रमः ह्रस्वत्वं परपूर्वत्वं वा छान्दसम् ॥६॥ जीवितं प्राणाः अस्येति शेषः ॥ आयुः लिङ्गषाट्कौशिकशरीरयोः संयोगेनावच्छिन्नः कालः । एतेन प्राणहरे युद्धे पराङ्मुखत्वं दर्शितम् ॥ ८ ॥

[ सर्व० ] एतस्य सैन्याः सेनासमवेताः ॥ २ ॥ संभृतोश्रमवासिनामिति आर्षः सन्धिः । ऋषीणां क्रोधतेजसोः समुदायोऽयमित्यर्थः ॥ ६ ॥ जीवितं प्राणास्तद्धारणकाल आयुः ॥ ८ ॥

---

१६ ख. भीमौ मह° । २१ ख. शरस्तम्बादिवाबभौ । २२ ख. सेनां बहुविधां विविधायुधकार्मुकाम् । ख. विमर्दयन् ॥ २२ ॥ अध्यायः ॥ १६६ ॥

५ ख. महावीरः ।

युगान्ताग्निसमः क्रोधात्सिंहग्रीवो महाद्युतिः ।
एष भारतयुद्धस्य पृष्ठं संशमयिष्यति ॥ ११ ॥
पिता त्वस्य महातेजा वृद्धोऽपि युवभिर्वरः ।
रणे कर्म महत्कर्ता अत्र मे नास्ति संशयः ॥१२॥
अस्त्रवेगानिलोद्भूतः सेनाकक्षेन्धनोत्थितः ।
पाण्डुपुत्रस्य सैन्यानि प्रधक्ष्यति रणे धृतः ॥१३॥
रथयूथपयूथानां यूथपोऽयं नरर्षभः ।
भरद्वाजात्मजः कर्ता कर्म तीव्रं हितं तव ॥ १४ ॥
सर्वमूर्धाभिषिक्तानामाचार्यः स्थविरो गुरुः ।
गच्छेदन्तं सृंजयानां प्रियस्त्वस्य धनंजयः ॥१५॥
नैष जातु महेष्वासः पार्थमक्लिष्टकारिणम् ।
हन्यादाचार्यकं दीप्तं संस्मृत्य गुणनिर्जितम् ॥१६॥
श्लाघतेऽयं सदा वीर पार्थस्य गुणविस्तरैः ।
पुत्रादभ्यधिकं चैनं भारद्वाजोऽनुपश्यति ॥ १७ ॥
हन्यादेकरथेनैव देवगन्धर्वमानुषान् ।
एकीभूतानपि रणे दिव्यैरस्त्रैः प्रतापवान् ॥ १८ ॥
पौरवो राजशार्दूलस्तवराजन्महारथः ।
मतो मम रथोदारः परवीररथारुजः ॥ १९ ॥
स्वेन सैन्येन महता प्रतपन् शत्रुवाहिनीम् ।
प्रधक्ष्यति स पञ्चालान् कक्षं कृष्णगतिर्यथा ॥२०॥
सत्यश्रवा रथस्त्वेको राजपुत्रो बृहद्बलः ।
तव राजन् रिपुबले कालवत्प्रचरिष्यति ॥ २१ ॥
एतस्य योधा राजेन्द्र विचित्रकवचायुधाः ।
विचरिष्यन्ति संग्रामे निघ्नन्तः शात्रवांस्तव ॥२२॥
वृषसेनो रथस्तेऽग्र्यः कर्णपुत्रो महारथः ।
प्रधक्ष्यति रिपूणां ते बलं तु बलिनां वरः ॥२३॥
जलसन्धो महातेजा राजन् रथवरस्तव ।
त्यक्ष्यते समरे प्राणान् माधवः परवीरहा ॥ २४ ॥
एष योत्स्यति संग्रामे गजस्कन्धविशारदः ।
रथेन वा महाबाहुः क्षपयन् शत्रुवाहिनीम् ॥२५॥
रथ एष महाराज मतो मे राजसत्तम ।
त्वदर्थे त्यक्ष्यते प्राणान्सहसैन्यो महारणे ॥ २६ ॥
एष विक्रान्तयोधी च चित्रयोधी च संगरे ।
वीतभीश्चापि ते राजन् शत्रुभिः सह योत्स्यते॥२७॥
बाह्लीकोऽतिरथश्चैव समरे चानिवर्त्तनः ।
मम राजन्मतो युद्धे शूरो वैवस्वतोपमः ॥ २८ ॥
नह्येष समरं प्राप्य निवर्त्तेत कथंचन ।
यथा सततगो राजन् स हि हन्यात्परान् रणे॥२९॥
सेनापतिर्महाराज सत्यवांस्ते महारथः ।
रणेष्वद्भुतकर्मा च रथी पररथारुजः ॥ ३० ॥
एतस्य समरं दृष्ट्वा न व्यथाऽस्ति कथंचन ।
उत्स्मयन्नुत्पतत्येष परान् रथपथे स्थितान् ॥३१॥
एष चारिषु विक्रान्तः कर्म सत्पुरुषोचितम् ।
कर्त्ता विमर्दे सुमहत्त्वदर्थे पुरुषोत्तमः ॥ ३२ ॥
अलम्बुषो राक्षसेन्द्रः क्रूरकर्मा महारथः ।
हनिष्यति परान् राजन् पूर्ववैरमनुस्मरन् ॥ ३३ ॥
एष राक्षससैन्यानां सर्वेषां रथसत्तमः ।
मायावी दृढवैरश्च समरे विचरिष्यति ॥ ३४ ॥
प्राग्ज्योतिषाधिपो वीरो भगदत्तः प्रतापवान् ।
गजाङ्कुशधरश्रेष्ठो रथे चैव विशारदः ॥ ३५ ॥
एतेन युद्धमभवत्पुरा गाण्डीवधन्वनः ।
दिवसान्सुबहून् राजन्नुभयोर्जयगृद्धिनोः ॥ ३६ ॥

---

[ नील० ] पृष्ठं शेषम् ॥११॥ सत्यश्रवाः सत्यकीर्त्तिः ॥ २१ ॥ उत्स्मयन् हृष्यन् ॥ ३१ ॥ गजाङ्कुशधरेषु गजयुद्धकुशलेषु श्रेष्ठः सप्तमी शौण्डैरितिसमासः ॥ ३५ ॥

[ अर्जु० ] सिंहः शूरत्वात् । क्लीबो जीवितप्रियत्वात् सिंहग्रीव इति प्रायशः पाठः । स च चिन्त्यः । पृष्ठं शेषम् ॥ ११ ॥ युवभिः युवभ्यः ॥ १२ ॥ आचार्यकं आचार्यकर्म दीप्तं प्रसिद्धम् । गुणनिर्जितं गुणोपार्जितम् ॥१६॥ कृष्णगतिरग्निः ॥ २० ॥ सततगो वातः ॥ २९ ॥ व्यथा भयम् ॥ ३१ ॥ पूर्ववैरं हिडिम्बादिज्ञातित्वात् ॥ ३३ ॥ गजाङ्कुशधरः श्रेष्ठः गजांकुशोऽङ्कुशाकारपरिणतं नारायणास्त्रम् ॥ ३५ ॥

[ सर्व० ] सिंहः शक्तः क्लीबो भीतः । पृष्ठं पश्चाद्भागम् संशमयिष्यति संप्रणेष्यति जीवितप्रियत्वेन ॥ ११ ॥ आचार्यकमाचार्यत्वम् ॥ १५ ॥ दीप्तमुद्धतम् । गुणेन शुश्रूषया निर्जितम् अर्जुनेनाभिमुखीकृतम् ॥ १६ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

[ लक्षा० ] कृष्णगतिर्यथेत्यत्र कृष्णगतिः कृष्णवर्त्मा ॥ २० ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

---

१८ ख. देवगन्धर्वदानवान् । २३ ख. बलानि । २६ ख. त्यजति । ३५ ख. धर एष । अध्यायः ॥ १६७ ॥

ततः सखायं गान्धारे मानयन्पाकशासनम् ।
अकरोत्संविदं तेन पाण्डवेन महात्मना ॥ ३७ ॥
एष योत्स्यति संग्रामे गजस्कन्धविशारदः ।
ऐरावतगतो राजा देवानामिव वासवः ॥ ३८ ॥

इति श्रीमहाभारते उद्योगपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

## अष्टषष्ट्यधिकशततमोऽध्यायः १६८

भीष्मेणार्धरथत्वेन गणनात्क्रुद्धेन कर्णेन 'यावद्भीष्मो युध्यति तावन्न योत्स्ये' इति प्रतिज्ञानम् ॥ १ ॥

भीष्म उवाच—
अचलो वृषकश्चैव सहितौ भ्रातरावुभौ ।
रथौ तव दुराधर्षौ शत्रून्विध्वंसयिष्यतः ॥ १ ॥
बलवन्तौ नरव्याघ्रौ दृढक्रोधौ प्रहारिणौ ।
गान्धारमुख्यौ तरुणौ दर्शनीयौ महाबलौ ॥ २ ॥
सखा ते दयितो नित्यं य एष रणकर्कशः ।
उत्साहयति राजंस्त्वां विग्रहे पाण्डवैः सह ॥ ३ ॥
परुषः कत्थनो नीचः कर्णो वैकर्तनस्तव ।
मन्त्री नेता च बन्धुश्च मानी चात्यन्तमुच्छ्रितः ॥४॥
एष नैव रथः कर्णो न चाप्यतिरथो रणे ।
वियुक्तः कवचेनैष सहजेन विचेतनः ॥ ५ ॥
कुण्डलाभ्यां च दिव्याभ्यां वियुक्तः सततं घृणी ।
अभिशापाच्च रामस्य ब्राह्मणस्य च भाषणात् ॥६॥
करणानां वियोगाच्च तेन मेऽर्धरथो मतः ।
नैष फाल्गुनमासाद्य पुनर्जीवन्विमोक्ष्यते ॥ ७ ॥
ततोऽब्रवीत्पुनर्द्रोणः सर्वशस्त्रभृतां वरः ।
एवमेतद्यथात्थ त्वं न मिथ्यास्ति कदाचन ॥ ८ ॥
रणे रणेऽभिमानी च विमुखश्चापि दृश्यते ।
घृणी कर्णः प्रमादी च तेन मेऽर्धरथो मतः ॥९॥
एतच्छ्रुत्वा तु राधेयः क्रोधादुत्फाल्य लोचने ।
उवाच भीष्मं राधेयस्तुदन्वाग्भिः प्रतोदवत् ॥१०॥
पितामह यथेष्टं मां वाक्शरैरुपकृन्तसि ।
अनागसं सदा द्वेषादेवमेव पदे पदे ॥ ११ ॥
मर्षयामि च तत्सर्वं दुर्योधनकृतेन वै ।
त्वं तु मां मन्यसे मन्दं यथा कापुरुषं तथा ॥१२॥
भवानर्धरथो मह्यं मतो वै नात्र संशयः ।
सर्वस्य जगतश्चैव गाङ्गेयो न मृषा वदेत् ॥ १३ ॥
कुरूणामहितो नित्यं न च राजाऽवबुध्यते ।
को हि नाम समानेषु राजसूदारकर्मसु ॥ १४ ॥
तेजोवधमिमं कुर्याद्विभेदयिषुराहवे ।
यथा त्वं गुणविद्वेषादपरागं चिकीर्षसि ॥ १५ ॥
न हायनैर्न पलितैर्न वित्तैर्न च बन्धुभिः ।
महारथत्वं संख्यातुं शक्यं क्षत्रस्य कौरव ॥ १६ ॥

[ नील० ] संविदं मैत्रीम् ॥ ३७ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

[अर्जु०] पाकशासनं सखायं मानयन् अर्जुनेन संविदं संधिं कृतवानिति संबन्धः ॥ ३७ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्तषष्ट्यधिकशततमोऽध्यायः ॥ १६७ ॥

[नील० ] अचल इति ॥ १ ॥ विचेतनः मूर्खः ॥५॥ घृणी निन्दकः ॥ ६ ॥ करणानां सहजकवचादीनाम् ॥७॥ प्रमादी स्वीयं कल्पनावाक्यं विस्मरति च ॥ ९ ॥ भवान् कर्णोऽर्धरथो मह्यं मम मत इति गाङ्गेयो वदेत्तन्न मृषेति सर्वस्य जगतो मत इति संबन्धः । त्वद्वाक्यात्सर्वेऽपि मामवमंस्यन्त इति भावः ॥ १३ ॥ विभेदयिषुर्भेदं कर्तुमिच्छुः अपरागं द्वेषम् ॥ १५ ॥

[ अर्जु० ] उच्छ्रितः उद्युक्तः ॥ ४ ॥ घृणी दयालुः ब्राह्मणस्य यस्य धेनुः कर्णेन हता ॥ ६ ॥ करणानां कवचशरप्रभृतीनाम् ॥ ७ ॥ प्रमादी अनवधानवान् ॥ ९ ॥ समानेषु मानार्थिषु ॥ १४ ॥ बिभेदयिषुः छेत्तुमिच्छुः । स्वार्थे णिच् अर्धरथत्वादिना राज्ञां वैमुख्यमापादयन् । गुणनिर्देशात् बहुगुणानामपि अल्पतया कथनात् अपारगं विपारगम् ॥ १५ ॥

[ सर्व० ] ब्राह्मणस्य यस्य पुत्रो हतस्तेन तस्य चक्रमज्जनशापात् ॥ ६ ॥ करणानां कवचनांसाद्वनादीनाम् । ॥ ७ ॥ समानेषु तुल्येषु सत्सु ॥ १४ ॥ बिभेदयिषुभिन्नं कर्तुमिच्छुः । सदवस्थानेन बलवत्तामाकलय्य प्रतिनृपाणां मसुदौर्बल्यज्ञानेन परित्यागसंभवादित्याशयः । गुणनिर्देशान्मत्तोऽर्जुनस्य माहादतिमोहात् (?) ॥ १५ ॥

७ म. कारणानां । ८ म. ततोऽब्रवीन्महाबाहुर्द्रोणः प्रहरतां वरः । १० म. रोषाच्च क्रोधात् । ब. राजेन्द्रं तुद ।

बलज्येष्ठं स्मृतं क्षत्रं मन्त्रज्येष्ठा द्विजातयः ।
धनज्येष्ठाः स्मृता वैश्याः शूद्रास्तु वयसाधिकाः ॥ १७॥
यथेच्छकं स्वयं ब्रूया रथानतिरथांस्तथा ।
कामद्वेषसमायुक्तो मोहात्प्रकुरुते भवान् ॥ १८ ॥
दुर्योधन महाबाहो साधु सम्यगवेक्ष्यताम् ।
त्यज्यतां दुष्टभावोऽयं भीष्मः किल्बिषकृत्तव॥१९॥
भिन्ना हि सेना नृपते दुःसन्धेया भवत्युत ।
मौला हि पुरुषव्याघ्र किमु नानासमुत्थिताः ॥२०॥
एषां द्वैधं समुत्पन्नं योधानां युधि भारत ।
तेजोवधो नः क्रियते प्रत्यक्षेण विशेषतः ॥ २१ ॥
रथानां क्व च विज्ञानं क्व च भीष्मोऽल्पचेतनः ।
अहमावारयिष्यामि पाण्डवानामनीकिनीम् ॥२२॥
आसाद्य माममोघेषुं गमिष्यन्ति दिशो दश ।
पाण्डवाः सहपञ्चालाः शार्दूलं वृषभा इव ॥ २३ ॥
क्व च युद्धं विमर्दो वा मन्त्रे सुव्याहृतानि च ।
क्व च भीष्मो गतवया मन्दात्मा कालचोदितः॥२४॥
एकाकी स्पर्धते नित्यं सर्वेण जगता सह ।
न चान्यं पुरुषं कंचिन्मन्यते मोघदर्शनः ॥ २५ ॥
श्रोतव्यं खलु वृद्धानामिति शास्त्रनिदर्शनम् ।
न त्वेव ह्यतिवृद्धानां पुनर्बाला हि ते मताः ॥२६॥
अहमेको हनिष्यामि पाण्डवानामनीकिनीम् ।
सुयुद्धे राजशार्दूल यशो भीष्मं गमिष्यति ॥ २७॥
कृतः सेनापतिस्त्वेष त्वया भीष्मो नराधिप ।
सेनापतौ यशो गन्ता न तु योधान् कथंचन ॥२८॥
नाहं जीवति गाङ्गेये योत्स्ये राजन्कथंचन ।
हते भीष्मे तु योद्धाऽस्मि सर्वैरेव महारथैः ॥२९॥

भीष्म उवाच—

समुद्यतोऽयं भारो मे सुमहान्सागरोपमः ।
धार्तराष्ट्रस्य संग्रामे वर्षपूगाभिचिन्तितः ॥ ३० ॥
तस्मिन्नभ्यागते काले प्रतप्ते लोमहर्षणे ।
मिथो भेदो न मे कार्यस्तेन जीवसि सूतज ॥३१॥
न ह्यहं त्वद्य विक्रम्य स्थविरोपि शिशोस्तव ।
युद्धश्रद्धामहं छिन्द्यां जीवितस्य च सूतज ॥ ३२॥
जामदग्न्येन रामेण महास्त्राणि विमुञ्चता ।
न मे व्यथा कृता काचित्त्वं तु मे किं करिष्यसि ३३
कामं नैतत्प्रशंसन्ति सन्तः स्वबलसंस्तवम् ।
वक्ष्यामि तु त्वां संतप्तो निहीन कुलपांसन ॥३४॥
समेतं पार्थिवं क्षत्रं काशिराजस्वयंवरे ।
निर्जित्यैकरथेनैव याः कन्यास्तरसा हृताः ॥३५॥
ईदृशानां सहस्राणि विशिष्टानामथो पुनः ।
मयैकेन निरस्तानि ससैन्यानि रणाजिरे ॥ ३६ ॥
त्वां प्राप्य वैरपुरुषं कुरूणामनयो महान् ।
उपस्थितो विनाशाय यतस्व पुरुषो भव ॥ ३७ ॥

---

[ नील० ] प्रकुरुते प्रकारं भेदं कुरुते । प्रकारस्तुल्यभेदयोरिति विश्वः ॥ १८ ॥ मौलाः पारंपर्यागताः तेऽपि भिन्नाः सन्तो दुःसन्धेया भवन्ति किमु नाना पृथग्भूताः सन्त एककार्यार्थं समुत्थिता इति ॥ २० ॥ क्व चेति युद्धे वृद्धो मन्त्रेषु मूर्खश्च अशक्तत्वान्नष्टबुद्धित्वाच्चायोग्य इति भावः ॥ २४ ॥ येऽतिवृद्धास्ते पुनर्बाला एव मे मतास्तादृशश्चायं भीष्म इत्यर्थः ॥ २६ ॥ त्वयि हन्तरि कुतो भीष्मं यशो गमिष्यतीत्याशङ्क्याह—कृत इति ॥ २८ ॥ नहि छिन्द्यामित्यन्वयः भेदभयादेवाहं त्वद्वधं न कुर्यामित्यर्थः आशङ्कायां लकारः ॥ ३२ ॥

[ अर्जु० ] मोहात् विपरीतज्ञानात् ॥ १८ ॥ भिन्नाः पृथक्कृताः । मौलाः पारंपर्यागताः । नानासमुत्थिताः । नानाकृतोद्योगाः ॥ २० ॥ क्व युद्धं विमर्दः क्व च गतवयाः, क्व मन्त्रः क्व च मन्दात्मा, क्व सुव्याकृतानि क्व च कालमोहितः, स हि विपरीतं प्रलपति ॥ २४ ॥ सदा सर्वकालं नित्यमहर्निशम् ॥ २५ ॥ गन्ता गमिष्यति ॥ २८ ॥ पूगः संघः ॥ ३० ॥ संतप्तः क्रोधेन तुशब्दोऽवधारणे अपीत्यक्षमायाम् । निहीन हे नीच ॥ ३४ ॥ पार्थिवं पृथिव्या ईश्वरम् ॥ ३५ ॥ ईदृशानाम् त्वत्समानानां विशिष्टानां विशेषवताम् ॥ ३६ ॥

[ सर्व० ] मौलाः क्रमागताः ॥ २० ॥ सदा संततं नित्यं प्रग्रहम् ॥ २५ ॥ नत्वेवातिवृद्धानामपीत्यर्थः ॥ २६ ॥ धार्तराष्ट्रस्येति भावः । तस्यैव वर्षपूगचिन्तितः ॥ ३० ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

[ लक्षा० ] करणानां वियोगाच्चेत्यत्र करणानां कवचाद्युपकरणानाम् । मौलापि पुरुषव्याघ्रेत्यत्र मौला धनमूलेन संपन्नाः ॥ २० ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

---

२४ ख. कच मन्त्रविमर्दो वा । २७ ख. पाण्डवानाम संशयः । ३७ ख. विनाशोऽय ।

युध्यस्व समरे पार्थं येन विस्पर्धसे सह ।
द्रक्ष्यामि त्वां विनिर्मुक्तमस्माद्युद्धात्सुदुर्मते ॥ ३८ ॥
तमुवाच ततो राजा धार्तराष्ट्रः प्रतापवान् ।
मां समीक्षस्व गाङ्गेय कार्यं हि महदुद्यतम् ॥ ३९ ॥
चिन्त्यतामिदमेकाग्रं मम निःश्रेयसं परम् ।
उभावपि भवन्तौ मे महत्कर्म करिष्यतः ॥ ४० ॥
भूयश्च श्रोतुमिच्छामि परेषां रथसत्तमान् ।
ये चैवातिरथास्तत्र ये चैव रथयूथपाः ॥ ४१ ॥
बलाबलममित्राणां श्रोतुमिच्छामि कौरव ।
प्रभातायां रजन्यां वै इदं युद्धं भविष्यति ॥ ४२ ॥

इति श्रीमहाभारते उद्योगपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

## एकोनसप्तत्यधिकशततमोऽध्यायः १६९

पाण्डवानामनीके रथातिरथसंख्यानम् ॥ १ ॥

**भीष्म उवाच—**

एते रथास्तवाख्यातास्तथैवातिरथा नृप ।
येचाप्यर्द्धरथा राजन् पाण्डवानामतः शृणु ॥ १ ॥
यदि कौतूहलं तेऽद्य पाण्डवानां बले नृप ।
रथसंख्यां शृणुष्व त्वं सहैभिर्वसुधाधिपैः ॥ २ ॥
स्वयं राजा रथोदारः पाण्डवः कुन्तिनन्दनः ।
अग्निवत्समरे तात चरिष्यति न संशयः ॥ ३ ॥
भीमसेनस्तु राजेन्द्र रथोऽष्टगुणसंमितः ।
न तस्यास्ति समो युद्धे गदया सायकैरपि ॥ ४ ॥
नागायुतबलो मानी तेजसा न स मानुषः ।
माद्रीपुत्रौ च रथिनौ द्वावेव पुरुषर्षभौ ॥ ५ ॥
अश्विनाविव रूपेण तेजसा च समन्वितौ ।
एते चमूमुखगताः स्मरन्तः क्लेशमुत्तमम् ॥ ६ ॥
रुद्रवत्प्रचरिष्यन्ति तत्र मे नास्ति संशयः ।
सर्व एव महात्मानः शालस्तम्भा इवोद्गताः ॥ ७ ॥
प्रादेशेनाधिकाः पुंभिरन्यैस्ते च प्रमाणतः ।
सिंहसंहननाः सर्वे पाण्डुपुत्रा महाबलाः ॥ ८ ॥
चरितब्रह्मचर्याश्च सर्वे तात तपस्विनः ।
ह्रीमन्तः पुरुषव्याघ्रा व्याघ्रा इव बलोत्कटाः ॥ ९ ॥
जवे प्रहारे संमर्दे सर्व एवातिमानुषाः ।
सर्वैर्जिता महीपाला दिग्जये भरतर्षभ ॥ १० ॥
न चैषां पुरुषः केचिदायुधानि गदाः शरान् ।
विषहन्ति सदा कर्तुमधिज्यान्यपि कौरव ॥ ११ ॥
उद्यतां वा गदा गुर्वीः शरान्वा क्षेप्तुमाहवे ।
जवे लक्ष्यस्य हरणे भोज्ये पांसुविकर्षणे ॥ १२ ॥
बालैरपि भवन्तस्तैः सर्व एव विशेषिताः ।
एतत्सैन्यं समासाद्य सर्व एव बलोत्कटाः ॥ १३ ॥
विध्वंसयिष्यन्ति रणे मा स्म तैः सहसंगमः ।
एकैकशस्ते संमर्दे हन्युः सर्वान्महीक्षितः ॥ १४ ॥

[ नील० ] रथादिसंख्यातात्पर्यं तु भीष्मद्रोणौ समर्थावपि पाण्डवान् न हनिष्यतः कर्णोपि कुन्तीवरदानात् भीमादीन् हन्तुं शक्तोऽपि न हनिष्यति अर्जुनस्त्वनेन दुर्जेय एवेति पाण्डवानामेव जय इति ॥ ४३ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

[ अर्जु० ] विनिर्मुक्तं द्रक्ष्यामीति शिरश्चालनेऽविनिर्मुक्तमित्यर्थः ॥ ३८ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि अष्टषष्ट्यधिकशततमोऽध्यायः ॥ १६८ ॥

[ नील० ] एते इति ॥ १ ॥ उद्यतामुद्गच्छतां क्षिप्तामिति यावत् । उद्यन्तुमिति पाठान्तरम् । भोज्ये कौटिल्ये मर्मपीडने इति यावत् भुज कौटिल्ये इत्यस्य रूपम् । पांसुविकर्षणे पांसुषु विकर्षणे भूमौ मुष्टियुद्धे इत्यर्थः ॥१२॥

[ अर्जु० ] ये चाप्यर्धरथाः इत्यनेन कर्णं कटाक्षयति ॥ १ ॥ प्रादेशेन विततांगुष्ठतर्जन्योः प्रमाणेन। सिंहस्येव संहननं शरीरं येषाम् । वरांगरूपोपेतो यः सिंहसंहननो हि स इति च ॥ ८ ॥ आयुधानि धनूंषि अधिज्यानि आरोपितगुणानि ॥ ११ ॥ [ प्रकर्षितुं तूणादाकष्टुम् । ] जवे बाणमोक्षलाघवे । लक्ष्यस्य हरणे वेधे पांशुविकर्षणे पांशूनां सूक्ष्माणामपि खण्डने ॥ १२ ॥ विशेषिताः विरुद्धं शेषं हीनं भागं नीताः ॥ १३ ॥ तैः पाण्डवैः ते तव मास्म संगमः । तथाच संग्रामे मा मनः कृथाः ॥ १४ ॥

४२ ख. प्रभातामेव रजनीमिदं ॥ अध्यायः ॥ १६८ ॥ १ ख. रथास्ते संख्याता। २ ख. रथसंख्यां महाबाहो। ४ ख. संमतः। खउत्तरार्धं नास्ति। ५ ख. युतसमो। ७ ख. शालस्कंद। १० ख. सर्वे जितमही।

प्रत्यक्षं तव राजेन्द्र राजसूये यथाऽभवत् ।
द्रौपद्याश्च परिक्लेशं द्यूते च परुषा गिरः ॥ १५ ॥
ते स्मरन्तश्च संग्रामे चरिष्यन्ति च रुद्रवत् ।
लोहिताक्षो गुडाकेशो नारायणसहायवान् ॥ १६ ॥
उभयोः सेनयोर्वीरो रथो नास्तीति तादृशः ।
नहि देवेषु वा पूर्वं मनुष्येषूरगेषु च ॥ १७ ॥
राक्षसेष्वथ यक्षेषु नरेषु कुत एव तु ।
भूतोऽथवा भविष्यो वा रथः कश्चिन्मया श्रुतः ॥१८॥
समायुक्तो महाराज रथः पार्थस्य धीमतः ।
वासुदेवश्च संयन्ता योद्धा चैव धनंजयः ॥ १९ ॥
गाण्डीवं च धनुर्दिव्यं ते चाश्वा वातरंहसः ।
अभेद्यं कवचं दिव्यमक्षय्यौ च महेषुधी ॥ २० ॥
अस्त्रग्रामश्च माहेन्द्रो रौद्रः कौबेर एव च ।
याम्यश्च वारुणश्चैव गदाश्चोग्रप्रदर्शनाः ॥ २१ ॥
वज्रादीनि च मुख्यानि नानाप्रहरणानि च ।
दानवानां सहस्राणि हिरण्यपुरवासिनाम् ॥ २२ ॥
हतान्येकरथेनाजौ कस्तस्य सदृशो रथः ।
एष हन्याद्धि संरम्भी बलवान्सत्यविक्रमः ॥ २३ ॥
तव सेनां महाबाहुः स्वां चैव परिपालयन् ।
अहं चैनं प्रत्युदियामाचार्यो वा धनंजयम् ॥ २४ ॥
न तृतीयोऽस्ति राजेन्द्र सेनयोरुभयोरपि ।
य एनं शरवर्षाणि वर्षन्तमुदियाद्रथी ॥ २५ ॥
जीमूत इव घर्मान्ते महावातसमीरितः ।
समायुक्तस्तु कौन्तेयो वासुदेवसहायवान् ।
तरुणश्च कृती चैव जीर्णावावामुभावपि ॥ २६ ॥

वैशंपायन उवाच—

एतच्छ्रुत्वा तु भीष्मस्य राज्ञां दध्वंसिरे तदा ।
काञ्चनाङ्गदिनः पीना भुजाश्चन्दनरूषिताः ॥२७॥
मनोभिः सह संवेगैः संस्मृत्य च पुरातनम् ।
सामर्थ्यं पाण्डवेयानां यथाप्रत्यक्षदर्शनात् ॥ २८ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकोनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

## सप्तत्यधिकशततमोऽध्यायः १७०

पाण्डवानामनीके रथातिरथसंख्यानम् ॥ १ ॥

भीष्म उवाच—

द्रौपदेया महाराज सर्वे पञ्च महारथाः ।
वैराटिरुत्तरश्चैव रथोदारो मतो मम ॥ १ ॥
अभिमन्युर्महाबाहू रथयूथपयूथपः ।
समः पार्थेन समरे वासुदेवेन चारिहा ॥ २ ॥
लघ्वस्त्रश्चित्रयोधी च मनस्वी च दृढव्रतः ।
संस्मरन्वै परिक्लेशं स्वपितुर्विक्रमिष्यति ॥ ३ ॥
सात्यकिर्माधवः शूरो रथयूथपयूथपः ।
एष वृष्णिप्रवीराणाममर्षी जितसाध्वसः ॥ ४ ॥
उत्तमौजास्तथा राजन् रथोदारो मतो मम ।
युधामन्युश्च विक्रान्तो रथोदारो मतो मम ॥ ५ ॥

---

[ सर्व० ] आयुधानि धनूंषि ॥ ११ ॥ जवे धावने लक्षाभिहरणे धावित्वा कस्यचिदग्रस्थितस्यानयने । भोज्ये भोजने । पांशुविकर्षणे पांशुभिर्बालानां युद्धे ॥ १२ ॥

[ नील० ] प्रत्युदियां युद्धे संमुखः स्याम् ॥ २४ ॥ दध्वंसिरे निगलिताः ॥ २७ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे ऊनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

[ अर्जु० ] लोहिताक्षः इत्यादि महापुरुषोपलक्षणम् ॥ १६ ॥ समायुक्तो विलक्षणसर्वोपकरणयुक्तः ॥ १९ ॥ प्रत्युदियाम् आगच्छन्तं प्रतिगच्छेयम् ॥ २४ ॥ आवामहं द्रोणश्च ॥ २६ ॥ मनोभिः सह संवेगैः क्रोधैः सह भुजावभ्रंशिरे अवलम्बिरे ॥ २८ ॥

इति श्रीम० मर्जुन० मुद्यो० एकोनसप्तत्यधिकशततमोऽध्यायः ॥१६९॥

[ सर्व० ] समायुक्तः उपकरणैर्दिव्यैः ॥१९॥ समायुक्तो रथादिभिः सज्जः॥२६॥सहसंवेगैः सहभयैरुपलक्षितानां२८

इति श्रीमहा० सर्वज्ञ० मूनसप्तत्यधिकशततमोऽध्यायः ॥ १६९ ॥

[ लक्षा० ] राज्ञां दध्वंसिरे तदेत्यत्र दध्वंसिरे ध्वंसु अधःपतन इतिधातोः ध्वस्ता अभूवन् । बलह्रासोऽभूदिति भावः ॥ २७ ॥

इति श्रीम० उ० वा० कृ० ल० ऊनसप्तत्यधिकशततमोऽध्यायः ॥१६९॥

[ नील० ] द्रौपदेया इति ॥ १ ॥

---

१६ ख. काक्वत् । १८ ख. भूतपूर्वो । १९ ख. यथापार्थस्य । २६ ख. वृद्धौ चावामुभा° । २८ ख. सहसोद्वेगैः । ख. पाण्डुपुत्राणां तथा प्रत्यक्षदर्शिनाम् ॥ अध्यायः ॥१६९॥ १ ख. रथो मम महान्मतः । २ ख. महाराज । ख. चाभवत् । ५ ख. महाराज रथो मम महान्मतः । ख. रथोदारो नरर्षभ ।

एतेषां बहुसाहस्रा रथा नागा हयास्तथा।
योत्स्यन्ते ते तनूंस्त्यक्त्वा कुन्तीपुत्रप्रियेप्सया ॥६॥
पाण्डवैः सह राजेन्द्र तव सेनासु भारत।
अग्निमारुतवद्राजन्नाह्वयन्तः परस्परम् ॥ ७ ॥
अजेयौ समरे वृद्धौ विराटद्रुपदौ तथा।
महारथौ महावीर्यौ मतौ मे पुरुषर्षभौ ॥ ८ ॥
वयोवृद्धावपि हि तौ क्षत्रधर्मपरायणौ।
यतिष्येते परं शक्त्या स्थितौ वीरगते पथि ॥ ९ ॥
संबन्धकेन राजेन्द्र तौ तु वीर्यबलान्वयात्।
आर्यवृत्तौ महेष्वासौ स्नेहवीर्यसितावुभौ ॥ १० ॥
कारणं प्राप्य तु नराः सर्व एव महाभुजाः।
शूरा वा कातरा वाऽपि भवंति कुरुपुङ्गव ॥ ११ ॥
एकायनगतावेतौ पार्थिवौ दृढधन्विनौ।
प्राणांस्त्यक्त्वा परं शक्त्या घट्टितारौ परंतप ॥१२॥
पृथगक्षौहिणीभ्यां तावुभौ संयति दारुणौ।
संबन्धिभावं रक्षन्तौ महत्कर्म करिष्यतः ॥ १३ ॥
लोकवीरौ महेष्वासौ त्यक्तात्मानौ च भारत।
प्रत्ययं परिरक्षन्तौ महत्कर्म करिष्यतः ॥ १४ ॥

इति श्रीमहाभारते उद्योपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

## एकसप्तत्यधिकशततमोऽध्यायः १७१

पाण्डवानामनीके रथातिरथसंख्यानम् ॥ १ ॥

भीष्म उवाच—
पञ्चालराजस्य सुतो राजन्परपुरंजयः।
शिखण्डी रथमुख्यो मे मतः पार्थस्य भारत ॥ १ ॥
एष योत्स्यति संग्रामे नाशयन्पूर्वसंस्थितम्।
परं यशो विप्रथयंस्तव सेनासु भारत ॥ २ ॥
एतस्य बहुलाः सेनाः पञ्चालाश्च प्रभद्रकाः।
तेनासौ रथवंशेन महत्कर्म करिष्यति ॥ ३ ॥
धृष्टद्युम्नश्च सेनानीः सर्वसेनासु भारत।
मतो मेऽतिरथो राजन्द्रोणशिष्यो महारथः ॥ ४ ॥
एष योत्स्यति संग्रामे सूदयन्वै परान् रणे।
भगवानिव संक्रुद्धः पिनाकी युगसंक्षये ॥ ५ ॥
एतस्य तद्रथानीकं कथयन्ति रणप्रियाः।
बहुत्वात्सागरप्रख्यं देवानामिव संयुगे ॥ ६ ॥
क्षत्रधर्मा तु राजेन्द्र मतो मेऽर्धरथो नृप।
धृष्टद्युम्नस्य तनयो बाल्यान्नातिकृतश्रमः ॥ ७ ॥
शिशुपालसुतो वीरश्चेदिराजो महारथः।
धृष्टकेतुर्महेष्वासः संबन्धी पाण्डवस्य ह ॥ ८ ॥
एष चेदिपतिः शूरः सह पुत्रेण भारत।
महारथानां सुकरं महत्कर्म करिष्यति ॥ ९ ॥
क्षत्रधर्मरतो मह्यं मतः परपुरंजयः।
क्षत्रदेवस्तु राजेन्द्र पाण्डवेषु रथोत्तमः ॥ १० ॥
जयन्तश्चामितौजाश्च सत्यजिच्च महारथः।
महारथा महात्मानः सर्वे पाञ्चालसत्तमाः ॥ ११ ॥

---

[ नील० ] वीरगते वीरैरनुसृते ॥ ९ ॥ सितौ बद्धौ ॥ १० ॥ एकायनगतौ मरणैकशरणौ घट्टितारौ घट्टनं संघट्टं करिष्यतः ॥ १२ ॥ त्यक्तात्मानौ त्यक्तदेहौ ॥१४॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

[ अर्जु० ] कारणं दैवमनुकूलं प्राप्य सर्व एव शूराः भवन्ति प्रतिकूलं प्राप्य कातराश्च ॥ ११ ॥ एकायनगतौ मरणैकशरणौ घट्टितारौ गन्तारौ ॥ १२ ॥ संयति युद्धे ॥ १३ ॥ प्रत्ययं प्रतिज्ञाम् ॥ १४ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

[ सर्व० ] एकायनगतावेकाग्रमानसौ पाण्डवान् प्रति ॥ १२ ॥ प्रत्ययं संप्रत्ययं पाण्डवानां [illegible]स्मिन् ॥ १४ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां सप्तत्यधिकशततमोऽध्यायः ॥ १७० ॥

[ नील० ] पञ्चालेति ॥ १ ॥ नाशयन् पूर्वसंस्थितं प्राचीनं स्त्रीत्वेनावस्थानमदर्शयन् पौरुषं दर्शयन्नित्यर्थः यद्वा पूर्वसंस्थितं पूर्वव्यूहसंस्थानं नाशयन् सैन्यानि विद्रावयन्नित्यर्थः ॥ २ ॥

[ अर्जु० ] पूर्वसंस्थितिं स्त्रीत्वप्रवादम्। यवीयसः कनिष्ठान् विप्रथयन् स्थातान् कुर्वन् ॥ २ ॥ आहितं प्रसिद्धम्।

इति श्रीम० मर्जु० मुद्यो० एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

---

१० ख. स्नेहपाशसितावुभौ ॥ अध्यायः ॥ १७० ॥ १ ख. मुख्योऽसौ। २ ख. संस्थितिम्। वरीयसोपि प्रथयं १० ख. नित्यं मतः।

योत्स्यन्ते समरे तात संरब्धा इव कुञ्जराः ।
अजो भोजश्च विक्रान्तौ पाण्डवार्थे महारथौ ॥१२॥
योत्स्येते बलिनौ शूरौ परं शक्त्या क्षयिष्यतः ।
शीघ्रास्त्राश्चित्रयोद्धारः कृतिनो दृढविक्रमाः ॥ १३ ॥
केकयाः पञ्च राजेन्द्र भ्रातरो दृढविक्रमाः ।
सर्वे चैव रथोदाराः सर्वे लोहितकध्वजाः ॥ १४ ॥
काशिकः सुकुमारश्च नीलो यश्चापरो नृप ।
सूर्यदत्तश्च शङ्खश्च मदिराश्वश्च नामतः ॥ १५ ॥
सर्व एव रथोदाराः सर्वे चाहवलक्षणाः ।
सर्वास्त्रविदुषः सर्वे महात्मानो मता मम ॥ १६ ॥
वार्धक्षेमिर्महाराज मतो मम महारथः ।
चित्रायुधश्च नृपतिर्मतो मे रथसत्तमः ॥ १७ ॥
स हि संग्रामशोभी च भक्तश्चापि किरीटिनः ।
चेकितानः सत्यधृतिः पाण्डवानां महारथौ ।
द्वाविमौ पुरुषव्याघ्रौ रथोदारौ मतौ मम ॥ १८ ॥
व्याघ्रदत्तश्च राजेन्द्र चन्द्रसेनश्च भारत ।
मतौ मम रथोदारौ पाण्डवानां न संशयः ॥ १९ ॥
सेनाबिन्दुश्च राजेन्द्र क्रोधहन्ता च नामतः ।
यः समो वासुदेवेन भीमसेनेन वा विभो ॥ २० ॥
स योत्स्यति हि विक्रम्य समरे तव सैनिकैः ।
मां च द्रोणं कृपं चैव यथा संमन्यते भवान् ॥ २१ ॥
तथा स समरश्लाघी मन्तव्यो रथसत्तमः ।
काश्यः परमशीघ्रास्त्रः श्लाघनीयो नरोत्तमः ॥२२॥
रथ एकगुणो मह्यं ज्ञेयः परपुरंजयः ।
अयं च युधि विक्रान्तो मन्तव्योऽष्टगुणो रथः २३
सत्यजित्समरश्लाघी द्रुपदस्यात्मजो युवा ।
गतः सोऽतिरथत्वं हि धृष्टद्युम्नेन संमितः ॥ २४ ॥
पाण्डवानां यशस्कामः परं कर्म करिष्यति ।
अनुरक्तश्च शूरश्च रथोयमपरो महान् ॥ २५ ॥
पाण्ड्यराजो महावीर्यः पाण्डवानां धुरंधरः ।
दृढधन्वा महेष्वासः पाण्डवानां महारथः ॥ २६ ॥
श्रेणिमान् कौरवश्रेष्ठ वसुदानश्च पार्थिवः ।
उभावेतावतिरथौ मतौ परपुरंजयौ ॥ २७ ॥

इति श्रीमहाभारते उद्योगपर्वणि एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

## द्विसप्तत्यधिकशततमोऽध्यायः १७२

पाण्डवानामनीके रथातिरथसंख्यानम् ॥ १ ॥ शिखण्डिनं पाण्डवांश्च न हन्यामिति भीष्मस्य संकल्पः ॥ २ ॥

**भीष्म उवाच—**

रोचमानो महाराज पाण्डवानां महारथः ।
योत्स्यतेऽमरवत्संख्ये परसैन्येषु भारत ॥ १ ॥
पुरुजित्कुन्तिभोजश्च महेष्वासो महाबलः ।
मातुलो भीमसेनस्य स च मेतिरथो मतः ॥ २ ॥
एष वीरो महेष्वासः कृती च निपुणश्च ह ।
चित्रयोधी च शक्तश्च मतो मे रथपुङ्गवः ॥ ३ ॥
स योत्स्यति हि विक्रम्य मघवानिव दानवैः ।
योधा ये चास्य विख्याताः सर्वे युद्धविशारदाः ॥४॥
भागिनेयकृते वीरः स करिष्यति सङ्गरे ।
सुमहत्कर्म पाण्डूनां स्थितः प्रियहिते रतः ॥ ५ ॥
भैमसेनिर्महाराज हैडिम्बो राक्षसेश्वरः ।
मतो मे बहुमायावी रथयूथपयूथपः ॥ ६ ॥
योत्स्यते समरे तात मायावी समरप्रियः ।
ये चास्य राक्षसा वीराः सचिवा वशवर्तिनः ॥ ७ ॥
एते चान्ये च बहवो नानाजनपदेश्वराः ।
समेताः पाण्डवस्यार्थे वासुदेवपुरोगमाः ॥ ८ ॥

[ सर्व० ] नाशयन् पूर्वसंस्थितिं पूर्वव्यूहसंस्थानं [ नन्दबलं ] यवीयसस्तरुणान यास्यति ॥ २ ॥

[ नील० ] क्षयिष्यतः सामर्थ्यं दर्शयिष्यतः । ऐश्वर्याथोंऽयं क्षयतिः ॥ १३ ॥ विदुषः विद्वांसः ॥ १६ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे एकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

[ सर्व० ] अविमृष्यतोऽसहतः क्रुद्धान् यथा संमन्यते सम्यङ्मन्यते ॥ २१ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायामेकसप्तत्यधिकशततमोऽध्यायः ॥ १७१ ॥

[ नील० ] रोचमान इति ॥ १ ॥ भीमसेनस्येति क्रोधोद्दीपनार्थं भीमसेनसाम्यार्थं वा विशेषणम् ॥ २ ॥

१२ ख. पाण्डवेषु । २३ ख. अष्टगुणो मम ॥ अध्यायः ॥ १७१ ॥ ३ ख. प्राज्ञश्च । ४ ख. दानवान् । ख. योधाश्चास्य परिख्याताः । ५ ख. प्रियहिते नृप ।

एते प्राधान्यतो राजन् पाण्डवस्य महात्मनः ।
रथाश्चातिरथाश्चैव ये चान्येऽर्धरथा नृप ॥ ९ ॥
नेष्यन्ति समरे सेनां भीमां यौधिष्ठिरीं नृप ।
महेन्द्रेणेव वीरेण पाल्यमानां किरीटिना ॥ १० ॥
तैरहं समरे वीर मायाविद्भिर्जयैषिभिः ।
योत्स्यामि जयमाकाङ्क्षन्नथवा निधनं रणे ॥ ११ ॥
वासुदेवं च पार्थं च चक्रगाण्डीवधारिणौ ।
सन्ध्यागताविवार्केन्दू समेष्येते रथोत्तमौ ॥ १२ ॥
ये चैव ते रथोदाराः पाण्डुपुत्रस्य सैनिकाः ।
सह सैन्यानहं तांश्च प्रतीयां रणमूर्धनि ॥ १३ ॥
एते रथाश्चातिरथाश्च तुभ्यं
यथाप्रधानं नृप कीर्तिता मया ।
तथाऽपरे येऽर्धरथाश्च केचि-
त्तथैव तेषामपि कौरवेन्द्र ॥ १४ ॥
अर्जुनं वासुदेवं च ये चान्ये तत्र पार्थिवाः ।
सर्वांस्तान्वारयिष्यामि यावद्द्रक्ष्यामि भारत ॥१५॥
पाञ्चाल्यं तु महाबाहो नाहं हन्यां शिखण्डिनम् ।
उद्यतेषुमथो दृष्ट्वा प्रतियुध्यन्तमाहवे ॥ १६ ॥
लोकस्तं वेद यदहं पितुः प्रियचिकीर्षया ।
प्राप्तं राज्यं परित्यज्य ब्रह्मचर्यव्रते स्थितः ॥१७॥
चित्राङ्गदं कौरवाणामाधिपत्येऽभ्यषेचयम् ।
विचित्रवीर्यं च शिशुं यौवराज्येऽभ्यषेचयम्॥१८॥
देवव्रतत्वं विज्ञाप्य पृथिवीं सर्वराजसु ।
नैव हन्यां स्त्रियं जातु न स्त्रीपूर्वं कदाचन ॥ १९ ॥
स हि स्त्रीपूर्वको राजन् शिखण्डी यदि ते श्रुतः ।
कन्या भूत्वा पुमान् जातो न योत्स्ये तेन भारत २०
सर्वांस्त्वन्यान्हनिष्यामि पार्थिवान् भरतर्षभ ।
यान्समेष्यामि समरे न तु कुन्तीसुतान्नृप ॥ २१ ॥

इति श्रीमहाभारते उद्योगपर्वणि द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

॥ रथातिरथसंख्यानपर्व समाप्तम् ॥

## ( अथाम्बोपाख्यानपर्व ९ )

### त्रिसप्तत्यधिकशततमोऽध्यायः १७३

शिखण्डिनोऽहनने निमित्तं वक्तुं भीष्मेणाम्बोपाख्यानप्रस्तावः ॥ १ ॥ भीष्मेण काशिराजपुरे स्वयंवरार्थं समागतं क्षत्रवृन्दं जित्वा तिसृणां कन्यानामाहरणम् ॥ २ ॥

दुर्योधन उवाच ।
किमर्थं भरतश्रेष्ठ नैव हन्याः शिखण्डिनम् ।
उद्यतेषुमथो दृष्ट्वा समरेष्वाततायिनम् ॥ १ ॥
पूर्वमुक्त्वा महाबाहो पञ्चालान्सहसोमकैः ।
हनिष्यामीति गाङ्गेय तन्मे ब्रूहि पितामह ॥ २ ॥

**भीष्म उवाच—**
शृणु दुर्योधन कथां सहैभिर्वसुधाधिपैः ।
यदर्थं युधि संप्रेक्ष्य नाहं हन्यां शिखण्डिनम् ॥३॥
महाराजो मम पिता शान्तनुर्लोकविश्रुतः ।
दिष्टान्तमाप धर्मात्मा समये भरतर्षभ ॥ ४ ॥
ततोऽहं भरतश्रेष्ठ प्रतिज्ञां परिपालयन् ।
चित्राङ्गदं भ्रातरं वै महाराज्येऽभ्यषेचयम् ॥ ५ ॥
तस्मिंश्च निधनं प्राप्ते सत्यवत्या मते स्थितः ।
विचित्रवीर्यं राजानमभ्यषिञ्चं यथाविधि ॥ ६ ॥
मयाऽभिषिक्तो राजेन्द्र यवीयानपि धर्मतः ।
विचित्रवीर्यो धर्मात्मा मामेव समुदैक्षत ॥ ७ ॥

[ नील० ] रथोत्तमो उत्तमोऽग्निदत्तो रथो ययोस्तौ । आहिताग्न्यादित्वादुत्तमपदस्य परनिपातः । यद्वा रथे रथ-युद्धे उत्तमौ उत्कृष्टतमौ ॥ १२ ॥ पाठान्तरे धक्ष्यामि शक्तिं धारयामि ॥ १५ ॥ देवव्रतत्वं ब्रह्मचारिव्रतवत्त्वं स्त्रीसंमुखे गमने हि दृष्टिमैथुनं स्यात् स्त्रीपूर्वदर्शने-ऽपि मनसा तदीयस्त्रीभावस्मरणेन विकारः स्यादिति भावः ॥ १९ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे द्विसप्तत्यधिकशततमोऽध्यायः ॥ १७२ ॥

[ नील० ] किमर्थमिति ॥ १ ॥ दिष्टान्तं मरणम् ॥४॥

१० माहेन्द्रेण च वीरेण ११ ख. जयैषिभिरमायिभिः । १२ ख. समेष्ये पुरुषोत्तमौ । १४ ख. तथा राजन् । १६ ख. उद्यतेषुमभिप्रेक्ष्य । १७ ख. ब्रह्मचर्ये धृतव्रतः । १८ ख. कौरवाणामहं राज्येऽभ्य० । १९ ख. कथंचन ॥ अध्यायः ॥ १७२ ॥ १ ख. न हन्यास्त्वं ।

तस्य दारक्रियां तात चिकीर्षुरहमप्युत ।
अनुरूपादिव कुलादित्येव च मनो दधे ॥ ८ ॥
तथाऽश्रौषं महाबाहो तिस्रः कन्याः स्वयंवराः ।
रूपेणाप्रतिमाः सर्वाः काशिराजसुतास्तदा ।
अम्बां चैवाम्बिकां चैव तथैवाम्बालिकामपि ॥९॥
राजानश्च समाहूताः पृथिव्यां भरतर्षभ ।
अम्बा ज्येष्ठाऽभवत्तासामम्बिका त्वथ मध्यमा ॥१०
अम्बालिका च राजेन्द्र राजकन्या यवीयसी ।
सोऽहमेकरथेनैव गतः काशीपतेः पुरीम् ॥ ११ ॥
अपश्यं ता महाबाहो तिस्रः कन्याः स्वलंकृताः ।
राज्ञश्चैव समाहूतान् पार्थिवान्पृथिवीपते ॥ १२ ॥
ततोऽहं तान्नृपान्सर्वानाहूय समरे स्थितान् ।
रथमारोपयांचक्रे कन्यास्ता भरतर्षभ ॥ १३ ॥
वीर्यशुल्काश्च ता ज्ञात्वा समारोप्य रथं तदा ।
अवोचं पार्थिवान्सर्वानहं तत्र समागतान् ।
भीष्मः शान्तनवः कन्या हरतीति पुनःपुनः ॥१४॥
ते यतध्वं परं शक्त्या सर्वे मोक्षाय पार्थिवाः ।
प्रसह्य हि हराम्येष मिषतां वो नरर्षभाः ॥ १५ ॥
ततस्ते पृथिवीपालाः समुत्पेतुरुदायुधाः ।
योगो योग इति क्रुद्धाः सारथीनभ्यचोदयन् ॥१६॥
ते रथैर्गजसंकाशैर्गजैश्च गजयोधिनः ।
पृष्ठैश्चाश्वैर्महीपालाः समुत्पेतुरुदायुधाः ॥ १७ ॥
ततस्ते मां महीपालाः सर्व एव विशांपते ।
रथव्रातेन महता सर्वतः पर्यवारयन् ॥ १८ ॥
तानहं शरवर्षेण समन्तात्पर्यवारयम् ।
सर्वान्नृपांश्चाप्यजयं देवराडिव दानवान् ॥ १९ ॥
अपातयं शरैर्दीप्तैः प्रहसन् भरतर्षभ ।
तेषामापततां चित्रान् ध्वजान् हेमपरिष्कृतान् ॥२०॥
एकैकेन हि बाणेन भूमौ पातितवानहम् ।
हयांस्तेषां गजांश्चैव सारथींश्चाप्यहं रणे ॥ २१ ॥
ते निवृत्ताश्च भग्नाश्च दृष्ट्वा तल्लाघवं मम ।
अथाहं हास्तिनपुरमायां जित्वा महीक्षितः ॥ २२ ॥
ततोऽहं ताश्च कन्या वै भ्रातुरर्थाय भारत ।
तच्च कर्म महाबाहो सत्यवत्यै न्यवेदयम् ॥ २३ ॥

इति श्रीमहाभारते उद्योगपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

## चतुःसप्तत्यधिकशततमोऽध्यायः १७४

कन्यानां विचित्रवीर्येण सह विवाह उपक्रान्ते ज्येष्ठयाऽम्बया मया मनसा शाल्वो वृतस्तेन चाहं रहसि वृतेति तं प्रति मां प्रेषयेति भीष्मप्रार्थना ॥ १ ॥

**भीष्म उवाच—**

ततोऽहं भरतश्रेष्ठ मातरं वीरमातरम् ।
अभिगम्योपसंगृह्य दाशेयीमिदमब्रवम् ॥ १ ॥
इमाः काशिपतेः कन्या मया निर्जित्य पार्थिवान् ।
विचित्रवीर्यस्य कृते वीर्यशुल्का हृता इति ॥ २ ॥

---

[ अर्जु० ] 'किमर्थं भरतश्रेष्ठ नैव हन्याः शिखण्डिनम् ।' इत्यादेः दृष्टापि समये स्थितमित्यन्तस्य भीष्मस्य मर्यादामनतिक्रान्तः प्रतापातिशयस्तात्पर्यार्थः ॥ १ ॥ सोमकैः पाञ्चालैः ॥ २ ॥ दिष्टान्तं मरणम् ॥ ४ ॥

[ नील० ] मिषतां पश्यताम् अनादरे षष्ठी ॥ १५ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

[ अर्जु० ] अनुरूपात् सदृशात् । इवशब्दो वाक्यालंकारे ॥ ८ ॥ राज्ञः क्षत्रियान् समावृत्तान् समेतान् पार्थिवान् पृथिव्या ईश्वरान् ॥ १२ ॥ वीर्यमेव शुल्कं मूल्यं यासाम् ॥ १४ ॥ ते यूयम् ॥ १५ ॥ योगः संनहनं, वीप्सा त्वरायाम् ॥ १६ ॥ पृष्ठैरग्रगामिभिः वेगवद्भिः इत्यर्थः । पृष्ठैरितिपाठे पृष्ठेन वहनक्षमैः । उदायुधा उद्गतायुधाः ॥ १७ ॥ रथव्रातेन रथानां संघेन ॥ १८ ॥ अहनं हतवानस्मि ॥ १९ ॥ आयामगच्छम् ॥ २२ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

[ सर्व० ] अनुरूपात् अनुकूलादिव वरसदृशकुलस्याभावात् ॥ ८ ॥ योगः सन्नहनम् ॥ १६ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां त्रिसप्तत्यधिकशततमोऽध्यायः ॥ १७३ ॥

[नील०] ततोऽहमिति मातरमुपसंगृह्य पादयोः पतित्वा ॥ १ ॥ वीर्यशुल्काः वीर्यमेव शुल्कं मौल्यं यासां ताः ॥ २ ॥

[ अर्जु० ] उपसंगृह्य चरणाविति शेषः । दाशेयीं कैवर्त्तसुताम् ॥ १ ॥

---

९ ख. स्वयंवरे । १५ ख. प्रसह्याहं नयाम्येष । १६ ख. सारथींश्चाप्यनोदयन् ॥ अध्यायः ॥ १७३ ॥ २ ख. वीर्यशुल्का उपार्जिताः ।

ततो मूर्धन्युपाघ्राय पर्यश्रुनयना नृप ।
आह सत्यवती हृष्टा दिष्ट्या पुत्र जितं त्वया ॥३॥
सत्यवत्यास्त्वनुमते विवाहे समुपस्थिते ।
उवाच वाक्यं सव्रीडा ज्येष्ठा काशिपतेः सुता ॥४॥
भीष्म त्वमसि धर्मज्ञः सर्वशास्त्रविशारदः ।
श्रुत्वा च वचनं धर्म्यं मह्यं कर्तुमिहार्हसि ॥ ५ ॥
मया शाल्वपतिः पूर्वं मनसाभिवृतो वरः ।
तेन चास्मि वृता पूर्वं रहस्यविदिते पितुः ॥ ६ ॥
कथं मामन्यकामां त्वं राजधर्ममतीत्य वै ।
वासयेथा गृहे भीष्म कौरवः सन्विशेषतः ॥ ७ ॥
एतद्बुद्ध्या विनिश्चित्य मनसा भरतर्षभ ।
यत्क्षमं ते महाबाहो तदिहारब्धुमर्हसि ॥ ८ ॥
स मां प्रतीक्षते व्यक्तं शाल्वराजो विशांपते ।
तस्मान्मां त्वं कुरुश्रेष्ठ समनुज्ञातुमर्हसि ॥ ९ ॥
कृपां कुरु महाबाहो मयि धर्मभृतां वर ।
त्वं हि सत्यव्रतो वीर पृथिव्यामिति नः श्रुतम् १०

इति श्रीमहाभारते उद्योगपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

## पञ्चसप्तत्यधिकशततमोऽध्यायः १७५

भीष्मेण सर्वानुमत्या वृद्धादिभिर्गुप्तायास्तस्याः शाल्वाय प्रेषणं भीष्मभयाच्च शाल्वेन तस्याः परित्यागः ॥ १ ॥ तया स्वदुःखस्य भीष्मं हेतुं निश्चित्य तद्वधाय तपश्चिकीर्षया तपोवनं गत्वा प्राव्राज्यदीक्षार्थं तापसप्रार्थनम् ॥ २ ॥

भीष्म उवाच—
ततोऽहं समनुज्ञाप्य कालीं गन्धवतीं तदा ।
मन्त्रिणश्चर्त्विजश्चैव तथैव च पुरोहितान् ॥ १ ॥
समनुज्ञासिषं कन्यामम्बां ज्येष्ठां नराधिप ।
अनुज्ञाता ययौ सा तु कन्या शाल्वपतेः पुरम् ॥२॥
वृद्धैर्द्विजातिभिर्गुप्ता धात्र्या चानुगता तदा ।
अतीत्य च तमध्वानमासाद्य नृपतिं तथा ॥ ३ ॥
सा तमासाद्य राजानं शाल्वं वचनमब्रवीत् ।
आगताऽहं महाबाहो त्वामुद्दिश्य महामते ॥ ४ ॥
तामब्रवीच्छाल्वपतिः स्मयन्निव विशांपते ।
त्वयाऽन्यपूर्वया नाहं भार्यार्थी वरवर्णिनि ॥ ५ ॥
गच्छ भद्रे पुनस्तत्र सकाशं भीष्मकस्य वै ।
नाहमिच्छामि भीष्मेण गृहीतां त्वां प्रसह्य वै ॥६॥
त्वं हि भीष्मेण निर्जित्य नीता प्रीतिमती तदा ।
परामृश्य महायुद्धे निर्जित्य पृथिवीपतीन् ॥ ७ ॥
नाहं त्वय्यन्यपूर्वायां भार्यार्थी वरवर्णिनि ।
कथमस्मद्विधो राजा परपूर्वां प्रवेशयेत् ॥ ८ ॥
नारीं विदितविज्ञानः परेषां धर्ममादिशन् ।
यथेष्टं गम्यतां भद्रे मा त्वां कालोऽत्यगादयम् ॥९॥
अम्बा तमब्रवीद्राजन्ननङ्गशरपीडिता ।
नैवं वद महीपाल नैतदेवं कथंचन ॥ १० ॥
नास्मि प्रीतिमती नीता भीष्मेणामित्रकर्षण ।
बलान्नीतास्मि रुदती विद्राव्य पृथिवीपतीन् ॥११॥
भजस्व मां शाल्वपते भक्तां बालामनागसम् ।
भक्तानां हि परित्यागो न धर्मेषु प्रशस्यते ॥१२॥
साऽहमामन्त्र्य गाङ्गेयं समरेष्वनिवर्तिनम् ।
अनुज्ञाता च तेनैव ततोऽहं भृशमागता ॥ १३ ॥
न स भीष्मो महाबाहुर्मामिच्छति विशांपते ।
भातृहेतोः समारम्भो भीष्मस्येति श्रुतं मया ॥१४॥

---

[ सर्व० ] [पाष्र्ण्योः पार्श्वयोः] उपसंगृह्याभिवाद्य॥१॥
इति श्रीम० उद्यो० सर्व० चतुःसप्तत्यधिकशततमोऽध्यायः ॥१७४॥
[नील०] मह्यं मम ॥५॥ सत्यव्रतो नित्यं ब्रह्मचारी१०
इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥
[ अर्जु० ] रहसि एकान्ते पितुरविदिते ॥ ६ ॥ क्षेममुचितम् ॥ ८ ॥
इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि चतुःसप्तत्यधिकशततमोऽध्यायः ॥ १७४ ॥

[ नील० ] तत इति ॥ १ ॥ समनुज्ञासिषं समनुज्ञातवान् अडभवं आर्षः ॥ २ ॥ परामृश्य हस्ते धृत्वा नीता ॥ ७ ॥
[ अर्जु० ] समनुज्ञासिषमनुज्ञातवानस्मि ॥ २ ॥
[ लक्षा० ] त्वयाऽन्यपूर्वया नाहमित्यत्र अन्यः पूर्वो यस्याः सा अन्यपूर्वा तया त्वया ॥ ५ ॥ परामृष्टा महायुद्धे इत्यत्र परेण भीष्मेण आमृष्टा स्पृष्टा ॥ ७ ॥

---

१० ख. इति मे मतिः ॥ अध्यायः ॥ १७४ ॥ ४ खं. महीपते । ५ ख महाद्युते । ६ ग. तस्य सकाशं भारतस्य । १० ख. मैवं वादीर्मं° । १३ ख. तथैवं वशमागता । १४ ख. महाबुद्धिर्मां° ।

भगिन्यौ मम ये नीते अम्बिकाऽम्बालिके नृप ।
प्रादाद्विचित्रवीर्याय गाङ्गेयो हि यवीयसे ॥ १५ ॥
यथा शाल्वपते नान्यं वरं ध्यामि कथंचन ।
त्वामृते पुरुषव्याघ्र तथा मूर्धानमालभे ॥ १६ ॥
न चान्यपूर्वा राजेन्द्र त्वामहं समुपस्थिता ।
सत्यं ब्रवीमि शाल्वैतत्सत्येनात्मानमालभे ॥ १७ ॥
भजस्व मां विशालाक्ष स्वयं कन्यामुपस्थिताम् ।
अनन्यपूर्वां राजेन्द्र त्वत्प्रसादाभिकांक्षिणीम् ॥ १८ ॥
तामेवं भाषमाणां तु शाल्वः काशिपतेः सुताम् ।
अत्यजद्भरतश्रेष्ठ जीर्णां त्वचमिवोरगः ॥ १९ ॥
एवं बहुविधैर्वाक्यैर्याच्यमानस्तया नृपः ।
नाश्रद्दधच्छाल्वपतिः कन्यायां भरतर्षभ ॥ २० ॥
ततः सा मन्युनाविष्टा ज्येष्ठा काशिपतेः सुता ।
अब्रवीत्साश्रुनयना बाष्पविप्लुतया गिरा ॥ २१ ॥
त्वया त्यक्ता गमिष्यामि यत्र तत्र विशांपते ।
तत्र मे गतयः सन्तु सन्तः सत्यं यथा ध्रुवम् ॥ २२ ॥
एवं तां भाषमाणां तु कन्यां शाल्वपतिस्तदा ।
परितत्याज कौरव्य करुणं परिदेवतीम् ॥ २३ ॥
गच्छगच्छेति तां शाल्वः पुनःपुनरभाषत ।
बिभेमि भीष्मात्सुश्रोणि त्वं च भीष्मपरिग्रहः ॥ २४ ॥
एवमुक्ता तु सा तेन शाल्वेनादीर्घदर्शिना ।
निश्चक्राम पुरादीना रुदती कुररी यथा ॥ २५ ॥

**भीष्म उवाच—**

निष्क्रामन्ती तु नगराच्चिन्तयामास दुःखिता ।
पृथिव्यां नास्ति युवतिर्विषमस्थतरा मया ॥ २६ ॥
बन्धुभिर्विप्रहीणाऽस्मि शाल्वेन च निराकृता ।
न च शक्यं पुनर्गन्तुं मया वारणसाह्वयम् ॥ २७ ॥
अनुज्ञाता तु भीष्मेण शाल्वमुद्दिश्य कारणम् ।
किं नु गर्हाम्यथात्मानमथ भीष्मं दुरासदम् ॥ २८ ॥
अथवा पितरं मूढं यो मेऽकार्षीत्स्वयंवरम् ।
मयाऽयं स्वकृतो दोषो याऽहं भीष्मरथात्तदा ॥ २९ ॥
प्रवृत्ते दारुणे युद्धे शाल्वार्थं नापतं पुरा ।
तस्येयं फलनिर्वृत्तिर्यदापन्नाऽस्मि मूढवत् ॥ ३० ॥
धिग्भीष्मं धिक् मे मन्दं पितरं मूढचेतसम् ।
येनाहं वीर्यशुल्केन पण्यस्त्रीव प्रवेरिता ॥ ३१ ॥
धिङ्मां धिक् शाल्वराजानं धिग्धातारमथापि वा ।
येषां दुर्नीतभावेन प्राप्ताऽस्म्यापदमुत्तमाम् ॥ ३२ ॥
सर्वथा भागधेयानि स्वानि प्राप्नोति मानवः ।
अनयस्यास्य तु मुखं भीष्मः शान्तनवो मम ॥ ३३ ॥
सा भीष्मे प्रतिकर्तव्यमहं पश्यामि सांप्रतम् ।
तपसा वा युधा वापि दुःखहेतुः स मे मतः ॥ ३४ ॥
को नु भीष्मं युधा जेतुमुत्सहेत महीपतिः ।
एवं सा परिनिश्चित्य जगाम नगराद्बहिः ॥ ३५ ॥
आश्रमं पुण्यशीलानां तापसानां महात्मनाम् ।
ततस्तामवसद्रात्रिं तापसैः परिवारिता ॥ ३६ ॥
आचख्यौ च यथावृत्तं सर्वमात्मनि भारत ।
विस्तरेण महाबाहो निखिलेन शुचिस्मिता ।
हरणं च विसर्गं च शाल्वेन च विसर्जनम् ॥ ३७ ॥
ततस्तत्र महानासीद्ब्राह्मणः संशितव्रतः ।
शैखावत्यस्तपोवृद्धः शास्त्रे चारण्यके गुरुः ॥ ३८ ॥
आर्तां तामाह स मुनिः शैखावत्यो महातपाः ।
निःश्वसन्तीं सतीं बालां दुःखशोकपरायणाम् ३९

---

[नील०] सन्तः साधवः गतयः रक्षितारः सन्तु ॥ २२ ॥ करुणं दीनं यथा स्यात्तथा परिदेवतीं शोचन्तीम् ॥ २३ ॥ अदीर्घदर्शिनेति शाल्वस्याधर्मः सूचितः ॥ २५ ॥ वारणेन हस्तिना समानाह्वयं समानाख्यं हस्तिनापुरम् ॥ २७ ॥ शैखावत्यः शिखावान् वह्निस्तत्साध्यानि श्रौतस्मार्तकर्माणि शैखावतानि तेषु साधुः शैखावत्यः कर्मणि निष्णातः आरण्यके उपनिषदि गुरुः ब्रह्मविदित्यर्थः ॥ ३८ ॥

[अर्जु०] ध्यामि ध्यायामि । आलभे स्पृशामि ॥ १६ ॥ यथा ममेदं सत्यं व्रतं तथा सन्तः सन्तु गतयो मम ॥ २२ ॥ अदीर्घदर्शिना अपण्डितेन ॥ २५ ॥ पण्यस्त्री वेश्या प्रवेरिता प्रक्षिप्ता ॥ ३१ ॥ अभयस्य दुःखस्य मुखं प्रधानम् ॥ ३३ ॥ विसर्गं त्यागम् ॥ ३७ ॥ शैखावत्यो नाम्ना, आरण्यके उपनिषदि ॥ ३८ ॥

[सर्व०] आरण्यके उपनिषदि ॥ ३८ ॥

[लक्षा०] प्रवृत्ते वैशसे युद्ध इत्यत्र विशसनं हिंसा तत्संबन्धिनि वैशसे ॥ ३० ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

---

१५ ख. ये तत्र । २० ख. तयानघः । ख. कन्यया । २१ ख. बाष्पविह्वलया । २३ ख. एतत्संभाषमाणां तु नृशंसः शाल्वराट् तदा । पर्यत्यजत । २९ ख. आहोस्विदपि° । ३० ख. वैशसे युद्धे । ३१ ज. प्रवेशिता ञ. प्रचोदिता ।

एवंगते तु किं भद्रे शक्यं कर्तुं तपस्विभिः ।
आश्रमस्थैर्महाभागे तपोयुक्तैर्महात्मभिः ॥ ४० ॥
सा त्वेनमब्रवीद्राजन् क्रियतां मदनुग्रहः ।
प्राव्राज्यमहमिच्छामि तपस्तप्स्यामि दुश्चरम् ॥४१॥
मयैव यानि कर्माणि पूर्वदेहे तु मूढया ।
कृतानि नूनं पापानि तेषामेतत्फलं ध्रुवम् ॥ ४२ ॥
नोत्सहे तु पुनर्गन्तुं स्वजनं प्रति तापसाः ।
प्रत्याख्याता निरानन्दा शाल्वेन च निराकृता॥४३॥
उपदिष्टमिहेच्छामि तापस्यं वीतकल्मषाः ।
युष्माभिर्देवसंकाशैः कृपा भवतु वो मयि ॥ ४४ ॥
स तामाश्वासयत्कन्यां दृष्टान्तागमहेतुभिः ।
सांत्वयामास कार्यं च प्रतिजज्ञे द्विजैः सह ॥ ४५ ॥

इति श्रीमहाभारते उद्योगपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

## षट्सप्तत्यधिकशततमोऽध्यायः १७६

तां पितृगृहगमनमुपदिशत्सु तापसेषु राजर्षेर्होत्रवाहनस्य तत्रागमनं तेन च तां दौहित्रीं परिज्ञायाश्वास्य जामदग्न्यं रामं गच्छेत्युपदेशः । अत्रान्तरे रामशिष्यस्याकृतव्रणस्य तत्र प्राप्तिः । तं प्रति होत्रवाहनेन तद्वृत्तान्तकथनम् ॥ १ ॥

**भीष्म उवाच—**

ततस्ते तापसाः सर्वे कार्यवन्तोऽभवंस्तदा ।
तां कन्यां चिन्तयन्तस्ते किं कार्यमिति धर्मिणः ॥१॥
केचिदाहुः पितुर्वेश्म नीयतामिति तापसाः ।
केचिदस्मदुपालम्भे मतिं चक्रुर्हि तापसाः ॥ २ ॥
केचिच्छाल्वपतिं गत्वा नियोज्यमिति मेनिरे ।
नेति केचिद्व्यवस्यन्ति प्रत्याख्याता हि तेन सा ॥३॥
एवंगते तु किं शक्यं भद्रे कर्तुं मनीषिभिः ।
पुनरूचुश्च तां सर्वे तापसाः संशितव्रताः ॥ ४ ॥
अलं प्रव्रजितेनेह भद्रे शृणु हितं वचः ।
इतो गच्छस्व भद्रं ते पितुरेव निवेशनम् ॥ ५ ॥
प्रतिपत्स्यति राजा स पिता ते यदनन्तरम् ।
तत्र वत्स्यसि कल्याणि सुखं सर्वगुणान्विता ॥६॥
न च तेऽन्या गतिर्न्याय्या भवेद्भद्रे यथा पिता ।
पतिर्वापि गतिर्नार्याः पिता वा वरवर्णिनि ॥ ७ ॥
गतिः पतिः समस्थाया विषमे च पिता गतिः ।
प्रव्रज्या हि सुदुःखेयं सुकुमार्या विशेषतः ॥ ८ ॥
राजपुत्र्याः प्रकृत्या च कुमार्यास्तव भामिनि ।
भद्रे दोषा हि विद्यन्ते बहवो वरवर्णिनि ॥ ९ ॥
आश्रमे वै वसन्त्यास्ते न भवेयुः पितुर्गृहे ।
ततस्त्वन्येऽब्रुवन्वाक्यं तापसास्तां तपस्विनीम् ॥१०॥
त्वामिहैकाकिनीं दृष्ट्वा निर्जने गहने वने ।
प्रार्थयिष्यन्ति राजानस्तस्मान्मैवं मनः कृथाः ॥११॥

**अम्बोवाच—**

न शक्यं काशिनगरं पुनर्गन्तुं पितुर्गृहान् ।
अवज्ञाता भविष्यामि बान्धवानां न संशयः ॥१२॥
उषिताऽस्मि तथा बाल्ये पितुर्वेश्मनि तापसाः ।
नाहं गमिष्ये भद्रं वस्तत्र यत्र पिता मम ।
तपस्तप्तुमभीप्सामि तापसैः परिरक्षिता ॥ १३ ॥

---

[ नील० ] एवं गते ज्ञाते कर्तुं किमिति शेषः ॥४०॥ प्राव्राज्यं प्रव्रज्या संन्यासस्तत्रोचितं कर्म प्राव्राज्यम् ॥४१॥ तापस्यं तपसे हितं धर्मजातम् ॥ ४४ ॥ दृष्टान्तो लौकिकोदाहरणमागमो वेदः हेतुर्युक्तिस्तैः प्रारब्धकर्मभोगस्यापरिहार्यत्वं ज्ञात्वा समाश्वस्ता भवेत्युक्तेत्यर्थः ॥ ४५ ॥

इति श्रीनैल० उद्यो० भा० पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

[ अर्जु० ] प्रव्राजयितुमिति स्वार्थे णिच् ॥ ४१ ॥ दृष्टान्तागमहेतुभिः दृष्टान्तः प्रत्यक्षम्, आगमः शास्त्रं, हेतुरनुमानं तैः ॥ ४५ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

[ सर्व० ] प्रव्राजयितुंवनवासं ग्राहयितुम् आत्मानम् ॥ ४१ ॥ कार्यमनुरूपं कर्तुं प्रतिजज्ञे ॥ ४५ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतव्याख्यायां पञ्चसप्तत्यधिकशततमोऽध्यायः ॥ १७५ ॥

[ नील० ] तत इति ॥ १ ॥ ये दोषा विद्यन्ते आश्रमे प्रव्रज्यायां ते दोषाः पितुर्गृहे न भवेयुः सुन्दरीं तरुणीं च त्वां दृष्ट्वा मुनयो वा मोहं प्राप्स्यन्ति त्वं वा धर्मात् स्खलिष्यसीति भावः ॥ १० ॥

[ अर्जु० ] कार्यवन्तः [ तस्मात् ] कार्यार्थं चिन्तावन्त इत्यर्थः ॥ १ ॥ प्रव्रजितेन प्रव्रज्यया ॥ ५ ॥ गतिराश्रयः ॥ ७ ॥ प्रकृत्या स्वभावेन ॥ ९ ॥

---

४१ख. प्रव्राजितुमिहेच्छामि । तपस्तप्स्ये सुपुष्कलम् ॥ अध्यायः॥१७५॥
१ ख. मितिकर्मणः । २ ख. चक्रुर्द्विजोत्तमाः । ३ ख. तेसर्वे । १० ख. ब्राह्मणास्तां । ११ ख. राजेन्द्राः । १२ ख. नशक्ष्ये ।

यथा परेऽपि मे लोके न स्यादेवं महात्ययः ।
दौर्भाग्यं तापसश्रेष्ठास्तस्मात्तप्स्याम्यहं तपः ॥१४॥

भीष्म उवाच—

इत्येवं तेषु विप्रेषु चिन्तयत्सु यथातथम् ।
राजर्षिस्तद्वनं प्राप्तस्तपस्वी होत्रवाहनः ॥ १५ ॥
ततस्ते तापसाः सर्वे पूजयन्ति स्म तं नृपम् ।
पूजाभिः स्वागताद्याभिरासनेनोदकेन च ॥ १६ ॥
तस्योपविष्टस्य सतो विश्रान्तस्योपशृण्वतः ।
पुनरेव कथां चक्रुः कन्यां प्रति वनौकसः ॥१७॥
अम्बायास्तां कथां श्रुत्वा काशिराज्ञश्च भारत ।
राजर्षिः स महातेजा बभूवोद्विग्नमानसः ॥ १८ ॥
तां तथावादिनीं श्रुत्वा दृष्ट्वा च स महातपाः ।
राजर्षिः कृपयाऽऽविष्टो महात्मा होत्रवाहनः ॥१९॥
स वेपमान उत्थाय मातुस्तस्याः पिता तदा ।
तां कन्यामङ्कमारोप्य पर्यश्वासयत प्रभो ॥ २० ॥
स तामपृच्छत्कात्स्न्येन व्यसनोत्पत्तिमादितः ।
सा च तस्मै यथावृत्तं विस्तरेण न्यवेदयत् ॥२१॥
ततः स राजर्षिरभूद्दुःखशोकसमन्वितः ।
कार्यं च प्रतिपेदे तन्मनसा सुमहातपाः ॥ २२ ॥
अब्रवीद्वेपमानश्च कन्यामार्तां सुदुःखितः ।
मा गाः पितुर्गृहं भद्रे मातुस्ते जनको ह्यहम् ॥२३॥
दुःखं छिन्द्यामहं ते वै मयि वर्तस्व पुत्रिके ।
पर्याप्तं ते मनो वत्से यदेवं परिशुष्यसि ॥ २४ ॥
गच्छ मद्वचनाद्रामं जामदग्न्यं तपस्विनम् ।
रामस्ते सुमहद्दुःखं शोकं चैवापनेष्यति ॥ २५ ॥
हनिष्यति रणे भीष्मं न करिष्यति चेद्वचः ।
तं गच्छ भार्गवश्रेष्ठं कालाग्निसमतेजसम् ॥ २६ ॥
प्रतिष्ठापयिता स त्वां समे पथि महातपाः ।
ततस्तु सुस्वरं बाष्पमुत्सृजन्ती पुनः पुनः ॥ २७ ॥
अब्रवीत्पितरं मातुः सा तदा होत्रवाहनम् ।
अभिवादयित्वा शिरसा गमिष्ये तव शासनात् ॥२८॥
अपि नामाद्य पश्येयमार्यं तं लोकविश्रुतम् ।
कथं च तीव्रं दुखं मे नाशयिष्यति भार्गवः ।
एतदिच्छाम्यहं ज्ञातुं यथा यास्यामि तत्र वै ॥२९॥

होत्रवाहन उवाच—

रामं द्रक्ष्यसि भद्रे त्वं जामदग्न्यं महावने ।
उग्रे तपसि वर्तन्तं सत्यसन्धं महाबलम् ॥ ३० ॥
महेन्द्रं वै गिरिश्रेष्ठं रामो नित्यमुपास्ति ह ।
ऋषयो वेदविद्वांसो गन्धर्वाप्सरसस्तथा ॥ ३१ ॥
तत्र गच्छस्व भद्रं ते ब्रूयाश्चैनं वचो मम ।
अभिवाद्य च तं मूर्ध्ना तपोवृद्धं दृढव्रतम् ॥ ३२ ॥
ब्रूयाश्चैनं पुनर्भद्रे यत्ते कार्यं मनीषितम् ।
मयि संकीर्तिते रामः सर्वं तत्ते करिष्यति ॥ ३३ ॥
मम रामः सखा वत्से प्रीतियुक्तः सुहृच्च मे ।
जमदग्निसुतो वीरः सर्वशस्त्रभृतां वरः ॥ ३४ ॥
एवं ब्रुवति कन्यां तु पार्थिवे होत्रवाहने ।
अकृतव्रणः प्रादुरासीद्रामस्यानुचरः प्रियः ॥ ३५ ॥
ततस्ते मुनयः सर्वे समुत्तस्थुः सहस्रशः ।
स च राजा वयोवृद्धः सृंजयो होत्रवाहनः ॥३६॥
ततो दृष्ट्वा कृतातिथ्यमन्योन्यं ते वनौकसः ।
सहिता भरतश्रेष्ठ निषेदुः परिवार्य तम् ॥ ३७ ॥
ततस्ते कथयामासुः कथास्तास्ता मनोरमाः ।
धन्या दिव्याश्च राजेन्द्र प्रीतिहर्षमुदा युताः ॥३८॥

---

[ लक्षा० ] केचिदस्मदुपालम्भे इत्यत्र अस्मदुपालम्भे कन्यापहर्तॄणामस्माकं हिंसने ॥ २ ॥ उचिता ह्यन्यथा बाल्य इत्यत्र अन्यथा भर्तारं विना ॥ १३ ॥ न स्यादेवं महात्ययमित्यत्र महानत्ययो हानिर्यस्य तत् ॥ १४ ॥

इति श्रीमहाभारते उद्योगपर्वणि वादिराजतीर्थकृतलक्षालंकारे षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

[ नील० ] महात्ययः सुखनाशः । मह उद्धव उत्सव इति कोशः ॥ १४ ॥

[ अर्जु० ] महात्ययं महात्ययकल्पं दुःखम् ॥ १४ ॥

समे पथि शोभने मार्गे ॥ २७ ॥ मध्ये मध्ये भारत भरतर्षभेत्यादि भीष्मेण दुर्योधनस्य संबोधनं कथान्तरव्यवधानेऽपि, स्थानान्तरे च तथैव दर्शनात् ॥ ३७ ॥

[ सर्व० ] परलोके जन्मान्तरे ॥ १४ ॥ पर्याप्तमतिशयेन तव यन्मनः शुष्यति शोषयति दुःखम् ॥ २४ ॥ प्रीत्या सुखेन हर्ष उत्सेकस्तज्जया मुदा युताः ॥ ३८ ॥

इति श्रीमहाभारतोद्योगपर्वणि सर्वज्ञनारायणकृतटीकायां षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

---

१४ ख. दौर्भाग्यात् । १९ ख. भया । २० ख. पर्यश्वा० । २३ कन्यां सोतीव । २६ ख. हनिष्यति स वै । २९ ख. श्रोतुमथ । ३२ ख. अभिवाद्यपूर्वं शिरसा । ३८ ख. कान्ता दिव्या ।

ततः कथान्ते राजर्षिर्महात्मा होत्रवाहनः ।
रामं श्रेष्ठं महर्षीणामपृच्छदकृतव्रणम् ॥ ३९ ॥
क्व संप्रति महाबाहो जामदग्न्यः प्रतापवान् ।
अकृतव्रण शक्यो वै द्रष्टुं वेदविदां वर ॥ ४० ॥

**अकृतव्रण उवाच—**

भवन्तमेव सततं रामः कीर्त्तयति प्रभो ।
सृंजयो मे प्रियसखो राजर्षिरिति पार्थिव ॥४१॥
इह रामः प्रभाते श्वो भवितेति मतिर्मम ।
द्रष्टाऽस्येनमिहायान्तं तव दर्शनकाङ्क्षया ॥ ४२ ॥
इयं च कन्या राजर्षे किमर्थं वनमागता ।
कस्यचेयं तव च का भवतीच्छामि वेदितुम् ॥४३॥

**होत्रवाहन उवाच—**

दौहित्रीयं मम विभो काशिराजसुता प्रिया ।
ज्येष्ठा स्वयंवरे तस्थौ भगिनीभ्यां सहानघ ॥४४॥
इयमम्बेति विख्याता ज्येष्ठा काशिपतेः सुता ।
अम्बिकाम्बालिके कन्ये कनीयस्यौ तपोधन ॥४५॥
समेतं पार्थिवं क्षत्रं काशिपुर्यां ततोऽभवत् ।
कन्यानिमित्तं विप्रर्षे तत्रासीदुत्सवो महान् ॥४६॥
ततः किल महावीर्यो भीष्मः शान्तनवो नृपान् ।
अधिक्षिप्य महातेजास्तिस्रः कन्या जहार ताः ॥४७॥
निर्जित्य पृथिवीपालानथ भीष्मो गजाह्वयम् ।
आजगाम विशुद्धात्मा कन्याभिः सह भारत ॥४८॥
सत्यवत्यै निवेद्याथ विवाहं समनन्तरम् ।
भ्रातुर्विचित्रवीर्यस्य समाज्ञापयत प्रभुः ॥ ४९ ॥
तं तु वैवाहिकं दृष्ट्वा कन्येयं समुपार्जितम् ।
अब्रवीत्तत्र गाङ्गेयं मन्त्रिमध्ये द्विजर्षभ ॥ ५० ॥
मया शाल्वपतिर्वीरो मनसाऽभिवृतः पतिः ।
न मामर्हसि धर्मज्ञ दातुं भ्रात्रेऽन्यमानसाम् ॥५१॥
तच्छ्रुत्वा वचनं भीष्मः संमन्त्र्य सह मन्त्रिभिः ।
निश्चित्य विससर्जेमां सत्यवत्या मते स्थितः ॥५२॥
अनुज्ञाता तु भीष्मेण शाल्वं सौभपतिं ततः ।
कन्येयं मुदिता तत्र काले वचनमब्रवीत् ॥ ५३ ॥
विसर्जिताऽस्मि भीष्मेण धर्मं मां प्रतिपादय ।
मनसाऽभिवृतः पूर्वं मया त्वं पार्थिवर्षभ ॥ ५४ ॥
प्रत्याचख्यौ च शाल्वोऽस्याश्चारित्रस्याभिशङ्कितः ।
सेयं तपोवनं प्राप्ता तापस्येऽभिरता भृशम् ॥५५॥
मया च प्रत्यभिज्ञाता वंशस्य परिकीर्त्तनात् ।
अस्य दुःखस्य चोत्पत्तिं भीष्ममेवेह मन्यते ॥५६॥

**अम्बोवाच—**

भगवन्नेवमेवेह यथाऽऽह पृथिवीपतिः ।
शरीरकर्ता मातुर्मे सृंजयो होत्रवाहनः ॥ ५७ ॥
नह्युत्सहे स्वनगरं प्रतियातुं तपोधन ।
अपमानभयाच्चैव व्रीडया च महामुने ॥ ५८ ॥
यत्तु मां भगवान् रामो वक्ष्यति द्विजसत्तम ।
तन्मे कार्यतमं कार्यमिति मे भगवन्मतिः ॥ ५९ ॥

इति श्रीमहाभारते उद्योगपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

## सप्तसप्तत्यधिकशततमोऽध्यायः १७७

अंबयाऽकृतव्रणेन सह संमन्त्र्य भीष्ममेव स्वदुःखहेतुमवधार्य तत्र होत्रवाहनं द्रष्टुं समागताय जामदग्न्याय तद्वधप्रार्थनम् ॥ १ ॥

**अकृतव्रण उवाच—**

दुःखद्वयमिदं भद्रे कतरस्य चिकीर्षसि ।
प्रतिकर्तव्यमबले तत्त्वं वत्से वदस्व मे ॥ १ ॥

---

[ नील० ] तं विचित्रवीर्यं वैवाहिकं विवाहार्थमुद्यतं समुपार्जितं अभ्यङ्गकौतुकबन्धादिना संस्कृतं दृष्ट्वा इयं कन्या गाङ्गेयमब्रवीदिति योजना ॥ ५० ॥ उत्पत्तिं कारणम् ॥ ५६ ॥

इति श्रीमन्महाभारते उद्योगपर्वणि नैलकण्ठीये भारतभावदीपे षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

[ अर्जु० ] उत्पत्तिं उत्पत्तिकारणम् ॥ ५६ ॥

इति श्रीमन्महाभारतव्याख्यायामर्जुनमिश्रकृतायामुद्योगपर्वणि षट्सप्तत्यधिकशततमोऽध्यायः ॥ १७६ ॥

[ नील० ] दुःखद्वयं दुःखकरद्वयं भीष्मशाल्वाख्यम् । यद्वा निर्भर्तृकत्वमेकं दुःखं त्वच्छत्रोर्वधश्चेति तापसानां दुःखद्वयं तथाऽपि शत्रुद्वयमध्ये कतरस्य कंप्रति प्रतिकर्त-

---

४३ ख. मिह चागता । ४७ ख. मवाक्षिप्य । ५० ख. तत्र । ५१ ख. परचित्तां प्रदाय वै । ५२ ख. निदिता विप्र । ५६ ख. भीष्ममेव हि मन्यते । पर्व मुवति वै राशि कन्या वचनमब्रवीत् । ५९ ख. भगवन् । ख. कार्यसमं । ख. भगवान् । अध्यायः ॥ १७६ ॥ १ ख. दुष्टं द्वय° ।

